THE

# RAJA TARANGINI';

A

# HISTORY OF CASHMI'R;

CONSISTING OF

FOUR SEPARATE COMPILATIONS:

VIZ.

I.—THE RA'JA TARANGINI', BY KALHANA PANDITA, 1148, A. D.

II.—THE RA'JA'VALI', BY JONA RA'JA (DEFECTIVE,) TO 1412, A. D.

III.—CONTINUATION OF THE SAME, BY SRI' VARA PANDITA, PUPIL OF JONA RA'JA, A. D. 1477.

IV.—THE RA'JA'VALI' PA'TAKA, BY PRA'JYA BHATTA, BROUGHT UP TO THE CONQUEST OF THE VALLEY BY THE EMPEROR AKBER.

---

COMMENCED UNDER THE AUSPICES OF THE GENERAL COMMITTEE OF PUBLIC INSTRUCTION; TRANSFERRED TO THE ASIATIC SOCIETY, WITH OTHER UNFINISHED ORIENTAL WORKS; AND COMPLETED IN 1835.

---

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS, CIRCULAR ROAD.

MDCCCXXXV.

# राजतरङ्गिणी।

अर्थात् काश्मीरदेशीयराजकीय इतिहासः ॥

प्रथमतः। कह्लणपण्डितकृताष्टमतरङ्गात्मिका राजतरङ्गिणी ॥

शकाब्दे १०७०

द्वितीयतः। जोनराजकृता द्वितीया राजतरङ्गिणी ॥

शकाब्दे १३३४

तृतीयतः। श्रीवरकृता तृतीया राजतरङ्गिणी ॥

शकाब्दे १३९९

चतुर्थतः। प्राज्यभट्टकृता चतुर्थी राजतरङ्गिणी ॥

नामान्तरं राजावलीति।

शकाब्दे १४८२

एतच्चतुर्भागात्मिका राजतरङ्गिणी

साधारणविद्यावृद्ध्यर्थककमिट्टिधनव्ययेन मुद्रितुमारब्धा तत्रासमाप्तत्वात्

एसियाटिकसोसइटाख्यगौडदेशीयसभाध्यक्षेण प्रेरिता

कलिकाताख्यराजधान्यां।

इडुकेशनयन्त्रालये मुद्रिताभूत् ॥

तत्सभ्यैर्मीयपण्डितैः संशोधिता च ॥

शकाब्दे १७५७।

इं० १८३५

# राजतरङ्गिणी।

## ॥ प्रथमस्तरङ्गः ॥

भूषाभोगिफणारत्नरोचिःशिखयचारवे। नमः प्रलीनमुक्ताय हरकल्पमहीरुहे।
भालं वह्निशिखाङ्कितं दधदधिश्रोत्रं वहन् सम्भृतश्रीउत्कुण्डलिजृम्भितं जलधिजच्छायाच्छकण्ठच्छविः।
वक्षोविभ्रदहीनकञ्चुकचितं बद्धाङ्गनार्द्धस्य वो भागः पुङ्गवलक्ष्मणोऽस्तु यशसे वामोऽथ वा दक्षिणः।
वन्द्यः कोऽपि सुधास्यन्दास्कन्दी स सुकवेर्गुणः। येन याति यशःकायः स्थैर्यं स्वस्य परस्य च।
कोऽन्यः कालमतिक्रान्तं नेतुं प्रत्यक्षतां क्षमः। कविप्रजापतींस्त्यक्त्वा रम्यनिर्म्माणशालिनः।
न पश्येत् सर्व्वसंवेद्यान् भावान् प्रतिभया यदि। तदन्यद्दिव्यदृष्टित्वे किमिव ज्ञापकं कवेः।
कथादैर्घ्यानुरोधेन वैचित्र्येऽप्यप्रपञ्चिते। तदत्र किञ्चिदस्त्येव वस्तु यत्प्रीतये सतां।
श्लाघ्यः स एव गुणवान् रागद्वेषवहिष्कृतः। भूतार्थकथने यस्य स्थेयस्येव सरस्वती।
पूर्व्वैर्बद्धं कथावस्तु मयि भूयो निबध्नति। प्रयोजनमनाकर्ण्य वैमुख्यं नोचितं सतां।
दृष्टं दृष्टं नृपोदन्तं बद्धा प्रमयमीयुषां। अर्व्वाक्कालभवैर्व्वार्त्ता यत्प्रबन्धेषु पूर्य्यते।
दाक्ष्यं कियदिदं तस्मादस्मिन् भूतार्थवर्णने। सर्व्वप्रकारस्खलिते योजनाय ममोद्यमः।
॥ युगलकं ॥ विस्तीर्णाः प्रथमे ग्रन्थाः स्मृत्यै संक्षिपतो वचः। सुव्रतस्य प्रबन्धेन च्छिन्ना राजकथाश्रयाः।
या प्रथामगमन्नेति सापि वाच्यप्रकाशने। पाटवं दुष्टवैदुष्यतीव्रा सुव्रतभारती।
केनाप्यनवधानेन कविकर्म्मणि सत्यपि। अंशोऽपि नास्ति निर्दोषः क्षेमेन्द्रस्य नृपावली।
दृग्गोचरं पूर्व्वसूरिग्रन्था राजकथाश्रयाः। मम त्वेकादश गता मतं नीलमुनेरपि।
दृष्टैश्च पूर्व्वभूभर्तृप्रतिष्ठावस्तुशासनैः। प्रशस्तिपट्टैः शास्त्रैश्च शान्तोऽशेषभ्रमक्लमः।
द्वापञ्चाशतमाम्नायभ्रंशाद्यान्नास्मरन्नृपान्। तेभ्यो नीलमताद्दृष्टं गोनर्दादिचतुष्टयं।
बद्धा द्वादशभिर्ग्रन्थसहस्रैः पार्थिवावलिः। प्राङ्महाव्रतिना येन हेलाराजद्विजन्मना।
तन्मतं पद्ममिहिरो दृष्ट्वाशोकादिपूर्व्वगान्। अष्टौ लवादीन्नृपतीन् स्वस्मिन् ग्रन्थे न्यदर्शयत्।
॥ युगलकं ॥ येऽप्यशोकादयः पञ्च श्रीच्छविल्लाकरोऽब्रवीत्। तान् द्वापञ्चाशतो मध्यात् श्लोकस्तस्य तथाह्ययं।

आगोनन्दादभिमन्योर्ये प्रोक्ताः पञ्च महीभुजः । ते द्वापञ्चाशतो मध्यादेव लब्धाः पुरातनैः । २०

ईदृशं नृपाणामुल्लासे ह्रासे वा देशकालयोः । भैषज्यभूतसंवादि कथा युक्तोपयुज्यते ।

संक्रान्तप्राक्तनानन्तव्यवहारः सुचेतसः । कस्येदृशो न सन्दर्भो यदि वा हृदयङ्गमः ।

क्षणभङ्गिनि जन्तूनां स्फुरिते परिचिन्तिते । मूर्द्धाभिषेकः शान्तस्य रसस्यात्र विचार्य्यतां ।

तदमन्दरसस्यन्दसुन्दरेयं निपीयतां । श्रोत्रशुक्तिपुटैः स्पष्टमत्र राजतरङ्गिणी ।

पुरा सती सरःकल्पारम्भात् प्रभृति भूरभूत् । कुक्षौ हिमाद्रेरर्णोभिः पूर्णा मन्वन्तराणि षट् । २५

अथ वैवस्वतीयेऽस्मिन् प्राप्ते मन्वन्तरे सुरान् । द्रुहिणोपेन्द्ररुद्रादीनवतार्य्य प्रजासृजा ।

कश्यपेन तदन्तःस्थं घातयित्वा जलोद्भवं । निर्म्ममे तत्सरो भूमौ कश्मीरा इति मण्डलं ।

॥ युगलकं ॥ उद्यद्वितस्तानिष्यन्ददण्डकुण्डातपत्रिणा । यत् सर्व्वनागाधीशेन नीलेन परिपाल्यते ।

गुहोन्मुखी नागमुखी पीतभूरिपया रुचिं । गौरी यत्र वितस्तात्वं याताप्युज्झति नोचितां ।

सङ्कपद्ममुखैर्नागैर्नागरा भावभाविभिः । नगरं धनदस्येव निधिभिर्यन्निषेव्यते । ३०

यत्तार्क्ष्यभीत्या प्राप्तानां नागानां गुप्तये ध्रुवं । प्रसारितभुजं पृष्ठे शैलप्राकारलीलया ।

भुक्तिमुक्तिफलप्राप्तिः काष्ठरूपमुमापतिं । पापसूदनतीर्थान्तर्यत्र संस्पृशतां भवेत् ।

सन्ध्यादेवी जलं यस्मिन् धत्ते निःसलिले गिरौ । दर्शनं पुण्यपापानामन्वयव्यतिरेकयोः ।

स्वयम्भूर्यत्र हुतभुक् भुवो गर्भात् समुन्मिषन् । जुह्वतां प्रतिगृह्णाति ज्वालाभुजवनैर्हविः ।

देवीभेडगिरेः शृङ्गे गङ्गोद्भेदहृदे स्वयं । सरोऽन्तर्दृश्यते यत्र हंसरूपा सरस्वती । ३५

नन्दिक्षेत्रे सुरावासप्रासादे सुचरार्पिताः । अद्यापि यत्र व्यज्यन्ते पूजाचन्दनबिन्दवः ।

आलोक्य शारदां देवीं यत्र संप्राप्यते क्षणात् । तरङ्गिणी मधुमती वाणी च कविसेविता ।

चक्रभृद्विजयेशादिकेशवेशानभूषिते । तिलांशोऽपि न यत्रास्ति पृथ्व्यास्तीर्थैर्बहिष्कृतः ।

विजीयते पुण्यबलैर्बलैर्यत्तु न शस्त्रिणां । परलोकात्ततो भीतिर्यस्मिन्निवसतां परं ।

सोष्मस्नानगृहाः शीते स्वस्थतीरास्सदारवे । यादोविरहिता यत्र निम्नगा निरुपद्रवाः । ४०

असन्तापहतां जानन् यत्र पित्रा विनिर्म्मिते । गौरवादिव तिग्मांशुर्धत्ते ग्रीष्मेऽप्यतीव्रतां ।

विद्यावेश्मानि तुङ्गानि कुङ्कुमं सहिमं पयः । द्राक्षेति यत्र सामान्यमस्ति त्रिदिवदुर्लभं ।

त्रिलोक्यां रत्नसूः श्लाघ्या तस्यां धनपतेर्हरित् । तत्र गौरीगुरुः शैलो यत्तस्मिन्नपि मण्डलं ।

तत्र कौरवकौन्तेयसमकालभवान् कलौ । आगोनर्दात् स्मरन्ति स्म न द्वापञ्चाशतं नृपान् ।

तस्मिन् काले भुवं तेषां कुकृतैः काश्यपीभुजां । कर्त्तारः कीर्त्तिकायस्य नाभूवन् कविवेधसः । ४५

भुजतरुवनच्छायां येषां निषेव्य महौजसां जलधिरसना मेदिन्यासीदसावकुतोभया । स्मृतिमपि न ते यान्ति क्ष्मापा विना यदनुग्रहं प्रकृतिमहते कुर्म्मस्तस्मै नमः कविकर्म्मणे ।

यऽन्याङ्घ्रिभकुम्भशायितपदा येऽपि श्रियं लेभिरे येषामप्यवसन् पुरा युवतयो गेहेष्वहश्चन्द्रिकाः । तांल्लोकोऽयमवैति लोकतिलकान् स्वप्नेऽप्यजातानिव भ्रातः सत्कविकृत्य किं स्तुतिशतैरन्धं जगत् त्वां विना ।

अष्टषष्ट्यधिकामब्दशतद्वाविंशतिं नृपाः । अपीपलंस्ते काश्मीरान् गोनर्दाद्याः कलौ युगे ।
भारतं द्वापरान्तेऽभूद्वार्त्तयेति विमोहिताः । केचिदेतां मृषा तेषां कालसंख्यां प्रचक्रिरे ।
॥ युगलकं ॥ लब्धाधिपत्यसंख्यानां वर्षान् संख्याय भूभुजां । भुक्तात् कालात् कलेः शेषो नास्त्येवं तद्विवर्ज्जितान् । ५०
शतेषु षट्सु सार्द्धेषु त्र्यधिकेषु च भूतले । कलेर्गतेषु वर्षाणामभवन् कुरुपाण्डवाः ।
लौकिकेऽब्दे चतुर्विंशे शककालस्य सांप्रतं । सप्तत्यात्यधिकं यातं सहस्रं परिवत्सराः ।
प्रायस्तृतीयगोनर्दादारभ्य शरदां तदा । द्वे सहस्रे गते त्रिंशदधिकञ्च शतत्रयं ।
वर्षाणां द्वादशशती षष्टिः षड्भिश्च संयुता । भूभुजां कालसंख्यायां तद्द्वापञ्चाशतो मताः ।
ऋक्षादृक्षं शतेनाब्दैर्यास्सु चित्रशिखण्डिषु । तच्चारे संहिताकारैरेवं दत्तोऽत्र निर्णयः । ५५
आसन् मघासु मुनयः शासति पृथ्वीं युधिष्ठिरे नृपतौ । षड्द्विकपञ्चद्वियुतः शककालस्तस्य राज्यस्य ।
काश्मीरेन्द्रः स गोनर्दो वेल्लद्गङ्गादुकूलया । दिशा कैलासहासिन्या प्रतापी पर्य्युपास्यत ।
विहाय देहं शेषाहेर्विषाश्लेषभयादिव । भूगोलस्तरलाङ्के भेजे तस्य भुजे स्थितिं ।
साहाय्यकार्थमाहूतो जरासन्धेन बन्धुना । समं हरोध कंसारेर्मथुरां पृथुभिर्ब्बलैः ।
तेनोपकूलं कालिन्द्याः स्कन्धावारं निवेशता । यादवीहसितैः सार्द्धं योधानां मोषितं यशः । ६०
एकदा सर्व्वतो भग्नाः स्वसेनास्त्रातुमुद्यतः । तं संरोध योद्धारं सङ्गरे लाङ्गलध्वजः ।
तयोस्तुल्यौजसोर्युद्धे चिराय करवर्त्तिनी । सख्यौ विजयसन्देहे वरणस्रगजयश्रियः ।
अथ शस्त्रक्षतैरङ्गैरालिलिङ्ग रणाङ्गने । भुवं काश्मीरको राजा यादवस्तु जयश्रियं ।
गतिं प्रवीरसुलभां तस्मिन् सुक्षत्रिये गते । श्रीमान्दामोदरो नाम तत्सूनुरभृत क्षितिं ।
भोगयोगोर्ज्जितं राज्यं प्राप्तवानपि भूपतिः । ध्यायन् पितृवधं मानी नोपलेभे स निर्वृतिं । ६५
अथोपसिन्धु गान्धारैः सज्जे कन्यास्वयम्बरे । निमन्त्र्य शुश्रावानीतान् वृष्णीन्दर्पाच्छादोद्रुमः ।
ततस्तस्यातिसम्भारात्तानदूरस्थितान् प्रति । यात्राभूद्वाजिनीवाजिरेणुग्रस्तनभस्तला ।
तदाहवे विवाहोल्का निघ्नतिस्म पतिम्बरा । आसीत्तत्पुरस्त्रीणां गान्धारेषु स्वयम्बरः ।
तदाक्रान्तासुहृच्चक्रः स चक्रायुधसङ्गरे । चक्रधाराध्वना धीरश्चक्रवर्त्ती दिवं ययौ ।
अन्तर्व्वत्नीं तस्य पत्नीं तदा यदुकुलोद्वहः । राज्ये यशोवतीं नाम द्विजैः कृष्णोऽभ्यषेचयत् । ७०
तस्मिन् काले स्वसचिवान् सासूयान् विन्यवीवरत् । इमं पौराणिकं श्लोकमुदीर्य्य मधुसूदनः ।
काश्मीराः पार्व्वती तत्र राजा ज्ञेयो हरांशजः । नावज्ञेयः स दुष्टोऽपि विदुषा भूतिमिच्छता ।
पुंसां निर्गौरवा भोज्ये इव याः स्त्रीजनेदृशः । प्रजानां मातरं तास्तामपश्यन्देवतामिव ।
अथ वैजनने मासि सा देवी दिव्यलक्षणं । निर्दग्धस्याभ्यवतरोरङ्कुरं सुषुवे सुतं ।
तस्य राज्याभिषेकादिविधिभिः सह सम्भृताः । द्विजेन्द्रैर्निरवर्त्यन्त जातकर्म्मादिकाः क्रियाः । ७५
स नगेन्द्रश्रिया सार्द्धं लब्धवान् बालभूपतिः । नाम गोनर्द इत्येवं नप्ता पैतामहं क्रमात् ।
आस्तां बालस्य सन्नद्धे द्वे धात्र्यौ तस्य वृद्धये । एका पयःप्रस्रविणी सर्व्वसम्पत्प्रसूः परा ।

तस्यावन्ध्यप्रसादस्य रक्षन्तः पितृमन्त्रिणः। पार्श्वगेभ्यो ददुर्व्वित्तमनिमित्तस्मितेष्वपि ।
अबुद्धा ननु तिष्ठन्तस्तस्याव्यक्तं गिरोऽर्थिनः । कृतागसमिवात्मानममन्यन्ताधिकारिणः ।
पितुः सिंहासनं तेन क्रामता बालभूभुजा । नोत्कण्ठा पादपीठस्य लम्बमानाङ्घ्रिणा कृता । ८०
तस्यामरमरुल्लोलकाकपक्षं नृपासने। विधाय मन्त्रिणोऽशृण्वन् प्रजानां धर्म्मसंश्रयं ।
इति काश्मीरको राजा वर्त्तमानः सशैशवे। साहाय्यकाय समरे न निन्ये कुरुपाण्डवैः।
आम्नायभङ्गान्निर्नष्टनामकृत्यास्ततः परं । पञ्चत्रिंशन्महीपाला मग्ना विस्मृतिसागरे ।
अथाभवल्लवो नाम भूपालो भूमिभूषणं । वेलद्यशोदुकूलायाः प्रीतिपात्रं जयश्रियः ।
यस्य सेनानिनादेन जगदौन्निद्र्यदायिना । निन्यिरे वैरिणश्चित्रं दीर्घनिद्राविधेयतां ८५
तेन षोडशभिर्लक्षैर्व्विहीनामश्मवेश्मनां । कोटिं निष्पाद्य नगरं लोलोरं निरमीयत ।
दत्त्वाग्रहारं लेदर्य्यां लेवारं द्विजपर्षदे । स धामनिन्द्यशौर्य्यश्रीरारुरोह महाभुजः ।
कुशेशयाख्यस्तत्पुत्त्रः प्रतापकुशलः कुशः । कुरुहाराग्रहारस्य दाताभूत्तदनन्तरं ।
ततस्तस्य सुतः प्राप रिपुनागकुलान्तकः । धुर्य्यः शौर्य्याश्रयः श्रीमान् खगेन्द्रः पार्थिवेन्द्रतां ।
सखागिखुनमुषयोः कर्त्ता मुख्याग्रहारयोः । हरहासमितैः कृत्यैः क्रीतांल्लोकान् क्रमाद्ययौ । ९०
अनर्घमहिमा दीर्घमघवत्तावहिष्कृतः । अथ साश्चर्य्यचर्य्योऽभूत् सुरेन्द्रस्तत्सुतो नृपः।
शतमन्युः शान्तमन्योर्गोत्रभिद्गोत्ररक्षिणः । लेभे यस्य सुरेन्द्रस्य सुरेन्द्रो नोपमानतां।
दरद्देशान्तिके कृत्वा सौरकाख्यं स पत्तनं । श्रीमान् विहारं विदधे नरेन्द्रभवनाभिधं ।
तेन स्वमण्डले ऽखण्डयशसा पुण्यकर्म्मणा । विहारः सुकृतोदारो निर्मितः सौरसाभिधः ।
तस्मिन्निःसन्ततौ राज्ञि प्रशान्तेऽन्यकुलोद्भवः । बभार गोधरो नाम सभूधरवरान्धरां । ९५
गोधरो हस्तिशालाख्यमग्रहारमुदारधीः । स प्रदाय द्विजन्मभ्यः पुण्यकर्म्मा दिवं ययौ ।
तस्य सूनुः सुवर्णाख्यस्ततोऽभूत् स्वर्णदोऽर्थिनां । सुवर्णमणिकुल्यायाः कराले यः प्रवर्त्तकः ।
तत्सूनुर्ज्जनको नाम प्रजानां जनकोपमः । विहारमग्रहारञ्च जालोराख्यञ्च निर्म्ममे ।
शचीनरस्तस्य सूनुः क्षितिं क्षितिशचीपतिः । ततः श्रीमान् क्षमाशीलो ररक्षाक्षतशासनः ।
राजाग्रहारयोः कर्त्ता शमांगासाशनारयोः । सोऽभूदपुत्त्रः सूत्रामविष्टरार्द्धसमाश्रयी। १००
प्रपौत्त्रः शकुनेस्तस्य भूपतेः प्रपितृव्यजः । अथावहदशोकाख्यः सत्यसन्धो वसुन्धरां ।
यः शान्तवृजिनो राजा प्रपन्नो जिनशासनं । शुष्कलेऽत्र वितस्तात्रौ तस्तार स्तूपमण्डलैः ।
धर्म्मारण्यविहारान्तर्व्वितस्तात्र पुरेऽभवत् । यत्कृतं चैत्यमुत्सेधावधि प्राप्त्यक्षमेक्षणं ।
स षण्णवत्या गेहानां लक्षैर्लक्ष्मीसमुज्ज्वलैः । गरीयसीं पुरीं श्रीमांश्चक्रे श्रीनगरीं नृपः ।
जीर्णं श्रीविजयेशस्य विनिवार्य्य सुधामयं । निष्कल्मषेणाश्ममयः प्राकारो येन कारितः । १०५
सभायां विजयेशस्य समीपे च विनिर्म्ममे । शान्तावसादः प्रासादावशोकेश्वरसंज्ञितौ ।
म्लेच्छैः सञ्छादिते देशे स तदुच्छित्तये नृपः । तपः सन्तोषिताल्लेभे भूतेशात् सुकृती सुतं ।

सोऽथो भूभृज्जलौकोऽभूद्भूलोकसुरनायकः। यो यशःश्रद्धया शुद्धं व्यधाद्ब्रह्माण्डमण्डलं।
यस्य दिव्यप्रभावस्य कथाः श्रुतिपथं गताः। आश्चर्य्याश्चर्य्यतां यान्ति नियतं सुधियामपि।
कोटिवेधिनि सिद्धे हि सरसे हाटकार्पणैः। आसीत् सुषिरतां कर्त्तुं हेमाण्डस्य ध्रुवं क्षमः। ११०
संस्तम्भ्याम्भःप्रविष्टेन तेन नागसरोऽन्तरं। तारुण्यं फणिकन्यानां निन्ये संभोगभव्यतां।
तत्कालप्रबलप्रेक्षबौद्धवादिसमूहजित्। अवधूतोऽभवत् सिद्धस्तस्य ज्ञानोपदेशकृत्।
विजयेश्वरनन्दीशक्षेत्रज्येष्ठेशपूजने। तस्य सत्यगिरो राज्ञः प्रतिज्ञा सर्व्वदाऽभवत्।
ग्रामे ग्रामे स्थितैरश्वैर्धावनं प्रतिषिद्धवान्। खेनावहन्तं सततं नागः कोऽपि सुहृत्तया।
स रुद्धवसुधान् म्लेच्छान्निर्व्वास्याखर्व्वविक्रमः। जिगाय जैत्रयात्राभिर्म्महीमर्णवमेखलां। ११५
स तत्रोज्जूटितस्तेन म्लेच्छाच्छादितमण्डलः। स्थानमुज्जूटडिम्बन्तज्जनैरद्यापि गद्यते।
जित्वोर्व्वीं कन्यकुब्जाद्यां तत्रत्यं स न्यवेशयत्। चातुर्व्वर्ण्यं निजे देशे धर्म्यांश्च व्यवहारिणः।
यथावद्वृद्धिमप्राप्तं व्यवहारधनादिभिः। सामान्यदेशवद्राज्यं तावदस्मिन् हि मण्डले।
धर्म्माध्यक्षो धनाध्यक्षः कोषाध्यक्षश्चमूपतिः। दूतः पुरोधा दैवज्ञः सप्त प्रकृतयोऽभवन्।
॥ युगलकं ॥ कर्म्मस्थानानि धर्म्याणि तेनाष्टादश कुर्व्वता। ततः प्रभृति भूपेन कृता यौधिष्ठिरी स्थितिः। १२०
स विक्रमप्रभावाभ्यां समुपार्ज्जितया श्रिया। विदधे वारवालादीनग्रहारानुदग्रधीः।
द्वारादिषु प्रदेशेषु प्रभावोद्याणुदग्रया। ईशानदेव्या तत्पत्न्या मातृचक्राणि चक्रिरे।
श्रुतनन्दिपुराणः स व्यासान्तेवासिनो नृपः। सेवनं सोदरादीनां नन्दीशस्पर्द्धया व्यधात्।
प्रतिष्ठां ज्येष्ठरुद्रस्य श्रीनगर्य्यां वितन्वता। तेन नन्दीशसंस्पर्द्धी न मेने सोदरं विना।
विस्मारितो नित्यकृत्यं कार्य्यव्यग्रतयैकदा। विदूरसोदरजलाप्लवनालाभदुर्मनाः। १२५
अपश्यन्निर्ज्जलात् स्थानादकस्मादुत्थितं पयः। स सोदराविसम्वादि वर्णस्वादादिभिर्गुणैः।
॥ युग्मं ॥ प्रादुर्भूते ततस्तस्मिंस्तीर्थे कृतनिमज्जनः। स नन्दिरुद्रस्पर्द्धायां मानी पर्य्याप्तमासदत्।
तेन जातु परीक्षार्थं निक्षिप्तः सोदरान्तरे। सपिधानाननः स्वर्णभृङ्गारः सुषिरोदरः।
दिनद्वयेन सार्द्धेन श्रीनगर्य्युद्भवाम्भसः। उन्मग्नः स महीभर्त्तुस्तस्य चिच्छेद संशयं।
नूनं नन्दीश एवासौ भोक्तुं भोगानवातरत्। दृष्टादृष्टक्रियासिद्धिर्न भवेत्तादृगन्यथा। १३०
राज्ञस्तस्य कदाचित्तु व्रजतो विजयेश्वरं। ययाचे काचिदबला भोजनं मार्गमध्यगा।
यथेष्टमशनं दातुं ततोऽनेन प्रतिश्रुते। व्यहुणोदिकृता भूत्वा सा नृमांसाश्रयां स्पृहां।
स सत्वहिंसाविरतस्तस्यै दातुं स्वविग्रहात्। अनुज्ञां प्रददौ भोक्तुं यदा सैवं तदाब्रवीत्।
बोधिसत्वोऽसि भूपाल कोऽपि सत्वोर्ज्जितव्रतः। कारुण्यं प्राणिषु दृढं यस्येदृक्षं महात्मनः।
बौद्धभाषामजानानो माहेश्वरतया नृपः। को बोधिसत्वो यं भद्रे मां वेत्सीति जगाद तां। १३५
पुनर्ब्बभाषे सा भूपं श्रोतव्यं मत्प्रयोजनं। अहन्नूत्थापिता बौद्धैः क्रोधादिप्रकृतैस्त्वया।
लोकालोकाद्रिपार्श्वस्थास्तामस्याः कृत्तिका वयं। बोधिसत्वैकशरणाः काङ्क्षन्त्यस्तमसः क्षयं।

लोके भगवतो लोकनाथादारभ्य केचन। ये जन्तवो गतक्लेशान् बोधिसत्त्वानवेहि तान्।
सागसेऽपि न कुप्यन्ति क्षमया चोपकुर्वते। बोधिं स्वस्यैव नेच्छन्ति ते विश्वोद्धरणोद्यताः।
विहारतूर्य्यनिर्घोषैस्तन्निद्रः प्रेरितः खलैः। पुरा भवान् व्यधात् क्रोधाद्विहारोद्दलनं यदा। १४०
महायक्षः स नृपतिर्न शक्यो बाधितुं त्वया। तस्मिन्दृष्टे तु कल्याणि भविता ते तमःक्षयः।
अस्मद्गिरा प्रेरणीयो विहारकरणाय सः। दत्वा स्वहेमसम्भारं त्वया मलिनितः खलैः।
तस्मिन् कृते न जायेत विहारच्छेदवैशसं। तस्य तत्प्रेरकाणाञ्च प्रायश्चित्तं कृतं भवेत्।
क्रुद्धैर्बौद्धैरनुध्याता त्वद्वधाय प्रधाविता। अनुदिष्टा समाहूय बोधिसत्त्वैस्तदेत्यहं।
॥ कुलकं ॥ तस्मात् सत्त्वातिरेकस्ते मिषादेवं परीक्षितः। क्षीणपापाद्य सम्वृत्ता स्वस्ति ते साधयाम्यहं। १४५
कृतप्रतिश्रवे राज्ञि विहारकृतये पुनः। प्रहर्षोत्फुल्लनयना कृत्यादेवी तिरोदधे।
अथ कृत्याश्रमे कृत्वा विहारं वसुधाधिपः। तत्रैव क्षीणतमसं कृत्यादेवीमनन्दयत्।
विधाय सोऽश्मप्रासादं नन्दिक्षेत्रे क्षमापतिः। भूतेशाय क्षमं कोषैः पूजां रत्नमयीं ददौ।
चीरमोचनतीर्थान्तर्गणरात्रं तपस्यता। ब्रह्मासननिविष्टेन ध्याननिष्पन्दमूर्त्तिना।
राज्ञा कनकवाहिन्याः सुचिरात् पुण्यकर्मणा। नन्दीशस्पर्शनोत्कण्ठा तेनानीयत कुण्डतां। १५०
ह्लादोदयान्नृत्यगीतक्षणे नर्त्तितुमुत्थितं। प्रददौ ज्येष्ठरुद्राय स्वावरोधवधूशतं।
भुक्त्वैश्वर्य्यं स पर्य्यन्ते प्रतिष्ठंश्चीरमोचनं। पत्न्या समं ययौ राजा सायुज्यं गिरिजापतेः।
अथाशोककुलोत्पन्नो यद्वान्याभिजनोद्भवः। भूमिं दामोदरो नाम जुगोप जगतीपतिः।
श्रद्धा जाज्वलितस्याधैर्म्माहेश्वरशिखामणेः। अद्यापि श्रूयते यस्य प्रभावो भुवनाद्भुतः।
हरप्रसादमात्रेण सद्धरित्रानुरागिणा। बबन्ध सुखिना सख्यं येन वैश्रवणः स्वयं। १५५
कुवेरइव योराज्ञामग्र्यः स्वाज्ञाविधायिनः। आदिश्य गुह्यकान् दीर्घं गुरुसेतुमबन्धयत्।
सूदे दामोदरीये यत्तस्यासीत् स्वकृतं पुरं। सेतुना तेन तत्रैच्छत् कर्त्तुं सोऽम्भःप्रतारणं।
हितं लोकोत्तरं किञ्चिच्चिकीर्षोरुन्नतात्मनः। रोहन्ति हा धिक् प्रत्यूहा मितपुण्यतया नृणां।
सहि कारयितुं यत्नैर्यततेस्म स्वमण्डले। दीर्घानश्ममयान् सेतूंस्तोयविप्लवशान्तये।
तपोविभूतयश्चिन्त्या द्विजानामुग्रतेजसां। तादृशामपि ये कुर्य्युः प्रभावस्य विपर्य्ययं। १६०
दायादादिबलैर्नष्टा दृष्टा भूयः समुत्थिता। श्रीर्विप्रावज्ञया राज्ञामपुनःसम्भवा पुनः।
श्राद्धार्थमुत्थितः स्नातुं द्विजैः कैश्चिद्बुभुक्षितैः। प्राक् स्नानाद्भोजनं राजा स कदाचिदयाच्यत।
यियासुना वितस्तान्तर्यदा तेनावधीरितं। तदा प्रभावात्ते तस्य तां धुनीमग्रतो व्यधुः।
सेयं वितस्ता दृष्ट्वैनां भोजयास्मान् स तैरिति। उक्तोऽपि मायाविहितामज्ञासीत् सरिदाहृतिं।
भोज्यं ददानि नास्नातो विप्राः सर्पत साम्प्रतं। तेनेत्युक्तास्समशपंस्ततः सर्पो भवेति ते। १६५
अशेषमेकेनैवाह्ना श्रुत्वा रामायणं तव। शापस्य शान्तिर्भवितेत्यूचिरे ते प्रसादिताः।
स दामोदरसूदान्तर्धावन् दूरमुदन्यया। शापोष्णश्वासधूमेन जनैरद्यापि लक्ष्यते।

अथाभवन् स्वनामाङ्कपुरत्रयविधायिनः। हुष्कजुष्ककनिष्काख्यास्त्रयस्तत्रैव पार्थिवाः।
स विहारस्य निर्म्माता जुष्को जुष्कपुरस्य यः। जयस्वामिपुरस्यापि शुद्धधीः स विधायकः।
ते तुरुष्कान्वयोद्भूता अपि पुण्याश्रया नृपाः। शुष्कलेत्रादिदेशेषु मठचैत्यादि चक्रिरे। १७०
प्राज्ये राज्यक्षणे तेषां प्रायः काश्मीरमण्डलं। भोज्यमास्ते स्म बौद्धानां प्रव्रज्योर्जिततेजसां।
ततो भगवतः शाक्यसिंहस्य परनिर्वृतेः। अस्मिन् महीलोकधातौ सार्द्धं वर्षशतं ह्यगात्।
बोधिसत्वश्च देशेऽस्मिन्नेकभूमीश्वरोऽभवत्। स तु नागार्ज्जुनः श्रीमान् षडर्हद्वनसंश्रयी।
अथ निष्कण्टको राजा कण्टकोत्सायशारदः। अभीर्वभूवाभिमन्युः शतमन्युरिवापरः।
स्वनामाङ्कशशाङ्काङ्कशेखरं विरचय्य सः। परार्ध्यविभवं श्रीमानभिमन्युपुरं व्यधात्। १७५
चन्द्राचार्य्यादिभिर्लब्धादेशं तस्मात्तदागमं। प्रवर्त्तितं महाभाष्यं स्वञ्च व्याकरणं कृतं।
तस्मिन्नवसरे बौद्धा देशे प्रबलतां ययुः। नागार्ज्जुनेन सुधिया बोधिसत्वेन पालिताः।
ते वादिनः पराजित्य वादेन निखिलान् बुधान्। क्रियां नीलपुराणोक्तामच्छिन्दन्नागमद्विषः।
मण्डले विप्लुताचारे विच्छिन्नबलिकर्म्मभिः। नागैर्जनक्षयश्चक्रे प्रभूतहिमवर्षिभिः।
हिमान्यां बौद्धबाधाय पतन्त्यां प्रतिवत्सरं। शीते दार्व्वाभिसारादौ षण्मासान् पार्थिवोऽवसत्। १८०
तदा प्रभावः कोऽप्यासीद्बलिहोमविधायिनः। नानश्यन् यद्द्विजाग्र्या बौद्धास्तु निधनङ्गताः।
नीलमुद्दिश्य देशस्य रचितारं महेश्वरं। काश्यपश्चन्द्रदेवाख्यस्तपस्तेपे ततो द्विजः।
तस्य प्रत्यक्षतां यातो नीलस्तुहिनविप्लवं। न्यवारयत् जगादापि स्वपुराणविधिं पुनः।
आद्येन चन्द्रदेवेन शमितो यक्षविप्लवः। द्वितीयेन तु देशेऽस्मिन् दुःसहो भिक्षुविप्लवः।
राजा तृतीयगोनर्दः प्राप्तराज्यस्तदन्तरे। यात्रायागादि नागानां प्रावर्त्तयत पूर्व्ववत्। १८५
राज्ञा प्रवर्त्तिते तेन पुनर्नीलोदिते विधौ। भिक्षवो हि सदोषास्तु सर्व्वतः प्रशमं ययुः।
काले काले प्रजापुण्यैः सम्भवन्ति महीभुजः। यैर्मण्डलस्य क्रियते दूरोत्सन्नस्य योजनं।
ये प्रजापीडनपरास्ते विनश्यन्ति सान्वयाः। नष्टन्तु ये योजयेयुस्तेषां वंशानुगाः श्रियः।
इत्येतत् प्रतिहन्तान्तं देवेऽस्मिन् वीक्ष्य लक्षणं। भाविनां भूमिपालानां प्राग्भूयं शुभाशुभं।
नवीकृतवतो देशं तस्य वंशैरियं मही। सिद्धैः प्रवरसेनाद्यैश्चिरं भुक्ता सुकर्म्मभिः। १९०
गोनर्दान्वयिनामाद्यः स रघूणां रघुर्यथा। नृपतिः काश्यपीं वर्षान् पञ्चत्रिंशतिमन्वशात्।
वर्षषष्टिं सषण्मासैः षड्भिर्व्वर्षैर्व्विवर्ज्जितां। विभीषणाभिधोऽरक्षत् क्षितिं गोनर्दनन्दनः।
इन्द्रजिद्रावणावास्तां पितापुत्त्रौ नृपौ क्रमात्। पञ्चत्रिंशत्सहार्द्धाश्च वर्षास्त्रिंशद्द्वयोर्ययुः।
विन्दुरेखाक्षविर्यस्य दृष्टा भाव्यर्थशंसिनी। स रावणस्य पूजार्थं लिङ्गं भाति वटेश्वरः।
चतुःशालमठस्यान्तः कृतायादायि भूभुजा। वटेश्वराय निखिलं तेन काश्मीरमण्डलं। १९५
पञ्चत्रिंशतमब्दानां क्ष्मां बुभोज महाभुजः। रावणक्षोणिभृत्सूनुः सार्द्धमन्यो विभीषणः।
किन्नरापरनामाथ किन्नरैर्गीतविक्रमः। विभीषणस्य पुत्त्रोऽभून्नरनामा नराधिपः।

सदाचारोऽपि स नृपः प्रजाभाग्यविपर्य्ययैः । व्यधाद्विषयदोषेण महानर्थपरम्परां ।
विहारे निवसन्नेककिन्नरग्रामवर्त्तिनि । तस्य योगबलात् कोऽपि श्रमणोऽपाहरत् प्रियां ।
विहाराणां सहस्राणि तत्कोपाग्निर्ददाह सः । अजिग्रहच्च तद्ग्रामान् द्विजैर्मध्यमठाश्रयैः । २००
चङ्क्रापणं राजपथैर्गीयामोज्ज्वलनिम्नगं । स्फीतपुष्पफलोद्यानं स्वर्गस्येवाभिधान्तरं ।
दिग्जयोपार्ज्जितैर्व्वित्तैर्जितवित्तेशपत्तनं । वितस्तापुलिने तेन नगरं निरमीयत ।
॥ युगलकं ॥ तत्रैकस्मिन् किलोद्याने स्वच्छस्वादुजलाश्रितः । आसीत् सुश्रवसो नाम्नो नागस्य वसतिः सरः ।
कदाचित्तस्य दूराध्वक्लान्तो मध्यदिने युवा । छायार्थी तत् सरःकच्छं विशाखाख्योऽविशद्द्विजः ।
सच्छायपादपतले समीरैः शमितक्लमः । शनैर्जलमुपस्पृश्य भोक्तुं सक्तून् प्रचक्रमे । २०५
तान् पाणौ गृह्णतैवाथ तेन तीरविहारिभिः । पूर्व्वमाकर्षितो हंसैः शुश्रुवे नूपुरध्वनिः ।
निर्गते मञ्जरीकुञ्जादपश्यत् पुरतस्ततः । कन्ये नीलनिचोलिन्यौ स केचिच्चारुलोचने ।
कर्णिकापद्मरागाञ्जनाललीलायितस्पृशा । मनोज्ञधवलापाङ्गे तमीयोऽञ्जनरेखया ।
हारिनेत्राञ्चलैर्मन्दमारुतान्दोलनाकुलैः । सनाथांसयुगे रूपपताकापल्लवैरिव ।
॥ तिलकं ॥ ते शशाङ्काननं दृष्ट्वा शनैरभ्यर्णमागते । विश्रामाश्रमारम्भात् मुक्तश्रीडजडीकृतः । २१०
भुञ्जाने कच्छगुच्छानां शिम्बीरम्बुजलोचने । ते पुनर्दृष्टवानग्रे किञ्चिद्व्रीडापारितेक्षणः ।
आकृतेर्हा धिगीदृश्या भोज्यमेतदिति द्विजः । ध्यायन् कृपार्द्रः सम्मान्य स ते सक्तूनभोजयत् ।
उपनिन्ये च सक्तूंश्च पुटकैश्चाटुसीत्कृतैः । तयोः पानाय पानीयं सरसः स्वच्छशीतलं ।
आचान्ते शुचितां प्राप्ते कृतासनपरिग्रहे । ततश्च वीजयन् पर्णतालवृन्तैरभाषत ।
भवत्यौ पूर्व्वसुकृतैः कैश्चित् सम्प्राप्तदर्शनः । चापलाद्धि प्रसुलभात् प्रष्टुमिच्छत्ययं जनः । २१५
कल्याणिनीभ्यां कतमा पुण्या जातिः परिष्कृता । कुत्र वा क्लान्तमेतादृग्विरसं येन भुज्यते ।
एका तमूचे विद्धावामस्य सुश्रवसः सुते । स्वादुभोक्तव्यमप्राप्य किमीदृङ्नोपभुज्यते ।
पित्रा विद्याधरेन्द्राय प्रदातुं परिकल्पिता । दूरावस्थहभेषा मे चन्द्रलेखा यवीयसी ।
पुनर्द्विजोऽभ्यधादेवं नैष्किञ्चन्यं किमस्ति वः । ताभ्यामवादि तातोऽत्र हेतुर्व्वेत्ति स पृच्छ्यतां ।
ज्येष्ठेऽत्र कृष्णद्वादश्यां यात्रायै तक्षकस्य तं । आगतं चूडया तोयस्यन्दिन्या ज्ञास्यसि ध्रुवं । २२०
द्रष्टव्यस्यावामपि तदा तदभ्यर्णकृतस्थितौ । इत्युक्त्वा फणिकन्ये ते क्षणादास्तां तिरोहिते ।
क्रमात् प्रवृत्ते सोऽथ नटचारणसङ्कुलः । प्रेक्षिलोकसमाकीर्णस्तत्र यात्रामहोत्सवः ।
द्विजोऽपि कौतुकाकृष्टः पर्य्यटन् रङ्गमञ्जसा । कन्योक्तचिह्नज्ञातस्य नागस्यान्तिकमाययौ ।
पार्श्वस्थिताभ्यां कन्याभ्यां पूर्व्वमावेदितोऽथ सः । द्विजन्मने व्याजहार स्वागतं नागनायकः ।
ततः कथान्तरे क्वापि पृष्टः कारणमापदां । नगाद तं द्विजन्मानं निःश्वस्य श्वसनाशनः । १२५
अभिमानवतां बह्व्यन्युक्तायुक्तविवेकिनां । युज्यते वश्यभाग्यानां दुःखानामप्रकाशनं ।
परदुःखं समाकर्ण्य स्वभावसुजनो जनः । उपकारासमर्थत्वात् प्राप्नोति हृदयव्यथां ।

वृत्तिं स्वां बहु मन्यते यदि मृदुं धत्तेऽनुकम्पोक्तिभिः स्थैर्यं निन्दति योग्यतां मितमतिः कुर्व्वन् स्तुतीरात्मनः ।
गर्व्वोपायनिषेवणं कथयति स्वास्थ्यं वदन् व्यापदं श्रुत्वा दुःखमहन्तुदं वितनुते पीडां जनः प्राकृतः ।
अतएव विचक्षणां यावदायुस्त्वमानसे । दीर्घाणि सुखदुःखानि दहत्यन्ते चितानलः । २३०
कः स्वभावगभीराणां लक्षयेद्बहिरापदं । बालापत्येन भृत्येन यदि सा न प्रकाश्यते ।
तदस्मिन्नेतयोर्व्वाल्याद्वस्तुनि व्यक्तिमागते । तवापि गोपनं साधो न ममाप्युपपद्यते ।
त्वयाप्यस्मद्धितार्थाय निसर्गसरलात्मना । ईषत्प्रयासः कल्याणिन् क्रियतां यदि शक्यते ।
योऽयं तरुतले मुण्डचूडालो दृश्यते व्रती । अमुना शस्यपालेन कान्दिशीकाः कृता वयं ।
अभुक्ते मान्त्रिकैरन्ने नवे नागैर्न भुज्यते । अयं नास्ति च तत्तेन समयेन हता वयं । २३५
क्षेत्राणि रक्षत्येतस्मिन् दृष्ट्वापि फलसम्पदं । भोक्तुं नैव समर्थाः स्मः प्रेता इव सरिज्जलं ।
तथा कुरु यथा भ्रश्येत् समयादेष नैष्ठिकः । योग्यां प्रतिक्रियां विप्रोऽयमप्युपकर्त्तृषु ।
स तथेति ततो नागमुक्त्वा यत्नपरो द्विजः । अचिन्तयद्दिवारात्रौ शस्यपालस्य वञ्चनां ।
गूढं तस्य बहिःक्षेत्रकुटीगर्भकृतस्थितेः । पच्यमानान्नभाण्डान्तर्नवान्नं न्यक्षिपत्ततः ।
भुञ्जान एव तत्तस्मिन् क्षणादेव जहार सः । अहीन्द्रः करकासारवर्षी स्फीतां फलश्रियं । २४०
तस्य व्युत्क्रान्तदारिद्र्यः सरसोऽभ्यर्णमागतं । कृतोपकारमन्येद्युर्निजोर्व्वीमनयद्द्विजं ।
स तत्र पितुरादेशात् कन्याभ्यां विहितार्हणः । अमर्त्यसुलभैर्भोगैरतोष्यत दिने दिने ।
कालेन सर्व्वानामन्त्र्य स्वां भुवं गन्तुमुद्यतः । प्रतिश्रुतं वरं नागं चन्द्रलेखामयाचत ।
सम्बन्धायोग्यमपि तं कृतज्ञत्ववशम्वदः । संविभेजे स भुजगः कन्यया च धनेन च ।
एवं नागवरावाप्तश्रियस्तस्य द्विजन्मनः । महान्नरपुरे कालस्तैस्तैर्नित्योत्सवैर्ययौ । २४५
भुजगेन्द्रतनूजापि तं पतिं पतिदेवता । अतोषयत् परार्ध्यश्रीशीलाचारादिभिर्गुणैः ।
तस्यां कदाचित् सौधाग्रस्थितायां प्राङ्गनाद्बहिः । आतपायोज्झितं धान्यं बुभुजे विहरन् हयः ।
तं वारयितुमाज्ञप्ता भृत्या नासन् गृहे यदा । शिञ्जानमञ्जुमञ्जीरा सा तदावातरत् स्वयं ।
एकहस्तधृतासङ्गस्रस्तशीर्षांशुकान्तया । तया पाणिसरोजेन धावित्वा सोऽश्व ताडितः ।
भोज्यमुत्सृज्य यातस्य फणिस्त्रीस्पर्शतस्ततः । सौवर्णी पाणिमुद्राङ्के तुरगस्योदपद्यत । २५०
तस्मिन् काले नरो राजा चारैस्तां चारुलोचनां । श्रुत्वा द्विजवधूं तस्थौ प्रागेवाङ्कुरितस्मरः ।
तस्य धावन्तमुन्मत्तमन्तःकरणवारणं । बलान्नियमितुं नासीदपवादभयाङ्कुशः ।
तस्मिन्नुद्वृद्धरागाग्निविप्लवे भूपतेः पुनः । उवाह हयवृत्तान्तो दृप्तवातानुकारितां ।
चक्रे पर्य्यस्तमर्य्यादः सरलाङ्गुलिशोभिना । सकाञ्चनकराङ्केन शशाङ्केनेव वारिधिः ।
व्रीडानिगडनिर्मुक्तो दूतैराकूतमर्म्मभिः । तामुपच्छन्दयन् सोऽथ सुन्दरीमुदवेजयत् । २५५
सर्व्वोपायैरसाध्यायां विप्रस्तत्पतिरप्यसौ । तेनायाच्यत लुब्धेन रागान्धानां कुतस्त्रपा ।
अथ निर्भर्त्सना तस्मादपि प्राप्तवतासकृत् । हठेन हर्त्तुं तां राज्ञा समादिश्यन्त सैनिकाः ।

तैर्द्दाहाये कृतास्कन्दो निर्गत्यान्येन वर्त्मना । शरणार्थी नागभवनं सजानिः प्राविशद्द्विजः ।
ताभ्यामभ्येत्य वृत्तान्ते ततस्तस्मिन् निवेदिते । क्रोधान्धः सरसस्तस्मादुज्जगाम फणीश्वरः ।
उद्गर्ज्जज्जिह्मजीमूतजनितध्वान्तसन्ततिः । सघोराश्मनिवर्षेण ददाह सपुरं नृपं । २६०
दग्धप्राण्यङ्गविगलद्वसापङ्कौघवाहिनी । मयूरचन्द्रिकाङ्केव वितस्ता समपद्यत ।
शरणाय प्रविष्टानां भयाच्चक्रधरान्तिकं । सङ्कीर्णा निरदह्यन्त सहस्राणि शरीरिणां ।
मधुकैटभयोर्मेदःप्रागुर्व्वीरिव चक्रिणं । दग्धानां प्राणिनां तत्तत्तदा सर्व्वाङ्गमस्पृशत् ।
स्वसा सुश्रवसो नागी रमण्याख्याद्रिगह्वरात् । साहायकायाश्मराशीन् समादाय तदा ययौ ।
सयोजनाधिके शेषे मार्गस्याराद् सहोदरं । कृतकार्य्यं निशम्याश्मवर्षं ग्रामेषु तज्जहौ । २६५
योजनानि ततः पञ्च जाता ग्रामधरा शिला । सा रमण्यटवीत्यद्याप्यस्ति स्थूलशिलाविला ।
घोरं जनक्षयं कृत्वा प्रातः सानुशयोऽप्यहिः । लोकापवादनिर्व्विण्णः स्थानमुत्सृज्य तद्ययौ ॥
दुग्धाब्धिधवलं तेन सरो दूरगिरौ कृतं । अमरेश्वरयात्रायां जनैरद्यापि दृश्यते ।
श्वशुरानुग्रहान्नागीभूतस्यापि द्विजन्मनः । जामातृसर इत्यन्यत्तत्र च प्रथितं सरः ।
प्रजानां पालनव्याजान्निःशङ्कक्षयकारिणः । अकस्मादन्तकाः केचित् सम्भवन्ति तथाविधाः । २७०
अद्यापि तत्पुरं दग्धं शुभ्रीभूतञ्च तत्सरः । उपचक्रधरं दृष्ट्वा कथेयं स्मर्य्यते जनैः ।
राज्ञां रागः क्रियान्नाम दोषः स्वल्पदृशां मते । तत्तस्य तेन संवृत्तं यन्नाभूत्कापि कस्यचित् ।
सतीदैवतविप्राणामप्येकस्य प्रकोपतः । श्रुतो हि प्रतिवृत्तान्तं त्रैलोक्यस्यापि विप्लवः ।
चत्वारिंशतमब्दान् स मासैस्त्रीणां त्रिभिः समां । भुवं भुक्त्वा क्षितिवृषा दुर्णयेन क्षयं ययौ ।
अप्यल्पकालसन्दृष्टप्राकाराट्टालमण्डलं । तत् किन्नरपुरं लेभे गन्धर्व्वनगरोपमां । २७५
एकस्तु तनयस्तस्य वैचित्र्यात् कर्म्मणां गतेः । स्वधात्र्या विजयक्षेत्रं नीतः प्राणैर्न तत्यजे ।
राजा सिद्धाभिधः सोऽथ तथा निःशेषितं जनं । नवीचकार जलदो दावदग्धमिवाचलं ।
इति वृत्तं महाश्चर्य्यं तस्य पित्रं महामतेः । संसारासारताशंसि प्राप पुण्योपदेशतां ।
भोगयोगेन मालिन्यं नेतुं मध्यगतोऽपि सः । न शक्यते स्म पङ्केन प्रतिमेन्दुरिवामलः ।
दर्पज्वरोग्रभूपालमध्ये निध्यायतोऽनिशं । सुधासूतिकलामौलिं तस्यैवोल्लाघतां ययौ । २८०
गणितं गुणिना तेन मणीस्तृणमिवोज्झता । खण्डेन्दुमण्डनार्च्चायां मण्डनत्वमखण्डितं ।
राज्ञस्तस्यैव राजश्रीः परलोकानुगाभवत् । यस्तामयोजयद्भूतो धर्म्मेणाव्यभिचारिणा ।
षष्टिमब्दान् प्रशास्योर्व्वीमासन्नानुचरान्वितः । आरुरोह सदेहोऽसौ लोकान् शशिशिखामणेः ।
भृत्यान्तरं समाश्रित्य प्रययुः शोचनीयतां । तत्सुतास्तु समालम्ब्य प्रभुं भुवनवन्द्यतां ।
यात्याश्रितः किल समाश्रयणीयलभ्यां निम्नां गतिं जगति सर्व्वजनार्च्चितां वा । २८५
गच्छत्यधस्तृणगुणः श्रितकूपयन्त्रः पुष्पाश्रयी सुरशिरो भुवि रूढिमेति ।
सिद्धः सिद्धः सदेहोऽयमिति शब्दं सुरा दिवि । प्रोद्घोषयन्तोऽनयन् पटहं सप्तवासरान् ।

उत्पलाक्ष इति ख्यातिं पेशलाक्षतया गतः । तत्सूनुस्त्रिंशतं सार्द्धान् वर्षाणामन्वशान्महीं ।
तस्य सूनुर्हिरण्याक्षः स्वनामाङ्कं पुरं व्यधात् । क्ष्मां सप्तत्रिंशतं वर्षान् सप्त मासांश्च भुक्तवान् ।
हिरण्यकुल इत्यस्य हिरण्याक्षस्य चात्मजः । षष्टिं षष्टिं च मुकुलस्तत्सूनुरन्वभवत् समाः । २९०
अथ म्लेच्छगणाकीर्णे मण्डले चण्डचेष्टितः । तस्यात्मजोऽभून्मिहिरकुलः कालोपमो नृपः ।
दक्षिणां सान्तकामाशां स्पर्द्धया जेतुमुद्यता । यन्मिषादुत्तरहरिद्बभारान्यमिवान्तकं ।
सान्निध्यं यस्य सैन्यान्तर्हन्यमानाशनोत्सुकान् । अजानन् गृध्रकाकादीन् दृष्ट्वाग्रे धावतो जनाः ।
दिवारात्रं हतप्राणिसहस्रपरिवारितः । योऽभूद्भूपालवेतालो विलासभवनेष्वपि ।
बालेषु करुणा स्त्रीषु घृणा वृद्धेषु गौरवं । न बभूव नृशंसस्य यस्य घोराकृतेर्नृतः । २९५
स जातु देवीं सम्वीतसिंहलांशुककञ्चुकां । हेमपादाङ्कितकुचां दृष्ट्वा जज्वाल मन्युना ।
सिंहलेषु नरेन्द्राङ्घ्रिमुद्राङ्कः क्रियते पटः । इति कञ्चुकिना पृष्टेनोक्तो यात्रामधात्ततः ।
तत्सेनाकुम्भिदानाम्भोनिम्नगाकृतसङ्गमः । यमुनालिङ्गनप्रीतिं प्रपेदे दक्षिणार्णवः ।
स सिंहलेन्द्रेण समं संरम्भादुदपाटयत् । चिरेण चरणस्पृष्टप्रियालोकनजां रुषं ।
दूरात्तत्सैन्यमालोक्य लङ्कासौधैर्निशाचराः । भूयोऽपि राघवोद्योगमाशङ्क्य प्रचकम्पिरे । ३००
स तत्रान्यं नृपं दत्वा तीव्रशक्तिमपाहरत् । पटं यमुषदेवाख्यं मार्त्तण्डप्रतिमाङ्कितं ।
व्यावृत्य चोलकर्णाटलाटादींश्च नरेश्वरान् । सिन्धुरानिव गन्धेभो गन्धेनैव व्यधारयत् ।
तस्मिन् प्रयाते प्राप्तेभ्यः शशंसुस्तत्पराभवं । नगर्य्यो नरनाथेभ्यस्त्रुट्यदट्टालमेखलाः ।
काश्मीरं द्वारमासाद्य स्वभ्रभ्रष्टस्य दन्तिनः । श्रुत्वा सत्रासजं क्रोशं तोषरोमाञ्चितोऽभवत् ।
तदाकर्णनसंरम्भे सहर्षोऽथ विरुद्धधीः । शतमन्यद्गजेन्द्राणां हठेन निरलोठयत् । ३०५
स्पर्शोऽङ्गानि यथा वाचं कीर्त्तनं पापिनां तथा । सन्दूषयेदतो नोक्ता तस्यान्यापि नृशंसता ।
कोवेत्त्यद्भुतचेष्टानां कृत्यं प्राकृतचेतसां । धर्म्मं सुकृतसम्प्राप्तिहेतोः सोऽपि यदाददे ।
श्रीनगर्य्यां हि दुर्बुद्धिर्विदधे मिहिरेश्वरं । होलाड्डायां समिहिरपुराख्यं पृथुपत्तनं ।
अग्रहारान् जगृहिरे गान्धारब्राह्मणास्ततः । समानशीलास्तस्यैव ध्रुवं तेऽपि द्विजाधमाः ।
भगिनीवर्गसम्भोगनिर्लज्जाम्लेच्छवंशजाः । स्नुषासङ्गतिसक्ताश्च दारदाः सन्ति पापिनः । ३१०
वस्तुभावैस्तथा भाट्टा भार्य्याविक्रयकारिणः । परोपभोगितास्तेषां निर्लज्जास्तर्हि योषितः ।
मेघागमः फणिभुजं प्रथितान्धकारः प्रीणाति हंसममलो जलदात्ययश्च ।
प्रीतिः समानरुचितैव भवेन्नितान्तं दातुः प्रतिग्रहकृतश्च परस्परस्य ।
स वर्षसप्ततिं भुक्त्वा भुवं भूलोकभैरवः । भूरिरोगार्दितवपुः प्राविशज्जातवेदसं ।
सोऽयं त्रिकोटिहा मुक्तो यः स्वात्मन्यपि निर्घृणः । देहत्यागेऽस्य गगणादुच्चचारेति भारती । ३१५
इत्यूचुर्ये मते तेषां स एव परिहारदः । खण्डयन्नीतघृणतामग्रहारादिकर्म्मभिः ।
आक्रान्ते दारदैर्भौट्टैर्म्लेच्छैरशुचिकर्म्मभिः । विनष्टधर्म्मे देशेऽस्मिन् पुण्याचारप्रवर्त्तनं ।

आर्य्यदेशान् स संस्थाप्य व्यतनोद्दारुणं तपः। संकल्प्य स्वत्रपुदाहं प्रायश्चित्तक्रियां व्यधात्।
अतएवाग्रहाराणां सहस्रं प्रत्यपादयत्। गान्धारदेशजातेभ्यो द्विजेभ्यो विजयेश्वरे ।
खुरखङ्गासिधेन्वादिपूर्णे यः फलके तदा । वह्निप्रदीप्ते सहसा पर्य्यन्ते स्वां तनुं जहौ । २२०
इत्येतस्मिन्ननाम्नाये केचिदव्यभिचारिणि । प्राहुः पुरुषसिंहस्य क्रौर्य्यन्तस्याविगर्हितं ।
॥ कुलकं ॥ ये नागेन रुषा सुप्ते नगरे प्राभवन् खशाः। तेषां नाशाय वृत्तान्तं पूर्व्वोक्तं जगदुः परे ।
अवतारयतस्तस्य चन्द्रकुल्याभिधां नदीं । अश्मक्योम्मूलनामध्ये शिलाभूद्विघ्नकारिणी ।
ततः कृततपाः स्वप्ने देवैरुक्तः स भूपतिः। यक्षः शिलायां बलवान् ब्रह्मचार्य्यत्र तिष्ठति ।
साध्वी स्पृशति चेदेनां निरोद्धुं नच शक्नुयात्। ततोऽपरेद्युः स्वप्नोक्तं शिलायान्तेन कारितं । २२५
तासु तासु कुलस्त्रीषु व्यर्थयत्नास्वथाचलत्। चन्द्रवत्याख्यया स्पृष्टा कुलाख्या सा महाशिला ।
कोटित्रयं नरपतिः क्रुद्धस्तेनागसा ततः । सपतिभ्रातृपुत्राणामवधीत् कुलयोषितां ।
इयं चान्यमते ख्यातिः प्रथते तथ्यतः पुनः । अभव्या सनिमित्तापि प्राणिहिंसा गरीयसी ।
एवं क्षुद्रोऽपि यद्राजा सम्भूय न हतोजनैः। तत्कर्म्म कारयद्भिस्तद्दैवतैरेव रक्षितः।
प्रजापुण्योदयैस्तीव्रैश्चिरात्तस्मिन् क्षयं गते । एकस्तत्प्रभवः पौरैः सदाचारोऽभ्यषिच्यत । २३०
तत्रापि पूर्व्वसंस्कारानुकृता सन्दधे जनैः। श्मशानविहिते लीलावेश्मनीव नृपास्पदे ।
अतिसन्तापदाज्जातः सजनाह्लादकोऽभवत्। जलौघो जलदश्यामात्तापात्ययदिनादिव।
लोकान्तरादिवायातं मेने धर्म्मं तदा जनः । अभयञ्च परावृत्तं प्रवासाद्गहनादिव ।
स त्रकेशं वकः श्वभ्रे वकवत्यापगां तथा । कृत्वा पुरं परार्ध्यश्रीर्लवणोत्साभिधं व्यधात् ।
तत्र त्रिषष्टिर्व्वर्षाणां स त्रयोदशवासरान्। अभ्यवाह्यत भूपेन तेन पृथ्वीं प्रशासता । २३५
अथ योगेश्वरी काचिद्भट्टाख्या रजनीमुखे। कृत्वा कान्ताकृतिं काम्यामुपतस्थे विशाम्पतिं।
तया मनोहरैस्तैस्तैर्व्वचनैर्ल्लंपितस्मृतिः । स यागोत्सवमाहात्म्यं द्रष्टुं हृष्टो न्यमन्त्र्यत ।
पुत्रपौत्रशतोपेतः प्रातस्तत्र ततो गतः । चक्रवर्त्ती तया निन्ये देवीचक्रोपहारतां ।
कर्म्मणा तेन सिद्धाया व्योमाक्रमणसूचकं । जानुमुद्राद्वयं तस्या दृषत्यद्यापि दृश्यते ।
देवः शतकपालेशो मातृचक्रं शिला च सा । खीरे मठेषु तद्वार्त्ता स्मृतिमद्यापि गच्छति। २४०
देव्या कुलतरोः कन्दः क्षितिनन्दोऽवशेषितः । ततस्तस्य सुतस्त्रिंशद्वत्सरानन्वशान्महीं ।
सपञ्चाशतमब्दान् क्ष्मां द्वौ च मासौ तदात्मजः। अपासीद्वसुनन्दाख्यः प्रख्यातस्मरशास्त्रकृत्।
नरः षष्टिं तस्य सूनुस्तावतोऽक्षश्च तत्सुतः। वर्षानभूद्विभुर्ग्रामं योऽक्षवालमकारयत्।
जुगोप गोपादित्योऽथ क्ष्मां सद्वीपां तदात्मजः। वर्णाश्रमप्रत्यवेक्षादर्शितादियुगोदयः।
सखोलखागिकाहाडिग्रामे स्कन्दपुराभिधान्। शमाङ्गादिमुखांश्चाग्रहारान् यः प्रत्यपादयत्। २४५
ज्येष्ठेश्वरं प्रतिष्ठाप्य गोपाद्रावार्य्यदेशजाः। गोपाग्रहारान् कृतिना येन स्वीकारिता द्विजाः।
भूक्षीरवाटिकायां यो निर्व्वास्य लशुनाशिनः। खासटायां व्यधात् विप्रान्निजाचारविवर्ज्जितान् ।

अन्यांश्चानीय देशेभ्यः पुण्येभ्योवस्त्रिकादिषु । पावनानग्रहारेषु ब्राह्मणान् स न्यरोपयत्।
उत्तमो लोकपालोऽयमिति लब्ध प्रशस्तिषु । यः प्राप्तवान् विना यज्ञं चरमे न पशुक्षयं ।
सषड्दिनां वर्षषष्टिं पालयित्वा स मेदिनीं । भोक्तुं पुण्यपरीपाकं लोकान् सुकृतिनामगात् । १५०
गोकर्णस्तत्सुतः चौणीं गोकर्णेश्वरकृद्दधे । अष्टपञ्चाशतं वर्षांस्त्रिंशत्यङ्का विवर्ज्जितान्।
सूनुर्नरेन्द्रादित्योऽस्य खिङ्खिलान्याभिधोऽभवत् । भूतेश्वरप्रतिष्ठानामचयिण्याश्च कारकः ।
दिव्यानुग्रहभागुग्राभिधो यस्य गुरुर्व्यधात् । उग्रेशं मातृचक्रञ्च प्रभावोदयविग्रहः ।
भूत्वा षट्त्रिंशतं वर्षान् शतं चाङ्का विभुर्भुवः । सदीर्घैरनघान् लोकानासदत् सुकृतैः कृती ।
युधिष्ठिराभिधानोऽभूदथ राजा तदात्मजः । यः सूक्ष्माक्षतया लोकैः कथितोऽन्धयुधिष्ठिरः। १५५
तेन क्रमागतं राज्यं सावधानेन शासता । अनुजह्रे मितं कालं पूर्व्वभूपालपद्धतिः ।
काले कियत्यपि ततो यात्यभाग्यवशादसौ । सिषेवे श्रीमदक्षीबो यत्किञ्चन विधायितां।
नान्वग्रहीदनुग्राह्यान्न सञ्जग्राह धीमतः । न प्रहृष्टोपचाराणां प्रागिवासीत् प्रियङ्करः ।
दुर्व्विद्यपर्षदा साकं निर्व्विशेषं सभाजितैः। परिजह्रे स दुर्ज्ञातो जाततेजोवधैर्बुधैः ।
सर्व्वत्र समदृष्टित्वं गुणोऽयं खलु योगिनः । अकीर्त्तिहेतुः स महान्दोषस्तु पृथिवीपतेः। १६०
नयद्भिर्गुणतां दोषान् दोषतांश्च गुणान् विटैः । स लुप्तप्रतिभश्चक्रे शनकैस्तोजितोपमः ।
वाङ्मर्म्मच्छेदिनो दीर्घनर्म्मसम्बत्कथा विटैः । अनीश्वरोचिता तस्य क्रीडापि भयदाभवत् ।
पुरो मिथ्यागुणग्राही परोक्षे दोषदर्शकः । असुस्थिरादरो भूभृत् सोऽभूद्द्वेष्योऽनुजीविनां ।
मनागनवधानेन स्खलतस्तस्य भूपतेः । इत्थं राज्यस्थितिरगादचिरेण विसूत्रतां ।
उपेक्षितास्थनिर्द्रोहैरयतन्त्राजितात्मनः । अथ लब्धबलास्तस्य नाशाय द्रोहिमन्त्रिणः । १६५
प्रभोः सङ्कोचितांशैस्तैरङ्गैर्निरवग्रहं । राज्यं जिहीर्षवो भूपाश्चक्रिरे भूम्यनन्तराः ।
तदनु प्रणिताः सर्व्वे ते ते नानादिगाश्रयाः। आसन् राज्यामिषं प्राप्तुं श्येना इव ससम्भ्रमाः ।
अथोत्पन्नभयो राजा न शशाक निजस्थितिं । व्यवस्थापयितुं यन्त्रच्युतां कारुः शिलामिव ।
स्थिरत्वे क्षमाभर्त्तुस्तस्मिन् राज्ये विसंष्ठुले । उपायोऽस्य स्थितेर्हेतुर्नैकः कस्य न पप्रथे।
दृष्टदोषान् स्थितिं प्राप्तो हन्यादस्मानसंशयं । विचिन्त्येति न सामास्य जगृहुर्निजमन्त्रिणः । १७०
अथ निरुरुधुस्ते सन्नद्धा बलैर्नृपमन्दिरं । व्यवहितजनाक्रन्दं भेरीरवैरतिभैरवैः ।
मदकरिघटाकेतुच्छायानिरुद्धरविप्रभा भवनवलभीः सन्तन्वन्तो दिवापि तमोवृताः ।
तैर्गन्तुं स्वभुवो निवारितरणैर्दत्तेऽवकाशे ततस्त्यक्तश्रीर्नगरान्तरात्स नृपतिस्तात्पर्य्यतो निर्ययौ।
आजानेयरजाङ्गरागललनाप्रस्थानसन्दर्शनक्षुभ्यत्पौरजनाश्रुलाजकणिकाकीर्णेन राजाध्वना ।
राज्याच्युतस्य बहुशः परिवाररामाः कोशादि तस्य रिपवो भजतो विजह्रुः । १७५
उर्व्वीरुहो विगलितस्य नगेन्द्रशृङ्गाद्वल्लीफलादिरभसादिव गण्डशैलाः ।

रुद्धैः शैलपथैर्व्रजन् श्रमवशाच्छायां श्रितः शाखिनामासीनः प्रचलायितेन सुमहद्दुःखं विसस्मार यः ।
दूरात्पामरफुत्कृतैः श्रुतिपथप्राप्तैः प्रबुद्धस्त्वभूद्दृष्टो निर्झरवारिभिः सहमनाः श्वभ्रे निमज्जन्निव ।
नानावीरुत्तृणपरिमलैरुग्रगन्धा वनोर्व्वीरम्भःक्षोभप्रतिहतशिलाः पिच्छिलाश्चाद्रिकुल्याः ।
क्रान्त्वा श्रान्तैर्व्विषकिसलयच्छायमुग्धाग्रलेखैरत्युत्सङ्गं निहिततनुभिर्मूर्छितं तस्य दारैः ।
पर्य्यस्ताद्रितटाद्विलोक्य सुचिरं दूरीभवन्मण्डलं द्रागामन्त्रयितुं जहत्सु नृपतेर्दारेषु पुष्पाञ्जलीन् ।
क्षोणीपृष्ठविकीर्णपञ्चतिनमत्तुण्डं स्वनीडस्थितैः सावेगं गिरिकन्दरासु पततां द्वन्द्वैरपि क्रन्दितं ।
स्तनयुगवलनद्धस्रस्तमूर्द्धांशुकानां विकलवलनविलोलं वीक्ष्य दूरात् स्वदेशं ।
अवहत रुदतीनां मौलिविन्यस्तहस्तं पथि नृपवनितानामश्रुभिर्निर्झराम्भः ।
प्रीतिस्थैर्य्यैरुचितवचनाच्छिन्नबाष्पौघकान्त्या निर्व्याजाश्रयहरणगुरुभिस्तैश्च तैस्तोपचारैः ।
तस्य स्नेहादुपगतवतो राज्यविभ्रंशदुःखं मन्दीचक्रुः स्वभुवि सुजना भूपतेर्भूमिपालाः । ३७०

इति श्रीकाश्मीरकमहामात्यचम्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां प्रथमस्तरङ्गः ।

चतुर्दशाधिकं वर्ष सहस्रं नववासराः । मासाश्च विगता ह्यस्मिन्नष्टाविंशति राजसु ॥

---

## ॥ अथ द्वितीयस्तरङ्गः ॥



विहितमजगोः श्टङ्गाग्राभ्यां धनुर्घटितं तथा नरकरटिनोर्देहार्द्धाभ्यां गणं प्रतिगृह्णतः ।
द्विविधघटनावाप्ताभ्यानां निधेरुचिता विभोर्जयति ललनापुम्भागाभ्यां शरीरविनिर्मितिः ॥
भूयोराज्यार्जनोद्योगस्तेनात्यज्यत भूभुजा । जरसा शमिवाण्या च कर्णमूलमवाप्तया ।
अनयद्दिनयोद्दान्तः समं स्वविपर्ययेण तान् । विषयान् वशिनामग्र्यः स तान् पश्चापि विस्मृतिं ।
धावन्राज्येच्छया दुर्गागलिकायां स्वमन्त्रिभिः । कालेन स्थापितो बद्धेत्यभ्यधायि तु कैरपि ।
अथ प्रतापादित्याख्यस्तैरानीय दिगन्तरात् । विक्रमादित्यभूभर्त्तुर्ज्ञातिरभ्यर्थिच्यत । ५
शकारिर्विक्रमादित्य इति सम्भ्रममाश्रितैः । अन्यैरत्रान्यथालेखि विसंवादि कदर्थितं ।
इदं स्वभेदविधुरं हर्षादीनां धराभुजां । कश्चित्कालमभूद्राज्यं ततःप्रभृति मण्डलं ।
असपूर्व्वापि तेनोर्व्वी सपूर्व्वेव महीभुजा । लालिता हृदयज्ञेन पत्या नववधूरिव ।
भुक्ता द्वात्रिंशतं वर्षान् भुवं तस्मिन्दिवं गते । जलौकास्तत्सुतो भूमेर्भूषणं समपद्यत ।
पितुरेव समं कालं हृद्धि हेतोः स दिद्युते । विधुवत्पूर्णशीतांशुरिव शीतेतरार्च्चिषः । १०
अथ वाक्पुष्टया सार्द्धं देव्या दिव्यप्रभावया । भुवन्तत्प्रभवोऽभुङ्क्त तुञ्जीनो रञ्जयन् प्रजाः ।
दम्पतीभ्यामियं ताभ्यामभूष्यत वसुन्धरा । गङ्गामृगाङ्कखण्डाभ्यां जटाभूरिव धूर्जटेः ।
मण्डलं साध्वधत्तान्तौ नानार्थवमनोरमं । शतद्रुदापयोवाहौ माहेन्द्रमिव कार्म्मुकं ।
चक्राते च महाभागौ विभ्रमाभरणं भुवः । तुङ्गेश्वरं हरावासं कतिकाख्यञ्च पत्तनं ।
कचिन्मारवराज्यान्तः स्थाने चण्डातपोज्ज्वले । तत्प्रभावेण फलितं वृक्षैस्तत्क्षणरोपितैः । १५
नाम्यं सर्व्वजनप्रेक्ष्यं यश्चक्रे स महाकवेः । द्वैपायनमुनेरंशस्तत्काले चन्द्रकोऽभवत् ।
तयोः प्रभावमाहात्म्यजिज्ञासार्थमिवोद्यता । प्रजासु दुःसहा जातु व्यापद्दैवी व्यजृम्भत ।
पाकोन्मुखशरच्छालिच्छन्ने केदारमण्डले । मासि भाद्रपदेऽकस्मात् पपात तुहिनं महत ।
तस्मिन् विश्वक्षयोद्युक्तकालाट्टहसितोपमे । न्यमज्जन् शालयः साकं प्रजानां जीविताशया ।

अथासीत् क्षुत्परिक्षामजनप्रेतकुलाकुलः। प्राकारो निरयस्येव घोरो दुर्भिक्षविप्लवः। २०
पत्नीप्रीतिं सुतस्नेहं पितृदाक्षिण्यमातुरः। कुक्षिम्भरिः क्षुदुत्तप्तो विसस्माराखिलो जनः।
क्षुत्तापाद्विस्मरन् लज्जामभिमानं कुलोन्नतिं। अशनाहंक्रियाघाती लोकोलक्ष्मीकटाक्षितः।
क्षामं कण्ठगतप्राणं याचमानं सुतं पिता। सुतोवा पितरं त्यक्त्वा चकार स्वस्य पोषणं।
स्नाय्वस्थिशेषे बीभत्से स्वदेहेऽहंक्रियावतां। अभूद्भोज्यार्थिनां युद्धं प्रेतानामिव देहिनां।
रूक्षाभिभाषी क्षुत्क्षामो घोरो दिक्ष्वक्षिणी क्षिपन्। एक एको जगज्जीवैरियेष स्वात्मपोषणं। २५
तस्मिन् महाभये घोरे प्राणिनामतिदुःसहे। ददृशे लोकनाथस्य तस्यैव करुणार्द्रता।
निवारितप्रतीहारः सरत्नौषधिशोभिनः। दर्शनेनैव दीनानामलक्ष्मीक्रममच्छिनत्।
सपत्नीको निजैः कोशैः सञ्चयैर्म्मन्त्रिणामपि। क्रीतान्नः स दिवारात्रं प्राणिनः समजीवयत्।
अटवीषु श्मशानेषु रथ्यास्ववसथेषु च। क्षुत्क्षामः क्ष्माभुजा तेन नहि कश्चिदुपेक्ष्यत।
अतो निःशेषितधनः क्षीणान्नां वीक्ष्य मेदिनीं। क्षपायामेकदा देवीमेवमूचे सुदुःखितः। ३०
देव्यस्मदपचारेण ध्रुवं केनापि दुस्तरा। जाता निरपराधानां जनानां व्यापदीदृशी।
धिङ्मामधन्यं यस्याग्रे लोकोऽयं शोकपीडितः। पश्यन्नशरणामुर्व्वीमनुयाद्यो विपद्यते।
प्रजा निःशरणा एता अन्योन्यं बान्धवोज्झिताः। अरक्षिता भयेऽमुष्मिन् किं कार्य्यं जीवितेन मे।
यथा कथञ्चिल्लोकोऽयं दिनान्येतानि यत्नतः। मयातिवाहिताः सर्व्वे नच कोऽपि व्यपद्यत।
अतिक्रान्तप्रभावेयं कालदौरात्म्यपीडिता। निष्किञ्चनाद्य सञ्जाता पृथिवी गतगौरवा। ३५
तदिमाः सर्व्वतो मग्ना दारुणे व्यसनार्णवे। उपायः कतमस्तावत् समुद्धर्त्तुं क्षमः प्रजाः।
निरालोको हि लोकोऽयं दुर्द्दिनग्रस्तभास्करः। कालरात्रिकुलैर्व्विष्वक्परीत इव वर्त्तते।
हिमसङ्घातदुर्लङ्घ्यप्रचितिभृद्दुर्गनिर्गमाः। बद्धद्वारकुलायस्थखगवद्विवशा जनाः।
शूराश्च मतिमन्तश्च विद्यावन्तश्च जन्तवः। कालदौरात्म्यतः पश्य जाता निहतयोग्यताः।
आशाः काञ्चनपुष्पकुड्मलकुलच्छन्ना न काः क्ष्मातले सौजन्यामृतवर्षिभिस्तिलकितं सेव्यैर्न किं मण्डलं। ४०
पन्थानः सुचिरोपचाररुचिरैर्व्याप्ता न कैः संस्तुतैस्तेषामत्र न सन्ति निह्नुतगुणाः कालेन ये मोहिताः।
तदेष गलितोपायो जुहोमि ज्वलने तनुं। नतु द्रष्टुं समर्थोऽस्मि प्रजानां नाशमीदृशं।
धन्यास्ते पृथिवीपालाः सुखं ये निशि शेरते। पौरान् पुत्त्रानिव पुरः सर्व्वतो वीक्ष्य निर्वृतान्।
इत्युक्त्वा करुणाविष्टो मुखमाच्छाद्य वाससा। निपत्य तल्पे निःशङ्कं रुरोद पृथिवीपतिः।
निर्व्वातस्तिमितैर्दीपैरुद्ग्रीवैः कौतुकादिव। वीक्षमाणाथ तं देवी जगाद जगतीभुजं। ४५
राजन् प्रजानां कुकृतैः कोऽयं मतिविपर्य्ययः। येनेतर इव स्वैरमधीरोचितमीहसे।
यद्यसाध्यानि दुःखानि छेत्तुं न प्रभविष्णुता। तन्महीपाल महतां महत्त्वस्य किमङ्कनं।
कः शक्रः कतमः स्रष्टा वराकः कतमो यमः। सत्यव्रतानां भूपानां कर्त्तुं शासनलङ्घनं।
पत्यौ भक्तिव्रतं स्त्रीणामद्रोहो मन्त्रिणां व्रतं। प्रजानुपालनेऽनन्यकर्म्मता भूभृतां व्रतं।

उत्तिष्ठ व्रतिनामग्र्य क विपर्य्येति मद्वचः। प्रजापाल प्रजानान्ते नास्त्यत्र क्षुत्कृतं भयं। ५०
इति संरम्भतः प्रोक्ते तयानुध्याय देवताः। प्रतिगेहं गतप्राणः कपोतनिवहोऽपतत्।
प्रातस्तन्नृपतिर्व्वीक्ष्य व्यरंसीन्मरणोद्यमात्। प्रजाश्च प्रत्यहं प्राप्तैः कपोतैर्जीवितं दधुः।
वस्त्वन्तरं किमपि तत् साध्वी नूनं ससर्ज्ज सा। जनताजीवितावाप्त्यै न कपोतास्तु तेऽभवन्।
तादृशं नहि निर्व्याजप्राणिकारुण्यशालिनां। हिंसया धर्म्मचर्य्यायाः शक्यं चापि कलङ्कनं।
अभवन्निर्म्मलं व्योम देवीकृत्यैः सह क्रमात्। साकं भूपालशोकेन दुर्भिक्षं च शमं ययौ। ५५
सा भूतिविभवोदग्रमग्रहारं द्विजन्मनां। सती कतीमुषश्चक्रे रामुषं चापकल्मषा।
वर्षैः षट्त्रिंशता शान्ते पत्यौ विरहजो ज्वरः। तत्यजे ज्वलनज्वालानलिनप्रच्छदे तया।
सा यच्च शुचिचारित्रा विपन्नं पतिमन्वगात्। स्थानं जनैस्तदाक्रुष्टाटवीत्यद्यापि गद्यते।
चारुचारित्रया तत्र तया सत्रेऽवतारिते। नानापथागतानाथसार्थैरद्यापि भुज्यते।
आभ्यामभ्यधिकं कर्त्तुं शक्तिः कस्येति निश्चितं। विचिन्त्यारोचकी धाता नापत्यं निर्म्ममे तयोः। ६०
वेधाः परां धुरमुपैति परीक्षकाणामिक्षोः फलप्रजननेन कृतश्रमो यः।
विस्तारिताङ्कुरमुदारमयोग्यता तु तस्मादुदेत्य किमिवाभ्यधिकं विदध्यात्।
दीर्घदुर्दिननष्टार्कराष्ट्रमात्मापचारतः। ज्ञात्वा राज्ञ्यग्निसाहसं सा चकारेति केचन।
ततोऽन्यकुलजो राजा विजयोऽष्टावभूत् समाः। पत्तनेन परीतं यश्चकार विजयेश्वरं।
सुतो महीमहेन्द्रस्य जयेन्द्रस्तस्य भूपतेः। आजानुभुजो राजा बुभोजाथ प्रथुप्रथः। ६५
अलोलकीर्त्तिकल्लोलदुकूलवलनोज्ज्वलां। बभार यद्भुजस्तम्भो जयश्रीशालभञ्जिकां।
तस्याभूदद्भुतोदन्तभव्यभक्तिविभूषितः। राज्ञस्सन्धिमतिर्नाम मन्त्री मतिमतां वरः।
नास्त्युपायः स संसारे कोऽपि योऽपिहितुं क्षमः। भूपालमत्तकरिणामेषां चपलकर्णतां।
अत्यद्भुतमतिः शङ्क्यः सोऽयमुक्तोति यद्विटैः। तस्मिन्धीसचिवे द्वेषस्तेनाग्राह्यत भूभुजा।
निवारितप्रवेशोऽथ सकोपस्तमहेतुकं। निनाय हृतसर्व्वस्वं यावदायुर्दरिद्रतां। ७०
तस्य भूपतिविद्वेषशोषोष्मपरिशोषिणः। आप्यायं राजपुरुषा वार्त्तयापि न चक्रिरे।
गिरं गभीरां गृह्णाति क्ष्माभृद्यावदन्तगाः। उक्तानुवादिनस्तावद्भृत्याः प्रतिरवा इव।
स तु राजविरुद्धत्वदारिद्र्याभ्यां न विव्यथे। गतप्रत्यूहया प्रीतः प्राप्तया हरसेवया।
अथ भाव्यर्थमाहात्म्यात् पप्रथे प्रतिमन्दिरं। राज्यं सन्धिमतेर्भावीत्यश्रुतापि सरस्वती।
माचोदितावाक्चरतीत्याप्तेभ्यः श्रुतवान्नृपः। ततः सम्भूतसन्त्रासः कारावेश्मनि तं व्यधात्। ७५
तत्र तस्योग्रनिगडैः पीडिताङ्घ्रेर्व्विषीदतः। पूर्णोऽभूद्दशमो वर्षो भूपतेश्चायुषोऽवधिः।
निष्पुत्रः स महीपालो मुमूर्षुर्दाहमाददे। रोगात्यया पीडया च चिन्तया च तदीयया।
ऊष्मायमाणोविद्वेषवह्निना ज्वलतानिशं। न विना तद्वधं मेने भवितव्यप्रतिक्रियां।
भाव्यर्थस्य बुधाः कुर्य्युरुपायं स्थगनाय यं। स एवापावृतं द्वारं ज्ञेयं दैवेन कल्पितं।

दग्धाङ्गारकदम्बके विलुठतः स्तोकोन्मिषत्तेजसो वेधा वह्निकणस्य शक्तिमतुलामाधातुकामो हठात्। ८०
तन्निर्व्वापणमिच्छतः प्रतनुते पुंसः समीपस्थिते सन्तापद्रुतभूरिसर्पिषि घटे पानीयकुम्भभ्रमं।
अथ राजाज्ञया क्रूरैर्वधकर्म्माधिकारिभिः। निशि सन्धिमतिः शूले समारोप्य विपादितः।
प्रोतशूले श्रुते तस्मिन् शोकशङ्कुर्म्महीपतेः। निरगाद्द्रोगभग्नस्य पूर्व्वं पश्चात्तु जीवितं।
सप्तविंशतिवर्षेषु यातेष्वस्मिन्निरन्वये। प्रशान्तभूमिपालाभूत् कतिचिद्दिवसानि भूः।
अथ सन्धिमतिं बुद्धा तथा व्यापादितं गुरोः। ईशानाख्यस्य हृदयं विवशं वशिनोऽप्यभूत्। ८५
शिरीष इव संसारे सुखोच्छेद्ये मनीषिणां। हन्ता नृशंसस्तद्वृन्तमिवैकमवशिष्यते।
स श्मशानभुवं प्रायादनाथस्येव शुष्यतः। कर्त्तुं विनयिनस्तस्य स्वोचितामन्त्यसत्क्रियां।
तत्रास्थिशेषमद्राक्षीत्तक्ष्यमाणं वलादृकैः। शूलमूलावबद्धास्थिखण्डावष्टम्भनिश्चलं।
समीरणसमाकीर्णं मुण्डरन्ध्रायनिर्गतैः। ध्वनितैरनुशोचन्तमिवावस्थां तथाविधां।
हा वत्स दृष्टुमीदृक्त्वे जीवाम्यद्येति वादिना। तस्याकृष्यत शूलान्तः प्रोतं तेनाथ कीकसं। ९०
वेष्टिताङ्घ्रिः शिरःशीर्णैस्तत्कचैर्धूलिधूसरैः। अनैषीत्तं स्वकं कालं वारयन् भाषतो वृकान्।
उचितां सत्क्रियां कर्त्तुं ततस्तस्य समुद्यतः। भाले विधातृलिखितं श्लोकमेतमवाचयत्।
यावज्जीवं दरिद्रत्वं दशवर्षाणि बन्धनं। शूलस्य पृष्ठे मरणं पुनाराज्यं भविष्यति।
पादत्रयस्य दृष्टार्थे श्लोकस्यासीत् स योगवित्। द्रष्टव्ये तुर्य्यपादार्थे प्रत्यये कौतुकान्वितः।
अचिन्तयच्च संभ्रान्तः कथमेतद्भविष्यति। उवाच च विधेः शक्तिमचिन्त्यां कलयंश्चिरं। ९५
तत्तत्कर्म्मव्यतिकरकृतः पारतन्त्र्यानुरोधात् सत्त्वाः सर्व्वे व्यवसितहठोन्मूलनाय प्रयत्नात्।
चित्रं तत्राप्युदयति विधेः शक्तिरत्यद्भुतेयं यन्माहात्म्याद्विविधघटनासिद्धयोनिर्निरोधाः।
मणिपूरपुरे पार्थं निहतं समजीवयत्। फणिकन्याप्रभावेण सर्व्वाश्चर्य्यनिधिर्विधिः।
द्रोणपुत्रास्त्रनिर्दग्धं मातुर्गर्भे परीक्षितं। जीवयन् कृष्णमाहात्म्याद्धाता धुर्य्योऽधिकारिणां।
कचं भस्मीकृतं दैत्यैर्नागांस्तार्क्ष्येण भक्षितान्। पुनर्जीवयितुं को वा दैवादन्यः प्रगल्भते। १००
इत्युक्त्वा भाविनोऽर्थस्य द्रष्टुं सिद्धिं समुद्यतः। तत्रैव बद्धवसतिः कङ्कालं स ररक्ष तं।
अथार्द्धरात्रे निर्निद्रस्तथैवाहृतचिन्तया। धूपाधिवासमीशानो घ्रातवान् दिव्यमेकदा।
उच्चण्डवादनादण्डोद्घृष्टघण्टाघटाकृतैः। चण्डैर्डमरुनिर्घोषैर्घर्घरं श्रुतवान् ध्वनिं।
उद्घाटिततमोरिः स ततः पितृवनावनौ। दर्शयन् योगिनीस्तेजःपरिवेषान्तरस्थितः।
तासां संभ्रममाकर्ण्य कङ्कालं चापवाहितं। ईशानस्तां श्मशानोर्व्वीं धृतासिश्चकितो ययौ। १०५
अथापश्यत्तरुच्छन्नः शायितं मण्डलान्तरे। सन्धीयमानसर्व्वाङ्गं कङ्कालं योगिनीगणैः।
उन्मदद्रसंयोगवाञ्छामद्यपदेवताः। वीरालाभात् समन्विष्य कङ्कालं तमपाहरन्।
एकमेकं स्वमङ्गञ्च विनिधाय चणादथ। कुतोऽप्यानीय पुंलक्ष्मपूर्णाङ्गं तं प्रचक्रिरे।
अथ पुर्य्यष्टकभ्राम्यदनाक्रान्तान्यविग्रहं। योगेनाकृष्य योगेभ्यस्तत्र सन्धिमतेर्व्विभुः।

ततः सुप्तोत्थित इव प्रभुर्दिव्यविलेपनः । समभुज्यत ताभिः स यथेच्छं चक्रनायकः । ११०
ईशानस्तस्य देवीनां विशीर्णाङ्गहृतिं पुनः । चपायां चोद्यमाणायां चकितः पर्य्यपृच्छत ।
नदंस्तद्वचसा धीरः स च तत् स्थानमाययौ । तच्च योगेश्वरीचक्रं क्षिप्रमन्तरधीयत ।
अथाश्रूयत वाक्यासां माभूदीशान भीस्तव । नास्त्यङ्गहानिरस्माकं हृते चास्मिन् वष्मणा ।
अस्मदङ्गाद्दिव्यवपुः सन्धितः सन्धिमानसौ । आर्य्यत्वादार्य्यराजाख्यः ख्यातो भुवि भविष्यति ।
ततो दिव्याम्बरः स्रग्वी दिव्यभूषणभूषितः । ववन्दे सन्धिमान् प्रह्वः प्राप्तपूर्व्वस्मृतिर्गुरुं । ११५
ईशानोऽपि तमालिङ्ग्य स्वप्नेष्वपि सुदुर्लभं । भूमिकामाललम्बे कामिति को वक्तुमर्हति ।
असारस्य विचित्रस्य संसारं ध्यायतोर्मिथः । विवेकविशदा तत्र प्रावर्त्तत तयोः कथा ।
अथ वार्त्तां विदित्वेमां कुतोऽपि नगरौकसः । सबालवृद्धाः सामात्यास्तमेवोद्देशमाययुः ।
पूर्व्वाकृतिविसंवादाद्भ्रमोनायं स इत्यथ । तेनाक्रियत संवासिनिखिलान् पृच्छता वचः ।
अर्थानां शासितुं राष्ट्रं पौराणामपराजकं । सोऽभ्यमन्यत कृच्छ्रेण निस्पृहः शासनाद्गुरोः । १२०
प्रापय्योपवनोपान्तं तं दिव्याकृतिशोभिनं । सत्वर्थं स्नापयामासुरभिषेकाम्बुभिर्द्विजाः ।
नवराजोचिताचारे न स शिक्षामपेक्षत । दृष्टकर्म्मा समस्तास्तु निस्तुषाः प्रक्रिया व्यधात् ।
स राजोचितनेपथ्यः पौराशीर्व्वचोभिनौं । सैधान्मिषन्नाजवर्षे ससैन्यां प्राविशत् पुरीं ।
तस्मिन् विरजसि प्राज्यमाक्रामति नृपासनं । आचक्राम प्रजा व्यापन्न दैवी न च मानुषी ।
प्राहरन् हृदयं तस्य शृङ्गाररहितविभ्रमाः । नितम्बिन्यो वनभुवः शमिनो न तु योषितः । १२५
वनप्रसूनसम्पर्कपुण्यगन्धैस्तपस्विनां । कर्पूरधूपसुरभिः करैः स्पृष्टः स पिप्रिये ।
भूतेशवर्द्धमानेशविजयेशानपश्यतः । नियमो राजकार्य्येषु तस्याभूत् प्रतिवासरं ।
हरायतनसोपानचालनाम्भःकणाश्रितैः । संस्पृष्टः पवनैः सोऽभूदानन्दास्यन्दविग्रहः ।
पूर्व्वपूजापनयने निराडम्बरसुन्दरः । तेनैव द्रष्टुमस्नायि स्नपितो विजयेश्वरः ।
लिङ्गपीठलुठत्स्नानकुम्भाम्भःक्षोभभूर्ध्वनिः । शयानस्याप्यभूत्तस्य वल्लभो वल्लकीद्विषः । १३०
तापसैर्भस्मरुद्राक्षजटाजूटाङ्कितैर्बभौ । तस्य माहेश्वरी पर्षदिव भूमिपतेः सभा ।
शिवलिङ्गसहस्रस्य प्रतिष्ठाकर्म्मणि प्रभोः । प्रतिज्ञा प्रत्यहं तस्य नाभूद्विघटिता क्वचित् ।
प्रमादात्तदनिष्पत्तौ शिलामुत्कीर्य्य कल्पिता । सहस्रलिङ्गी तद्भृत्यैः सर्व्वतोऽद्यापि दृश्यते ।
तासु तासु स वापीषु लिङ्गव्याजादरोपयत् । स पुण्यपुण्डरीकाणां जन्मनेऽत्र परम्पराम् ।
स्थाने स्थाने जलान्तस्थ बहुसंख्यैर्निवेशितैः । अनयन्नर्म्मदाभङ्गिं शिवलिङ्गैस्तरङ्गिणीं । १३५
प्रतिलिङ्गं महाग्रामाः प्रत्यपाद्यन्त तेन ये । पर्षदामस्य तद्भोगः कालेनान्तर्द्धिमागतः ।
अकरोत् स महाहर्म्यैर्म्महालिङ्गैर्म्महावृषैः । महात्रिशूलैर्म्महतीं महामाहेश्वरीं महीं ।
कृत्वा सन्धीश्वरं देवसन्धानपिल्लकानने । ईशानस्य गुरोर्नाम्ना व्यधादीशेश्वरं हरं ।
खेदाश्च भीमां देवीश्च देवांश्चान्यान् पदे पदे । समठप्रतिमालिङ्गहर्म्यैर्निन्ये महार्घतां ।

स्वयंभूरिव तीर्थैश्च पूतं भक्तिविभूषितः । स एव भोक्तुमध्यासीत् प्राज्यः काश्मीरमण्डलं । १४०
स्नातस्य निर्झराम्भोभिः पुष्पलिङ्गार्च्चनोत्सवैः । राज्ञस्तस्य वनोर्वीषु मासः पुष्पाकरो ययौ ।
स चातिरम्यः काश्मीरो ग्रीष्मस्त्रिदिवदुर्लभः । हिमलिङ्गार्च्चनैः प्रासादनान्तेषु कृतार्थतां ।
फुल्लाब्जखण्डरुद्धाशाः प्राप्य पुष्करिणीतटीः । लक्ष्मीसखः स खण्डेन्दुचूडाध्यानपरोऽभवत् ।
नीलोत्पलवतीर्व्वापीरगस्त्योदयनिर्विषाः । अवगाह्य हरार्च्चाभिः शरदं निर्विवेश सः ।
सार्द्धं तपोधनैस्तैस्तैर्भजतो जागरोत्सवान् । तस्याभूवन् भुवो भर्त्तुरमोघा माघरात्रयः । १४५
अत्यद्भुतं राज्यलाभमित्थं सफलयन् कृती । पञ्चाशतं त्रिवर्षोनामत्यक्रामत् स वत्सरान् ।
समयसनिनस्तस्य राज्यकार्य्याण्यपश्यतः । तस्मिन् काले प्रकृतयो विरागं प्रतिपेदिरे ।
अन्वैष्यत नृपस्ताभिः कश्चिद्राज्याय भूभुवे । राजपुत्त्रोऽजिगीषुश्च श्रीमान् यौधिष्ठिरे कुले ।
जुगोप गोपादित्याख्यः काश्मीरेन्द्रजिगीषया । युधिष्ठिरप्रपौत्त्रं हि गान्धाराधिपतिस्तदा ।
वसन्नपास्तसाम्राज्यः स तत्र तनयं क्रमात् । अवाप लक्षणैर्दिव्यैरमोघं मेघवाहनं । १५०
स तत्र पितुरादेशाद्वैष्णवान्वयजन्मनः । राज्ञः प्राग्ज्योतिषेन्द्रस्य ययौ कन्यास्वयम्बरे ।
तत्र तं वारुणं छत्रं छायया राजसन्निधौ । भेजे वरस्रजा राजकन्यका चामृतप्रभा ।
तेन तस्य निमित्तेन वृद्धिमागामिनीं जनाः । अजानन्नम्बुवाहस्य पाश्चात्त्येनेव वायुना ।
राज्ञा हि नरकेणैतद्वरुणादुष्णवारणं । आनीतमकरोच्छायां न विना चक्रवर्त्तिनं ।
तमन्तिकं पितुः प्राप्तं पत्न्या लक्ष्म्या च संश्रितं । भुवा निमन्त्रयामासुर्म्मन्त्रिणो वंश्ययोग्यवान् । १५५
अथार्य्यराजो विज्ञाय स्वराज्यं मेघजर्ज्जरं । प्रतिचक्रे न शक्तोऽपि तस्थौ तत्त्यक्तुमुत्सुकः ।
अचिन्तयच्च सत्यं मे सम्प्रीतोभूतभावनः । सिद्धिविघ्नानमून् दीर्घानपाकर्त्तुं समुद्यतः ।
कृत्ये बहूनि निष्पाद्ये श्रमात् कौसीद्यमाश्रयन् । प्रावृषेवाध्वगो दिष्ट्या मोहितोऽस्मि न निद्रया ।
स्वकुले त्यजता लक्ष्मीं विरक्तां बन्धकीमिव । हठनिर्वासनव्रीडा दिष्ट्या नासादिता मया ।
शैलूषस्येव मे राज्यं रङ्गेऽस्मिन् वल्गतश्चिरं । निर्व्यूढावपि वैराज्यं दिष्ट्या न प्रेक्षकागता । १६०
दिष्ट्या सदैव वैमुख्यमुच्चैरुद्घोषयन् श्रियः । त्यागक्षणेन भीतोऽस्मि विकत्थन इवाहवे ।
इति सञ्चिन्तयन्नन्तः सर्व्वत्यागोन्मुखो नृपः । मनोराज्यानि कुर्व्वाणो दरिद्र इव पिप्रिये ।
अन्येद्युः प्रकृतीः सर्व्वाः सन्निपत्य सभान्तरं । ताभ्यः प्रत्यर्पयन्नासमित्र राज्यं सुरक्षितं ।
उज्झितं स्वेच्छया तत्र प्रयत्नेनापि नाशकत् । तं स्वीकारयितुं कश्चित् फणीन्द्रमिव कञ्चुकं ।
अर्घालिङ्गमुपादाय सोऽथ प्रायादुदङ्मुखः । धौतवासा निरुष्णीषः पद्भ्यामेव प्रजेश्वरः । १६५
तस्य पादार्पितदृशो व्रजतो मौनिनः प्रभोः । पन्थानं जगृहुः पौरा निःशब्दस्तवदस्तवः ।
सविलङ्घितगव्यूतिरुपविश्य तरोरधः । जनमेकैकमुद्वाष्पं न्यवर्त्तयत सान्त्वयन् ।
पथि शिखरिणां मूले मूले विलम्ब्य जनव्रजान् मितपरिकरो गच्छन्नूर्द्ध्वं क्रमात् समवृश्यत ।
गहनवसुधाः सम्पूर्य्यावैभ्रजन् स निजापदान्मद इव विनिर्यातः स्तोकैः कृतानुगमोजनैः ।

निःशेषं निकटात् सलोकमटवीमध्ये निरुध्यत्पदं शोकावेशमवाप्य गद्गदपदं संमान्य चोत्सार्य च ।
भूजलक्परिरोधमर्मरमरुन्निद्राणसिद्धाध्वगश्रेणीमौलिमणिप्रभोज्ज्वलगुहागेहं जगाहे वनं । १००
अथ वनसरसीतटद्रुमाधःपुटकघटोदरसंभृताम्बुपूरां । वसतिमकृत वासरावसाने शुचितरुपल्लवकल्पितोच्चतल्पां ।
शृङ्गासक्तसितातपाः शबलितच्छायाभृतः शाद्वलैरुत्फुल्लामलमल्लिकातलमिलत्सुप्तव्रजस्त्रीजनाः ।
सध्वानावनपालरेणुरणितोन्मिश्रैः प्रपाताम्बुभिः आक्रान्तं दृक्पथमागतास्तमनयन्निद्रामदूराद्रयः ।
वनहरिरसितैः पदे पदे स प्रतिभटतां पटहध्वनेर्दधानैः । अमनुत रटितैश्च कर्कराटाः परिगलितां गमनोन्मुखस्त्रियामाम् ।
अन्येद्युर्विधिवदुपास्य पूर्वसन्ध्यामासन्ने नलिनसरस्युपास्तनिद्रः । क्ष्मापालः परिचितसोदराम्बुतीर्थं नन्दीशाध्युषितमवाप भूतभर्त्तुः ।
नन्दिक्षेत्रे त्रिभुवनगुरोः सोऽयतस्तत्र यावत्तस्थौ तावत् स्वयमभिमतावाप्तये जायते स्म । १०५
भस्मस्मेरः सुघटितजटाजूटबन्धोऽक्षसूत्री रुद्राक्षाङ्कोऽजरठमुनिभिः सस्पृहं वीक्ष्यमाणः ।
भ्राम्यच्छ्रीकण्ठदत्तव्रतजनितमहासत्क्रियो भैक्षहेतोर्भिक्षाधानोद्यतासु प्रतिमुनिनिलयं संभ्रमात्तापसीषु ।
दृष्टैर्भिक्षाकपाले शुचिफलकुसुमश्रेणिभिः पूर्यमाणे मान्या वैराग्ययोगेऽप्यनुपतनपरप्रार्थनालाघवोऽभूत् ॥ १०८
राजानः ॥ ६ ॥ आदितः राजानः ॥ ४४ ॥ ग्रन्था आदितः ॥ ५४२ ॥
इति श्रीकाश्मीरिकमहामात्यचम्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां द्वितीयस्तरङ्गः ॥
शतद्वये वत्सराणामष्टभिः परिवर्जिते । अस्मिन् द्वितीये व्याख्याताः षट् प्रख्यातगुणा नृपाः ॥

# ॥ तृतीयतरङ्गः ॥



मुग्धेभाजिनमस्य कुम्भकुहरे मुक्ताः कुशाग्रोचिताः किं भालज्वलनेन कज्जलमतः स्त्रीकार्य्यमद्गणाः कृते ।
संधाने वपुरर्द्धयोः प्रतिवदन्नेवं निषेधेऽप्यहेः कर्त्तव्ये प्रिययोत्तरानुसरणोद्युक्तो हरः पातु वः ।
अथोत्तमत्पृथुश्लाघमानिन्युर्मेघवाहनं । गान्धारविषयं गत्वा सचिवाधिष्ठिताः प्रजाः ।
रक्तप्रजस्य भूभर्त्तुः पश्चाल्लोकानुरञ्जनं । तस्याज्ञापि जनैर्धौतक्षौमक्षालनसन्निभं ।
स पुनर्ब्बोधिसत्वानामपि सत्वानुकम्पिनां । चर्य्यामुदात्तचरितैरत्यशेत महाशयः ।
तस्याभिषेक एवाज्ञां धारयन्तोऽधिकारिणः । सर्व्वतो मारमर्य्यादापटहानुदघोषयन् । ५
कल्याणिना प्राणिबधे तेन राष्ट्रान्निवारिते । निष्पापां प्रापितां वृत्तिं स्वकोषात् सौनिकादयः ।
तस्य राज्ये जिनस्येव मारविद्वेषिणः प्रभोः । क्रतौ घृतपशुः पिष्टपशुर्भूतबलावभूत् ।
स मेघवननामानमग्रहारं विनिर्म्ममे । स युष्ग्रामकृत् पुण्यज्येष्ठो मेघमठं तथा ।
भोगाय देव्यभिक्षूणां तस्य भार्य्यामृतप्रभा । विहारमुच्चैरमृतभवनाख्यमकारयत् ।
देश्यैकदेशाल्लोनाम्नः प्राप्तस्तस्याः पितुर्गुरुः । स्तुन्या तद्भाषया प्रोक्तो लोस्तोन्पास्तूपकार्य्यकृत् । १०
चक्रे नडवने राज्ञो यूकदेव्यभिधा वधूः । विहारमद्भुताकारं सपत्नीस्पर्द्धयोद्यता ।
अर्द्धे यस्मिन्नवः शिक्षाचारास्तत्रार्पितास्तया । अर्द्धे गार्हस्थ्यगर्ह्यास्तु सस्त्रीपुत्रपशुश्रियः ।
अथेन्द्रदेवीभवनमिन्द्रदेव्यभिधा व्यधात् । विहारं सचतुःशालं स्तूपं भूपप्रियापरा ।
अन्याभिः खादनासम्माप्रमुखाभिर्निजाख्यया । देवीभिस्तस्य सहिता विहारा बहवः कृताः ।
अर्व्वाक्कालोद्भवस्यापि राज्यकालेऽस्य भूपतेः । न्यक्कृतादिनृपोदन्तैर्वृत्तान्तैरद्भुतोऽभवत् । १५
स वहिर्व्विहरन् जातु भूभृद्गीतैरुदीरितं । चौरश्चौरोऽयमित्यारादशृणोत् क्रन्दितध्वनिं ।
कः कोऽत्र बध्यतां चौर इत्युक्ते तेन सक्रुधा । शशामाक्रन्दितध्वानो न च चौरो व्यभाव्यत ।
पुनर्द्दित्रैर्द्दिनैस्तस्य निर्गतस्याग्रतस्ततः । अभवन्नभयार्थिन्यो दिव्या दिव्यप्रभा स्त्रियः ।
ताः संश्रुतेप्सितास्तेन रुद्धाश्वेन कृपालुना । अभ्यभाषन्त सीमन्तपुञ्जिताञ्जलयो वच. ।

देव दिव्यप्रभावेण भुवने भवता धृते । अपरस्मात्भयं जातु कस्य स्यात् करुणानिधे । २०
तदानीं तोयदाभूत्वाच्छादयन्तो नभस्तलं । अकाण्डकरकापातशङ्किभिः कृषकैर्वृथा ।
पक्वशालिवनस्फीतिरक्षाक्षुभितमानसैः । नागास्त्वत्कोपसंरम्भभूमिं ते गमिताः प्रभो ।
तेऽस्माकं पतयश्चौरश्चौरइत्यन्तभाषितं । श्रुत्वा देवेन बध्यन्तामित्यवादि यदा क्रुधा ।
तदा त्वदाज्ञामात्रेण न्यपतन् पाशवेष्टिताः । प्रसादः क्रियतां तेषामस्मत्करुणयाधुना ।
॥ चतुर्भिःकुलकं ॥ तदाकर्ण्यात्रदद्राजा प्रसादविशदाननः । सर्व्वे ते बन्धनान्नागास्त्यज्यन्तामिति सस्मितः । २५
तया तस्याज्ञया राज्ञो नागा विधुतबन्धनाः । प्रणम्य चरणौ तूर्णं प्रययुः सपरिग्रहाः ।
अथ ग्राहयितुं भूपानाज्ञां हिंसानिवृत्तये । सदिग्जयाय निर्व्याजधर्म्माचर्य्यो विनिर्य्ययौ ।
अभूतभीतजनताविचक्षणश्लाघ्यविक्रमः । स्पृहणीयो जनस्यापि त्वदीयविजयोद्यमः ।
प्रभावर्व्विजितान् कृत्वा सोऽहिंसादीक्षितान्नृपान् । अर्णसां पत्युरभ्यर्णमवापावर्णवर्जितः ।
तत्र तालीवनच्छायासुखविश्रान्तसैनिकः । युक्तिं द्वीपान्तराक्रान्त्यै क्षणमन्तर्व्यचिन्तयत् । ३०
अथ वेलावनोपान्ता तेनार्त्ताक्रन्दितध्वनिः । मेघवाहनराज्येऽपि हतोऽयमिति शुश्रुवे ।
तन्नायःशंकुनेवान्तर्व्रणितस्य द्रुतं ततः । सञ्चारिणातपत्रेण स चार्तां वसुधामगात् ।
अपश्यदथ तेनापि चण्डिकायतनाग्रतः । नरं शवरसेनान्या हन्यमानमधोमुखं ।
अनात्मज्ञ धिगेतत्ते कुकर्म्मेति महीभुजा । तर्ज्जितः स भयादेव शवरस्तं व्यजिज्ञपत् ।
शिशुर्म्मुमूर्षुर्म्मे राजन्नयं रोगार्द्दितः सुतः । कर्म्मैतद्दैवतैरुक्तमस्य श्रेयोलवावहं । ३५
उपहारनिरोधेन सद्यएष विपद्यते । बन्धुवर्गमशेषञ्च विद्धि तज्जीवजीवितं ।
अरण्यगहनालम्बमनाथं देव रक्षसि । बहुलोकाश्रयं बालं कथमेतमुपेक्षसे ।
अथाभ्यधान्महात्मा स वचोभिः शवरस्य तैः । बध्यस्य दृष्टिपातैश्च विक्लवैर्व्विवशीकृतः ।
किरात कातरो मा भूः स्वयं संरक्ष्यते मया । बहुबन्धुस्तव सुतो बाध्योऽप्ययमबान्धवः ।
उपहारीकरोम्येष चण्डिकायै सुविग्रहं । मयि प्रहर निःशङ्कं जीवत्वेतज्जनद्वयं । ४०
तदद्भुतमहासत्वचित्तोदात्तत्वविस्मितः । उन्मिषद्रोमहर्षस्तं ततः स शवरोऽभ्यधात् ।
अतिकारुण्यमिषतस्तवायं पृथिवीपते । कस्मिन्मतिविपर्य्यासप्रकारो हृदि रोहति ।
त्रैलोक्यजीवितेनापि यो रक्ष्यो हेलयैव तं । पृथिवीभोगसुभगं कथंकारमुपेक्षसे ।
न मानं न यशोनार्थान्न दारान्न च बान्धवान् । न धर्म्मं न सुतान् भूपा रक्षन्ति प्राणतृष्णया ।
तत् प्रसीद प्रजानाथ मा बध्येऽस्मिन् कृपां कृथाः । शिशुश्चैष प्रजाश्चैता जीवन्तु त्वयि जीवति । ४५
उपाजिहीर्षुरात्मानं दन्तद्योतार्घडम्बरैः । अर्च्चयन्निव चामुण्डामथोवाच स पार्थिवः ।
सदाचारसुधास्वादे के भवन्तो वनौकसः । जाह्नवीमज्जनप्रीतिं न जानन्ति मरुस्थिताः ।
ध्रुवापायेन कायेन क्रीणतः कीर्त्तिमव्ययां । ममाभीष्टं प्रमार्ष्टुं ते मूढ रूढोऽयमाग्रहः ।
मा वोचःकिञ्चिदपरं प्रहर्त्तुं चेत् घृणा तव । न किं निजकृपाणेन शक्तः प्रक्रान्तसिद्धये ।

इत्युक्त्वा स स्वयं देहमुपहर्त्तुं समुद्यतः। खड्गमाय स्वमुण्डस्य विकोषं शस्त्रमाददे। ५०
ततः प्रहर्त्तुकामस्य तस्य द्युकुसुमैः शिरः। करश्च दिव्यस्पृशा रुद्धः केनाप्यजायत।
अथापश्यत्तथाभूतः कश्चित् दिव्याकृतिं पुरः। न चण्डिकां न तं मध्यं न किरातं न दारकं।
स तं दिव्यस्तदावादीन्मां त्वां सत्त्ववशीकृतं। विद्धि मध्यमलोकेन्द्र वरुणं करुणानिधे।
यदेतत् त्वामुपास्तेऽद्य कृत्यं तन्मत्पुरात्पुरा। महाबलोऽहरद्रामः पुराणः स्वसुरस्तत्र।
रसातलैकतिलकं माहात्म्यवदिदं विमा। उपद्रवाः प्राणहराः पौराणां नः पदे पदे। ५५
तदिदं प्राप्तुकामेन त्वदौदार्य्यं परीक्षितं। करुणामय मायेयं निरमायि मयेदृशी।
त्वदादिर्यो व्यधाज्जन्तून् व्यसून् वसुकुलात्मजः। प्रायश्चित्तममारेण चरसीव तदेनसः।
भयस्पृहाजनकयोर्धरणीधरणोचिते। शेषदेहे विषोद्गारफणारत्नौघयोरिव।
तमःप्रकाशावहयोस्तेजःक्रान्तदिगन्तरे। उषर्बुधे धूमजालज्वालापल्लवयोरिव।
क्षमाप्यायक्रियाभाजो रुद्धतेजस्विमण्डले। प्रावृट्पयोदच्छन्नेऽह्नि सन्तापासारयोरिव। ६०
द्वयोरालोकितं चित्रं जन्मैकस्मिन् महाकुले। तस्य त्रिकोटिहन्तुश्च तवाहिंसस्य च प्रभोः।
॥ चतुर्भिः कुलकं॥ नम्रः सम्राडथैवं स वदतो यादसां प्रभोः। चकार पूजां स्तोत्रेण कृत्येन च कृताञ्जलिः।
तञ्च सम्प्रति गृह्णन्तं प्रणयादुष्णवारणं। जगाद गुणिनामग्र्यो वरुणं धरणीधरः।
कल्पद्रुमाश्च सन्तश्च नार्हन्ति श्रमशोषिकां। अर्थिनां प्रार्थिताः पूर्व्वं फलन्त्यन्ये स्वयं यतः।
अवालम्बिष्यतम्क्त्र कथं न पुष्पपुष्यतां। तत्प्रार्थयिष्यत न चेदार्त्तोपकृतये भवान्। ६५
वदान्यः सम्बिभागेभ्यः पूर्णां कुर्य्यादनुग्रहं। छाययाप्याययन् दद्यात् फलान्यपि महीरुहः।
तदेवं विहितोदात्तसम्बिभागाभिचोदितः। जनोऽयं भगवन् किञ्चिदरं प्रार्थयते परं।
वशीकृतेयं पृथिवी कृत्स्ना भवदनुग्रहात्। जेतुं द्वीपान् कथ्यतान्तु युक्तिः पाथोधिलङ्घने।
इत्यर्थ्यमानोऽकथयत् भूमिपालं जलेश्वरः। तितीर्षौ भवति स्तम्भं नीयतेऽम्भो मयाम्बुधेः।
ततो महान् प्रसादोऽयमित्युक्ते पृथिवीभुजा। तिरोबभूव भगवान् वरुणः सोष्णवारणः। ७०
अन्येद्युर्व्विस्मयस्मेरैर्व्वलैः सीमन्तयन् जलं। प्रभावस्तम्भितजलं प्रोत्ततार स वारिधिं।
गुणरत्नाकरः शैलं सरत्नाकरशेखरं। नानारत्नाकरं सैन्यैरारुरोहाथ रोहणं।
तत्र तालीतरुवनच्छायाध्यासितसैनिकं। प्रीत्या लङ्काधिराजस्तमुपतस्थे विभीषणः।
समागमः स शुशुभे नरराक्षसराजयोः। वन्दिनादाश्रुतान्योन्यप्रथमालापसम्भ्रमः।
अथ रक्षःपतिर्लङ्कां नीत्वालङ्करणं क्षितेः। अमर्त्यसुलभाभिस्तं विभूतिभिरुपाचरत्। ७५
यदासीत्पिशिताशा इत्यन्वर्थं नाम रक्षसां। तदा तदाज्ञाग्रहणे प्रापि तद्रूढिशब्दतां।
रक्षः शिरःप्रतिच्छन्दैः स्फुरत्प्रणतिसूचकैः। सनाथशिखरान् प्रादात् तस्मै रक्षःपतिर्ध्वजान्।
पारावारनिधेः प्राप्ताः काश्मीरेष्वधुनापि ये। राज्ञां यात्रासु निर्य्यान्ति ख्याताः पारध्वजाः पुरः।
इत्यमाराक्षसकुलं प्राणिहिंसां निषिध्य सः। समण्डलं प्रति कृती न्यवर्त्तत नराधिपः।

ततः प्रभृति तस्याज्ञा सार्व्वभौमस्य भूपतेः। हिंसाविरतिरूपा सा न कैश्चिदुदलङ्घ्यत। ८०
क्षुद्रैर्वधादिभिर्नाप्सु सिंहाद्यैर्गहने न च। न श्येनप्रमुखैर्व्योम्नि तद्राज्ये जन्तवो हताः।
अतिक्रामति कालेऽथ कोऽपि शोकाकुलो द्विजः। पुत्त्रं गतासुमादाय द्वारि चक्रन्द भूपतेः।
दुर्गया प्रार्थितं राजन्नुपहारं विशेष मे। अनन्यसन्ततेः सूनुर्ज्वरेणाद्य विपद्यते।
यद्यहिंसाग्रहेणेमं क्षितिपाल न रक्षसि। एतद्विपत्तौ तत्कोऽन्यो निमित्तं प्रतिभाति मे।
निर्णयो वर्णगुरुणा त्वयैवैष प्रदीयतां। ब्राह्मणस्य पशोर्व्वा स्यात् प्राणानां कियदन्तरं। ८५
तपस्यामपि ये जग्मुर्ब्राह्मणप्राणरक्षये। हा मातस्तेऽधुना भूमेः प्रजापालास्तिरोहिताः।
इति ब्रुवति साक्षेपं शोकरूक्षाक्षरं द्विजे। आपन्नार्त्तिहरो राजा चिरमेवं व्यचिन्तयत्।
न वध्याः प्राणिन इति प्राग्योऽस्मि समकल्पयं। विप्रार्थमपि किं कुर्य्यां स प्रतिज्ञातविप्लवं।
निमित्तीकृत्य मामद्य विपद्येत द्विजो यदि। तत्राप्यत्यन्तपापीयानर्थः संकल्पविप्लवः।
नेति मे संशयभ्रान्तमेकपक्षावलम्बनं। सम्भेदावर्त्तपतितं प्रसूनमिव मानसं। ९०
तत् स्वदेहोपहारेण दुर्गां तोषयता मया। प्रतिज्ञया समं न्याय्यं रक्षितुं जीवितं द्वयोः।
इति सञ्चिन्त्य सुचिरं देहदानोद्यतो नृपः। श्वः प्रियं तव कर्त्तास्मीत्युक्त्वा विप्रं व्यसर्जयत्।
क्षपायां क्ष्मापतिमथ समुपाहर्त्तुमुद्यतं। निषिध्य दुर्गा व्यधित प्रकृतिस्थं द्विजन्मजं।
इत्याद्यद्भुतनस्यापि चरितं तस्य भूपतेः। पृथग्जनेषु सम्भाव्यं वर्णयन्तस्त्रपामहे।
अथवा रचनानिर्व्विशेषमार्गेण वर्त्मना। प्रस्थितान्ननुरुन्धन्ति श्लाघ्यचित्तानुवर्त्तनं। ९५
तस्मिन्नस्तं गते भुक्त्वा क्ष्मां चतुस्त्रिंशतं समाः। अनादित्यमिवाशेषं निरालोकमभूज्जगत्।
अथ क्ष्माभृद्ररक्ष क्ष्मां श्रेष्ठसेनस्तदात्मजः। प्राहुः प्रवरसेनं यं तुञ्जीनं चाश्रमा जनाः।
दोस्तम्भसंभृताशक्तौ कृपाणमणिदर्पणे। सङ्क्रान्तिविमुखी यस्य भुवनश्रीर्व्यभाव्यत।
समातृचक्रं निर्म्माय यः पूर्व्वं प्रवरेश्वरं। पुण्याः पुराणाधिष्ठाने प्रतिष्ठा विविधा व्यधात्।
गृहाङ्गनमिव क्षोणीं गमयन्वशवर्त्तिनीं। त्रिगर्त्ताख्वीं ग्रामसङ्ख्ये प्रवरेशाय यो ददौ। १००
ईशो नृपाणां निःशेषक्ष्माकेदारकुटुम्बिनां। स समास्त्रिंशतं भूभृदनिस्त्रिंशाशयोऽभवत्।
हिरण्यतोरमाणाख्यौ व्यधत्तामथ तत्सुतौ। साम्राज्ययुवराजत्वभाजने रञ्जनं क्षितेः।
बालाहतानां प्राचुर्य्यं विनिवार्य्य समञ्जसम्। तोरमाणेन दीनाराः स्वाहताः सम्प्रवर्त्तिताः।
मामवज्ञाय राज्ञेव कस्मादेतेन वल्गितं। इति तं पूर्व्वजो राजा क्रोधनो बन्धने व्यधात्।
चिरं स्थितिन्यक्कृतश्च तत्र तस्याञ्जनाभिधा। ऐक्ष्वाकस्यात्मजा राज्ञी वज्रेन्द्रस्यास्त गुर्व्विणी। १०५
आसन्नप्रसवा भर्त्रा सत्रपं तेन बोधिता। सुतं प्रविष्टा प्रासोष्ट कुलालनिलये क्वचित्।
स कुम्भकारगेहिन्या काक्येव पिकशावकः। पुत्त्रीकृतो राजपुत्त्रः पर्य्याप्तं पर्य्यवर्द्धत।
जनयित्र्या कुलाख्याश्च रक्षित्र्या विदितोऽभवत्। रत्नसूतेर्भुजङ्ग्यास्य प्रच्छन्न इव सेवधिः।
पौत्त्रः प्रवरसेनस्य गिरा मातुर्नृपात्मजः। पैतामहेन नाम्नैव कुलाल्या ख्यापितोऽभवत्।

वर्द्धमानस्तत्सम्पर्कं न सेहे सहवासिनां । तेजस्विभिर्नो रसिकः शिशुः पद्म इवाम्भसां । ११०
तं कुलीनैश्च शूरैश्च विद्याविद्भिश्च दारकैः । अभीतमेव ददृशुः क्रीडन्तं विस्मयाज्जनाः ।
स्वच्छन्दस्यात्युदारौजा राजा चक्रे स दारकैः । मृगेन्द्रशावः क्रीडद्भिर्वने बालमृगैरिव ।
संविभेजेऽनुजग्राह वशीचक्रे च सोऽर्भकान् । अराजोचितमाचारं नैव किञ्चिदसेवत ।
भाण्डादि कर्त्तुं मृत्पिण्डं कुम्भकारैः समर्पितं । स्वीकृत्य चक्रिरे तेन शिवलिङ्गपरम्पराः ।
तथा साश्चर्य्यचर्य्यः स क्रीडन् जातु व्यलोकयत । मातुलेन जयेन्द्रेण सादरं चाभ्यनन्द्यत । ११५
आवेद्यमानं शिशुभिस्तं जयेन्द्रोऽयमित्यसौ । भूपालवत्सावहेलं पश्यन्नभ्यग्रहीदिव ।
सम्भाव्य सत्त्वावष्टम्भात्तमसौ मान्यवंशजं । सादृश्याद्भगिनीभर्त्तुर्भागिनेयमशङ्कत ।
सत्वरस्तर्कजिज्ञासारसेनानुससार तं । प्राप्तस्तद्गृहमौत्सुक्यात् स्वसारञ्च व्यलोकयत् ।
सा स चान्योन्यमुन्मन्यु पश्यन्तौ भ्रातरौ चिरात् । निःश्वासात् द्विगुणोष्माणि मुहुरश्रूण्यमुञ्चतां ।
कुलाख्यादारको मातः काविताविति पृष्टवान् । अकथ्यतेत्थं वत्सैषा माताऽयं मातुलश्च ते । १२०
पितुर्बन्धेन सक्रोधं तं कालापेक्षया शमं । शिक्षयित्वा जयेन्द्रोऽथ कार्य्यशेषाय निर्ययौ ।
उत्पिञ्जोत्पादनासक्ते तस्मिन् भ्रात्रा यदृच्छया । बन्धान्मुक्तो नृतरणिस्तोरमाणोऽस्तमाययौ ।
निवार्य्य मरणोद्योगं मातुर्निर्वेदखेदितः । ययौ प्रवरसेनोऽथ तीर्थौत्सुक्याद्दिगन्तरं ।
रक्षित्वा दशमासोनाः क्ष्मामेकत्रिंशतं समाः । तस्मिन् क्षणे हिरण्योऽपि शान्तिं निःसन्ततिर्ययौ ।
तत्रानेहस्युज्जयिन्यां श्रीमान् हर्षापराभिधः । एकच्छत्रश्चक्रवर्त्ती विक्रमादित्य इत्यभूत् । १२५
भूपमद्भुतसौभाग्यं श्रीर्बन्धुरभसाऽभजत् । विहाय हरिवक्षश्च चतुरस्सागरांश्च यं ।
लक्ष्मीं कृत्वोपकरणं गुणो येन प्रवर्त्तते । श्रीमत्सु गुणिनोऽद्यापि तिष्ठन्त्युद्धुतकन्धराः ।
म्लेच्छोच्छेदाय वसुधां हरेरवतरिष्यतः । शकान्विनाश्य येनादौ कार्य्यभारो लघुः कृतः ।
नानादिगन्तराख्यातं गुणवत्सुलभं नृपं । तं कविर्मातृगुप्ताख्यः सभास्थानस्थमासदत् ।
स गम्भीरस्य भूभर्तुरनुभावं गुणाद्भुतं । विविधास्थानसंघट्टलब्धाभ्यूहो व्यचिन्तयत् । १३०
सोऽयमासादितः पुण्यैः क्षोणिपालो गुणिप्रियः । परभागोपलम्भाय पूर्व्वोऽमुष्य महीभुजः ।
अस्मिन् राजनि तत्त्वज्ञैः सूरिभिः सम्भृतश्रुतैः । नाञ्जलिर्दीयते जातु मानाय च गुणाय च ।
भङ्ग्यामुग्धान्विदधती स्वाभिप्रायप्रकाशनं । वैदग्ध्यं बन्ध्यतां नैति बुद्धिः कुलवधूरिव ।
खिलीकृतखलालापे युक्तायुक्तविवेकिनि । नायाति सेव्यमानेऽस्मिन् स्वगुणोऽनर्थकारितां ।
अनाप्तवद्भिः सावद्यदुर्विद्यसमशीर्षिकां । जीवन्मरणमन्याये गुणिभिर्नानुभूयते । १३५
सम्भावनानुसारेण प्रवृत्तोऽस्मादिवेकिनः । शोच्यते नाश्रितोच्चाशं प्रीतिदायो महाशयैः ।
स्पृशन् यथा गुणं शान्तमुचितप्रतिपत्तिभिः । अन्तरज्ञः समस्तानामयमुत्साहवर्द्धनः ।
सेवया दृष्टकष्टस्य दाक्षिण्योत्पादनश्रमः । अस्य यो न स भृत्यानां हिमाद्रौ हिमविक्रयः ।
मिथ्याख्यातगुणा नाप्तो नामात्यः कलहप्रियः । असत्यसन्धः स्थेयो वा नास्थानेऽस्य महीपतेः ।

अश्लीलालापिनोऽन्योन्यं नर्म्मोक्त्या मर्म्मभेदिनः । अन्यप्रवेशासहनाः संहतास्तस्य सेवकाः । १४०
छन्दानुवर्त्तिनामेव निजविश्रम्भवन्दिनाम् । सर्व्वांशमन्यतान्धानां मुखप्रेक्षी न पार्थिवः ।
अनेन सह सञ्जातः संलापो विपुलोदयः । लभ्यते नान्तरा च्छेत्तुं दुर्ज्जातैर्जातु दुर्ज्जनैः ।
सर्व्वदोषोज्झितं सेव्यं नृपमेवमिमं मम । समासादयतः पुण्यैरदूरे स्वार्थसिद्धयः ।
गम्भीरस्य गुणज्ञस्य स्थिरबुद्धिश्च पार्थिवः । एष क्लेशभयं त्यक्त्वा निषेव्यः प्रतिभाति मे ।
नचास्मद्धनमादाय रञ्जितादन्यराजवत् । भ्राम्यतो भूतलेऽमुष्मिन् सेव्योऽन्यः प्रतिभाति मे । १४५
इति सञ्चिन्त्य सुदृढं स भवामिव तां सभां । नानुरञ्जनवास्ते स्म गुणिगोष्ठीषु मध्यगः ।
मृदुपूर्व्वं गुणानेव दर्शयन्तं विशाम्पतिः । विशिष्टयोग्यताशंसी विवेदाराधनोन्मुखं ।
अचिन्तयच्च नायं स्याद्गुणिमात्रं महाशयः । उदात्तं सत्क्रियार्हत्वं वदत्यस्य गभीरता ।
इति सञ्चिन्त्य राज्ञापि ज्ञातुं तस्यान्तरं मतेः । नाक्रियन्त परीक्षार्थं यथावल्लाभसत्क्रियाः ।
स तेनानुपचारेण तमुदात्ताशयं नृपं । स्वीकर्त्तारं विदन्धीमान् सिषेवे प्रीतिमाश्रितः । १५०
क्रमोपचीयमानेन सेवाभ्यासेन धीमतः । तस्य नोद्वेगमगमत् स्वकायइव पार्थिवः ।
नातीव स्वल्पया स्थित्या नातीवाप्यथ दीर्घया । सरस्विमाचलेनेव राजा निन्ये प्रसन्नतां ।
नर्म्मभिर्गर्भचेटानां द्वाःस्थानां विक्रियाक्रमैः । मिथ्यास्तवैर्व्विटानाञ्च न स क्षोभमनीयत ।
प्रसन्नालापसम्प्रीतो च्छायाग्रहइवाचलः । प्रतिस्पर्द्धीव च क्रुध्यन्नावज्ञायामभूत् प्रभोः ।
वीक्षणं राजदासीनां राजदिष्टैस्तथासनम् । राजाग्रे च कथां नीचैः कालविच्चाचचार सः । १५५
स्वभावाद्राजपुरुषैः सजनैराजनिन्दकैः । नासत्प्रभोरुपालम्भो लेभे पैशुन्यजीविभिः ।
वदद्भिरादरात् स्थैर्य्यं नैकत्राप्यन्तरं प्रभोः । निन्ये सोत्साहशैथिल्यं सेवोत्साहासहिष्णुभिः ।
अन्योत्कर्षानपि वदन् प्रसङ्गेन निराग्रहः । स्वविद्याद्योतकश्चोऽभूत् सत्यानां हृदयंगमः ।
एवं स सेवमानस्तमुद्योगेन बलीयसा । अनिर्व्विण्णो मातृगुप्तः षडृतूनत्यवाहयत् ।
अथ तं कृशसर्व्वाङ्गं धूसरं जीर्णवाससं । वहिर्जातु विनिर्यातो राजा वीक्ष्य व्यचिन्तयत् । १६०
वैदेशिको निःशरणो गुणवान् बान्धवोज्झितः । दार्ढ्यजिज्ञासुना कष्टं सोऽयमावासितो मया ।
कोऽस्याश्रयः किमशनं कानि प्रावरणानि वा । इत्यैश्वर्य्यविमूढेन मया हन्त न चिन्तितम् ।
वसन्तेनेव न मया शोभयाद्यापि योजितः । शीतवातातपैः शुष्यन् सोऽयं पुरुषपादपः ।
अस्य म्लानस्य भैषज्यं निर्व्विण्णस्य विनोदनं । श्रान्तस्य वा क्लमच्छेदं कोविदध्यादसंपदः ।
नास्मै चिन्तामणिं दद्यां नामृतं वा निषेवित. । मया यदयमेतावद्व्यामूढेन परीक्ष्यते । १६५
तदमुष्य गुणित्वस्य तीव्रं सेवाश्रमस्य च । प्रतिपत्त्या कतमया तावदानृण्यमाप्नुयात् ।
इति चिन्तयतस्तस्य राज्ञस्तं सेवकं प्रति । स्वप्रसादोचिता काचित् प्रत्यभान्नैव सत्क्रिया ।
ततः प्रावर्त्तत स्फारनीहारलववर्षिभिः । दहन्निवाङ्गं प्रालेयपवमानैर्हिमागमः ।

सन्ततध्वान्तमिषतस्तोमशीतवशीकृताः । आशास्तकाशिरे नीलनिचोलाच्छादिता इव ।
शीतार्त्त्या द्युमणेर्व्वदहनाशाभिलाषतः । द्रुतं यातीव जलधिं दिनानि लघुतां ययुः । १७०
अथ दीपोज्ज्वले धाम्नि लसद्धोमहसन्तिके । कदाचिद्भूपतिर्दैवादर्द्धरात्रे व्यबुध्यत ।
स हेमन्तानिलैर्भूरिभीकारपरुषैः पुरः । दीपान् प्रकल्पितानीषत्प्रविष्टैर्धाम्नि दृष्टवान् ।
तानुज्ज्वलयितुं भृत्यानन्विष्यन्नभ्यधात्ततः । यामिकेषु वहिस्तज्ज्ञः कोऽवर्त्तत इति स्फुटम् ।
सुखसुप्तेषु सर्व्वेषु वाह्यकक्षान्तरात्ततः । राजन्नयमहं मातृगुप्त इत्यशृणोद्वचः ।
प्रविशेति स्वयं राज्ञा दत्तानुज्ञस्ततो गृहं । लक्ष्मीसान्निध्यरम्यं तदपृष्टोऽन्यैर्व्विवेश सः । १७५
दीपानुज्ज्वलयेत्युक्तो निष्पाद्य चतुरैः पदैः । वहिर्ययौ स ऊचेऽथ क्षणं तिष्ठेति भूभुजा ।
समयद्विगुणीभूतशीतकम्पः प्रभोः पुरः । किंस्विद्वक्तीति विस्मयन्नातिदूरेऽभ्युपाविशत् ।
अथ पप्रच्छ भूपालः कियत्यस्ति निशेति तम् । सोऽभ्यधाद्देव यामिन्या यामः साधोऽवशिष्यते ।
ततोभूभृदुवाचैनं कथं सम्यङ्निशाक्षणः । त्वयावधारितो निद्रा कथं नाभूच्च ते निशि ।
अथ कृत्वा क्षणाच्छ्लोकमेतं तं सव्यजिज्ञपत् । अवस्थावेदनादाशां दैन्यं वा त्यक्तुमुद्यतः । १८०
शीतेनोद्धूषितस्य माषमशिवच्चिन्तार्णवे मज्जतः शान्ताग्निं स्फुटिताधरस्य धमतः क्षुत्क्षामकण्ठस्य मे ।
निद्रा क्वाप्यवमानितेव दयिता सन्त्यज्य दूरं गता सत्पात्रप्रतिपादितेव वसुधा न क्षीयते शर्व्वरी ।
तदाकर्ण्य महीपालः साधुवादैः परिश्रमं । अभिनन्द्य कवीन्द्रं तं पूर्व्वस्थाने व्यसर्जयत् ।
अचिन्तयच्च धिङ्मां यः स्वगुणात् खिन्नचेतसः । दुःखोत्तप्तं वचः शृण्वन्नेवमेवाधुना स्थितः ।
निरर्थकान् साधुवादानन्यस्येव विदन्मम । अयमज्ञातहृदयो दुःखमास्ते ध्रुवं वहिः । १८५
चिरं चिन्तयतो यत्नात् सदृशीमस्य सत्क्रियां । देयं महार्हमद्यापि न किञ्चित् प्रतिभाति मे ।
अथवास्त्येव सूक्तेन स्मारितोऽस्म्यधुना यथा । वर्त्तते राजरहितं काम्यं काश्मीरमण्डलं ।
पात्रायास्मै मही तस्मात् सा मया प्रतिपाद्यते । अवधीर्य्य महीपालान्महतोऽप्यर्थनापरान् ।
इति निश्चित्य चतुरं क्षपायामेव पार्थिवः । गूढं व्यसर्जयद्दूतान् काश्मीरीः प्रकृतीः प्रति ।
आदिदेश च तान् यो वा दर्शयेच्छासनं मम । मातृगुप्ताभिधो राज्ये निःशङ्कं सोऽभिषिच्यतां । १९०
अथ दूतेषु यातेषु लेखयित्वा स्वशासनम् । क्ष्मापतिस्तं क्षपाशेषं कृतकृत्योऽत्यवाहयत् ।
मातृगुप्तस्तु नृपतेः संलापमपि निष्फलम् । ध्यायन् गृहीतनैराश्यस्त्यक्तभार इवाभवत् ।
अन्तर्दध्यौ च कर्त्तव्यं कृतं शान्तोऽस्य संशयः । आशापिशाचिकात्यक्तस्तरिष्याम्यधुना सुखं ।
गतानुगतिकत्वेन कोऽयमासीन्मम भ्रमः । जनप्रवादात् सेव्यत्वं येनास्य ज्ञातवानहम् ।
भुञ्जानाः पवनं सरीसृपगणाः प्रख्यापिता भोगिनो गायद्भृङ्गनिवारकाणि गदिता विस्तीर्णकर्णा गजाः । १९५
यस्याभ्यन्तरसंभृतोष्मविकृतिः प्रोक्तः शमीसद्रुमो लोकेनेति निरर्गलं प्रलपता सर्व्वं विपर्य्यासितं ।
अथ वा विद्यतेऽमुष्य न काप्यनभिगम्यता । लक्ष्मीप्रणयिनो येन कृताः प्रणयिनां गृहाः ।

त्यागिनो निष्कलङ्कस्य को दोषोऽस्य महीपतेः। ममापुण्यन्तु तन्निन्द्यं यच्छ्रेयःप्रतिबन्धकम्।
रत्नोज्ज्वलाः प्रविकिरेल्लहरीसमीरैरब्धिः क्रियेत यदि दक्षतटाभिमुख्यः। २००
दोषोऽर्थिनः स खलु भाग्यविपर्ययाणां दातुर्मनागपि न तस्य तु दातृतायाः।
उत्तानफललुब्धानां वरं राजोपजीविनः। न तु तत्स्वामिनस्तीव्रपरिक्लेशैः फलन्ति ये।
तिष्ठन्ति ये पशुपतेः किल पादमूले सम्प्राप्यते झटिति तैर्नहि भस्मनोऽन्यत्।
ये तद्वृषस्य तु समुज्ज्वलजातरूपप्राप्त्या न कानि सुदिनानि सदैव तेषां।
चिन्तयन्नपि पश्यामि न किञ्चिद्दोषमात्मनः। यातो विरक्तिं यं ज्ञात्वा सेव्यमानोऽप्ययं नृपः।
अथवा नादृतोऽन्येन सम्प्राप्तोऽन्तिकमाप्नुयात्। कः फलेनाभिसम्बन्धं गतानुगतिकात् प्रभोः।
अन्तर्ये सततं लुठन्ति गणितास्तानेव पाथोधरैरास्तानापतितांस्तरङ्गवलयैरालिङ्ग्य गृह्णन्नसौ।
व्यक्तं मौक्तिकरत्नतां जलकणान् सम्प्रापयत्यम्बुधिः प्रायोऽन्येन कृतादरो लघुरपि प्राप्तोऽर्च्यते स्वामिभिः। २०५
इदं संचिन्तयन् सोऽभूत्सेव्ये तस्मिन्निरादरः। खिन्नस्य हि विपर्य्येति तत्त्वज्ञस्यापि शेमुषी।
प्रभातायां विभावर्य्यामथास्थानस्थितो नृपः। आकार्य्यतां मातृगुप्त इति वक्तारमादिशत्।
ततः प्रधावितानेकप्रतीहारप्रवेशितः। प्रविवेश महीभर्त्तुरभ्यकाश इव सोऽन्तिकं।
तस्मै कृतप्रणामाय मूर्द्धस्तादेव पार्थिवः। भूसंज्ञितेन व्यतरल्लेखं लेखाधिकारिणा।
स्वयञ्च तमुवाचाङ्ग कश्मीरान् वेत्सि किं भवान्। गत्वा तत्राधिकारिभ्य एतच्छासनमर्प्यतां। २१०
स शापितोऽस्मद्देहेन यो लेखं वाचयेत् त्वयि। सन्दिदेषा प्रयत्नेन विस्मर्त्तव्या न जातुचित्।
अविज्ञाताशयो राज्ञस्तामाज्ञां क्लेशशंकितः। सोऽबुद्ध दहनज्वालां ननु रत्नाङ्कुरद्युतिम्।
यथादेशस्तथेत्युक्त्वा मातृगुप्ते विनिर्गते। निर्गर्व्वः पूर्व्ववद्राजा तस्थावाप्तैः सहालपन्।
अथ क्लेशोचितं क्षाममपाथेयमबान्धवं। दृष्ट्वा यान्तं मातृगुप्तं निनिन्देति नृपं जनः।
अहो नरेश्वरस्येयं यत्किञ्चन विधायिता। पृथग्जनोचिते कर्मण्यर्हतो निदधाति यः। २१५
दुराशया धृतक्लेशं सेवमानमहर्निशं। ध्रुवं क्लेशार्हमेवैनं ज्ञातवानबुधो नृपः।
उपायं तं पुरस्कृत्य सेवते सेवकः प्रभुं। अनन्तरं स तस्यैव योग्यं तं किल मन्यते।
सुखार्थी नागारिप्रतिभयशमात् प्रत्युत सुखं अहो शेषस्तल्पीकृततनुर्निषेव्यासुररिपुं।
यतस्तेनामुष्मिन्नधिगतवता क्लेशसहतां अमादायिन्यस्तं निरवधि धराभारवहनम्।
अयमेतद्गृहीतेषु गुणवत्सु गुणाधिकं। आत्मानं गुणवान्पश्यन्नाशयैनमशिश्रियत्।
अनन्तरमः कोऽन्योऽस्माद्गुणान्दर्शयतेऽधिकान्। अस्मै गुणवते पूजां यश्चकार किलेदृशीं। २२०
यो नानाद्युतिमत्पदार्थरसिकोऽसारेऽपि शक्रायुधे संप्रेमा स विलोक्य वर्हमिह मे किं किं न कुर्य्यात् प्रियं।
इत्याविष्कृतवर्हराजि नटते योवर्हिणेऽश्वालवान् नान्यस्तुष्यति तं विहाय जलदं कोऽन्योऽस्ति शून्याशयः।
गच्छतो मातृगुप्तस्य निर्दैन्यस्यैव वर्त्मसु। नाभूत्क्वाप्यर्थमाहात्म्याद्विकल्पः कोऽपि चेतसि।
अहंपूर्व्विकयोद्यद्भिर्निमित्तैः शुभशंसिभिः। सवितीर्णकरालम्ब इव न श्रममाददे।

अपश्यत् स फणाकोटौ खञ्जरीटमसेः पथि । स्वप्ने प्रासादमारुह्य स्वेच्छालङ्घितसागरम्।
अचिन्तयच्च शास्त्रज्ञो निमित्तैः शुभशंसिभिः। एतैर्भूभर्तुरादेशो ध्रुवं मे स्वाच्छभावहः। २०५
फलं मम तनीयोऽपि काश्मीरेषु भवेद्यदि। अनर्घदेशमाहात्म्यात् किं किं नातिशयेत तत्।
अक्लिष्टकुलशाखाः पन्थानो बहुभातिथयो गृहाः। उपानमन् गच्छतोऽस्य सत्क्रियास्य पदे पदे।
इत्थं विलङ्घिताकाशं लोलानोकहशाद्वलं। मङ्गल्यदधिपात्राभं ददर्शाग्रे हिमाचलम्।
सरलस्यन्दसुभगा गङ्गाशीकरवाहिनः। प्रत्युद्ययुस्तं मरुतः पाल्यायाः संस्तुता भुवः।
क्रमवर्त्ताभिधाने स प्रदेशे प्राप्तवांस्ततः। ढक्कं काम्बुवनामानं योऽद्य शूरपुरे स्थितः। २१०
नानाजनपदाकीर्णे स्थाने तत्राथ शुश्रुवान्। काश्मीरकान् महामात्यान् स्थितान् केनापि हेतुना।
ततोऽपनीतप्राग्वेशः प्रच्छन्नो धवलांशुकैः। स जगामान्तिकं तेषां दातुं नृपतिशासनं।
तत्प्रयान्तं समुद्यद्भिः शकुनैः सूचितोदयं। पान्थाः केऽप्यन्वयुर्द्रष्टुं निमित्तानां फलोद्गमे।
श्रुत्वाथ विक्रमादित्यदूतः प्राप्तइति द्रुतम्। द्वास्थाः काश्मीरमन्त्रिभ्यस्तमासन्नं न्यवेदयन्।
आगच्छत प्रविशतेत्युच्यमानोऽथ सर्व्वतः। स तान् समस्तसामन्तानाससादानिवारितः। २१५
यथाप्रधानं सचिवैर्व्विहितोचितसत्क्रियः। ततः परार्द्धमध्यास्त तन्निदर्शितमासनं।
कृतार्हणैरथामात्यैराज्ञां पृष्टो महीभुजः। शनैस्तच्छासनं तेभ्यो लज्जमानइवार्पिपत्।
तेऽभिवन्द्य प्रभोर्लेखमुपांशु मिलितास्ततः। उन्मुच्य वाचयित्वैतमवोचन् विनयान्विताः।
मातृगुप्त इति ख्यातं भवतामेव नाम किं। एवमेवैतदित्यूचे सोऽपि तान् स्मितस्मितः।
कः कोऽत्र सन्निधाविणामित्यश्रूयत वाक् ततः। राज्याभिषेकसम्भारो दृश्यते स च संभृतः। २२०
ततः कलकलोत्तालभूरिलोकसमाकुलः। प्रदेशः क्षणमात्रेण सोऽभूत् क्षुभ्यत्समुद्रार्णवः।
अथ प्राङ्मुखसौवर्णभद्रपीठप्रतिष्ठितः। सन्निपत्य प्रकृतिभिर्मातृगुप्तोऽभ्यषिच्यत।
तस्य विन्ध्यतटव्यूढवक्षसः परिनिर्लुठन्। सशब्दमभिषेकाम्बुरेवास्त्रइवाबभौ।
अथ स्नातानुलिप्ताङ्गसर्व्वाङ्गामुक्तभूषणं। व्यजिज्ञपंस्तं राजानं क्रान्तराजासनं प्रजाः।
अर्थितेन स्वयं त्रातुं विक्रमादित्यभूभुजा। निर्द्दिष्टः स्वसमानस्त्वं शाधि नः पृथिवीमिमां। २२५
मण्डलानि विलभ्यन्ते यैर्न तेन प्रतिक्षणं। मामंस्था मण्डलं राजन् विलक्षन्तदिदम्परैः।
कर्म्मभिः स्वैरवाप्तस्य जन्मनः पितरौ यथा। राज्ञः तथान्ये राज्यस्य प्रवृत्तावेव कारणं।
इत्थं स्थिते परं कश्चित्त्वदीयोऽस्मीति संमता। न नेया भवता राजन् वयमात्मा च लाघवं।
इति तैस्तथ्यमुक्तोऽपि संस्मरन् स्वामिसत्क्रियां। मातृगुप्तमहीपालः क्षणमासीत् कृतस्मितः।
दानेन सुदिनङ्कुर्व्वन्नवराज्योर्जितेन सः। तत्रैव मङ्गलोदयं तदहो निरवर्त्तयत्। २३०
पुरप्रवेशायान्येद्युरर्थ्यमानोऽथ मन्त्रिभिः। अद्भुतप्राभृतन्दूतं राज्यदातुर्व्यसर्जयत्।
देशोचित्यानुसारेण स्पर्द्धामिव च तां विदन्। स्वामिनो मनसि प्रीतस्त्यागस्वं स्वममन्यत।
अथाज्ञयापरान् भृत्यान्वक्तुं सेवाकृतिं प्रभोः। अल्पार्घाण्यपि स्वाद्यानि प्राहिणोत् प्राभृतानि सः।

असामान्यान् गुणांस्तस्य स्मरन् पर्य्यश्रुलोचनः। स्वयं लिखित्वा श्लोकञ्च स्वकमेकं व्यसर्जयत्।
नाकारमुद्वहसि नैव विकत्थसे त्वं दित्सां न सूचयसि मुञ्चसि सत्फलानि। २५५
निःशब्दवर्षणमिवाम्बुधरस्य राजन् संलक्ष्यते फलत एव तव प्रसादः।
ततः प्रविश्य नगरं सैन्यैः पिहितदिक्तटैः। क्रमागतामिव महीं यथावत् पर्य्यपालयत्।
त्यागे वा पौरुषे वापि तस्यौचित्योन्नतात्मनः। क्ष्माभुजस्तर्कुकस्येव नाभूत् परिमितेच्छता।
यष्टुं यज्ञान् कृतोद्योगस्त्यागी विततदक्षिणान्। पशुबन्धमनुध्याय करुणाकुञ्चितोऽभवत्।
अमारमादिदेशाथ यावद्राज्यं स्वमण्डले। चूर्णीकृत्य सुवर्णादि प्रददौ च करम्भकम्॥ २६०
करम्भके कीर्य्यमाणे मातृगुप्तेन भूभुजा। वैतृष्ण्यमुन्मिषत्तोषो न कोनाम न्यषेवत।
गुणी च दृष्टकष्टश्च वदान्यश्च स पार्थिवः। विक्रमादित्यतोऽप्यासीदभिगम्यः शुभार्थिनाम्।
विशेषज्ञतया तस्य श्लाघ्यया सुरभीकृताः। लक्ष्मीविलासाः क्ष्माभर्तुरशोभन्त मनीषिषु।
हयग्रीववधं मेण्ठस्तदग्रे दर्शयन्नवम्। आसमाप्ति ततो नापत् साध्वसाध्विति वा वचः।
अथ ग्रन्थयितुं तस्मिन् पुस्तकं प्रस्तुते न्यधात्। लावण्यनिर्य्याणभिया राजाधः स्वर्णभाजनम्। २६५
अन्तरज्ञतया तस्य तादृश्याकृतसत्कृतिः। भर्तृमेण्ठः कविर्मेने पुनरुक्तं श्रियोऽर्पणं।
स मातृगुप्तस्वाम्याख्यं निर्म्ममे मधुसूदनं। कालेनादत्त यद्ग्रामान् मम्मः श्वशुरसद्मने।
इत्यासादितराज्यस्य शासतः क्ष्मां क्षमापतेः। त्रिमासोनाययुस्तस्य सैकाहाः पञ्च वत्सराः।
कृतार्थतां तीर्थतोयैराञ्जनेयोऽनयत् पितॄन्। आतन्कादृशमश्रौषीत् स्वस्मिन्देशे पराक्रमं।
पितृशोकार्द्रता तस्य क्रोधेनान्तरधीयत। तरोरिवार्कतापेन नैशाम्बुलवसिक्तता। २७०
श्रीपर्व्वते पाशुपतप्रतिवेशस्समागतम्। आचख्यावश्वपादाख्यः सिद्धः कन्दाशमन्ददत्।
जन्मान्तरे लब्धसिद्धिस्त्वामत्युपरि साधकम्। वाञ्छामपृच्छं राज्यार्थमभिलाषस्तु ते ऽभवत्।
सयत्नन्तव कर्तुन्तन्मनोरथमनन्यथा। अथ मामित्यमादिक्षत् क्षपारमणशेखरः।
गणोऽयं मामकः सिद्धो यस्तवोपरि साधकः। जन्मान्तरेऽस्य राज्येच्छां कुर्य्यामहमनन्यथा।
भावि भवस्तद्भवतो भगवान्दत्तदर्शनः। साफल्यं नेष्यतीत्येवमभिधाय तिरोदधे। २७५
साम्राज्येच्छोः समामेकां तत्र तस्य तपस्यतः। लब्धस्मृतिः सिद्धगिरा प्रददौ दर्शनं शिवः।
प्रतिवेशन्तमादिष्टवाञ्छितार्थसमर्पणम्। स जगन्निर्जयोन्निद्रनरेन्द्रत्वमयाचत।
उपेक्ष्य मोक्षं किं क्षाभृद्भोगानिच्छसि भङ्गुरान्। इति जिज्ञासुना भावं शम्भुना सोऽभ्यधीयत।
स तं बभाषे शम्भुं त्वां बुद्ध्वा व्याजतपोधनं। अभ्यधामिद[illegible]द्धा त्वं न स देवो जगद्गुरुः।
महान्तो ह्यर्थिताः स्वल्पं फलमप्यल्पेतरन् स्वयं। उदन्यया वदान्योऽदाद्दुग्धाब्धिं स पयोर्थिने। २८०
अस्य वैकल्पकैवल्यालाभनिश्चलचेतसः। नोवेत्स्यभिजनस्याभिभूतिं मर्म्मव्यथावहां।
जगत्परिवृढः प्रौढप्रीतिस्तं स फलार्थिनम्। कृत्वा प्रादुष्कृतवपुस्ततो भूयोऽप्यभाषत।
स जनो राज्यसौख्येषु सायुज्यावाप्तिदूतिकां। महाशयाश्वपादस्ते संज्ञां काले करिष्यति।

इत्युक्त्वान्तर्हिते देवे स कृतव्रतपारणः। अगच्छदश्वपादस्तमापृच्छ्याभिमताम्भुवम्।
ततोविदितवृत्तान्तो मातृगुप्ताभिषेचनात्। निषिध्य सविधायातानमात्यानब्रवीदयः। २८५
विक्रमादित्यमुन्मीलकमुच्छेत्तुं यतते मनः। मातृगुप्तम्प्रति न मे रोषणे क्वथितं मनः।
अप्रियैरपि निष्पिष्टैः किं स्यात् क्लेशासहिष्णुभिः। ये तदुन्मूलने शक्ता जिगीषा तेषु शोभते।
यान्त्यजान्युदयं द्विषन्ति शमिनः कोऽन्यस्ततोऽस्मान्ततस्तन्निर्माथिकरोऽस्मदन्तदलनं यन्नाम कोऽयं नयः।
सामर्थ्यप्रथनाय चिन्नमसमैः खड्गाग्निधूयोन्नता ये तेषु प्रभवन्ति तत्र जहति व्यक्तं प्ररूढा रुषः।
त्रिगर्त्तानाम्भुवं जित्वा स प्रजज्ञश्च भूपतिः। विक्रमादित्यमश्रृणोत् कालधर्म्ममुपागतं। २९०
तस्मिन्नहनि भूभर्त्ता शोकाक्लिश्यतानिशम्। नास्नायि नाशि नास्वापि स्थितेनावनताननम्।
अन्येद्युर्भुवमुत्सृज्य कश्मीरेभ्यो विनिर्गतम्। शुश्राव मातृगुप्तं स नातिदूरे कृतस्थितिं।
कैश्चिन्निर्व्वासितो मास्मिन्मदीयैरिति शङ्कितः। ययौ प्रवरसेनोऽस्य पार्श्वं मितपरिच्छदः।
कृतार्हणं सुखासीनं ततः पप्रच्छ तं शनैः। विनयावनतो राजा राज्यत्यागस्य कारणं।
बभाषे तं क्षणं स्थित्वा स निःश्वस्य विहस्य च। गतः स सुकृती राजन् येन भूमिभुजो वयम्। २९५
यावन्मूर्ध्नि रवेः पादास्तावत् द्योतयते दिशः। द्योतयेत्कान्यथा किं न ग्रावैव तपनोपलः।
अथ राजाभ्यधात् केन राजन्नपकृतन्तव। यत्प्रत्ययचिकीर्षायै तमीशमनुशोचसि।
मातृगुप्तस्ततोऽवादीत् कोपस्मितसिताधरः। अस्मानुत्सहते कश्चिन्नापकर्त्तुं बलाधिकः।
नयतागण्यतामस्मानन्तरज्ञेन तेन हि। न भस्मनि हुतं सर्पिर्नीतम्स्वा शस्यमूषरे।
उपकारं स्मरन्तस्तु कृतज्ञत्ववशम्वदाः। पदवीमुपकर्त्तॄणां यान्ति निश्चेतना अपि। ३००
निर्व्वाणमनुनिर्व्वाति तपनन्तपनोपलः। इन्दुमिन्दुमणिः किञ्च शुष्यन्तमनुशुष्यति।
पुण्यां वाराणसीं कृत्वा तस्मात्क्रमसुखोन्मुखः। इच्छामि सर्व्वसंन्यासं कर्त्तुं द्विजजनोचितम्।
मणिदीपमिवेशान्तमन्तरेणान्धकारितां। बिभेमि द्रष्टुमण्वुर्वीं भोगयोगे कथैव का।
इत्यौचित्यनिधेस्तस्य वाणीमाकर्ण्य विस्मितः। धीरः प्रवरसेनोऽपि व्याजहारोचितं वचः।
सत्यं विश्वम्भरा देवी भूपतेरत्नसूरियं। उत्पन्नया द्योतते धन्यैः कृतज्ञैर्या भवादृशैः। ३०५
अन्तरज्ञतया श्लाघ्यः कोऽन्यस्तस्मान्महीभुजः। इत्यज्ञे जगत्येकस्त्वां यथावद्विवेद यः।
चिरं खलु खिलीभूताः कृतज्ञत्वस्य वीथयः। धीर त्वयैव नत्वासु सञ्चारो यदि दर्श्यते।
पाकस्येव प्रभुस्य मेऽद्य तदसौ प्रागेव नादात्किमु स्वार्थस्यैव मयास्य किं न भजते दीनान् सबन्धूनयम्।
मत्तो रत्नद्रुमोऽस्य भीर्यदि न तत्तुच्छः किमेव त्यजेदित्यन्तः पुरुषाधमः कलयति प्रायः कृतोपक्रियः।
अत्युदात्तगुणेष्वेषा कृतपुण्यैः प्ररोपिता। शतशाखी भवत्येव यावन्मात्रापि सत्क्रिया। ३१०
तत्त्वं गुणवतामग्र्यस्तत्वस्यापि नन्दितः। परीक्षितो मणिरिव व्यक्तं बहुमतः सतां।
तस्मादनुग्रहाणास्मान् मास्म त्याक्षीर्नरेन्द्रताम्। ममापि ख्यातिमायातु गुणवत्पक्षपातिता।
पूर्व्वन्नेनाय चरमं मयापि प्रतिपादिताम्। भवान् पाणिप्रणयिनीं विदधातु पुनर्भुवम्।

अव्याजौदार्य्यचर्य्यस्य श्रुत्वेति नृपतेर्वचः। कृतस्मितो मातृगुप्तः शनैर्व्वचनमब्रवीत्। २१०
याच्ञाक्षराण्यन्तरेण वाच्यं वक्तुं न पार्य्यते। का गतिस्तदुपादाने मर्य्यादोल्लङ्घनं विना।
अतः परुषमप्यद्य किञ्चिदेव मयोच्यते। अव्याजार्जवमप्येतद्दार्ढ्यत्वमवधीर्य्यते।
सर्व्वः स्मरति सर्व्वस्य प्रागवस्थासु लाघवम्। आत्मैव वेत्ति माहात्म्यं वर्त्तमाने क्षणे पुनः।
पूर्व्वावस्था मदीया ते त्वदीया या च मे हृदि। ताभ्यां विमोहितावावां न विद्वोऽन्योन्यमाशयम्।
राजा भूत्वा कथं मादृक् प्रतिगृह्णातु सम्पदः। कथमेकपदे सर्व्वमौचित्यम्परिमार्जतु। २१५
असाधारणमौदार्य्यमाहात्म्यं तस्य भूपतेः। भोगमात्रकृते मादृक् किं साधारणतां नयेत्।
अपि च स्पृहयालुः स्यां भोगेभ्यो यदि भूपते। म्रियमाणेऽभिमाने मे केन ते विनिवारिताः।
यन्ममोपकृतं तेन तद्विना प्रत्युपक्रियां। जीर्णमेवाधुनाङ्गेषु प्रभवत्वेष निश्चयः।
या गतिर्भूभुजोऽमुष्य मया तामनुगच्छता। पात्रापात्रविवेकत्वख्यातिर्नैया प्रकाश्यतां।
एतावत्येव कर्त्तव्ये यातेऽस्मिन् कीर्त्तिशेषताम्। भोगमात्रपरित्यागाद्विदध्यां सत्यसन्धतां। २२०
इत्युक्त्वा विरते तस्मिन् जगाद जगतीपतिः। त्वदीया न मया स्पृश्या त्वयि जीवति सम्पदः।
अथ वाराणसीं गत्वा कृतकाषायसंग्रहः। सर्व्वं सन्न्यस्य सुकृती मातृगुप्तोऽभवद्यतिः।
राजा प्रवरसेनोऽपि कश्मीरोत्पत्तिमञ्जसा। निखिलां मातृगुप्ताय प्राहिणोत् दृढनिश्चयः।
स हठापतितां लक्ष्मीं भिक्षाभुक् प्रतिपादयन्। सर्व्वार्थिभ्यः कृती वर्षान्दश प्राणानधारयत्।
अन्योन्यं साभिमानानामन्योन्यौचित्यशालिनां। त्रयाणामपि वृत्तान्त एष त्रिपथगापयः। २२५
राजा प्रवरसेनोऽथ नमयन्नवनीधरान्। अन्तःस्फुलङ्गराः ककुभो दृढस्य यशसो न्यधात्।
पीताब्धिर्लङ्घितोर्व्वीध्रन् कुम्भयोनिरिवानमयत्। तस्य प्रतापः प्रभवन् भुवनानि प्रसन्नतां।
शुष्यत्तमालपत्राणि शीर्णताडीदलानि च। तेनार्णवतीराणि चक्रेऽरिस्त्रीमुखानि च।
स गङ्गालिङ्गिताङ्गस्य पूर्व्ववारिनिधेर्व्यधात्। सैन्येभमदनिष्यन्दैः कालिन्दीसङ्गमश्रियं।
रोधस्यपरपाथोधेः कटकैः स्पृष्टदिक्तटैः। चकारोत्पाट्य सौराष्ट्रानसौ राष्ट्रविपाटनम्। २३०
यशोर्थिनः पार्थिवेषु द्वेषरागबहिष्कृतः। ववृधे धर्म्मविजयस्तस्य क्षितिशतक्रतोः।
वैरिनिर्व्वासितं पित्र्ये विक्रमादित्यजं न्यधात्। राज्ये प्रतापशीलं स शीलादित्यापराभिधं।
सिंहासनं स्ववंश्यानां तेनाहितं हृतन्ततः। विक्रमादित्यवसतेरानीतं स्वपुरं पुनः।
हेतुनदीर्य्यं विविधानमन्वानं पराजयम्। सप्त वारान् स तत्याज जित्वा मुम्मुनिभूभुजं।
धार्ष्ट्यादथाष्टम वारे हेतुमाख्यातुमुद्यतम्। धिक्पशुर्बध्यतां सोऽयमित्यूचे नृपतिः क्रुधा। २३५
अबध्योऽहं पशुत्वेन वीरेत्युक्त्वा भयोत्सुकः। मध्येसभं ननर्त्तास्य सोऽनुकुर्व्वन् कलापिनं।
नृत्यं केकाश्च शिखिनो दृष्ट्वास्मै द्रविणं नृपः। अभयेन समं प्रादात्तालाङ्कचरणोचितं।
वसतोऽस्य दिशो जित्वा नप्तुः पैतामहे पुरे। कर्त्तुं पुरं स्वनामाङ्कं पप्रथे स मनोरथः।
रात्रौ चैत्रस्य लग्नस्य दिव्यं ज्ञातुमथैकदा। स वीरो वीरचर्य्यायां निर्ययौ पार्थिवार्य्यमा।

गच्छतः क्ष्मापतेस्तस्य मौलिरत्नांशुबिम्बितः। बभार ताराप्रकरो रक्षाशर्षपविभ्रमम्। ३४०
अथानन्तचितालोकस्पष्टभीमतटद्रुमाम्। श्मशानप्रान्ततटिनीं पर्य्यटन्नाससाद सः।
ततस्तस्य सरित्पारे मुक्तसंरावमग्रतः। ऊर्द्धबाहुर्महद्भूतं प्रादुरासीन्महौजसः।
नृपतिस्तस्य दृक्पातैर्ज्वलद्भिः कपिशीकृतः। उल्काज्योतिःकृताश्लेषः कुलाद्रिरिव दिद्युते।
तमथ प्रतिशब्देन घोरेणापूरयन्दिशः। अबाधं विहसन्नुच्चैरुवाच क्षणदाचरः।
संत्यज्य विक्रमादित्यं सत्वोद्रिक्तस्य शूद्रकं। त्वाञ्च भूपाल पर्य्याप्तं धैर्य्यमन्यत्र दुर्लभं। ३४५
वसुधाधिपते वाञ्छासिद्धिस्तव विधीयते। सेतुमेतं समुत्तीर्य्य पार्श्वमागम्यतां मम।
इत्युदीर्य्य निजञ्जानुं रक्षःपारात् प्रसारयन्। तन्महासरितो वारि सेतुसीमन्तितं व्यधात्।
अङ्गेन रक्षःकायस्य ज्ञात्वा सेतुम्प्रकल्पितं। वीरः प्रवरसेनोऽथ विकोषां छुरिकान्दधे।
स तयोत्कृत्य तन्मांसं कृतसोपानपद्धतिः। अतरद्यत्र तत् स्थानं छुरिकावाल उच्यते।
पार्श्वस्थन्तं लग्नमुक्त्वा प्रातर्मत्सूत्रपातनम्। दृष्ट्वा पुरं विधेहीति वदद्भूतन्तिरोदधे। ३५०
देव्या शारिकयाट्टेन यक्षेणाधिष्ठितश्च सः। ग्रामे शारीटकेऽपश्यत् सूत्रं वेतालपातितं।
भक्त्या प्रतिष्ठां प्राक् तस्मिन्निनीषौ प्रवरेश्वरम्। जयस्वामी स्वयं पीठे भित्वा यन्त्रमुपाविशत्।
वेतालवेदितं लग्नं जानतो जगतीभुजा। स्थपतेः स जयाख्यस्य नाम्ना प्रख्यापितोऽभवत्।
नगराप्रातिलोम्याय भक्त्या तस्य विनायकः। प्रत्यङ्मुखः प्राङ्मुखतां भीमस्वामी स्वयं ययौ।
सद्भावश्र्यादिका देव्यस्तेन श्रीशब्दलाञ्छिताः। पञ्च पञ्चजनेन्द्रेण पुरे तस्मिन्निवेशिताः। ३५५
वितस्तायां स भूपालो बृहत्सेतुमकारयत्। ख्याता ततःप्रभृत्येव तादृङ्नौसेतुकल्पना।
श्रीजयेन्द्रविहारस्य बृहद्बुद्धस्य च व्यधात्। मातुलस्य नरेन्द्रस्य जयेन्द्रो विनिवेशनम्।
बुभोज सिंहलादीन् यो द्वीपान् स सचिवोऽकरोत्। मोराकनामा मोराकभवनं भुवनाद्भुतम्।
षट्त्रिंशद्गृहलक्षाणि पुरन्तत्पप्रथे पुरा। यस्यास्ताम्वर्द्धनस्वामी विश्वकर्म्मा च सोमयोः।
दक्षिणस्मिन्नेव पारे वितस्तायाः पुरा किल। निर्म्मितन्तेन नगरं विभक्तैर्भुक्कमापणैः। ३६०
ते तत्राभ्रंलिहाः सौधा यानध्यारुह्य दृश्यते। वृष्टिस्निग्धं निदाघान्ते चैत्रे चोत्कुसुमं जगत्।
तद्विना नगरं कुत्र पवित्राः सुलभा भुवि। सुभगाः सिन्धुसम्भेदाः क्रीडावसथवीथिषु।
दृष्टः क्रीडानगोऽन्यत्र न मध्येनगरं क्वचित्। यतः सर्व्वाकथा लक्ष्मीः संलक्ष्या द्युपथादिव।
वैतस्तं वारिवास्तव्यैर्द्धृत्तुहिनशर्करम्। ग्रीष्मेऽप्यह्नि स्वेच्छयायात् कुतोऽन्यत्र लभ्यते।
प्रतिदेवगृहं कोशास्ते तस्मिन्नर्पिता नृपैः। सहस्रशः श्रूयते यैः क्रतुभूः सागराम्बरा। ३६५
पुरे निवसतस्तस्मिंस्तस्य राजप्रजासृजः। शनैः साम्राज्यलाभस्य षष्टिः सम्वत्सरा ययुः।
ललाटे शूलमुद्राङ्के जराशुक्लाः शिरोरुहाः। तस्य शम्भुभ्रमासङ्गिगङ्गाम्भोविभ्रमन्दधुः।
अथाश्वपादेनेशान निर्देशात्तत्क्षणागतः। काश्मीरिको जयन्ताख्यो द्विजन्मायोजि पार्श्वगः।
श्रान्तोऽस्यध्वन्य नान्यस्माद्दिशतोऽभिमतम्भवेत्। राज्ञे प्रवरसेनाय लेख एष प्रदर्श्यतां।

इत्युक्त्वार्पितलेखोऽसावसमर्थः पथः प्रभून्। गन्तुं प्रस्थानखिन्नोऽस्मि सद्यस्तेनेत्यगद्यत। ३७०
स्नाह्यद्य तावत्त्वं स्पृष्टो द्विजः कापालिना मया। उक्त्वेति तेन क्षिप्तोऽसावावसन्ने दीर्घिकाजले।
उन्मीलितेक्षणोऽद्राक्षीत् स्वं स्वदेशादथोत्थितम्। तस्थुपस्थार्चने राज्ञो भृत्यान् व्यग्रान् जलाहृतौ।
स्वमावेदयितुं नद्या नीयमाने नृपान्तिकम्। अव्याक्षिप्तोऽक्षिपल्लेखं स स्नानकलशे ततः।
प्रवेशं स्नापयता स्रस्तस्तत् कलशात् पुनः। राज्ञा लेखं वाचयित्वा जयन्तः प्रापितोऽन्तिकं।
कृतं कृत्यं महद्वृत्तं भोगा भुक्ता वयोगतं। किमन्यत् करणीयं ते एहि गच्छ शिवालयम्। ३७५
ततस्तं वृत्तसङ्केतः मन्त्रोध्याभिमतार्पणात्। भित्त्वा तमश्मप्रासादं जगाहे विमलं नभः।
जनैः स ददृशे गच्छन् कैलासतिलकां दिशम्। विषदे घटयन् व्योम्नि द्वितीयतपनोदयं।
जयन्तेनाद्भुतोदन्तहेतुनावाप्य सम्पदः। स्वनामाङ्काग्रहारादिकर्मभिर्निर्मलाः कृताः।
एवं स भुवनैश्वर्य्यं भुक्त्वा भूमिभृताम्बरः। अनेनैव शरीरेण भेजे भूतपतेः सभाम्।
प्रासादे प्रवरेशस्य सिद्धक्षेत्रे क्षमापतेः। स्वर्गद्वारप्रतिभटं द्वारमद्यापि लक्ष्यते। ३८०
तस्य रत्नप्रभादेव्याञ्जातो राजा युधिष्ठिरः। अपासीन्नवमासोनाः क्ष्मां च द्वाविंशतिं समाः।
सर्व्वरत्नजयस्कन्धगुप्तशब्दाङ्किताभिधाः। आसन्विहारचैत्यादिकृत्यैस्तत् सचिवा वराः।
भवच्छेदाभिधं ग्रामं स्तुत्यश्चैत्यादिसिद्धिभिः। योव्यधात् सोऽस्य वज्रेन्द्रोऽप्यासीन्मन्त्री जयेन्द्रजः।
दिक्कामिनीमुखोत्कीर्णकीर्त्तिचन्दनचन्द्रकाः। आसन् कुमारसेनाद्यास्तस्यान्येऽप्यग्र्यमन्त्रिणः।
पद्मावत्यां सुतस्तस्य नरेन्द्रादित्य इत्यभूत्। लखणापरनामा यो नरेन्द्रस्वामिनं व्यधात्। ३८५
वज्रेन्द्रतनयौ वज्रकनकौ यस्य मन्त्रिणौ। अभूतां सुकृतोदन्तौ राज्ञी च विमलप्रभा।
स विधायाधिकरणं लिखितस्थितये निजम्। द्यां त्रयोदशभिर्वर्षैरारुरोह महाभुजः।
तस्यानुजो धरणिभृद्रणादित्यस्ततोऽभवत्। तुञ्जीनापरनामानं यज्जनाः प्राकरञ्जसा।
जगद्विलक्षणं यस्य शङ्खमुद्राङ्कितं शिरः। अपूर्व्वशर्व्वरीशान्तर्लीनभानुश्रियं दधे।
रिपुकण्ठाटवीष्वासीद्यस्य धाराधरः पतन्। तद्वधूनेत्रकुण्डेषु जलाधिक्यमधार्य्यत। ३९०
अपूर्व्वो यत्प्रतापाग्निः प्रविश्योर्व्वीं द्विषां व्यधात्। नारीनेत्रेषु नीरोर्म्मीन्मन्दिरेषु तृणाङ्कुरान्।
यस्य पाणिप्रणयितां कृपाणे समुपागते। कबन्धेभ्यः परो नृत्यं न व्यधत्त द्विषद्दले।
तस्याप्यपोढमाहात्म्या देवी दिव्याकृतेः प्रिया। विष्णुशक्तिः क्षितिम्प्राप्ता रणारम्भाभिधाभवत्।
स हि जन्मान्तरे पूर्व्वं द्यूतकारोऽभवत् किल। कदापि प्राप निर्व्वेदं सर्व्वस्वं कितवैर्जितं।
देहत्यागोद्यतोऽप्यासीत् प्राप्यं किञ्च विचिन्तयन्। न पर्य्यन्तेऽप्युपेक्षन्ते कितवाः स्वार्थसाधनं। ३९५
अबन्ध्यदर्शनाद्विन्ध्ये देवीं भ्रमरवासिनीम्। द्रष्टुमैच्छद्दृगाकाङ्क्षी निर्व्यपेक्षः स्वजीविते।
भ्रमरैः शङ्कुपुच्छाद्यैः खण्ड्यमानस्य देहिनः। तदास्पदं हि विशतो दुर्लङ्घ्या पञ्चयोजनी।
स वज्रशङ्कुपुच्छानां धीमांस्तेषाम्प्रतिक्रियां। देहेऽवश्यपरित्याज्ये मन्वानोऽभूद्दुष्कराम्।
प्रागधोवर्म्मणा देहं ततो महिषचर्म्मणा। तेन च्छादयता दत्तो मृत्क्षेपोऽथ सगोमयः।

अथ भानुकरोच्छुष्कत्क्षेपप्रेङ्खिताङ्गकः। स लोष्ट इव सञ्चारी प्रतस्थे क्रूरनिश्चयः। ४००
सरलां सरणिं त्यक्त्वा जीवितस्पृहया समम्। गुहा तेन ततः सान्द्रं तमोभीमा व्यगाह्यत।
अथोदतिष्ठन् गर्त्तेभ्यो घोरा भ्रमरमण्डलाः। पक्षशब्दैः श्रुतिं घ्नन्तो मृत्युतूर्य्यरवैरिव।
ते तमुच्छुष्कत्क्षेपरेणुप्रणितलोचनाः। सहसा नाक्रमन्ते स्म प्रहरन्तोऽपि बाधितुं।
रेणुभिर्बाधितदृशः ते न्यवर्तन्त षट्पदाः। तेऽखण्डयंस्तु त्क्षेपं न्यपतन्नेव वा नवा।
तैः खण्ड्यमानमुच्चण्डैर्व्रजतो योजनत्रयीम्। क्रमात्मृत्कवचन्तस्य पथि संक्षयमाययौ। ४०५
ततो मुहुः प्रहरता तेषां महिषचर्म्मणि। घोरश्चटचटाघोषः प्रादुरासीद्भयङ्करः।
चतुर्थयोजनस्यार्द्धमतिक्रम्य विवेद सः। रणत्कारैर्द्विरेफांस्तानयोवर्म्मणि पातिनः।
धावंस्ततोऽतिवेगेन खण्ड्यमानेन षट्पदैः। स शस्त्रवर्म्मणामोचि चित्तं धैर्य्येण नो पुरः।
गव्यूतिमात्रमासन्ने देवीधामनि धैर्य्यवान्। धुन्वन् कराभ्यां मधुपान्धावति स्म स धीरधीः।
अथ स्नाय्वस्थिशेषाङ्गो लूनमांसः षडङ्घ्रिभिः। कराभ्यामक्षिणी रक्षन्देव्यायतनमासदत्। ४१०
प्रशान्ते भृङ्गसम्पाते प्रकाशमवलोकयन्। स देव्याः पादयोरग्रे पपातोत्क्रान्तजीवितः।
स्तोकावशेषप्राणन्तन्देव्याश्वासयितुन्ततः। अभिरामं वपुः कृत्वा पस्पर्शाङ्गेषु पाणिना।
दिव्येन पाणिस्पर्शेन तेन पीयूषवर्षिणा। स क्षिप्रासादितस्वास्थ्यो दिक्षु चिक्षेप चक्षुषी।
प्रविष्टमात्रः प्रैक्षिष्ट सिंहविष्टरसीम्नि यां। घोराकारां स तान्देवीन्तदाऽद्राक्षीन्न तां पुनः।
ददर्श पुनरुद्यानलतावासो विलासिनीम्। स्थितां पुष्करिणीतीरे श्यामाम्पुष्करलोचनाम्। ४१५
स्फीतहारमुक्ताढ्यां वक्षःपीनस्तनाञ्चलिं। मरन्दैः कान्तिकुसुमैर्यौवनेनार्चिताङ्गकाम्।
यावकाहारिणौ पादौ दधतीं कृच्छ्रचारिणौ। स्तनं चक्षुर्मुखं द्रष्टुं तपस्यान्तामिवान्वहम्।
भास्वद्बिम्बाधरां कृष्णकेशीं सितकराननां। हरिमध्यां शिवाकारां सर्व्वदेवमयीमिव।
तां विभाव्यानवद्याङ्गीं निर्जने यौवनोर्जितां। मेने वारितवामेन स कामेन विधेयतां।
दधती रूपमाधुर्य्यपूरच्छन्नामधृष्यतां। अप्सराः प्रत्यभात्तस्य साहि चित्तेन देवता। ४२०
कृपार्द्रदुरवादीत्तं व्यथितोऽसि चिरं पथि। मुहुः सौम्य समाश्वस्य प्रार्थ्यतामुचितो वरः।
स तामभाषे शान्तो मे भवत्या दर्शनश्रमः। अदेवी किन्तु भवती वरं दातुं कथं क्षमा।
देवी जगाद तं भद्र कोऽयन्ते मनसि भ्रमः। देवी वा स्यामदेवी वा वरीतुं त्वान्तु शक्नुयां।
इति सोऽभीष्टसम्प्राप्तौ कारयित्वा प्रतिश्रवम्। दूरमुत्क्रान्तमर्य्यादः सङ्गमं तामयाचत।
तमभ्यधात् सा दुर्बुद्धे कोऽयन्तेऽनुचितो विधिः। प्रार्थयस्वेतरद्यस्मात् साहं भ्रमरवासिनी। ४२५
देवीं तां जानतोऽप्यस्य नाभूदवहितं मनः। निरुद्धा वासनाः केन जन्मान्तरनिबन्धनाः।
स तामुवाच सत्यञ्चेद्देवि स्वाङ्गिरमिच्छसि। प्रमाणीकुरु मद्वाणीमहमन्यन्न कामये।
पूर्व्वमेव हि जन्तूनां योऽधिवासो निलीयते। तिलानामिव तेषां स पर्य्यन्तेऽपि न शीर्य्यते।
देवी वा भवकान्ता वा भीमा वा शोभनापि वा। यादृशीं पूर्व्वमद्राक्षं तादृश्येवावभासि मे।

तमित्थं कथयन्तं सा ज्ञात्वा निश्चलनिश्चयम् । एवं जन्मान्तरे भावीत्यभ्यधादनुरोधतः । ॥४३०
उत्सहन्ते हि संस्रष्टुं न दिव्या मर्त्यधर्मिणः । तद्गच्छ शूरवह्न्येत्युक्त्वा सान्तर्दधे ततः ।
अप्यन्यजन्मा भूयासन्तया देव्येति चिन्तयन् । प्रयागवटशाखाग्रादत्याक्षीत् स वपुस्ततः ।
सोऽजायत रणादित्यो रणारम्भा च सा भुवि । मर्त्यभावेऽपि यन्नैव जहौ जन्मान्तरस्मृतिं ।
रतिसेनाभिधश्चोलराजः सन्ध्योऽब्धिपूजने । तान्तरङ्गान्तराल्लेभे रत्नराजिमिवोज्ज्वलाम् ।
आबाल्याद्युक्तदिव्योर्मिं नामलङ्कृतयौवनां । दिव्यांशां पृथिवीशेभ्यो नार्थिभ्योऽपि ददौ नृपः । ॥४३५
रणादित्यनृपामात्ये दूत्यायाते तथैव तं । मत्वाख्यानेच्छुमाचख्यौ सैव तद्वरणं वरम् ।
तदर्थमेव कथितस्वोत्पत्तिस्तां ततः पिता । द्रुतं कुन्तलभूभर्तुः सुहृदः प्राहिणोद्गृहं ।
प्रहृष्टो विप्रलब्धं तं देशं गत्वा व्यधत्त तां । परिणीय रणादित्यः शुद्धान्तस्याधिदेवतां ।
मर्त्यसंस्पर्शभीरुः सा महादेवी भवन्त्यपि । तं मायया मोहयन्ती न पस्पर्श कदाचन ।
व्यधान्मायामयीं राज्ञस्तल्पे स्वसदृशीं स्त्रियम् । स्वयं भ्रमररूपा सा निर्जगाम बहिर्निशि । ॥४४०
स्वनाम्ना स्वस्य देव्याश्च कृत्वा परस्परद्वयं । माहेश्वरः शैललिङ्गे कारयामास कारुभिः ।
श्वः प्रतिष्ठाप्रसङ्गेऽथ सज्जे तल्लिङ्गयोर्द्वयं । देशान्तरागतः कश्चित् दूषयामास देववित् ।
स दृष्टप्रत्ययः शम्वत्तयोर्घटितलिङ्गयोः । अश्मवत्योः समस्तदूषैर्म्यभावे गर्भमादृतम् ।
किङ्कर्तव्यतया मूढं प्रतिष्ठाविघ्नविह्वलं । दिव्यदृष्टिः स्वयन्देवी ततो राजानमब्रवीत् ।
राजन् गिरिसुतोद्वाहे पौरोहित्यम्पुरा भजन् । स्वमर्चार्दत्तमादत्त पूजाभागात् प्रजापतिः । ॥४४५
तां विष्णोः प्रतिमां वीक्ष्य पूजितान्तेन धूर्जटिः । शून्यामिव तदा मेने शक्तिरूपां विना शिवं ।
निमन्त्रितैर्ढौकितानि रत्नान्यथ सुरासुरैः । पिण्डीकृत्य स्वयञ्चक्रे लिङ्गम्भुवनवन्दितं ।
तां विष्णुप्रतिमान्तच्च लिङ्गमीशानपूजितं । स्वयं प्रजासृजः पूर्वं कालेनादत्त रावणः ।
तेनाप्यभ्यर्च्यमानं तं लङ्कायामभवच्चिरम् । देवद्वयं रावणान्ते नीतमासीच्च वानरैः ।
तिर्य्यक्तया ते कपयो मुग्धाश्च मानसौकसः । मानौत्सुक्याः शनैर्देव्यौ न्यधुरन्तरमानसे । ॥४५०
प्रागेव सरसस्तस्मात् कुशलैः शिल्पिभिर्मया । तावुद्धृतौ प्रातरत्र प्राप्तौ द्रक्ष्यस्यसंशयं ।
तयोः प्रतिष्ठा क्रियतामित्युक्त्वा पृथिवीभुजं । देवी प्रयाता शुद्धान्तं सिद्धान् सस्मार खेचरान् ।
ते ध्यातमात्राः सम्प्राप्ता देव्यादेशेन पाथसः । उद्धृत्य नृपतेर्धाम्नि देवौ हरिहरौ न्यधुः ।
दिव्यैः प्रसूनैः संवीतौ हरनारायणौ जनः । प्रातर्नृपसद्मे दृष्ट्वा परं विस्मयमाययौ ।
सज्जे प्रतिष्ठालिङ्गेऽथ माहेश्वरतया नृपः । रणेश्वरप्रतिष्ठायां पूर्वं यावत् समुद्यतः । ॥४५५
रणारम्भानुभावेन तावद्देवाद्भुतावहः । स्वयं पीठे रणस्वामी भित्त्वा यन्त्रमुपाविशत् ।
॥ युग्मकं ॥ कर्तुं प्रभावजिज्ञासां राज्ञा दत्तधनस्ततः । स स्वयम्भूः स्वयम्भर्तां तांस्तान् ग्रामानदापयत् ।
कुम्भदासतयाख्यातः सिद्धो ब्रह्माभिधो वसन् । परिज्ञाय तयोर्देव्या प्रतिष्ठाकर्म कारितः ।
स दृष्टप्रत्यभिज्ञः सन् प्रतिष्ठाप्य रणेश्वरम् । श्वोवा भजवणस्वामी प्रतिष्ठां गूढमादधे ।

अनास्खलत्पयन् यत् स स्वयं पाठमवान्तरत्। इति केषामपि हृदि प्रवादोऽद्यापि वर्त्तते। ४६०
सामन्यप्रतिमं सिद्धं देवी ब्रह्मविदां वरम्। अकारयत्तमुद्दिश्य पराद्ध्यं मठमुत्तमम्।
रणारम्भस्वामिदेवौ दम्पतीभ्यां व्यधीयत। मठः पाशुपतानाञ्च ताभ्यां प्रद्युम्नमूर्द्धनि।
आरोग्यशाला निरघायुष्याचलाय रोगिणां। तेन सेनामुखी देवी भयशान्त्यै च कारिता।
ख्यातिं रणपुरस्वामिसंज्ञया सर्व्वतोगतम्। स सिंहरोत्सिकाग्रामे मार्त्तण्डं प्रत्यपादयत्।
अमृतप्रभया तस्य राज्ञः पत्न्यान्यया कृतः। दक्षिणस्मिन् रणेशस्य पार्श्वे देवोऽमृतेश्वरः। ४६५
मेघवाहनभूभर्त्तृपत्न्या भिन्नाख्यया कृते। विहारेऽपि तथा बुद्धबिम्बं साधु निवेशितं।
राज्ञे देव्यनुरक्ताय सानुक्रोशाय सैकदा। पातालसिद्धिदं मन्त्रं प्रददौ हाटकेश्वरम्।
माभून्मोक्षस्य मत्प्राप्तिरिति मत्वा तथार्पितम्। असाधयत् स तम्प्राप्य वसन्तं वत्सरान् बहून्।
हलष्टिकापथे कष्टं ततो नन्दिशिलाकृतः। भूरिभिर्वत्सरैर्मन्त्रसिद्धैः प्रणयितां ययौ।
स्वप्नेषु सिद्धलिङ्गेषु जातो भङ्गुरनिश्चयः। चन्द्रभागाजलं भित्त्वा नमुचेः प्राविशद्बिलं। ४७०
बिलेऽपावृततां याते दिवसानेकविंशतिं। प्रविश्य पौरान् प्राक्षिन्ये दैत्यस्त्रीभोगभोगितां।
एव स भूपतिर्भूत्वा भुवं वर्षशतत्रयम्। निर्व्वाणस्वाम्यनिर्व्यूढपातालेश्वरमासदत्।
सानुगे नृपतौ याते दैतेयदयितान्तिकम्। देवी सा वैष्णवीशक्तिः श्वेतद्वीपमगाहत।
राजवंशेष्वनेकेषु राज्ञोर्वंशद्वये परम्। द्वयोरेवाच निर्व्यूढिम्प्रजावात्सल्यमागतं।
रणादित्यस्य गोनन्दवंशे रामस्य राघवे। लोकान्तरसुखस्यापि ययोरंशभुजः प्रजाः। ४७५
विक्रमाक्रान्तविश्वस्य विक्रमेश्वरकृत्सुतः। तस्यासीद्विक्रमादित्यस्त्रिविक्रमपराक्रमः।
राजा ब्रह्मगलूनाभ्यां सचिवाभ्यां समं महीं। सोऽपासीद्वासवसमो द्वाचत्वारिंशतं समाः।
चक्रे ब्रह्ममठं ब्रह्मा गलूनोलूनदुष्कृतः। रत्नावल्याख्यया वध्वा विहारं निरमापयत्।
राज्ञोऽनन्तरजस्तस्य राजाभूत्तदनन्तरम्। तापितारातिभूपालो बालादित्यो बलोर्जितः।
लवणार्णवपानेन तर्षोत्कर्षमिवोद्वहन्। यत्प्रतापो रिपुस्त्रीणां सनेत्राम्भोऽभजन्मुखं। ४८०
आसन् येऽरिमनोगाधबोधदण्डा इवाहृताः। यस्याद्यापि जयस्तम्भाः सन्ति ते पूर्व्ववारिधौ।
प्रभावाङ्केन वङ्गानां जित्वा येन व्यधीयत। काश्मीरिकनिवासाय कालम्ब्याख्यो जनाश्रयः।
काश्मीरेषु धनोद्यमग्रहारं द्विजन्मनाम्। राजा मडवराज्ये यो भेडराख्यमकारयत्।
विशां विपाटितारिष्टमरिष्टोत्सादने व्यधात्। वल्लभा यस्य बिम्बोष्ठी बिम्बा बिम्बेश्वरं हरम्।
भ्रातरो मन्त्रिणस्तस्य खेखा मठसुरोकसः। सेतोश्च कारका आसन् खङ्खसनुन्नमालवाः। ४८५
बभूव तस्य भूभर्त्तुर्भुवनाद्भुतविक्रमा। तनयानङ्गलेखाख्या शृङ्गारोदधिकौमुदी।
तां वीक्ष्य लक्षणोपेतां मृगाक्षीम्पितुरन्तिके। अमोघप्रत्ययोऽव्यक्तं व्याजहारेति दैववित्।
भविता तव जामाता जगतीभोगभाजनम्। त्वदन्तमेव साम्राज्यं गोनन्दान्वयजन्मनां।
सुतावन्माममासाद्यम निच्छन्नथ पार्थिवः। दैवम्पुरुषकारेण जेतुमासीत् कृतोद्यमः।

अराजान्वयिने दत्ता नेयं शाखाव्यभिचारिणी । मत्वेति प्रददौ कन्यां न कस्मैचन भूभुजे । ४९०
हेतुं स्वरूपतामात्रं कृत्वा जामातरं नृपः । अश्वघासकायस्थञ्चक्रे दुर्लभवर्द्धनम् ।
मातुः कर्कोटनागेन सुख्यातायाः समीयुषा । राज्ञ्यायैव हि सञ्जाता राज्ञा नाज्ञायि तेन सा ।
निश्चिन्वाते हि धीमन्या यमेवायोग्यमापदात् । जिगीषयेव तत्रैव निदधाति विधिः शुभम् ।
मात्सर्य्येण जहद्धहान् विषदुग्धे धूमध्वजे योग्यतां ज्ञात्वा स्वाभिदधत्त्विषं दिनपतिर्दीपप्रदानोन्मुखः ।
दैवं वेत्ति न यः शिखी स परतोनामास्तु तत्सम्भवाः स्युर्दीपा अपि यद्गुणेन जगतस्तिग्मांशुविस्तारकाः ।
धिया भाग्यानुगामिन्या चेष्टमानो न याचितम् । अभूत् सर्व्वस्य चक्षुष्यः स तु दुर्लभवर्द्धनः । ४९५
प्रज्ञया द्योतमानं तं प्रज्ञादित्य इति प्रथाम् । कौवीरभाग्यसाम्यस्य शनकैः श्वशुरोऽनयत् ।
पित्रोः प्रेयस्तयोद्धृत्ता तारुण्यादिमदेन च । राजपुत्री यथावस्तु गणयामास नैव तम् ।
स्वैरिणीसङ्गमो भोगा युवानोऽग्र्ये पितुर्गृहम् । पत्युर्म्लेच्छत्वमित्यस्याः किन्नाभूच्छीलविप्लवकृत् ।
सा नित्यदर्शनाभ्यासाच्छनकैर्विशता मनः । अनङ्गलेखा खङ्खेन सम्प्रायुज्यत मन्त्रिणा ।
च्छन्नप्रेमसुखाभ्यासनष्टह्रीभीतिसम्भ्रमा । धार्ष्ट्यन्दिनाद्दिनं यान्ती ततस्तन्मयतां ययौ । ५००
स मन्त्री दानमानाभ्यां वशीकृतपरिच्छदः । अन्तःपुरे यथाकामं विजहार तया सह ।
उपलेभे च शनकैस्तस्यास्तं शीलविप्लवं । विरागलिङ्गैस्तच्चिह्नैर्धीमान् दुर्लभवर्द्धनः ।
सखीमध्ये रहः स्मेरा विवर्णा भर्तृदर्शने । अकाण्ड एव प्रोत्थाय पश्यन्ती सस्मितं पथः ।
पत्युः कोपे कृतावज्ञा भ्रूनेत्रचिबुकाञ्चलैः । तदप्रियं भाषमाणे सस्मितं न्यस्तलोचना ।
तत्तुल्यगुणनिर्व्विन्ना तद्विपक्षस्तुतौ रता । रिरंसां तस्य संलक्ष्य सखीभिर्व्यङ्गसङ्कथा । ५०५
तच्चुम्बने भुग्नकण्ठी तदाश्लेषसहाङ्गका । तत्सम्भोगे त्यक्तहर्षा तत्तल्पे व्याजनिद्रिता ।
भवेद्धि प्रायशो योषित्प्रेमविक्रीतचेतना । निवेदयन्ती दौःशील्यपिशाचावेशवैकृतं ।
॥ कुलकं ॥ निगूढदारदौरात्म्यचिन्ताक्षामवपुस्ततः । शुद्धान्तमविशत् ज्ञातुं निशि दुर्लभवर्द्धनः ।
योऽपश्यत् सुरतक्लान्तिसुलभस्वापनिःसहां । दुर्जातभर्तुरङ्केषु प्रत्युप्तामिव वल्लभां ।
श्वासैरगलितावेगैः कम्पयद्भिः कुचाङ्कुरौ । निवेदयन्तौ तत्कालमेव निर्वहणं रतेः । ५१०
अन्यस्यापि क्रुधोहेतुं पुनरप्यक्षमावहां । तां तथावस्थितां वीक्ष्य स प्रजज्वाल मन्युना ।
प्रजिहीर्षुः स्म रोषेण विमर्शेन निवारितः । प्रवृत्त्यैव प्रवृत्त्यैव निवृत्तं स्वममन्यत ।
ततस्तथाविधः क्षुभ्यत्प्रकोपावेशसागरः । विचारवेलया तस्य बलाच्छममनीयत ।
नमस्तस्मै ततः कोऽन्यो गण्यते वशिनां धुरि । जीर्य्यन्ते येन पर्य्याप्ता ईर्ष्याविषविसूचिकाः ।
सोऽचिन्तयद्दहो कष्टास्नेहारागानुगादृशाः । विचारवन्ध्याः क्षिप्यन्ते क्षिप्रं याभिरधोनराः । ५१५
स्त्रीति नामेन्द्रियार्थोऽयमिन्द्रियार्था यथा परे । तथैव सर्व्वसामान्या वशिनामत्र काः क्रुधः ।
निसर्गतरला नारीः को नियन्त्रयितुं क्षमः । नियन्त्रणेन किं वास्याश्च्युतता स्मरणोचितम् ।
यः शूनोरिव सङ्घर्षे एकार्थाभिनिविष्टयोः । रागिणोर्यदि मानः स कोऽवमानस्ततः परः ।

ममकारो मृगाक्षीषु क इवार्थं सचेतसां । स्वदेहेऽनुपपन्नोऽपि यः सोऽन्यत्र कथं मतः ।
उद्वेगोत्पादनादेषा बध्या चेत्प्रतिभाति मे । रागस्तद्विस्मृतः कस्मान्मूलमुद्वेगशाखिनः । ५२०
सन्नपातालनिर्भिन्नमूलो रागमहीरुहः । अभिभूतमनुत्पाद्य द्वेषमुन्मूल्यते कथम् ।
द्वेषो नामैष दुर्धर्षो जितो येन विवेकिना । क्षणार्द्धेनैव रागस्य तेन नामापि नाश्रितम् ।
वोढ्वैतद्व्यथया दृष्ट्वा रागिणां स्वयमेवमधम् । ईर्ष्या जेया ततो रागः स्वयमात्मा पलायते ।
इति ध्यात्वालिखद्वर्णान् सुप्तुः स्वांशुकपल्लवे । वध्योऽपि न हतो यस्त्वं स्मर्त्तव्यं तत्त्वयेत्यसौ ।
जनैरलक्ष्यमाणेऽथ याते दुर्लभवर्द्धने । त्यक्तनिद्रस्य मन्त्री तद्दृष्ट्वा वर्णानवाचयत् । ५२१
दाक्षिण्यात् प्राणदस्यास्य सस्नुषस्य मनसा सदा । विस्मारामहलेखान्दध्यौ तु प्रत्युपक्रियां ।
तस्योपकर्त्तुमुचितं प्रतिकारमिच्छोश्चिन्ताविभ्रमतु मनः स्मरबाणपंक्तिः ।
दृग्गोचरे परिचयप्रणयं प्रपेदे निर्निद्रता ननु कदाचन राजपुत्री ।
भूत्वा सप्तत्रिंशतिमब्दान् सचतुर्भिर्मासैर्वन्द्यां मूर्द्धनि राज्ञां नृपतीनां ।
तस्मिन् काले लोकमवापोज्ज्वलकान्त्यो बालादित्यो बालशशाङ्काङ्कितमौलेः ।
पूर्वं विपन्नतनयेऽभिजनस्य शेषे गोनन्दसन्ततिरजायत तत्र शान्ते ।
प्राग्दन्तिभुग्ननलिनाऽथ हठप्रविष्टतोयौघपाटितबिसा नलिनीव दीना ।
अथ श्लथितमुख्यामात्यै वत्यविघ्नः कनकघटविमुक्तैः पावनं तीर्थतोयैः ।
कथमपि स कृतश्री राजजामातुरयर्थित विधिवद्दिष्टं मूर्द्धि राज्याभिषेकम् । ५२०
कर्कोटप्रभवः प्रभुः स मुकुटप्रत्युप्तमुक्ताकणद्योतश्रेणिफणाङ्कुराङ्कितमहद्वाङ्गश्रीमुद्वहन् ।
ज्ञातिप्रीतिसतोषशेषफणभृत्सम्फुल्लवत्पलवन्यासावर्त्तकहाटकाञ्जपटलच्छायाधामश्रीभोऽभवत् ।
अथ विगलिता गोनन्दोर्वीभुजोऽभिजनाः प्रसृचेरति प्रसुचिनि भूः कर्कोटाख्यैः कुले श्रयित स्थितिम् ।
चिरपरिचितात् स्वर्गाभोगाद्भ्वनः पतनं श्रिता त्रिभुवनगुरोः शम्भोर्मौलाविवामरनिम्नगा ॥ ५२२
राजानः १० आदितः ५२ यन्याः । ५२५ इति श्रीकाश्मीरिकमहामात्यचम्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां
तृतीयस्तरङ्गः समाप्तः ।

## ॥ अथ चतुर्थस्तरङ्गः ॥



तद्दीतव्यतिरेकमर्द्दितमयादेहेन सिन्दूरीभवदित्यूहमिह व्यपोहतु वपुः स्थाणोरभद्राणि वः ।
वेष्या भोगिवधूशरीरकुटिलश्यामत्विषा वेष्टिता जूटाहेरपि यत्र भाति दयिता मूर्त्त्येव सूक्ष्मा तनुः ।
स महीं राजकन्याञ्च प्राप्तवानेकतः कुलात् । रत्नानाञ्च सुतानाञ्च राजाभूद्भाजनं शनैः ।
पतिर्गोपितदौःशील्यात्तुल्यसौभाग्यगौरवा । अनङ्गभवनं चक्रे विहारं नृपतिप्रिया ।
त्रिपुरेशायुषोऽल्पत्वं दैवज्ञोक्तं विचिन्तयन् । राज्ञः सुतौ मल्हणाख्या मल्हणस्वामिनं व्यधात् ।
पारे विशोककोटाद्रौ प्रदत्तप्रतिपत्तिना । आदीयत द्विजेन्द्रेभ्यश्चन्द्रग्रामः क्षमाभुजा । ५
श्रीनगर्य्यां प्रतिष्ठाप्य दुर्ल्लभस्वामिनं हरिं । षट्त्रिंशता वत्सराणां साष्टमासस्तमुपाययौ ।
अनङ्गदेव्यां सम्भूतस्तस्य दुर्ल्लभकः सुतः । शशास वासवसमस्ततो वसुमतीं कृती ।
मातामहस्य यो नाम्ना दौहित्रस्तनयीकृतः । प्रतापादित्य इत्याख्यां तत्कुलानुगुणां दधे ।
आडैभैर्व्विडात् प्राप्तश्रिया यन्मन्त्रिणा कृता । अयहारा हनुमता पुण्या ममनसम्पदा ।
प्रतापतापितारातिः प्रतापपुरपत्तनं । मघवन्नगरस्पर्द्धि दीर्घबाहुर्व्यधत्त सः । १०
नानादिगन्तरायाततत्तत्क्रयिकसंकुले । नोणाभिधोऽवसत्तस्य देशे रौहीतको वणिक् ।
रौहीतदेशजातानां निवेशाय द्विजन्मनां । महागुणो नोणमठं पुण्यज्येष्ठं चकार सः ।
स जातु राजभवने राज्ञा प्रीत्या निमन्त्रितः । अर्चितोऽभवदेकाहमुपचारैर्नृपोचितैः ।
प्रातः सुखासिकां प्रेम्णा पृष्टोऽथ पृथिवीभुजा । शीर्षव्यथामकथयत् प्रजानां दीपकज्जलैः ।
ततः क्रमेण नृपतिस्तेन जातु कृतार्थनः । वसंस्तदास्पदेऽद्राक्षीत् क्षपायां मणिदीपकान् । १५
विलासित्वेन लक्ष्म्या च तादृश्या तस्य विस्मितः । अथ दिवाप्यहान्यासीत्तत्रैव स कृतार्हणः ।
एकदा तेन तत्कान्ता विलोक्य ललिताकृतिः । श्रीनरेन्द्रप्रभा नाम हर्म्ये हिमकरानना ।
उरोजपूर्णकुम्भाङ्कसद्द्वाःस्थितविभ्रमः । मूर्त्तिमन्मङ्गलं तस्ये वरस्य च गृहस्य च ।
हर्म्यस्य निर्जनतया स निःशङ्कविहारिणीं । तां विलोक्यानवद्याङ्गीमभिलाषेण पस्पृशे ।

सापि दर्शितमाशीभिः किञ्चित् साचीकृतानना । अपश्यत् काश्यपीकान्तं श्रोत्रविश्रान्तया दृशा । २०

प्रागजन्मप्रेमबन्धाद्वा नियोगाद्वा मनोभुवः । सपक्षपातं सा तस्मै दृष्टैव विदधे मनः ।

क्षणादलब्धस्पर्शोऽपि तां सौभाग्यसुधामयीं । मज्जानामपि संस्पृश्य स्थितामिव विवेद सः ।

हर्म्यस्तम्भच्छन्नगात्री क्षणं भूत्वा जगाम सा । वावर्त्य वक्त्रं पश्यन्ती पार्थिवं तं मुहुर्मुहुः ।

गृहीतहृदयस्तन्व्या तावतैव महीपतिः । स चिन्ताजिह्मनयनो राजधानीं शनैर्ययौ ।

तत्र तस्य तदाकारध्यानावहितचक्षुषः । सममन्तःपुरप्रीत्या प्रपेदे तानवं तनुः । २५

अचिन्तयत् स धिक् कष्टं कठोऽयमशुभावहः । अस्मिन् मे मानसोद्याने रागनामा विषद्रुमः ।

अहो नु सुभगा रागदृप्तिक्षिप्तं विजित्य यः । विवेकादीन् व्यधाद्दूरे सुहृदः परिपन्थकान् ।

भाव्यं कौलीनभीतेन येन भूमिभृता सता । तस्य मे दुःसहः कोऽयं सदाचारविपर्य्ययः ।

यत्र दारापहरणं राजैव कुरुते विशां । परः को नाम तत्रास्तु शमिना नीत्यतिक्रमे ।

विमृश्यन्निति भूपालो विसर्त्तुमभवत् क्षमः । न पद्धतिं साधुसेव्यां न च तां दीर्घलोचनां । ३०

तमथ प्रथितास्वस्थं नेदीयोमरणं वणिक् । स जनाज्ज्ञातवृत्तान्तः सुजनो विजनेऽब्रवीत् ।

इमामवस्थां प्राप्तोऽसि किं धर्म्मेण निरुध्यसे । न प्राणसंशये जन्तोरकृत्यं नाम किञ्चन ।

यन्मतानि प्रतीक्ष्यन्ते विबुधैर्धर्म्मसंशये । तेषामपीदृशे कृत्ये श्रूयते संयमव्ययः ।

यस्यानुरोधादुचितं नापि देहमुपेक्षितुं । स्वकीर्त्तिर्न परासूनां कीर्णकर्णरसायना ।

माभून्मदनुरोधस्ते त्वत्प्रियार्थे हि पार्थिव । प्राणा अपि न मे गण्या इन्द्रियार्थेषु का कथा । ३५

एवमुक्तोऽपि नाधत्से ताञ्चेत्तत् सा सुरास्पदात् । गत्वा तां नर्त्तकी भूत्वा नृत्यशालाश्रयार्पिता

तेनेति प्रेर्य्यमाणः स बलिना च मनोभुवा । प्राप्तलज्जामथ जग्राह कथञ्चित्तां सुलोचनां ।

कृत्यैरुदात्तैः शापास्तता दृक्चारित्र्यलाघवा । नरेन्द्रमहिषी चक्रे श्रीनरेन्द्रेश्वरं हरं ।

क्रमेण च प्रजापुण्यैश्चन्द्रापीडाभिधं सुतं । प्रासोष्ट पार्थिववधूर्निधानमिव मेदिनी ।

तस्याभिजन्ममालिन्यं स्वच्छैरच्छेदि तद्गुणैः । शाणाश्मकषणैः कार्ष्ण्यमाकरोत्थं मणेरिव । ४०

धूमाद्गाढमलीमसात् कुचिपथः सूते घनस्योद्गमो लोहस्यातिसितस्य जातिरचलात् कुण्ठाश्ममालामयात् ।

किञ्चात्यन्तजडाज्जलाद्द्युतिमतो व्याजाब्जस्योद्भवो जन्मावध्यनुकारिणो न महतां सत्यं स्वभावाः क्वचित् ।

तारापीडोऽपि तनयः क्रमात्तस्यामजायत । अविमुक्तापीडनामा मुक्तापीडोऽपि भूपतेः ।

वज्रादित्योदयादित्यललितादित्यसंज्ञकाः । प्रतापादित्यजाः ख्याताश्चन्द्रापीडादयोऽपि ते ।

वर्षान् पञ्चाशतं भुक्त्वा भुवं दुर्लभभूपतिः । पुण्यनिःश्रेणिभिः पुण्यामारुरोह दिवं शनैः ।

राजचूडामणिः श्रीमांश्चन्द्रापीडस्ततोऽभवत् । पीडितेन्दुत्विषा कीर्त्या कलेः पीडाञ्चकार यः । ४५

एकपादाकृतिर्धर्म्मः समस्तैर्वोज्झितो नृपैः । शुद्धश्लोककृता येन पादैः संयोजितस्त्रिभिः ।

यं क्षमाविक्रममुखाः परस्परविरोधिनः । सिषेविरे गुणास्तुल्यं दिव्योद्यानमिवर्त्तवः ।

स्थाने स्थाने यदीया श्रीस्तृप्यमाप्याययन्त्यभूत् । अमानुष्यानकुल्येव निखिलाननुजीविनः ।

दोषांस्त्यक्तान्यभूपेषु यं शुद्धा श्रीरशिश्रियत् । मार्गाद्रिक्षोभकालुष्यं त्यक्त्वा सिन्धुरिवार्णवं ।
कार्य्यज्ञो यो गतस्पर्द्धं यत्फलीभूतविग्रधीः । परं समाचरन् स्तुत्यं स्तूयमानस्त्रपां दधे । ५०
व्यनीयत नयोऽमात्यैर्व्विनयं तान् स्वशिक्षयत् । वज्रं न भिद्यते कैश्चिच्छिनत्त्यन्यान् मणींस्तु तत् ।
यस्य धर्म्मभयादासीत् संत्याज्यो धर्म्मसंशये । निजोऽपि पक्षः कुलिशत्रासादिव गरुत्मता ।
न्यायं दर्शयता वर्त्म तेन राज्ञा प्रवर्त्तिताः । स्थितयो वीतसन्देहा भास्वतेव दिनक्रियाः ।
नियन्त्रिता यन्नृपतिसद्गुणोदीरणादियं । अतिप्रसङ्गभङ्गात्तन्नेयत्तावाप्तितः पुनः ।
तस्य त्रिभुवनस्वामिप्रासादारम्भकर्म्मणि । चर्म्मकृत् कोऽपि न प्रादात् कुटीं चेत्रोपयोगिनीं । ५५
अस्वत्प्रतिश्रुतार्थानां नव कर्म्माधिकारिणां । नैसर्गिकपदयत्तः स्वचपातं न चक्षमे ।
विज्ञापितोऽथ तैरेत्य तमर्थं पृथिवीपतिः । तानेव सागसो मेने चर्म्मकारं न तं पुनः ।
सोऽभ्यधात्तान् धिगेतेषामप्रेक्षापूर्व्वकारितां । प्रागेव यैरपृष्ट्वा तं प्रविष्टं नवकर्म्मणि ।
नियम्यतां विनिर्म्माणं यद्वान्यत्र विधीयतां । परभूम्यपहारेण सुकृतं कः कलङ्कयेत् ।
ये द्रष्टारः सदसतां ते धर्म्मविगुणाः क्रियाः । वयमेव विदध्मश्चेद्यातु न्यायेन कोऽधुना । ६०
इत्युक्तवति भूपाले प्रेषितो मन्त्रिपर्षदा । पार्श्वात् पादूकृतस्तस्य दूतः प्राप्तो व्यजिज्ञपत् ।
इच्छति स्वामिनं द्रष्टुं स च ब्रूते न चेन्मम । युक्तः प्रवेश आस्थाने वाह्याल्यावसरेऽस्तु तत् ।
अन्येद्युरथ भूपेन स वहिर्दत्तदर्शनः । पुण्यकर्म्मणि नो विघ्नः किं त्वमेवेत्यपृच्छ्यत ।
प्रतिभाति गृहं तच्चेद्रम्यं तव ततोऽधिकं । तदर्थ्यतां धनं वापि भूर्य्येवं चाभ्यधीयत ।
तूष्णीं स्थितं ततो भूपं चर्म्मकारो व्यजिज्ञपत् । दन्तांशुसूत्रैस्तत्सत्त्वमानं ज्ञातुमिवोद्यतः । ६५
राजन् विज्ञाप्यते कश्चिदस्माभिर्यथाशयं । न स्थेयमवलिप्तेन तच्च द्रष्टा सता त्वया ।
नाहमूनः शुनो नास्मि काकुत्स्थात् पार्थिवः पृथुः । चुम्बन्तीवाद्य तत्सभ्याः संलापेऽस्मिन् किमावयोः ।
जातस्य जन्तोः संसारे भङ्गुरः कायकञ्चुकः । अहन्ताममताख्याभ्यां शङ्कुभ्यामेव बध्यते ।
कङ्कणाङ्गदहारादिशोभिनो भवतां यथा । निष्किञ्चनानामस्माकं स्वदेहेऽहंक्रिया तथा ।
देवस्य राजधान्येषा यादृशी सौम्यहासिनी । कुटीघटमुखानद्धतमोरिस्तादृशी मम । ७०
आजन्मना साक्षिणीयं मातेव सुखदुःखयोः । मठिका लोप्यमानाद्य नेक्षितुं शक्यते मया ।
नृणां यद्वेश्महरणे दुःखमाख्यातुमीश्वरः । तद्विमानच्युतोऽमर्त्यो राज्यभ्रष्टोऽथ पार्थिवः ।
एवमप्येत्य मद्वेश्म याचेद्देव न याच्यते । सदाचारानुरोधेन दातुं तदुचितं मम ।
इति तेनोत्तरे दत्ते भूभृद्गत्वा तदास्पदं । कुटीं जग्राह वित्तेन नाभिमानः शुभार्थिनां ।
अवोचच्चर्म्मकारस्तं तत्र सव्यञ्जिताञ्जलिः । राजन् धर्म्मार्थानुरोधेन परवत्ता तवोचिता । ७५
अविरोधेन धर्म्मेण पाण्डुसूनोः पुरा यथा । धार्म्मिकत्वं तथा तेऽद्य मया स्पृश्येन वीक्षितं ।
स्वस्ति तुभ्यं चिरं स्थेया धर्म्म्या वृत्तान्तपद्धतीः । दर्शयन्नीदृशीः शुद्धाः श्रद्धेया धर्म्मचारिणो ।
एवं निष्कल्मषाचारः स चक्रे पावनीं भुवं । राजा त्रिभुवनस्वामिकेशवस्य प्रतिष्ठया ।

अन्यैः प्रकाशदेव्याख्या प्रकाशाकाशकान्तिभिः । प्रकाशिका विहारस्य तत्पत्नी कारयित्र्यभूत् । ८०
गुर्वर्म्मिहिरदत्ताख्यस्तस्योदात्तगुणोऽभवत् । विश्वम्भरस्य गम्भीरस्वामिनाम्नो विधायकः ।
सर्व्वाधिकरणैश्वर्य्याच्छेत्ता छलितकाभिधः । नगराधिकृतस्तस्य छलितस्वामिनं व्यधात् ।
कदाचन सभासीनं पृष्टा धर्म्माधिकारिभिः । प्रायोपविष्टा राजानं ब्राह्मणी काचिदब्रवीत् ।
त्वयि प्रशासति महीमहो गर्हानिवर्हणे । सुखसुप्तस्य मे पत्युर्हतं केनापि जीवितं ।
एषैव महती लज्जा सदाचारस्य भूपतेः । यदकालभवो मृत्युस्तस्य संस्पृशति प्रजाः ८५
कलिकालबलात्तेषस्त्वादृशैरपि दृश्यते । पापात् पापतरेऽमुष्मिन्दोषे कथमुदास्यते ।
चिन्तयन्त्यपि नावैमि भर्त्तुः कञ्चिद्विरोधिनं । निर्दोषस्य हि तस्यासन् सर्व्वतः शीतला दिशः ।
अनसूयो निरुत्सेकः प्रियवाग्गुणवत्सलः । पूर्व्वाभिभाषी निर्लोभो न विद्वेषो हि कस्यचित् ।
तस्य तुल्यवया बाल्यात् प्रभृत्यध्ययने ऽश्रमः । मात्रिकस्वामिवास्तव्यो विप्रः शक्त्याऽभिचारवित् ।
गुणदारिद्र्यनिर्निद्रैः क्षुद्रैः कौशलशालिनां । प्रसिद्धिस्पर्द्धया बन्ध्यैर्धार्ष्ट्यन्तेऽसूययासवः । ९०
नापुंश्चलीयो दुःशीलो नाद्रोहो नित्यशङ्कितः । नावाचालो मृषाभाषी नाकायस्थः कृतघ्नधीः ।
नादाहग्टहजो लुब्धो नानीर्ष्यो नित्यदुःखितः । नास्त्रीजितः सर्व्वहास्यो नाद्रुहः खिन्नभाषितः ।
नानन्यजः पितृदोषी नारागी निरपत्रपः । नाक्षुद्रविद्यः पापीयानिति भूतार्थसंग्रहः ।
तिलकं । इत्युक्तवत्यां ब्राह्मण्यां तच्छङ्कावसतिं द्विजं । आनीय परिशुद्ध्यस्तेत्यभ्यधाद्वसुधाधिपः ।
भूयो ब्राह्मण्यवादीत्तं ख्यातः ख्यातोदविद्यया । निःसम्भ्रमः स्तम्भयितुं देव दिव्यक्रियामयं । ९५
न्यायदक्षस्तदावादीत्ततस्तं मेदिनीपतिः । अदृष्टदोषे किं कुर्म्मो वयमत्राधिकारिणः ।
नान्यस्मिन्नपि दण्डस्य प्रसङ्गो निश्चितागसि । किं पुनर्ब्राह्मणोदण्ड्यो यो दोषेऽपि बधं विना ।
उक्त्वेति विरते तस्मिन् द्विजजायाब्रवीत् पुनः । चतस्रः क्षणदाः क्षोणीराजन्नपि न शस्यते ।
नाश्वगा परिणेतारं हन्तुः प्रतिचिकीर्षया । तत्राविहितदण्डेऽस्मिंस्त्यजाम्यनशनैरसून् ।
तथा स्थितायां ब्राह्मण्यां कृतप्रायोपवेशनः । स्वयं त्रिभुवनस्वामिपादानुद्दिश्य सोऽभवत् । १००
चिराच्चोपोषितं तत्र राजानं रजनीक्षये । स्वप्ने स्वप्नोत्तमोऽवोचत् सत्योक्तिं सत्यवाहनः ।
ईदृङ्न युज्यते राजन् सत्यस्यान्वेषणं कलौ । निशीथे कस्य सामर्थ्यं कर्त्तुं दिवि विकर्त्तनं ।
भवच्छ्रद्धानुरोधेन सकृदेतत् प्रवर्त्तते । मत्प्रासादाङ्गनेऽमुष्मिन् शालिचूर्णं विकीर्य्यतां ।
प्रदक्षिणं कुर्व्वतोऽस्य त्रिरत्र यदि दृश्यते । ब्रह्महत्यापादमुद्रा पादमुद्रानुयायिनी ।
तदेष बधको भूत्वा सदृशं दण्डमर्हति । रात्रावेष विधिः कार्य्यो दिने पापहृदर्य्यमा । १०५
अथ तत्कारयित्वा स दृष्टदोषे द्विजन्मनि । दण्डं दण्डधरश्चक्रे द्विजत्वाद्बधवर्ज्जितं ।
महीमघोना भर्त्तृघ्ने तस्मिन् विहितशासने । ततो द्विजन्मजाया सा कृताशीरभ्यधादिदं ।
इयत्यवनिभृत्सर्गे गूढपापानुशासनं । कार्त्तवीर्य्यस्य वा दृष्टं तव वा पृथिवीपते ।
दण्डधारे त्वयि क्ष्माप चिरमेतां प्रशासति । को वैरखेदयोः पारमनासाद्यावसीदति ।

इत्थं कृतयुगश्लाघ्यैर्धर्म्यवृत्तान्तवस्तुभिः। स्वल्पोऽपि राज्यकालोऽस्य पर्य्यन्तैः पर्य्यपूर्य्यत। ११०
द्रष्टुर्व्विष्टरपाथोजसंसर्गेण निरर्गलः। निविडं जडिमा जाने व्यधत्त धियि सन्निधिं।
विभक्तवर्णशोभस्य तस्याभावन्यथा कथं। माहेन्द्रस्येव धनुषो विदधे दृष्टनष्टतां।
कारयित्वाभिचारं तं नियहोयस्त्वं द्विजं। तं यशःशेषतामीशं तारापीडोऽनुजोऽनयत्।
दुष्कर्मदुर्भगान् भोक्तुं भोगान् पापगुणोन्नतं। मृद्नन्ति कण्टकान् प्राप्तं करभाइव केतकं।
ततः प्रभृति भूपानां राज्येच्छूनां गुरून् प्रति। दृष्टाः प्रवृत्ता राज्येऽस्मिन्नभिचारादिकाः क्रियाः। ११५
श्रीचन्द्रापीडदेवस्य तच्चरित्रमपश्चिमं। संस्मर्य्यमाणं कुरुते न कस्योत्पुलकं वपुः।
मुमूर्षुर्यत् स लब्ध्वापि तं कृत्याध्यायिनं द्विजं। वराकेऽन्यप्रयुक्तेऽस्मिन् को दोष इति नावधीत्।
विस्मृतः स कृतज्ञामृतपंक्तिमध्येऽद्य वेधसा। दत्त्वा कार्य्यपदं न्यूनं न्यस्तः कलिनृपावलौ।
अष्टौ वर्षान् साष्टमासाननुगृह्येति मेदिनीं। प्रविवेश वशी स्वर्गमनिशस्य सतां मनः।
भ्रातृद्रोहास्त्रसुहृदा प्रतापेन भयावहः। उवाह तारापीडः स चण्डः क्ष्मामण्डलं ततः। १२०
पूर्णपात्रप्रतिभटं द्विषां लुण्ठयता यशः। शिशोः प्रतापस्योत्पत्तौ कबन्धा येन नर्त्तिताः।
तस्यातिदुष्टदिष्टस्य लक्ष्मीर्दीप्तापि सर्व्वतः। अभूदुद्वेगजननी श्मशानाग्नेरिव द्युतिः।
मन्त्रैः प्रभावसान्निध्यं देवानां क्रियते द्विजैः। मत्वेति देवद्वेषी स द्विजानां दण्डमत्यजत्।
मासं षड्भिर्दिनैरूनं चतस्रश्च समा भुवि। स प्राभवद्गुरुद्रोहप्ररोहत्सुकृतात्ययः।
यथारूढाभिचारेण विहितायुःक्षयो द्विजैः। स भ्रातृहत्सदृशीं शान्तिं प्रपेदे न पुनर्गतिं।
योऽयं परापकरणाय सृजत्युपायं तेनैव तस्य नियमेन भवेद्विनाशः। १२५
धूमं प्रसौति नयनान्धकरञ्च योऽग्निर्भूत्वाम्बुदः स शमयेत् सलिलैस्तमेव।
राजा श्रीललितादित्यः सार्व्वभौमस्ततोऽभवत्। प्रादेशिकेश्वरस्रष्टुर्व्विधेर्बुद्धेरगोचरः।
प्रतापांशुच्छटाकूटैः पटवाससधर्म्मभिः। जम्बुद्वीपद्विजेन्द्रस्य येनातन्यत मण्डनं।
नयाञ्जलिषु बद्धेषु राजभिर्व्विजयोद्यमे। पार्थिवः पृथुविक्रान्तिर्युधि क्रोधं मुमोच यः।
विनिःसरज्जनतया भयाद्गर्भानिवामुचन्। दिशां वसतयो यस्य निशम्यास्कन्ददुन्दुभिं। १३०
विलोलतिलकान्त्यैः सनेत्राम्भोभिराननैः। निवापाञ्जलिदानानि द्विषां नारीरकारयत्।
क्षितिं प्रदक्षिणयतो रवेरिव महीपतेः। जिगीषोः प्रायशस्तस्य यात्रास्वेव वयो ययौ।
करं पूर्व्वदिशो गृह्णन् प्रतापानलसन्निधौ। अन्तर्व्वेद्यां महाराजः स्वकीर्त्त्युष्णीषभृद्बभौ।
कन्यानां यत्र कुब्जत्वं व्यधाद्गाधिपुरे मरुत्। तत्रैव शंसनीयः स पुमांश्चक्रे भयस्पृशां।
यशोवर्म्माद्रिवाहिन्याः क्षणात् कुर्व्वन् विशोषणं। नृपतिर्ललितादित्यः प्रतापादित्यतां ययौ। १३५
मतिमान् कान्यकुब्जेन्द्रः प्रत्यभात् कृत्यवेदिनां। दीप्तं यल्ललितादित्यं पृष्ठं दत्त्वा न्यषेवत।
तत्सहायास्ततोऽप्यासन्मन्त्रिकामर्मभिमानिनः। कुसुमाकरतोऽप्युच्चैः सुरभिश्चन्दनानिलः।
श्रीयशोवर्म्मणः सन्धौ सान्धिविग्रहिकोऽनयत्। न यं नियममालेखे मित्रशंसास्य चक्षमे।
सोऽभूत् सन्धिर्यशोवर्म्मललितादित्ययोरिति। लिखितेनादिनिर्देशादनर्थत्वं विदन् प्रभोः।

॥ युगलकं ॥ सुदीर्घविग्रहायासैः सेनानीभिरसूचितां । योऽचिन्त्यापेक्षितां तस्य क्षितिभृन्नाक्रमन्यत । १४०
प्रीतः पञ्चमहाशब्दभाजनं तं व्यधत्त सः । यशोवर्म्मनृपं तञ्च समूलमुदपाटयत् ।
अष्टादशानामुपरि प्राक्सिद्धानां तदुद्भवैः । कर्म्मस्थानैः स्थितिः प्राप्ता ततः प्रभृति पञ्चभिः ।
महाप्रतीहारपीडा स महासन्धिविग्रहः । महाश्वशालापि महाभाण्डागारश्च पञ्चमः ।
महासाधनभागश्चेत्येता यैरभिधाः श्रिताः । शाहिमुख्या येऽध्यभवन्नध्यक्षाः पृथिवीभुजः ।
कविर्व्वाक्पतिराजश्रीभवभूत्यादिसेवितः । जितो ययौ यशोवर्म्मा तद्गुणस्तुतिवन्दितां । १४५
किमन्यत् कान्यकुब्जोर्व्वी यमुनापारतोऽस्य सा । अभूदाकालिकातीरं गृहप्राङ्गणवद्वशे ।
यशोवर्म्माणमुत्खाय हिमाद्रिमिव जाह्नवी । सुखेन प्राविशत्तस्य वाहिनी पूर्व्वसागरं ।
पश्यद्भिर्जन्मवसुधां सेर्ष्याधोरणभर्त्सितैः । तस्मात्तङ्गैः कलिङ्गेभ्यः कथञ्चित् प्रस्थितं पथि ।
आकृष्टलक्ष्मीपर्य्यङ्कादन्तिसंख्यादिवागताः । अभिसमयंस्तं निःशेषाद्दन्तिनो गौडमण्डलात् ।
कटकेभघटाहस्तहतवीचिकचग्रहः । बहुश्यतायशैस्तस्य गृहीतः पूर्व्ववारिधिः । १५०
वनराजिश्यामलेन दिशं वेलावनाङ्कितां । स प्रतस्थेऽब्धितीरेण तत्कृपाणेन तु द्विषः ।
तस्योर्द्ध्वजूटाः कर्णाटाः कृतप्रणतयोऽनयन् । सुवर्णकेतकीस्थल्या प्रतापमवतंसतां ।
तस्मिन् प्रसङ्गे रट्टाख्या कर्णाटी चटुलेक्षणा । अपासीन्नृपतिर्भुक्त्वा पृथुश्रीर्दक्षिणापथं ।
विन्ध्याद्रिमार्गाः पर्य्याप्ता निष्पर्य्यन्तप्रभावया । दुर्गयेव तया देव्या कृता निहतकण्टकाः ।
ललितादित्यपादाब्जनखदर्पणमण्डले । स्वमूर्त्तिं वीक्ष्य संक्रान्तां प्रणता सापि पिप्रिये । १५५
तालीतरुतलाचान्तनारिकेलरसोर्म्मयः । कावेरीतीरपवनैस्तद्योधाः क्लममत्यजन् ।
चन्दनाद्रेस्तदास्कन्दत्रासभ्रश्यद्दहिकुलात् । श्रीखण्डद्रुमदोःषण्डा मण्डलाग्रा इवापतन् ।
उत्तराश्मस्विव पदं क्षिप्ता द्वीपेष्वविघ्नतः । स कुल्याया इवाम्भोधेः क्षिप्रं चक्रे गतागतं ।
ततोऽब्धिवीचिनिर्घोषैरुद्गीतजयमङ्गलः । प्रतस्थे पश्चिमामाशां जिगीषूणामपश्चिमः ।
आक्रम्य क्रमुकान् सप्त कोङ्कणान् सप्त तापयन् । तुरगानिव तिग्मांशुः प्रतापस्तस्य पप्रथे । १६०
पश्चिमाब्धेर्मरुच्छस्तवीचेराविर्भवन्त्यभूत् । द्वारका तस्य सैन्यानां प्रवेशोत्सुक्यदायिनी ।
विन्ध्याद्रिस्थलचलुलधातुरेणुहृताम्बरः । प्रत्यभात्यक्तमर्य्यादः कोपताम्र इवोन्नमन् ।
विश्रान्ता दशनश्रेण्यस्तस्यावन्तिषु दन्तिनां । महाकालकिरीटेन्दुज्योत्स्नया खण्डिताः परं ।
सर्व्वतो दिशमालोक्य जितप्रायांस्ततो नृपान् । स प्राविशत् सुविस्तीर्णमपथेनोत्तरापथं ।
राजभिस्तस्य तत्रोग्रैः संग्रामोऽभूत् पदे पदे । कुलाद्रिभिरिवेन्द्रस्य पक्षच्छेदोद्यमस्पृशः । १६५
काम्बोजानां वाजिशाला जायन्ते स्म हयोज्झिताः । ध्वान्तच्छलात्तदिरहैर्निरुद्धा महिषैरिव ।
भूःखाराः शिखरश्रेणीर्यान्तः सन्त्यज्य वाजिनः । कुण्ठभावन्तदुत्कण्ठां निन्युर्दृष्ट्वा हयाननां ।
त्रीन् वारान् समरे जित्वा जितं मेने स दुस्थनिं । सकृज्जयमरेर्व्वीरा मन्यन्ते हि घुणाक्षरं ।
चिन्ता न दृष्टा भौट्टानां वक्त्रे प्रकृतिपाण्डुरे । वनौकसामिव क्रोधाः स्वभावकपिले मुखे ।

तस्य प्रतापोद्दण्डां न सेहेऽनारतं मधु। हरीणामौषधिज्योतिः प्रत्यूषोऽर्क इवोदितः। १७०
कस्तूरीमृगसंस्पर्शी धूतकुङ्कुमकेसरः। सैन्यसीमन्तिनीस्तस्य सस्वजे कारोत्तरानिलः।
शून्ये प्राग्ज्योतिषपुरे निर्जिहानं ददर्श सः। धूपधूमं वनमुष्टात् कालागुरुवनात् परं।
मरीचिकावितीर्णार्णोविभ्रमे वालुकाम्बुधौ। तद्गजेन्द्रा महाग्राहसमूहसमतां ययुः।
तथोधाम् विगलद्धैर्य्याम् स्त्रीराज्ये स्त्रीजनोऽकरोत्। तुङ्गौ स्तनौ पुरस्कृत्य नतु कुम्भौ कवाटिनां।
स्त्रीराज्यदेव्यास्तस्याग्रे वीक्ष्य कम्पादिविक्रियां। संभाषमभिलाषं वा निश्चिकाय न कश्चन। १७५
उत्तराकुरवोऽविक्षंस्तस्माद्भयात्स्वपादपान्। उरगान्तकसंत्रासाद्बिलानीव महोरगाः।
जयार्जितधनः सोऽथ प्रविवेश स्वमण्डलं। भिन्नेभमौक्तिकापूर्णपाणिः सिंह इवाचलं।
जालन्धरं लोहरञ्च मण्डलानीतराणि च। प्रसादीकृत्य विदधे राजत्वं सोऽनुजीविनां।
पराजयव्यञ्जनार्थं नानालिङ्गानि पार्थिवाः। भयेण ग्राहितास्तेन वहन्त्यद्यापि निर्मदाः।
बन्धमुद्राभिधानाय पश्चाद्बाहू तदाज्ञया। तुरुष्का दधते व्यक्तं मूर्द्धानं चार्द्धमुण्डितं। १८०
क्षितिभृद्दाक्षिणात्यानां तिर्य्यक्त्वख्यापनाय सः। पुच्छं महीतलस्पर्शि चक्रे कौपीनवाससि।
न तत्पुरं न स ग्रामो न सा सिन्धुर्न सोऽर्णवः। न स द्वीपोऽस्ति यत्रासौ प्रतिष्ठां न विनिर्म्ममे।
क्वचिच्चेष्टासमुचितं क्वचित् स समयानुगं। साङ्केत्येन प्रतिष्ठानां स नाम्नो नाम सन्दधे।
सुनिश्चितपुरं चक्रे दिग्जये कृतनिश्चयः। सगर्वो दर्पितपुरं कृतवान् कृतकेशवं।
फलं गृह्णन् फलपुरं पर्णोत्सम्पूर्णमाददत्। क्रीडारामविहारञ्च क्रीडन् राजा विनिर्म्ममे। १८५
एकमूर्द्धं नयन् रश्मिमधः कर्षंस्तथापरं। बुद्धा व्यधान्निरालम्बं स्त्रीराज्ये नृहरिञ्च सः।
दिगन्तरस्थे भूपाले तस्मिंस्तत्कर्म्मकृत् किल। पुरं विधाय तन्नाम्ना तत्कोपफलमन्वभूत्।
ललिताख्ये पुरे तस्मिन्नादित्याय स भूपतिः। सग्रामां कान्यकुब्जोर्व्वीमभिमानोर्ज्जितो ददौ।
तेन हुष्कपुरे श्रीमान् मुक्तस्वामी व्यधीयत। बृहद्विहारो भूपेन सस्तूपश्च महात्मना।
एकां कोटिं गृहीत्वा स दिग्जयाय विनिर्गतः। भूतेशाय ददौ शुद्ध्यै कोटीरेकादशागतः। १९०
स तत्र ज्येष्ठरुद्रस्य शिलाप्रासादयोजनं। भूमिग्रामप्रदानञ्च विदधे वसुधाधिपः।
चक्रे चक्रधरे तेन वितस्ताम्भःप्रतारणं। विनिर्म्मायारघट्टालीस्तांस्तान् ग्रामान् प्रयच्छता।
सोऽखण्डिताश्मप्राकारं प्रासादान्तर्व्यधत्त च। मार्त्तण्डस्याद्भुतं दाता द्राक्षास्फीतञ्च पत्तनं।
लोकपुण्ये पुरं कृत्वा नानोपकरणावलीं। प्रतिपादितवान् जिष्णुर्ग्रामैः साकं स विष्णवे।
ततः परं परीहासशीलो भूलोकवासवः। विहसद्वासवावासं परिहासपुरं व्यधात्। १९५
विरेजे राजतो देवः श्रीपरीहासकेशवः। स्थितो रत्नाकरस्थोऽपि मुक्ताज्योतिर्भरैरिव।
नाभीनलिनकिञ्जल्कपुञ्जेनेवानुरञ्जितः। चचकात् काञ्चनमयः श्रीमुक्ताकेशवो हरिः।
महावराहः शुशुभे काञ्चनं कवचं दधत्। पाताले तिमिरं हन्तुं वहन्निव रविप्रभाः।
गोवर्द्धनधरो देवो राजतस्तेन कारितः। यो गोकुलपयःपूरैरिव पाण्डुरतां दधे।

चतुष्पञ्चाशतं हस्तानारोपयित्वा महाशिलां । ध्वजाग्रे दितिजारातेस्तार्क्ष्यस्तेन निवेशितः । २००
चक्रे बृहच्चतुःशाला बृहच्चैत्यबृहज्जिनैः । राजा राजविहारं स विरजाः सततोर्जितं ।
तोलकानां सहस्राणि चतुर्भिरधिकानि सः । अशीतिं निदधे हेम्नो मुक्ताकेशवविग्रहे
तावन्त्येव सहस्राणि पलानां राजतस्य च । सन्धाय शुद्धधीश्चक्रे श्रीपरीहासकेशवं ।
रीतिप्रस्थसहस्रैस्तु तेन तावद्भिरेव सः । व्योमव्यापिवपुः श्रीमान् बृहद्बुद्धो व्यधीयत ।
चतुःशालां च चैत्यञ्च तावता तावता व्यधात् । धनेनैवेति तस्यासन् पञ्च निर्म्मितयः समाः ।
राजतान् क्वापि सौवर्णान् क्वापि देवान् विनिर्ममे । पार्श्वेषु मुख्यदेवानां पार्थिवो धनदोपमः । २०५
कियन्ति तत्र रत्नानि ग्रामान् परिकरं तथा । स प्रादादिति कः शक्तः परिच्छेत्तुमियत्तया ।
अवरोधैरमात्यैश्च सेवकैश्च नरेश्वरैः । तत्र प्रतिष्ठाः शतशो विहिता भुवनाद्भुताः ।
राज्ञी कमलवत्यस्य कमलाहट्टकारिणी । राजतं विपुलाकारं कमलाकेशवं व्यधात् ।
अमात्योमित्रशर्म्मापि चक्रे मित्रेश्वरं हरं । श्रीकय्यस्वामिनं चक्रे लाटः कय्याभिधो नृपः ।
श्रीमान् कय्यविहारोऽपि तेनैव विदधेऽद्भुतः । भिक्षुः सर्व्वज्ञमित्रोऽभूत् क्रमाद्यत्र जिनोपमः । २१०
तुःखारश्चङ्कुणश्चक्रे स चङ्कुणविहारकृत् । भूपचित्तोन्नतं स्तूपं जिनान् हेममयांस्तथा ।
ईशानदेव्या तत्पत्न्या खाताम्बु प्रतिपादितं । सुधारसमिव स्वच्छमारोग्याधायि रोगिणां ।
ललितादित्यभूभर्त्तुर्व्वल्लभा चक्रमर्द्दिका । सहस्राण्यौकसां सप्त तत्र चक्रपुरं व्यधात् ।
आचार्य्यो भप्पटो नाम विदधे भप्पटेश्वरं । अन्येऽपि कर्कटेशाद्या बहवो बहुभिः कृताः ।
अधिष्ठानान्तरेऽप्यत्र चङ्कुणेनाग्र्यमन्त्रिणा । स चैत्यः सुकृतोदारो विहारो निरमीयत । २१५
भिषगीशानचन्द्राख्यः श्यालश्चङ्कुणमन्त्रिणः । विहारमकरोल्लब्धा तक्षकानुग्रहाच्छ्रियं ।
एवं हेममयीमुर्व्वीं स कुर्व्वन्नुर्व्वरापतिः । गुणैरौदार्य्यशौर्य्याद्यैर्म्मघवानमलङ्घयत् ।
हेलयापि विनिर्य्यान्ती वक्त्राद्वसुमतीपतेः । न कदाचन तस्याज्ञा देवैरप्युदलङ्घ्यत ।
तथाहि पूर्व्वपाथोधेस्तटे सकटको वसन् । आनीयन्तां कपित्थानीत्यादिदेश स जातुचित् ।
किङ्कर्त्तव्यतयान्धेषु पुरोगेषु स्थितेष्वथ । उपानयत् कपित्थानि दिव्यः कोऽपि पुमान् पुरः । २२०
अग्रादुपायनं गृह्णन् कृतसंज्ञो धुना प्रभोः । कस्य त्वमिति पप्रच्छ प्रतीहारः प्रसृत्य तं ।
सोऽभ्यधात्त्वं कपित्थानि दत्वा राज्ञः प्रियावहं । प्रहितोऽस्य महेन्द्रेण नन्दनोद्यानपालकः ।
रहोमहेन्द्रसंदिष्टं वक्तव्यं किञ्चिदस्ति मे । इति श्रुत्वा प्रतीहारः सभां चक्रे स निर्ज्जनां ।
ततो दिव्यः पुमानूचे शक्रस्त्वां वक्ति भूपते । वक्तव्यं पथ्यमप्येतत् सौजन्यान्निष्ठुरं वचः ।
तुर्य्ये युगेऽपि भूपाल दिक्पाला अपि ते वयं । बिभ्मो यत् प्रणत्याज्ञां श्रूयतां तत्र कारणं । २२५
पुरा ग्रामे गृहस्थस्य कस्यचित् पृथुसम्पदः । जन्मान्तरे कर्म्मकरो हालिकोऽभूद्भवान् किल ।
एकदा तस्य ते ग्रीष्मे वाहयित्वा महावृषान् । श्रान्तस्य निर्ज्जलेऽरण्ये क्षीणप्रायमभूदहः ।
ततः स्वामिगृहात् क्षुत्तृट्खिन्नस्य भवतोऽन्तिकं । वारिकुम्भीमपूपञ्च गृहीत्वा कश्चिदाययौ ।

निर्धौतपाणिपादस्त्वं भोक्तुं संप्रस्तुतस्ततः। विप्रं कण्ठगतप्राणमपश्यः पुरतोऽतिथिं।
स त्वामवोचन्मा भुङ्क्ष्व दुर्भिक्षोपहतस्य मे। कण्ठे यियासवः प्राणा वर्त्तन्ते भोजनं विना। २३०
वारितः पार्श्वगेनापि तस्मै त्वं प्रीतिपूर्व्वकं। पूपार्द्धं वारिकुम्भीञ्च प्रादाः प्रियमुदीरयन्।
पात्रे प्रसन्नचित्तस्य काले दानेन तेन ते। अखण्डितानामाज्ञानां शतमासीन्निविष्टपे।
तेन वारिप्रदानेन वाञ्छामात्रेऽपि दर्शिते। प्रादुर्भवन्ति सुस्वादा नद्यो मरुपथेष्वपि।
सक्त्वेवप्रतिपादितः प्रियवचोवल्गुलवालाबलिनिर्दोषेण मनःप्रसादपयसा निष्पन्नसेकक्रियः।
दातुस्तत्तदभीप्सितं किल फलन् कालेऽतिबालोऽप्यसौ राजन् दानमहीरुहो विजयते कल्पद्रुमादीनपि।
अल्पात्रशेषास्तास्तस्य सन्त्याज्ञास्तव भूपते। वर्षालाभं जपयतो यत्र तत्राविचारतः। २३५
अपि चेतसि भूपाल सुलभं महतः सतः। कस्मादिच्छारशून्यत्वं तवापि हृदि रोहति।
दिनानि कतिचिद्यानि कश्मीरेषु घनागमे। जायन्ते तानि पूर्व्वाब्धौ फलानि शिशिरे कुतः।
विगाहसे दिशं यां यां तत्र तत्रैव तत्पते। त्वदाज्ञाग्रहणे यत्नः पूर्व्वदानप्रभावतः।
आशां श्रितस्य माहेन्द्रीमाज्ञा स्वल्पापि तेऽधुना। गृहीता कथमप्येषा शक्रेणाभग्नशक्तिना।
विना प्रयोजनं मुख्यं तस्मादाज्ञा त्वया क्वचित्। नैवमेव पुनर्देया विरलाः सन्ति ता यतः। २४०
इत्युक्त्वान्तर्हिते तस्मिन् भूपालो विपुलाशयः। चिन्तयन् दानमाहात्म्यं परं विस्मयमाययौ।
ततः प्रभृति तादृग्योग्यार्थप्राप्तिलालसः। परिहासपुरे चक्रे स्थिरां गुर्व्वीं सपर्य्यिणीं।
सहस्रभक्तमित्येवंप्रख्यातायां सदक्षिणं। लक्षमेकोत्तरं भक्तपात्राणां यत्र दीयते।
अभिप्रायेण तेनैव पत्तनान्यपरेषु सः। चक्रे यद्येषु तृष्णार्त्तः कश्चिज्जातु पिबेदपः।
सञ्जग्राह स देशेभ्यस्तांस्तानन्तरविज्ञनान्। विकचान् सुमनस्तोमान् पादपेभ्य इवानिलः। २४५
तेन कङ्कणवर्षस्य रससिद्धस्य सोदरः। चङ्कुणो नाम भुःखारदेशानीतो गुणोत्तरः।
सरसेन समातन्वन् कोशे बहुसुवर्णतां। पद्माकर इवाजस्य भूभृतोऽभूच्छुभावहः।
रुद्धः पञ्चनदे जातु दुस्तरैः सिन्धुसङ्गमैः। तटे स्तम्भितसैन्योऽभूद्राजा चिन्तापरः क्षणं।
ततोऽम्बुतरणोपायं तस्मिन् पृच्छति मन्त्रिणः। अगाधेऽम्भसि रोधस्थश्चङ्कुणोमणिमक्षिपत्।
तत्प्रभावाद्द्विधाभूतं सरिन्नीरं ससैनिकः। उत्तीर्णो नृपतिस्तूर्णं परं पारं समासदत्। २५०
मणिमन्येन मणिना चङ्कुणोऽप्याचकर्ष तं। सलिलं प्रागवस्थञ्च क्षणेन सरितामभूत्।
परिभाव्याद्भुतं तत्र प्रशंसामुखरानमः। प्रणयाच्चङ्कुणं राजा मणियुग्ममयाचत।
स तमाह स्म विहसन् कर्म्मैतौ कुरुतो मणी। योग्यौ मत्पाणिगावेव किं स्यात् स्वीकरणेन वः।
सामान्येनैव लभते सोत्कर्षं वस्तु सम्प्रथां। महत्सु तस्य का शोभा विविधोत्कृष्टवस्तुषु।
प्रस्यन्दनं शशिमणेर्गणयन्ति तावद्यावन्न् स्थिता जलनिधेः पुलिनैकदेशे।
स स्वीक्रियेत यदि तेन ततस्तदास्य स्यन्दैः स्फुरन्नपि न तत्सलिले विभाव्यः। २५५
इत्युक्त्वा विरते तस्मिन् राजा सस्मितमब्रवीत्। संभावयसि किं रत्नमाभ्यामभ्यधिकं मम।

ततोऽधिकतरं यदा कोषोत्थं मम पश्यसि। तदादाय प्रयच्छेदं निष्क्रयेण मणिद्वयं।
ततो महान् प्रसादोऽयमित्युक्त्वा चङ्कुणोऽब्रवीत्। स्वायत्ते स्वामिनो रत्ने मह्यमिष्टं प्रदीयतां।
गजस्कन्धेऽधिरोप्यैतन्मागधेभ्यो यदाहृतं। दत्वा सुगतविम्बं तज्जनोऽयमनुगृह्यतां।
सलिलोत्तरणोपायो मणी देवेन गृह्यतां। संसारोत्तरणोपायः सुगतो मह्यमर्प्यतां। १६०
इति तेनार्थितो युक्त्या जिनविम्बं ददौ नृपः। वाग्मिनां कस्य सामर्थ्यं परिपन्थयितुं वचः।
स्वविहारेऽथ भगवान् स तेन विनिवेशितः। कपिशाभिः सकाशाय इव यो भाति कान्तिभिः।
दृश्यतेऽद्यापि कटकैरायासैः परिवेष्टितः। गजस्कन्धनिबद्धस्य सूचको यस्य विष्टरः।
अभिप्रायानुसारेण प्रकटीकुरुते प्रियं। अहो महाप्रभावाणां भूपतीनां वसुन्धरा।
अशिक्षितं कदाचित्स स्वयं दमयितुं हयं। निनायारण्यमेकाकी हयविद्याविशारदः। १६५
दूरान्निर्मानुषे तत्र ललनां ललिताकृतिं। एकां ददर्श गायन्तीं नृत्यन्तीमपरामपि।
क्षणाच्च ते समापय्य गीतनृत्ये मृगीदृशौ। प्रणम्य किञ्चिद्गच्छन्त्यावपश्यद्दमयन् हयं।
तुरगं तं समारुह्य तत्रागच्छद्दिने दिने। दृष्ट्वा तथैव ते कान्ते गत्वापृच्छत् सविस्मयः।
तमूचतुस्ते नर्त्तक्यावावां देवगृहाश्रिते। यः शूर वर्त्तमानोऽयं ग्रामस्तत्रावयोर्गृहं।
इहत्यजीवनभुजां मातॄणामुपदेशतः। अस्मत्कुलेन नियतं नृत्यमत्र विधीयते। १७०
रूढिः परम्परायाता सेयमस्मद्गृहे स्थिता। आवामन्योऽपि वा नात्र निमित्तं ज्ञातुमीश्वरः।
एवं वचस्तयोः श्रुत्वा नृपोऽन्येद्युः सविस्मयः। तदुक्तां मेदिनीं कृत्स्नां कारुभिर्निरदारयत्।
दूरं निर्खातमृद्भिस्तैरथाद्राचीन्निवेदितं। नृपतिः पिहितद्वारं जीर्णदेवगृहद्वयं।
उद्घाटितारैर्वर्णैः पीठोत्कीर्णौ निवेदितौ। अपश्यत् केशवौ तत्र रामलक्ष्मणनिर्मितौ।
परिहासहरेः पार्श्वे पृथक् कृत्वा शिलागृहं। स रामस्वामिनः श्रीमान् प्रतिष्ठाकर्म्म निर्म्ममे। १७५
देवोऽपि लक्ष्मणस्वामी तथैवाभ्यर्थ्य पार्थिवं। चङ्कमर्दिकया चङ्केश्वरपार्श्वे निवेशितः।
दिग्जये पुरुषः कश्चिद्दत्तप्रत्ययनिग्रहः। अग्रे न्यक्षिपदात्मानं गजारूढस्य भूभुजः।
तं कृत्तपाणिघ्राणादिश्रवणं शोणितवर्षिणं। त्राणार्थिनं कारुणिकः खेदन्तं पृष्टवान्नृपः।
स तस्मै सिकतासिन्धुसविधस्थस्य भूपतेः। प्रख्यातमूचे सचिवमाख्यातं हितकारिणं।
प्रणतिर्ललितादित्यनृपतेः क्रियतामिति। हितं कथयतः स्वस्य निग्रहश्च ततो नृपात्। १८०
॥ युग्मं ॥ प्रतिजज्ञे स भूपेन ततस्तत्स्वामिनिग्रहः। रूढव्रणोऽगदङ्कारैः स चाकार्य्यत सत्कृतैः।
ततो विहितयात्रं तं स मन्त्री कृतसत्क्रियः। कदाचिदेवमवदद्द्विजेन जगतीभुजं।
एवंविधस्य कायस्य राजन् यत् परिरक्षणं। तत्र वैरविशुद्ध्याशा विडम्बयति मामियं।
वाष्पैर्जलाञ्जलिं दत्वा दुःखाय च सुखाय च। कृतकृत्यो भुवं जह्यादवमानहतानसून्।
अपकृत्याधिकं शत्रोरपकारं जयोचितं। गम्भीरं प्रतिमद्येव निनादं नदतो गिरेः। १८५
इतो मासैस्त्रिभिर्गम्या भूः प्राप्या त्वरितं कथं। यदा वा प्राप्यते वैरी तदा तत्रैव किं वसेत्।

मामाङ्गुलत्रयं पन्थानं तस्मादुपदिशामि ते । गृहीत्वा स जलं गम्यस्त्वमूनां किन्तु निर्जलः ।
तद्भूमिजा बन्धवो मे न वक्ष्यन्ति त्वदागमं । सामात्यान्तःपुरो राजा छद्मना तेन गृह्यते ।
इत्युक्त्वा सोऽकरोत्तस्य प्रवेशं वालुकार्णवे । पक्षे क्षीणे तु कटको निस्तोयः समपद्यत ।
तत्राप्यहानि द्वित्राणि वहन्नेवाभवन्नृपः । तृष्णार्त्तं वीक्ष्य सैन्यञ्च मन्त्रिणं तमभाषत । २९०
उक्तकालाधिका यावद्वासरा गमिताः पथि । मुमूर्षु तृष्णया सैन्यं तदध्वा शिष्यते कियान् ।
ततो विहस्य सोऽवादीज्जिगीषोः शेषमध्वनः । किं पृच्छत्यरिराष्ट्रस्य यमराष्ट्रस्य वा भवान् ।
त्वं हि स्वामिहितायैव समुपेक्ष्य स्वजीवितं । मृत्युवक्त्रं सकटको मया युक्त्या प्रवेशितः ।
नेदं मरुमहीमात्रं भीमोऽयं वालुकार्णवः । नाम्भोऽत्र लभते क्वापि कस्त्राता तेऽद्य भूपते ।
श्रुत्वेति पृतना कृत्स्ना समभूद्दीतवैष्टवा । करकाभ्रंशितफला स्तम्बशेषेव शालिभूः । २९५
सन्त्यक्तजीविताशानां भीरूणां क्रन्दितध्वनिं । भुजमुद्यम्य शमयंस्ततो नृपतिरब्रवीत् ।
अमात्य तव कृत्येन प्रीतः स्वामिहितैषिणः । मरावप्यत्र शीतार्त्ता इव रोमाञ्चिता वयं ।
अभेद्यसारे मयि तु व्यक्तमेवंविधेऽपि ते । प्रयोगः कुण्ठतां यातो लोहं वज्रमणाविव ।
मणिभ्रमाद्वल्लिकणं गृह्णन् दग्धा इवाङ्गुलीः । त्वं मिथ्यावयवाम्भूनानद्य शोचिष्यसि ध्रुवं ।
निदर्शनेव मे पश्य पयः सूतेऽद्य मेदिनी । रसितेनाम्बुवाहस्य रत्नं वैदूर्यभूरिव । ३००
इत्युक्त्वा सोऽम्बु निष्कष्टुं कुन्तेनोर्वीं व्यदारयत् । उज्जिहीर्षुर्वितस्ताम्भः शूलेनेव त्रिलोचनः ।
अथोज्जगाम पाताललक्ष्मीलीलास्मितच्छविः । सरातलात् सरित्साकं सैन्यानां जीविताशया ।
तस्य सेना चराणां सा क्लमं चिच्छेद वाहिनी । कथाव्ययीकृताङ्गस्य मन्त्रिणस्तस्य चेष्टितं ।
लूनाङ्गो मङ्गलाशंसी स मन्त्री विफलश्रमः । स्वस्य भर्त्तुर्विशादो नगरीमन्तकस्ततः ।
राज्ञोऽपि कुटिलाचारो निगृह्य स महीपतिः । निजस्य मन्त्रिणस्तस्य तुल्यावस्थो व्यधीयत । ३०५
यथोपयोगं तेनैव स्थाने स्थाने प्रवर्त्तिताः । अद्यापि कुन्तवाहिन्यः प्रवहन्त्युत्तरापथे ।
सहस्रशः सम्भवन्तोऽप्यपरे भुवनाद्भुताः । अतिप्रसङ्गभङ्गेन तद्वृत्तान्ता न दर्शिताः ।
यन्निःशब्दजला घनाश्मपरुषे देशेऽतिघोरारवा यश्चाच्छाः समये पयोदमलिने कालुष्यसन्दूषिताः ।
दृश्यन्ते कुलनिम्नगा अपि परं दिग्देशकालाविभा तत्सत्वं महतामपि स्वसदृशाचारप्रवृत्तिप्रदो ।
कलेर्वायं प्रभावः स्यान्नरनाथासनस्य वा । यत् सोऽपि भीमकलुषाः प्रवृत्तीः समदर्शयत् ।
॥ युग्मं ॥ अवरोधसखो राजा परिहासपुरे स्थितः । स जातु मदिराक्षीवः सचिवानेवमन्वशात् । ३१०
कृतं प्रवरसेनेन यदेतत् प्रवरं पुरं । तन्निर्दह्य मन्यध्वे मत्पुरस्यैव चेच्छ्रियं ।
घोरामलङ्घिताज्ञस्य श्रुत्वेत्याज्ञां महीपतेः । गत्वाशु घासकूटानि तेऽदहन् वातुलानके ।
हर्म्याग्राद्वीक्ष्यमाणस्तद्वह्निज्वालोज्ज्वलानलः । उल्कामुख इवाभूत्स हर्षाट्टहसितोत्कटः ।
दोषाद्विकृतवतः प्रतिभासतेऽन्यो मिथ्यैव चित्रमधिको विषदात्मनोऽपि ।
चन्द्रादि पश्यति पुरो द्विगुणं प्रकृत्या तेजोमयं तिमिरदोषहतं हि चक्षुः ।

नैवच्छेदेकमपि तत् पुरं प्रवरभूपतेः । असङ्ख्यपुरनिर्म्माता स विवेदाधिकं कुतः । ३१५
॥ युग्मं ॥ क्षीणक्षैव्योऽथ निध्याय नगरश्रीविकिल्विषं । उष्णनिःश्वाससुहृदा पश्चात्तेऽनुशयाग्निना ।
तत् कुर्व्वतेऽन्तः सुषिरा गूढं येनातनुक्षयं । दह्यन्ते जीर्णतरवः कोटरस्थानला इव ।
प्रातस्तमथ शोचन्तं सदुःखैः वीक्ष्य मन्त्रिणः । चिन्तानिवर्त्तनायोचुः पुरश्लोषं मृषैव तत् ।
श्रुते प्रनष्टे नगरे निःशोकोऽभून्महीपतिः । स्वप्नान्तर्हारिते पुत्रे प्रहृष्टोऽग्रदृव स्थिते ।
कार्य्ये न जातु तद्वाक्यं यत्क्षीबेण मयोच्यते । तान्युक्तकारिणोऽमात्यान् प्रशंसन्निति सोऽब्रवीत् । ३२०
प्रियमनुचितं क्ष्मापस्त्रीक्षणप्रभुरीश्वरो रमयति यतो धिक्तान् भृत्यान् स्ववृत्तिसुखार्थिनः ।
नृपमपथगं पान्ति प्राणानुपेक्ष्य निजानपि प्रसभमिह ये तैः पूतेयं महात्मभिरुर्व्वरी ।
अतीन्द्रमपि माहात्म्यं राज्ञस्तस्याधितिष्ठतः । अयमन्योऽपि दोषोऽभूदितरक्षितिपोचितः ।
दत्त्वापि यत् स मध्यस्थं श्रीपरीहासकेशवं । अघान तीक्ष्णपुरुषैस्त्रिग्राम्यां गौडपार्थिवं ।
गौडोपजीविनामासीन् सत्त्वमत्यद्भुतं तदा । अकुर्व्वञ्जीवितं धीराः परोक्षस्य प्रभोः कृते ।
शारदादर्शनमिषात् कश्मीरान् सम्प्रविश्य ते । मध्यस्थदेवावसथं संहताः समवेष्टयन् । ३२५
दिगन्तरस्थे भूपाले प्रविविक्षूनवेक्ष्य तान् । परिहासहरिं चक्रुः पूजकाः पिहितार्गलं ।
ते रामस्वामिनं प्राप्य राजतं विक्रमोर्ज्जिताः । परिहासहरिं भ्रान्त्या चक्रुरुत्पाट्य रेणुशः ।
तिलं तिलं तं कृत्वा च क्षिप्तिपुर्दिक्षु सर्व्वतः । नगरान्निर्गतैः सैन्यैर्हन्यमानाः पदे पदे ।
श्यामलारक्तसंसिक्तास्तेऽपतन्निहता भुवि । अञ्जनाद्रिदृषत्खण्डा धातुस्यन्दोज्ज्वला इव ।
तदीयरुधिरासारैः समभूदुज्ज्वलीकृता । स्वामिभक्तिरसामान्या धन्या चेयं वसुन्धरा । ३३०
वज्राद्यज्ञकृतं भयं विरमति श्रीःपद्मरागाद्भवेन्नानाकारमपि प्रशाम्यति विषं गारुत्मतादश्मनः ।
एकैकं क्रियते प्रभावनियमात् कर्म्मातिरत्नैः परं पुंरत्नैः परमप्रमेयमहिमोन्नद्धैर्न किं साध्यते ।
क्व दीर्घकाललङ्घ्योऽध्वा शास्ते भक्तिः क्व च प्रभौ । विधातुरप्यसाध्यन्तद्गौडैर्विहितं तदा ।
लोकोत्तरस्वामिभक्तिप्रभावाणि पदे पदे । तादृशानि तदाभूवन् भृत्यरत्नानि भूभृतां ।
राज्ञः प्रियो रक्षितोऽभूद्गौडराक्षसविप्लवे । रामस्वाम्युपहारेण श्रीपरीहासकेशवः ।
अद्यापि दृश्यते शून्यं रामस्वामिपुरास्पदं । ब्रह्माण्डं गौडवीराणां समाप्तं यशसा पुनः । ३३५
एवं नानाविधादन्तैर्व्वाचराः क्ष्मापतेर्यशुः । विरक्ताः स्वपुरे तस्य भूयांसस्तु दिगन्तरे ।
अनन्याक्रान्तपृथिवीसमालोकनकौतुकी । अपारं प्रविवेशाथ पुनरेवोत्तरापथं ।
कर्त्तुं प्रभावजिज्ञासां प्रहितैर्धनदादिभिः । नैर्ऋतैस्तस्य वृत्तान्तास्तस्य ते ते तदाभवन् ।
नाद्यापि या भुवा दृष्टा जाने भानुकरैरपि । राज्ञस्तस्य बभूवाज्ञा तत्र स्वैरविहारिणी ।
विरमशातवृत्तान्तैर्मन्त्रिभिः प्रहितस्ततः । प्रत्यावृत्तस्तस्य पार्श्वाद्दूतस्तानेवमुक्तवान् । ३४०
इत्यादिशति वः स्वामी कोऽयं मोहो भवादृशां । क्ष्मामिमां मे प्रविष्टस्य प्रतीक्षध्वे यदागमं ।
नवं नवं प्रतिदिनं सन्त्यज्य विजयार्ज्जनं । सुराष्ट्रं सम्प्रविष्टस्य किङ्कार्य्यं मम पश्यथ ।

विनिर्गतानां स्वभुवः सरितां सलिलाकरः । न निर्व्याजं जिगीषूणां दृश्यते त्ववधिः क्वचित् ।
तस्मादाचारसारं वो वक्ष्ये स्वविषयोचितं । राज्यं तदनुसारेण निर्विघ्नं कुरुतानघाः ।
अत्रस्थैः सर्व्वदा रक्ष्यः सुभेदः प्रभविष्णुभिः । चाम्बाकाणामिवैषां हि भयं न परलोकतः । ३४५
अपराधं विनाप्यत्र दण्ड्या गह्वरवासिनः । ते हि संभृतवित्ताः स्युर्दुर्भेद्या दुर्गसंश्रयाः ।
वर्षोपभोग्यान्यन्नानि क्षेत्रभूसम्मिता वृषाः । ग्राम्याणां नातिरिच्यन्ते यथाकार्य्यं तथामक्षत् ।
अधिकीभूतवित्ता हि वत्सरेणैव ते भृशं । भवेयुर्डामराः क्रूरा नृपाज्ञातिक्रमक्षमाः ।
वस्त्रं स्त्रियः कथाभोज्यमलङ्कारा हया गृहाः । आसाद्यन्ते यदा जातु ग्रामीणैर्नगरोचिताः ।
मदाद्दुर्गाण्युपेक्ष्यन्ते संरक्ष्याणि यदा नृपैः । यदा चानन्तरज्ञत्वं तेषां भृत्येषु दृश्यते । ३५०
प्रदेशादेकतो रूढा यदा वृत्तिश्च शस्त्रिणां । अन्योन्योद्वाहसम्बन्धैः कायस्थाः संहता यदि ।
कर्म्मस्थानानि वीक्षन्ते भूपाः कायस्थवद्यदा । तदा निःसंशयं ज्ञेयः प्रजाभाग्यविपर्य्ययः ।
॥ चतुर्भिः कुलकं ॥ चेष्टानुसारिणीमीय रूढमादाय संविदं । मयोक्तं हृदये कार्य्यमन्तरं राजवीजिनां ।
प्रत्यासत्तिं मदकरटिनो दानगन्धेन वायुर्गर्ज्जोद्भूतं प्रकटितरुचिश्चञ्चलेवाम्बुदस्य ।
चेष्टा स्पष्टं वदति मतिमन्नैपुणेन्नेयतत्त्वा जन्तोर्जन्मान्तरपरिचितां निश्चलां चित्तवृत्तिं ।
पुत्रः कुवलयादित्यो वज्रादित्यश्च मे समौ । भिन्नशीला तयोर्भ्रात्रोर्धीर्द्वैमातुरयोः पुनः । ३५५
ज्यायान् राज्येऽभिषेक्तव्यः स च स्याद्बलवान् यदा । तस्याज्ञातिक्रमः कार्य्यो भवद्भिर्नियमात्तदा ।
उत्सृजज्जीवितं वापि राज्यं वापि स पार्थिवः । शोचनीयो न केनापि स्मरतेदं वचो मम ।
कार्य्यः कनीयांश्च नृपः प्रमादात् क्रियते यदि । नोल्लङ्घनीया तस्याज्ञा रक्ष्यश्च विषमोऽपि सः ।
पौत्रेषु मे कनीयान् यो जयापीडोऽस्ति दारकः । पितामहसमो भूया इति वाच्यः स सर्व्वदा ।
भर्त्तुर्गृहीतनैराश्याः साभिप्रायाः प्रणम्य तान् । आनंसुः पश्चिमामाशां ते वाष्पार्धकणत्यजः । ३६०
उवाच चङ्कुणो जातु सन्निपत्याखिलाः प्रजाः । वाष्पैः पतिवियोगाग्नितप्तां सिञ्चन् वसुन्धरां ।
राज्ये कुवलयापीडो राजपुत्रोऽभिषिच्यतां । सुगृहीताभिधो राजा गतः स सुकृती दिवं ।
सस्रजे यस्य कृतिनो दैवतैः कोषवृद्धये । रससिद्धिरकस्मान्मे यस्मात् सात्म्यमुपागता ।
दूरस्थोऽपि हि भूभर्त्ता भाग्यशक्त्या कयाचन । कार्य्याणि घटयन्नासीद्दुर्घटान्यपि हेलया ।
अम्भोजानि घनाघनव्यवहितोऽप्युल्लाघयत्यंशुमान् दूरस्थोऽपि पयोधरोऽतिशिशिरस्पर्शं करोत्यातपं ।
शक्तिः काप्यपरीक्षितास्ति महतां स्वैरं दविष्ठान्यहो यन्माहात्म्यवशेन यान्ति घटनां कार्य्याणि निर्यन्त्रणं । ३६५
सैकादशदिनान् सप्त मासान् षट्त्रिंशतं समाः । एवमाह्लाद्य स महीं प्रजाचन्द्रोऽस्तमाययौ ।
तुषारवर्षैर्बहलैस्तमकाण्डनिपातिभिः । आर्य्याणकाभिधे देशे विपन्नं केचिदूचिरे ।
राजप्रष्ठः प्रतिष्ठां स रक्षितुं चिरसञ्चितां । सङ्कटे क्वापि दहनं प्राविशदिति केचन ।
केषांचित्तु मते भूभृद्वीयस्युत्तरापथे । सोऽमर्त्यसुलभां भूमिं प्रविष्टः कटकान्वितः ।
अत्यद्भुतानि कृत्यानि श्रुतान्यस्य यथा किल । विपत्तिरपि भूभर्त्तुस्तथैवात्यद्भुता श्रुता । ३७०

यातोऽस्तं द्युमणिः पयोधिसलिलं कैश्चित् प्रविष्टोऽपरैः सम्प्राप्तो दहनं गतः किल परैर्लोकान्तरं कीर्त्यते।
जायन्ते महतामहो निरुपमप्रस्थानहेवाकिनां निःसामान्यमहत्त्वयोगपिशुना वार्त्ता विपत्तावपि।
ततः कुवलयापीडो भेजे कुवलयेशतां। जातः कमलदेव्यां यः श्रीमाञ्चक्रवर्त्तिनः।
त्यागेन चक्रे विशदां योऽनुरक्तां नृपश्रियं। महोरगस्त्वचमिव स्वभावमलिनामपि।
भ्रात्रा तुल्यप्रभावेण कञ्चित्कालं हृतप्रभः। स ऊष्माश्मणाक्रान्तः प्रदीप इव नाद्युतत्।
भृङ्गैरिवानुगैर्दानलोभात् पर्य्यायवृत्तिभिः। श्रीर्द्वयोर्भूत्तयोरन्तर्मत्तेभकटयोरिव। ६७५
अथोभयधनादायि भृत्यचक्रिकया समं। राजा कुवलयापीडो बभञ्जानुजमञ्जसा।
राज्यं निष्कण्टकं कृत्वा ततः प्राप्तबलो नृपः। दिग्जयायोर्जितक्रान्तिः सोऽभूत् सम्भृतसाधनः।
एकस्मिन् क्षणे मन्त्री तस्याज्ञामुदलङ्घयत्। स्मरन् वा तत्पितुर्व्वाचं भजन् वा दर्पविक्रियां।
प्राप्तायामपि यामिन्यां तल्पे कोपाकुलो नृपः। तमाज्ञातिक्रमं ध्यायन्न निद्रां क्षणमप्यगात्।
एवं कृतागसं हन्तुं सस्पृहस्य तदाश्रयात्। बहवः प्रत्यभासन्त वध्यास्तस्योद्यतक्रुधः। ६८०
विरागशैलमथितात्तस्य चित्तमहोदधेः। प्रकोपकालकूटस्य पश्चात् प्रशमसुधोद्गात्।
दध्यौ सोऽथ गतक्रोधः प्रवृद्धः प्राणिसङ्क्षयः। एतावान् कस्य नु कृते कर्त्तव्यः प्रत्यभान्मम।
अकार्य्याण्यपि पर्य्याप्य कृत्वापि वृजिनार्जनं। विधीयते हितं यस्य स देहः कस्य सुस्थिरः।
कृतघ्नस्यास्य कायस्य हेतोरगलितस्मृतेः। हन्तव्याः कस्य पन्थानः प्रतिभान्त्यनपायिनः।
वदन्ति जन्तवो हन्त पश्यमानस्य नात्मनः। अवस्थां कालसूदेन कृतां तां तां क्षणे क्षणे। ६८५
ह्यः पश्यद्भिरकारणस्मितमितं पाथोजकोशाकृतिस्मश्रूद्बोधकठोरमद्य रभसादृत्तप्तनासप्रभं।
प्रातर्जीर्णबलक्षकेशविकृतं वृद्धाजशीर्षोपमं वक्त्रं नः परिहस्यते ध्रुवमिदं भूतैश्चिरस्थायिभिः।
इत्याद्यनित्यताचिन्तादत्तशान्तिसुखादरः। राज्यं सन्त्यज्य स वनं स्नुतप्रस्रवणं ययौ।
गच्छ भद्र वनायैव तपस्याधीयतां मनः। मापायाः क्षणभङ्गिन्य एवंप्राया विभूतयः।
तेन सन्त्यजता राज्यं लिखितेन निजासने। वैराग्यवासनोत्सेकः श्लोकेनानेन सूचितः।
अभग्नशमसम्वेगलब्धसिद्धिर्नराधिपः। श्रीपर्व्वतादावद्यापि भव्यानामेति दृक्पथं। ६९०
तस्मिन् याते प्रभोः पुत्रे मित्रशर्म्मा शुचान्वितः। वितस्तासिन्धुसम्भेदे सभार्य्यो जीवितं जहौ।
राज्यं समां समासार्द्धां कृत्वा स वसुधाधिपः। निःश्रेयसाप्तिनिःश्रेणीं सुधीः सिद्धिं समासदत्।
वज्रादित्यो वप्पियको ललितादित्य इत्यपि। ख्यातोऽथ भूभृदभवद्यन्माता चक्रमर्द्दिका।
स क्रूरचरितो भ्रातुः प्रजाह्लादविधायिनः। सुधांशोरिव दुर्व्वासा नूनं विसदृशोऽभवत्।
परिहासपुरात् पित्र्यां नानोपकरणावलीं। स जहार दुराचारो भूभृल्लोभवशम्वदः। ६९५
रागिणो भूमिपालस्य भूयस्योऽन्तःपुरस्त्रियः। बीजाश्वस्येव वडवास्तास्ताः समभवन् प्रियाः।
विक्रयेण प्रयच्छन् स म्लेच्छेभ्यः पुरुषान् बहून्। म्लेच्छाचितां व्यवहृतिं प्रावर्त्तयत मण्डले।
सप्ताब्दान् वसुधां भुक्त्वा सोऽतिसम्भोगजन्मनां। जगाम सङ्क्षयं क्ष्माभृत् क्षयरोगेण किल्बिषी।

तस्मान्मञ्जरिकादेव्यां जातो राजा प्रजान्तकः। ततः पृथिव्यापीडोऽभूत् समासाश्चतुरः समाः।
जातो कल्याणदेव्यां वर्षियात् सप्त वासरान्। सङ्ग्रामापीडनामाथ तमुत्पाट्याभवन्नृपः। ४००
भ्रातरौ तौ समासाद्य राज्यं नैव व्यराजत। हेमन्तशिशिरावाप्य चण्डांशोरिव मण्डलं।
शान्तेऽथ संग्रामापीडे कनीयान्वप्पियात्मजः। राजा श्रीमाञ्जयापीडः प्राप राज्यं ततः क्रमात्।
पितामहसमो भूयादित्यमात्यवचः स्मरन्। जिगीषुः सम्भृतबलो दिग्जयाय स निर्ययौ।
स्वदेशादेव नयविदशं नीतैः समं नृपैः। वृद्धान् पप्रच्छ निर्गच्छन् कश्मीरद्वारगोचरान्।
पितामहस्य नः सैन्यं कियन्निर्गच्छतोऽभवत्। इति श्रुत्वा याचास्तु यूयं सङ्ख्यातसैनिकाः। ४०५
कृतस्मितास्तमूचुस्ते किं प्रश्नेनामुना प्रभो। वस्तु कश्चिदतिक्रान्तं नानुकर्त्तुं क्षमोऽधुना।
कर्णीरथानां तस्यासीत् सपादं लक्षमीशितुः। अशीतिस्तु सहस्राणि देवस्याद्य जयोद्यमे।
तदाकर्ण्य जयापीडो बहु मेने न निर्जयं। चिरं चिन्तैः सङ्कुचन्त्याः कालस्य बलवत्तया।
जिगीषोः क्ष्माभुजस्तस्य भावमालोक्य तादृशं। दध्युर्भावज्ञतां दृष्ट्वा ललितादित्यभूपतेः।
तस्य दूरप्रयातस्य श्यालो जज्जाभिधो बलात्। द्रोहेणाक्रम्य कश्मीरान् स्वयं भेजे नृपासनं। ४१०
दिने दिने राजसैन्यात् स्वदेशस्मारिणस्ततः। सैनिकाः स्वान्यवर्त्तन्त स्वामिभक्तिपराङ्मुखाः।
प्रख्यापयिष्यन् स्वामेव शक्तिं परिकरं विना। निश्चिकाय जयापीडो युक्तां काञ्चित्तु सम्विदं।
अभङ्गुरास्तेऽभिमानास्तस्यैवासन्मनस्विनः। अभ्यवर्त्तत यैरेष वैधात्रोरपि वामताः।
स विसृज्य भुवं स्वां स्वां भूपतीननुयात्रिकान्। प्रयागमगमत् सैन्यैः परिमेयैर्निजैः समं।
तत्रावशिष्टान्निश्चित्य वाजिनः स मनोजवान्। द्विजेभ्यो लक्षमेकोनं प्रददौ भूरिदक्षिणं। ४१५
सम्पूर्णमन्यो लक्षं यः प्रदद्यादत्र वाजिनां। तन्मुद्रयेयं मन्मुद्रा विनिवार्य्येत्युदीर्य्य च।
श्रीजयापीडदेवस्येत्यक्षरैरुपलक्षितां। दिग्देशगामिनो मुद्रां गाङ्गस्य पयसो ददौ।
तन्मुद्राङ्कं पयः पीत्वा गाङ्गमद्यापि निर्मलं। चित्ते प्रवर्द्धते तापो भूपानामभिमानिनां।
स्वदेशागमनानुज्ञां सैन्यस्याप्तमुखेन सः। दत्वा निशायामेकाकी निर्ययौ कटकान्तरात्।
मण्डलेषु नरेन्द्राणां पयोदानामिवार्य्यमा। गौडराजाश्रयं गुप्तं जयन्ताख्येन भूभुजा। ४२०
प्रविवेश क्रमेणाथ नगरं पौण्ड्रवर्द्धनं। तस्मिन् सौराज्यरम्याभिः प्रीतः पौरविभूतिभिः।
लास्यं स द्रष्टुमविशत् कार्त्तिकेयनिकेतनं। भरतानुगमालक्ष्य नृत्यगीतादिशास्त्रवित्।
ततो देवगृहद्वारशिलामध्यास्त स क्षणं। तेजोविशेषचकितैर्जनैः परिहृतान्तिकं।
नर्त्तकी कमला नाम कान्तिमन्तं ददर्श तं। असामान्याकृतेः पुंसः सा ददर्श सविस्मया।
असंस्पृष्टेऽथ धावन्तं करं तस्यान्तरान्तरा। अचिन्तयत्ततो गूढं चरन्नेष भवेद्ध्रुवं। ४२५
राजा वा राजपुत्रो वा लोकोत्तरकुलोद्भवः। एवं ग्रहीतुमभ्यासः पृष्ठस्थाः पर्णवीटिकाः।
अंसपृष्टेन येनायं लसत्पाणिः प्रतिक्षणं।
लोलश्रोत्रपुटो मदोत्कमधुपापातात्ययेऽपि द्विपः सिंहः सत्यपि पृष्ठतः करिकुले व्यावृत्त्य विप्रेक्षिता।

मेघोन्मुख्यश्रमेऽप्यश्रान्तवदनोद्गीर्णस्वरो बर्हिणश्चेष्टानां विरमेऽत्र हेतुविगमेऽप्यभ्यासदीर्घा स्थितिः।
इत्यन्तश्चिन्तयन्ती सा कृत्वा संक्रान्तमन्मिदं। सखीमभिन्नहृदयां विससर्ज्ज तदन्तिकं।
प्राम्वत्पृष्ठं गते पाणौ पूगखण्डांस्तयार्पितान्। वक्त्रेऽक्षिपज्जयापीडः परिहृत्य ददर्श तां।
भूसंज्ञयासि कस्य त्वं पृष्टाया इति सुभ्रुवः। ददन्त्या वीटिकास्तस्या वृत्तान्तमुपलब्धवान्। ४३०
तया जनितदाक्षिण्यस्तैस्तैर्मधुरभाषितैः। सख्याः समासन्नृत्याया निन्ये स वसतिं शनैः।
अयाम्यपेशलालापा तया तं सा विलासिनी। उपाचरत् परार्ध्यश्रीः सोऽप्यभूद्विस्मितो यथा।
ततः शशाङ्कधवले सञ्जाते रजनीमुखे। पाणिमालम्ब्य भूपालं शय्यावेश्म विवेश सा।
ततः काञ्चनपर्य्यङ्कशायी मैरेयमत्तया। तयार्थितोऽपि शिथिलं विदधे नाधरांशुकं।
प्रवेशयन्निव हृद्द्वस्तां सत्रपान्ततः। दीर्घबाहुः समाश्लिष्य स शनैरिदमब्रवीत्। ४३५
न त्वं पद्मपलाशाक्षि न मे हृदयहारिणी। किन्तु कालानुरोधोऽयं सापराधं करोति मां।
दासस्तथायं कल्याणि गुणैः क्रीतोऽस्म्यकृत्रिमैः। अचिराज्ज्ञातवृत्तान्ता ध्रुवं दाक्षिण्यमेष्यसि।
कार्य्यशेषमनिष्पाद्य सज्जं मानिनि कञ्चन। अभोगे कृतसङ्कल्पं सुखानां त्वमवेहि मां।
तामेवमुक्त्वा पर्य्यङ्कं साङ्गुलीयेन पाणिना। वादयन्निव निःश्वस्य श्लोकमेतं पपाठ सः।
असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः। अनाक्रम्य जगत् सर्व्वं नो सन्ध्यां भजते रविः। ४४०
श्लोकेनात्मगतं तेन पठितेन महीभुजा। सा कलाकुशलाज्ञासीन्महान्तं कञ्चिदेव तं।
गन्तुकामञ्च तं प्रातर्नृपं प्रणयिनी बलात्। अर्थयित्वा चिरं कालमप्रस्थानमयाचत।
एकदा वन्दितुं सन्ध्यां प्रयातः सरितस्तटं। चिरायातो गृहं तस्या ददर्श भयविह्वलं।
किमेतदिति पृष्टाथ तमूचे सा शुचिस्मिता। सिंहोऽत्र सुमहान् रात्रौ निपत्याहन्ति देहिनः।
नरनागाश्वसंहारः कृतस्तेन दिने दिने। त्वया दूरं चिरायाते तद्भयेन समाकुला। ४४५
राजानो राजपुत्रा वा तद्भयेन विसूत्रिताः। गृहेभ्यो नात्र निर्यान्ति प्रवृत्ते क्षणदाक्षणे।
तामिति ब्रुवतीं मुग्धां निषिध्य च विहस्य च। सव्रीड इव तां रात्रिं जयापीडोऽत्यवाहयत्।
अपरेद्युर्दिनापाये निर्गतो नगरान्तरात्। सिंहागमप्रतीक्षोऽभून्महावटतरोरधः।
अदृश्यत ततो दूरादुत्फुल्लबकुलच्छविः। अट्टहासः कृतान्तस्य सञ्चारीव मृगाधिपः।
अध्वनान्येन यान्तं तमथ मन्थरगामिनं। राजसिंहो नदन् सिंहं समाह्वयत हेलया। ४५०
स्तब्धश्रोत्रो व्यात्तवक्त्रः कम्प्रकूर्चः प्रदीप्तदृक्। तदस्तपूर्व्वकायस्तं सगर्ज्जः समुपाद्रवत्।
तस्यान्यस्याननबिले कफोणिं पततः क्रुधा। क्षिप्रकारी जयापीडो वक्षः क्षुरिकयाभिनत्।
शोणितं श्लथगन्धेभसिन्दूराभं विमुञ्चता। एकप्रहारभिन्नेन तेनात्यजत जीवितं।
आभुक्तव्रणपट्टः स कफोणिमथ गोपयन्। प्रविश्य नर्त्तकीवेश्म निशि सुष्वाप पूर्व्ववत्।
प्रभातायां विभावर्य्यां श्रुत्वा सिंहं हतं नृपः। प्रहृष्टः कौतुकाद्द्रष्टुं जयन्तो निर्ययौ स्वयं। ४५५
स दृष्ट्वा तं महाकायमेकप्रहृतिसंहृतं। साश्चर्य्यो निश्चयान्मेने प्रहर्त्तारममानुषं।

तस्य दन्तान्तरालब्धं केयूरं पार्श्वगार्पितं । श्रीजयापीडनामाङ्कं ददर्शाथ सविस्मयः ।
स्यात् कुतोऽत्र स भूपाल इति ब्रुवति पार्थिवे । जयापीडागमाशङ्कि पुरमासीद्भयाकुलं ।
ततः पौरान् विमृश्यैव जयन्तः क्षितिपोऽब्रवीत् । प्रहर्षावसरे मूढाः कस्मादो भयसम्भवः ।
श्रूयते हि जयापीडो राजा भुजबलोर्ज्जितः । केनापि हेतुना भ्राम्यन्नेकाक्येव दिगन्तरे । ४९०
राजपुत्रः कमट इत्युक्त्वा कल्याणदेव्यसौ । तस्मै नियमिता दातुं निष्पुत्त्रेण सता मया ।
सोऽन्वेष्यश्चेत् स्वयं प्राप्तस्तद्रत्नाहरणेच्छया । रत्नदीपं प्रतिष्ठाभो निधानामादनं गृहात् ।
अस्मिन्नेव पुरे तेन भाव्यं भुवनशासिना । ब्रूयादेनं समान्वेष्य योऽस्मै दद्यामभीप्सितं ।
वाचि सप्रत्ययाः पौरा भूपतेः सत्यवादिनः । अन्विष्य कमलावासवर्त्तिनं तं न्यवेदयन् ।
सामात्यान्तःपुरोऽभ्येत्य प्रयत्नेन प्रसाद्य तं । ततः स्ववेश्म नृपतिर्निनाय विहितोत्सवः । ४९५
कल्याणदेव्यास्तेनाथ कल्याणाभिनिवेशिना । राजलक्ष्म्या अपास्ताया इव सोऽजिग्रहत्करं ।
व्यधादिनापि सामग्रीं तत्र शक्तिं प्रकाशयन् । पञ्च गौडाधिपान् जित्वा श्वशुरं तदधीश्वरं ।
गतेशेषं प्रभुत्यक्तं सैन्यं सम्वाहयन् स्थितः । मित्रशर्म्मात्मजो देवशर्म्मामात्यसमाययौ ।
निजदेशं प्रति ततः स प्रतस्थे तदर्पितः । अग्रे जयश्रियं कुर्व्वन् पश्चात्तोऽथ सुलोचने ।
संहासनं जितादादौ कान्यकुब्जमहीभुजः । स राज्यककुदं राजा जहारोदारपौरुषः । ५००
तस्मिन् प्रविष्टे स्वभुवं स्फूर्जद्दूर्जितविक्रमे । सैन्यैस्सामं समित्सज्जैर्जज्जोयोद्धुं विनिर्ययौ ।
पुष्कलेत्राभिधे ग्रामे तेन सार्द्धं सुदारुणः । जयापीडस्य सङ्ग्रामः सुबहूनि दिनान्यभूत् ।
अनुरक्तप्रजो राजा जज्जराज्यासहिष्णुभिः । युधि सोऽन्विष्यमाणोऽभूद्ग्राम्याटविकमण्डलैः ।
श्रीदेवो ग्रामचण्डालः प्राप्तो ग्राम्यैः समं युधि । कोऽत्र जज्ज इति भ्राम्यन् योधान् पप्रच्छ सर्व्वतः ।
तृष्णार्त्तं स्वर्णभृङ्गारात् पिबन्तं वारि तस्य ते । रणमध्ये हयारूढं तं दूरात् समदर्शयन् । ५०५
भ्रमयन् क्षेपणीयं स क्षिप्राश्मानं तदानने । सोऽयं हतो मया जज्ज इत्यमोघक्रियोऽवदत् ।
साहायकाय राज्ञोऽहं यामीत्युक्त्वा हिताशनः । मातुर्हमन्त्या जज्जस्य प्रतिज्ञाय ययौ बधं ।
अश्मसंरुग्नभीमास्यं मुमूर्षुं पतितं हयात् । विवेष्टमानं मेदिन्यां जज्जं त्यक्त्वा ययुर्निजाः ।
स समर्थाहितापातचिन्तासततदुःखितः । द्रोहाञ्जितेन राज्येन त्रिभिर्वर्षैर्व्ययुज्यत ।
न्यासापहाराद्वणिजां वेश्यानां कामिवञ्चनात् । द्रोहाद्यापनतां राज्ञामस्थिरा एव सम्पदः । ५१०
हते जज्जे जयापीडः प्रत्याहृत्य निजां श्रियं । जग्राह दोष्णा भूभारं कृत्येन च सतां मनः ।
प्रपेदे यत्र कल्याणं स विरोधिबधान्नृपः । देशे कल्याणपुरकृत्तत्र कल्याणदेव्यभूत् ।
राजा मल्लाणपुरकृच्चक्रे विपुलकेशवं । कमला सा स्वनाम्नापि कमलाख्यं पुरं व्यधात् ।
महाप्रतीहारपीठाधिकारं प्रतिपद्य सः । कल्याणदेवी दाक्षिण्यादकरोदधिकोन्नतिं ।
उत्पत्तिभूमौ देशेऽस्मिन् दूरदूरगतिरोहिता । कश्यपेन वितस्तेव तेन विद्यावतारिता । ५१५
वचोमूर्खोऽयमित्येव कस्मैचिद्वदते स्फुटं । सर्व्वज्ञानं ददच्चक्रे सर्व्वान् विद्याभियोगिनः ।

देशान्तरादागमय्य व्याचक्षाणः क्षमापतिः । प्रावर्त्तयत विच्छिन्नं महाभाष्यं स्वमण्डले ।
क्षीराभिधाच्छब्दविद्योपाध्यायात् संभृतश्रुतः । बुधैः सह ययौ वृद्धिं स जयापीडपण्डितः ।
भूपतिरात्मनः स्पर्द्धां चक्षमे न स कस्यचित् । आत्मनस्तु बुधैः स्पर्द्धां शुद्धधीर्ब्बह्वमन्यत ।
तावत्पण्डितशब्दोऽभूद्राजशब्दादपि प्रभुः । तैस्तैर्दोषैर्नतु ग्लानिं कालान्तरवशाद्ययौ । ४९०
नृपतौ विद्वदायत्ते राज्यसाम्मुख्यकाङ्क्षिभिः । रूढा बभूवुर्विदुषां व्याप्ताः सेवागतैर्नृपैः ।
समयज्ञस्तथा राजा सोऽन्विष्यन्निखिलान् बुधान् । विद्वद्दुर्भिक्षमभवद्यथान्यनृपमण्डले ।
अध्यक्षो भक्तशालायां शुक्रदन्तस्य मन्त्रिणः । विद्वत्तया थक्कियाख्यस्तेन स्वीकृत्य वर्द्धितः ।
विद्वान् दीनारलक्षेण प्रत्यहं कृतवेतनः । भट्टोऽभूदुद्भटस्तस्य भूमिभर्त्तुः सभापतिः ।
स दामोदरगुप्ताख्यं कुट्टनीमतकारिणं । कविं कविं बलिरिव धुर्य्यन्धीसचिवं व्यधात् । ४९५
मनोरथः शङ्खदत्तश्चटकः सन्धिमांस्तथा । बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः ।
सुस्वप्ने पश्चिमाशायां पश्यन्नुदयं रवेः । देशे धर्म्मोत्तराचार्य्यप्रविष्टं साध्वमन्यत ।
सचेताः संस्तवव्यक्तविवकृत्तो बभूव सः । भावानां भुज्यमानानामास्वादान्तरविस्पृशः ।
अपश्यन्निर्महास्वादान् भावान् स्वादविवेकिभिः । किं श्रेयमशनादन्यत् स्वापैरन्यैररोचकिभिः ।
आरूढस्य चितां कृतानुमरणोद्योगप्रियालिङ्गनं पुण्ड्रेक्षुद्रवपानमुक्षणमहामोहप्रलुप्तस्मृतेः ।
शीताशीरवतंसमाल्यवलयामोदस्य यादृग्भवेद्भावानां सुभगः स्वभावमहिमा निश्चेतनस्यादृशः । ५००
मन्त्रविक्रमयोस्तस्य द्वयोर्दर्पणयोरिव । एकैव विदिता मूर्त्तिः सहस्रगुणतां ययौ ।
अकुर्व्वन् त्रिगुणामाज्ञां लङ्केन्द्रात्पञ्च राक्षसान् । तेनानयेति जगदे दूतोजातु पुरःस्थितः ।
सान्धिविग्रहिकः सोऽथ गच्छन् पोतच्युतोऽम्बुधौ । प्राप पारन्तिमिग्रासं तिमिमुत्पाट्य निर्गतः ।
प्रियमैत्र्यो रामभक्त्या नृपाज्ञालेखदायिनं । स्वदेशमनयद्दूतं रक्षोभिस्तं विभीषणः ।
दूतं वित्तैः पूरयित्वा सरोऽगाधश्च राक्षसैः । चक्रे जयपुरं कोट्टं त्रिविष्टपसमन्नृपः । ५०५
पुरत्रयं महाकारं विहारञ्च विधाय सः । नगरान्तर्जयादेवीं पुण्यकर्म्मा स निर्ममे ।
तत्पुरे चतुरात्मा च शेषशायी च केशवः । विष्णुलोकस्थितिं त्यक्त्वा भुवं बध्नाति सन्निधिं ।
अन्यत् कर्म्मान्तरं किञ्चित् कारयित्वा स राक्षसान् । व्यधात् कारुभिरेवाश्म इति शंसन्ति केचन ।
स हि स्वप्ने जलान्तर्भे कुरु द्वारवतीमिति । उक्तः कंसारिणा चक्रे विनिर्म्माणं तथाविधं ।
श्रीद्वारवत्यधिष्ठानं राज्यं कोट्टं तथाश्रमौ । अभ्यन्तरं जयपुरं ब्रूतेऽद्याप्यखिलो जनः । ५१०
मन्त्री पञ्चमहाशब्दभाजनं जगतीभुजः । तस्मिन् जयपुरे कोट्टे जयदत्तोऽव्यधान्मठं ।
राजबन्धुः प्रमोदस्य जामाता मथुरापतेः । आचाभिधोऽव्यरचयच्छुचिराचेश्वरं हरं ।
पुनः सम्भृतसामग्र्यो दिग्जयाय विनिर्ययौ । बलैर्जलधिवेलाद्रीन् द्राघयन्नलघुद्विपैः ।
सम्प्रविष्टापि पूर्व्वाद्रिमविच्छिन्ना हिमाचले । भगीरथस्य गङ्गेव रेजे तस्यानुगा चमूः ।
सार्द्धं प्रचण्डैश्चण्डालैरटन्तः कटकाद्बहिः । तस्यासन् यामिकारात्रौ सुश्रुनिप्रमुखा नृपाः । ५१५

नामान्यद्विनयादित्य इति प्रख्यापयन्नृपः। पूर्व्वाशां विनयादित्यपुरेणालङ्कृतं व्यधात्।
अभ्युत्थितेन सहसा सहसाध्यवसायिनां। श्रीरारोहति सन्देहं महतामपि भूभृतां।
भीमसेनाभिधानस्य स दुर्गं पूर्व्वभूपतेः। निःशब्दो व्रतिभिः सार्द्धं व्रतिलिङ्गी विवेश यत्।
तं रन्ध्रान्वेषिणं तत्र परिज्ञाय चिरस्थितः। भ्राता जज्जस्य सिंहाख्यो गत्वा राज्ञे न्यवेदयत्।
भूपतिर्भीमसेनोऽथ राजा कस्मादबन्ध तं। नहुषाजगरो भीममिव भीमपराक्रमं। ४८०
तस्मिन् वीरे तथा बद्धे धुर्य्ये पुरुषकारिणां। पौरुषद्वेषिणा जाने दैवेनोन्नमितं शिरः।
जयापीडस्त्वसंमूढो व्यसनेऽप्यतिदारुणे। तांस्तान् सञ्चिन्तयन्नासीदुपायानुदयोन्मुखः।
अत्रान्तरे नरपतेः पौराणामतिदुस्तरा। लूतामयकृता व्यापदुदपद्यत मण्डले।
आमयः स्पर्शसञ्चारी तत्र व्यापादकश्च सः। देशदोषादतोजन्तुर्लूताव्याप्तो विवर्ज्यते।
तदाकर्ण्य जयापीडो जातोपायप्रयुक्तधीः। स्वभृत्येनोपयुक्तानि द्रव्याण्यानीतवान् रहः। ४८५
तैः पित्तार्द्रैश्चकैर्भुक्तैर्ज्वलत्पित्तोऽवहज्ज्वरं। वज्रक्षत्पयस्याङ्गे क्षिप्ता स पिटकोऽभवत्।
तं लूताव्याप्तमाकर्ण्य विरक्षोरक्षिणां मुखात्। विपत्स्यते ध्रुवमिति ध्यात्वा देशाद्बहिर्व्यधात्।
एवं स्वमतिमाहात्म्यात् सन्तीर्णो विपदर्णवात्। व्याप्तव्योमाग्रहोदुर्गं यशश्च परिपन्थिनः।
यः सर्व्वकालमबुधैः परिहस्यमानो मूलाङ्कुराद्यपि न जातु पुरस्करोति।
व्याप्तस्तु शास्त्रविटपी स फलं प्रसूय पुंसः किलैकपद एव लुनात्यलक्ष्मीं।
तमैच्छदभिसन्धातुं विद्याविक्रमसंयुतः। मायाव्यरमुडिर्नाम राजा नेपालपालकः।
अकृतप्रणतिस्तस्य प्रविष्टस्य स्वमण्डलं। अयात् सुदूरमध्वानं ससैन्योऽपससार सः। ४९०
जिगीषोस्तस्य तु तथा तत्तत्पार्थिवनिर्ज्जयः। पृथक् प्रयत्ननिर्वर्त्त्यो नाभूत्तदनुसारिणः।
संश्रकापि कश्चिद्दृश्यं प्रतिदेशं स वैरिणं। श्येनः कपोतं कक्षान्तरेष्विवान्विष्यन् जगाम सः।
ततो निःशेषितापाये तस्मिन् कुर्व्वन् स दिग्जयं। आसन्नाब्धितटे सिन्धोस्तमुपावेशयद्बलं।
प्रतस्थे दिवसैर्द्वित्रैरथ पूर्व्वार्णवोन्मुखः। कर्षन् वेलानिलस्पर्शोत्सृष्टध्वजपटाशमूः।
ततस्तस्मिन् सरित्पारे दक्षिणस्मिन् क्षमापतेः। तस्थावरमुडिस्सैन्यं स्वच्छत्रांकं प्रकाशयन्। ४९५
भूरिभेरीरवोद्गारि प्रबलं वीक्ष्य तद्बलं। प्रजज्वाल जयापीडः पीतसर्पिरिवानलः।
स जानुदघ्नं निर्विघ्नं पश्यन्नग्रे सरिज्जलं। अपूर्व्वत्वादभूमिज्ञः क्रुद्धस्तत्तां व्यगाहत।
मध्यं प्राप्ते नृपे पूर्णा वेलया वर्द्धमानया। अकालेऽभूदगाधाम्भाः सार्णवाभ्यर्णगा सरित्।
नरनागाश्वबहुलं तथा सैन्यं महीपतेः। प्रवृद्धया प्लाव्यमानं क्षणात् संक्षयमाययौ।
नृपतिर्वीचिसंमर्द्दभ्रंशिताभरणांशुकः। बाहुभ्यां लहरीश्छिन्दन् जलैर्दूरमनीयत। ५००
एकस्य करुणाक्रन्दैः सैन्यस्यान्यस्य गर्ज्जितैः। सरित्तरङ्गघोषैश्च बभूवुस्तुमुला दिशः।
क्षिप्रकारी स दृतिभिः सन्नद्धैः तरितोऽन्तरात्। स चाकृष्य जयापीडं बबन्ध विहितोत्सवः।
दैवस्याम्बुमुचश्च नास्ति नियमः कोऽप्यानुकूल्यं प्रति व्यञ्जन् यः प्रियमुत्कटं घटयते जन्तोः क्षणादप्रियं।

क्षिप्रं दीर्घनिदाघवासरविपत्संतापनिर्व्वापणं प्रादुष्कृत्य वनस्पतेः प्रकुरुते विद्युद्विसर्गं च यः ।
स कालगण्डिकातीराश्रयात्युच्चाश्मवेश्मनि । निचिक्षेप जयापीडमाप्तानां रक्षिणां करे ।
तथा काश्मीरिको राजा निमग्नो व्यसने पुनः । स किंकर्त्तव्यतामूढः शुचा गूढमदह्यत । ५४५
कलावत्सु शशाङ्कोऽपि तेजस्विष्वर्य्यमायितं । न ददर्श यथा धीमान् स ररक्ष तथा नृपः ।
अपश्यन्निर्गतं किञ्चिदालोकन्यस्तलोचनः । आसन्नां तटिनीमासीदुपायांश्च स चिन्तयन् ।
अत्रस्थावेदकास्तत्र पथिताः पृथिवीभुजा । आर्द्रान्तःकरणैः श्लोकाः स्मर्य्यन्तेऽद्यापि सूरिभिः ।
तथा तस्मिन् स्थिते मानी देवशर्म्मैव मन्त्रिषु । चिन्तयन् स्वामिसम्मानमनिशं पर्य्यतप्यत ।
भर्त्तुः स्वदेहत्यागेन स हितं कर्त्तुमुद्यतः । दूतैररमुडस्यक्रे प्रियवाग्भिः प्रलोभनं । ५५०
जयापीडश्रिया साकं राज्यं कश्मीरमण्डले । दास्यामि तुभ्यमित्यस्य दूतैः स आवितोऽभवत् ।
प्राप्तेषु प्रतिदूतेषु पूर्णायामथ संविदि । गृहीतकटको मन्त्री नेपालविषयं ययौ ।
स कालगण्डिकासिन्धोरर्वाचि कटकं तटे । स्थापयित्वा परं पारं ययौ मितपरिच्छदः ।
सामन्तैरग्रमायातैस्तां सभां सम्प्रवेशितं । सत्कृत्यारमुडः प्रह्वं न्यवेशयत विष्टरे ।
अध्वश्रान्त इति क्षिप्रं प्रतिमुक्तः क्षमाभुजा । तद्विसृष्टोपचारस्तन्निनायावसथे दिनं । ५५५
स चारमुडिभूभृच्च पीतकोशौ परस्परं । आसतां निर्जनेऽन्येद्युः कर्त्तव्यकृतनिश्चयौ ।
नृपमूचेऽथ सचिवो जयापीडार्जितं धनं । अस्ति सैन्ये तदाप्तानां तस्य वा विदितञ्च तत् ।
दानेन भविता मोक्षस्तत्रेत्युक्त्वा विमोहयन् । तस्मात्त्वं प्रष्टुमिच्छामि क्व वसु न्यस्तमित्यहं ।
अत एव मया सैन्यं संहृतं न प्रवेशितं । यदि तन्मध्यगाः शक्या न बन्धुं न्यासधारिणः ।
तस्मादेकैकमाहूय तेषु बद्धेषु सैनिकाः । कोपमज्ञातहृदया न यास्यन्ति विवक्षवः । ५६०
एवं विमोहितात्तस्मात् प्राज्ञोऽप्याज्ञां स लब्धवान् । बद्धस्य प्रययौ पार्श्वं जयापीडमहीभुजः ।
तदालोकनजं शोकं दर्शयन् धैर्य्यसागरः । गृहं तन्निर्ज्जनं कृत्वा क्षिप्रं पप्रच्छ तं नृपः ।
अपि त्वया निजं तेजो भित्तिभूतं न हारितं । तस्मिन् हि सति सिध्यन्ति साहसालेख्यकल्पना ।
स तं बभाषे निःशङ्को मन्त्रिन्नेवं व्यवस्थितः । अद्भुतं कर्म्म किं कुर्य्यां भ्रियमाणेन तेजसा ।
मन्त्री तमूचे तेजश्चेद्राजन्न निहतं तव । जानीहि तत्क्षणेनैव लङ्घितं विपदर्णवं । ५६५
अपि वातायनादस्मात् पतित्वा निम्नगाम्भसि । पारं गन्तुं समर्थोऽसि सैन्यं यत्र निजं तव ।
राजा जगाद तं नास्मात् पतितोत्थीयतेऽश्मसः । विना दृतिं दृतिश्चात्र दूरपाताद्विदीर्य्यते ।
तस्मान्नायमुपायोऽत्र न च नाम विमानितः । बद्ध मन्ये तनुत्यागमनिर्मथ्यापकारिणं ।
इति निश्चित्य सोऽमात्यस्तमवादीन्महीपते । वहिः केनाप्युपायेन वह त्वं नालिकाद्वयं ।
प्रविश्यैकाकिनैवाथ द्रष्टव्यः सम्भृतो मया । सरिदुत्तरणोपायः सोऽनुष्ठेयोऽप्यशङ्कितं । ५७०
श्रुत्वेति निर्गतो गत्वा पायुक्षालनवेश्म सः । सविलम्बं वहिर्वेलां तद्रक्षामत्यवाहयत् ।
एकाकी सम्प्रविष्टोऽथ तं ददर्श च्युतं क्षितौ । विपन्नं गलमुद्बद्ध दृढया चेलचीरया ।

सद्यो व्यापादिततनुः श्वासापूरितविग्रहः । आभेद्योऽहं तव दृतिर्म्मामारुह्य तरापगां ।
आरोढुरूरुबन्धाय स्वोर्व्वीरुष्णीषपट्टिका । बद्धा मया तां प्रविश्य क्षिप्रमेव पताम्मसि ।
नखनिर्भिन्नगात्रान्तर्लिखितामिति संविदं । दृष्ट्वा वावाचयत्कण्ठनिबद्धांशुकपल्लवे । ५८०
॥ तिलकं ॥ विस्मयस्नेहयोः पश्चात् पूर्व्वं स सरितस्ततः । प्रग्राहे पतितो राजा परं पारं समासदत् ।
प्राप्तसैन्यः प्रविश्याथ क्षणेनैव निनाय सः । तमशेषं सभूपालं नेपालविषयं क्षयं ।
रक्षिणोऽपि न यावत्तमजानन् बन्धनाच्च्युतं । तावदेव कथाशेषं विषयन्तं चकार सः ।
नत्यत्कबन्धः स्वर्गस्त्रीमुक्तस्रक् तूर्य्यघोषवान् । भूपतेर्ब्बन्धनान्मोक्षे बभूव समरोत्सवः ।
दावानलोल्बणभुवा गिरयो निदाघे यत्रैव दूरमितरे परिवर्ज्जनीयाः ।
तत्रैव सम्भवति सान्द्रहिमद्रवार्द्रश्चित्रन्तुषारशिखरी नितरां निषेव्यः । ५८५
अज्जादीनां क्षणं यत्र जन्मस्वामिद्रुहामभूत् । तत्रैव मन्त्रिणश्चित्रं कृतिनो देवशर्म्मणः ।
नाभूद्विसदृशः सूनुः स पितुर्म्मित्रशर्म्मणः । तमोमयो भासुरस्य भानोरिव शनैश्चरः ।
रत्नाकरोपमे तस्मिन् सचिवेऽस्तमुपागते । प्राप्तामपि श्रियं मेने नृपतिर्हारितामिव ।
तस्य दिग्विजयस्यान्ते सा न स्वानिर्व्विनिर्ययौ । मानसात् पृथिवीभर्त्तुर्नामात्योऽपि क्रिया पुनः ।
चित्रं जितवतस्तस्य स्त्रीराज्यं मण्डलं महत् । इन्द्रियग्रामविजयं बह्वमन्यत भूभुजा । ५९०
कर्णश्रीपट्टमाबद्ध्य श्रीराज्यान्निर्ज्जिताहृतं । धर्म्माधिकरणाख्यस्य कर्म्मस्थानं विनिर्म्ममे ।
द्वितीयच्चलगञ्जाख्यं कर्म्मस्थानमपि व्यधात् । उपयुक्तं प्रयाणेषु गञ्जे दूरस्थिते निजे ।
किमन्यद्भूभुजावामनिवासिन्या जयश्रियः । चत्वारोऽम्बुधयोऽभूवन् विलासमणिदर्पणाः ।
पुनः प्रविश्य कश्मीरान् स भूपैः परिवारितः । चिराय बुभुजे राजा विजयोपार्ज्जितां श्रियं ।
तं कदाचिन्नृपं स्वप्ने सर्व्वाशाविजयोर्ज्जितं । पुमान् दिव्याकृतिः कोऽपि व्याजहार कृताञ्जलिः । ५९५
सुखं त्वद्विषये राजन् वसन्नस्मि सबान्धवः । नागेन्द्रोऽहं महापद्मनामा त्वां शरणं श्रितः ।
द्राविडो मान्त्रिकः कश्चिन्मामितो नेतुमुद्यतः । जलाकाङ्क्षिणि वित्तेन विक्रेतुं मरुमण्डले ।
तस्माच्चेत्पासि मां तत्ते स्वर्णधातुसुवज्जिरिं । स्वदेशे दर्शयिष्यामि स्फीतोपकृतिकारिणः ।
राजा स्वप्ने निशम्येति दिक्षु सम्प्रेरितैश्चरैः । कुतोऽपि प्राप्तमानीय तं पप्रच्छ चिकीर्षितं ।
दत्ताभयः स नागोक्तं यथावत् सर्व्वमुक्तवान् । सविस्मयेन भूभर्त्रा स्वयं भूयोऽप्यपृच्छ्यत । ६००
भूरि योजनविस्तीर्णात् सरसोऽभ्यन्तरात् त्वया । नागः प्रभावोत्कृष्टः स निष्क्रष्टुं शक्यते कथं ।
स तं व्यजिज्ञपद्राजन्नचिन्त्यामन्त्रशक्तयः । ताश्चेद्दिदृक्षसे क्षिप्रमेत्याश्चर्य्यं विलोक्यतां ।
अथानुगम्यमानः स राज्ञा प्राप्तः सरोन्तिकं । अभिमन्त्र्योज्झितैर्व्वाणैर्ब्बद्धाशोऽशोषयज्जलं ।
राजाऽपश्यत्ततः पङ्के लुठन्तं मानुषाननं । वितस्तिदैर्घ्यमुरगं भूरिक्षुद्रोरगान्वितं ।
मन्त्रसङ्कोचितं राजन् गृह्णाम्यमुमिति ब्रुवन् । मागृहीरिति भूपेन सोऽभिधाय न्यषिध्यत । ६०५
तूष्णीं राजाज्ञया याते मन्त्रवीर्य्येऽथ संहृते । सरोऽभूत् प्रागवस्थन्तत् पुनर्व्याप्तदिगन्तरं ।

द्राविडं द्रविणं दत्वा विसृज्यार्चिन्तयन्नृपः। दयान्नाद्याप्यसौ नागः कथं स्वर्णाकरं गिरिं।
ध्यायन्तमेव तं स्वप्ने ततः प्रोवाच पन्नगः। केनापकारेण गिरिः स्वर्णमूर्द्धृश्यते तव।
स्वदेशोऽयं विदेशोऽयमिति बुद्धेः प्रवर्त्तकः। अन्वयव्यतिरेकाभ्यां स्थित्यभ्यासः शरीरिणां।
शरणं त्वामहमगामवमानभयात् पुनः। शरण्येन सता तत्तु भवतैव प्रदर्शितं। ६१०
उदन्वानिव योऽम्भोभ्यो शायते संश्रितैः प्रभुः। का श्रीस्ततोऽन्या सोऽन्यैर्यैस्तेषामयेऽभिभूयते।
याभिरन्याभिभूताभिरोचितस्तातुमच्चमः। तासां केनाभिमानेन स्त्रीणां द्रच्यामहं मुखं।
ये कारणसधर्म्माणो व्यामूढस्य भवाम ते। विडम्ब्यमानाः क्रीडायै ते वयं प्राकृता इव।
अथ वा श्रीमदान्धानामप्रेचापूर्व्वकारिणां। यत्किञ्चन विधायित्वं पार्थिवानां किमद्भुतं।
मन्यन्ते च्माभुजः क्रीडामुन्नतानां विमानिनां। यावज्जीवन्तु सम्बासं मरणं त्वां विदन्ति ते। ६१५
उपेच्यपच्चे भूपानां मानः स्वार्थस्य सिद्धये। स तु प्राणानुपेक्ष्यापि ग्राह्यपच्चे मनस्विनां।
महतो येऽवमन्यन्ते घटन्ते च विमानितैः। मानस्वरूपाभिज्ञत्वं तेषां केनानुमीयते।
भवन्त इव तत्रापि न वयं व्यर्थदर्शनाः। ताम्रधातुरसस्पन्दो दृश्यते तद्गिरिस्तव।
इत्युक्त्वा संविदं तस्मै स्वप्न एव सतां ददौ। यथा प्रबुद्धः प्रत्यूषे प्राप ताम्राकरं गिरिं।
स तस्मात् क्रमराज्यस्थात्ताम्रमाकृष्य निर्म्ममे। शतन्दीनारकोटीनामेकोनं स्वाभिधाङ्कितं। ६२०
पूर्णं कोटिशतं कुर्य्याद्यः स मां निर्ज्जयेदिति। दर्पभङ्गाय भूपानां समयं स्थापयेन्नृपः।
समस्या इव स च्माभृत् सावशेषैर्व्विचेष्टितैः। चिचेप तुल्यनिर्म्माणकुण्ठत्वायेति भूभृतां।
अथाकस्मान्महीपालः प्रजाभाग्यविपर्य्ययैः। त्यक्त्वा पैतामहं मार्गं ययौ पित्र्येण सोऽधुना।
किं दिग्जयादिभिः क्लेशैः स्वदेशादर्ज्यतां धनं। इत्यर्थ्यमानः कायस्थैः स्वमण्डलमदण्डयत्।
शिवदासादिभिर्लुब्धैर्धनस्थानाधिकारिभिः। प्रविवर्द्धितवित्तच्छः सोऽभूल्लोभवशम्वदः। ६२५
काश्मीरकाणामुत्पन्नं निजाशाव्यवधायकं। कायस्थवर्त्मप्रेचित्वं ततः प्रभृति भूभृतां।
मन्त्रस्तस्य महीभर्त्तुर्योऽभूत्तत्तन्नृपाग्रहे। वास्तव्यबन्धचिन्तायां स एव स्थैर्य्यमाययौ।
यत् सतां प्रशमादायि पापस्योपदिदेश तत्। जयापीडस्य पाण्डित्यं प्रजापीडनशौण्डतां।
स सौदास इवानीकलोकप्राणापहारकृत्। अस्तुत्यकृत्यैराहित्यं स्वप्नेऽपि न समाययौ।
कुर्म्मः किल्बिषमेतदेव हृदये कृत्वेति कौतूहलात् स्वैरिण्यः चितिपाश्च धिक्चपलतां क्रौर्य्यञ्च कुर्य्युः सकृत्।
पापाक्रान्तधियो भवन्त्यथ यथा मान्ग्यात् स्पृशन्त्योऽपि ता दूयन्ते न च ते यथा स्वपितरौ घ्नन्तोऽपि शान्तत्रपाः। ६३०
लोभाभ्यासात्तथा क्रौर्य्यं स ययौ वत्सरत्रयं। सह कार्षकभागेन यथाहार्षीत् स्फुरत्फलं।
लब्धलब्धस्तधीर्भूभृत् स्वल्पवित्तलवप्रदान्। सर्व्वस्वहारिणो मेने कायस्थान् हितकारिणः।
सामुद्रास्तिमयो नृपाश्च सदृशास्ते के हतानम्भसः स्वस्मादेव कणान् घनस्य जहतो जानन्ति ये दातृतां।
सर्व्वस्मात् स्फुटलुण्ठितादितरतो लेशात् किलान्येऽपि ये दुष्कायस्थकुलस्य हन्त कलयन्त्यन्तर्हिताधायितां।
सर्व्वकालं ब्राह्मणानामेहाधैर्य्यमकुण्ठितं। निस्त्रिंशस्य बभूवुर्य्ये तस्यापि परिपन्थिनः।

देशान्तरं प्रयातेभ्यो ये शेषास्ते व्यरंसिषुः। विक्रोशन्तोऽनुसरणाद्धरणाच्चापि पार्थिवः। ६३५
विप्राणां शतमेकोनमेकाहेन विपद्यते। निर्वेदमेतदित्यूचे कौर्य्याक्रान्तोऽथ पार्थिवः।
विपर्य्यस्तचरित्रस्य तस्य क्रूरस्य भूपतेः। एवं स्तुतिविपर्य्यासः काव्येष्वपि बुधैः कृतः।
नितान्तं कृतकृत्यस्य गुणवृद्धिविधायिनः। श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरं।
भाष्यव्याख्याक्षणे श्लोकैर्येनक्षणहतैः कृतः। सोऽयं तस्य विपर्य्यासो बुधैरिव विवर्त्तितः।
कृतविप्रोपसर्गस्य भूतनिष्ठाविधायिनः। श्रीजयापीडदेवस्य पाणिणेश्च किमन्तरं। ६४०
तुलमूलापहर्त्ता च चन्द्रभागातटे स्थितः। विप्राणां शतमेकोनमशृणोत्तत्क्षणे मृतं।
ततोऽग्रहारहरणादेव प्रविरतोऽभवत्। वास्तव्यानां कृतां भूमिं नतु निःशेषतो जहौ।
अथ विज्ञप्तिसमये तुलमूलौकसो द्विजाः। चुक्रुशुर्जातु तस्याग्रे प्रतीहारकराहताः।
मनुमान्धातृरामाद्या बभूवुः प्रवरा नृपाः। अन्वभावि तदग्रेऽपि ब्राह्मणैर्न विमानना।
सेन्द्रं स्वर्गं सशैलां क्ष्मां ससागेन्द्रं रसातलं। निर्दग्धुं हि क्षणेनैव विप्राः शक्ताः प्रकोपिताः। ६४५
तदाकर्ण्यास्तसामन्त्यकपृष्टः क्षमापतिः। उल्लासितैकभ्रूलेखो दर्पादवचनमब्रवीत्।
भिक्षाकणभुजां कोऽयं शठानां वो मदज्वरः। येनर्षय इव ब्रूथ प्रभावव्यापकं वचः।
भीमभ्रूभङ्गभीतेषु तेषु तूष्णीं स्थितेष्वथ। इट्टिलाख्यस्तमाह स्म ब्रह्मतेजोनिधिर्द्विजः।
राजन् युगानुरूपेण भावभावानुवर्त्तिनः। शासितुस्तेऽनुसारेण न कस्मादृषयो वयं।
आहस्म विश्वामित्रो वा वशिष्ठो वा तपोनिधिः। त्वमगस्त्योऽथ वा किंस्या इति दर्पेण तं नृपः। ६५०
ज्वलन्निव ततः स्फूर्जत्तेजोदुष्प्रेक्ष्यविग्रहः। स फणीवोत्फणस्ताम्यन् कोपान्नृपतिमब्रवीत्।
भवान् यत्र हरिश्चन्द्रस्त्रिशङ्कुर्नहुषोऽपि वा। विश्वामित्रमुखेभ्योऽहं तत्रैको भवितुं क्षमः।
विहस्योवाच तं राजा विश्वामित्रादिकोपतः। हरिश्चन्द्रादयो नष्टास्त्वयि क्रुद्धे तु किं भवेत्।
पाणिना ताडयन्नुर्व्वीं ततः क्रुद्धोऽभ्यधाद्द्विजः। मयि क्रुद्धे क्षणादेव ब्रह्मदण्डः पतेन्न किं।
तत् श्रुत्वा विहसन्राजा कोपाद्ब्राह्मणमब्रवीत्। पततु ब्राह्मदण्डोऽसौ किमद्यापि विलम्बते। ६५५
नन्वयं पतितो जाल्मेत्यथ विप्रेण भाषिते। राज्ञः कनकदण्डोऽङ्के वितानस्खलितोऽपतत्।
कृतव्रणः स तेनाङ्गे विसर्पिक्लिन्नविग्रहः। कीर्य्यमाणकृमिकुलः क्रकचैश्चारितैरभूत्।
अनुभाव्य व्यथा भावि निरयक्लेशवर्त्तिका। गणरात्रेण तं प्राणा काङ्क्षितापगमा जहुः।
ब्रह्मदण्डकृतं दण्डं भुक्त्वा दण्डधराधिपः। अकाण्डदण्डस्रष्टाथ ययौ दण्डधरान्तिकं।
तस्यानियतचित्तस्य त्रिंशतं परिवत्सरान्। एवं प्रतापिनः सैकान् भूभोगो भूपतेरभूत्। ६६०
तथाभूत्सन्मत्यद्रविणकणलाभःकृततृषः क्षितिं स्वामुज्झन्तो विदधति कुमार्गानुसरणं।
क्रियन्ते कान्तन्त्रानुगविकृतकैवर्त्तनिवहैर्यथाश्चैते कस्मात् स्थिरनिरयजालप्रणयिनः।
कृतपापं तमुद्दिश्य विपन्नमस्तप्रभा। सुतोद्धाराय तन्माता व्यधत्तामृतकेशवं।
ललितापीडनामाभूत्ततो वसुमतीपतिः देव्यां दुर्गाभिधायां यो जयापीडादजायत।

बभूव रागिणो राज्ञे राज्यकार्य्याण्यपश्यत: । यस्य वाराङ्गनाभोज्यं राज्यं दुर्णयदूषितं । ६६५
दुष्कृतेनार्ज्जितं वित्तं पित्रा निरयभागिना । यश्चारणादिषु न्यस्यन्ननुरूपं व्ययं व्यधात् ।
बन्धकीबन्धुभावेन प्राप्तराजगृहाश्रया: । तं पौंश्चलीर्यविद्यानामन्तरङ्गं व्यधुर्व्विटा: ।
केशान् स्त्रीदशनच्छिन्नान् वक्षस्तन्नखलाञ्छितं । वपुषो मण्डनं मेने किरीटकटकोज्झित: ।
यो यो वेश्याकथाभिज्ञो यो यो नर्म्मविचक्षण: । स स तत्प्रियतां लेभे न शूरो नच पण्डित: ।
अतृप्त: स्त्रीभिरल्पाभिरुग्ररागः स पार्थिव: । जडं मेने जयापीडं स्त्रीराज्यान्निर्गतं जितात् । ६७०
दिग्विजयव्यसनिन: पूर्व्वभूपाञ्जहास स: । गणिकाभोगसुखित: स्वसामयिकमध्यग: ।
सङ्क्षोभकारिणो दृष्ट्वा स्त्रीमोन्यादिव्य वारयन् । तस्माद्विटजनो लेभे सम्प्रीतात् पारितोषिकं ।
अट्टचेट इव स्पष्टपरिहासविचक्षण: । सोऽलज्जयत्सम्भ्रिष्टद्वानास्थाने गणिकासख: ।
बन्धकीपादमुद्राङ्कचारुप्रावरणादि स: । गौरवार्हान् दुराचारै: सचिवान् पर्य्यधापयत् ।
मानीमनोरथो मन्त्री परं परिजहार तत् । अशक्नुवन् यमयितुं मध्यपातपराङ्मुख: । ६७५
कुकृत्यं यागवार्हिलं वैधुर्य्यं द्रोहवृत्तिता । दूर्व्वृत्तस्य प्रभोरन्यत् परिहारान्न भेषजं ।
सुवर्णपार्श्वं विप्रेभ्यो दधत् फलपुरं तथा । भूभृत्स लोचनोत्सञ्च द्वादशाब्दानभूद्विभु: ।
कल्याणदेव्यां सञ्जातो जयापीडमहीभुजा । सङ्ग्रामापीडनामाथ बभूव भुवनेश्वर: ।
पृथिव्यापीड इत्यन्यन्नाम बिभ्रत् स पार्थिव: । समा: सप्तभिर्व्वर्षै: साम्राज्यस्य समासदत् ।
श्रीचिप्पटजयापीडो बृहस्पत्यपराभिध: । ललितापीडजो राजा शिशुर्देश्यस्ततोऽभवत् । ६८०
रागग्रहगृहीतस्य ललितापीडभूपते: । वेश्यायां कल्पपाल्यायां जयादेव्यामजायत ।
उपाख्यस्याखुवग्रामकल्पपालस्य तां सुतां । रूपलुब्धोवरुद्धत्वमनैषीत् स हि भूपति: ।
पद्मोत्पलककल्याणमम्मधर्म्मै: समातुलै: । बालकै: पाल्यमानाभूत् पृथिवी भोगभागिभि: ।
तस्य पञ्च महाशब्दाञ्ज्यायानुत्पलकोऽग्रहीत् । अन्ये जगृहिरेऽन्यानि कर्म्मस्थानानि मातुला: ।
आयत्तीकृतसाम्राज्यैर्भ्रातृभिर्वन्दिताशया । भूभुज्जनन्या विदधे जयादेव्या जयेश्वर: । ६८५
राज्ञां कृपणवित्तैर्थत् प्रविष्टो दृश्यते धनं । अचिरान्नीयते शान्तिमपूर्व्वै: कश्चिदेव तत् ।
जयापीडस्य यत्किञ्चित् सूनुना हि व्ययीकृतं । सूनुश्यालैरशेषन्तत्तै: क्रमेण हृतं वसु ।
भगिनीभगसौभाग्यसम्भवैर्व्विभवै: कृता: । ते भङ्गुराणां भोगानां भोक्तारो भाग्यभागिन: ।
निरङ्कुशं चेष्टमाना: शनकैस्त्यक्तशैशवात् । ते स्वस्त्रीयान्नृपाञ्शाश्मकुलीना: शशङ्किरे ।
अथाभिचारक्रियया मिथ: संमन्त्र्य पापिभि: । राज्येच्छया तै: स्वस्त्रीय: स्वामी च स नृपोहत: । ६९०
भुक्तक्षितो द्वादशाब्दांस्तस्मिन् व्यापादिते तथा । नैच्छन्नेकस्य ते राज्यं परस्परमहङ्कृता: ।
तेषामाक्रान्तदेशानां नाममात्रमहीपतीन् । तांस्तान् कर्त्तुमसामान्यान् विरोधोऽन्योन्यमुद्ययौ ।
अथ मेघावलीदेव्यां जातोवप्पियभूपते: । ज्येष्ठोऽप्यचाक्रिकतया योऽभूद्राज्यविवर्ज्जित: ।
सोऽयं त्रिभुवनापीडो जयादेव्यामजीजनत् । राजानमजितापीडं तं बलादुत्पलो व्यधात् ।

॥ युग्मं ॥ श्रेताद्दिगणनाख्यानैर्निष्यन्दोत्था नृपाय ते। पञ्चमाङ्गणनाख्यानादञ्जनाच्छादने ददुः। ६९०
एकसम्भाषणात् खेदं यात्स्वन्येषु दिने दिने। पञ्चतुल्यमुखानेकहुह्मो राज्ञ तदाश्रितः।
ते राजन्यजितापीडे राज्योत्पत्त्यपहारिणः। पुरदेवगृहादीनां प्रतिष्ठाकर्म्म चक्रिरे।
सापत्न्यास्ते बुभुजिरे राज्यं स्वामिविवर्ज्जितं। निर्ज्जने महिषं श्रान्तं मिथः सेर्ष्या वृका इव।
उत्पलेनोत्पलस्वामी तथोत्पलपुरं कृतं। पद्मस्य पद्मस्वाम्यन्ते कृतिः पद्मपुरं तथा।
वधूर्व्यधत्त पद्मस्य गुणादेवी गुणोज्ज्वला। मठमेकमधिष्ठाने द्वितीयं विजयेश्वरे। ६९५
धर्म्मो धर्म्माश्रमे हेतुर्धर्म्मस्वामिर्विनिर्म्मिते। कल्याणवर्म्मा सत्कर्म्मा कल्याणस्वामिकेशवे।
दीनाराणां सहस्राणि पञ्चोपकरणं कृती। एकैकस्याः सुधीर्धेनोः कृत्वा मम्मो महाधनः।
पञ्चाशीतिसहस्राणि गवां दत्वा प्रकल्पयन्। कुम्भप्रतिष्ठासम्भारं योमम्मस्वामिनं व्यधात्।
तस्यैकस्यैव सामर्थ्यां कः सङ्ख्यां कर्त्तुमर्हति। भ्रातॄणां किं पुनस्तेषां सर्व्वेषां भूरिसम्पदां।
द्रोहार्ज्जितास्तु वा लक्ष्मीः सुकृतोपार्ज्जिताथवा। सर्व्वेषां स्पृहनीयैव तेषां दातृतया तथा। ७००
कृता देवगृहास्तैर्ये तत्पार्श्वे ऽन्यसुरास्पदैः। दिङ्मातङ्गसमीपस्थकलभौपम्यमाश्रितं।
एकोननवते वर्षे स्वस्तीये शान्तिमागते। निर्व्विघ्नभोगास्तेऽभूवन् षट्त्रिंशाब्दात्ययावधि।
अथ मम्मोत्पलकयोरुदभूद्दारुणो रणः। रक्तप्रवाहा यत्रासीद्वितस्ता सुभटैर्हतैः।
कविर्बुधमनःसिन्धुशशाङ्कः शङ्कुकाभिधः। यमुद्दिश्याकरोत् काव्यं भुवनाभ्युदयाभिधं।
मम्मस्तनुर्यशोवर्म्मा संग्रामाग्रे व्यपाहरत्। स यत्र तेजः शूराणां नक्षत्राणामिवार्य्यमा। ७०५
अथोत्पाट्याजितापीडं संग्रामापीडसम्भवः। अनङ्गापीडनामाभूत् कृतो मम्मादिभिर्नृपः।
मम्मोत्साहासहिष्णुत्वात् सम्भूतामर्षवैकृतः। तस्य राज्यं द्विषन्नासीत् सुखवर्म्मोत्पलात्मजः।
वर्षत्रयेणोत्पलके ततः प्रमयमागते। स चकारोत्पलापीडमजितापीडजं नृपं।
तेषामाश्वयुजे राजसङ्ख्यानां महीभुजां। भूत्वापि भृत्याः कृतिनो विभूतिं केऽपि लेभिरे।
सान्धिविग्रहिकस्तस्य रत्नोनाम विभूतिभाक्। तस्मिन् कालेऽपि यश्चक्रे रत्नस्वामिसुरास्पदं। ७१०
भेजुर्दार्व्वाभिसारादीन् देशानुत्तम्य भूपतां। विमलाश्वायामभुजो नराद्या व्यवहारिणः।
राज्ञां कर्क्कोटवंश्यानां क्षीणप्रायमभूत् कुलं। वंशस्तूत्पलकुल्यानां भुवि वैपुल्यमाययौ।
सामर्थ्योपनतप्रायपार्थिवत्वोऽप्यपद्यत। विद्वेषात् सुखवर्म्माथ शूराख्येन स्वबन्धुना।
ततः शूराभिधो मन्त्री सुखवर्म्मात्मजेऽकरोत्। राज्ययोग्योऽयमित्यास्थां सगुणेऽवन्तिवर्म्मणि।
एकत्रिंशे स वर्षेऽथ प्रजाविप्लवशान्तये। विनिवार्य्योत्पलापीडं तमेव नृपतिं व्यधात्। ७१५
यत्कृते विफलक्लेशा आसन् पितृपितामहाः। पौत्त्रेण हेलया प्राप्ता सा सिद्धिः पुण्यकर्म्मणा।
कुम्भाः पयोनिधिपयोहरणप्रवृत्ता नित्यञ्च हन्ति किल ये विफलश्रमत्वं।
चित्रं क्षणादिह तदेकसमुद्भवेन सन्दर्शिता निखिलवारिधिपानलीला।
अभ्मत तदुरुमूर्द्धि राजलक्ष्मीघटितकटाक्षकृतादिपट्टबन्धे।

कनकघटमुखाम्बवाभिषेकं झटिति पतन्तमवाप्य नवाब्ददेवः।
सम्प्राप्तावुपदेष्टुमिन्दुतपनौ युक्तं स्ववंशोद्भवैर्भूपालैर्नवराज्यनर्म्मामिव स श्रोत्रद्वये धारयन्।
राजा मण्डनकुण्डलद्वयमिषात् स्वच्छातपत्रच्छलालक्ष्मीविष्टरपुण्डरीकघटितच्छायोदयो दिद्युते ॥ ७२५ ॥

॥ राजानः ॥ १७ ॥ ग्रन्थाः ॥ ७२८ ॥ आदितः राजानः ॥ ७० ॥ ग्रन्थाः ॥ २७ ॥

इति श्रीकाश्मीरिकमहामात्यचम्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां चतुर्थस्तरङ्गः ॥

समाशतद्वये षष्टियुते मासेषु षट्सु च। निर्दिष्टेषु कार्कोटवंशे सप्तदशाभवन्। ७२०

## ॥ अथ पञ्चमस्तरङ्गः ॥



काप्येतेषु रुचिः कचेषु फणिनां पुंस्कोकिलस्येव ते गोभिः कण्ठतटस्य क्ष्यति पुरो दृक् पश्य चक्षुःश्रुतेः ।
सन्धानेऽभिनवे मिथो भगवतोर्जिज्ञासया पृथक्स्पन्दिनौ भिक्षार्थौ सदृशाक्षरामपि वदन्नेवं गिरं पातु वः ।
अवन्तिवर्म्मा साम्राज्यं प्राप्य पातितकण्टकः । चकार चरितैश्चित्रं सतां कण्टकितं वपुः ।
आसतां क्षितिपामात्यौ तौ द्वावपि परस्परं । आशादामे परिवृढौ भृत्यावाज्ञापरिग्रहे ।
कृतज्ञः क्षान्तिमान् क्ष्माभृन्मन्त्री भक्तः स्मयोज्झितः। अभङ्गुरोऽयं संयोगः सुकृतैर्जातु दृश्यते।
विवेका प्राप्तराज्यः स क्ष्माभृद्वीक्ष्य नृपश्रियं । अविलुप्तस्मृतिर्धीमानन्तरेवमचिन्तयत् । ५
गोभुजां वल्लभा लक्ष्मीर्मातङ्गोत्सङ्गलालिता । सेयं स्पृष्टां समुत्पाद्य दूषयत्युन्नतात्मनः ।
स नास्ति कश्चित् प्रथमं यः प्रदर्श्यानुकूलतां । सन्ताप्य तेन च रसं नीचप्रीत्येव नानया ।
चपलाभिः प्रवृद्धेयं सवेश्याभिः सहाम्बुधौ । तदेकचारिणीवृत्तमनया शिक्षितं कुतः।
निःस्नेहानन्वगात् कांश्चित् सुचिरं संस्तुताप्यसौ। परलोकाध्वगान् भूपानपाथेयानबान्धवान्।
हेमभोजनभाण्डादि भाण्डागारे यदर्ज्जितं। कस्मादस्य न नाथास्ते लोकान्तरगता नृपाः। १०
अन्योच्छिष्टेषु पात्रेषु भुक्तैतेषु महीभुजः। कस्मान्न लज्जामवहन् शौचचिन्तां नवा दधुः।
स्थलेषु राजतस्थालकपालेष्वत्रलोकितैः । प्रेतभूपालनामाङ्कैः शङ्का कस्य न जायते ।
कृष्टाः प्रविष्टे ये कालपाशे कण्ठान्मुमूर्षतां । अशस्ता अपवित्रास्ते हाराः कस्य हारिणः ।
सन्दूष्य वाष्पैर्दुःखोष्णैस्त्यक्तान् पूर्व्वैर्मुमूर्षुभिः । स्पृशन्नेतानलङ्कारान् सङ्कोचः कमाप्नुयात् ।
या वारिराशिसलिलान्तरसन्निधानसंसेवयापि सततं मलिनैव लक्ष्मीः ।
पात्रेषु गोरशिखिभागिषु सा विमुक्ता वैमल्यमेति हरिणीव हुताशशौचे। १५
इति निर्ध्याय नृपतिर्नीत्वा स्वर्गादिवर्णतां । निजैरञ्जलिभि. प्रादाद्द्विजन्मभ्यः करम्भकं ।
साधु भूपेति वक्तव्ये हर्षाश्रुगौरवं द्विजः । साध्ववन्तिमिति वदन्नेकः प्रापाञ्जलीन् बहून् ।

लक्ष्मीं कृत्वार्थिसात्कृत्स्नां कृतिनावन्तिवर्म्मणा । विभूतिस्थामरच्छत्रमात्रशेषा व्यधीयत ।
अनन्तसम्पत्सम्पन्नभूरिगोचरविश्रवे । राजश्रीर्दुर्जरा तस्य नवत्वे भूभुजोऽभवत् ।
विश्रुतः समरे भ्रातॄन् भ्रातृव्यांश्च विजित्य सः । चकार भूरिभिर्भारैराज्यं विगतकण्टकं । २०
राज्यं निष्पाद्य निर्व्विघ्नमथ वात्सल्यपेशलः । विभज्य बन्धुभृत्येषु बुभुजे पार्थिवः श्रियं ।
भ्राता द्वैमातुरस्तेन शूरवर्म्माभिधः सुधीः । ज्ञातिप्रियेण वितते यौवराज्येऽभ्यषिच्यत ।
स्वाधूयार्हस्तिकर्णाख्यावग्रहारौ प्रदाय यः । शूरवर्म्मा स्वामिनश्च गोकुलञ्च विनिर्ममे ।
सम्पूर्णपुण्यमहिमा मर्त्यमाहात्म्यमन्दिरं । पद्म हस्तप्रदश्चक्रे मठं सुकृतकर्म्मठः ।
भ्राता व्यधत्त नृपतेरपरः समराभिधः । केशवं चतुरात्मानं समरस्वामिनं तथा । २५
द्वौ शूराधरजौ धीरविचपाख्यौ निजाख्यया । व्यधत्तां विबुधावासौ द्वावन्यौ गणनापती ।
भूत्वा बाहुलताछन्नप्रभावानुभवौ भुवि । गतौ सविग्रहाविव हरावासाग्र्यसत्यतां ।
॥ युग्मं ॥ राजदौवारिकः श्रीमान्कूरस्वामीम्महोदयः । महोदयस्वामिनोयः प्रतिष्ठां समपादयत् ।
रामजाख्यमुपाध्यायं ख्यातव्याकरणश्रमं । व्याख्यातृपदकं चक्रे स तस्मिन् सुरमन्दिरे ।
अमात्येन महीभर्त्तुः श्रीप्रभाकरवर्म्मणा । कृतं प्रभाकरस्वामिनाम्नोविष्णोर्निकेतनं । ३५
आयातेन शुकैः सार्द्धन्दत्वा स्टहशुकेन यः । मुक्ताः प्राप्य प्रतिष्ठायां चक्रे ख्यातां शुकावलीम् ।
विच्छिन्नप्रसरा विद्या भूयः शूरेण मन्त्रिणा । सत्कृत्य विदुषः सभ्यान्देशेऽस्मिन्नवतारिता ।
युग्यैः चितिभुजां योग्यैरुह्यमानामहर्द्धयः । बुधाः प्रवृद्धसत्काराभूपतेर्व्विविशुः सभां ।
मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः । प्रथां रत्नाकरश्चागात्साम्राज्येऽवन्तिवर्मणः ।
आस्थाने कृतमन्दारोवन्दीशूरस्य मन्त्रिणः । सङ्कल्पकृतिमाधातुमिमामार्य्यां सदापठत् । ४०
अयमवसरउपकृतये प्रकृतिचला यावदस्ति सम्पदियं।
विपदि समाभ्युदयिन्यां पुनरुपकर्त्तुं कुतोऽवसरः ।
कृतः सुरेश्वरी चेत्रे वरुणेहविधायिना । शिववर्यामिश्रेयास्तेन प्रासादः सोऽव्ययस्थितिः ।
शूरेश्वरं प्रतिष्ठाप्य स्वत्रेत्रेत्र समुन्नतं । चक्रे शूरमठन्धीमान् स भोगाय तपस्विनां ।
स्वकृते पत्तनवरे तेन शूरपुराभिधे । क्रमवर्त्तु प्रदेशस्थोढक्कोऽभूद्विनिवेशितः ।
सुरेश्वरीप्राङ्गनतश्चक्रे भूतेश्वरं हरं । मठं शूरमठान्तश्च शूरजोरत्नवर्धनः । ४५
काव्यदेव्यभिधा शूरवधूः शुद्धान्वया व्यधात् । सदाशिवं सुरेश्वर्य्यां काव्यदेवीश्वराभिधं ।
निर्म्मत्सरोऽवन्तिवर्म्मा सोदरेभ्योऽनपायिनीं । शूराय दश पुत्राय नृपश्रीः प्रक्रियान्ददौ ।
छन्दानुवर्त्ती भूपालो दैवतस्येव मन्त्रिणः । आबाल्याद्दैवतोऽप्यासौ द्वैवतामुपदर्शयन् ।
चेत्रे विश्वैकसाराख्ये मृतानामपवर्गदे । भूरिभोगास्पदं राज्ञा तेनावन्तिपुरं कृतं ।
अवन्तिस्वामिनं तत्र प्राग्राज्याधिगमात्कृती । विधाय प्राप्तसाम्राज्यश्चक्रेऽवन्तीश्वरं तदा । ५०
त्रिपुरेश्वरभूतेशविजयेशेषु भूभृता । स्नानद्रोण्या रौप्यमय्या तेन पीठत्रयं कृतं ।

शूरस्यापि नरेन्द्रं तं ध्यायतः स्वाधिदैवतं। तत्प्रियार्थमुपेक्ष्योऽभूद्धर्मः प्राणाः सुतोऽपि वा।
तथा चार्चयितुं जातु यातो भूतेश्वरो नृपः। विभवानुगुणेष्वस्मिन् पूजोपकरणेऽर्पिते।
ददर्श पीठे देवस्य पूजकैरुपपादितम्। वन्यमुत्पलशाकाख्यं तिक्तशाकमवस्थितं।
तत्रस्थाः क्ष्माभुजा पृष्टास्तन्निवेदनकारणं। व्यजिज्ञपन् क्षितिन्यस्तजानुप्राञ्जलयस्ततः। ५५
डामरो धन्वनामास्ति लहरे विषये बली। शूरस्य मन्त्रिणो देवसेवको यः सुतोपमः।
हृतेषु तेन ग्रामेषु निरवग्रहशक्तिना। निवेद्यमेतद्देवास्मै भूतेशाय निवेद्यते।
अकाण्डशूलजनितां पार्थिवः कथयन् व्यथां। श्रुतमश्रुतवत्कृत्वा त्यक्तपूजोऽथ निर्ययौ।
पूजां सन्त्यज्य गमनं शूलं चाकस्मिकं प्रभोः। सहेतुकं विदन्शूरो वृत्तान्तान्वेषकोऽभवत्।
ज्ञाततत्त्वस्ततस्तूर्णं भूतेशाभ्यर्णवर्त्तिनः। क्रुद्धः समाहृचक्रस्य भैरवस्याविशद्गृहं। ६०
निषिद्धजनवाक्तस्थोऽभूत्वा विरलपार्श्वगः। प्राहिणोद्धन्वमानेतुं ततो दूतान् पुनःपुनः।
स क्षितिं पत्तिपृतनासंमर्दैन प्रकम्पयन्। अप्रकम्पतनुः प्राप क्रूरः शूरान्तिकं पुनः।
तस्य प्रविष्टमात्रस्य शस्त्रिणः शूरचोदिताः। मुण्डं सजीवितस्यैव चिच्छिदुर्भैरवाग्रतः।
आसन्ने सरसि क्षिप्ता रुधिरोद्गारि तद्वपुः। क्ष्मापतेः क्षालितामर्षो धीरः शूरो विनिर्ययौ।
तस्य श्रुत्वा शिरश्छेदं स्वपुत्रस्येव मन्त्रिणा। क्षीणमन्युः क्षितिपतिः सवेलत्यद्रवाभवत्। ६५
शूरोऽथ पृष्टकुशलो निर्व्यथोऽस्मीति भाषिणं। उत्थाप्य तल्पात्तं देवं पूजाशेषमकारयत्।
इत्थं समस्तकृत्येषु भावज्ञः स महीपतेः। अनुजीव हितं तस्य प्राणांस्त्यक्त्वाप्यसाधयत्।
परस्परमनुत्पन्नमन्युकालुष्यदूषणौ। न दृष्टौ न श्रुतावन्यौ तादृशौ राजमन्त्रिणौ।
श्रीमेघवाहनस्येव शासनेऽवन्तिवर्म्मणः। अशेषप्राणिनामासीत्कुमारो दशवत्सरान्।
जलं जहद्भिः शिशिरं तटानित्याकुतोभयैः। तत्कालं सेवितः पृष्ठे पाठीनैः शरदातपः। ७०
अनुग्रहाय लोकानां भट्टाः श्रीकल्लटादयः। अवन्तिवर्म्मणः काले सिद्धा भुवमवातरन्।
चरिते वज्रवत्काव्ये येषामेकस्य पावनः। अयं प्रासङ्गिकः कश्चिद्वृत्तान्तो वर्णयिष्यते।
देशः प्रवृत्ततोयोऽयं महापद्मसरोजलैः। कूलिनीभिश्च शवलः स्वल्पोत्पत्तिः सदाभवत्।
ललितादित्यभूभर्तुरुद्योगेन बलीयसा। किञ्चिदाकृष्टसलिलः प्रापोत्पत्तिं मनाक्ततः।
जयापीडे क्रमाद्याते स्वल्पवीर्य्येषु राजसु। सलिलोपप्लवैरासीत्पुनरेवावृता क्षितिः। ७५
दीन्नाराणां दशशती पञ्चाशत्यधिकाभवत्। धान्यखारीक्रये हेतुर्देशे दुर्भिक्षविक्षते।
अवन्तिवर्म्मणः पुण्यैर्जन्तूञ्जीवयितुं ततः। स्वयमन्नपतिः श्रीमान् सुय्यः क्षितिमवातरत्।
यस्याविज्ञातसम्भूतेस्तूर्य्ये कालेऽपि निश्चितं। अयोनिजत्वकृतिनश्चरितैर्भुवनाद्भुतैः।
पुरा रथ्यारजःपुञ्जं सम्मार्ज्जन्ती पिधानवत्। सुय्याभिधाना चण्डाली मृद्भाण्डं प्राप नूतनं।
तस्मिन् पिधानमुद्धृत्य सापश्यन्मध्यशायिनं। बालं कमलपत्राक्षं धयन्तं स्वकराङ्गुलीः। ८०
माता कयापि त्यक्तोऽसौ सुन्दरो मन्दभाग्यया। अयेति चिन्तयन्त्यासीत्सा स्नेहात्प्रस्नुतस्तनी।

अदूषयन्त्याः स्पर्शेन धात्र्याः शूद्रस्त्रियो गृहे । तया विहितवृत्तिः स शिशुर्वृद्धिमनीयत ।
स सुय्यनामा मतिमान् प्रवृद्धः शिक्षिताक्षरः । कस्याप्यासीद्गृहपतेरर्भकाध्यापको गृहे ।
व्रतस्नानादिनियमैस्तं सतां हृदयङ्गमं । गोष्ठीषु विशदप्रज्ञं विदग्धाः पर्य्यवारयन् ।
तेषां कथाव्यवस्थासु निन्दतां जलविप्लवं । धीरस्ति मे निरर्थस्तु किं कुर्य्यामिति सोऽब्रवीत् । ८५
उन्मत्तस्येव वदतस्तस्य तच्चियमाद्वचः । निशम्य भूभृच्चारेभ्यश्चिरमासीत्सविस्मयः ।
ततस्तमानीय नृपः किं ब्रूष इति पृष्टवान् । धीरस्तीत्यादि राजाग्रेऽप्यवोचत्सोऽप्यसम्भ्रमः ।
वातूलोऽसाविति निजैरुक्तोऽप्यथ महीपतिः । धियं दिदृक्षुर्व्विदधे तस्यायत्तं निजं धनं ।
कोशाद्दीन्नारभाण्डानि बहून्यादाय हेलया । ययौ मडवराज्यं स नावमारुह्य रंहसा ।
ग्रामे तत्र प्रवृद्धाम्बुनिमग्ने नन्दकाभिधे । एकं निक्षिप्य दीन्नारभाण्डं व्यावर्त्तत द्रुतं । ९०
सत्यं वातूल एवासौ सभ्येष्वपि वदत्स्वपि । वार्त्तां निशम्य तां राजा तच्चेष्टान्वेषकोऽभवत् ।
क्रमराज्यं समं प्राप्य देशे यक्षदराभिधे । अञ्जलिभ्यां निचिक्षेप दीन्नारान् सलिलान्तरे ।
यत्र तीरद्वयालम्बि शैलनिर्लुठिताः शिलाः । चक्रुर्व्वितस्तां निष्पीड्य पयः प्रतिपथोन्मुखं ।
दुर्भिक्षोपहता ग्राम्या दीन्नारान्वेषिणस्तदा । शिलाः प्रवाहादुद्धृत्य वितस्तां समशोधयन् ।
एवं दिनानि द्वित्राणि पयोयुक्त्या विलम्ब्य तत् । वितस्तामेकतः स्थानात्कर्म्मकृद्भिरबन्धयत् । ९५
पाषाणसेतुबन्धेन सुय्येनाद्भुतकर्म्मणा । सप्ताहमभवद्बद्धा निखिला नीलजा सरित् ।
अधः प्रवाहं संशोध्य लुठदश्मप्रतिक्रियां । कृत्वा बद्धैः शिलाबन्धैः सेतुबन्धमपाटयत् ।
चिरकालनिरोधेन सोत्कण्ठेवाम्बुधिं प्रति । ततः प्रावर्त्तत जवाद्गन्तुं सागरगामिनी ।
जम्बालाङ्का स्फुरन्मीना भूर्ब्बभौ सलिलोज्झिता । व्यक्तकार्ष्ण्यामलच्छा निर्मेघेव नभस्थली ।
यत्र यत्र विवेदौघरोधं सलिलविप्लवे । तत्र तत्र वितस्तायाः प्रवाहान्नूतनान् व्यधात् । १००
मूलस्रोतोयनिष्ठ्यूतभूरिस्रोता बभौ सरित् । एकभोगाश्रयानेकफणावासितपन्नगी ।
वामेन सिन्धुस्त्रिग्राम्या वितस्ता दक्षिणेन तु । यान्त्यौ ये समगंसातां प्राग्वैन्यस्वामिनोऽन्तिके ।
वर्त्ततेऽद्य महानद्योः कल्पापायेऽप्यनत्ययः । सङ्गमो नगरोपान्ते स सुय्योपक्रमस्तयोः ।
अद्याप्यास्तां फलपुरपरिहासपुरस्थितौ । विष्णुस्वामी सङ्गमस्य वैन्यस्वामी च तीरयोः ।
सुन्दरीभवनाभ्यर्णप्राप्तस्याद्यतमस्य तु । योगशायी हृषीकेशस्सुय्यस्याभ्यर्च्चितस्तटे । १०५
दृश्यन्तेऽद्यापि सरितां पूर्व्वस्रोतस्तटोद्भवाः । निषादाकृष्टनौरज्जुरेखाङ्काजीर्णपादपाः ।
स्फुरत्तरङ्गजिह्वास्ता नदीर्मार्गमजिग्रहत् । तास्ताः स्वेच्छानुसारेण मान्त्रिकः पन्नगीरिव ।
बद्धा शैलमयान् सेतून्वितस्तां सप्तयोजनीं । महापद्मसरोवारि स चकार नियन्त्रितं ।
महापद्मसरः कुण्डाद्वितस्ता येन योजिता । जवान्निर्याति कोदण्डयन्त्रादिषुरिवाधुना ।
उद्धृत्य सलिलादुर्व्वीमित्रमादिवराहवत् । अनेकजनसङ्कीर्णान् ग्रामान्नानाविधान्व्यधात् । ११०
पालीभिरश्मः संरोध्य यान् कुण्डसदृशान् व्यधात् । कुण्डलानीति सर्व्वांस्तान् सम्भूतान् ब्रुवते जनाः ।

उत्खातकीलनिवहा यद्योऽद्यापि शरत्क्षयाः । व्यञ्जन्ति जलगम्भिभवन्धनं स्तम्भसन्निभान् ।
दीन्नारभाण्डानीज्जीत्य यदगाधजलान्तरे । नन्दके निर्गतजले स्थलान्तात्तदलभ्यत ।
अदेवमातृकान् ग्रामान् परीक्ष्य विविधाः क्षितीः । संविभेजे विभक्तेन नादयेन स वारिणा ।
असिञ्चच्च जलैर्ग्रामान् ग्रामान्मृदमुपाहृतां । या यावता क्षणेनागाच्छोषं तां तावता हृदि ११५
कालेन मत्वा सेकार्हाम्प्रतिग्रामं जलस्रुतेः । परिमाणं विभागञ्च परिकल्प्य निरत्ययं ।
चकार चानूलाद्याभिः सिन्धुभिः सर्व्वतोदिशः । सत्फलोदारकेदारसम्पत्संपन्नविभ्रमाः ।
॥ तिलकं ॥ न कश्यपेनोपकृतं न यत्सङ्कर्षणेन वा । हेलया मण्डलेऽमुष्मिंस्तत्सुय्येन सुकर्मणा ।
भूमेर्जलादुद्धरणं द्विजच्चे तथार्पणं । सेतुबन्धोऽश्मसिस्रोये यमनं कालियस्य च ।
चतुर्षु सिद्धमिति यद्विष्णोः सत्कर्मजन्मसु । सुय्यस्य तत्पुण्यराशेरेकस्मिन्नेव जन्मनि । १२०
॥ युगलकं ॥ यस्मिन्महासुभिक्षेषु दीन्नाराणां शतद्वयी । धान्यखारी प्राप्तिहेतुरासर्गाद्भवत्पुरा ।
ततः प्रभृति तत्रैव चित्रं कश्मीरमण्डले । षट्त्रिंशता धान्यखारी दीन्नारैर्व्वदितः क्रयः ।
निर्गताया महापद्मसलिलात्स्वर्गसन्निभं । वितस्तायास्तटे चक्रे स्वनामाङ्कं स पत्तनं ।
सुकृता स्थापिता तेन सरसि व्याप्तरिकटे । आसंसारं स्थिरा सारमर्यादाश्मषपक्षिणां ।
सुय्याकुण्डलनामानं ग्रामं कृत्वा द्विजातिसात् । सुय्यामुद्दिश्य तन्माता सुय्यासेतुं स निर्ममे । १२५
तेनोद्धृतासु सलिलाद्भूषु ग्रामाः सहस्रशः । अवन्तिवर्मप्रमुखैर्जयस्थलमुखाः कृताः ।
इंद्रग्रैर्धर्म्यवृत्तान्तैः प्रवर्त्तितकृतोदयः । अवन्तिदेवः पाति स्म मान्धातेव वसुन्धरां ।
प्राणप्रयाणसोद्योगरोगग्रस्तस्ततो ययौ । चैत्रं स त्रिपुरेशाद्रिनिष्ठज्येष्ठेश्वराश्रितं ।
आत्मनस्तत्र निश्चित्य विपत्तिं चिरगोपितां । प्राणान्ते प्राञ्जलिः शूरो वैष्णवत्वमदर्शयत् ।
तेनान्ते भगवद्गीताः शृण्वता भावितात्मना । ध्यायता वैष्णवं धाम निरमुच्यत जीवितं । १३०
आषाढशुक्लपक्षस्य तृतीयस्यां क्षमापतिः । वर्षे एकोनषष्ठे स स्वात्तृषास्तमुपाययौ ।
तस्मिन् प्रशान्ते प्रत्येकं विभवोत्सिक्तचेतसां । तुल्यमुत्पलवंश्यानां राज्येच्छा भूयसामभूत् ।
ततश्चक्रे प्रतीहारः प्रयत्नाद्रत्नवर्धनः । नृपं शङ्करवर्माणमवन्तिनृपतेः सुतं ।
कर्णपोविन्नपामात्यस्तनूजं शूरवर्मणः । तद्भ्रातुःसुखवर्माख्यं यौवराज्येऽप्ययोजयत् ।
अतस्तयोरभूद्वैरं क्षितीशयुवराजयोः । यस्मिन् क्षणे क्षणे राज्यमासीद्दोलामिवाश्रयत् । १३५
शिवशक्त्यादयो वीराः स्वामिकार्य्योज्झितासवः । यत्राभूवन् स्वसत्त्वस्य परीक्षाक्षणलाभिनः ।
कुर्व्वतां स्वामिशत्रूणां दानमानप्रतिश्रवं । सत्त्वैकाग्र्यान्न ते यस्मादानुकूल्यमशिश्रयन् ।
पिण्डस्पृहाम्परित्यज्याहङ्कृताः शिक्षिताः क्वचित् । तावन्न वीततमसः श्वहृत्तिमनुजीविनः ।
कथञ्चिदथ निर्जित्य युवराजं महौजसं । प्राज्यः स्वविजयोद्धारश्चक्रे शङ्करवर्मणा ।
सम्राट् समरवर्माद्यैर्व्वितीर्णसमरोऽसकृत् । कीर्त्तिं श्रिया प्रणयिनीं लब्धयाधिविवेद सः । १४०
अथ निर्ज्जित्य दायादाल्लब्ध्वा लक्ष्मीं क्षितीश्वरः । जिष्णुर्दिग्विजयं कर्त्तुं श्रीमानासीन्महोद्यमः ।

तस्य कालबलाद्देशे प्रक्षीणजनसम्पदि । लक्षाणि नवपत्तीनां द्वारान्निष्क्रमतोऽभवन् ।
स्वपुरस्योपकण्ठेऽपि योऽभूत्कुण्ठितशासनः । स एव रत्नोत्तंसेषु राज्ञामाज्ञां न्यवेशयत् ।
गच्छन्नाम्नायविच्छेदसम्प्रदायः कतुञ्जये । स्वप्रज्ञया समुन्नीतो राज्ञा शङ्करवर्म्मणा ।
तत्सेनानरनाथानां पृतनाभिः पदे पदे । कुल्यापगेव कुल्याभिर्व्विशन्तीभिरवर्द्धत । १४५
दार्व्वाभिसारराजेन नश्यता समुपाश्रिताः । अद्रिद्रोण्यो न वाहिन्यस्तत्सेनानादमादधुः ।
जनोत्खर्णैर्हरिगणैर्टङ्कन्हरिगणं क्षणात् । अनासादितदुर्गं स चक्रे दुर्गान्तरातिथिं ।
लक्षाणि नवपत्तीनां वारणानां शतत्रयी । लक्षञ्च वाजिनामासीद्यस्य सेनापुरःसरं ।
स गुर्ज्जरजयव्यग्रः स्वपराभवशङ्किनं । त्रैगर्तं पृथिवीचन्द्रं निन्ये तमसि हास्यतां ।
पुत्रं भुवनचन्द्राख्यं नीविं प्रागेव दत्तवान् । स स्वभूत्प्रणतिं कर्तुं तस्याभ्यर्णमुपागतः । १५०
अथ तत्कण्टकं भ्राम्यद्भूरिमण्डलनायकम् । वीक्ष्य सम्मुखमायान्तं महार्णवमिवोज्ज्वलं ।
समागमक्षणे यस्माच्छङ्कमानः स्वबन्धनं । पलाय्य प्रययौ दूरं निर्व्वाणौजोविजृम्भितः ।
॥ तिलकं ॥ यमप्रतिमसौन्दर्य्यमध्याप्याङ्गः पुराविदः । तमेवाद्राक्षुरत्रस्ता नृपाः कालमिवोल्बणं ।
उच्चखानालखानस्य संख्ये गुर्जरभूभुजः । बद्धमूलां क्षणाल्लक्ष्मीं शृङ्गं दीर्घामरोपयत् ।
तस्मै दत्वा टक्कदेशं विनयादङ्गुलीमिव । स्वशरीरमिवापासीत्मण्डलं गुर्जराधिपः । १५५
हृतं भोजाधिराजेन स साम्राज्यमदापयत् । प्रतीहारतया भृत्यौ भूते थक्कियकान्वये ।
दरत्तुरुष्काधिपयोर्यः केशरिवराहयोः । हिमवद्विन्ध्ययोरासीदार्य्यावर्तद्रवान्तरे ।
नक्षत्रेष्विव भूपेषु नभसीवोत्तरापथे । यस्यैव विपुला ख्यातिर्मार्तण्डस्येव मण्डलं ।
स श्रीमांल्ललियः शाहिरलखानाश्रयः क्रुधा । निराकरिष्णुः साम्राज्यात्तस्य सेवां न लब्धवान् ।
एवं दिग्विजयं कृत्वा प्राप्तः स निजमण्डलं । प्रदेशे पञ्चसत्राख्ये स्वनाम्ना विदधे पुरं । १६०
तस्य श्रीस्वामिराजस्य तनयोदक्पथप्रभोः । पूर्णिमेव क्षपाबन्धोः सुगन्धाख्याभवत्प्रिया ।
तया समं पुरवरे सुरराजोपमो नृपः । तस्मिन् शङ्करगौरीशसुगन्धेशौ विनिर्म्ममे ।
द्विजस्तयोर्नायकाख्यो गौरीशसुरसद्मनोः । चातुर्व्विद्यः कृतस्तेन वाग्देवीकुलमन्दिरं ।
परकाव्येन कवयः परद्रव्येण चेश्वराः । निर्लोठितेन स्वकृतिं पुष्णन्त्यद्यतने क्षणे ।
स्वल्पसत्त्वो नरपतिः स्वपुरख्यापनाय सः । सारापहारमकरोत्परिहासपुरस्य यत् । १६५
ख्यातिहेतुः पट्टवानां पशूनां क्रयविक्रयौ । इत्यादि यत्पत्तनेऽस्ति तत्तस्मिन्हि पुरेऽभवत् ।
राज्यप्रदेन नृपतेरत्नवर्धनमन्त्रिणा । श्रीरत्नवर्धनेशाख्यो व्यधीयत सदाशिवः ।
चित्रं नृपद्विपाः पूतभूतं यः कीर्त्तिनिर्झरैः । भवन्ति व्यसनाशक्तिपांशुस्नानमलीमसाः ।
अथ क्रमेण नृपतिर्लोभाभ्यासेन भूयसा । अधीयमानचित्तोऽभूत्प्रजापीडनपण्डितः ।
आरब्धैर्व्यसनैर्भूम्ना क्षीणकोशाः क्षणे क्षणे । देवादीनां स सर्व्वस्वं जहारायासयुक्तिभिः । १७०
कर्म्मस्थाने पुरगृह्यग्रामादिधनहारिणा । तेनाट्टपतिभागाख्यगृहकृत्याभिधे कृते ।

धूपचन्दनतैलादिविक्रयोत्थं समादधे । द्रविणं देववेश्मभ्यः क्रयमूल्यकलाच्छलात् ।
प्रत्यवेक्षां मुखे दत्वा विभक्तैरधिकारिभिः । चतुःषष्टिं सुरगृहान्मुमोचेतरदञ्जसा ।
ग्रामान्देवगृहग्राह्यान् राजा प्रतिकरेण सः । स्वयं स्वीकृत्य चोत्पत्तिं तेषां कार्षक इव व्यधात् ।
तुलां कृत्वा त्रिभागोनां वर्षदेयां सपर्षदे । भुक्तिकम्बलमूल्यादिदम्भादप्यधिकं ददौ । १७५
दिगन्तरस्थो ग्रामीणानूढभारानागतान् । तद्ग्रामैर्भारमूल्यं वर्षमेकमदण्डयत् ।
वर्षेऽपरस्मिन्निखिलान्भारमूल्यं निरागसः । तथैव संख्यया ग्राम्यान् प्रतिग्राम्यमदण्डयत् ।
इत्येषा रूढभारोढिः प्रथमं तेन पातिता । दारिद्र्यदूतीग्रामाणां या त्रयोदशधा स्थिता ।
स्कन्दकग्रामकायस्थमासवृत्त्यादिसङ्ग्रहैः । अन्यैश्च विविधायासैर्व्यधाद्ग्रामांश्च निर्धनान् ।
तुलापहारोपचयग्रामदण्डादिसङ्ग्रहैः । इत्येष तेन संवाहो गृहकृत्ये प्रवर्त्तितः । १८०
व्यधत्त पञ्च शिविरांश्च तस्मिन्भिन्नकर्म्मणि । षष्ठं तथा गञ्जवरं शकचं लवटाभिधं ।
आत्मनो निरयं मूढः सोऽङ्गीकृत्येत्युपक्रियां । भाविनामकरोद्राज्ञां पापीयस्त्वानि योगिनाम् ।
निमित्तं मण्डलेऽमुष्मिन् सविद्यानामनादरे । राज्ञां प्रतापहानौ च मान्यः शङ्करवर्म्मणः ।
मुख्येन गुणिना राज्ञां धनहान्या प्रथापथा । मूर्खेण येन कायस्था दास्याः पुत्राः प्रवर्त्तिताः ।
तथा कायस्थभोज्या भूर्जाता तत्प्रात्यवेक्षया । यथा सञ्जायते वर्षहरणादिव भूभुजाम् । १८५
तस्मिन् घोरे प्रजादुःखे कृपार्द्रः पृथिवीपतिं । पुत्रो गोपालवर्म्माख्यः कदाचिदिदमब्रवीत् ।
प्रदातुस्तात भवतः पूर्व्वं न्यासीकृतः स्थितः । वरो यः सत्यसन्धस्य सोऽधुना प्रार्थ्यते मया ।
कायस्थप्रेरणादैतैर्दैवेनाद्य प्रवर्त्तितैः । आयासैः श्वासशेषैव प्राणवृत्तिः शरीरिणां ।
न च मामास्ति तातस्य काचिल्लोकदर्थाचिता । मनागपि हितप्राप्तिरतया जनपीडया ।
अदृष्टविषयां वार्त्तां गहनां विवृणोति कः । दृष्टेऽप्यनिष्टादन्यत्र कर्म्मणा नेन दृश्यते । १९०
एकतो व्याधिदुर्भिक्षप्रमुखा विपदोऽखिलाः । प्रजानामेकतस्त्वेका लुब्धता वसुधापतेः ।
भूभुजोऽभ्यस्तलोभस्य श्रीः कैश्चिन्नाभिनन्द्यते । अकालकुसुमस्येव फलसम्भावनोज्झिता ।
दानञ्च सूनृता सूक्तिर्व्विश्वसंवननं प्रभोः । लोभः पूर्व्वं तयोरेव विनाशाय महोद्यमः ।
प्रतापमायतिं शोभां हेमन्ताहस्य वारिदः । क्षतिशेषां करोत्येव लोभश्च पृथिवीभुजां ।
दायादव्ययभीरुता परिहृतारब्धैर्भवन्त्युन्नता भृत्याः प्रत्युपकारकातरमतेः कुर्य्युर्न केऽपि प्रियं ।
राशीभूतधनस्य जीवितहृतौ शश्वद्यतेरन्निजा भूभर्तुः क्रियते द्विषेव रभसा लोभेन किं नाप्रियं । १९५
राजा संवाहनामायं नवायासो जनासुहृत् । तदेष लोभप्रभवः प्रजानाथ निवार्य्यतां ।
श्रुत्वेति राजपुत्रस्य सौजन्येनोज्ज्वलं वचः । स्मितधौताधरो राजा शनैर्व्वचनमब्रवीत् ।
तवाकृत्य विसम्वादि वचः सौजन्यपेशलं । स्मारयत्यद्य मामेतच्चित्तवृत्तिं पुरातनीं ।
कुमारभावे पूर्व्वं मे तवेवार्द्रान्तरात्मनः । प्रजावत्सलता वत्स पर्य्याप्ता पर्य्यवर्धत ।
सोऽहं घर्म्मे वहन्वर्म्म शीतेऽदत्वोष्णमंशुकं । पदातिरपपादत्रः पित्रा सञ्चारितोऽभवं । २००

मृगव्याधा हयैः सार्द्धमटन्तं कण्टकक्षतं। अकर्म्मोष्यं मां विलोक्य तमसुर्यिषुरग्रगाः।
स तानुवाच सामान्यो भूत्वाहं राज्यमाप्तवान्। काले काले सेवकानां जाने सेवापरिश्रमं।
ईदृग्दुःखमयं भुक्त्वा शास्यत्यन्यव्यथां भुवं। प्राप्तैश्वर्य्यो भवेन्मूढो गर्भेश्वरतयान्यथा।
उपायैरीदृशैर्य्योऽहं क्रतः पित्रा सुशिक्षितः। तेनापि प्राप्तराज्येन मयैवं पीडिताः प्रजाः।
गर्भवासव्यथां जातः शरीरी विस्मरेद्यथा। प्राप्तराज्यस्तथा राजा नियतं पूर्व्वचिन्तनं। २०५
त्वयैव तस्मादेकोऽद्य वरो मह्यं प्रदीयतां। प्राप्तराज्यः प्रजापीडां माकार्षीस्त्वमतोऽधिकां।
सात्वयमिति तेनोक्तः क्रतान्योन्यस्मितैर्व्विटैः। राजाप्तैर्व्वीक्षितस्त्रासीत्कुमारो ह्रीनताननः।
त्यागभीरुतया तस्मिन् गुणिसङ्गपराङ्मुखे। आसेवन्तावराहृत्तीः कवयो भल्लटादयः।
निर्व्वेतनाः सुकवयो भारिकोलवटस्त्वभूत्। प्रसादात्तस्य दीनारसहस्रद्वयवेतनः।
कल्यपालकुले जन्म तस्तेनैव प्रमाणितं। क्षीवो चितापभ्रंशाक्षैर्दैवो वाग्यस्य नाभवत्। २१०
वेष्टितश्मश्रुरुष्णीषे घ्राणस्याये प्रदेशिनी। ध्यानैकाग्रा दृगित्यासीत्सुखराजस्य मन्त्रिणः।
योऽयमार्य्योचितोवेशो दुर्नयासेविनः प्रभोः। छन्दानुवृत्त्या स प्राप नटस्येव विडम्बनां।
॥ युग्मं ॥ सोऽनुगैः सह निर्द्रोहं जघान द्रोहशङ्कया। शूरं दार्व्वाभिसारेशं शर्व्वर्य्यां नरवाहनं।
प्रजाभिशापे पतिते नृपस्योन्मार्गवर्त्तिनः। त्रिंशद्दिशाः सुतास्तस्य व्यपद्यन्तामयं विना।
वंशः श्रीर्जीवितं दारा नामापि पृथिवीभुजां। क्षणादेव क्षयं याति प्रजाविप्रियकारिणां। २१५
इत्युक्तं वक्ष्यते चाग्रे व्यक्तमेतत्तु चिन्त्यतां। प्रनष्टं तस्य नामापि यथा क्रूरेण कर्म्मणा।
नाम्ना पत्तनमित्येव प्रख्यातं स्वपुरङ्कृतं। कस्यान्यस्याभिधाध्वंसि यथा शङ्करवर्म्मणः।
स्वस्तीयः सुखराजस्य तेन द्वाराधिपः क्रतः। वीरानकाभिधे स्थाने प्रमादाद्दासदद्वधं।
तत्कोपात्स स्वयं राजा दत्तयात्रोमदोर्ज्जितः। वीरानकं समुन्मूल्य प्रविवेशोत्तरापथं।
सिन्धुकूलाश्रयान्देशाञ्जित्वा भूरिभयातुरैः। क्रतानतिर्महीपालैः प्रत्यावृत्तोऽभवत्ततः। २२०
उरशाविशतस्तस्य वास्तव्यैरारशेस्समं। निकेतहेतोः सैन्यानामकस्मादुदभूत्कलिः।
गिरिशृङ्गाधिरूढेन श्वपाकेन निपातितः। वेगवाही शरस्तस्य प्रसादादविशङ्कलं।
मुमूर्षुराप्तान् कटकं संरक्ष्य नयतेति सः। उक्त्वा कर्णीरथारूढः स्थानात्तस्मादिनिर्ययौ।
हीनदर्शनसामर्थ्यः परिज्ञाय शनैर्गिरा। क्रन्दन्त्या वपुरालिङ्ग्य स्थिताया: चामभाषितः।
पुत्रं गोपालवर्म्माख्यं न्यासीक्रत्य च रक्षितुं। शिशुदेश्यं महादेव्याः सुगन्धायाश्च बान्धवं। २२५
फाल्गुणे क्रष्णसप्तम्यां वत्सरे सप्तसप्ततौ। उत्खायमानविशिखो मार्गएव व्यपद्यत।
॥ तिलकं ॥ सुखराजादयः सैन्यं रक्षन्तः परभूमिषु। दृष्टान्मैर्गोपयन्तस्तं यान्त एवाभवन् पथि।
तं यन्त्रस्थचैस्ते मूर्द्ध्ना नयतोव्रणतावहैः। प्रतिप्रणामं प्राप्तानां सामन्तानामकारयन्।
षड्भिर्दिनैर्निजे स्थाने प्राप्ते वोल्लासकाभिधे। चक्रिरे गतसन्त्रासास्ततस्तस्यान्तसत्क्रियां।
तिस्रः सुरेन्द्रवत्याद्या राज्ञ्यो राजानमन्वयुः। वालावितुः क्रतश्चास्य जयसिंहाङ्कयः क्रती। २३०

दो लाङोवशमारस्य तं भृत्यावनुजग्मतुः । इति सन्निहिताकृष्टैः सहसाक्रियताग्निसात् ।
ततो जुगोप गोपालवर्म्मा धार्म्मिकतोज्ज्वलः । सुगन्धया पाल्यमानः सत्यसन्धो वसुन्धरां ।
मध्ये लालितकादीनां दुर्वृत्तानां वसन्नपि । अनतिक्रान्तबाल्योऽपि दुःसंस्कारान्न सोऽग्रहीत् ।
भूपालजननी भोगैर्व्वैधव्येऽधिकमुन्मदा । सा प्रभाकरदेवाख्यमचीकमत मन्त्रिणं ।
तया निर्भरसम्भोगप्रीतया स व्यधीयत । सौभाग्यपदभट्टारमौलिचक्रचयाङ्कितः । २३५
कोशाध्यक्षेण रागिण्यास्तस्या लुण्ठितसम्पदा । तदा भाण्डापुरे तेन शाहिराज्यं व्यधीयत ।
आज्ञातिक्रमिणः शाहेः कृत्वा कमलकाभिधं । तोमराणाय स प्रादाद्राज्यं लल्लियसूनवे ।
प्रत्यावृत्तोऽथ नगरं विवेश विजयोर्ज्जितः । शौर्य्यभट्टारवसतौ साभिमानः स्वविग्रहे ।
स राजजननीजारः साहङ्कारो जयार्जनात् । मानच्युतिमधिक्षेपैर्व्वीराणां व्यधितान्वहं ।
क्षुद्रेण कामिना वेश्यावेश्मनीव नृपास्पदे । तेनावृते सम्प्रवेशो नाभूदन्यस्य कस्यचित् । २४०
शनैर्व्विज्ञातवार्त्तस्य धनमानापहारकृत् । सोऽभूदुद्विग्नतोऽत्यर्थं राज्ञोगोपालवर्म्मणः ।
विद्यते यत्र गञ्जोऽस्मिंस्तत्सर्व्वं शाहिविग्रहे । गतमित्यब्रवीद्भूपं स कोषगणनोद्यतं ।
अथ गञ्जाधिपो राजभीतः खर्व्वोदवेदिनं । रामदेवाह्वयं बन्धुमभिचारमकारयत् ।
तयाभिचारक्रियया भुक्तभूर्व्वत्सरद्वयं । गोपालवर्म्मनृपतिर्ज्ज्वातदाहो व्यपद्यत ।
व्यक्तीभूतकुकर्म्मा स राजदण्डभयाकुलः । रामदेवोऽवधीत्पापः स्वयमेव स्वविग्रहं । २४५
रथ्यागृहीतो गोपालवर्म्मभ्राताथ सङ्कटः । बभूव प्राप्तराज्यः स दशभिर्द्दिवसैर्व्यसुः ।
अथ वंशक्षये वृत्ते राज्ञः शङ्करवर्म्मणः । प्रजाप्रार्थनया राज्यं सुगन्धा विदधे स्वयं ।
गोपालपुरगोपालमठगोपालकेशवान् । सा पुरस्य स्वनामाङ्कं विदधे धर्म्मवृद्धये ।
गोपालवर्म्मणो जाया नन्दा निन्द्यामयोद्भवा । शिशुरप्यभवन्नन्दा मठकेशवधारिणी ।
अन्तर्व्वल्याः क्षणे तस्मिन् पत्न्या गोपालवर्म्मणः । जयलक्ष्म्यां सबन्धाख्यां श्वश्रूः सन्तानकाङ्क्षिणी । २५०
तस्यां विपन्नापत्यायां प्रसवान्तेऽतिदुःखिता । साभूदन्वयिने राज्यं कस्मैचिद्दातुमुद्यता ।
तस्मिन् काले महीपालविग्रहानुग्रहक्षमं । तत्र तत्र पदातीनां कृत्यसंहत्यभूत्कुलं ।
ततः समाश्रितैकाङ्गा स्वयं सम्वत्सरद्वयं । सुगन्धा विदधे राज्यं समन्त्रिलेन तन्त्रिणां ।
योग्याय दातुं साम्राज्यं कस्मैचित्सा किलैकदा । सम्माय मन्त्रिसामन्तान्तस्थैकाङ्गानढौकयत् ।
अवन्तिवर्म्मवंशान्ते नप्तारं शूरवर्मणः । गर्गीयाः स्वकुटुम्बिन्याः सञ्जातं सुखवर्मणा । २५५
अनुशतो मे सम्बन्धिस्नेहादेवं भवेदिति । राज्ये निर्ज्जितवर्माख्यं कर्त्तुं तस्या मनोऽभवत् ।
॥ युग्मं ॥ तया तदुक्तं विषयव्यसनित्वेन जागरात् । रात्रौ दिवाशयतया योऽप्यनुत्थानदूषितः ।
नाम पङ्गुरिति प्राप राज्ये का तस्य योग्यता । इत्युदीर्य्याभवन् भ्रान्तो यावत्केचन मन्त्रिणः ।
संहतैर्भेदनिर्य्यातैस्तावन्निर्ज्जितवर्मजः । दशवर्षः कृतो राजा पार्थस्तन्त्रिपदातिभिः ।
॥ तिलकं ॥ ते गञ्जाधिपवाक्यानां सुगन्धोत्पाटनात्कृतं । प्रायश्चित्तममन्यन्त मानच्युतिविधायिनां । २६०

सा राजधान्याः साम्राज्यपरिभ्रष्टा विनिर्ययौ । हृताधिकारा हारस्य पतितैर्बाष्पबिन्दुभिः ।
शरणं प्रत्यभात्कृत्यो योयस्तस्याः क्रमागतः । तं तमैक्षिष्ट निर्यान्ती विपक्षैः सह सङ्गतं ।
वर्षे एकोननवते सम्भूयैकाङ्गसैनिकाः । गत्वा सुगन्धामानिन्युः पुनर्हुष्कपुरे स्थितां ।
तामापतन्तीमाकर्ण्य पार्थानुग्राहकामरात् । चैत्रान्ते तन्त्रिणः सर्व्वे निर्ययुः समरोन्मुखाः ।
ते जित्वानवते वर्षे वैशाखे भिन्नसंहतीन् । एकाङ्गान् व्यूढसङ्घातान्सबन्धुस्तान् पलायितान् । २६५
निष्पालकविहारान्तस्तैर्बद्धा सा व्यपद्यत । अनित्यपतनोच्छ्राया विचित्रा भाग्यसन्ततयः ।
अस्मिन्धनजनक्षैण्यनिमित्तं मण्डलोत्तमे । सर्व्वतो दिक्कमुत्तस्थावथानर्थपरम्परा ।
जनकः पालको भूत्वा पङ्गुर्व्वालस्य भूपतेः । सामात्योऽपीडयल्लोकमुत्कोचग्रहतत्परः ।
भूभुजो ग्रामकायस्था इवान्योन्यविपाटनं । दत्ताधिकाधिकोत्कोचा विदधुस्तन्त्रिसेवया ।
यद्राजैः कान्यकुब्जाद्या विलब्धास्तत्र मण्डले । तन्त्रिणां ऊण्डिकादानात्तद्भुजां जीविकाभवत् । २७०
विष्णुः पुराणाधिष्ठाने मेरुवर्धनमन्त्रिणा । श्रीमेरुवर्धनस्वामिनामा येन व्यधीयत ।
तदात्मजाः क्षणे तस्मिन् गहनद्रोहचक्रिकाः । चक्रुर्निगूढराज्येच्छाः प्रजायासैर्धनार्ज्जनं ।
॥ युग्मं ॥ सार्धं सुगन्धादित्येन गूढं शङ्करवर्धनः । तेषां ज्येष्ठो बद्धसख्यो मुमोष नृपमन्दिरं ।
क्षीणप्रजे क्षणे तस्मिन् क्षारपात इव क्षते । उद्दीपः प्लाविताशेषशस्याम्भोलिरजृम्भत ।
खार्य्यां सहस्रक्रेयायां दुर्लभे भोजनेऽभवत् । वर्षे त्रिनवते घोरे दुर्भिक्षेण जनक्षयः । २७५
शवैश्चिरप्रविष्टाम्बुसंसेकोच्छूनविग्रहैः । वितस्ता सर्व्वतश्छन्ना दुर्लक्ष्यसलिलाभवत् ।
विश्वतोऽस्थिमये जाते नैरन्ध्र्यात्क्षितिमण्डले । सर्व्वभूतभयादायि श्मशानैक्यमजायत ।
महार्घधान्यसम्भारविक्रयप्राप्तसम्पदः । मन्त्रिणः क्ष्मापतेः प्रापुस्तन्त्रिणश्च धनाढ्यतां ।
आधेयः क्ष्माभुजः सोऽभून्मन्त्री यस्तादृशीः प्रजाः । विक्रीय वाहयन्नासीत्तन्त्रिणां ऊण्डिकाधनं ।
अटव्यां दृष्टिसम्पाते वातवर्षैरुपद्रुतं । वहिः सर्व्वं जनं पश्यन् कश्चित्प्राप्तोष्णमन्दिरः । २८०
यथा तथा जनं दुःस्थं वीक्ष्य कापुरुषश्चिरं । राजधानीस्थितः पङ्गुः स्वसुखं बह्वमन्यत ।
॥ युग्मं ॥ तुञ्जीनचन्द्रापीडादिप्रजापालप्रियाः प्रजाः । एवं तस्मिन् क्षणे नीताः सङ्क्षयं राजराक्षसैः ।
प्रापुश्चिरमवस्थानं पार्थिवा न तदा क्वचित् । धारासम्पातसम्भूतादुद्बुदा इव दुर्दिने ।
पार्थः पितरमुत्पाट्य कदाचित् प्राभवत्स्वयं । कदाचित्सुतमुत्पाट्य तन्त्रिचक्रिकयाप्यभूत् ।
अप्रीणयत्पङ्गुवधूवडवामण्डलं युवा । सुगन्धादित्यवीजाश्वो व्यवायविधिसेवया । २८५
राज्ञ्यावप्यटदेव्याः स निर्दयैः सुरतोत्सवैः । खण्डयामास कां दूतीं साप्यस्यार्थेन गां धनैः ।
भगिनीभगसौभाग्यबद्धराज्याः स्वयं दधुः । यं पङ्गवे मनोज्ञाङ्गीं मेरुवर्धनसूनवः ।
सुगन्धादित्यभोक्तुक्त्वात्सापि देवी मृगावती । स्वयं संबुभुजेऽत्यर्थकान्ताकामितकामिनी ।
पर्य्यायेणाभवद्भृत्यः सततयोर्भोगहट्टयो । दरिद्रयोषितोरेकं भुक्तिपात्रमिवान्वहं ।
पुत्रयोराज्यलाभाय स्पर्द्धयाभ्यां स्वमन्त्रिणे । दत्ता निधुवनश्रद्धा धनदानैः सदक्षिणा । २९०

अथ पार्थं समुत्पाट्य तत्पिता पङ्गुराश्रितः । तन्त्रिभिः सप्तनवते वर्षे पौषेऽभिषेचितः ।
माघेऽष्टानवते वर्षे सोऽभिषिच्य शिशुं सुतं । चक्रवर्माभिधं राज्ये क्षीणपुण्यो व्यपद्यत ।
पैतृकं वाञ्छतो राज्यं पार्थस्यानुचरा व्यधुः । एकाङ्गैः सह संग्रामं तत्र तन्त्रिपदातयः ।
मातुर्वप्पटदेव्याः स कञ्चित्कालं शिशुर्नृपः । मातामह्याः चिल्लिकायाः पाल्यस्तस्थौ समा दश ।
बाल्यादव्यक्तदौःशील्ये तस्मिंस्तत्पालनं तयोः । निर्दोषमासीदण्डस्थफणिलालनसन्निभं । २९५
जातः पङ्गोर्मृगावत्यां नवमेऽब्देऽथ मन्त्रिभिः । चक्रवर्माणमुत्पाट्य शूरवर्मा नृपः कृतः ।
निःस्नेहा मातुलामात्याः प्रययुः स्वार्थतत्पराः । अदत्वा तन्त्रिणां देयं तस्योत्पाटनहेतुतां ।
सद्वृत्तोऽपि स स्वाम्यद्विना भूरिधनार्पणं । गुणवानिव वेश्यानां तन्त्रिणां नाभवत्प्रियः ।
वर्षे गते तमुत्पाट्य दुष्टोत्पत्तितया नृपं । बद्धार्थदं पुनः पार्थं व्यधुस्तन्त्रिपदातयः ।
अभूत्साम्बवती वेश्या साम्बेश्वरविधायिनी । पार्थप्रिया तन्त्रिचक्रसंग्रहे ज्ञातचक्रिका । ३००
कालापेक्षी चक्रवर्मा ततोऽप्यैच्छद्धनं बहु । एकादशाब्दस्याषाढे कृतोभूयोऽपि तन्त्रिभिः ।
पार्थादीन्यैः समुत्पाट्य भुक्तं चक्रिकया पुरा । तैस्तैः स्थानैश्च ये तेभ्यो जीवनान्युपलेभिरे ।
पिता भ्राता च यैरस्य राज्यादुत्पाटितोऽभवत् । सम्बन्धिभ्योऽपि यैर्दुग्धं कन्यां दत्वेतरेतरं ।
अकरोद्दृष्टदोषाणां तेषामेव स नष्टधीः । मेरुवर्धनपुत्त्राणामधिकारसमर्पणं ।
॥ तिलकं ॥ कृतोऽक्षपटलाधीशस्तेन शङ्करवर्धनः । गृहकृत्येऽप्यमत्कृत्योदाम्भिकः शम्भुवर्धनः । ३०५
पौषे तस्यैव वर्षस्य धनाभावात्स तन्त्रिणां । अदत्तऊण्डिकादेयः पलायिष्ट भयाकुलः ।
स्थिते मडवराज्यान्तस्तस्मिञ्छङ्करवर्धनः । राज्यार्थी तन्त्रिणां दूतं प्राहिणोच्छम्भुवर्धनं ।
आवर्जितैः स निखिलैरधिकोत्कोचचर्चया । वञ्चयित्वाग्रजं राज्ये तैः स्वमेवाभ्यषेचयत् ।
तीर्थस्थितः स्वकुलजां तिमिरत्ति भुङ्क्ते मौनी बकस्तिमिमुपेत्य वनान्तवासी ।
व्याधोनिहन्ति तु बकं प्रभवन्ति ते ते पात्राण्युपर्युपरि वञ्चनचञ्चुतायाः ।
भ्रष्टश्रीश्चक्रवर्माथ निशि श्रीढकवासिनः । एकदा डामराख्यस्य संग्रामस्याविशद्गृहं । ३१०
ज्ञात्वा कान्तिविशेषेण राजानं स कृताञ्जलिः । प्रणम्य ग्राहयामास संभ्रमान्निजमासनं ।
राज्यभ्रंशादिवृत्तान्तमुक्त्वा साहाय्यकार्थिनं । तं विपत्पेशलं प्रह्वो विचिन्त्योवाच डामरः ।
तन्त्रिणां वा तृणानां वा राजन्का गणना रणे । त्वत्सेवनार्थं सामर्थ्यं कश्चिच्च मम कर्मणि ।
प्राप्तोत्साहः पुनर्नूनमस्मानेव हनिष्यसि । विस्मरन्त्युपकारं हि कृतकार्या महीभुजः ।
ऊर्ध्वारोहे य आलम्बहेतुर्भूभृच्छिनत्ति तम् । कुठारिकस्तरुस्कन्धमिवाधोगमनोन्मुखः । ३१५
धीधैर्यादिप्रकर्षेण येनोपक्रियते नृपः । प्राप्तोदयः स तेनैव शङ्क्यं वेत्त्युपकारिणं ।
अस्मिन्स्थिते विपदभूदिति सञ्चिन्त्य वर्ज्यते । मूढैः परिवृढैरापत्सेवको मङ्गलेच्छुभिः ।
सम्पद्यापत्सहायस्य विस्मृतोपक्रिया नृपाः । मध्ये प्रमादस्खलितमुत्पन्नं हृदि कुर्वते ।
आमयार्तिरिपुत्रासक्षुदादौ दृष्टवैकृतान् । सद्योदया ह्रीभयेन क्ष्मापा घ्नन्त्यनुयायिनः ।

राज्ञः सतोऽपि नाश्वासो यस्येभस्येव कर्णयोः । अविशुद्धप्रकृतयो ध्वनन्ति मधुपा इव ॥ १२०

दिवसे सन्निधानेन पिशुनप्रेरणा प्रभोः । ईर्ष्यालुना स्वैरिणीव रचितुं यदि पार्य्यते ।
राजन् राजन्युपाध्यायो देवी यत्किञ्चयेद्रहः । तत्र प्रजागरः कर्तुमसमर्थ्येनैर्न शक्यते ।
कथञ्चिदङ्कि हृदये कुशलैर्व्विनिवेशिता । शिक्षा गौरखरेणेव राज्ञा विस्मार्य्यते निशि ।
स के लाभं समुत्पाद्य जिह्वया स्निग्धदीर्घया । पिपीलिका इव ग्रस्ताः क्ष्मापालैः शल्यकैरिव ।
जानन्ति हन्तुं हन्तव्यमासन्नं न तु दूरगं । एको वकः परं सत्यं द्रोहवृत्तिर्महीपतिः ॥ १२५

न नाम कण्टकाकीर्णैः कौटिल्यं लव्यतां नयेत् । कालापेक्षी क्षितिपतिः शरीरमिव जार्य्यकः ।
नमन्नपि हरिर्हन्यादाश्लिष्यन्नपि पन्नगः । विहसन्नपि वेतालः स्तुवन्नपि महीपतिः ।
अद्रोहवृत्त्या तस्मात्त्वं द्रक्ष्यस्यस्मान् सदा यदि । समेन्यसे तदेषोऽहं प्रातरेव पुरःसरः ।
तदाकर्ण्याब्रवीद्राजा लज्जास्मितसिताधरः । स्वात्मेव यूयं संरक्ष्या मम पूर्व्वोपकारिणः ।
ततो निक्षिप्य चरणं रक्ताक्ते मेषचर्मणि । कोशं चक्रतुरन्योन्यं सखड्गौ नृपडामरौ ॥ १३०

अथ सन्नद्धितासंख्यचण्डडामरमण्डलः । चक्रवर्माकरोद्यात्रां प्रत्यूषे नगरोन्मुखः ।
तस्मिन् क्षणे पुरस्कृत्य योद्धुं शङ्करवर्धनं । विनिर्ययुः सिताष्टम्यां चैत्रे तन्त्रिपदातयः ।
कालानुवृत्तिप्रच्छन्नं तेषां सम्भावनोर्ज्जितं । स तत्वरे पुरस्कर्तुं चक्रवर्मा स्वविक्रमं ।
अथ प्रवृत्ते संग्रामे घोरे पद्मपुराद्बहिः । जघान प्रेरितहयः पूर्व्वं शङ्करवर्धनं ।
हते सेनाधिपे तत्र शतधा तन्त्रिवाहिनी । प्रययौ पवनाघातप्रेरिता नौरिवार्णवे ॥ १३५

पृष्ठानुसारेणोद्युक्तो नृपस्तेषामपाहरत् । गतिं तुरगवेगेन शिरःश्रेणिं तथासिना ।
भ्रमतः समरे वधूर्व्वीरपट्टाञ्चलच्छटाः । चक्रवर्ममृगेन्द्रस्य सटापाटलविभ्रमं ।
किमन्यत्पञ्चषाण्यासन् सहस्राणि रणाङ्गने । पतितानि क्षणादेव हतानां तत्र तन्त्रिणां ।
तन्त्रिणो रणसंरम्भपरिश्रान्ताः क्षमातले । गृध्रपक्षकृतच्छाये शायिताश्चक्रवर्मणा ।
विशुद्धवंश्यैर्गुणिभिर्निहतैः संश्रितैः समं । अभूषयद्वीरशय्यां शूरः शङ्करवर्धनः ॥ १४०

उदयं संहता एव संहता एव च क्षयं । प्रयान्तः स्पृहणीयत्वं तन्त्रिणः कस्य नागमन् ।
माननीयानधृष्यांश्च महावंश्यान् महीपतीन् । अहीनिव खिलीकृत्य भिक्षयन्तः क्षणे क्षणे ।
अनयन् क्रीडया क्रीडां मायन्तो जीविकाकृते । प्रागाहितुण्डिकाः क्रूरा इव ये गर्व्ववृत्तयः ।
ते तन्त्रिणः क्षणाद्दग्धा गूढवैरविषाग्निना । विमानना विविशेन चक्रवर्ममहाहिना ।
॥ तिलकं ॥ अथ द्वितीये दिवसे भग्नानामपि तन्त्रिणां । वीरसन्नाहनं यावदकरोच्छम्भुवर्धनः ॥ १४५

तावन्मिलितसामन्तसचिवैकाङ्गलालितः । सैन्यैर्नामापथायातैर्नदद्भिर्व्याप्तदिक्पथः ।
वल्गन्मध्येऽश्ववाराणां नृत्यतेवाग्रवाजिना । वल्गाङ्केनोद्वहन्लम्बं शिरस्त्रं वामपाणिना ।
सखेदेतरहस्ताग्रवेष्टनोल्लासनस्पृशः । खड्गस्य बिम्बितार्कस्य भाभिर्द्योतितकुण्डलः ।
कवचोत्सेधसंरब्धकण्ठायासेन ताम्यता । सज्जभ्रुकुटिसम्बन्धेन वदनेन भयावहः ।

तर्ज्जयन् हतङ्कारांश्छुरिकांश्चुण्ठितापणान् । शिरोऽर्चिसंज्ञया चसत्वास्तव्यक्तसान्धनः । १५०
भेरीरवैः श्रुतिं छिन्दन् पौराशोर्घोषरोधिभिः । संग्रामजयशोभाङ्कः शङ्करवर्माविशत्पुरं ।
॥ कुलकं ॥ तस्मिन् सिंहासनं प्राज्यमाक्रम्यातिजयोर्जिते । बद्धा कुतश्चिदानिन्ये भूभटः शम्भुवर्धनं ।
राज्ञः पुरस्तात्तं शस्त्रपातभीमीलितेक्षणं । भक्तिं प्रदर्शयन् पापश्चण्डाल इव सोऽवधीत् ।
उज्झतां धर्म्ममर्य्यादां भृत्यानां जनकोपमान् । हन्तुं नरेन्द्रान्द्रोहेण प्रारब्धः शम्भुवर्धनः ।
प्राप्य निष्कण्टकं राज्यं चक्रवर्मनृपः क्रमात् । अजायत धृतोत्सेको नृशंसविषमक्रियः । १५५
स्वविक्रमकथास्तोत्ररोमन्थप्रयताहृतः । सोऽभवद्विटवन्द्यादिचाटुकारविधेयधीः ।
आत्मानं दैवतमिव स्तुतिमोहितचेतसः । जानतः प्राभवंस्तस्य विवेकविगुणाः क्रियाः ।
तस्मिन् प्रसङ्गे रंगाख्यः प्रख्यातो डोम्बगायनः । वैदेशिकोऽभवद्राज्ञा वितीर्णावसरोवहिः ।
प्राप्तान् सचिवसामन्तान्विन्यस्यन्तो यथाक्रमं । प्रतीहारानृपस्याग्रमनयन्त विविक्ततां ।
विबभौ धवलोष्णीषा सभा दीपप्रभोज्ज्वला । शेषशय्येव मणिभिः कृतालोका फणोद्भवैः । १६०
कृतावरोधधम्मिल्लमालान्दोलनकेलिभिः । प्रदोषपवनैस्तुके शिशिरैर्घ्राणतर्पणं ।
जातगीतदिदृक्षाणां गवाक्षावलयो बभुः । आसवामोदिभिर्व्वक्त्रैरवरोधमृगीदृशां ।
हारकङ्कणकेयूरपारिहार्यादिशोभिना । स्वच्छन्देनानुयातोऽथ प्राविशत डोम्बगायनः ।
हंसीनागलताचास्य सुते ललितलोचने । चक्रतुः कौतुकोद्ग्रीवां सभांश्चित्रार्पितामिव ।
तयोर्व्विलासवलितैश्चलितापाङ्गविभ्रमैः । द्वितीयपुष्पप्रकरोव्यकीर्य्यत सभान्तरे । १६५
गायनैर्जयजीवेति कृतकोलाहलैरभूत् । सदः सशब्दं कुर्व्वद्भिस्तत्तन्नृपगुणग्रहं ।
भुक्तोत्तरोचितोदश्चत्पञ्चमस्थानचारिणः । वंशरागविशेषस्य दत्ते स्थाने ततः शनैः ।
अविक्रियशिरःकम्प्रभ्रूनेत्रभ्रमशोभितः । अभिन्नइव गायन्त्यो गीतध्वनिरजृम्भत ।
अथ ताम्बूलरोमन्थत्यागनिश्चलमूर्त्तिना । जातं राजकुरङ्गेण प्रमोदास्पन्ददृष्टिना ।
गायन्त्यौ भावमालक्ष्य तस्य स्निग्धमगायतां । अधिकोद्रेचिताभिख्यं विलासस्मितविभ्रमैः । १७०
राज्ञस्तयोश्च संसक्तश्चित्तयोरितरेतरं । दृग्व्यापारैः स्वसंवेद्यैः संलाप इव पप्रथे ।
नृपं हारितचित्तन्तं विज्ञायैकः प्रियो विटः । ततः प्रसङ्गे प्रोवाच प्रीतिवृद्धिकरं वचः ।
देव गीतमिदं यातं संप्रार्थ्येते मनोरमे । कर्पूरपात्रीपतितं मैरेयमिव हारितं ।
गायन्त्योर्मार्ज्जितामेतां रागाहृत्तचतुष्किकां । अनयोः प्रतिमाव्याजाच्चुम्बतीव निशाकरः ।
करन्यस्तकपोलान्तमुद्गायन्त्याविमे ध्रुवं । कटाक्षैः कुरुते व्योम्नि वैमानिकविमोहनं । १७५
आनन्त्या स्वाश्रयां चर्चामनयोरेकयावयोः । असूयास्मितगर्भोऽयं कटाक्षः पश्य पातितः ।
गायन्त्येकानतमुखी कर्णव्यालोलकुण्डला । विपरीतरतोद्रेकक्लान्तारब्धेव शोभते ।
सफलं तस्य तारुण्यमीदृश्यो निर्ज्जने स्त्रियः । औत्सुक्यादिरहे यस्य गायन्त्येवंविधैः स्वरैः ।
उपपत्तिपरित्यक्तशास्त्रानुष्ठानमोहितैः । एकसार्थप्रयातेभ्यः कथमेका विवर्ज्यते ।

नेत्रस्य रूपं श्रोत्रस्य ध्वनिं संस्पृशतोऽम चेत्। तदङ्गस्यान्यकान्ताङ्गं स्पृशतो दुष्कृतं कुतः। ३८०
अभिलाषाङ्कुरः सिक्त इव तैर्व्विटभाषितैः। राज्ञः स्वभावलोलस्य शतशाखत्वमाययौ।
ये विस्तारितवर्णसङ्करहचः सन्दर्श्य गोत्रान्तरच्छद्मावस्थितिचापलं घनमलं पार्श्वे ध्वनन्त्युद्धताः।
नीयन्ते विपथावपातपरतां सद्योऽद्रवैस्तैः क्षणात् सिंहावारिधरैर्गमी च रभसाद्भूपालविट्‌शाविटैः।
वस्तुक्षणादनुपपत्त्युपपत्तियुक्तं कृत्वा जडान् यदि विमोहयितुं समर्थाः।
न स्युर्व्विटा अथ कुतर्कपथस्थितास्ते नित्योदयेषु निरयेषु म्टगास्तरेयुः।
सन्तोष्य हारकेयूरकुण्डलैर्डोम्बमण्डलं। समार्गत्यागराधेयः शुद्धान्तमगमन्नृपः।
कान्तोऽस्याः क्षितिवल्लभोऽयमभिधेत्युर्व्वीपतेरेकतो शृतेऽसावतिचण्डताण्डवयुतं डोम्बः स्वनामान्यतः।
मध्ये यत्किमपीति गीतिरचना काव्यं यदेतद्विदो यल्लक्ष्मीं चपयन्ति तान्निगवुधान् कीर्त्यर्थिनः पार्थिवान्। ३८५
वेश्यानुरागस्य महेन्द्रचापधाम्नो हरिद्रारसरञ्जनस्य। उपाङ्गगीतस्य च हारिणोऽपि सौन्दर्यमस्थैर्य्यहतप्रकर्षं।
दर्शनाभ्याससम्वृद्धचक्षूरागः क्षमापतिः। विनाश्वपाककन्ये ते न पुनः प्राप निर्वृतिं।
गायन्त्यौ शयनोपान्ते शनैर्व्विहितचुम्बनं। नृपं रतिसुखाभिज्ञं तं हठात्ते प्रचक्रतुः।
समागमेन नव्येन तयोर्व्वैयात्यशोभिना। चक्रे क्षपितसामर्थ्यः सलज्जोद्वहनाक्षमः।
रत्यन्तसुलभोद्भेदैर्निःसृतैः स्वेदविन्दुभिः। भाव्योऽमसङ्ग्यजं वपुस्तस्य व्यधीयत। ३९०
रागान्धेन कृता हंसी महादेवी महीभुजा। भेजे राजवधूमध्ये वालव्यजनवीजनं।
तस्यायैर्भुक्तमुच्छिष्टं ते यथा चक्रवर्मणः। नृपान्तराणामन्येषामप्यभूवन् सभासदः।
मन्त्रिणामक्षपटलप्रख्यमुख्याधिकारदा। प्रवृद्धिहेतुतां प्राप डोम्बसेवनचर्च्चिका।
सोढ्वोत्थक्षवतां केविच्छ्वपाका न व्यधुः स्वयं। केचित्त्वकुर्व्वन्नीतिज्ञा राजकार्य्याणि मन्त्रवत्।
मन्त्रिणस्तस्करा राज्ञो श्वपाकीश्वपचाः प्रियाः। किं न लोकोत्तरमभूद्भूपतेस्तस्य कर्मणः। ३९५
कतुस्नातार्तवाङ्गानि श्वपाकी स्वांशुकान्यदात्। तदाच्छादनदृप्तेच्छा मन्त्रिणः प्राविशन् सभां।
केचित् क्षितिभुजा वैरमङ्गीकृत्यापि तत्क्षणं। येर्नाशि श्वपचोच्छिष्टं तेऽभूवन सोमपैः समाः।
मण्डलेऽस्मिन् प्रभावोग्रा न देवान्यवसन् ध्रुवं। तदेष्मानि तदा नाचेच्छ्वपाकी प्रविशेत्कथं
तां रणस्वामिनं द्रष्टुं तिलद्वादश्यहे गतां। सामन्तेभ्य. साभिमानानन्वयुर्डामराः परं।
राजकोटुम्बदृप्तानां डोम्बानां निर्गता मुखात्। गाथामिवाज्ञा दुर्लङ्घ्या न केनाप्युदलङ्घ्यत। ४००
राज्ञा प्रदत्ते रङ्गाय हेलुग्रामेऽग्रहारवत्। लिलेख पट्टोपाध्यायो न यदा दानपट्टकं।
तदाक्षपटलं गत्वा रङ्गः कोपात्तमब्रवीत्। रङ्गः स हेलुदिन्नेति दासीसुत न लिख्यते।
लिलेख सोऽथ सन्त्रासाद्रङ्गभ्रूभङ्गतर्ज्जितः। कोन राजनि दुर्वृत्ते भवेन्नीतिव्यतिक्रमः।
अन्त्यागमनपापस्य पापः पृच्छन् स निष्कृतिं। विटैर्हास्यावहान्येव प्रायश्चित्तानि कारितः।
हिमेनैव हिमं शाम्येद्दुष्कृतेनैव दुष्कृतं। सोऽनुशिष्टो विटैरेवं दधत्यामरसारतां। ४०५
पवित्रास्पर्शतोऽस्पृश्या स्पर्शपापं चिकीर्षुणा। तेनादूष्यत विप्रस्य योषिन्मासोपवासिनः।

ततोऽपि पापिनोऽभूवन् केऽपि तस्मिन् क्षणे द्विजाः। तस्मादप्यग्रहारान् ये जगृहुर्गर्दभीजिन।
चक्रे चक्रमठं सोऽपि पापः पाशुपताश्रयं। तस्मिन् हतेऽर्द्धनिष्पन्नं तदधूर्यदयोजयत्।
पूर्वोपकारान् विस्मृत्य डामरांस्स निरागसः। नृपतिः श्वपचाकामी विश्वस्तांश्छद्मनावधीत्।
हन्तुं व्याजेन विश्वस्ताः केचिड्डामरतस्कराः। तस्थुस्तस्यान्तिके द्रोहच्छिद्रान्वेषःप्रतीक्षिणः। ४१०
श्वपाकीशयनावासामन्नावस्करमन्दिरे। शौचस्थितं तं निःशस्त्रं ते रात्रौ प्रापुरेकदा।
अथ तैः प्राप्तसमयैरकस्मात्तस्य सर्व्वतः। क्षिप्रं न्यपात्यताशेषशातशस्त्रपरम्परा।
सुप्तस्तटाद्ह्रदे भ्रष्ट इव निद्रालसेक्षणः। प्रबुद्धः शस्त्रपातैः स व्यमुचद्भैरवान् रवान्।
निःशस्त्रः शस्त्रमन्विष्यन् चरन्त्यान्तजनिर्झरः। अनुद्रुतोऽरिभिर्धावन् शय्यावेश्म विवेश तत्।
अप्राप्तहेतिं क्रन्दन्त्या श्वपाक्यालिङ्गिताङ्गकं। तत्कुचोत्सङ्गलग्नार्द्धं जघ्नुस्तेऽनुप्रविश्य तं। ४१५
स्वैरेव प्रेरितादारैस्ते तस्य नृपतेः किल। मुमर्षोर्जानुनी स्वैरं शिलायां समचूर्णयन्।
त्रयोदशाब्दे ज्येष्ठस्य शुक्लाष्टम्यां क्षपाक्षणे। श्वपाकभोग्यः स श्वेत्रावस्करे तस्करैर्हतः।
उन्मत्तावन्तिनामाथ पार्थसूनुर्दुराशयः। अभ्यषिच्यत वैधेयैः सचिवैः शर्वटादिभिः।
श्वपाकीकामुके पापे निहते निशि तस्करैः। प्रजानां पाप्मना सोऽभूत्पापात्पापतरो नृपः।
स्थगिता तत्कथापापस्पर्शभीत्या सरस्वती। कथंचित्त्वरस्येव सेयं प्रस्थाप्यते मया। ४२०
आसीत्पितृवधं तस्य भव्यं दुर्नृपरक्षसः। श्रीर्व्वाभिधस्य हत्याशविशिपस्येव जीवनं।
तस्यामंष्टकरघातमटाङ्कारकरोटिकाः। प्राणस्कन्दादिवाद्यशाः सभायां मुख्यमन्त्रिणः।
तेऽमात्याश्चारणत्वेन निर्लज्जास्समरञ्जयन्। कालान्तरेण यैरेव भूमिपालैर्भविष्यते।
पर्व्वगुप्तोऽभवत्तस्य सर्व्वेभ्योऽप्यधिकं प्रियः। आस्थाने नर्तनं कुर्व्वन्नपाकृतकटीपटः।
आतन्त्रिविप्लवाद्दृष्ट्वा कीटप्रायान्महीपतीन्। पर्व्वगुप्तः सर्व्वदाभूद्राज्यावाप्तिकृतोद्यमः। ४२५
तदा निगूढराज्येच्छः सख्यं मुख्यैः स मन्त्रिभिः। पीतकोशैः प्रविदधे पञ्चभिर्भूभटादिभिः।
भूभटः शर्वटश्चोजः कुमुदः सोऽमृताकरः। पर्व्वगुप्तेन सम्बन्धश्चक्रिरे कोशपीथिनः।
गवाक्षसरसि प्राप्तश्रीजलोत्रागलद्द्विजः। संग्रामडामरगृहे योरक्कः ख्यातपौरुषः।
पदातिमात्रो भूपेन दृष्टशौर्य्यः स संयुगे। महोदरो महाकायः प्रापितो मुख्यमन्त्रितां।
यादृशी तेन ददृशे देवी श्रीः सरसोऽन्तरे। तादृग्रक्कजया देवीत्यभिधानेन निर्ममे। ४३०
राज्यं निष्कण्टकं कृत्वा धूर्तेनापजिहीर्षुणा। प्रेरितः पर्व्वगुप्तेन भूभुक्चक्रे कुलक्षयं।
तेन लुण्ठितसर्व्वस्वः पार्थस्तस्थौ कलत्रवान्। श्रीजयेन्द्रविहारान्तः श्रमणैर्दत्तभोजनः।
पितृव्यान् शङ्करवर्म्मादीन् भ्रातॄन् दारान्निरोध्य सः। तत्र स्थितानशनैस्तत्कान्तास्तनकारयत्।
उद्यतः पितरं हन्तुं मन्त्रिणोऽनुमतप्रदान्। बद्धपटान् व्यधाद्बद्धनिगडान्नितरान् पुनः।
एकदा मन्त्रिसामन्ततन्त्रिकायस्थसैनिकाः। पार्थं तदाज्ञामासाद्य निशायां पर्य्यवेष्टयन्। ४३५
स्नानक्षीणां वरां पत्नीं रुद्धद्वारां निपात्यते। आलिङ्ग्यमानां क्रन्दद्भिस्तर्णकैरिव दारकैः।

केशानालम्ब्य कर्षन्तः शर्करोत्पाटिताङ्गकं । विपन्नं गोकुलाद्दान्तमिव निर्हृत्य तं गृहात् ।
चुत्क्षामरुद्धं क्रन्दन्तं निजघ्नुर्नग्नविग्रहम् । चण्डालादत्र निःशल्यं कुमुदाद्या नृपप्रियाः ।
पितरं निहतं श्रुत्वा राजा सञ्जातकौतुकः । प्रातः स्वसर्ववैः सार्द्धं द्रष्टुं वा चष्टोऽथ दृष्टवान् ।
अत्राङ्गेऽस्य प्रहारोऽयं मद्दत्त इति वादिनः । तस्याग्रे राजपुरुषाः शशंसुर्निजविक्रमं । ४४०
न्यक्कृत्य स्वीकृतो राज्ञा तदा तद्रञ्जनोद्यताः । अचूचुदत्पर्वगुप्तो देवगुप्ताभिधं सुतं ।
पार्थस्य निहतस्याङ्गे सोऽचिरात्क्षुरिकां ततः । रञ्जितो येन भूपालो जातहासोऽभवच्चिरं ।
डामरैर्लुण्ठितो देशः प्रणाशे चक्रवर्मणः । उत्थाप्य पापकायस्थांस्तेन भूयोऽपि दण्डितः ।
सम्प्रेरितः कुसचिवैः शस्त्राभ्यासञ्चकार सः । पाटयन् क्षुरिकाघातैः कोट्टवीतनकोटरं ।
गर्भिणीनाञ्च जठरं गर्भान् द्रष्टुमपाटयत् । काठिन्यस्य परीक्षार्थमङ्गकर्मकृतामपि । ४४५
प्रतिग्रहाग्रहाहोराद्यदा बधभयाद्द्विजाः । प्रत्यगृह्णन्नग्रहारांस्तस्मादपि नृपाधमात् ।
क्रूरपापानुरूपेण क्षयरोगेण पार्थिवः । तेनानुबाध्यमानोऽभूदपर्य्यन्तव्यथातुरः ।
व्यथया तस्य तादृश्या प्रजा एव न केवलं । तुतुषुर्निजशुद्धान्तमहिष्योऽपि चतुर्दश ।
अथान्तःपुरदासीभिर्यः कुतश्चिदुपाहृतः । क्षितिपालात्प्रजातोऽयमिति प्रख्यापितो मृषा ।
तं शिशुं शूरवर्माख्यं विनिवेश्य नृपासने । हस्ते निक्षिप्य सामन्तसचिवैकाङ्गतन्त्रिणं । ४५०
कम्पनाधिपतेर्बद्धद्वेषः कमलबर्धनात् । विभ्यन्मडवराज्यस्था डामरोत्पाटनक्षमात् ।
आसन्ननिरयप्राप्तिः पितृहा पार्थिवाधमः । शुचौ पञ्चदशाब्दस्य प्रजापुण्यैः क्षयं ययौ ।
॥ चतुर्भिः कुलकं ॥ पितृघातिसुतो राजा जयस्वामिविरोचनं । आषाढशुक्लसप्तम्यां शिशुर्द्रष्टुं विनिर्ययौ ।
नवा विरेजे राजश्रीर्बालस्य पृथिवीपतेः । कृपाणवेगिलिता छत्रचामरहासिनी ।
अत्रान्तरे जवायातैश्चारैरावेदितश्रुतः । सामन्तैर्नगरोपान्तं प्राप्तः कमलबर्धनः । ४५५
एकाङ्गतन्त्रिसामन्तस्यालहारकसादिभिः । नगरं प्रविशन् श्रान्तः सम सैन्यैररुध्यत ।
विरुद्धडामरानीकान् युद्धा मार्गेषु निर्गतः । श्रान्तोऽप्यसौ वैरिसेनामजय्यद्विक्रमोर्जितः ।
सहस्रमश्ववाराणां विद्राव्य तुरगैर्मितैः । राजधानीमसंरुद्धः प्रविवेश ततः क्षणात् ।
तं लब्धजयमाकर्ण्य सैन्यैस्त्यक्तं पलायितैः । एकाकिनं काप्यनयज्जननी शिशुभूपतिं ।
प्राक्कर्मभिर्मोहितो वा प्रेरितो वा कुमन्त्रिभिः । नाभूत्सिंहासनारूढो मूढः कमलवर्द्धनः । ४६०
तदानीं स्वगृहान् यातो राज्यकामोऽन्यवासरे । सङ्गृह्य द्विजान् सर्व्वानचूचुददनीतिवित् ।
प्रौढं शक्तञ्च कुरुत क्ष्मापं कञ्चित् स्वदेशजं । मामेव कुर्य्युः सामर्थ्यादिति मूढः स चिन्तयन् ।
एकाकिनीं रहः क्षीवां लब्ध्वा दुर्लभयोषितं । अप्रौढोऽनुपभुज्यान्यद्दिने दूत्यार्थयेत यः ।
विभूतिं स्वभावाप्तां यश्च सन्त्यज्य तत्क्षणं । भीत्या कामयतेऽन्येद्युः प्रोच्यस्ताभ्यां परोऽस्ति कः ।
॥ युग्मं ॥ अथोत्पलकुले छिन्ने स्थूलकम्बलवाहिनः । अग्रकोणाक्षनिभा विप्राः समगंसत गोकुले । ४६५
धूमनिर्दग्धकूर्च्चानां राजशोभांश्चिकीर्षतां । राज्यव्यवस्थापन्यासस्तेषां चिरमवर्द्धत ।

वैमत्येन मिथस्तेषां नान्यः कोऽप्यभ्यषिच्यत । कूर्चाभाषणनिष्ठ्यूतैः स्वकूर्चष्ठीवनैः परं ।<br>
राज्यार्हान्वीक्षिभिर्व्विप्रैः प्राप्तः स्वस्तिकृतये । अवार्य्यतेष्टकाघातैर्मुग्धः कमलवर्धनः ।<br>
पञ्चषाणि दिनान्येव यावत्तस्थुर्द्विजातयः । काहलाकांस्यतालादिवाद्यकोलाहलाकुलं ।<br>
उत्पताकध्वजच्छत्रशोभियुग्यार्पितासनं । अशेषं पारिषद्यानां तावत्तत्रामिलद्दलं । ४७०<br>
॥ युग्मं ॥ स्वपत्नीं बन्धकीभूतां निवान्यत्रशवर्त्तिनीं । वीक्ष्य राजश्रियं शोचन्नासीत्कमलवर्धनः ।<br>
पितृघातित्रधूस्कन्नपुत्रराज्यार्थिनी ततः । प्राहिणोद्राजपुरुषान् पार्श्वं प्रायोपवेशिनां ।<br>
पिशाचकपुरे ग्रामे वीरदेवाभिधस्य यः । कुटुम्बिनः कामदेवनामा सूनुरजायत ।<br>
स शिक्षिताचरो लब्ध्वा मेरुवर्धनमन्दिरे । बालाध्यापकतां स्नानशीलादिगुणभूषितः ।<br>
क्रमाद्गञ्जाधिकार्य्यासीदथ तस्यात्मजः शनैः । लेभे गञ्जाधिकारित्वं राज्ञः शङ्करवर्म्मणः । ४७५<br>
यः प्रभाकरदेवोऽपि सुगन्धाकन्नकामुकः । लक्ष्म्या सरस्वतीद्वेषाद्देशविस्रवतो गतः ।<br>
विद्वान् यशस्करो नाम तत्पुत्रोऽत्यन्तदुर्गतः । सख्या फल्गुणकाख्येन समं देशान्तरं गतः ।<br>
सुस्वप्नदर्शनैः पीठदेव्याशीर्भिश्च हर्षुलः । तस्मिन् प्रसङ्गे सोत्साहः प्रत्याहृत्तो निजास्पदं ।<br>
पितृघातिवधूदूतैर्यातैर्बोधयितुं द्विजान् । मध्ये गृहीत्वा वाग्मित्वात्प्रविवेश तदन्तिकं ।<br>
॥ कुलकं ॥ दृष्ट्वैव तं दैववशादेकमत्यस्पृशो द्विजाः । ध्वनिं राजायमेवास्त्वित्युच्चकैरुदचारयन् । ४८०<br>
अथाभ्यषिच्यत क्षिप्रं विप्रैरेत्य यशस्करः । क्ष्माधृतिः प्रौढसामर्थ्यैः सानुमानिव तोयदैः ।<br>
दग्धं वेणुवनं परस्परमहासंघर्षजेनाग्निना तन्मूलोद्धृतिरक्षमा चणधृतोद्रेकेण सम्पादिता ।<br>
वात्यावेगविपाटितं विटपिनं प्राप्तं कुतश्चिद्दृढां रूढिं सेतुमहो महाद्रिकुहरे धात्रा न किं सूत्रितं ।<br>
भृत्यप्रेरणया वंशस्यार्थजः स्वन्नचेद्दहेत् । तत्पुत्रोत्पाटनं कुर्य्याच्चेत्कमलवर्धनः ।<br>
अनुच्चकुलजातस्य दरिद्रस्याटतः क्षितिं । तद्यशस्करदेवस्य राज्यप्राप्तिः कथम्भवेत् ।<br>
पद्भ्यां व्रजन्निरनुगो ददृशे जनेन यस्तत्क्षणं निखिललोकसमानकीर्तिः ।<br>
साम्राज्यरम्यममुमीक्षितुमास्त नारीदृक्श्रीरजस्रत्रकितो नरनाथमार्गः । ४८५<br>
नृपतिवसतिं प्रत्यागच्छन् यशस्करभूपतिः पुरमृगदृशामाशीर्म्मध्ये वचोऽपि विवेचितं ।<br>
स्तिमितवलितापाङ्गं शृण्वन्निमीलदहङ्कृतिः कृतपरिकरस्तच्छ्रैजेशे प्रजापरिपालने ।<br>
प्रतिमितरविदीपोद्भासिभ्राजभ्रातपत्रप्रचयरजतपात्रासञ्चितारात्रिका श्रीः ।<br>
अथ मुखरितमाशीर्मङ्गलैरङ्गनानामवनिहरिणधामा राजधाम प्रपेदे ।

इति श्रीकाश्मीरिक महामात्यचम्पकप्रभुसूनोः कह्लणस्य कृतौ राजतरङ्गिण्यां पञ्चमस्तरङ्गः । राजानः आदितः ॥ ९९ ८० ॥

अधिकाष्टौ समाशीतौ मासेषु च चतुर्ष्वगात् । कल्पपालाष्टकं रथ्याह्वतस्तीक्षचिवा अपि ।

## ॥ अथ षष्ठस्तरङ्गः ॥



नेदं पर्णसमीरणाशनतपोमाहात्म्यमुग्रोरगौ पश्यैतावत एव संप्रति कृतौ तन्माश्रहन्ती वहिः।
प्रेम्णैवार्द्रमिदं चराचरगुरोः प्राप्येयमात्मस्तुतीरेवं देववधूमुखाच्छ्रुतिसुखाः शृण्वन्नपर्णावतात्।
इच्छन्नलङ्घनीयत्वमथ कक्ष्यां विलङ्घयन्। प्रतीहारान् द्विजा दूरं वार्य्यन्तामिति सोऽन्वशात्।
वेत्रिवित्रास्यमानांस्तु तान् कृताञ्जलिरब्रवीत्। राज्यप्रदास्थ पूज्यास्थ यूयं नो दैवतैः समाः।
राज्यदानाभिमानेन वर्त्तिष्यत मदोद्धताः। यत्कार्य्यकालादन्यत्र नागन्तव्यं मदन्तिकं।
तदाकर्ण्याखिलो लोकस्तमदृश्यममन्यत। व्यस्मरत्सहसंवासमसम्भूतमपि लाघवं। ५
खिलीभूताः पूर्व्वराजव्यवस्था प्रतिभाबलात्। उन्नीतवान्स सुकविः प्राक्कविप्रक्रिया इव।
अचौराभूत्तथा भूमिर्यथा रात्रौ वणिक्पथाः। अतिष्ठन्विवृतद्वारा मार्गाश्चाविघ्निताध्वगाः।
प्रत्यवेक्षापरे तस्मिन्नासीत्सर्व्वापहारिणां। कृष्यध्यक्षत्वमुत्सृज्य कृत्यं नान्यन्नियोगिनां।
ग्राम्याः कृषिपराधीना नापश्यन् राजमन्दिरं। विप्राः स्वाध्यायसंसक्ता नाकुर्व्वन् शस्त्रधारणं।
न विप्रगुरवः साम गायन्तो मदिरां पपुः। न तापसाः पुत्त्रदारपशुधान्यान्यढौकयन्। १०
न मूर्खा गुरवो मत्स्या पूपयागविधायिनः। चक्रिरे स्वकृतैर्ग्रन्थैस्तर्कागमपरीक्षणं।
नादृश्यन्त च गेहिन्यो गुरुदीक्षोत्थदेवताः। कुर्व्वाणा भक्तिशीलश्रीनिषेधं मूर्धधूननैः।
कार्त्तान्तिको भिषक्सभ्योगुरुर्मन्त्री पुरोहितः। दूतः स्थेयो लेखको वा न तदाभूदपण्डितः।
प्रायोपवेशाधिकृतैर्बोधितेन महीभृता। प्रायोपविष्टो निकटं प्रापितः कश्चिदब्रवीत्।
अहमाढ्योऽभवं पूर्व्वं वास्तव्योऽत्र महीपते। निष्किञ्चनत्वं शनैरागच्छन्दैवयोगतः। १५
उत्तमर्णैः पीडितस्य प्रवृद्धर्णस्य तस्य मे। निश्चयोऽभूदृणं हित्वा परिभ्रान्तुं दिगन्तरे।
अथ विक्रीय सर्व्वस्वमृणं शोधयता मया। महाधनाय वणिजे विक्रीतं निजमन्दिरं।
भार्य्यामुद्दिश्य भर्तव्यामेकएव तु वर्जितः। सोपानकूपा विक्रीतान्महतो वेश्मनस्ततः।

निदाघे पुष्पताम्बूलीपर्णाद्यत्रातिशीतले । न्यस्यद्भिर्मालिकैर्दत्तात्सा जीवेच्छाटकादिति ।
ततोदिगन्तराक्रान्त्वा विंशत्या वत्सरैरहं । लब्धाल्पवित्तः सम्प्राप्तो जन्मभूमिमिमां पुनः । २०
अन्विष्यता मया साध्वी स्ववधूर्दृष्टेऽथ सा । विवर्णदेहा जीवन्ती प्रेष्यत्वेनान्यवेश्मसु ।
किं दत्तजीविकापि त्वमीदृशीं वृत्तिमाश्रिता । मयेति सा सुदुःखेन पृष्टा स्वोदन्तमब्रवीत् ।
सोपानकूपं सम्प्राप्ता त्वयि याते दिगन्तरं । लगुडैस्ताडयित्वाहं वणिजा तेन वारिता ।
तदन्या कास्ति मे वृत्तिरित्युक्त्वा विरराम सा । तदाकर्ण्य निमग्नोऽहमन्तरे शोककोपयोः ।
कृतप्रायोपवेशोऽथ स्थेयैस्तैस्तैः पदे पदे । प्रत्यर्थिनो दत्तजयैः किमप्यस्मि पराजितः । २५
जडत्वादेषि न न्यायं न विक्रीतो मया पुनः । सोपानकूप इत्यस्मिन्नर्थे प्राणा इमे पणः ।
सोऽहं विपद्ये क्षीणार्थो द्वारि शास्तु तव ध्रुवं । वृजिनादस्ति चेद्भीतिर्वस्तु निर्णीयतां स्वयं ।
राजेति तेन विज्ञप्तो दत्त्वा धर्मासनं स्वयं । समाहूयाखिलान् स्थेयानासीत्तत्त्वं विचारयन्
स्थेयास्तमूचुर्व्वैङ्कशो विपार्थीयं पराजितः । शाब्दादगणयन्न्याय्यं दण्ड्यो लिखितदूषकः ।
सोपानकूपसहितं विक्रीतं गृहमित्यथ । राजा विक्रयपत्रस्थान् स्वयं वर्णानवाचयत् । ३०
ततोऽधिगतमित्येव सभ्येषु निगदत्स्वपि । अन्तरात्मा जगादेव नृपतेरर्थिनो जयं ।
मुहूर्तमिव सञ्चिन्त्य राजान्याभिरभूच्चिरं । कथाभिरतिचित्राभिर्मोहयन्सभ्यमण्डलं ।
कथान्तराले सर्व्वेभ्यो गृह्णन् रत्नानि वीक्षितुं । हसन्प्रत्यर्थिनो हस्तादुपादत्ताङ्गुलीयकं ।
क्षणादिवाखिलैः स्थेयमित्यमेवेति सस्मितं । वचो ब्रुवाणः प्रययौ पादचालनकैतवात् ।
अभिज्ञानाय तत्रस्थः स वितीर्याङ्गुलीयकं । भृत्यमेकं वणिग्वेश्म प्राहिणोद्दत्तवाचिकं । ३५
स वणिग्गणनाध्यक्षं ययाचे साङ्गुलीयकः । यत्राब्दे पत्रमुत्पन्नं गणनापत्रिकां ततः ।
निर्णयेऽस्य तथा कृत्यमस्ति भाण्डपतेरिति । श्रुत्वादाद्गणनाध्यक्षस्तां गृहीताङ्गुलीयकः ।
दीनाराणां दशशती तस्यां भूभृदवाचयत् । व्ययमध्येऽधिकरणलेखकाय समर्पितां ।
तस्मै मितधनार्हाय बहुमूल्यार्पणान्नृपः । रेफे सकारं वणिजा कारितं निश्चिकाय सः ।
सभायां तत्प्रदर्श्याथ पृष्ट्वा दत्त्वाभयञ्च ते । आनीय लेखकं सभ्यान्सञ्जातप्रत्ययान् व्यधात् । ४०
सभ्यैरभ्यर्च्यमानेन राज्ञा सार्थं वणिग्गृहं । वितीर्णमर्थिनो देशात्प्रत्यर्थी च प्रवासितः ।
कृताह्निकं नोक्तुकामं तं दिनान्ते च भूपतिं । अकालावेदनाद्बिभ्यत्क्षत्ता जातु व्यजिज्ञपत् ।
देवः समाप्तकृत्योऽद्य विज्ञप्तौ स्वस्तव क्षणः । इत्युक्तो दर्शने प्राणत्यागी विप्रो बहिःस्थितः ।
दत्तप्रवेशादेशोऽथ रुद्धसदेन भूभुजा । द्विजः प्रविष्टः पृष्टोऽथ तीव्रार्तिरिदमब्रवीत् ।
सुवर्णरूपकशतं भ्रान्त्वा देशान्तरेऽर्जितं । गृहीत्वा श्रुतसौराज्यः स्वदेशमहमागतः । ४५
त्वयि राजनि निश्चौरैरध्वभिर्विशतः सुखं । क्रोशोऽभवन्नगरतो मे दिनान्ते श्राम्यतः स्थितिः ।
दीर्घाध्वलङ्घनक्लान्तस्तत्राहमकुतोभयः । मार्गारामतरोर्मूले त्रियामामत्यवाहयं ।
वितानं ग्रन्थिबद्धन्तदुत्थायाघोरपतन्मम । अरघट्टे समीपस्थे कक्षयोगादलक्षिते ।

तस्मिन्दुरवरोहेति निर्व्विसुखाञ्जहद्वपुः । सोऽहं हारितसर्व्वस्वः शोचन् दृष्टश्चिरं जनैः ।
एकोऽध्यवसितः कोऽपि साहसी पुरुषोऽब्रवीत् । मह्यं दापितवित्ताय किन्ददासीति मां ततः । ५०
तमस्म्यवोचं विवशस्तस्यार्थस्यास्मि कः प्रभुः । तुभ्यं यद्रोचते मह्यं तत्ततो दीयतां त्वया ।
अवरुह्याधिरूढोऽथ रूपकेभ्यो द्वयं मम । स प्रादात् स्पष्टमेवाष्टानवतिं स्वीचकार तु ।
व्यवहारा वचोनिष्ठा एका राज्ञि यशस्करे । निन्दन् व्यवस्थां तां लोकैर्न्यक्कृतोऽस्मीति वादिभिः ।
उपचारोक्तिसारस्य च्छलहारितवेतनः । सोऽहं जहास्यसून्द्वारे दुर्व्यवस्थापकस्य ते ।
पुंसस्तस्य स राज्ञाथ पृष्टः प्रकृतिनामनो । वदन्प्रत्यभिज्ञैव ममास्तीत्यभ्यभाषत । ५५
प्रातस्त्वं वेप्सितावाप्तिं करिष्यामीति भूभुजा । प्रतिज्ञाय कथञ्चित्स स्वपार्श्वे कारितोऽशनं ।
लवणोत्सोकसां दूताह्वतानां स विशां ततः । स्थितमन्तर्द्दिजोऽन्येद्युस्तं राज्ञेऽदर्शयन्नरं ।
पृष्टः स राज्ञा विप्रेण यथैवोक्तं तथैव तत् । सर्व्वमूचे वाक्प्रतिष्ठं व्यवहारमुदीरयन् ।
सत्यवाक्पारतन्त्र्यस्य वस्तुवृत्तस्य चान्तरं । अलक्षयन्तः प्रैक्षन्त दोलाकुलधियो धरां ।
धर्म्मासनस्थो राजाथ रूपकाणामभाषत । तमष्टानवतेः पात्रं विप्रमन्यं द्वयस्य तु । ६०
अनुयोक्तुञ्जगादापि दुःसंचिन्त्या महात्मनः । धर्म्मस्याधर्म्ममुद्वृत्तं निहन्तुं धावतो गतिः ।
सायं हुताशं प्रविशन्नमयं चेन्दुमण्डलं । स्वतेजसा संविभजन् प्रदीपैर्ज्योत्स्नयाप्यसौ ।
तदुत्थाय यथाभानुर्निहन्ति ध्वान्तमुद्धृतं । अनन्यकर्म्मा धर्म्मोऽयं तथाधर्म्मं व्यपोहति ।
॥ युग्मं ॥ दुःसंलक्ष्यस्तु धर्म्मोऽसावधर्म्मं बाधतेऽञ्जसा । तिष्ठन्नित्यमधिष्ठाय दाह्यं काष्ठमिवानलः ।
ददाति यद्भवान् दत्तां तदित्याद्युक्तमुद्धतः । तुभ्यं रोचतइत्यादिवचोऽस्य निःसृतं तदा । ६५
रुचितास्य बभूवाष्टानवतिर्लोभिनोऽस्य तां । नादादस्मायरुचितं रूपकाणां द्वयं ददत् ।
इत्यादिसूक्ष्मेक्षिकया धर्म्माधर्म्मान्तरं विदन् । प्रत्यवेक्षापरः क्ष्मामभ्यधात्कृतयुगोदयं ।
इत्यज्ञानं स विनयन् हास्योऽभून्निजदुर्नये । परस्योपदिशन् पथ्यमपथ्याशीव रोगहृत् ।
श्रोत्रियेणैव तेनापि स्मृदम्भः शौचशालिना । डोम्बोच्छिष्टभुजोऽमात्याः पार्श्वान्न परिजिह्रिरे ।
यथोत्तरं संश्रितार्थैरन्योन्यं पृष्ठपातिभिः । नगराधिकृतैश्चक्रे चतुर्भिः सोऽर्थसङ्ग्रहं । ७०
लेभिरे निधनन्तस्मात्सत्यङ्कारात्पदातयः । श्रीरणेश्वरपीठाद्यन्यस्तखड्गादपि प्रभोः ।
स ज्येष्ठे भ्रातरि मृते तथाभूदुदितस्थिरं । तदुपज्ञैर्यथाप्राज्ञैस्तत्रोत्प्रेक्षितसार्पणं ।
नीतस्य मण्डलेशत्वं वेलावित्तस्य भूभुजा । देवीः कामयमानस्य चक्रे गजनिमीलिका ।
रागाच्छुद्धान्तकान्तानां मूर्द्धानमधिरोपिता । लल्ला नामाभवद्देश्या तस्य वैवश्यकारिणी ।
अवकाशः सुवृत्तानां हृदयान्तर्न योषितां । इतीव विहितौ धात्रा सुवृत्तौ तद्बहिः कुचौ । ७५
उत्तमाधमसंसक्तो जानन् सदृशवृत्तिताम् । नारीणां शुचिनाम्नानामङ्गनात्वे व्यधाद्विधिः ।
सा लालितापि राज्ञा यल्लला ललितलोचना । चण्डालयामिकेनागाद्यामिनीषु समागमं ।
॥ युग्मं ॥ सुभगङ्करणं किञ्चिच्चण्डालतरुणेऽभवत् । तं यत्प्रभावविवशा भेजे राजवधूरपि ।

सा वा चण्डालकुलजा स वा कार्म्मणकर्म्मवित्। अन्यथा सङ्गमः किं स्यादसम्भाव्यस्तथाविधः।
सोऽभूत्केन प्रकारेण तया सह समागतः। इत्येष लेभे वृत्तान्तः प्रतिभेदं न कुत्रचित्। ८०
केवलं प्रत्ययवार्त्ताद्दृक् पापिनोः प्रेम तत्तयोः। दृग्व्यापारेक्षणात्क्षिप्रं हाजिनाख्योऽधिकारिणः।
तमर्थमथ तथ्येन वीक्ष्य प्रणिधिभिर्नृपः। प्रायश्चित्तानुचरणकामः कृष्णाजिनं दधौ।
कुपितोऽपि स यत्नेनां न्यवधीद्रागमोहितः। तेनैवागात्पुरोभागिवितर्कातङ्कपात्रतां।
डोम्बोच्छिष्टानुगासङ्गादशुचित्वं यशस्करे। संक्रान्तं कुष्ठिसंस्पर्शात् कुष्ठं दुःखमिवाभवत्।
सामान्येन सता कैश्चित्सदृशैः शुभकर्म्मभिः। जन्मान्तरीयैः साम्राज्यं मया प्रापीति चिन्तयन्। ८५
साम्राज्यकामोऽपि नृपो भाविष्वपि स जन्मसु। युक्त्या प्रादान्निरातङ्कां राजलक्ष्मीं द्विजन्मने।
भूभुजा दानशौण्डेन पैतृके स्थण्डिले कृतः। छात्राणामार्य्यदेश्यानां तेन विद्यार्थिनां मठः।
मठाधिपतये तत्र च्छत्रचामरहासिनीं। स नरेन्द्राश्रितां प्रादात्स्वकान्तःपुरवर्जितां।
वितस्तापुलिने राजा साशोपकरणान्वितान्। ब्राह्मणेभ्यः सोऽग्रहारान् पञ्चपञ्चाशतन्ददौ।
अथ जातोदरव्याधिर्न ज्ञातो नायमित्यसौ। जानन् संग्रामदेवाख्यं परिवर्ज्य निजात्मजं। ९०
समर्प्य सचिवैकाङ्कमामन्त्रानभ्यषेचयत्। रामदेवात्मजं राज्ये वर्णटं प्रपितृव्यजं।
शक्ये राज्यादपाकर्तुं शिशावनभिषेचिते। निराशाः समपद्यन्त तदा राज्यजिहीर्षवः।
स पर्व्वगुप्तकौटिल्यप्रयुक्तैर्हृदयोन्मुखः। विपाककालस्तत्राक्ष्णि भङ्गोन्मुखइवाभवत्।
राजधानीस्थितस्यापि वर्णटो राज्यदायिनः। आरोग्यवार्तयाप्यासीन्मुमूर्षोरनिरीक्षकः।
ततः सानुशयो राजा ताम्यन् प्रैर्य्यत मन्त्रिभिः। राज्यं सङ्ग्रामदेवाय दातुमाश्रमकारिभिः। ९५
राजाज्ञया निशामेकां सङ्कोऽष्टस्तम्भमण्डपात्। वहिर्दत्तार्गलात्प्रातर्व्वर्णटो निरवर्त्स्यत।
भयात्प्रजागरादापि तद्भृत्यानां विवेकिनां। आस्थानमण्डपं प्राप पायुचालनभूमितां।
एकाहराजपुरुषस्तदासिं विजयेश्वरे। श्रीडाहदेवप्रसादाख्यो राजवीजो समर्पयत।
अथाभिषिच्य सङ्ग्रामदेवं तीव्रीभवद्व्यथः। स राजधान्या निर्गत्य मर्त्तुं निजमठं ययौ।
धीः केशश्मश्रुवपने शिरःशाटकवर्जनं। काषायग्रहणोद्वेगः शस्त्रत्यागग्रहस्य यः। १००
राजभृत्यैः प्रतिज्ञातः स तस्मिन्निश्चितच्ये। जीवत्येव कृतज्ञत्वव्यञ्जकैः परिवर्जितः।
॥ युग्मं ॥ द्वे सहस्रे सुवर्णस्य सार्द्धं बद्धा पटाञ्चले। योनिर्जगाम राजासौ मुमूर्षुर्निजमन्दिरात्।
पञ्चभिः पर्व्वगुप्ताद्यैर्व्वीतकं तस्य मन्त्रिभिः। हृतं सजीवितस्यैव विभक्तान्योन्यमग्रतः।
॥ युग्मं ॥ विवेष्टमानः शय्यायां व्याधिदग्धान्तरो नृपः। तिष्ठन्मठाङ्गनकुटीगर्भे ध्वान्तान्धकारिते।
अजातमन्त्रिङ्घ्रोऽग्रे पश्यन् द्रोहपरान्निजान्। प्राणैरहानि द्विचाणि नयदानिरमुच्यत। १०५
तदा सुहृद्बन्धुभृत्यवेलावित्तैः कृतत्वरैः। जिहीर्षुभिश्च साम्राज्यं विषन्दत्वा विपादितः।
॥ तिलकं ॥ अवरोधवधूमध्यात्सती तं पतिमन्वगात्। एका त्रैलोक्यदेव्येव स्वप्रभेव विरोचनं।
वर्णाश्रमप्रत्यवेक्षा बद्धकक्ष्यः क्षितीश्वरः। चक्रभान्वभिधं चक्रे मेलके द्विजतापस।

हतात्मा चारमालोक्य राजा धर्म्मवधस्मरः । निजपादाग्रपातेन ललाटतटमक्षुणत् ।
तन्मातुलेन तद्दोषादीरमाणेन योगिना । सान्धिविग्रहिकेणाथ स क्षेमैव न्यग्रहात । ११०
पूर्व्वाचार्य्यप्रभावेण क्षमाहात्म्याधिरोपणं । प्रख्यापयद्भिर्गुरुभिः अङ्कुयेति यदुच्यते ।
तत्ख्यापितेव सप्ताहात्स विपन्न इति श्रुतिः । दीर्घव्याधिहते तस्मिन्नुपपत्तिः कथम्भवेत् ।
अथामयान्तरे वाभूत्ता वार्तेत्युच्यते यदि । वर्णटाद्यभिशापोऽपि तदायात्यत्र हेतुतां ।
भुक्तैश्वर्य्यो नवसमाश्चतुर्व्विंशे स हायने । मासि भाद्रपदे कृष्णतृतीयस्यां व्यपद्यत ।
पितामही शिशोर्गोप्त्री विनिवेश्य नृपासने । भूभटाद्यैः समं प्रादात्पर्व्वगुप्तोऽथ पञ्चभिः । ११५
क्रमात्समं पितामह्या तान् व्यापाद्येतरान् बली । एकः स एवमाक्रान्तः प्रबभूव नृपास्पदे ।
स पार्थिवत्वमन्त्रित्वमिश्रया चेष्टया स्फुटं । राजा राजानकस्येति मिश्रामेवं धियं व्यधात् ।
सेवमानः स्वयं बालभूपं भोज्यार्पणादिभिः । ऋजूनां प्रत्यभात्पर्व्वगुप्तो द्रोहवहिष्कृतः ।
यान् द्रोहभीरून् सन्धाय्य संविभेजे वशस्करः । तस्य तत्तनयोच्छेदे त एवासन् प्रयोजकाः ।
करभाङ्कहरापित्रे ममुषि क्षितिपालवत् । स ददौ कुङ्कुमालेपं वर्च्चः शाद्वलविस्तृते । १२०
विभ्यदेकाङ्गसङ्घातात्प्रकटोत्पाटनाक्षमः । प्रमापणाय प्रायुङ्क्त शिशोः कर्म्माभिचारिकं ।
न्याय्यं ते साम्बयस्यास्ति राज्यश्चैवादिवासरे । अन्यथाचरतो नाशः क्षिप्रं वंशायुषोर्भवेत् ।
इतीमामपि यामिन्यां श्रुतवान् भूतभारतीं । अभिचारस्य वन्ध्यत्वं निर्ध्यायाधिकशङ्कितः ।
एकाङ्गेभ्यो विभिन्नेभ्यो विभ्यदुद्विग्नसंभ्रमः । उदतास्यत्तथा चिन्तालुप्तसन्धिद्दिवानिशं ।
यथा महाहिमापातनिःसञ्चारजने दिने । सकलात्सम्भृतबलो राजधानीं निरुद्धवान् । १२५
विरोधकारिणं बुद्धाभिधेन सह सूनुना । निर्द्रोहमाहवे हत्वा मन्त्रिणं रामवर्धनं ।
पिश्येण वेलावित्तेन प्राभृतार्थमुपाहृतां । गले पुष्पस्रजं बद्धा पातितः पार्थिवासनात् ।
स तं वक्राङ्घ्रिसंग्रामं हतमन्यत्र मन्दिरे । पातयित्वा वितस्तान्तःकण्ठबद्धशिलं निशि ।
चतुर्व्विंशस्य वर्षस्य दशम्यां कृष्णफाल्गुने । पापः सन्नद्धकवचो न्यविक्षत नृपासने ।
॥ चतुर्भिःकुलकं ॥ पारे विशोके शिविरात्ख्यातस्याभिनवाभिधात् । सूनुः संग्रामगुप्तस्य स तथा पार्थिवोऽभवत् । १३०
केचित्तं प्रत्यवस्थातुं ये पुरा प्रतिजज्ञिरे । ते सर्व्व एव तद्दीनाः प्रातरेव प्रणेमिरे ।
पार्थिवैकाङ्गसामन्तमन्त्रिकायस्थतन्त्रिणां । तद्धीत्या द्रोहवृत्तीनां द्रोहादृतमदृश्यत ।
एकाङ्गस्य तदा स्थाने मुख्याभिजनजन्मनः । प्रमादान्मदनादित्यनाम्नो ढक्का व्यदीर्य्यत ।
हताङ्केन भूभर्त्रा कुपितेन खलीकृतः । स निकृत्तकचश्मश्रुस्तपस्वी समपद्यत ।
तावुभस्य पुनस्तस्य दत्तोपुत्रत्वमीयुषः । अद्याप्यभिजने जाता वसन्ति त्रिपुरेश्वरे । १३५
कुर्व्वता पर्व्वगुप्तेन भूभृता द्रविणार्जनं । प्रापिताः पुनरुल्लाघं प्रजा रोगान्नियोगिनः ।
व्यधत्त स्कन्दभवनविहारवसुधान्तिके । पर्व्वगुप्तेश्वरं सोऽपि वृजिनार्जितया श्रिया ।
श्रीयशस्करभूभर्त्तुर्भ्रातुरन्तस्य विशुद्धधीः । कौलीनमधुनादेका गौरीव नृपसुन्दरी ।

सुचिराङ्कुरितप्रीतेः पर्व्वगुप्तस्य याकरोत्। समागमार्थिनो युक्त्या वञ्चनामुचितां सती।
इदं यशस्करस्वामिसुरवेश्माङ्कनिर्म्मितं। त्यक्त्वा पत्युर्व्विपन्नस्य कृत्वा निर्व्वाणपूरणं। १४०
अमोघमस्मि नियमाद्विधास्यामि त्वदीप्सितं। मञ्जुपच्छन्दयन्त्येवं सुभ्रुवाभिहितस्तया।
अथ प्रवृद्धगर्वेण तत्कल्पैरेव वासरैः। सम्पूर्णतां सुरगृहं गमितं तेन भूभुजा।
सा यागज्वलने राजललना पीतसर्पिषि। पूर्णाहुत्या समं साध्वी जुहाव सहसा तनुं।
उपर्य्यस्यानिरस्तासोः पुष्टाः कुसुमवृष्टयः। तत्कांक्षिणस्तु न्यपतन्नवर्णमुखरा गिरः।
सुदीर्घसाहसारम्भचिन्तासंरम्भशोषितः। पर्वगुप्तो बभूवाथ तृष्णामयपथातिथिः। १४५
व्याध्याधिप्रशमायासैश्चालाप्यस्थायिनीं स्थितिं। मूढाः प्ररूढिं नोज्झन्ति द्रोहे श्रीलोभमोहिताः।
आशङ्क्य तादृक्क्लिष्टोऽपि सोऽकुण्ठैः प्राक्तनैः शुभैः। कैश्चित्सुरेश्वरीक्षेत्रे परासुः समपद्यत।
षड्विंशवत्सराषाढवहुलेऽह्नि त्रयोदशे। द्रोहार्जितेन नृपतिः स राज्येन व्ययुज्यत।
अतीन्द्रियायां परलोकदृष्टावितीव तीव्राशुभपाकशंसी। दृश्येत नाशो यदि नाम नाशु न कः कुकृत्येन यतेत भूत्यै।
क्षेमगुप्ताभिधानोऽभूदथ राजा तदात्मजः। आसवामिवनोत्सिक्तवित्त तारुण्यसंज्वरः। १५०
सोऽभूत्स्वभावदुर्वृत्तो नितरां दुर्जनाश्रयात्। कृष्णक्षपाक्षणाघोरमेघान्ध इव भीतिकृत्।
स्वतुल्यवेशालङ्काराः शतं लालितकानृपं। तं फल्गुणप्रभृतयो दुराचाराः सिषेविरे।
द्यूतासवाङ्गनासेवाव्यसनेऽपि स पार्थिवः। विटनिर्लुण्ठ्यमानोऽपि नाभूल्लक्ष्मीवहिष्कृतः।

रागी मधुप्रणयवान्विहिताञ्जसक्ति र्यः सख्यमेति मधुपैर्व्वृतकोशसारैः।
पद्मे प्रयाति दिनमात्रमपि प्रसक्तिं श्रीस्तत्र चेत्किमिव तस्य कुतूहलाय।

विटाः प्रविष्टा हृदयं जिष्णुजा वामनादयः। पिशाचस्येव रचितामशुचिं तस्य चक्रिरे। १५५
परोपहासकुशलः परनारीरतिप्रियः। परायत्ताशयस्तस्थौ पार्थिवोऽनर्थतत्परः।
ष्ठीवनं श्मश्रुमालासु गालयः श्रोत्रपालिषु। तेन क्षिप्ताः प्रतीच्याणां करोटीषु च टङ्कगाः।
कटिमर्द्दनान्नार्य्यो मृगव्याश्वमाटनैः। विटास्त्वश्लीलरटनैर्व्वाल्लभ्यं तस्य लेभिरे।
पुंश्चलीजाल्मनैधेयवालकद्रोग्धृनिर्भरा। समभूदप्रवेशार्हा राजपर्षन्मनस्विनां।
जिष्णुपुत्रैः क्षेमगुप्तसमाभृद्यन्त्रपुत्रकः। चारणत्वगुणाकृष्टः किं न धूर्तैरनर्त्यत। १६०
तस्य कङ्कणवर्षोऽसीत्यभिधानं विधाय ते। तोषितास्त्वासकृत्कुर्दोष्णोः कङ्कणवर्षिताम्।
निर्द्दोषदोषाविष्कारे नववस्तुप्रदर्शने। अधृष्यटङ्कराधाने प्रमादः प्रापि तैर्नृपात्।
संलङ्घ्य कुचकस्थान्ताः कृत्वा निजवधूः पुरः। रागी राजा गृहान्नीतो द्यूते तैर्निर्धनः कृतः।
संभोगाभवसौभाग्यकृतस्पर्धैः परस्परं। सम्भुज्यताभवान्वक्तुर्विशेषमिति चोदितः।
उपभोगं स्वभार्य्याणां निर्लज्जैस्तैः स कारितः। का ह्येति च रत्यन्ते पृष्टोऽभीष्टधनप्रदः। १६५
॥ युग्मं ॥ तस्य लालितकेश्वास्तां मूढा सम्भोगढौकने। मात्राचारिचरचिल्लाङ्गिचाकौ हरिधूर्जटी।
नीत्वा नर्मकथाङ्गतां निजवपुर्मुञ्चन्ति मानोन्नतिं सन्दूष्य स्वयमङ्गनाः प्रदुषितया त्यक्तं कुलं कुर्व्वते।

सौख्यं घ्नन्ति सुदीर्घमेव न समासन्ना यदर्थं श्रमः प्रत्याख्याय तदेव वेद्मि न विटैः किं प्रार्थ्यते सेवया ।
यशस्करस्य भूत्वापि सचिवोभट्टफल्गुणः । तस्याभूदनुजीव्यन्ते धिग्भोगाभ्यासवासना ।
फल्गुणस्वामिमुख्यानां प्रतिष्ठानां विधायिनः । तस्योपदेशै भूभर्त्ता पर्य्यहास्यसदाग्रहः ।
गृह्णन् विद्वेषितां हन्तुं टक्करादिबलात्ततः । हुष्कोरकः कम्पनेशादुर्गोष्ठीमध्यगोऽभवत् । १७०
तीक्ष्णाख्ये सम्प्रविष्टं हन्तुं सङ्ग्रामडामरं । श्रीजयेन्द्रविहारं स निर्घृणो निरदाहयत् ।
सुगतप्रतिमारीतिं हृत्वा दग्ध्वा ततोऽखिलात् । जरद्देवगृहेभ्यश्च सङ्गृह्य ग्रावसञ्चयं ।
सुरप्रतिष्ठया दार्व्यां मूढः स्वयशसोविदन् । नगरापणवीथ्यन्तः क्षेमगौरीश्वरं व्यधात् ।
एकः प्रयात्युपरमं द्रविणं तदीयं हृत्वा परः प्रसभमुद्वहति प्रमोदं ।
नो वेत्ति तत्त्वनिधने परकोषगामि धिग्वासनामसममोहकृतान्धकाराम् ।
त्यागिना क्षेमगुप्तेन भुक्त्यर्थं स्वयम्भूभुजे । हृत्वा विहारान्निर्दग्धान् ग्रामाः षट्त्रिंशदर्पिताः । १७५
दुर्गाणां लोहरादीनां शास्ता शतमखोपमः । नृपतिः सिंहराजाख्यस्तस्मै स्वात्मजां ददौ ।
स तस्यां शाहिदौहित्र्यां दिद्दायां सक्तमानसः । दिद्दाक्षेम इति ख्यातिं ययौ लज्जावहां नृपः ।
मातामहेन भूभर्त्तुर्बध्वास्तस्या व्यधीयत । श्रीभूमिस्वामिनो दत्तप्रसादो भीमकेशवः ।
चन्द्रलेखाभिधां कन्यां राज्ञे दत्तवताभवत् । फल्गुणदारपतिना समं दिद्दा समत्सरा ।
गुरूपदेशः सुमहान् कुन्तविद्याश्रमस्तथा । तस्य निर्वहणाद्र्ध्वा भूभुजो हास्यतां ययौ । १८०
अमोघपतनान् प्रासान्योग्यान्सङ्ग्रामकर्म्मसु । शृगालमृगयासक्त्या स हि श्लाघ्यानमन्यत ।
तं हृतं वागुरावाहिडोम्बाटविकपेटकैः । पर्य्यटन्तं श्वभिः सार्द्धमपश्यन्सततं जनाः ।
तस्य दामोदरारण्यलव्यानशिमिकादिषु । स्थानेषु क्रोष्टुमृगयारसिकस्य वयोऽगमत् ।
अथ कृष्णचतुर्दश्यां स कुर्व्वन्मृगयां नृपः । ज्वालामपश्यत् क्रोशन्त्याः शृगाल्या निर्गतां मुखात् ।
तदालोकनसञ्जातसन्त्रासाकम्पितस्ततः । लूतामयज्वरेणाभूत्परीतो मृत्युहेतुना । १८५
मर्तुं ययौ स वाराहक्षेत्रं यत्र विधायकः । श्रीकण्ठक्षेममठयोराराशोहुष्कपुरान्तिके ।
मसूरविदलाकारलूताक्लिन्नकलेवरः । पौषे चाब्दे चतुस्त्रिंशे नवमेऽह्नि सिते मृतः ।
क्षेमगुप्तात्मजः क्ष्माभृदभिमन्युरभूत्ततः । शिशुर्निस्त्रिंशधर्म्मिण्या दिद्दादेव्यानुपालितः ।
सन्धिविग्रहषड्ङ्गान्तमुख्यकर्म्माधिकारिणः । निःसाध्वसं राजसधूमबन्ध्यश्रयणा व्यधुः ।
अभिमन्यौ क्षितिं रक्षत्यकस्मादेव दारुणः । तुङ्गेश्वरापणोपान्तादुज्जगाम हुताशनः । १९०
वर्धनस्वामिपार्श्वस्थभिक्षुकीपारकावधिः । वेतालसूत्रपातस्थान् स ददाह महागृहान् ।
डोम्बचण्डालसंस्पृष्टभूपसम्पर्कदूषितान् । दग्ध्वा महागृहान्वह्निर्भुवः शुद्धिमिवाकरोत् ।
रक्षित्री क्ष्मापतेर्माता स्त्रीस्वभावाद्विमूढधीः । सारासारविचारेण लोलकर्णी न पस्पृशे ।
राज्ञः सुतार्पणाद्बद्धवैरा तस्यां पुरा यतः । पतिवत्नीव सा सार्द्धं फल्गुणेनाद्यमन्त्रिणा ।
पत्यौ मृते सपत्नीनां दृष्ट्वानुसरणं ततः । दृष्टेनामुमुमूर्षन्तीमनुमेने स तां द्रुतं । १९५

निषिषेधानुबन्धात्तु सानुतापां चितान्तिके । कृपालुर्मरणादेताममात्यो नरवाहनः ।
अतो निसर्गपिशुनो रक्कस्तां मन्युदूषिताम् । फल्गुणाद्राज्यहरणाशङ्कां राज्ञीमजिग्रहत् ।
विरागशंसिभिर्लिङ्गैस्तां ज्ञात्वा विषमाशयां । समन्तुं साखिलामात्यां फल्गुणोऽप्यास शङ्कितः ।
स हि सर्व्वाधिकारस्थः सर्व्वस्याक्षिगतोऽभवत् । दीप्यमानोऽधिकं मन्त्रशौर्य्योत्साहादिभिर्गुणैः ।
अस्थीनि क्षेमगुप्तस्य गृहीत्वा जाह्नवीं गते । पुत्रे कर्दमराजाख्ये प्रबलैरन्वितो बलैः । २००
तत्प्रत्यागमपर्य्यन्तं पर्णोत्से स्थातुमुद्यतः । अविश्वसन्नृपगृहे फल्गुणो वैरिशङ्कितः ।
निर्गत्य नगराद्यावत्सभाण्डागारिसैनिकः । काष्ठवाटान्तिकम्प्राप्य तावद्रक्कादिचोदिता ।
आकलय्य द्रुतं दिष्ट्या सन्त्यज्य प्रार्थनादिकं । पृष्ठे प्रत्युत याष्टीकांस्तस्य हन्तुं व्यसर्जयत् ।
नवावमानखिन्नः स मिलितानन्तसैनिकः । प्रत्यावृत्त्य ततो मानी वाराहं क्षेत्रमाययौ ।
श्रुत्वा समेतसैन्यं तं प्रत्यायातं प्रतापिनं । आस्कन्दशङ्किनी दिष्ट्या सामात्या समकम्पत । २०५
तस्मिन् क्षेत्रे गतं शस्त्रं विलप्य स्वामिनं चिरं । वराहपादसविधे तेन शस्त्रं समर्पितं ।
द्रोहसम्भावनापापं शस्त्रत्यागेन मन्त्रिणा । स्वस्य सम्मार्जितं तेन राजमातुश्च साध्वसं ।
युक्तायुक्तविचारबाह्यमनसः सेवा महद्दैशसं क्रुद्धेऽस्मिन् प्रतिकारकर्म्मगहनद्रोहापवादावहं ।
येन न्यूनगुणे दृशोपकरणीभावोऽपि तस्मै परं कोपः कोऽपि विवेकिनः समुचितः शान्ताय शस्ताय वा ।
पर्णोत्समेव शनकैः ससैन्ये फल्गुणे गते । विगताध्यापका बाला इवामोदन्त मन्त्रिणः ।
योगक्षेमौ चिन्तयन्ती क्षेमगुप्तवधूरपि । अनिशं प्रजजागार स्वयं कण्टकपाटने । २१०
राज्यप्रार्थी पर्व्वगुप्तो मन्त्रिणौ कोशपोषिणौ । अजिग्रहत्करौ पूर्व्वं पुत्र्योर्यौ स्कोजभूभटौ ।
तयोः प्रजातौ तनयौ ख्यातौ महिमपाटलौ । अवर्द्धिषातां यौ राजमन्दिरे राजपुत्रवत् ।
तौ तत्रावस्थितावेव तत्कालं राज्यलालसौ । संमन्त्र्य समगंसातामुद्दामैर्हिम्मकादिभिः ।
बलिनौ तावबलया राज्ञ्यापास्तौ नृपास्पदात् । समन्यू स्वगृहाद्दारांस्तौ यावत्क्षतगतागतौ ।
एकतः पृष्ठतः प्रादान्महिम्नो निर्गतस्य सा । निर्वासनाय याष्टीकांस्तावत्प्रकटवेतना । २१५
॥ युग्मं ॥ शक्तिसेनाभिधानस्य श्वशुरस्य निवेशनं । प्रविवेश स तज्ज्ञात्वा तं ते तत्रापि दुद्रुवुः ।
शक्तिसेनेन याष्टीकाः सान्त्विता नाचलन् यदा । तदा भीतस्य जामातुर्व्यक्तं प्रादात्स संश्रयं ।
तं लब्धसंश्रयं प्राप हिम्मकोमुत्कलस्तथा । एरमन्तकनामा च परिहासपुराश्रयः ।
श्रीमानुदयगुप्ताख्योऽप्यमृताकरनन्दनः । ललितादित्यपुरजा यशोधरमुखा अपि ।
एकैकं तं मिथः सैन्यैर्भुवनक्षोभकारिणः । सम्भूय चक्रुर्वैराज्यं महिम्नः पक्षमाश्रिताः । २२०
तस्मिन्महाभये दिष्ट्या पक्षं मन्त्री सबान्धवः । एकएव तु तत्याज नाद्रोहो नरवाहनः ।
प्रवर्द्धमानपृतना याङ्कु बद्धोद्यमास्ततः । पद्मस्वाम्यन्तिकं प्रापुर्दीप्यमानायुधा द्विषः ।
अथ शूरमठे दिष्ट्या विसृज्यात्मजमाकुला । आपच्छान्तिक्षमांस्तांस्तानुपायान्समचिन्तयत् ।
ललितादित्यपुरजान् द्विजान् स्वर्णेन भूरिणा । तूर्णं स्वीकृत्य विदधे रिपूणां पक्षभेदनं ।

एकाक्षेपेऽखिलैः कोपोविधेय इति वादिभिः। महिमा पीतकोशैस्तैः सन्धिर्देव्या समं कृतः। २२५

गोष्पदोल्लङ्घने यस्याः शक्तिर्नाभ्रायि केनचित्। वायुपुत्रायितं पंक्त्या तया सप्ताब्धिलङ्घने।

यत्सङ्गहो रत्नमहौषधीनां करोति सर्व्वव्यसनावसानं।

त्यागेन तद्यस्य भवेन्नमोऽस्तु चित्रप्रभावाय धनाय तस्मै।

उत्कोचकाञ्चनादानेऽप्युत्ताभ्यायन्युपक्रियां। दिद्दा यशोधरादिभ्यः कम्पनादि समार्पयत्।

अभिचारं महिम्नस्तु कृतवत्यामितैर्दिनैः। मण्डले खण्डिताशत्वं दिद्दायाः समजृम्भत।

कदाचित् ठक्कमाख्यस्य शाहेशस्योपरि क्रुधा। सत्रासं वंशजैर्याचां कम्पनाधिपतिर्ददौ। २३०

तद्देशं निम्नगाशैलदुर्गं प्रविशता जवात्। अखण्डशक्तिना तेन बलादग्राहि थक्कनः।

स कृतप्रणतेस्तस्य करमादाय भूपतेः। अभिषेकाम्बुभिस्सिक्ते श्रोलनाप्यायनं पुनः।

लब्धप्रवेशः समये तस्मिन् रक्कादिभिः खलैः। कम्पनाधिपतौ राज्ञ्या विद्वेषोऽग्राहि मूढया।

उर्व्वीपतेश्च स्फटिकाश्मनश्च शैलोज्झितस्त्रीहृदयस्य चान्तः।

असन्निधानात्सततस्थितीनामन्योन्यराग. कुरुते प्रवेशं।

स्वचित्तसत्वादिवचोवदन्तो धूर्ता वितन्वन्ति मनः प्रवेशम्।

पृथग्जनानां गणिकावधूनां विटाः प्रभूणामपि गर्भचेटाः। २३५

द्रोग्धायं थक्कनं रत्नान्धमादायीति पैशुनं। तथ्यमेव तदीयं सा स्वयं वादादमन्यत।

अथ स्ववसतिं प्राप्ते कम्पनेशे जयोर्जिते। याष्टीकान् व्यसृजद्दिद्दा स्फुटं निर्व्वासनोद्यता।

तदाक्षेपं समाकर्ण्य स्मरन्तः कोशवेदिनं। ते हिम्मकोरसत्ताद्याः पूर्व्ववद्विक्रियां ययुः।

नरवाहनमुख्यास्तु राज्ञीपक्षं न तत्यजुः। विभेदं पूर्व्ववत्प्राप देवं निजबलं पुनः।

प्रविष्टेषु ततः कोपात्पुरं शुभधरादिषु। भट्टारकामठे दिद्दा भूयः पुत्रं व्यसर्जयत्। २४०

दत्तार्गले नृपगृहे स्थितां तां दैवमोहिताः। तं तदैव विना पुत्रं विमूढानोदपाटयन्।

राज्ञ्याः सन्नघटे लोकः परस्मिन्नेव वासरे। यद्बलेन तदा स्थैर्य्यं सा किञ्चित्समदर्शयत्।

जयाभट्टारिकापार्श्वाद्यावच्छूरमठान्तिकं। व्याप्य स्थितैर्द्विषत्सैन्यैरथ प्रववृते रणं।

राजधानीं राजसैन्ये प्रविष्टे चार्मविद्रुते। सिंहद्वारे घटाबन्धमकाङ्क्षाः समदर्शयन्।

शरीरनिरपेक्षास्ते भीतं संस्तभ्य तद्बलं। अधावन् विद्विषां सैन्ये चेलुः केचिच्च शत्रवः। २४५

तस्मिन्नवसरे राजकुलभट्टः समाययौ। तूर्य्यघोषैर्द्विषां सैन्यं भिन्दन्नानन्दयन्निजं।

तस्मिन् प्राप्ते द्विषां सैन्यं विननाश विनश्वरं। न द्रोग्धा विमयं जातु सहन्ते शस्त्रदेवताः।

तोटयत्यायसान् बन्धान् स्फाटयत्युपलानिति। यः ख्यातिमावहत्तथ्या हिम्मको भीमविक्रमः।

तस्यासिना राजकुलभट्टदेहार्द्धपातिना। चर्म्ममात्रं न तुत्रोट कंकटस्यातिसङ्कटे।

विलोक्य तदसम्भाव्यं सैन्ये दैन्यं समाश्रिते। अघानि हिम्मकोयोधैरवाष्टम्भि यशोधरः। २५०

तथाप्यासीत् स्फुरन् संख्ये यशेरमत्तकः क्षणं। स भग्नासिश्च्युतो वाहाज्जीवग्राहमगृह्यत।

साञ्जौ तैरेष्यताधातुं यः श्रीमान् राजबान्धवः। जगामोदयगुप्तः स क्वापि त्यक्त्वा महाहवं।
इत्थं लब्धजया राज्ञी तत्क्षणाद्व्यग्रहीद्रुषा। यशोधरं शुभधरं मुकुलस्य सबान्धवं।
काश्मीरिकाणां यः श्राद्धशुल्कोऽक्त्त्ता गयान्तरे। सोऽप्येरमन्तकः शूरः परिहासपुराश्रयः।
बद्ध्वा महाशिलां कण्ठे वितस्ताम्भसि पातितः। स्वदुर्नयफलं देव्याः प्रकोपेनानुभावितः। २५५
ये सप्तसप्ततादर्षादागोपालनृपात्पुरा। अभिमन्युं यावदासन् षोडशानां महीभुजां।
वर्षपष्टिं प्रतापायुः श्रीहराट्रोहट्टत्तयः। ते क्षिप्रं मन्त्रिणः सर्व्वे सान्ववायाः सहानुगाः।
भीमभ्रूभङ्गमात्रेण दिद्दादेव्या सकोपया। आसन्निःशेषतां नीता दुर्गयेव महासुराः।
॥ तिलकं ॥ अभवन्विहिता राज्ञा तानुत्पाट्य मदोद्धतान्। रक्कादयः कम्पनादिकर्मस्थानाधिकारिणः।
इत्थं मन्त्रिप्रकाण्डः स रण्डामाखण्डलोपमां। अखण्डमण्डलां चक्रे निर्द्रोहो नरवाहनः। २६०
राज्ञी कृतज्ञभावेन सापि मन्त्रिसभान्तरे। तमाजुहाव निर्द्रोहं स्वयं राजानकाख्यया।
सुप्ते सुष्वाप निष्पन्नभोजनेऽस्मिन्नभुक्त सा। हृष्टे जहर्ष निर्व्विण्णे निर्विवेदानुकूल्यतः।
आरोग्यान्वेषणं शिक्षाप्रार्थनां गृहवर्त्तिनः। सात्मजस्तु विसर्गञ्च नाकृत्वा तस्य पिप्रिये।
अभूतां चुग्गशाहस्य कुष्यनाम्नः सुतौ पुरा। यौ सिन्धुभुय्यौ तज्ज्यायान् सिंधुर्लालितकः किल।
पर्व्वगुप्तगृहे भूत्वा गञ्जाध्यक्षे स्थिते क्रमात्। लब्ध्वा गञ्जाधिकारित्वं तस्या राज्ञ्याः शनैरभूत्। २६५
कृत्वा तदैव गञ्जेशो नत्रायामविधायकः। कर्मस्थानस्य निर्माता सिन्धुगञ्जाभिधस्य यः।
प्रायेशा हृतराज्यस्ते वर्तते नरवाहनः। इति नयधियं राज्ञीं सोऽभ्यधत्त दुराशयः।
सा तथेत्यब्रवीद्यावत्तावत्प्रेम्णा स जातुचित्। मन्त्री तां प्रार्थयामास भोक्तुं निजगृहागमं।
मा मानुगान्तत्र यातां भुदन्त्वामेव वक्ष्यति। इत्युक्ता सिन्धुनापृच्छत्तत्कर्त्तव्यं भयाकुला।
अनुक्त्वैव प्रचलिता राजधानीमलक्षिता। स्त्रीधर्मिण्यस्मि जातेति पश्चाद्दातां व्यसर्जयत्। २७०
संप्रवृत्तोपचारायां गतायां तत्पथान्तया। राज्ञा नाशममात्यस्य प्रीतिसम्बिन्न सा ययौ।
तयोस्ततः प्रभृत्येव निष्कृष्टस्नेहयोः कृतम्। चाक्रिकैरतिरूढत्वं तिलपिण्याकयोरिव।
कुलिशं सर्व्वलोहानामश्मसां शैलसैतवः। अभेद्याः प्रतिभाव्यन्ते न किञ्चिदसतां पुनः।
ये बालादपि संमूढाः प्राज्ञाः सुरगुरोरपि। तेषां न विद्मः किन्तावन्निर्माणपरमाणवः।
विश्वासोज्झितधीः शिशून् कलयते काकोऽन्यदीयान्निजान् हंसः क्षीरपयोविभागकुशलस्तस्यत्यपागाद्गुनात्।
लोकाविचक्षणतीक्ष्णधीः खलगिरं जानाति सत्यां नृपो धिग्वैदग्ध्यविमुग्धताव्यतिकरस्पृष्टं विधानं विधेः। २७५
मूढाचरणहीना सा श्रुतिवाह्यतया तया। वैधेयविप्रप्रकृतिरिव प्रायाद्विगर्हितां।
उद्वेजितस्तया शश्वत्तया स नरवाहनः। यथा विमाननोत्तप्तः स्वयं तत्याज जीवितं।
प्रकुप्यत्यप्रतीकार्य्ये स्वतेजस्तप्तचेतसां। शरणं मरणं त्यक्त्वा किमिवान्यद्यशोर्थिनां।
शशिहीनेव रजनी सत्यत्यक्तेव भारती। विरराज न राजश्रीर्नरवाहनवर्जिता।
सा क्रौर्य्याभ्यासविषमा हन्तुं विततविक्रमान्। संग्रामडामरसुतान् समीपस्थानचिन्तयत्। २८०

निजमुत्सरघोषं ते तद्भयेन विनिर्गताः । कय्यकदारपत्यादीन् हतारब्धीन् व्यपादयन् ।
उत्पिञ्जभीतया राज्ञ्या त्यक्ता परिभवत्रपा । ते यत्नात्समघव्यन्त मानः स्वार्थार्थिनां कुतः ।
स्थानेश्वरादिभिर्मुख्यैर्डामरैरितरैः समम् । ते भीताः पुरतस्तस्याः पुनरेत्य अजृम्भिरे ।
अथ तद्भीतया राज्ञ्या रक्षे प्रशमयमागते । आनीतः फल्गुणो भूयो वीरार्थिन्या निजान्तिकं ।
राजकार्य्याणि कुर्व्वाणः स भूयः शस्त्रमग्रहीत् । न्यस्तशस्त्रोऽपि यत्तस्य दुस्त्यजा भोगवासना । २८५
महिमा राजपुर्य्यादिजयिनस्तस्य पश्चिमः । अद्भुतो हट्टबन्धख्या अवरुद्धइवाभवत् ।
अभूदुदयराजस्य देवीभ्रातुरतिप्रियः । यः सहायोऽक्षपटले जयगुप्ताभिधः कुधीः ।
अन्येऽधिकारिणस्तेन सहिताः क्रूरवृत्तयः । कश्मीरेषु व्यधुर्लुण्ठिं दुष्कृतैस्तदुपार्जितैः ।
दौःशील्यभाजो मातुस्त्व पाप्मभिर्व्विधुरीकृतः । अभिमन्युः क्षणे तस्मिन् क्षयरोगेण पस्पृशे ।
पण्डितः पुण्डरीकाक्षो विद्युत्पुत्तैरुपस्कृतः । कृतश्रुतः स वैदुष्यनारुण्याभ्यां विदिद्युते । २९०
तथा विशुद्धप्रकृतेस्तस्य दुष्कृतसङ्गमः । शोषाधायो शिरोषस्य रवितापइवाभवत् ।
वर्धमानः प्रजाचन्द्रस्तृतीयस्यां स कार्तिके । शुक्लेऽष्टाचत्वारिंशाब्दे ग्रस्तो नियतिराहुणा ।
तत्पुत्रो नन्दिगुप्तस्तु बालश्चक्रे निजासने । हट्टस्तनयशोकस्तु दिद्दाया हृदये पदं ।
सा शोकपिहितक्रौर्य्या तस्थौ प्रशमशीतला । रविरत्नशलाकेव ध्वान्तच्छन्नांशुवैकृता ।
ततः प्रभृत्यद्भुताभिस्तस्या धर्म्मप्रवृत्तिभिः । कुकर्म्मभिरुपोढापि लक्ष्मीः प्राप्ता पवित्रतां । २९५
नगराधिपतिर्भुय्यः सिन्धुभ्राता शुभाशयः । तदीयधर्म्मचर्चायां बभूव परिपोषकः ।
सा तेनोत्पादितानर्घजनरागागतैनसा । ततः प्रभृत्यभूद्देवी सर्व्वलोकस्य सम्मता ।
राज्ञः ससचिवः सत्यन्दुःप्रापो लप्तपर्वपिण्डमा । कुर्य्याद्यः सुखसेव्यत्वं हेमन्तइव भास्वतः ।
सा निर्म्माची विपन्नस्य सूनोः सुकृतवृद्धये । अभिमन्युस्वामिनोऽभूदभिमन्युपुरस्य च ।
अथ दिद्दापुरोपेतो दिद्दास्वामी तया कृतः । मठश्च मध्यदेशीयलाटशौडोत्रसंश्रयः । ३००
भर्तुः कङ्कणवर्षस्य पुण्योत्कर्षाभिवृद्धये । चकार कङ्कणपुरं रमणी स्वर्णवर्षिणी ।
श्वेतशैलमयं चान्यं सा दिद्दा स्वामिनं व्यधात् । धवलं चरणोद्भूतगङ्गाम्भःस्नपनैरिव ।
चक्रे काश्मीरिकाणाञ्च दैशिकानां समाश्रयः । तयात्युच्चचतुःशालो विहारश्चारुसम्पदा ।
श्रीसिंहस्वामिनं नाम्ना सिंहराजस्य सा पितुः । मठञ्च विदधे स्थित्यै दैशिकानां द्विजन्मनां ।
मठप्रतिष्ठावैकुण्ठनिर्म्माणाद्यैः स्वकर्म्मभिः । तयातिपवनश्चक्रे वितस्तासिन्धुसङ्गमः । ३०५
तेषु तेषु प्रदेशेषु किमुक्तैर्भूरिभिः शुभैः । सा प्रतिष्ठा व्यरचयच्चतुःषष्टिमिति श्रुतिः ।
जीर्णोद्धाराः कृता देव्या भ्रष्टप्राकारमण्डलाः । प्रायः सुरगृहाः सर्व्वे शिलावप्रावृताः कृताः ।
क्रीडाचंक्रमणे राज्ञ्यापंग्व्याविग्रहवाहिनी । वल्लाभिधा वैवधिकी वल्लामठमकारयत् ।
तीर्थासेवनमौनभागपि तिमिः सक्तः स्वकुक्ष्याशने वाताशान् ग्रसते शिखी घनपयोमात्राशनोऽप्यम्बरं ।
विश्वस्ताञ्जलचारिणः प्रकटितध्यानोऽपि भुङ्क्ते वकः सत्कर्म्माचरणेऽपि दोषविकृतौ न प्रत्ययः पापिनां ।

वर्षिणी वर्षमात्रेण शान्तशोका बभूव सा । भोगोत्सुकार्भके तस्मिन्नसरि व्यभिचारकृत् । ३१०

वर्षएकान्नपञ्चाशे नीतः पक्षे सिते क्षयं । स मार्गशीर्षद्वादश्यामसमार्गव्यग्रया तया ।

पौत्रस्त्रिभुवनो नाम मार्गशीर्षे सितेऽहनि । पञ्चमेऽप्येकपञ्चाशे वर्षे तद्वत्तया हतः ।

अथ मृत्युपथे राज्यनाम्नि स्वैरं निवेशितः । क्रूरया चरमः पौत्रो भीमगुप्ताभिधस्तया ।

तस्मिन्नवसरे वृद्धः फल्गुणोऽपि व्यपद्यत । निगूढक्रौर्य्यदोःशौल्या दिद्दा यद्गौरवादभूत् ।

बभूव साथ सुस्पष्टदुष्टचेष्टाशतोत्कटा । भ्रष्टवस्त्रपटा मत्तदन्तिमूर्तिरिवोत्कटा । ३१५

महाभिजनजातानामपि हा धिङ्निसर्गतः । सरितामिव नारीणां वृत्तिर्निम्नानुसारिणी ।

स्रोतोधिराज्यमधिगम्य विराजमानास्सिन्धोः प्रसूय कमलाल्पपयोनिकेते ।

जाते सरस्यविरतं जलजे प्रसक्ता नार्य्यो महाभिजनजा अपि नीचभे ग्याः ।

खशस्य वह्विवामाख्यपर्णोत्सग्रामजन्मनः । वाणस्य सूनुस्तुङ्गाख्योऽविशन्महिषपालकः ।

प्रविष्टो जातु काश्मीरांल्लेखहारककर्मणा । सुगन्धिसीहप्रकटमागादुथिकषण्मुखैः ।

पञ्चभिर्भ्रातृभिः सार्धं सन्धिविग्रहकान्तिके । देव्यादृग्गोचरं यातो हृदयावर्ज्जकोऽभवत् । ३२०

॥ तिलकं ॥ रहःप्रवेशितो दूत्या समाव्यर्थबलाद्युवा । सम्भुक्तभूरिजारायाश्रपि तस्याः प्रियोऽभवत् ।

तुङ्गानुरागिणी राज्ञी पापा लज्जोज्झिता ततः । रसदानेन वैमुख्यभाजं भुय्यमघातयत् ।

धिङ्निर्विचारान् कुपतीन् येषां विषमचेतसां । फलशून्या स्तुतिस्तोषे दोषे प्राणधनक्षयः ।

रङ्कजादेवकलशोवेलावित्तः कृतस्तया । भुय्याधिकारे कौद्रिन्यामाचरन्निस्त्रपो विटः ।

येऽपि कर्दमराजाद्या वीरादारादिनायकाः । तेऽपि कौटिल्यमभजन्नन्येषां जननेव का । ३२५

चतुः पञ्चानि वर्षाणि तिष्ठन्नृपगृहे शिशुः । भीमगुप्तोऽभवद्यावत्किञ्चित्प्रौढोभवन्मतिः ।

राज्यव्यवस्था यावच्च पितामह्यास्य वृत्तयः । दुस्थिताः प्रत्यभाषन्त संस्थाप्यास्तस्य चेतसि ।

अङ्गशीलविहीनाया निर्घृणाया निसर्गतः । तावन्नेयधियस्तस्याः सचिन्त्यः समपद्यत ।

अभिमन्युवधूस्तं हि चक्रे गूढप्रवेशितं । महाभिजनजस्युक्तं तस्मात्सोऽभूत्तथाविधः ।

सा देवकलशेनाथ दत्तमन्त्राविशङ्किता । त्रपोज्झिता स्पष्टमेव भीमगुप्तमबन्धयत् । ३३०

निगूढे नन्दिगुप्तादिद्रोहे लोकस्य योऽभवत् । सन्देहः स तया तेन व्यक्तकृत्येन वारितः ।

ताभिस्ताभिर्यातनाभिर्भीमगुप्तं निपात्य सा । षट्पञ्चाशेऽभवद्वर्षे स्वयं क्रान्तनृपासना ।

प्रवृद्धरागया राज्ञ्या दत्तोद्रेको दिने दिने । सर्व्वाधिकारी तुङ्गोऽथ बभूवाधारिताखिलः ।

सभ्रातृकेन तुङ्गेन मीलिताः पूर्व्वमन्त्रिणः । राज्यविप्लवमाधातुमयतन्त विरागिणः ।

तेऽथ संमन्त्र्य कश्मीरानानिन्युः क्रूरपौरुषं । उग्रं विग्रहराजाख्यं दिद्दाभ्रातुः सुतं नृपं । ३३५

मुख्याग्रहारान् स प्राप्तो विधातुं राज्यविप्लवं । धीमान् प्रायोपवेशाय द्रुतं प्रावेशयद्द्विजान् ।

विहितैक्येषु विप्रेषु लोकः सर्व्वोऽपि विप्लुतः । अन्विष्येवाश्वहं तुङ्गं तत्र तत्र जिघांसया ।

कस्मिंश्चित्पिहितद्वारो तुङ्गं प्रच्छाद्य वेश्मनि । दिनानि कतिचिद्दिद्दा तस्थावास्कन्दशङ्किनी ।

तया स्वर्णप्रदानेन सुमनोमन्तकादयः। ब्राह्मणाः समग्रहन्नस्त ततः प्रायोन्यवर्त्तत।
एवन्तस्मिन्महाक्षेपे तया दानेन वारिते। ययौ विग्रहराजः स भग्नप्रकिर्यथागतं। १४०
अथ दार्ढ्यं समासाद्य तुङ्गाद्याः प्रभविष्णवः। शनैः कर्दमराजादींश्चतुर्व्विहितविश्वसान्।
सुलक्कनो रक्कमुनुस्तथान्ये मुख्यमन्त्रिणः। रुष्टैर्निर्व्वासितादेशात्तुष्टैस्तैः सम्प्रवेशिताः।
प्रवर्द्धमानवैरेण गूढदूतैर्विसर्जितैः। प्रायम्विग्रहराजेन ब्राह्मणाः कारिताः पुनः।
उत्कोचादित्सया विप्रा भूयः प्रायविधायिनः। लब्धस्थैर्य्येण तुङ्गेन सन्निपत्यापहस्तिताः।
तेषां मध्ये वसन् गूढमादित्याख्यः पलायितः। हतोविग्रहराजस्य प्रियः कटकवारिकः। १४५
शस्त्वचतः प्रतीहारो वत्सराजाभिधः पुनः। न्यक्कोतकादिभिर्धावज्जीवग्राहमगृह्यत।
ते स्वर्णग्राहिणोविप्राः सुमनोमन्तकादयः। सर्व्वेऽपि बद्धास्तुङ्गेन कारागारं प्रवेशिताः।
अथ फल्गुणनाम्नि दृप्ते राजपुरीपतौ। तां प्रत्यारब्धिरभवत्क्रुध्यतां सर्व्वमन्त्रिणां।
निपत्य सङ्कटे वीरः पृथ्वीपालाभिधस्ततः। चक्रे राजपुरीराजकाश्मीरिकबलक्षयम्।
शिपाटकोहंसराजोविपन्नौ तत्र मन्त्रिणौ। चन्द्राद्रेर्दुर्गतिन्दृष्ट्वा मरणं यत्र भेषजं। १५०
अथान्येन पथा कस्मात्तुङ्गः सार्धं सहोदरैः। कृत्स्नां राजपुरीं वीरः प्रविश्य सहसादहत्।
सनाथ तेनोपायेन पृथ्वीपालः सपार्थिवः। शेषाणां मन्त्रिणां धैर्य्यं प्राप मुक्तिञ्च सङ्कटात्।
अबलः सन्स भूपालस्तुङ्गाय प्रददौ करं। एवं कृतं ततस्तेन नष्टस्यार्थस्य योजनं।
प्रविश्यन्नगरं तुङ्गस्ततः स्वीकृतकंपनः। चकार डामरग्रामसंहारं सिंहविक्रमः।
दिद्दाप्युदयराजस्य भ्रातुः पुत्रं परीक्षितं। चक्रे संग्रामराजाख्यं युवराजमशङ्किता। १५५
सा हि सर्व्वान् शिशुप्रायान् पुरोभ्रातृसुतान् स्थितान्। परीक्षितुं मुमोचाग्रे पालेवत फलावलिं।
शक्तः कियन्ति कः प्राप्तुं फलान्यत्रेतिवादिनी। साभवद्राजपुत्राणां तेषां कलहकारणं।
गृहीताल्पफलांश्चप्रहारांस्तान्ददर्श च। सङ्ग्रामराजं लब्धाल्पफलभाजमविक्षतं।
अनन्तफलसम्प्राप्तावक्षतत्वे च कारणं। सविस्मयं तया पृष्टस्स तामेवं तदाब्रवीत्।
अन्योन्यकलहव्यग्रानेतान् कृत्वा पृथग्वसन्। समवायं फलान्यस्मिन्नचाभूवम्परिक्षतः। १६०
व्यसने संप्रविश्यान्यान् स्थितानामप्रमादिनां। न काः क्लेशविहीनानाङ्घटन्ते स्वार्थसिद्धयः।
श्रुत्वेति तस्य सा वाचमप्रमत्तत्वदूतिकां। भीरुर्नारीस्वभावेन राज्येऽमन्यत योग्यतां।
शूरस्य लभ्यं शौर्य्येण भीरोर्भीरुतया यथा। कार्य्यं हि प्रतिभात्यन्तर्न भवेच्च तदन्यथा।
काष्ठं वक्रमुरज्झितमपि भवेच्छीतशान्त्यै कपीनां लोष्टां शुद्धौ सलिलमनलस्याग्निशौचिणकानां।
जन्तोर्भावा विदधति यथा भाविनः कार्य्यसिद्धिं तत्त्वन्तेषां क्वचन सहजं वस्तु तेनास्ति किञ्चित्।
तस्यामेकान्नशीत्यब्दशुक्लभाद्राष्टमीदिने। देव्यां दिवं प्रयातायां युवराजोऽभवन्नृपः। १६५
स्त्रीसम्बन्धेन भूपालवंश्यानां भुवनाद्भुतः। तृतीयः परिवर्त्तोऽयं वर्त्ततेमुत्र मण्डले।

निर्नष्टकण्टककुले वसुसम्पदाढ्ये सौंघातवाहकुलमाप महीतलेऽस्मिन् ।
दावाग्निदग्धकुतरौ जलदाम्बुसिक्ते चूतप्ररोह इव केलिवने प्ररूढिम् ।
अथ स मृदुतयान्तर्गूढधैर्य्यानुभावः सुखमवनिमशेषां दोष्णि संग्रामराजः ।
विषकुलनिभशोभानिह्नुतप्राणसारः फणकुल उरगाणामीश्रितेव न्यधत्त ।
इति श्रीकाश्मीरिकमहामात्यचम्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां षष्ठस्तरङ्गः॥
अथ वर्षचतुर्ष्वष्टमासेष्वथ दिनेषु च । अष्टस्वभूवन् भूपाला इव भूभोगभोगिनः । १००



## ॥ अथ सप्तमस्तरङ्गः ॥



मातुस्तेऽजनि निर्मिते पितृकुले श्लाघ्या तनुर्वेधसा त्वं सन्ध्याहितसन्निधिर्मम अपारक्तोऽधरे खेलसि।
सन्ध्यावन्दनसाभ्यसूयगिरिजास्तुत्यैर्वृशैर्व्याकुलैर्य्यैः सन्ध्यामपि वन्दते स्म स जगत्प्रीणातु गौरीश्वरः।
क्षमां क्षमापतिर्बिभ्रन्मनसा च भुजेन च। गाम्भीर्य्येण च शक्त्या च सोऽजयद्वाहिनीपतीन्।
जग्मे राज्ञः क्षये भङ्गायैस्तुङ्गस्य तदाखिलैः। दिनश्रीविगमे सन्ध्याप्रसङ्गस्येव रागिणः।
तत्तत्प्रतिभटाटोपत्रोटनात्प्रत्युतास्य तैः। उदयो ददृशे शश्वद्गतिं कोवेत्ति वेधसः।
॥ युग्मम्॥ नृपेण जातज्ञातेयः शूरः शक्तिसमन्वितः। सर्व्वाधिकारयोग्योऽगात्तदा चन्द्राकरः क्षयम्। ५
अन्ये भीमतिकाग्रामदिवि रम्योरुसम्पदः। पुण्याकरस्य तनयाः शूराः शान्तिं प्रपेदिरे।
समर्थमन्त्रिविरहादनिच्छन्नपि वेधसा। निन्ये गत्यन्तरत्यक्तस्तुङ्गपक्षं क्षमापतिः।
संग्रामराजतुङ्गादीन्देवी कोशमपाययत्। मुमूर्षन्ती पुरा ख्यातुमद्रोहेणेतरेतरम्।
क्षेमासहोमहीपालस्ततः कार्य्यवशादपि। तुङ्गन्यस्तप्रजाकार्य्यो भोजाभ्यासालसोऽभवत्।
पर्य्याप्तं तस्य भीरुत्वं कियदन्यत्प्रकाश्यतां। असमैर्य्यौनसम्बन्धैश्चक्षमे यशसः क्षतिम्। १०
साहायकार्थी यत्प्रादाच्छ्रीशौर्य्यादिमते सुताम्। दिद्दामठाधिपतये प्रेमनाम्ने सलोठिकाम्।
क्व लोकोद्वहनोन्नद्धभूभृद्योग्या नृपात्मजा। प्रतिग्रहजलक्लिन्नपाणिः क्वाल्पमना द्विजः।
अथ तुङ्गादिभङ्गाय प्रायं ब्राह्मणमन्त्रिणः। परिहासपुरे विप्रपारिषद्यानकारयन्।
विप्रमन्त्रिमतैक्येन कृतो राज्ञः सविप्लवः। दुःसहापवमानाग्निसमागमसमोऽभवत्।
राज्ञोऽप्युत्पाटने सर्व्वैः कथंचित्प्रार्थितैर्द्विजैः। मतिः क्षान्तिचरुप्राये तुङ्गनिःसारणे कृता। १५
राज्ञस्तुङ्गादिभिश्चैतद्यावत्तेभ्यः प्रतिश्रुतम्। अन्यत्प्रार्थयितुं लग्नास्तावत्ते शठबुद्धयः।
तुङ्गास्कन्देन विप्रोऽयं योम्हतस्तद्गृहे वयम्। तं निर्द्दहाम इत्युक्त्वा शवः कोऽप्यरघट्टतः।
तैरुद्धृत्य यदानीतः शठैस्तुङ्गग्रहान् प्रति। केशहोमास्य विहिताभ्याकृत्योत्थापिताभवत्।

तया प्रतीपपातिन्या निःशेषाणां द्विजन्मनाम् । अकस्मान्निरगाच्छस्त्रं विनाशायोत्थिते कलौ ।

तिलकं ॥ ततः पलायिताविप्रा यस्तेषां मन्त्रदोऽभवत । निगूढं राजकलशस्तदेश प्राविशद्गृहात् । १०

स व्यक्तीभूतकौटिल्यः सङ्ग्रामं सुचिरं व्यधात् । अपद्वारैस्तु ते विप्राः पलाय्य स्वगृहान ययुः ।

विजिते राजकलशे समकार्य्या द्विजातयः । मन्त्रिणः श्रीधरसुताः सप्तागत्य व्यधुर्म्मधम् ।

ते कृत्वा सुमहत्कर्म समाप्तिं समरे गताः । निर्भिद्य मण्डलं सप्त सप्तसप्तेर्द्रुतं ययुः ।

जितः सुगन्धिसीहेन तेषु शान्तेषु संयुगे । बद्धाथ राजकलशस्तुङ्गेनानायितो गृहम् ।

नीयमानोऽधिरोप्याशु स्कन्दमार्गेषु विक्षतः । तुङ्गस्य युग्यवाहैः स नर्त्तिनोपहृतायुधः । १५

अन्योऽपि भूतिकलशो नाम मन्त्री विनिर्जितः । सुतेन राजकाख्येन सह शूरमठं ययौ ।

क्रमात्सुगन्धिसीहाद्यैर्मुक्ता करुणया ततः । स पुत्रः सेवमानाश्रितश्रीदेशान्तरं ययौ ।

परिहासपुरादेवं जातोयोदेशविप्लवः । स दैवयोगात्तुङ्गस्य शुभाय प्रत्युताभवत् ।

ततः प्रसादिते राज्ञि गुणदेवेन मन्त्रिणा । आययौ भूतिकलशः कृतगङ्गानिमज्जनः ।

पुनर्नृपगृहे तस्मिन् किञ्चिल्लब्धपदे शनैः । तुङ्गं निहन्तुं राज्ञैनं गूढं दूताः प्रयोजिताः । २०

ज्ञातवार्तेन तुङ्गेन तस्मिन्नर्थे प्रकाशिते । स्वपुत्रो भूतिकलशो राज्ञा निर्वासितः पुनः ।

अवष्टम्भं मनाक् लेभे चन्द्राकरसुतः शनैः । योमय्यामत्तकः सोऽपि तस्मिन् काले व्यपद्यत ।

भूत्वा किञ्चित् क्षणं भूभृत्कन्यासम्भोगभाजनम् । राजोपकारकत्क्ष्मीमान् प्रेमापि प्रमयं ययौ ।

विवेदिरेऽन्ये गङ्गाद्याः सर्व्वेऽपि नृपतिप्रियाः । अवाशिष्यत भोगाय तुङ्गः सभ्राहकः परम् ।

इति योयो हि वृत्तान्तस्तस्य नाशाय शंकितः । स स दैवानुकूल्येन प्रत्युताद्रेचकोऽभवत् । २५

कालक्रमत्रुटितसंश्रयभूः स्वमूलमात्राश्रयी तटतरुः सरितोऽम्बुपूरे ।

यैः शंक्यते निपततीति वितीर्णमृद्भिस्तैरेव तस्य हि भवेत् स्थितिभूमिदार्ढ्यम् ।

नीत्युज्ज्वलं व्यवहरन् प्रजाराधनतत्परः । प्राक् पुण्यसङ्क्षयात्तुङ्गः शनैस्त्वासीत् स्खलन्मतिः ।

यतस्वभाग्यापहाराय हीनजन्मानमाददे । साहायकाय कायस्थं क्षुद्रं भद्रेश्वराभिधम् ।

विट्वाणिज्यं मैनिकत्वं काष्ठविक्रयितादि च । आरामिकस्य यस्यासीत्क्रत्यं वंशक्रमोचितम् ।

कण्ठलोद्धृष्टपृष्ठोऽथ भाजनार्थमवालगत् । भस्त्रामर्षी भाण्डवाही यस्य पश्चान्नियोगिना । ३०

अनन्तराजकार्य्यादिचिन्ताश्रान्तो विधाय तम् । तुङ्गः सहायमात्मुद्ध संवर्गाद्भाग्यसङ्क्षयम् ।

धार्म्मिकं तेन धर्म्मात्कं विनिवार्य्यार्थ्यचेतसम् । गृहकृत्याधिकारे स दुष्कृती विनिवेशितः ।

देवगोब्राह्मणानाथातिथिराजोपजीविनाम् । अकालमृत्युर्व्विदधे वृत्तिच्छेदं स दुर्म्मतिः ।

शवाजीवोऽपि पुष्णाति क्रूरः कापालिको निजान् । भद्रेश्वरस्तु पापोऽभून्निजानामपि जीवहृत् ।

तुङ्गेन चैत्रे सर्व्वत्र कृते भद्रेश्वरे प्रभौ । सुगन्धिसीहः प्रययावाषाढे मासि सङ्क्षयम् । ३५

परलोकं गते तस्मिन् सर्व्वभारसहेऽनुजे । तुङ्गस्थितीनोत्तमाङ्गत्वं सदन्योऽमन्यतात्मनः ।

श्रीत्रिलोचनपालस्य शाहेः साहायकार्थितः । देशान्ततोमार्गशीर्षे मासि तं व्यसृजन्नृपः ।

राजपुत्रमहामात्यसामन्तादि निरन्तरम्। सैन्यं तमन्वगाद्भूरि भुवनेश्वाभनन्दनम्।
अथागतेन स तथा शाहिना कृतसत्क्रियः। पञ्चषाणि दिनान्यासीत्तद्देशे स यदोन्मदः।
प्रजागरचरन्यासशस्त्राभ्यासादिवासनाः। अभियोगोचिताः शाहिरपश्यंस्तं तदाब्रवीत्। ५०
युग्मं॥ तुरुष्कसमरे यावन्न यूयं कृतबुद्धयः। आलस्यविवशास्तावत्तिष्ठतास्मिन् गिरेस्तटे।
एवं त्रिलोचनेनोक्तं सोऽग्रहीन्न हितं वचः। तस्थौ परं समं सैन्यैरुत्सेकादाहवोत्सुकः।
हम्मीरेण तदा सैन्यञ्जिज्ञासार्थं विसर्ज्जितम्। तौषीपारे मितप्रायैस्ततस्तीर्णावधीदलैः।
ततस्तमाहितोत्सेकमपि शाहिः पुनःपुनः। जगादाहवतत्त्वज्ञः पूर्व्वोक्तामेव संविदम्।
स तस्य नाग्रहीद्वाक्यं रणोत्सुक्यवशंवदः। प्रत्यासन्नविनाशानामुपदेशो निरर्थकः। ५५
प्रातस्ततः स्वयं कोपात्तुरुष्कानीकनायकः। सर्व्वाभिसारणोद्गच्छच्छलाहवविदारदः।
अथ तुङ्गस्य कटकः सहसा भङ्गमाययौ। शाहिसैन्यं परं संख्ये ददृशे विचरत्क्षणम्।
शाहिसैन्ये गतेऽप्यासीज्जयासिंहः स्फुरन् रणे। श्रीवर्धनस्य सङ्ग्रामे विभ्रमार्कस्य डामरः।
घोरे तुरङ्गतुमुले प्रहरद्भिस्त्रिभिर्भटैः। वीरव्रते निजे देशे रक्षितस्तैर्यशःश्चयः।
कस्त्रिलोचनपालस्य माहात्म्यं वक्तुमीश्वरः। निःसंख्या अपि यं संख्ये न जेतुमशकन् द्विषः। ६०
शुशुभे रुधिरासारवर्षी युद्धे त्रिलोचनः। कल्पान्तदहनज्योतिर्व्विसारीव त्रिलोचनः।
स योधयित्वा सङ्ग्रामे कोटीः कङ्कटवाहिनाम्। एकाकी कार्य्यमर्मज्ञो निर्ययौ रिपुसङ्कटात्।
गते त्रिलोचने दूरमशेषं रिपुमण्डलम्। प्रचण्डचण्डालचमूशलभच्छायमानशे।
सम्प्राप्तविजयोऽप्यासीन्न हम्मीरः समुच्छ्वसन्। श्रीत्रिलोचनपालस्य स्मरन् शौर्य्यममानुषम्।
त्रिलोचनोऽपि संश्रित्य हास्तिकं स्वपदाच्युतः। सयत्नोऽभून्महोत्साहः प्रत्याहर्त्तुं जयश्रियम्। ६५
यथा नामापि निर्नष्टं शीघ्रं शाहिश्रियस्तथा। इह प्रासङ्गिकत्वेन वर्णितं न सविस्तरम्।
स्वप्नेऽपि यदसम्भाव्यं यत्र भग्ना मनोरथाः। हेलया तद्विदधतो नासाध्यं विद्यते विधेः।
दृंषद्भूमिवैपुल्यं राज्ञः शङ्करवर्मणः। वृत्तान्तवर्णने पूर्व्वममुत्र प्रकटीकृतम्।
स शाहिदेशः सामात्यः सभूभृत्सपरिच्छदः। किमभूत्किमु वा नाभूदिति सञ्चिन्त्यतेऽधुना।
अवतारं तुरुष्काणां दत्वा शेषे महीतले। प्राप्तभङ्गस्ततस्तुङ्गः स्वदेशं प्राविशच्छनैः। ७०
शृगालायेव तुङ्गाय लब्धभङ्गाय भूपतिः। न तत्रागसि चुक्रोध सधैर्य्यसदृशाशयः।
किन्तु खेदाय समभूत्तुङ्गाय तत्समीशितुः। परायत्तभयाचित्तं पशोरप्युपतप्यते।
तुङ्गात्मजोऽपि कन्दर्पसिंहः श्रीशौर्य्यगर्व्वितः। राज्योचितं व्यवहरंस्तस्योद्वेगप्रदोऽभवत्।
गूढलेखैः क्षणे तस्मिंश्छिद्रान्वेषी स भूभुजाम्। भ्राता विग्रहराजोऽपि प्रैरयत्तुङ्गमारणे।
कोशादिस्मरणाद्राजा चिरं दोलायमानधीः। अभीक्ष्णप्रेरणोद्विग्नः प्रेरकानब्रवीत्ततः। ७५
एकाक्येव सपुत्त्रः स गोचरो नः कदाचन। पतेद्यदि क्षणे तस्मिन् पश्यामः किं विदध्महे।
अन्यथा भुवमाक्षिप्तो हन्यादस्मानसौ बलात्। इति कालापहारार्थमुक्ताभूद्विरतो नृपः।

तावन्मात्रं वचोवीजभूतं हृदि निधाय ते । विधातुं तदवस्थत्वं तुङ्गस्यामन् कृतोद्यमाः ।
षण्मासाभ्यन्तरे तुङ्गो भूपेनाकारितो गृहात् । ससुतो निर्ययौ दृष्टदुःस्वप्नोऽपि विधेर्वशात् ।
स प्रविश्य नृपास्थानं स्थित्वा राज्ञोऽग्रतः क्षणम् । पञ्चषैः सहितो भृत्यैः प्राविशन्मन्त्रमण्डपम् । ८०
पश्चात्प्रविष्टास्तत्रैनं पर्वमकेरकादयः । अनुज्ञापि महीपालं तुङ्गं शस्त्रैरपातयन् ।
मन्त्री महारथो नाम योऽभूच्छङ्करवर्मणः । तद्वंश्यस्तुङ्गभृत्येषु श्लाघ्यः सिंहरथः परम् ।
निःशस्त्रो यः क्षणे तस्मिन्परित्राणविधित्सया । हन्यमानस्य तुङ्गस्य पृष्ठे स्वं वपुरक्षिपत् ।
तुङ्गस्य प्रथमाघाते रुद्धश्वासोऽभवद्भयात् । राजा तस्मिन्निरुच्छ्वासे सोच्छ्वासः समपद्यत ।
आस्था न ब्राह्मणस्यासीद्धर्मनाम्नः सुतोऽन्तिके । यः पापकारी तुङ्गस्य पार्थः कङ्कस्य दुर्मतिः । ८५
ताभ्यामाशुविरेकिभ्यां त्राणार्थस्याङ्गुलीमुखे । क्षिपद्भ्यां पशुवत्तत्र शस्त्रं त्रासवशाज्जहे ।
अन्तरङ्गास्तु चङ्गाद्या येऽभूवंस्तत्र मन्त्रिणः । तैः स्त्रीवदासितन्तूष्णीं धृतैः शस्त्राञ्चितैरपि ।
अज्ञाततुङ्गमृत्युभ्यस्तमुखे तत्र भूपतिः । तद्भृत्येभ्यः शङ्कमानो वह्निदानादिवादिकम् ।
आश्वासाय स्वभृत्यानां छित्त्वा खड्गेन सत्वरम् । पातयामास तुङ्गस्य ससुतस्य शिरो बहिः ।
दृष्ट्वा स्वामिशिरश्छिन्नं सैन्ये दैन्यात्पलायिते । भृत्यतामुज्ज्वलीचक्रुः कतिचित्तुङ्गसेवकाः । ९०
भुजङ्गनामा सामन्तद्विजापत्यो गृहागतः । संग्रामराजं विदधे गेहाद्देहं पलायितम् ।
द्वारं कनकदण्डेन भञ्जन्नर्गलितं ततः । विंशतिं हतवान् योधान् स राजास्थानमण्डपे ।
कोशाधिकारी त्रैलोक्यराजनामा हतो रणे । कप्पामन्तकधाभेयो वीरोऽप्यभिनवाभिधः ।
अङ्गने त्रिंशदेकाङ्गा वीरास्तुङ्गोपजीविनः । श्रेणीं बबन्धुर्निहता निःश्रेणीं स्वर्गपद्धतेः ।
सङ्ग्रामं पद्मराजाख्यः कृत्वापि निसृतोऽक्षतः । स्वामिप्रमयदुःखाग्नितापं तीर्थाश्रयाज्जहौ । ९५
अन्ये लोकद्वयत्राणमित्रं शस्त्रं रणाङ्गने । संत्यजन्तो व्ययुज्यन्त यशसा जीवितेन च ।
चन्द्राख्यः सुभटश्चान्यो दैशिकश्चार्जुनाभिधः । हेलाचक्रो डामरस्य त्यक्तशस्त्राः परैर्हताः ।
लोठितावसथस्तुङ्गो लुण्ठितश्रीर्महीभुजा । आषाढशुक्लद्वादश्यां कथाशेषो व्यधीयत ।
निर्द्रोहवृत्तौ भूभर्त्रा तुङ्गे सतनये हते । लम्बोदया व्यजृम्भन्त खलप्राया नृपास्पदे ।
राज्ञो मनः कलुषयन् गूढपैशुन्यकर्मणा । यो भ्रातृभ्रातृसुतयोर्विपत्तौ हेतुतां गतः । १००
सद्भ्रवादनिर्दग्धो नागो निजकुलान्तकः । तुङ्गभ्राता ततो राज्ञा कम्पनाधिपतिः कृतः ।
युगलकम् ॥ भार्या कन्दर्पसिंहस्य क्षेमा परमचर्षणी । नागेन सङ्गमं चक्रे रक्षसेवासितत्रपा ।
प्रशान्ते तुमुले तिष्ठा चतुर्भिर्दिवसैः सती । तुङ्गस्नुषा सुता शाहेः प्रविवेश हुताशनम् ।
सम्मायामवरुद्धायां कन्दर्पो यावजीजनत् । पुत्रं विचित्रसिंहं च भ्रातृसिंहं च विश्रुतौ ।
गृहीत्वा तौ स्नुषां तां च सङ्गना तुङ्गवल्लभा । देशाद्विनिर्गता दीना राजपुर्यां स्थितिं व्यधात् । १०५
॥ युग्मं ॥ तुङ्गस्थाने ततो राज्ञा पापो भद्रेश्वरः कृतः । भूतेश्वरादिदेवानां चक्रे कोशादिलुण्ठनम् ।
कियद्विवेकवैकल्यमस्य राज्ञः प्रकाश्यताम् । तादृशानपि यश्चक्रे पार्थादीनधिकारिणः ।

पार्थो परमदुर्मेधाः ख्यातो भ्रातृकलत्रगः । निर्व्विचारेण येनेन नगराधिकृतः कृतः ।
वधादिपापं पार्थेन सुकृतत्यक्तचेतसा । पवित्रे प्रवरेशस्य रङ्गपीठे प्रवर्त्तितम् ।
चक्रे लुब्धस्य भूभर्त्तुर्मतङ्गः क्षपणाग्रणीः । सिंधोः सुतः कोशवृद्धिं प्रजापीडनपण्डितः । ११०
पुरा देवमुखाख्यस्य द्विविरस्य किलाजनि । चापूपिकायां वेश्यायां पुत्रश्चङ्गमुखाभिधः ।
यस्तुङ्गोपाश्रयाल्लब्धा शालितत्वं महीपतेः । वराटकात्प्रभृत्याघोत्कोटीनां कृतसञ्चयः ।
विभूतिमध्ये लुब्धस्य प्रभुता धान्यढौकितैः । अपूपैर्निजभृत्येषु विक्रियाभूत्कुतोचितः ।
प्रभूताग्निररोगश्च भूत्वा लब्धोदयः पुनः । यो मन्दाग्निः सरोगश्च तिष्ठल्लोकैर्व्यहस्यत ।
एकमेवाभवत्तस्य सुकृतं मरणक्षणे । कोटेस्त्रिभागं यद्दात्क्षीरणेश्वरयोजने । ११५
तदात्मजाः कृता नानाभागनन्दिमुखास्त्रयः । अधीशाः स्तनगाङ्गस्य राज्ञा तुङ्गोपजीविनः ।
हास्यं बभूव भूभर्तुस्तेषां तुङ्गपदार्पणम् । वल्मीकं यवकाण्डीनां हेमस्थाने शिरोरिव ।
ते तुरुष्काहवे राज्ञा तुङ्गवत्प्रहिताः पुनः । प्रत्यावृत्त्य यथोद्देशं निजमेव पलायिताः ।
इत्थं मन्त्रिषु योग्येषु शान्तिमीले च भूपतौ । केचिदुद्रेकमभजन्दरहिविरडामराः ।
सा लोठिकामठं कृत्वा लोठिका नृपतेः सुता । तिलोत्तमाख्या विदधे मातुर्नाम्ना मठं परम् । १२०
पापिनामपि हन्तेयत्क्वापि सत्कर्मवासना । भट्टेश्वरोऽपि यच्चक्रे विहारं सुकृतोद्यतम् ।
सत्यं विवेको सङ्ग्रामराजोऽयो न्याय्यतोऽर्ज्जितम् । निजं सुवाणो द्रविणं प्रपामपि न निर्ममे ।
श्रीलेखा पार्थिववधूः श्रीयशोमङ्गलात्मजा । पत्यौ शिथिलसामर्थ्ये स्वैरिणीत्वमसेवत ।
सुतः सुगन्धिसीहस्य जयलक्ष्म्यां बभूव यः । वल्लभो निर्भरन्देव्याः सोऽस्यास्त्रिभुवनोऽभवत् ।
स जयाकरगञ्जादिगञ्जस्रष्टानितीन्तृणधीः । कोशोपकारकृत्तस्या आरोऽप्यासीज्जयाकरः । १२५
मययामीणगञ्जादिकर्त्री सञ्चयतत्परा । साभूद्भर्तुः प्रसादेन सुभगा भूरिवैभवा ।
स चतुर्थसमाषाढप्रारम्भाहे महीपतेः । हरिराजाभिधे पुत्र मा भैषीखाक्षमाययौ ।
सुमनःसेवितः कुर्व्वन्नशेषाशाप्रकाशनम् । ह्लादावहः स सर्व्वस्य चैत्रोत्सव इवाभवत् ।
अमोघाज्ञेन तेनेमां निश्चौरां कुर्व्वता महीम् । पथवीथ्यां निशीथिन्यां निषिद्धाहारसंसृतिः ।
अचिरस्थायिनी राज्ञस्तस्याज्ञा चिन्तनोन्नतिः । वन्ध्या नवेन्दुलेखेव पार्थिवानामजायत । १३०
द्वाविंशतिमहान्युर्व्वीं स रक्षित्वा क्षमापतिः । क्षयं ययौ शुचियशाः शुचिशुक्लाष्टमीदिने ।
प्राणिनां द्योतमानानां नक्षत्राणामिव क्षणात् । लक्ष्मीर्यौवनपर्वेत्थं सङ्गता भङ्गदायिनी ।
सपत्न्योः स्वैरिणीवृत्तिः सुतस्य जननी निजा । अभिचारश्चकारास्येत्यविगाना जनश्रुतिः ।
राज्योपकरणे सज्जीकृते राज्यार्थिनी स्वयम् । सा राजमाता श्रीलेखा यावत्स्नात्वा समागता ।
मिलितैस्तावदेकाङ्गैर्भ्राता धार्मेयकेन च । सागराख्येन तत्पुत्रो बालोऽनन्तो नृपः कृतः । १३५
॥ युग्मं ॥ रत्नं निघृष्टोरन्येन हृते तत्र प्रमापणम् । तद्वणिजोऽहेलुब्धस्य पापायैव यथा किल ।
राजमातुस्तथा राज्यलुब्धायाः पुत्रनाशनम् । अभूदन्यहृते राज्ये वृजिनायैव केवलम् ।

॥ युग्मं ॥ स राज्यविप्रलम्भेन तादृशा व्यथिताशयाः । व्यस्मरत्तनयस्नेहं शिम्भोगाभ्यासवासनाम् ।
अथाजगाम स्थविरः पितृव्यो बालभूपतेः । राज्यं विग्रहराजाख्यो हन्तुं विततविक्रमः ।
स लोहरात्प्रवलितो दग्ध्वा द्वारमतर्कितः । दिनद्वयेन सार्द्धेन नगरं सत्वरोऽविशत् । १४०
श्रीलेखाप्रेरिताः सेनाः प्रविष्टं लोठिकामठम् । उद्दीपिनाशयंस्तत्र निजप्रसूतं सहानुगम् ।
मठद्वयं ततः कृत्वा स्वस्य भर्तुः सुतस्य च । तस्थौ व्ययवती राज्ञी राज्यद्रोहोद्यतानिशम् ।
ततो नरपतिः किञ्चिच्छनैः शिथिलशैशवः । अतिव्ययादिव्यसनी गर्भेश्वरतथाऽभवत् ।
तस्यासन् रुद्रपालाद्याः शाहिपुत्राः परम्प्रियाः । अनल्पवेतनादानैराज्योत्पत्त्यपहारिणः ।
कृतप्रत्याहनिर्व्वाहः सार्धलक्षेण भूभुजा । रुद्रपालो दरिद्रत्वं कदाचिदपि नात्यजत् । १४५
दिद्दापालः क्षमापाललब्धया प्रतिवासरम् । सहस्राणामशीत्यापि शेते तस्मिन् सुखं निशि ।
अनङ्गपालवेतालस्कन्धे क्ष्मापालवालितः । शश्वत्सुवर्णगीर्व्वाणप्रतिमापाटने मनः ।
रुद्रपालः परित्राता धनप्राणादिहारिणाम् । बभूव चौरचण्डालप्रायाणां वज्रपञ्जरः ।
कायस्था रुद्रपालाप्ताः प्रजानां पीडनं व्यधुः । चकारान्नमठं श्रीमानुत्पलाख्यो यदग्रणीः ।
वियद्रूपालवाल्लभ्यमन्यत्तस्याभिधीयताम् । जालन्धराधिपस्येन्दुचन्द्रस्येन्दुमुखीं सुतां । १५०
उपयेमे मनोज्ञत्वाज्ज्येष्ठामासमतिं स्वयम् । यया मठः स्वाभिधया विदधे त्रिपुरेश्वरे ।
तस्याः किञ्चिदिव न्यूनां स्वसारं यौवनीयसीम् । अथ सूर्य्यमतीं देवीं भूभुजे परिणीतवान् ।
रुद्रेण भूपतिः सख्या स कर्णसुखदायिना । पाचीकृतो दुर्नयानां कर्णेनेव सुयोधनः ।
कम्पनाधिपतिस्तत्र क्षणे त्रिभुवनो बली । आययौ भूपतेर्हन्तुं राज्यं सम्भृतडामरः ।
आकृष्टाशेषकटके तस्मिन् योद्धुमुपागते । एकाङ्गाः सहचाराद्या राजपक्षम तत्यजुः । १५५
असिना लावयन् ग्रामानमोघान् श्लाघ्यविक्रमः । प्रजहारानन्तदेवः स्वयन्त्रिभुवनं रणे ।
सन्नाहरक्षिताङ्गः स दृढप्रहृतिपीडितः । विद्द्रौ वदने चासृक् स्वप्रतापमिवोद्वमन् ।
विनयच्छन्नशौटीर्य्यः शिशुप्रायः स भूपतिः । दृष्ट्वा बालमसम्भाव्यमस्मिंस्त्यक्ता रणं गते ।
शमाला डामरं हन्तुं प्राहैरभिनवाभिधम् । शालास्थले व्यधात् श्लाघ्यविक्रमो मोघविक्रमम् ।
मांसास्थिपेषणाघृष्टीभूतखड्गो भ्रमन् रणे । भुवनक्षोभकृदभूद्भैरवोऽनन्तभूपतिः । १६०
पश्यन् प्रहारलूनाङ्गानेकाङ्गान् स पदे पदे । निवेद्यमानानग्रस्थैर्नामग्रहणपूर्व्वकम् ।
क्षितिभृज्जातशार्चिष्णो विलम्बिस्थावरे ततः । चासृक्षमचपटलादेकाङ्गानां न्यशारयत् ।
॥ युग्मं ॥ एवं तत्र कृतशेन भृत्येभ्यः प्रतिपादिता । विलम्बिस्तेन दीनारकोटिषश्चतः क्रमात् ।
राज्ञो रणान्निवृत्तस्य दुग्धसेकैः करात्स्रुतः । स्थिरपदद्दृढः कृष्टस्थिरेणेति जनश्रुतिः ।
अहो महत्त्वं भूभर्तुर्दीनो देशान्तरागतः । तादृक् त्रिभुवनो येन संविभेजे विमन्युना । १६५
सप्तराजाभिधस्तेन बन्धुर्गङ्गाधिपः कृतः । रुद्रपालकृतद्वेषो विरक्तस्खलितो ययौ ।
सप्तभिर्म्लेच्छभूपालैस्समं मिलितडामरः । तेनानीतो दरद्राजो यत्नादचलमङ्गलः ।

चोरपृष्टाभिधं ग्रामं प्राप्तस्य समरोत्सुकः। तस्यायं त्रिक्रमोदयो रुद्रपालो विनिर्ययौ।
स्थोव्यवस्थापिते युद्धे सैन्याभ्यां दरदीश्वरः। क्रीडापिण्डारकाख्यस्य नागस्य भवनं ययौ।
दुर्नयाचरणात्तत्र पार्श्वस्थैर्व्वारितोऽपि सः। प्लवमानस्य मत्स्यस्य गात्रे कुन्तमपातयत्। १७०
अथोज्जगाम गोमायुवपुःकुण्डाद्भुजङ्गमः। स च तं मृगयोत्सुक्याद्धावद्दरदीश्वरः।
तमापतन्तमालोक्य व्यवस्थोन्मूलनं विदन्। आस्कन्दाशङ्कि भूभर्तुः सैन्यं युद्धाय निर्ययौ।
अभूत्ततोऽस्त्रसङ्घर्षसंजातानलसंहतिः। क्षतस्वर्गाङ्गनोद्वाहो वीराणां समरोत्सवः।
तस्मिन्महाभटाटोपे शिरश्छिन्नं दरत्पतेः। रुद्रस्य रौद्रमहसः संप्ररूढं यशः पुनः।
समरे बधबन्धादि म्लेच्छराजाः प्रपेदिरे। सम्प्राप हेमरत्नादि पुनः कश्मीरभूपतिः। १७५
उत्तंसमुक्ताद्योताम्भःक्षालिताक्षलसज्जलम्। रुद्रपालो दरद्राजशिरोभर्तुरुपानयत्।
भ्रात्रोदयनवत्सेन क्षतप्रायैस्तथा द्विजैः। तथाह्येवंविधास्तस्य बभूवुरवदालिकाः।
रुद्रपाले ततो लूतामयेन प्रमयङ्गते। अन्येऽपि शाहितनयाः क्षिप्रमेव क्षयं ययुः।
पालस्नेहान्ध्यविगमे शुद्धाशयजुषोऽभवत्। देवी सूर्य्यमती भर्तुर्दर्पणस्येव विम्बिता।
सुभटापरनामा सा गौरीश्वरविधायिनी। पुण्यं वितस्तापुलिने निर्म्ममे सुभटामठम्। १८०
गोहेमहयरत्नादिप्रदानैः सुवहून् द्विजान्। सदाशिवप्रतिष्ठायामदरिद्रांश्चकार सा।
आशाचन्द्रापराख्यस्य कल्लनस्यानुजन्मनः। नाम्ना व्यधापि वात्सल्यात्साग्रहारो मठस्तया।
सिल्लनाख्यस्य च भ्रातुर्भर्तुश्चाभिधया सती। मठौ चकार यत्पार्श्वे विजयेशामरेशयोः।
अष्टोत्तरं चाग्रहारशतं श्रीविजयेश्वरे। ब्राह्मणेभ्यो महापुण्यं विदद्भ्यः प्रत्यपादयत्।
पत्युर्नाम्नाप्यग्रहारान् प्रददावमरेश्वरे। त्रिशूलवाणलिङ्गादिप्रतिष्ठाश्च विनिर्ममे। १८५
दम्पती राजराजाख्ये मृते पुत्त्रे प्रचक्रतुः। सदाशिवान्तिके राजवेश्म सन्त्यज्य तौ स्थितिम्।
ततःप्रभृति सन्त्यज्य पूर्व्वराजकुलस्थितिम्। तथैव रूढा भूपालास्तत्रैव वसतीर्व्यधुः।
पार्थिवस्याश्वशालीयाः प्रियवाजितया प्रियाः। प्रसादैर्देशलुण्ठ्या च सर्व्वतः समतां ययुः।
गर्भेश्वरतया भर्तुर्व्वल्लभो नर्मकोविदः। अलुण्ठयत्प्रजानित्यं डल्लको नाम दैशिकः।
मालवाधिपतिर्भोजः प्रहितैः स्वर्णसञ्चयैः। अकारयद्येन कुण्डयोजनं कपटेश्वरे। १९०
प्रतिज्ञा भोजराजेन पापसूदनतीर्थजैः। सततं वदनस्नाने या तोयैर्व्विहिताभवत्।
अपूरयत्तस्य यस्तां दुस्तरां नियमादितः। प्रहितैका च कश्मीकुलैस्तदारिपूरितैः।
स तस्य पद्मराजाख्यः पर्णप्रात्यिकदैशिकः। प्रियताम्बूलशीलस्य त्यागिनो वल्लभोऽभवत्।
तेन नागरखण्डादिपर्णविक्रयिणा नृपः। देशोत्पत्तिधनं प्रायो निःशेषं दापितस्तदा।
पद्मचन्द्रकशोभाङ्कमौलिसिंहासने नृपान्। बन्धायादत्त लब्धव्ये धने स धनिकोऽधिके। १९५
तद्राजचिक्रमास्थानोपयुक्तं तस्य मन्दिरात्। आनीयमानं मासार्थवासरे मासि मासभूत्।
स्वकोशसञ्चयं दत्वा देवीसूर्य्यमतीमतः। पद्मराजोद्भवान्देशस्याव्यवस्थाव्यवारयत्।

शमिते चाश्वशालीयडक्करकादिभये तदा । प्रावर्त्तन्त पुनर्देशे व्यवस्था निरुपद्रवाः ।
ततः प्रभृति राज्ञैव राजकार्य्याधर्ताभवत् । तस्थौ शौर्य्यकथां त्यक्त्वा राजा कार्य्यकरः पुनः ।
भर्त्तुर्मारीविधेयत्वन्तस्याभट्टजयस्तथा । निष्कलङ्केन शीलेन शान्योन्यं स्पृश्यतामगात् । २००
भवभक्तिव्रतस्नानत्यागशीलादिभिर्गुणैः । कृतिनानन्तदेवेन मुनयोऽपि विनिर्ज्जिताः ।
राज्ये तस्य महीभर्तुर्दीर्घे तांस्तानलङ्घयत् । पतिम्बरेव राजश्रीर्भृत्यान्नवनवोन्मुखी ।
क्षेमाभिधे राजगञ्जपूरणे बालभञ्जकः । व्यधाद्द्वादशभागादिप्रकारैर्ढौकयन्धनम् ।
मन्त्री ततोऽभवत्साधुस्तिग्मतेः केशवो द्विजः । शौधस्वच्छातपेनेव भूपालो येन भूषितः ।
भ्राम्यन् गतश्रीरेकाकी स एव ददृशे जनैः । भाग्याभ्रभ्रष्टतडितो निविडाः कस्य सम्पदः । २०५
॥ युग्मं ॥ भाग्याधीनं धनं ध्यात्वा मुधा मुग्धधियामसौ । कुलविक्रमयोरीर्ष्या मिथ्यैव पृथुतां प्रति ।
प्रासादपालवैश्यस्य गौरीशमन्दिरालये । भूतेर्हलधरो वङ्गो वराहश्चाभवन्सुताः ।
तेभ्यो हलधरः सूर्य्यमत्या विहितसेवनः । वृद्धिं दिने दिने गच्छंल्लेभे सर्व्वाधिकारिताम् ।
विधेयान् बुद्धियुक्तेन कुर्व्वतः क्षित्यनन्तराम् । सपत्नीकोऽभवत्तस्य मुखप्रेक्षी क्षमापतिः ।
क्षेमेण सूचितं पूर्व्वं सपादायमुदग्रधीः । कर्म्मस्थानं स्फुटीचक्रे सर्व्वं स्थानधुरन्धरम् । २१०
अभूद्वर्णकमूल्यादिलेखनं कनकस्य यत् । राजायत्तं जनस्यार्थसञ्चयानां प्रकाशकं ।
स तन्निवारयामास भाविनां भूभुजां विदम् । ग्रामे सञ्चितवित्तस्य दण्डाद्यायासकारिताम् ।
भर्त्सितानश्वशालीयान्धनदारापहारिणः । कांश्चिद्व्यापाद्य स शमं निन्ये लोकस्य विप्लवम् ।
तेनायासहृतानीतः कश्चित्स्वर्णैः सुरास्पदैः । शोभां मठाग्रहारैश्च वितस्तासिन्धुसङ्गमः ।
भ्रातरश्च सुताश्चास्य लक्ष्मोपरिचयोन्मदाः । द्विरदा इव न क्वापि दानप्रणयितां जग्मुः । २१५
तद्भ्रातृपुत्रो बिम्बाख्यः श्रीमान्वीरो वराहजः । दूराधिकारकार्य्याशोद्दानप्रलयवारिदः ।
स डामरकुलाकालमृत्युः स्वल्पानुगोऽभवत् । खशाहवे जहत्प्राणान् पलायनपराङ्मुखः ।
चम्पायां सालभूपालमुन्मूल्यानन्तभूपतिः । तत्तनूपजयी नव्यन्धराधवमरोपयत् ।
मन्त्रशून्येन शौर्य्येण परदेशेषु भूपतिः । हठप्रवेशान्विदधत्सोऽभूत्सङ्कटगतोऽसकृत् ।
तुक्कात्मजस्य कलशस्यारब्धो खिन्नसैनिकम् । अमोचयत् हलधरो युक्त्यावल्लापुरादमुम् । २२०
उरशाच्च प्रविष्टस्य वैरिरुद्धाध्वनो व्यधात् । कम्पनाधिपतिस्तस्य मार्गात्संशोध्य निर्गमम् ।
कालेऽनन्तमहीभर्तुर्व्वैरिविपत्सङ्कटं । साहसान्युदजृम्भन्त तानि तानि क्षणे क्षणे ।
राजेश्वरो द्वारपतिः श्रीमान् भट्टेश्वरात्मजः । डामरैः क्रमराज्यस्थैरन्येऽपि बहवो हताः ।
वीक्ष्य नीतिदृशा कार्य्यं भीत्या व्यवहरन्नपि । अत्यन्तं निष्परिभवं को भुङ्क्ते नृपमन्दिरे ।
दुष्प्रवादास्पदीभूतो देव्या निविडसेवनात् । आशाचन्द्रादिभिः क्रुद्धैर्व्वद्धो हलधरोऽप्यभूत् । २२५
स राज्ञा हृतसर्व्वस्वो बन्धनक्लेशमन्वभूत् । भाग्यप्रभावे निःसारे सुखमैकान्ततः कुतः ।
नृपेण बन्धनात्त्यक्तं तं श्रीः प्रत्यागता पुनः । आलिलिङ्ग सितच्छत्रच्छायाश्रितसितानना ।

स राज्याः प्रावृष इव प्रणयेन क्षणे क्षणे। कोपप्रसादमेघार्कपर्य्यायापातमन्वभूत्।
ततः सरलचित्तस्य क्रमेण समपद्यत। भार्य्याजितत्वं भूभर्त्तुर्दुर्म्मिपाकापरीत्यकम्।
अधिकारपरित्यागाद्दोषाननुस्मरयन्नहान। वदद्भिर्वार्य्यमाणोऽपि प्राग्यैर्हलधरादिभिः। २३०
पत्न्या संप्रेरितः प्रस्रप्तमयस्नेहमूढया। पुत्राय कलशायाभूद्राज्यं दातुं समुद्यतः।
यास्यन्ननुशयं राजस्नेवंवाद्यपि कारितः। सप्तं तेन रणादित्यनाम पञ्चाभिषेचनं।
एकोनचत्वारिंशस्य वर्षस्य तनयः सिते। षष्ठेऽङ्कि बहुलस्याभूदभिषिक्तो महीभुजा।
अथ स्थाने रणादित्यो राजपुत्रानिवेशयन्। चिन्तयन् राज्यमाहात्म्यं प्रतिपत्तिषु निष्ठुरः।
अनन्तो राजपुत्रोऽयं देवेति कथयन्वचः। स्फाटिकान्यसहस्तः क्षितिपालं न्यवेदयत्। २३५
कुपितेन स भूभर्त्त्रा परिहृत्यावलोकितः। एवं कृतस्थितो व्यक्तं तमूचे नीतिनिष्ठुरः।
इत्थं यत्र निवेद्यन्ते कान्यकुब्जादिभूभुजः। तत्रैव त्वत्कराज्यस्य काऽन्यस्य स्यात् प्रक्रिया तव।
दिने दिने सानुशयो नियतं भविता भवान्। नाभिमानपरित्यागः कर्त्तुं शक्यो मुनेरपि।
सुदूरदर्शिनां तत्र मन्त्रिणां हृदयङ्गमम्। राजा तस्य वचः श्रुत्वा प्रतिवाक्यावनो ऽभवत्।
दृष्ट्वाऽन्येद्युर्नवं भूपं राजचक्रेण सेवितम्। नवेतरस्य सहितं परिमितैः परिच्छदैः। २४०
धीमान् हलधरो नत्वा कृतकास्थया नृपम्। एवं निर्भर्त्सयंल्लक्ष्मीं तं प्रत्याजीहरत्पुनः।
विधाय निःसुखं सूनुं राज्यभारार्पणाच्छिशुम्। कस्मात्त्वसुखसापेक्षो न जिह्रेष्यत्र वार्द्धके।
तत्त्वयं राजकार्य्याणां कार्य्यमुद्वहनं त्वया। अग्रून्यो चैवमाभोगैरयमस्तु सुतस्तव।
इत्युक्त्वा स पुनर्भूपमधिकारमजिग्रहत्। चक्रे कलशदेवश्च कलया युक्तिवर्त्तितम्।
पितोरेवाग्निके कुर्व्वन्नाहाराद्यपि सन्ततम्। ततो बभूव कलशो नाममात्रमहीपतिः। २४५
सर्व्वस्यामास्त्रपूजादिविधाने पार्थिवोचिते। पितुः सहायकल्पः स पौरोहित्यमिवाकरोत्।
अनिमित्तप्रवृत्तानामनिमित्तानुतापिनां। न क्वापि चलचित्तानां तिरश्चामिव निश्चयः।
दापयित्वा पतिं राज्यं निर्ब्बन्धेनापि तावता। सूनौ बभूव यद्राज्ञी विप्रमेवानुतापिनी।
सेर्ष्या स्नुषाणामुत्कर्षंपार्थिवप्रपदोचितं। वेशालङ्करणादौ सा क्वचित्ता न चक्षमे।
हासीकृत्यं तया पुत्त्रमहिष्यः कान्तिता सदा। स्वेदोपलेपने यावच्च वैमुख्यमदर्शयत्। २५०
पुत्रो विग्रहराजस्य क्षितिराजाभिधस्ततः। राज्ञः पितृव्यजो भ्राता कदाचित्पार्श्वमाययौ।
तस्मै न्यवेदयत् खेदं सचित्तस्योपतापकं। पुत्त्रे भुवनराजाख्ये राज्यलुब्धेऽतिविश्रुते।
स हि तस्मात्मजो नीलः पुरा राज्यं समाश्रितः। तद्बलैः पितुरालम्बिं विधातुं सोद्यमोऽभवत्।
नाम भागवतानाञ्च पूज्यानां स्वपितुर्व्यधात्। इत्यथ्योपधीतानां श्रुनामग्रुचिमानसः।
क्षितिराजः स्वबध्वाश्च विद्गुङ्घायां विशुद्धधीः। मनस्तापापहे चक्रे सर्व्वत्यागाद्धते स्पृहां। २५५
राज्यं कलशपुत्राय श्रेष्ठानन्तरजन्मने। रामलेखाभिधानायां राज्ञ्यां जाताय सत्वरं।
दत्त्वा सानन्धयायापि तदोत्कर्षाभिधाय सः। राजर्षिर्व्विबुधैः सार्द्धं विदधे तीर्थसेवनं।

भुक्त्वा शमसुखं भूरीन्वर्षान् परमवैष्णवः । स चक्रायुधसायुज्यं ययौ चक्रधरे सुधीः ।
स च भोजनरेन्द्रश्च दानोत्कर्षेण विश्रुतौ । सूरी तस्मिन् क्षणे तुल्यं द्वावास्तां कविबान्धवौ ।
पितुः पितृव्यजाद्भ्रातुर्जातस्यानन्तभूभुजा । तन्वङ्गराजस्योत्सङ्गे नप्ता न्यासीकृतः शिशुः । २६०
तन्वङ्गोऽपि विहृद्धिं तन्नीत्वा राष्ट्रं शिशोश्च तम् । पुनः प्रविष्टः कश्मीरानसौ चक्रधरे ययौ ।
सर्व्वसाधारणीभूतभोगानां राजवीजिनाम् । तावज्ज्ञातेयमभवत्स्नेह द्रोहकलङ्कितम् ।
इन्दुराजात्मजात्सिद्धुराजो यो बुद्धराजतः । जातः मदनराजाख्यं वीरं पुत्रमजीजनत् ।
अत्युत्सिक्तः सुतस्तस्य दरन्नृपतिमण्डलात् । विधुरे राज्ञि निर्यातः शौर्य्योद्रेकादखण्डितः ।
तदानीं जिन्दुराज्याख्यो डामरोद्रेकखिन्नया । राज्ञ्या स्वयं गृहं नीत्वा साचिव्यं ग्राहितोऽभवत् । २६५
काणः शोभाभिधस्तेन गाढोद्वेगावहः प्रभोः । देयामस्त्रा डामरोऽथ दत्वास्कन्दं निपातितः ।
कम्पनाधिपतां दत्वा ततस्तस्य प्रतापिनः । पार्थिवो राजपुर्य्यादीन् देशांश्चक्रे करप्रदान् ।
अनन्तभूभुजो राज्ये तत्तत्स्खलितसङ्कटे । आलम्बयष्टिप्रतिमो ययौ हलधरः क्षयं ।
मुमूर्षुणा चक्रधरे तेन पार्श्वस्थितो नृपः । सजानिरुपदेशार्थी स तदेत्यमकथ्यत ।
मा कार्ष्ट परराष्ट्रेषु रभसारब्धविग्रहम् । युक्त्या वज्रायुरादौ वा व्यपोढं व्यसनं मया २७०
विशङ्क्यो जिन्दुराजोऽयं पराध्यां वृद्धिमागतः । भेदं वः सह पुत्रेण जयानन्दो विधास्यति ।
कथितं तेन तत् स्मृत्वा जिन्दुराजं महौजसं । विज्जेनावन्धयद्राजा युक्तिमांस्त्याजितायुधम् ।
अथ कालेन कलशस्याभूत्कलुषिताशयः । भृत्यैरसाधुसंसेव्ये प्रसक्तिं ग्राहितोऽध्वनि ।
तस्याभवद्विजयित्थराजपाजादयः प्रियाः । उत्सेकदा राजपुत्रास्त्वारः साहिवंशजाः ।
पुत्रो गङ्गपतेर्नागनाम्नो निकटसेवकः । सोऽपि तस्य जयानन्दः कौटिल्याध्यापको ऽभवत् । २७५
द्विजेन्द्रेऽमरकण्ठे तु याते शिवसमानतां । राजा प्रमदकण्ठस्य ययौ तज्जस्य शिष्यतां ।
दुःशीलस्य प्रकृत्यैव तस्याकृत्योपदेशकृत् । गम्यागम्यविचारस्य परिहर्ताभवद्गुरुः ।
गुरोर्गताविकल्पत्वं तस्यान्यत्किमिवोच्यतां । त्यक्तशङ्कः प्रवहृते स्वसुतासुरतेऽपि यः ।
महासमयसञ्चारचतुरैर्थ्यैरभीतितः । गण्यते स्वप्रभावोग्रैर्भैरवोऽपि न निर्भयः ।
ते भट्टपादास्त्रासेन पतिता भग्नजानवः । विडालवणिजा स्वस्याः शिरोहस्तार्पणैः कृताः । २८०
पुराकृत्य विडालाङ्को वणिक् कश्चिदिहाभिधां । विडालवणिगित्यात्मनामविस्मारि कान्दधे ।
यो व्याजमूर्खो वैद्यत्वगुरुत्वाद्दृतः क्रमात् । पादूकृद्रजकादीनां शिल्पिनां गुरुतामगात् ।
सभट्टपादानुल्लाघांश्चक्रे मूर्द्धधिरोपयन् । श्रेष्ठी विडालविष्ठाघर्षिकुगन्धोत्कटङ्करं ।
एवं प्रकृतिनिःसारैरपि गर्जद्भिरन्वहं । आन्ध्यं स गुरुभिर्निन्ये दिवसोऽम्बुधरैरिव ।
ये दीर्घजागरा रात्रौ भूरिभोजनसेविनः । अजीर्णपिशिनोद्गारनित्यदुर्गन्धकन्धराः । २८५
अवस्करप्रणालाभाः पृष्ठे क्षिप्तमधःपथैः । शौचपाथ इव क्षिप्रमुज्झन्ति मधुनिर्झरं ।
नक्तमातोद्यवाद्यैस्तैः सार्द्धं कृतसेवनः । चारणो वेणुवाद्यज्ञो योषितां धर्षणं हठात् ।

कनकाख्ये मदोद्दामे कुड्डे हलधरात्मजे। सख्ये निबद्ध तद्भृत्यैश्छिद्रमार्गो व्यधीयत।
योविटश्वमको नाम लूनाङ्गो मङ्गलावहः। शनैर्लेभे स वाल्लभ्यं कौढुन्याख्यभूपतेः।
प्रसादविस्तो भूभर्तुरन्तरे मन्त्रिणामपि। लब्धप्रतिष्ठः स प्राप ठक्कुराख्यां नृकुक्कुरः। ९०
प्रथाप्राप्तस्वपादैतुं संभ्रमन्नश्मसञ्ज्ञया। प्रागेव नासावंशस्य भञ्जनं बहमन्यत।
तेनोद्घोपितदोःशौर्य्यः स यस्तके चपोज्झितः। अवाच्यमपि वृत्तान्तं मध्यपातान्नदृश्यते।
कल्हनाख्या स्वसा राज्ञो नागाख्या च तदात्मजा। परदारप्रसक्तेन सम्भोक्तुं नावशेषिता।
तमुदन्तं सपत्नीको बुबुधान्इ्द्दुभूपतिः। न प्रत्यभैत्सीत्तपया तस्या तु निश्चतव्यथः।
भिक्षुको धान्यमुष्टीनामोवनाग्रामजो द्विजः। योऽप्यभूद्ग्रामदेवश्रीविधेयो लोष्टकाभिधः। ९५
संग्रामक्षेत्रपालस्य प्रसादात्पर्य्यटन्निशि। वस्तूनां मुष्टिबद्धानां विद्यानामुष्टिलोष्टकः।
परां प्रसिद्धिं सम्प्राप्तो नवच्छापस्य रागिणः। आसीद्गुरुत्वकौढुन्यदेवश्चात्वे रतिप्रियः।
तिलकं ॥ भट्टारकमठाधीशः साधुर्व्योम्नि शिवोजटी। खुर्खुटाख्याधिकरणे गृहीतनियतव्रतः।
अन्धगान्धर्व्विकान् मर्म्मनाम्नः स्वार्थनसेवकान्। अवन्तिपुरजं हस्तपाहकद्विजचेलकं।
परिभ्रष्टमुपादत्त लालितत्वेन यं पुरा। स तेन वारिताशस्तं भङ्गाधूत्रमयाम्बरः। २००
विसृज्यमानः पुष्पाणि ग्राहयित्वा नृपान्तिकं। मदनो नाम वाचालः प्रपदेऽत्यन्तरङ्गतां।
शनैः कौढुन्यदुर्गोष्ठीमध्यपातं समाश्रयन्।
चतुर्भिः कुलकं। तैश्चान्यैश्च विटैश्चाटुकारैः क्षिप्रविमोहितः। दोषानपि गुणान्मेने कलशः कलुषीकृतः।
नर्म्मक्षेपणकारिवाक्यमुचितं हास्यं प्रजापीडनं तेजस्वित्वमलज्जतासरसतागम्याङ्गनासङ्गमः।
सारल्यं खलगालिदानसहनं येषां न तत्सन्निधौ किञ्चित्कर्म्मकुकर्म्मदोषइति यद्विज्ञाय सन्त्यज्यते। २०५
राजा चौर्य्यरतौत्सुक्यात्प्रतिगेहं परिभ्रमन्। स्वदारालिङ्गनैः प्रीतिं क्षणदासु न लब्धवान्।
पारतन्त्र्यकृतापारप्रीतिः परवधूरतिः। अभिलाषानलोल्लेके रागभाजां घृताहुतिः।
तान् कुट्टनान् पुरस्कृत्य पश्चषानेकदा नृपः। जिन्दुराजगृहं प्रायात्स रात्रौ चौर्य्यकामुकः।
तत्रासीज्जिन्दुराजस्य स्नुषा परमपुंश्चली। स्वगृहे दत्तसङ्केता नक्तं कलशभूभुजः।
प्रविशन्तमधावंस्तं भषद्भिः सूचितं श्वभिः। धृतामयो गृहद्वारं चण्डालाश्चौरशङ्किताः। ४१०
तान् हन्तुमुद्यतान् दृष्ट्वा तं क्षितौ पतितं भयात्। पृष्ठन्यस्तस्वपुषो ररक्षुरनुयायिनः।
तेभ्यः समुष्टिपातादि ददद्भ्यः कथमप्यभूत्। मैवं कलशदेवोऽयमित्युक्त्वा त्याजितो निजैः।
घ्राणहीनं पुरस्कृत्य नारीमभिससार यत्। तदेव कामिनस्तस्य नूनमासीदमङ्गलं।
स निर्यातो गृहात्कान्ताकटाक्षविवशीकृतः। पथिकालीकटाक्षाश्च दैवाञ्च प्रलयं ययौ।
निजचित्तापराधेन कुर्व्वन्नीतिव्यतिक्रमं। अस्पृश्येभ्यः परिभवं भूपालोऽप्युपलब्धवान्। २१५
इन्द्रियैरिन्द्रचन्द्राद्या क्षेपिता यैः सुरा अपि। अपरित्राणमानत्वं तैर्मर्त्यस्याथवा कथं।
प्रागुन्मीलति दुर्य्यशः सुविषमं गर्व्वोऽभिलाषस्ततो धर्म्मः पूर्व्वमुपैति सङ्क्षयमथो स्वार्थोऽभिमानक्रमः।

सन्देहं प्रथमं प्रयात्यभिजनं पश्चात्पुनर्जीवितं किञ्चाभ्येति विपर्य्ययं विगलने शीलस्य चिन्तामणेः ।
राजधानीमवाप्तस्य दुःशीलस्य महीपतेः । उपायामेव तां वार्त्तां पितरावधिजग्मतुः ।
तौ रुदित्वा सुतस्नेहलज्जाशोकान्वितौ चिरं । निश्चयं बन्धने तस्य सदोषस्य प्रचक्रतुः ।
सर्व्वविद्यानिधिं ज्येष्ठं नप्तॄणां वप्पिकात्मजम् । हर्षं राज्ये चिकीर्षू च निन्यतुस्तां निशीथिनीं । २२०
आकारितस्ततस्ताभ्यां प्रातः कलशभूपतिः । ऊचे विज्जजयानन्दौ साशङ्कौ जनकाङ्कयं ।
तन्मतेन जयानन्ददत्तहस्तः कथञ्चन । अन्वीयमानो विज्जेन सपित्रोः प्राविशद्गृहं ।
पिता प्रविष्टमात्रन्तं वक्त्रे दत्तचपेटकः । अभाग्यभागिन् जहिहि छुरिकामित्यथाब्रवीत् ।
एनं त्रासविस्रस्ताङ्गसन्धिमालम्ब्य पाणिना । सावष्टम्भं स्पृशन् शस्त्रं विज्जो राजानमब्रवीत् ।
राजन्मानवतां धुर्य्यो भवन्नपि भवान् कथं । न त्याज्यं मानिनां वेत्ति मानयशमहाव्रतं २२५
गृहीतवेतनेनायं राजपुत्त्रेण शस्त्रिणा । सङ्कटेऽस्मिन्मया स्वामी जीवता त्यज्यते कथं ।
पिता भवानयं पुत्त्रः क्षणेऽन्यस्मिन्महीपते । मय्यसन्निहितेऽमुष्य यद्योग्यं तद्विधीयतां ।
मुग्धं विमोह्य नृपतिमित्थं वचोभिः स्निग्धकर्कशैः । विज्जः स्वामिनमादाय निराक्रामत्तदन्तिकात् ।
विज्जस्यापूजयन्धीरास्तद्धैर्य्यमतिमानुषं । अनन्तदेवस्याप्यग्रे यदेवं स व्यजृम्भत ।
चण्डी नरपतेः पत्नी भाव्यर्थबलवत्तथा । असाध्यजनमानस्था तस्मिन्नवसरेऽभवत् । २३०
सा चेदाशिष्यतोद्युक्ता नाभविष्यत्तदेतरत् । नियमात्सर्व्वनाशाद्वा बन्धनात्कलशस्य वा ।
ततो विज्जेन कलशः सत्वरेण प्रवेशितः । वसन् दिद्दाभिधानाया वल्लभाया निवेशनं ।
शिरोर्त्तिरस्य महानेत्युक्त्वा भीतं पतिं व्यधात् । सा प्राज्ञा ज्ञातवृत्तान्ता तैलेनाभ्यक्तमस्तकं ।
व्याजेन तेन सर्व्वस्य सम्प्रवेशं निषिध्य सा । पतिं जुगोप विन्यस्य विज्जं द्वारस्य रक्षणे ।
ततः समाजैर्व्विरता राज्ञी निर्भर्त्स्य भूपतिं । कुशलान्वेषणमिषात्तनयस्यान्तिकं ययौ । २३५
बन्धुं व्यधामो राजानं तथैव प्रययौ यदा । दत्तप्रवेशो विज्जेन तदेकाकीत्र सोऽभवत् ।
निषेधादनुगन्तॄणां ततः क्रुद्धो धराधवः । रुषित्वा विजयक्षेत्रं गन्तुं प्रावर्त्ततोद्धतः ।
तं प्रयातं सपत्नीकं प्राप्तं पद्मपुरान्तिकं । अवोचन्नेत्य तत्रस्था विशावटादयो द्विजाः ।
अधिकारं स्वयं त्यक्त्वा राजन् किमनुतप्यसे । कृतस्यानुशयो युक्तो न सतो नासतोऽपि वा ।
न च ते दुर्म्मतौ त्यक्ताः प्रजा एतामयेत्यपि । ध्यात्वा सूनोः समुचिता कर्त्तुं दुष्टस्य वाच्यता । २४०
न यस्मपुत्रकस्येव शक्तिः कापि हि भूभुजः । भवेत्साधुरसाधुर्व्वा स प्रजानां शुभाशुभैः ।
उज्झन्ति यत्पयोवाहा जलानि तडितोऽथ वा । वनस्पतीनां सदसत्कर्म्मपाकस्य तत्फलं ।
यथापथस्थितं पुत्त्रं त्यक्त्वेच्छस्यासितुं सुखं । कोशं त्यक्त्वा प्रस्थितस्य घटते तत्कथं तव ।
धाराधिरूढसामर्थ्यः सदंशः शुचिमानपि । संस्पृश्यते क्षीणकोशः कृपाणइव कैः पुमान् ।
श्रुत्वेत्यैच्छन्नृपो यावत्प्रत्यावृत्तिं विचारवान् । तावत्सपुत्त्रेणाभ्येत्य सभार्य्येण प्रसादितः । २४५
अथ प्रविश्य नगरं सप्रमादापवर्ज्जितां । सशान्तमन्युरादाय लक्ष्मीं भूयो विनिर्य्ययौ ।

हयायुधतनुत्रादि स्वयं स्वीकृत्य निर्गतः। देवीं प्रतीक्षमाणोऽस्थात्सरित्पारे ततः क्षणं।
नानाप्रकारानारोप्य कोशांशांस्तु नृपाङ्गनाः। नार्य्यः शङ्कूनपि गृहे निर्य्यान्त्यः पर्य्यशेषयन्।
अज्ञातवार्त्तः प्राक् तूष्णीं तत्प्रस्थानेऽभवज्जनः। ज्ञातवार्त्तस्तदा त्वासीदाक्रन्दमुखराननः।
प्रतिमोक्तुं पुरे ताभ्यां दत्तपुष्पाञ्जली जनः। वाष्पविन्दुमिषादौज्झीद्धानर्घकणानिव। १५०
हा मातर्हा पितः क्वेत्थं गच्छतः परिदेवितान्। इत्यस्मादपरः शब्दो मार्गेषु न तदा श्रुतः।
मार्गेऽन्तरान्तराक्रन्दविरतौ निर्झरध्वनिः। शैलानां शोकनिश्वासफूत्कार इव शुश्रुवे।
तयोराक्रन्दितैः श्वभ्रपथि सञ्जातसंस्तवौ। कर्णौ शून्येऽप्यशृणुतामाक्रन्दितमिवामहत्।
पुत्रागसा तादृशौ तौ दृष्ट्वा मार्गे द्रुमौकसां। खगानां शावभरणमपि लोकोऽव्यगर्हत।
तयोः पुत्रानयोत्तप्तचेतसोर्व्विजयेश्वरः। मनःप्रसादं संदृष्टः स्निग्धबन्धुरिवाकरोत्। १५५
तत्तत्र भाण्डागाराश्च भृत्याद्यावसथार्पणैः। संविधानक्रियाभिश्च व्यग्रयोरगमद्दिनं।
देशे कोशोपकरणपूर्णगोणीगणावृते। आसन्निन्धनगण्डालीच्छन्नरथ्या इवापणाः।
तन्वङ्गराजतुङ्गादि ज्ञातिपुत्रान्नृपात्मजाः। तं सूर्य्यवर्मचन्द्राद्याडामराश्चानुवव्रजुः।
डामरान् चौरभूपादीन् राजानो नगरादिषु। स्थानेषु स्वेषु निक्षिप्य रक्षिते गुप्तिमानभूत्।
विश्रान्तसर्व्ववित्तस्य श्रीमतोऽनन्तभूपतेः। प्रावर्तन्तात्मवैर्गन्तुं दिनानि विजयेश्वरे। १६०
राजपुत्रहयारोहशस्त्रिडामरमण्डलैः। क्षत्रैरेव स्थितिर्बद्धा सविधे हड्डभूभुजः।
वत्सरे पञ्चपञ्चाशे ज्यैष्ठे मासि विनिर्गतः। आसाद्य विजयक्षेत्रं स स्वर्गसुखमन्वभूत्।
कलशस्तु गते राज्ञि प्राप वीतवसुं महीं। रत्नाढ्ये चलिते यातरत्नां निधिमहीमिव।
स्वराज्यमुज्ज्वलीकर्तुं रिक्तोऽपि विहितोद्यमः। चक्रे सम्मन्त्र्य विज्जाद्यैः सम्मतानधिकारिणः।
तेन सर्व्वाधिकारेषु जयानन्दो नियोजितः। द्वारे वराहदेवश्च वितस्तान्तपुरोद्भवः। १६५
योऽश्मनगराधिकार्य्यासीज्जिन्दुराजस्य कम्पने। राज्ञा विजयमित्रः स कम्पनाधिपतिः कृतः।
यथाधिकारमन्यांश्च विनिधायाधिकारिणः। राजार्थचिन्तामारेभे संरब्धः पितृविग्रहे।
जयानन्दः पदातीनां चिकीर्षुरथ संग्रहं। यत्नादनुचितेभ्योऽपि धनिकेभ्योऽग्रहीदृणम्।
स्वीकृत्य पत्तीन्विज्जादिराजपुत्रगणान्वितः। अथावन्तिपुरं प्राप योद्धुं हड्डनराधिपम्।
अभ्यर्थ्य कारितो वेलां राज्ञा काराविनिर्गतः। शिमिकावर्त्मना योद्धुं जिन्दुराजो विनिर्ययौ। १७०
तेषामुद्योगमाकर्ण्य क्रुद्धा हड्डमहीभुजं। स्वे डामराश्ववाराद्याः संरम्भादुपतस्थिरे।
अजायत न्यस्तगुडकौडत्तुरगमण्डला। शस्त्रैः सचाटवी कृत्स्ना संकटा विजयेश्वरे।
ततः सूर्य्यमती यत्नात्पतिं परमकोपनं। ययाचे पुत्रवात्सल्यादयुद्धं दिवसद्वयम्।
अत्याप्तानथ मय्यादीन् द्विजान्निशि विसृज्य सा। तन्मुखेनातिवात्सल्यादिदमूचे रहः सुतम्।
विनाशशंस्ययं पुत्र कस्ते मतिविपर्य्ययः। तीव्रशौर्य्येण पित्राद्य यदेवं योद्धुमिच्छसि। १७५
यस्य भ्रूभङ्गमात्रेण दरद्राजादयो हताः। तत्प्रकोपानले कस्मादीहसे शलभायितुं।

अस्मिंस्तु वीतिमारूढे वीतिहोत्रसमे नृपे। कल्याता च त्वदीयानां तृणानामिव वह्निना।
सेनाङ्गैः कतमैः केन शौर्य्येण कतमैर्धनैः। भवाञ्छक्तिमतां धुर्य्यं योद्धुमेनं प्रधावति।
दैवात्सन्त्यक्तमेतेन भुंक्ष्व राज्यमखण्डितं। पित्रा तीर्थोपविष्टेन किमिवापकृतं तव।
द्वैधेच्छुभिः पात्यमानो व्यसनेऽस्मिन् सुदारुणे। प्रयास्यसि दिनैरेव रिक्तोऽप्यत्यन्तरिक्ततां। ३८०
नच सेनाः पितुर्भीतिर्जीवन्त्या मयि नास्ति मे। चन्दुमेनं नयस्वार्हं प्रत्युतानुनयोक्तिभिः।
इति दूतमुखैर्मूढं पुत्रो मात्रा कृतार्थनः। सर्व्वाशाभ्योऽनयत्सैन्यं रात्रावेव निजान्तिके।
श्रुत्वापसारं सैन्यानां दूतैस्तैत्यप्रसादितं। उपालेभे पतिं प्रातर्धृष्टा प्रत्युत वल्लभा।
राज्ञ्या मिथस्तयोरेवं शमिताक्षेपयोरपि। पिशुनप्रेरणात्प्राप कालुष्यं धीः क्षणे क्षणे।
वैरस्वरूपमेतद्धि भेदं याति मुहुर्मुहुः। सन्धीयमानमपि यत् छिन्नाम्बरमिवाशयम्। ३८५
वाह्यात्पदेः सुतोदन्तं श्रुत्वा तप्ताशयो नृपः। गृहं प्रविष्टो धृष्टस्त्रीभाषितैर्ज्जडतां ययौ।
एवं प्रतिदिनं तप्तस्त्यक्ततापः प्रतिक्षणं। स्वच्छाशयः शरत्तुच्छतडागौपम्यमाययौ।
चकार पितृपक्षाणां पुत्रो वेश्मादिनाशनं। पिता तु पुत्रपक्षाणां न किञ्चित् स्त्रीवशीकृतः।
पुत्रस्नेहान्धया पत्न्या बाधितस्तानुयायिभिः। रूक्षोक्तिभिस्ताप्यमानस्तस्थौ दुःस्थः सदा नृपः।
राज्यं जिहीर्षुः पुत्रस्य निःसारं तद्बलं विदन्। ईषत्स जिन्दुराजस्य गणनां पौरुषेऽकरोत्। ३९०
पुत्राज्जिहीर्षुणा राज्यं तेन तन्वङ्गनन्दनाः। प्रार्थ्यन्ते स्म तदा राज्यकृतये तत्पराङ्मुखाः।
सम्प्रेर्ष्य तं तदा राज्ञी स्वाम्ययाऽमर्षशङ्किनी। हर्षं देवी नृपं कर्तुं दूतैराहूतवत्यभूत्।
स पितामहयोर्दूतैराहूतः साहसोन्मुखः। वाह्यान्त्यां निर्गतः सञ्जैरक्ष्यमाणोऽपि रक्षिभिः।
दत्तपार्ष्णिकषाघातः क्षणार्द्धेनोदलङ्घयत्। मनोजवेनाभग्नौजा वाजिना पञ्चयोजनीं।
वाजिनं विजिताभ्यासमनुगन्तुं समुद्यताः। अगच्छन् बहवो मार्गे दीनाः सेनाहयाः श्रमं। ३९५
प्राप्तस्य पादयोस्तस्य पतितस्य पितामहौ। आनन्दास्रुजलस्यन्दैरभिषेकं प्रचक्रतुः।
पुत्रे तन्निकटं प्राप्ते कलशः कम्पिताशयः। अप्रियाचरणात्पित्रोः संधित्सुः स न्यवर्तत।
स तस्य नगरात्पित्रोः पार्श्वं प्राप्तो व्यसर्जयत्। अकरोद्धिसुते राष्ट्रे स्वभेदस्याप्रकाशनं।
एवं प्रवर्द्धमानेऽपि वैरे कलशभूपतिः। कञ्चित्कालं मते मातुरवर्त्तिष्ट मनागिव।
खशाला: कलशादेशान् थियाशोः कम्पनापतेः। तया प्रावर्त्तितनतेर्म्मार्गं संत्याजितः पतिः। ४००
अत्रान्तरे शमयितुं वैरं देशोपघातकृत्। तावुद्दिश्य पितापुत्रौ द्विजाः प्रायं प्रचक्रिरे।
सन्धिबन्धे समुत्पन्ने ततस्तदनुरोधतः। दम्पती सम्प्रविष्टौ तौ सार्द्धं मासद्वयं पुरं।
अथानन्दादिमुख्याय बुद्धा बन्धोद्यतं सुतं। भूयोऽपि जयतः खेदान्निर्गत्य च जयेश्वरं।
तस्याश्वघासकूटानि पुत्रो रात्रावदाहयत्। व्यापादयत् पदातींश्च विषशस्त्राग्नियुक्तिभिः।
तथा प्रवर्द्धमानेऽपि विरोधे सत्यरोधयत्। वात्सल्यविवशा राज्ञी भर्तुः प्रतिचिकीर्षितं। ४०५
लड्डाभिधाभूत्कैवर्तबन्धकी तद्विधेयधीः। चकडामरनामा च तज्जारः स्वलतिस्तदा।

स तत्रैव दुष्टात्मा कथ्यमानो समीपगैः । शुश्राव पितरौ नित्यं लीलास्मितसिताननः ।
॥ युग्मं ॥ तौ दम्पती पुनर्हेमतुलापुरुषयुग्मदौ । चित्राभिर्धनचर्य्याभिर्ज्जनस्तापममुञ्चतां ।
यदा पुनस्तयोर्दार्ढ्यमाच्छलान्न व्यहीयत । तदा सेर्ष्यः सदुष्पुत्रो राज्ञो वह्निमदापयत् ।
तेनाग्निनोर्व्वरीशस्य सर्व्वोपकरणैः समं । भस्मावशेषमभवद्विजयेश्वरपत्तनं । ४१०
सर्व्वनाशशुचा दीना राज्ञी मर्त्तुं समुद्यता । तन्वङ्गपुत्रैस्तत्क्षणे कथञ्चिज्ज्वलतो गृहात् ।
त्यक्तांशुकानि शय्याभ्यो निशायां सुप्तमुत्थितं । निःशेषं राजसैन्यं तदजायत दिगम्बरं ।
तद्राजधानीसौधाग्रात्पश्यन्कलशभूपतिः । तोषादनृत्यज्ज्वालैर्गगनालिङ्गिभिः समं ।
अतरन्नष्टसर्व्वस्वः स पारं सरितो नृपः । निममज्ज सजानिस्तु दुस्तरे शोकसागरे ।
सम्प्राप्य प्रातरस्पृष्टं रत्नलिङ्गं नृपाङ्गना । व्यक्रीणाच्छतसहस्या टाकानां पार्श्वमीयुषां । ४१५
क्रीत्वा तत्प्रददौ पूर्व्वं भृत्यानां भोजनांशुके । धनेन तेन निर्दग्धान्यपि धामान्यशोधयत् ।
भस्मकूलतलात्तावल्लब्धं स्वर्णादिभूभुजा । कथापि यावतोद्यन्त यथयत्यद्य कौतुकं ।
राजा शून्याटवीभूते पत्तने तत्र सानुगः । नडत्वकग्रथितच्छत्रपटलाच्छादितोऽवसत् ।
तावत्यप्यर्थसामर्थ्ये चिकीर्षोस्तत्पुरं नवम् । विना राज्ञोचितामाज्ञां न सिद्धं वृद्धभूपतेः ।
अदृष्टाभिभवो मातुरानुकूल्यान्नवो नृपः । परितापं पितुस्तैस्तैर्दुःसन्देशैः सदाकरोत् । ४२०
निर्व्वन्धादथ पुत्रेण पर्णोत्सगमनं पिता । निर्व्वासनोत्सुकेनोक्तः शश्वद्दूतमुखैर्यदा ।
प्रभवन्त्या यदा चासीत्पत्न्या तस्यैव वस्तुनः । निष्पत्तये प्रेर्य्यमाणः साधिक्षेपं क्षणे क्षणे ।
तदा जातु रहः कुप्यंस्तन्वङ्गे यक्कने स्थिते । उवाचानुकपूर्व्वं तामेवं सपरुषं वचः ।
तिलकम् ॥ अभिमानो यशः शौर्य्यं राज्यमोजोमतिर्धनं । मया जायाविधेयेन हन्त किं किं न हारितं ।
मिथ्यापकरणं नारीर्गणयन्ति नृणाङ्गनाः । परिणामे तु नारीणां क्रीडोपकरणं नराः । ४२५
दोषान्मोषात्प्रसक्ताभिर्व्विसक्ताभिरसूयया । के नाम नात्र कान्ताभिः कृतान्तस्यातिथीकृताः ।
रूपं काश्चिद्बलं काश्चित्प्रज्ञां काश्चिच्च कार्म्मणैः । पुंस्त्वं काश्चिदसून्काश्चिद्द्रविणं जह्रुरङ्गनाः ।
हरन्ति ग्रावभिरिव स्वां पुत्रैरन्यगोत्रजैः । मत्ताः पयोधरोन्नत्यान्तरङ्गिण्य इवाङ्गनाः ।
पर्य्यन्ते वेतनमिमे किञ्जीर्णैरीदृशैरिति । पोषयन्ति सुतान्भर्तॄन्शोषयन्ति तु योषितः ।
सर्व्वकालं विदित्वापि दोषान्योषित्कृतानमून् । प्रतिपत्त्यनुरोधेन मयेयं नावधीरिता । ४३०
प्रभविष्णुर्निरुत्येयमैहिकीः सुखसम्पदः । परलोकसुखस्याशामपि हन्तुं ममोद्यता ।
वलीपलितयुक्तस्य नेदीयोमरणावधेः । विहाय विजयक्षेत्रं कुत्र गन्तुं ममोचितं ।
क्षपाकरकलामौलेः किञ्चिच्चपनचमा । दारोपकण्ठसंसेवोत्कण्ठाकुण्ठोभवेत्कथम् ।
पुत्रो लोकद्वयत्राता कस्यान्यस्येदृशो भवेत् । तीर्थात्प्रस्थापयन्मां यत् कुपथे मृतमिच्छति ।
प्रतिभात्यवगीतोऽयं प्रवादो मेऽद्य चेतसि । अनयान्यकुलोद्भूतो यदयं सम्प्रवेशितः । ४३५
विसम्वादिनमाकारचारैर्व्वन्धुविरोधिनम् । पुत्रं पितुरसंस्निग्धं जानीयादन्यरेतसम् ।

सुचिराविष्कृताकूतां त्यक्त्वा प्राणाय यन्त्रणाम् । एवं वदन् पतिस्तस्याश्चक्रे मर्म्मसु ताडनम् ।
गोत्रजस्य पुरः पुत्रोत्पत्तिगुह्ये प्रकाशिते । आमृष्टविप्रियालापा साभूदधिकलज्जिता ।
मदनमस्य पुत्रो हि प्रशस्तास्यस्य सोऽभवत् । विपक्षापत्यतायाततयेत्यासीज्जनश्रुतिः ।
उत्प्रेक्षभाषितं भर्तुर्योषितो जितभर्तृकाः । आनन्ध्यान्न्याहिमम्नृत्तशिरस्ताडनसन्निभम् । ४४०
अतः सा सुदृढं प्रौढिसंस्कारपरुषं वचः । प्राकृतप्रमदेवोच्चैरित्युवाच रुषा पतिम् ।
गतश्रीस्तापसो मन्दो जातभाग्यविपर्य्ययः । वृथा वृद्धः क किं वाच्यमिति मूढो न वेत्त्ययम् ।
बाल्यात्स्थितस्य यस्यास्य नाभूत्प्रावरणं पुरा । लोको जानात्ययं किं न तेन मां प्राप्य हारितम् ।
स्वकुलस्त्रीसमुचितं यत्किञ्चिन्मामभाषथाः । क्रियते किं न कालोऽयं यत्प्रायश्चित्तसेवने ।
अकर्म्मण्यो गतवया देशात्पुत्रेण वारितः । पत्यापि त्यक्तदत्यक्तात्परिवादान् हि मे भयम् । ४४५
कुलदोषादिदृष्टान्तगर्भोपालम्भनिर्भरैः । वचोभिर्व्यथितस्तस्यास्तस्थौ तूष्णीं यदा नृपः ।
तदा तस्यासनप्रान्तनिःसृतः प्रसरन्बहिः । निर्व्विकाराकृतेर्व्यक्तं ददृशे रक्तनिर्झरः ।
सम्भ्रान्तायां ततो राज्ञ्यामपश्यत्यक्तनोवदन् । असिधेनुं गुदे तेन क्रुधा राज्ञा प्रवेशिताम् ।
ततोऽतिधीरो राजैव तं शल्यार्पकितोऽभ्यधात् । राज्ञो रक्तातिसरणं जातमित्युच्यतां बहिः ।
विधेया नारीणां तनयनिहिताशेषविभवाः कृतघ्नानो भृत्ये पुनरुदितविस्रम्भरभसाः ।
नयन्तो गण्यत्वं प्रसभमभियोगं लघुमरिं नयन्त्यन्ताः क्ष्मापाः प्रलयमुपगच्छन्ति न चिरात् । ४५०
नृपतिर्व्याहितहृदयः शारदातपखेदितः । तृष्णन्निपीय धान्याम्बुच्युताह्वक् जात इत्यभूत् ।
गम्भीरैराजपुरुषैस्तथा वार्त्ता प्रवर्त्तिता । यथा नाबुद्ध वृत्तान्तमेतं कोऽपि बहिर्जनः ।
॥ युग्मम् ॥ वत्सरे सप्तपञ्चाशे पौर्णमास्यां स कार्त्तिके । विजयेशाग्रतो राजा जीवितेन व्ययुज्यत ।
पत्न्याः पुत्रस्य चोद्वेगैस्त्यक्तो राजा सुखोषितः । प्रसार्य्य पादौ निद्रालुः प्राप सोऽवसरं चिरात् ।
शुकोपासो न कस्योचिच्छुकोपास्ये न कश्चन । चक्रे सुखी विमन्युश्च मरणेन महामनाः । ४५५
सङ्ग्रामराजदायादो न कस्यचिदिव प्रियः । अंशुकाच्छादितो भूमावनाथइव सोऽस्वपत् ।
न प्रियाक्रन्दितैः क्लिश्यन्नकुप्यन्न प्रियोक्तिभिः । सर्व्वत्यागी ययौ राजा दीर्घनिद्रारसज्ञतां ।
दाक्षिण्योल्लङ्घनप्रायश्चित्तायेव त्यजन्नसून् । कृतज्ञया पतिः पत्न्या ततो निन्ये सनाथतां ।
आराजपुत्रचण्डालं देयं प्रत्याह वेतनम् । ददौ स्वस्वेन भृत्येभ्यः सा कर्त्तुमनृणं पतिम् ।
गृहीतवेतना भृत्याः कोशं सर्व्वं तथा स्वयं । पुरस्ताद्विजयेशस्य नप्तुः क्षेमाय पायिताः । ४६०
पादन्यस्तशिराः पौत्रो हृदयार्पितकोशया । मूर्द्धन्याघ्राय कथितो मा पितुर्व्विश्वसीरिति ।
उत्थितैव ततो भूत्वा स्वयमाकुलिता सती । प्रातिहार्य्यं व्यधाद्भर्त्तुः कारयन्त्यन्तमण्डनं ।
सादिनां शतमादिश्य नप्तुस्तत्रैव रक्षणे । सा पुनः शिबिकारूढमथ प्रास्थापयत्पतिं ।
सपाभेकान्दिमाईश छित्त्वैवं पतिदेवता । प्रणम्य विजयेशानं युग्यारूढा विनिर्ययौ ।
निर्य्यान्तौ वीक्ष्य तौ प्रेतद्वयकोलमिश्रितैः । लोकस्याक्रन्दतुमुलैर्भग्ना इव दिशोऽभवन् । ४६५

विमानस्योत्पताकस्य परिष्कारेषु विस्मिताः। प्रजा राज्ञोऽन्तिके रेजुरनुगन्तुमिवोद्यताः
राज्ञां वितीर्णस्कन्धानां मत्तोलाः शिरोरुहाः। विमानस्थस्य नृपतेरवरुह्यामरश्रियं।
पश्यन्ती पश्चिमां सेवां सैन्यानां नृपतिप्रिया। अस्ताभिलाषिणि दिने प्रपेदे पितृकाननं।
दुस्त्यजात्सुतवात्सल्याद्यद्वा केनापि हेतुना। सा बभूव क्षणे तस्मिंस्तनयालोकनोत्सुका।
जानन्ती पवनोद्धूतं रजः श्मशानसमुत्थितं। चकितोत्कण्ठिता साभूत्सुतस्यागमनाशया। ४७०
तस्मिन् क्षणे जनाः केचिदायाता नगराध्वना। अङ्ग किं कलशः प्राप्त इति पृष्टास्तया स्वयं।
स तु पुत्त्रः क्षणे तस्मिन् धियासुर्मातुरन्तिकं। दत्त्वा विभीषिकास्तास्ता निरुद्धो द्वेषकारिभिः।
ततो गृहीतनैराश्या राज्ञी पुत्त्रावलोकने। सा प्रार्थयित्वा वैतस्तं वारि श्लोकमथापठत्।
वैतस्तेन तु तोयेन जठरस्थेन ये मृताः। मोक्षं गच्छन्त्यसन्देहं ते यथा ब्रह्मवादिनः।
उपनीतं वितस्ताम्बु पीतोपस्पृश्य चाथ सा। एवं शशाप पिशुनान् स्नेहसङ्क्षयकारिणः। ४७५
जनितं प्राणच्छेदं यैः पुत्त्रेण सहावयोः। सान्वयानां क्षयस्तेषां भूयात्परिमितैर्दिनैः।
तस्यास्तेनोपतप्तायाः शापेनाव्यभिचारिणा। क्षिप्रमेव जयानन्दजिन्दुराजादयो मृताः।
चक्रे हलधरापत्यजातकौलीनशान्तये। परलोकं पणीकृत्य पुत्त्रा च शपथं सती।
एवं विशुद्धशीलत्वं सम्प्रकाश्य शुचिस्मिता। कर्णीरथाद्ददौ झम्पां ज्वलिते जातवेदसि।
अजायत नभोवह्निज्वालावलयमीलितं। तदागमोत्सवे दत्तसिन्दूरमिव निर्जरैः। ४८०
साक्रन्दैर्न चटत्कारी दुःखोत्तप्तैर्न चोच्चलः। परमालेख्यलिखित इव जज्ञे शिखी जनैः।
गङ्गाधरष्टक्किबुद्धो युग्यवाहश्च दण्डकः। तावुद्दानो निकावल्ला चेति दासास्तदान्वयुः।
वप्पटोङ्कटयोः कुक्षौ सेनटक्षेमटावुभौ। भूपालवल्लभावास्तां वैराग्याद्विजयेश्वरे।
भावा यत्र निसर्गभङ्गुरतरास्तिष्ठन्ति नैते चिरं चेतःकाचघटस्य तस्य घटते दीर्घोऽयमेको गुणः।
यत्तस्मिन्निहितप्रकृद्धि न गलत्यायाति न म्लानतां धत्ते नापचयं चमत्कृतिवचो गीर्व्वाणगङ्गापयः।
एकषष्टिमतिक्रम्य वर्षान् भूपतिरायुषः। सपत्नीकः पुरारातिगौरीसायुज्यमासदत्। ४८५
अथास्थीनि समादाय चतुर्थे दिवसे तयोः। पुत्त्रास्तन्वङ्गराजस्य सर्व्वे गङ्गां प्रतस्थिरे।
पैतामहेन कोशेन परिवारेण चान्वितः। पित्रा विरोधं जग्राह हर्षस्तु विजयेश्वरे।
आद्ये पिता पुत्त्रवरे पिता श्रीविजयेश्वरे। तस्मिन् पुत्त्रस्तु तत्रासीत्पिता तु नगरान्तिके।
ततोऽतिव्ययिनं पुत्त्रं दरिद्रो नीतिमान् पिता। अभ्यर्थ्यानर्थभीतस्य सन्धिं दूतैरयाचत।
स तैरसकृदायातैरुक्तिको युक्तवादिभिः। राजपुत्त्रः समं पित्रा सन्धिं निन्ये कथञ्चन। ४९०
रत्नां पैतामहे कोशे शरीरे चात्मजन्मने। प्रतिशुश्राव जनकः कृतप्रत्ययवेतनः।
नृपतेः पुत्त्रमानेतुं विशतो विजयेश्वरं। दृष्टिः सुहृद्वैर्दग्धा श्रुतिश्च जनगर्हया।
स पीतकोशः सङ्गृह्य तनयं प्राविशत्पुरं। कोशं चाख्यापयन्मुद्रां दत्त्वा तदभिधाङ्कितां।
अत्रान्तरे तस्य राज्ञो धार्म्मिकी धीरजायत। दारिद्र्यच्छेदिनी धर्म्या धनबुद्धिश्च सर्व्वतः।

तनयो नयनाख्यस्य कल्पः सेल्यपुरौकसः । कुटुम्बिनो जय्यकाख्यः क्रमाड्डामरतामगात् । ४९५
स्थलोत्पत्तिः स दिग्देशविक्रीताब्जोवणिज्यया । सम्भृतार्थः शनैर्लुब्धो धनेशस्पर्धितां दधे ।
सार्द्धं क्रोशं खनित्वा स नित्यं दीनारराशिभिः । पूरितायाः चितेः पृष्ठे वृक्षान्ब्रीहीनवापयत् ।
दीनारन्यसनं भृत्यैः कारयित्वा प्रतिक्षयं । बहवो भेदभीतेन तेन गूढं निपातिताः ।
सा भाङ्गिलं लब्धुमिच्छन् वसेऽकस्मात्पलायिते । द्राक्षालतानिरुद्धाम्भो हतः केनापि पत्तिना ।
तदीयेनोपलब्धेन धनेन वसुधातलात् । पर्याप्तेनात्यजद्राजा यावदायुर्दरिद्रतां । ५००
सम्पत्सु चाल्यमानेषु तद्दीनारेष्वहर्निशं । कलशाम्भो वहन्त्यासाञ्चितस्था समपद्यत ।
दानोपभोगरहिताः काले क्लेशेन भूयसा । अन्यार्थमर्थान् रक्षन्ति चित्रं लुब्धा महाशयाः ।
प्राणान् धारयते निपीय मरुतः शेते तमोऽन्धे बिले सम्भोगे परदत्तमिच्छति पटं नग्नत्रपाशान्तये ।
विस्तार्येति कदर्थनामहिरवत्यन्यस्य हेतोर्निधीन्नान्यः कोऽपि परम्परोपकृतिषु प्रौढोऽस्ति लुब्धं विना ।
अन्यैश्च बहुभिर्मार्गैर्नद्यः सिन्धुमिवाविशन् । नानार्थसम्पदस्तास्ता भाग्यभाजं महीभुजं ।
अर्थाभाग्योदये जन्तुं विशन्ति शतशः स्वयं । दिग्भ्योऽभ्युपेत्य सर्व्वाभ्यः सायं तरुमिवाण्डजाः । ५०५
स्रोतांसि प्रवलत्वमेत्य वसुधां मूलेषु पुष्णन्त्यधो व्योम्नोऽम्भः पतति त्यजन्ति हरितो वारि प्रणालीमुखैः ।
इत्थं पुष्करसरः पयोदसमये सम्पूर्य्यते सर्व्वतो भाग्यानामुदये विशन्ति शतशो द्वारैर्न कैः सम्पदः ।
जनरञ्जनदाक्षिण्ये ततः पितुरिवाग्रहं । कुशला कलशस्यासीत्प्रजापुण्योदयैर्मतिः ।
स्वयं वणिगिवार्थानां गणनाकुशलोऽपि सः । विवेक्ता सत्पथत्यागे मुक्तहस्तः सदाभवत् ।
उपस्थितो भाविनो च पश्यन्नायव्ययो स्वयं । अन्तिकान्नात्यजद्भूर्जखटिकादि नियोगिवत् ।
तस्य स्वरूपमूलेन रत्नादि क्रीणतः स्वयं । नाशकन्वञ्चनां कर्तुं केऽपि विक्रयकारिणः । ५१०
त्रिवर्गं सेवमानः स विभज्य समयं सुखी । मध्याह्नादूर्ध्वमभवद्दृश्यः सर्व्वकार्य्यिणां ।
तस्य स्वेषां परेषाञ्च कृत्यमन्विष्यतश्चरैः । अज्ञातः स्वप्रवृत्तान्तः प्रजानामभवद्यदि ।
स्ववेश्मेव गृहस्थस्य ध्यायतश्चास्य मण्डलं । जनो जनपदे जातु न कश्चिद्दैन्यमस्पृशत् ।
कौलीनचकितो राजा कुर्व्वन् कण्टकशोधनं । प्रकटं नात्यजद्दण्डं चौरेभ्योऽपि च जातुचित् ।
न तस्यार्थः कोऽपि नष्टो मन्त्रिणो समयोजयन् । मन्त्रिणां स पुनश्चक्रे नष्टस्यार्थस्य योजनं । ५१५
विवाहयज्ञयात्रादिमहोत्सवशताकुलः । नित्यप्रहृष्टो निर्दैन्यस्तद्राज्ये ददृशे जनैः ।
तेन नीतिविदाक्रान्ताः क्ष्माभुजः क्षितिपान्तराः । आहाराचरणेऽप्यासंस्तद्वश्यत्वान् विना क्षमाः ।
तन्वङ्गस्यस्थकनादींस्त्रीनायातान्दिगन्तरात् । व्यथितैकानुजान्मल्लप्रमुखान् गुङ्गजानपि ।
अप्रीणयद्बन्धुभृत्यान् स भव्याभिर्व्विभूतिभिः । कलाभिरमृतार्द्राभिः सोमः सुरपितृनिव ।
॥ युग्मं ॥ प्रवासपरिपः कोऽपि दोःश्रीक्षेन न भूपतिः । कुदेशिकोपदिष्टेन दुष्टाचारेण चोज्झितः । ५२०
टक्केन वुल्लियाख्येन कन्यकाः समुपाहृताः । क्रीडावास्य तुरुष्केभ्यो नानादिग्देशसम्भवाः ।
स ताभिः परदारेषु लोभरूपादुपाहृतैः । अवरोधपुरस्त्रीणां दासतामढौकयत् ।

बह्वीः कामयमानस्य योषितः प्रतिवासरं । मत्स्यक्षौद्रादिभिर्द्रव्यैर्नास्य पुष्टिरहीयत ।
महासमयपूजासु व्ययः स गुरुभिः समं । महाचक्रूणामाहारं नीतिमुत्सृज्य चाकरोत् ।
एवं प्रबलकृत्येन पुरं तेन नवीकृतं । निर्दग्धे विजयक्षेत्रे शिलावेश्म स शूलिनः । ५२५
विजयेशशिलावेश्म सौलावालपवारणं । नृपोऽम्बरशिरश्चुम्बिजाम्बूनदमयं व्यधात् ।
व्ययस्थितिं चानपायां व्यधत्त त्रिपुरेश्वरे । पिनाकिनश्च प्रासादं स स्वर्णामलसारकं ।
ततः सत्कर्मकुशलश्चकार कलशेश्वरं । निःसङ्ख्यपाटकघटीपटलाढ्यशिलाघटं ।
कलशेशोपरिच्छत्रं चिकीर्षोः काञ्चनाञ्चितं । तुरुष्कदेशजः शिल्पी राज्ञोऽभ्यर्णमुपाययौ ।
सहस्रैर्भूरिभिर्देवच्छत्रसिद्धिं वदन् कलां । स स्वादयन्निजां तासे काञ्चनारोपणं विदन् । ५३०
कानिचिद्दिवसान्यासीत्प्राप्तवत्नृपसत्क्रियां । ततोऽपि तीक्ष्णप्रज्ञेन नोनकाख्येन मन्त्रिणा ।
अभ्यूह्य शिक्षितकलो विलक्षोऽगाद्यथागतं । तच्च छत्रं ययौ सिद्धिमत्यल्पैरेव काञ्चनैः ।
अनन्तेशाभिधं बाणलिङ्गमन्यांश्च भूपतिः । प्रतिष्ठा विविधाश्चक्रे स शक्राधिकवैभवः ।
नृपे सहजपालाख्ये शान्तिं यातेऽभ्यषिच्यत । ततः संग्रामपालाख्यो राजपुर्यां तदात्मजः ।
राज्यं जिहीर्षुर्बालस्य पितृव्यस्तस्य भूपतेः । भेजे मदनपालाख्यो बलीयानुद्यमं महत् । ५३५
तद्भयाच्छरणं प्राप्याकृपं साहायकार्थिनी । स्वसा संग्रामपालस्य जस्सराजस्य ठक्कुरः ।
कृतप्रसादो नृपतिः साहायककृते ददौ । तयोः पश्चाज्जयानन्दं शूरैर्बिज्जादिभिः समं ।
तत्र विद्राविताभित्रसम्फूर्जत्क्रान्तमण्डलः । संग्रामपालामात्यानां कार्यान्ते प्रश्रयतां ययौ ।
काङ्क्षन्तो गमनं तस्य दत्त्वा तास्ता विभीषिकाः । ते चासमैच्छन्नाधातुं स वीरो न त्वकम्पत ।
मतिं राजपुरीयाणामसावेतामदादिति । शङ्कमानेन तेनाथ बिज्जो मन्युरुपाहृतः । ५४०
तैस्तैश्च दत्तद्रविणैः प्रार्थितोऽथ महामतिः । रक्षापदेशात्तत्सैन्यं स्थापयित्वा न्यवर्तत ।
एवं राजपुरीं तस्मिन् स्वीकृत्याभिक्रमागते । तुतोष कार्यमर्मज्ञः प्राज्ञः कलशभूपतिः ।
क्रमाद्राजायमानेषु बिज्जादिष्वथ पत्तृषु । आमयेन जयानन्दो दैवात्प्रमयहेतुना ।
स्वास्थ्यवार्तोपलम्भाय भूपतिं गृहमागतं । वाच्यमस्ति रहः किञ्चिदित्यूचे स कथान्तरे ।
निर्यातेष्वथ सर्वेषु किञ्चिन्नैवाब्रवीद्यदा । तदा ताम्बूलनिर्व्याजाद्बिज्जो विनिर्ययौ । ५४५
आप्तेनाप्तोऽपि निर्गच्छत्किम्प्रयासीति भूभुजा । मन्त्रिणा चैत्य स प्राज्ञो बहिरेव व्यलम्बत ।
जयानन्दोऽभ्यधाद्भूपमुक्ता राजपुरीकथा । अन्तं नास्त्येव ते राज्ये बिज्जे हृद्धिमुपागते ।
आदीयमानाद्बिज्जेन कार्येभ्यो वेतनादपि । दर्शयामास गणनां बहुमूल्यां महीभुजे ।
प्राप्तः कलुषतां राजा प्रयातः स्वगृहं ततः । याचितो गमनानुज्ञां बिज्जेनेङ्गितवेदिना ।
निषेधन्निव दाक्षिण्यलेशाविर्भावकारिणः । तस्यानुज्ञां ददौ गन्तुं सान्तर्दोषो महीपतिः । ५५०
लब्धादेशो गृहान्गत्वा सर्वोपकरणैः समं । प्रस्थाप्य सोऽग्रतो भ्रातॄनाप्रष्टुं नृपतिं ययौ ।
राजधर्मगभीरत्वक्रूरयोः स्वामिभृत्ययोः । कापीदेव क्षणे तस्मिंस्नेहाभूदद्भुतावहा ।

न यत्प्रभुः प्रियं भृत्यं गमनात्स न्यवर्त्तयत् । उपालेभे समन्युस्स न यद्भृत्यः प्रियं प्रभुं ।
सहोत्थितेन कतिचित्पदानि सह भूभुजा । चिरं कृत्वा कथां नीचैर्हसन् विज्जो विनिर्ययौ ।
जिन्दुराजं हलधरो मुमूर्षुर्दूषयन् यथा । तथा विज्जक्षयानन्दः स व्यवारोपयत्पदात् । ५५५
तत्सक्षीमाचश्रेषां स्मां कृत्वा गच्छन्विधीयतां । कृतार्थो विज्ज इत्युक्तिं नायहोत्मन्त्रिणां नृपः ।
निवर्त्तयिष्यति व्यामन्त्रितं गमनादमुं । इत्याशयान्वगाद्विज्जं राजवर्ज्जञ्जनोऽखिलः ।
आस्कन्दं शङ्कमानोऽस्मादिज्जाद्राजा बलोर्जितात् । क्षणस्पन्देऽपि चकितो निर्निद्रः पञ्च यामिनीः ।
तस्मिन् शूरपुरायाते निवृत्तेष्वनुगन्तृषु । निवृत्तशङ्कस्तां शङ्कां प्रादुश्चक्रे स मन्त्रिणां ।
ते तदाकर्ण्य यं मन्त्रं विज्जार्थहरणेऽब्रुवन् । तस्याविधाने भूभर्त्तुरमन्यन्त नयज्ञतां । ५६०
विज्जादयस्तु निर्व्वाहा यं यं देशमशिश्रयन् । तत्र तत्रैव पूज्यत्वं रत्नानीव प्रपेदिरे ।
विज्जोऽधिकं महद्धोऽपि दैवतस्येव भक्तिमान् । पञ्चां कलशदेवस्य सत्यंकारः सदाभवत् ।
एवं निर्व्वास्य विज्जादीनचिरावाप्तवैभवः । क्षिप्रं सूर्य्यमतीशापात्क्षयानन्दः क्षयं ययौ ।
राज्ञो विरोधकृद्दत्तु शापस्याव्यभिचारतां । प्रमयञ्जिन्दुराजोऽपि तस्मिन्नेव क्षणे ययौ ।
तेऽपि विज्जादयः क्षिप्रमचिरावाप्तसम्पदः । प्रापुः शापोचितं सर्व्वे प्रमयं गौडमण्डले । ५६५
आकस्मिकेऽथ प्रमये विज्जः प्रमयमाययौ । सुदीर्घबन्धनक्लेशं प्रापुस्तदनुजा अपि ।
पलायितेषु कारायास्तेषु व्याघ्रेण पाजकः । हतस्तदनुजाः शेषा भुक्तक्लेशाः क्षयं ययुः ।
द्विजास्तद्वैधकाराणां नानक्ष्यन्मदनादयः । अदीर्घेणैव कालेन दुरन्तैर्यैर्भविष्यते ।
जयानन्दसहायोऽथ तत्पुत्रान् परिपालयन् । सर्व्वाधिकारी भूपेन वामनाख्यो व्यधीयत ।
यस्य तास्ताव्यवहृतीर्नीतिशस्त्राद्भुतावहाः । वर्णयन्ति वयोवृद्धा गोष्ठीष्वद्यापि धीमतां । ५७०
ग्रामानवन्तिस्वाम्यादिभोग्यानाहृत्य लुब्धधीः । राजा कलशगञ्जाख्यं कर्म्मस्थानं विनिर्ममे ।
मन्त्रिणे नोनकायासौ धनोत्पादविधेऽप्यदात् । कौर्य्यत्रस्तो न पादाग्रं जनरक्षणदक्षिणः ।
मन्त्रिणो राजकलशापत्यान्यत्यन्तरक्ततां । लेभिरे क्ष्माभुजः पार्श्वे प्रशस्तकलशादयः ।
सुताः स्वाच्छन्द्यजिवशाश्चौराः सन्ध्यादिसंश्रयाः । युक्त्या निदधिरे राज्ञा निबद्धस्वाधिकारिणः ।
पुनर्मदनपालेन क्रान्ते राजपुरीपतौ । साहायकाय व्यसृजत्तेनान्यं वप्पटं नृपः । ५७५
प्रतापैर्भूपतेस्तेन भृत्यांशेनापि निर्जितः । बद्धा मदनपालोऽपि कश्मीरान् सम्प्रवेशितः ।
भ्राता वराहदेवस्य कन्दर्पाख्यो महीभुजा । कृतोद्वाराधिपो वीरो विदधे डामरक्षयं ।
बभूव जिन्दुराजस्य क्षितिनो नयविक्रमौ । भूम्यनन्तरसामन्तमुकुटस्पृष्टशासनः ।
स राजपुर्य्यादिजयी द्वारं परमकोपनः । क्षणे क्षणेऽत्यजद्राज्ञा प्रसाद्य याचितः स्वयं ।
मदनः क्षितिपालेन प्रापितः कम्पनेशतां । लब्धप्रकर्षान्धोपादीन् डामरान्सङ्ख्योऽवधीत् । ५८०
सेवावशीकृतः क्ष्येमपालं स नगराधिपं । चक्रे विजयसिंहाख्यं हताशेषमलिम्लुचं ।
कन्दर्पोदयसिंहाद्यैः प्रहिते लोहरे सकृत् । राजा भुवनराजस्य दूरं निस्सारणं व्यधात् ।

कीर्त्तिराजस्य तनयां स च नीलपुरप्रभोः । लब्ध्वा भुवनमत्याख्यां रिपोश्छिद्रामर्षोऽभवत् ।
कार्य्यप्रतिग्रहे कर्त्तुं प्रवृत्तिं ग्राहितोऽभवत् । हत्वा विजयसिंहाख्यो नृपेण नगरेशतां ।
गुङ्गात्मजः स मल्लोऽथ तेन द्वारपतिः कृतः । राज्ञां मौलिमणिस्थाने स्वप्रतापमरोपयत् । ५८४
॥ युग्मं ॥ शौर्य्यं निष्परिवारस्य पार्थस्योत्तरगोग्रहे । उरसा सम्प्रवेशे वा दृष्टं मल्लस्य मानिनः ।
पञ्चाशैस्तुरगैर्यस्य कृतघ्ना नीत्वा व्यपाहरत् । राज्यं वाजिव्रजैस्ताङ्क्षमभयाख्यस्य भूभुजः ।
एवं वशीकृतभुवो भूपतेर्नयवेदिनः । सममेवाष्टभूपालास्त्रिषष्टेऽब्देऽविशन् पुरं ।
कीर्त्तिर्न्यर्व्वपुराधीशश्चाम्पेयोऽभूद्दासटः । तुक्कात्मजस्तु कलशो वल्लापुरनरेश्वरः ।
राजा संग्रामपालाख्यः स च राजपुरीपतिः । उत्कर्षो लोहरोर्व्वीभृद्दोर्व्वशो मुङ्गजो नृपः । ५९०
गाम्भीरसीहः कान्देशः काष्ठवाटधराधिपः । श्रीमानुत्तमराजोऽपि राजानमुपतस्थिरे ।
॥ तिलकं ॥ राजलोकः प्रवृद्धोऽपि घने जनपदेऽभवत् । दुर्लक्ष्यो वार्षिकसरित्पूरो वारिनिधाविव ।
तस्मिन् क्षणे शिलीभूतविनस्तासलिले नृपैः । शीतक्षणेऽपि सङ्कीर्णं सुखं तैरन्वभूयत ।
मनसापि हि भूपाला यन्न किञ्चिदचिन्तयन् । प्राप्तमेव पुरे पश्य वामनेन तदाहृतं ।
कौशलं मन्त्रिणस्तस्य रराजेतरदुर्लभं । निमित्तं तदसम्भ्रान्तो नित्यवद्यो न्यवाहयत् । ५९५
पार्थिवेष्वथ यातेषु मल्ले कार्य्यपराङ्मुखे । क्षितिपालेन कन्दर्पो द्वारं स्वीकारितः पुनः ।
अभिमानधनो मन्त्री कृतारब्धैर्निजैर्धनैः । दुर्गं स स्वापिकं नाम युक्त्या दुर्ग्रहमग्रहीत् ।
स प्रविष्टोऽपि नगरं खिन्नः केनापि हेतुना । पार्थिवाभ्यर्थ्यमानोऽपि कार्य्यं नैवाग्रहीद्यदा ।
तदा प्रशस्तकलशं नित्यं दूत्यं समाचरन् । तदुक्तिकौक्तिमन्नृपः संस्पृशन्नभिमानितां ।
निजश्रियातिभूयस्या भूरीन् सम्पृच्छ्य शस्त्रिणः । तत्पदे रत्नकलशं स्वभ्रातरमकारयत् । ६००
सोऽर्थैः क्रीतप्रथोऽप्यासीन्न कन्दर्पः समः क्वचित् । किञ्चिन्नोल्लिखितः सिंहः सत्यसिंहक्रियां स्पृशेत् ।
ततः क्रमेण भूभर्त्रा भृत्यरत्नं कथञ्चन । राजस्थानाधिकारं स नगरे ग्राहितः पुनः ।
अतिताडनतश्चौरे विपन्नेऽथ कृपाकुलः । त्यक्त्वा तमप्यधीकारं विषेशाजाह्नवीमगात् ।
पटान्तकृतसंरोधस्ताडयित्वा करं प्रभोः । कोपाद्देशान्तरं यातस्तं प्रत्यास्ते स्म मन्युमान् ।
अत्यन्तखेदितोऽप्यासीदानीतस्थाग्निकं पुनः । दर्पं हर्तुं नृपस्तस्य सन्नद्धो न तु जीवितं । ६०५
इत्थं पुरुषसिंहानां प्रौढदार्ढ्यं त्रिषोढवान् । आरोहमवरोहञ्च सन्तरशः क्षमापतिः ।
उपाङ्गगीतव्यसनं नर्तकीसङ्गहादरः । देशान्तरोचितं राज्ञा तेनैवेह प्रवर्तितं ।
ततो जयवनोपान्ते निरन्तरमहाग्रहं । स्वनामाङ्कं पुरं कर्त्तुं प्रावर्त्तत विशाम्पतिः ।
मठाग्रहारप्रासादमहाग्रहपरम्पराः । सतोयोपवनास्तत्र ययुः सिद्धिं सहस्रधा ।
अत्रान्तरे राजसूनुर्हर्षः सोत्कर्षपौरुषः । गुणैर्लेभे प्रकाशत्वमन्यभूपालदुर्लभैः । ६१०
सोऽशेषदेशभाषाज्ञः सर्व्वभाषासु सत्कविः । कृत्स्नविद्यानिधिः प्राप ख्यातिं देशान्तरेष्वपि ।
लुब्धेन पित्रा सन्त्यक्ता जना नानादिगागताः । गुणार्थ्यो स्वलक्षेण गृहीताः कृतवेतनाः ।

अपर्य्याप्ते पितृकृते वेतने व्ययशालिनः। एकाहान्तरितं तस्य भोजनं त्यागिनोऽभवत्।
पितरं गायन इव व्यक्तं गीतैः स रञ्जयन्। भर्तव्यभरणं चक्रे तद्दत्तैः पारितोषिकैः।
उद्गायति पुरस्तस्मिन् कदाचिदथ पार्थिवः। सभ्येषु प्रीयमाणेषु ग्रीवायोत्थाय निर्ययौ। ११५
तेन प्रसङ्गभङ्गेन जाततेजोवधः सुधीः। क्षुभ्यन्वैलक्ष्यकोपाभ्यां कुमारः क्षितिमैक्षत।
प्रभुर्व्वीतक्षान्तिः सुहृदतिशठः स्त्री परुषवाक् सुतो गर्व्वाक्रान्तः परिजनउदास्तप्रतिवचाः।
इयान् सोढुं शक्यो ननु हृदयदाही परिकरो न तु श्रोतावज्ञालुलितनयनान्तं परिभवन्।
पितुरेव तदा भृत्यो विश्वावर्त्ताभिधो विटः। शाधि राज्यं निहत्येमं नर्म्मणेवेत्युवाच तं।
अधिक्षिपन् तं रोषान्धानेनोक्तमसांप्रतं। इत्याशयेन हसता धम्मटेनाप्यकथ्यत।
अन्ये भोगेच्छवस्त्वन्याः कुमारानन्नुगान् पितुः। स्वेहं प्रदर्श्य स्त्रीकुर्य्युर्वेश्याः कामिसखीरिव। १२०
पुनः सभां सम्प्रविष्टस्तं पिता पर्य्यतोषयत्। प्रीतिदायैस्ततस्तैस्तैः साधुवादैश्च मानिनां।
अन्येद्युस्तु पितुः पार्श्वात्स भुक्ता स्वगृहान् गतः। अभ्येत्य विश्वावर्त्तेन तदेव जगदे रहः।
उपपन्नं तत्तदुक्ता तेनाभीक्ष्णं निषेधता। निर्व्वन्धमपि हस्तेन सोऽथ कोपादताड्यत।
लग्नाभिघातं रुधिरं वमन्तं घ्राणवर्त्मना। तं वीक्ष्य सोऽभिजातोऽभूत्तदाक्षिण्यो नृपात्मजः।
भृत्यैः प्रक्षालयन्नस्रं तस्येदृक् पाप्मनो भवेत्। उक्तेनापीति कथयन् स्मित्वा वासांस्यदापयत्। १२५
अनिच्छोरपि तस्येच्छा दानात्तेनान्वमीयत। दुःशीलेनान्यकामिन्याः स्मितमात्रादिव स्पृहा।
असकृत्कृतयत्नः स ततः कालेन भूयसा। तं प्रैरयत्तत्र कृत्ये मध्ये स्वीकृत्य धम्मटं।
स रोहद्द्रोहसङ्कल्पजन्मना पाप्मना श्रितः। संमन्त्र्य पितरं हन्तुं तीक्ष्णान् प्रायुङ्क्त सर्व्वतः।
शश्वत्स गोचरीभूतस्तेषां स्वैरलवस्पृशां। न घातितः सूनुना च वर्ज्जिता नच तत्कथा।
आप्तत्वं तीक्ष्णवर्गेऽथ प्रतिभेदभयाद्गते। तां विश्वावर्त्तरवाप्तु वार्त्तां राज्ञे न्यवेदयत्। १३०
बुद्ध्वा राजपुत्रस्तत्तस्मिन्नहनि जातभीः। भोक्तुं नागात्पितुः पार्श्वमपि दूतैः कृतार्थनः।
सोऽपि तस्मिन्ननायाते तत्रार्थे शान्तसंशयः। दिने तत्र मनस्तापादभुङ्क्त सपरिच्छदः।
सम्भ्रान्तकस्य प्राप्तस्य प्रातर्दुःखं न्यवेदयत्। सुचिरं चक्रनस्याङ्के शिरो विन्यस्य सोऽरुदत्।
उक्ता च दम्मटोदन्तं बद्धा तस्य समर्पणं। विधेहीत्यभ्यधात्सापि तं भङ्गीभणितिक्रमैः।
न कृताधिगमावावां कृत्यस्यास्येत्युदीर्य्य तं। अभाषेतां भ्रातुरर्थे पुनस्तान्वजननन्दनौ। १३५
त्वत्प्रसादबलाद्राजन्नापन्नत्राणदीक्षितौ। यावावां तत्प्रवेशार्थं व्यक्तद्वारं निशास्वपि।
कथं नु पृथिवीपाल प्राप्ते प्राणात्ययक्षणे। निर्दोषो वा सदोषो वा ताभ्यां सन्त्यज्यतेऽनुजः।
॥ युगलकं ॥ स्वामिद्रोहापवादश्च भवेत्तद्रक्षणाद्ध्रुवं। देशत्यागं तदुत्सृज्य शरणं नान्यदावयोः।
इत्यादि सम्भाव्य तयोः पादन्यस्तोत्तमाङ्गयोः। यदि त्यागमनानुज्ञां कथञ्चित्पार्थिवो ददौ।
पथिकस्वेदमुं हन्यान्मध्योकृत्येति दम्मटं। तौ विनिर्जग्मतुर्देशात्तत्तः सबलवाहनौ। १४०
तस्यब्रजेषु यातेषु विविक्तीकृतमन्दिरः। सुतमानीय नृपतिः सान्त्वयन्निदमब्रवीत्।

आसंसारं जगत्यस्मिन् सर्व्वतः ख्यातकीर्त्तिना । जनकेनेव अन्यस्य प्रसिद्धत्पाद्यते जनैः ।
पुत्रप्रीतांशुनेवार्च्चिं दिक्द्वीपख्यातकीर्त्तिना । भवता तु सुपुत्रेण मात्स्यागात्यखिलोजनः ।
स त्वं गुणवतामग्र्यो निरर्गलयशाभवन् । असाधुसेव्यमध्वानं वद कस्मान्निषेवसे ।
पैतामहं निजस्वार्थं यत्र तुभ्यं समार्पयं । तत्र हेतुमनाकर्ण्य नासूयां कर्तुमर्हसि । ६४५
रिक्तः स्वेभ्यः परेभ्यश्च प्राप्नोत्यभिभवं नृपः । इति निर्श्चाय हि मया क्रियते कोशरक्षणं ।
पुरप्रतिष्ठां निष्पाद्य क्षिप्रा राज्यधुरं त्वयि । वाराणस्यां गमिष्यामि नन्दिक्षेत्रेऽथ वा पुनः ।
तद्राज्यकोशयोः स्वामी बुभूषुर्न चिराद्भवान् । अतितात्पर्य्यतः कस्मादनार्य्योचितमीहसे ।
सम्भाव्यते त्वयि न तद्यन्ममावेदितं खलैः । यथार्थकथनात्तस्मात्कौलीनं विनिवार्य्यतां ।
विशुद्धये करोम्येष खड्गतप्तप्रतिश्रवं । स्नेहादितीच्छंस्तद्राजा साभिप्रायं वचोऽभ्यधात् । ६५०
अपलापवचोमात्रं निनीषुस्तस्य हेतुतां । जनप्रत्यायने सोऽभूद्यस्मात्स्वान्तिसमुत्सुकः ।
हर्षस्तु साधुवादैस्तत्पितुः संपूज्य भाषितं । वक्ष्याम्यास्तमुखे तत्वमित्युक्त्वा निर्ययौ बहिः ।
सामान्यप्रेरणादेषा चिकीर्षाभूदिति ब्रुवन् । स पितृप्रहितं दूतं भीतः सावमर्षं ययौ ।
दूतं म्लानाननं वीक्ष्य पाणिभ्यां ताडयञ्छिरः । हा पुत्रेति वदन्राजा तस्यास्क्रन्दमदापयत् ।
हतेऽस्मिन् स्वशिरश्छिन्द्यामिति प्रोक्तवतः प्रभोः । निदेशादेष्टयित्वैव तस्युस्तद्वेश्म रक्षिणः । ६५५
तीक्ष्णास्तु पिहितद्वाराः परिवार्य्य नृपात्मजं । ऊचुः सुपरुषां वाचमेवं निश्चितमृत्यवः ।
अस्मान् घृणी प्रमादी च विरुद्धं च्छद्म कारयन् । घातयित्वा दुराचार क्व जीवन् यातुमिच्छसि ।
रक्षिष्यति सुतं स त्वा स पिता रक्षितस्त्वया । घ्नातेयं युवयोरस्ति वयमेव हताः पुनः ।
युध्यस्व मध्यगोऽस्माकं त्वां निहन्मोऽन्यथा वयं । एवं सर्व्वप्रकारं ते व्यक्तं नास्त्यत्र जीवितं ।
तां वार्त्तां भूपतेः श्रुत्वा व्याकुलस्यागतः स्थितः । हर्षान्तिकं दण्डकाख्यः प्रायान्निजमहत्तरः । ६६०
तीक्ष्णैर्व्विजनतया दत्तप्रवेशः स नृपात्मजं । प्रसह्योवाच मतिमानेवं सर्व्वान् विमोहयन् ।
क्षत्रियापुत्र जीवित्वा कल्पानप्येतरानपि । कारणैरपि गन्तव्यं नियमान्नियतेर्व्वशं ।
तदेतस्मिन् समासन्ने मरणे व्यभिचारिणि । यदर्थं मृग्यते शस्त्रं समानः पात्यतां त्वया ।
कृतश्रुतख्यातयशा युवा सुक्षत्रियो भवान् । तदाहवविलम्बेन कार्य्यं किमिव पश्यसि ।
एतेषु सुसहायेषु मयि चायेश्वरेऽधुना । विपर्त्तिर्व्विजयो वापि प्रतापिंस्तव शोभते । ६६५
उत्तिष्ठ नखकेशादियोजनं कारय द्रुतं । वीरपट्टं बधानापि स्वःस्त्रीपरिणयस्रजं ।
इत्युक्त्वा क्षुरकर्म्मार्थं राजपुत्त्रं समापितं । प्रावेशयत्पूज्यमानस्तीक्ष्णैराभ्यन्तरं गृहं ।
न्यस्तासिधेनुर्हर्षेण दत्तस्तम्पः क्षणात्स्वयं । पश्चात्प्रविश्य तद्वेश्म चक्रे सुनिहितार्गलं ।
ततः स राजस्थानीयं तमारादब्रवीद्वचः । रक्षितो राजपुत्त्रोऽयं क्रियतां स्वोचितं त्वया ।
भूतग्रहादिभवनोषधिभिर्व्विरोधिजातं बलैः प्रहरणप्रभवं मनुष्यैः ।
निर्व्वाप्यते प्रतिभयं पृथिवीपतीनां सार्व्वत्रिकन्तु रभसाहुवि बुद्धिहद्भिः । ६७०

तदन्तस्तुमुलं योधास्ततो राजसुतास्पदे । आरोढुमायतूर्ध्वप्रहर्म्यादि प्रविविक्षवः ।
तीक्ष्णाद्दृढद्वारगृहस्थितं त्यक्त्वा नृपात्मजं । यावन्निर्गन्तुमिच्छन्ति हन्यमाना बुभुक्षवः ।
द्विजाः प्रसङ्गसान्निध्यान्मध्यपातं समाश्रिताः । तावद्विनिर्ययुर्धीरा निर्द्रोहा अभिमानिनः ।
ते निर्याताः सूर्य्यमतीगौरीशाश्रयिणो मठात् । सदाशिवान्तिकं प्रापुर्घ्नन्तो युधि विरोधिनः ।
रक्ष्यमाणोऽपि भूभर्तुर्गिरा ज्ञातेयशालिनः । राजज्ञातिहतस्तेषु प्रथमं सहजाभिधः । ८७५
द्विजस्तिव्याभिधो वीरः पण्डितः शौर्य्यमण्डितः । रामदेवस्य केशी च कर्णाटोऽरिभटैर्हतः ।
केचित्त्यजन्तः शस्त्राणि स्वं घ्नन्तः केऽपि च स्वयं । लेभिरे वधबन्धादि पापाः कापुरुषोचितं ।
सितषष्ठ्यां सहस्यस्य चतुष्षष्टे स वत्सरे । वैरं नीत्वा पितापुत्रौ विप्लवः कारितो विटैः ।
हठत्यागासक्तिः प्रिययुवतिसम्प्रेरणवशः खलासङ्गः पूर्व्वप्रणयपरिहारो जनयितुः ।
अमात्येन भ्रात्रा सममपरमात्राथ कलहः कुमाराणां बुद्धिं पितरि विपरीतां प्रतनुते ।
एवं स खलसङ्गत्या कुमारो लब्धलाघवः । बन्धं कारागृहे प्रापदसुखानि सुखोचितः । ८८०
राज्ञी भुवनमत्यस्मिन् बद्धे माध्यस्थ्यसंविदि । स्थापिता मानिनी कण्ठच्छेदं कृत्वा जहावसून् ।
रक्षिणो मन्त्रिणामाप्तांस्तस्य विन्यस्य भूपतिः । प्राहिणोद्भुवि तान् भोगान् सुतस्नेहाद्दिने दिने ।
चक्रिकायामशक्तोऽयमिति सञ्चिन्त्य भूभुजा । भृत्यः प्रयागनामास्य निजः पार्श्वान्न वारितः ।
नोनको हर्षमुद्दिश्य खेनान्येद्य महीभुजं । जीवितं लोचने वास्य हन्येतामित्यभाषत ।
नृपः स शीलवैकल्ये पशुतुल्ये ह्रियं त्यजन् । रिपोरिव तनूजस्य चकमे कतिचित्प्रियाः । ८८५
तासु श्वशुरवाल्लभ्यमवाप्य सुगलाभिधा । बभूव तुक्षभूभर्तृनृभर्तृवधार्थिनी ।
सम्मन्त्र्य नोनकः सा च द्वौ सूदावशनान्तरे । रसं प्रदातुं हर्षस्य पापं प्रैरयतां ततः ।
अन्यसूदमुखाद्दातौ प्रयागस्तामवाप्तवान् । प्रभुं तद्दाप्यमानान्नपरिहारमकारयत् ।
तेनान्नेन परीक्षार्थं दापितेनापजीवितौ । हर्षः श्वानौ निशम्याभून्निराशो निजजीविते ।
प्रयुक्तिं गूढदण्डस्य पितुरेव स तां विदन् । ततः सर्व्वाणि भोज्यानि स्पृष्ट्वैवाजहोद्दिने दिने । ८९०
प्रयागोपहृतेनासीत्परं वा स्वेन सर्व्वदा । भोज्येन येन केनापि कुर्व्वञ्जीवितधारणं ।
अन्नस्याभोजनं श्रुत्वा राजा सूदैर्निवेदितं । ततः प्रयागमानीय तत्र पप्रच्छ कारणं ।
प्रयोजकौ च सूदौ च सोपलम्भं न्यवेदयत् । रसार्पणकथां कृत्स्नां तज्ज्ञानं च स्वयं प्रभोः ।
अथान्येष्वपि सूदेषु पित्रा दत्तेषु शङ्कितः । राजसूनुर्न बुभुजे प्रयागोपहृतं विना ।
स सर्व्वेषु विरुद्धेषु यत्नत्वात्यवाहयत् । मेने तत्तद्दिनं लब्धं शेषेष्वास्थापराङ्मुखः । ८९५
अत्रान्तरे समुदभूदकस्मात्कामसूचकः । अदृष्टपूर्व्वो भूभर्तुः सदाचारविपर्य्ययः ।
उत्पाद्य ताम्रस्वाम्याख्यं पूर्व्वं ताम्रमयं रविं । स रीतिप्रतिमाः स्वैरं विहारेभ्योऽप्यपाहरत् ।
धनानि निरपत्यानामाहर्त्तुं व्यवसायिना । स्वावार्य्यतार्य्यमर्य्यादा कौर्य्याक्रान्तेन भूभुजा ।
ततोऽभिशापसन्तापव्यञ्जकेनाक्षमाभवत् । अतिसम्भोगजातेन धातुक्षोभेण सोऽर्दितः ।

कुम्भप्रतिष्ठासम्भारं चिकीर्षोर्हरमन्दिरे। तस्यापतन्महाकालकुम्भनासापुटादसृक्। ७००
आकस्मिकं दुर्निमित्तं तत्प्रतीकारसम्विदा। न मनागप्यगाच्छान्तिं प्रवृद्धिं प्रत्युताययौ।
असुस्रुत्यनुबन्धेन तेन ग्लपितसौष्ठवः। शनैः शय्याप्रणयितामन्तः सम्प्रत्यपद्यत।
बलमांसक्षतश्चैष्ण्यमग्निमान्द्याद्युपद्रवैः। कलाशेषेण शशिना तद्वपुः साम्यमाययौ।
राज्यं स दित्सुर्हर्षाय दृष्ट्वामात्यान् पराङ्मुखान्। ततोऽभिषेकसोत्कर्षमानिन्ये लोहराद्बलात्।
उच्चावचास्तेन सर्व्वे संविभक्ता मुमूर्षुणा। परमोर्थ्याविधेयेन स शुद्धान्तवधूजनः। ७०५
कृत्वा धनार्पणं कुर्य्यां देशादस्य प्रवासनं। इत्युक्त्वा हर्षमानेतुं तेनाप्रार्थ्यन्त मन्त्रिणः।
ते तु गोप्तृन्निवार्य्याद्यांष्ठक्कुरांल्लोहराश्रितान्। विन्यस्य रक्षिभावे तमुत्कर्षाय न्यवेदयन्।
स नाट्यमण्डपान्तेन निष्कृष्टः श्यामविग्रहः। निवेशितश्चतुःस्तम्भे बद्धा बान्धववर्ज्जितः।
अथोज्जिगमिषून् प्राणान्निःसामर्थ्योऽविदन्नृपः। मुमूर्षुरभवत्तीर्थप्रस्थानाय कृतत्वरः।
स जानन्दैवतक्रोधं तापस्वामिविपाटनात्। इयेष शरणं कर्तुं मार्तण्डं प्राणसंक्षये। ७१०
सन्त्यज्य विजयक्षेत्रमतएवापवर्गदं। महीश्वरोऽपि प्रययौ तत्र त्रासवशंवदः।
अधीकारप्राप्त्या तृणमिव विदन्विश्वमखिलं नियोगी जातार्तिर्नमति गृहदासीरपि रुदन्।
नदन्मूर्खो ज्ञानी बहुदुरुपदेशाधिगमतः करोति प्राणान्ते शिशुरिव च किं किं न विगुणं।
तादृश्या कृपणप्रायसेव्यया क्लैव्यसम्विदा। गुरूपदेशाहङ्कारस्तस्य हास्यत्वमाययौ।
शुक्लायां मार्गशीर्षस्य तृतीयस्यां निशामुखे। तलादेवाश्रितो युग्यं भूभृन्मर्तुं विनिर्ययौ।
स भेरीतूर्य्यनिर्घोषैर्जनाक्रन्दं तिरोदधत्। सामात्यान्तःपुरो नौभिः प्रतस्थे जलवर्त्मना। ७१५
यामशेषे दिनेऽन्यस्मिन् प्राप्तस्य चरणान्तिके। मार्तण्डस्य स्वजीवाप्त्यै सौवर्णीं प्रतिमां व्यधात्।
भृत्यैरगणिताज्ञस्य दिदृक्षोर्ज्येष्ठमात्मजं। औत्सुक्येनारतिस्तस्य व्यथितस्याधिकाभवत्।
बहिर्हर्षकृतं गीतं गाथनानां स गायतां। विवृतद्वारविवरः शृणोति स्म विनिःश्वसन्।
प्राणावसानसमये परिसङ्कुचन्ती स्वप्नप्रसङ्ग इव धावनशक्तिराशा।
प्राचुर्य्यदा खलु रुजो मरणोद्भवाया मर्म्मव्यथां प्रथयते पृथिवीपतीनां।
प्रजाज्येष्ठं तनूजञ्च संविभक्तुं कृतार्थनः। उत्कर्षं ग्राहयन् शिक्षां बहुजिह्मोऽभवत्ततः। ७२०
अव्यक्तं वदतो हर्ष इति वाचं पुनःपुनः। निह्नोतुं सेवको भावं तस्यादर्शमढौकयत्।
स तन्निवार्य्य विहसन्दष्टौष्ठः कम्पयन् शिरः। जपन्किमपि सार्धेऽब्दे बद्धवागभवद्दिने।
आसन्नप्राणनिर्याणः संज्ञयाहूय मन्त्रिणः। ततः स्कन्धैरसम्मूढैर्मार्तण्डाग्रमनाययत्।
वर्षानेकान्नपञ्चाशद्भुक्तवान् स सितेऽहनि। मार्गस्य पञ्चषष्ठेऽब्दे षष्ठ्यां निष्ठामथासदत्।
सप्त सम्मनिकामुख्या देव्यः परिणयाहृताः। अवरुद्धापि जयमत्यभिधाना तमन्वगुः। ७२५
प्रसादवित्तया तस्य पुनः कय्याभिधानया। अवरुद्धिकया कृत्स्ना स्त्रीजातिरपविश्विता।
सर्व्वावरोधप्राधान्यप्रदानं नास्मरद्यदि। मास्मार्षीन्नाम भर्तुस्तदनुशाभिजनोद्भवा।

संश्रित्य विजयक्षेत्रं क्रमाद्ग्राममियोगिनः । भेजे यत्सवदुङ्कालमतो दुःखाकरोति नः ।
भूपालभोग्यं स्ववपुः सा भोगाभ्यासभासुरं । निनाय ग्राम्यभोगित्वं धिक् नारीर्मीचचेतसः ।
उत्कर्षस्याभिषेकाय व्यग्रेष्वखिलमन्त्रिषु । अन्त्येष्टिमकरोद्राज्ञः कृतज्ञो वामनः परं । ७३०
घोषोऽभिषेकतूर्य्याणामेकतोगीतमङ्गलः । साक्रन्दाः प्रेततूर्य्याणां नादोऽन्यत्र समुद्ययौ ।
जातः पद्मश्रियो देव्याः पुत्त्रः कलशभूभुजा । ततो विजयमल्लाख्यो भ्रातुर्व्वैमत्यमादधे ।
यद्ददाद्धर्षदेवस्य पिता प्रत्यहवेतनं । प्रतिशुश्राव तस्मै स तद्देवोत्कर्षभूपतिः ।
आश्वासनाय च मध्यस्थान्ददौ सामन्तमन्त्रिणः । कय्यात्मजस्य चक्रे च जयराजस्य वेतनं ।
अन्विष्यन्ति रुदत्य एव तरला गत्यन्तरं योषितो योगक्षेमकथाश्चिताग्निकगता एवात्मजाः कुर्व्वते ।
अन्येषां शतशोऽवसानसमये चर्चां विचार्य्येदृशीं स्त्रीपुत्त्रादिकृते कुकर्म्मभिरहो सञ्चिन्वतेऽर्थं जडाः । ७३५
प्रविवेश ततः श्रीमान्नगरं नृपतिर्नवः । नतु हर्षोदयाकाङ्क्षि हृदयं नगरौकसां ।
तद्राज्यलाभदिवसो अनस्याभोगदूषितः । सन्नपि प्रत्यभान्नैव सरोगार्त्तेरिवोत्सवः ।
हर्षदेवस्तु पितरि प्रयाते मर्त्तुमातुरे । नववङ्गचतुःस्तम्भे न तस्मिन्नह्नि भुक्तवान् ।
साथर्भ्रष्टमिवाध्वन्यमन्यस्मिन्नह्नि ठक्कुराः । ते शोकमूकं सम्प्रार्थ्य कथञ्चित्तमभोजयन् ।
राज्यं दातुं निजे देशे चक्रुस्तस्य प्रतिश्रवं । राज्यद्वयं नायमर्हत्येकएवेति वादिनः । ७४०
एवं मिलितचित्तैस्तैर्व्विपत्तिं श्रुतवान् पितुः । कृतोपवसाः सोऽन्येद्युः शुश्रावोत्कर्षमागतं ।
वाष्पैः पित्रे प्रयच्छन्तं निर्व्वाय सलिलाञ्जलीन् । तं दूतैरनुजो राजा स्नातुं प्रार्थयताथ सः ।
तस्य स्नानक्षये राज्ञि सज्जे राज्याभिषेचने । घोषोऽभिषेकतूर्य्याणामुदभूत्तज्जयध्वनिः ।
स तेन सुनिमित्तेन प्राप्तां मेने निमित्तवित् । विद्युद्योतेन जीमूतगर्ज्जामिव नृपश्रियं ।
ततः प्रभृत्युन्मुखता सुनिमित्तैरगृह्यत । तस्यात्यासन्नराज्यस्य भृत्यैरिव दिने दिने । ७४५
स भोजनं कारयितुं दूतान् भ्रात्रा विसर्ज्जिताम् । देशान्निर्व्वासयतु मां राज्यात्सन्त्यज्य बन्धनात् ।
स्थातुमप्रत्यवस्थित्या विदध्यां कोशसन्धिदं । म्रियेऽन्यथा निरशनैः सन्दिश्येति व्यसर्ज्जयत् ।
स तन्मिथ्या प्रतिश्रुत्य तं दूतैः प्रहितैस्ततः । कृतकोशं सान्त्वयित्वा राजा भोज्यमभोजयत् ।
नित्यञ्च श्वो विधास्येतदर्थमान इति ब्रुवन् । कालापहारं कुर्व्वाणः शङ्कां तस्योदपादयत् ।
विश्वासाय स्वताडङ्कपाणिकृत्वा प्रयागकं । पार्श्वे विजयमल्लस्य सोऽथ गूढं व्यसर्ज्जयत् । ७५०
तद्देवोक्त्या तमूचे स त्वां ब्रूते दुःखितोऽग्रजः । कुमारे त्वयि राज्येऽस्मिन् शुष्यामो बन्धने वयं ।
सङ्क्रान्तदुःखः सञ्चिन्त्य चिरेणापि तमब्रवीत् । कार्य्यं कुर्य्यात्कथमिदं मद्गिरा नीतिमान्नृपः ।
तथाप्यस्मिन् यथाशक्ति यतिष्ये त्वद्विमोक्षणे । त्वया तु सावधानेन रक्षणीयं स्वजीवितं ।
तं पार्श्वं हर्षदेवस्य सन्दिश्येति व्यसर्ज्जयत् । उपायांश्चिन्तयन्नासीत्तस्य कार्य्यस्य सिद्धये ।
उत्कर्षः प्राप्तराज्यस्तु दैवतैरिव मोहितः । नादधे किञ्चिदारम्भं व्यवस्थापयनक्षमं । ७५५
समर्पिताधिकारोऽपि कन्दर्पादीन् स मन्त्रिणः । राज्यकृत्यं न पप्रच्छ विदधे स च न स्वयं ।

परिमातुं परीमाणं कोशसञ्चयवीक्षणे । परं समापतेस्तस्य दिनकृत्यमजायत ।
कर्म्मणा निर्व्ययेणास्य चिन्त्यमानस्य येन वा । सुदीर्घदर्शी लोकोऽभूत्तेन लुब्धत्वनिश्चयी ।
सा तस्य लुब्धताख्यातिः समुद्गाख्यप्रदायिनः । भूभर्त्तुः पिशुनीभिः स्वैरिणीभिः प्रवर्द्धिता ।
स श्रोत्रिय इवोत्कम्पी व्यवहारमिताशयः । महाहृदयभोग्यानां प्रजानां नाभवत्प्रियः । ७६०
ततो नियमितां दृष्ट्वा तस्यासन्नाहनाप्तुवान् । कुर्व्वन् विजयमल्लोऽभूद्देशान् गन्तुं कृतोद्यमः ।
स्वं रक्षितुं स मध्यस्थानमनुव्रज्याकृतेऽखिलान् । प्रार्थयामास तेनापि सज्जास्तमनुवव्रजुः ।
लवणोत्से निशामेकां पुरान्निर्गत्य तस्थुषः । मध्यस्थसैन्यास्तस्यैव योधाः पक्षमशिश्रयन् ।
हर्षे बद्धे त्वयि गते कृतकृत्यो भवेन्नृपः । तत्तं निष्कृष्य काराया गमनं तत्र साम्प्रतं ।
इति तैः प्रेर्य्यमाणः स राजसूनुरुदायुधैः । विनिवृत्याकरोद्यात्रां प्रत्यूषे नगरोन्मुखः । ७६५
श्रुत्वा चिकीर्षितं तस्य व्यावृत्तस्य तथाविधं । सहायाः समपद्यन्त कतिचित् डामरा अपि ।
अकरोन्मधुरावट्टो हयसेनापतिः सुतं । राजसूनुर्यियासुर्यं मध्यस्थानानुयाचिकं ।
नागाह्वयो द्रोहदोनो राजपक्षमसन्त्यजन् । केचित्सह हयारोहैः सपद्मपुरवर्त्मना ।
आगच्छन्नन्तिकं राज्ञो दुर्निमित्तहतत्वरः । न यावन्नगरं प्राप क्षिप्रकारी नृपात्मजः ।
शकुनैराहितोत्साहः शालापोद्दीपिताग्निभिः । सैन्यैर्म्महान्दहंसावद्राजधानीमवेष्टयत् । ७७०
॥ चतुर्भिः कुलकं ॥ समयाय विनिर्यातं त्यक्तोत्कर्षं महीभुजं । तत्पक्षं जयराजोऽपि राजसूनुरशिश्रियत् ।
हस्तस्थितौ राजपुत्रौ तस्याचिन्तयतां गतिं । नवौ कवी व्यत्यहतिं सिद्धवाचः कवेरिव ।
हर्षदेवे परित्यक्ते यास्याम इति वादिनः । स हस्तिमहिषादीनां शालाः सैन्यैरदाहयत् ।
त्यागप्रलयजीमूतो हर्षदेवाभिषिच्यतां । लुब्धः खर्जोवणिक्प्रायो राज्यादेष निवार्य्यतां ।
एवं वदन्तः सन्तोऽपि हर्षमेत्य पुरौकसः । पुष्पैः प्राच्छादयन् बद्धं तमोरिविवरार्पितैः । ७७५
उत्पिञ्जे तत्र सञ्जाते भग्नसैन्यस्य भूपतेः । सम्प्रेष्य ठक्कुरान् हर्षस्तटस्थं तदलं व्यधात् ।
इत्थं बद्धोऽपि तच्छ्रुत्वा वैरिकामविरोधिनः । सन्देहवेपमानाङ्गस्तानेवमब्रवीत् ।
वर्त्तेऽद्य सङ्कटे दुष्टे तन्मां मुञ्चत बन्धनात् । न चेदाशु महीपालादनिष्टं नियमाद्भवेत् ।
इत्युच्यमानास्ते यावद्विमृशन्ति स्म तन्मुक्तः । पादप्रहारान्यपतंस्तावद्द्वारगृहाद्बहिः ।
उवाच स किं द्रोहः प्रक्रान्तोऽयं दुराशयैः । रे ठक्कुरा विवृणुत द्वारमित्युच्चकैर्व्वचः । ७८०
ठक्कुरेष्वथ भीतेषु धैर्य्यादगणयन् भयं । अकारयद्धर्षदेव एव द्वारमपावृतं ।
नेत्रमात्रस्थितप्राणो ददर्श विवृतस्ततः । लोहरान् शस्त्रिणो हन्तुं प्राप्तान् षोडशवारिकान् ।
ते हि च्छिन्नोज्झिते हर्षग्रीवे सर्व्वमिदं क्षणात् । शम्येदिह भयं मन्त्र्य मानकस्येति जल्पतः ।
उत्क्षेपणासहच्छ्रुत्वा तं निहन्तुं विसर्ज्जिताः । विमृश्य चोल्का गच्छन्तः कार्य्यमेवं विमुञ्चता ।
कदाचित्तेन कृत्यं स्यादहतेनेति तत्क्षणं । निवार्य्य ठक्कुरांश्चक्रे हन्तव्यस्य चरोर्म्मिकां । ७८५
इमां दद्यामभिज्ञानं यदा चेयं विसृज्यते । तदास्य बन्धनात्त्याज्य इत्युदीर्य्याङ्गुलीयकं ।

पाणौ दर्शयता चोक्ता विलम्बालम्बनं यतः । निवार्य्य ठक्कुरास्तस्मिन् चिप्रं न प्राहरंस्ततः ।
॥ कुलकं ॥ स तु प्रत्येकमाहूय नामग्रहणपूर्व्वकं । अजिग्रहत्तांस्ताम्बूलमप्युपावेशयत्पुरः ।
गतस्ते कृतसत्कारास्ताम्बूलग्रहणक्षणे । ह्रीताः कराग्राच्छस्त्राणि प्रजिहीर्षाश्च मानसात् ।
धत्ते श्रियं सृजति कीर्तिमघं लुनीते मित्रत्वमानयति हन्त विरोधिनोऽपि । ७९०
यात्यध्वभिः प्रतिपदं सुमनोऽनुकूलैर्गौः कामधुक्किमिव नापहरत्यनर्थं ।
राजपुत्त्रः स तानूचे किं ह्रीता इव तिष्ठथ । निर्दोषाः सर्व्वथा प्रेष्याः स्वाम्यादेशानुपालने ।
विलम्बरतां तथाप्यत्र द्रष्टव्यं महदद्भुतं । यथोदेषत्यवस्थानामन्यथात्वं क्षणे क्षणे ।
द्विपदीपिकव्यादुरगतुरगादिभ्रमकृतो यथास्थां भिद्यन्ते दिवि किल नरवाम्बुदलवाः ।
तथा सौम्यक्रूरक्रमविकृतिभाजस्तनुभृतां क्षणानां नानात्वान्ननु हृदि विकारोर्मयद्गमाः ।
क्षणानुवृत्तिं कुर्व्वाणास्तद्यथात्र स्थिता वयं । तथा सन्तु भवन्तोऽपि कार्य्यान्तरदिदृक्षवः ।
अपि चैवंविधा एव विलम्बन्तो रसान्तरं । आसन्नराज्यप्राप्तीनां राज्ञां स्युः प्राणसंशयाः । ७९५
ग्रीष्मस्योष्मा व्रजति घनतां नूनमासन्नवृष्टेर्नैशं गाढीभवति तिमिरं सन्निकृष्टप्रभातं ।
जन्तोरेवं प्रसभविभवस्फारमस्मत्प्रचारान्निष्क्रामन्ती वियदुपचितोपद्रवोद्रेकमेति ।
प्राणचारेण शकुनं निस्त्रिंशत्येति वदन्स्ततां । आचचक्षे शुभोदर्काः स्वोदन्तसदृशीः कथाः ।
कालं क्षेप्तुमुपन्यस्तशुङ्खिव्यक्तीभवद्रसां । तेभ्यश्च कथयामास हरिश्चन्द्राश्रयां कथां ।
तद्रञ्जने स्वरचायां वाश्ववार्तागवेषणे । व्याप्टतत्वं गभीरस्य न तस्य समलक्ष्यत ।
अत्रान्तरे तमुद्दिश्य मते जाते नवे नवे । राजश्रियश्च कान्त्याश्च प्रतशोऽभूद्गतागतं । ८००
उत्कर्षो भूमिपस्तस्य परित्यागं ह्यमन्यत । आदिदेशानुगांस्तांस्तान्भूरिशश्च प्रमापणे ।
अभिज्ञानोर्म्मिकादानवधादेशे तु नास्मरत् । तेनोक्तिं तस्य दूतानामन्वतिष्ठन्त रक्षिणः ।
स तान् बन्ध्याश्रमान्वीक्ष्य स्मृत्वाभिज्ञानसंविदं । सत्वात्मजं राजपुत्त्रं भूगाख्यं व्यसृजत्ततः ।
अभिज्ञानं वितरतस्तत्करे तस्य मुद्रितः । दैवयोगात्क्षणे तस्मिन्नूर्मिकाव्यत्ययोऽभवत् ।
यः पातार्थमुपार्ज्जितोऽन्यशिरसस्तेनैव सिन्धुप्रभुर्वृद्धक्षेत्रधराधवः स्वशिरसः पातं वरेणाप्यभूत् ।
दिव्या सैव गदा श्रुतायुधनृपं हन्त्वावधीदाहवे यत्त्राणाय विगण्यते विधिवशात्तेनैव नाशो भवेत् । ८०५
तथा चैकस्य विस्मृत्या व्यत्ययेन परस्य च । अभिज्ञानस्य स नृपो नाशं प्रत्युत लब्धवान् ।
आभिजन्येन हर्षस्य ते क्षणादेव रक्षिणः । प्रपेदिरे हितैषित्वमुत्कर्षाज्ञाविरोधिनः ।
द्वारमाक्रान्तमुत्क्रोधो वधायायमुपागतः । इति निर्ध्याय ते भूरं हन्तुमैच्छन्नुदायुधाः ।
उद्घाटितारिपुटा दृष्ट्वा तस्योर्म्मिकां करे । तेनैव साकं नृत्यन्तो हर्षं समुपतस्थिरे ।
पादन्यस्तोत्तमाङ्गैस्तैर्निर्गच्छन् प्रार्थितस्ततः । अविश्वसन्नागसत्तनुः क्षणमासीत्स चिन्तयन् । ८१०
तस्मिन् क्षणे हर्षदेवं हतं ज्ञात्वा रणे स्थितः । क्रुध्यन्विजयमल्लोऽभूदधिकोद्रिक्तपौरुषः ।
तन्दग्धुमुद्यतं राजधानीं जीवति तेऽनुजः । अभिधायेति रुरुधुः कथंचित्पार्थिवानुगाः ।

प्रत्ययार्थं ततस्तस्य राज्ञा हर्षवधूर्द्रुतं। गृहीतभर्तृताडङ्कसुगला प्रेष्यतान्तिकं।
तां विलोक्यैव विरते वक्तिद्राहाद्नृपात्मजे। राजाभयप्रतीकारं हर्षत्यागादमन्यत।
गत्वामात्याः स्वयं नोनप्रशस्तकलशादयः। हर्षं निर्निगडं कृत्वा कारागारात्ततोऽत्यजन्। ८१५
मन्त्रः स तेषां शोकेन वक्त्रात्कृतगतागतः। अन्यत्र स्थाने श्वास इव प्रससार बहिश्चरन्।
हर्षः प्रच्छाद्यमानस्तु पौराणां पुष्पवृष्टिभिः। हयमारुह्य सामात्यो रणस्थं नृपमासदत्।
अभिनन्द्यानुजो राजा तमूचे भ्रातरं रणात्। निवार्य्यागम्यतां कुर्मः प्राप्तकालं ततो वयं।
तथेति प्रस्थिते तस्मिंस्त्यक्त्वा तत्र रणाजिरं। प्राविशन्मन्त्रिभिः सार्द्धं कोशं हेमाद्रिसंश्रयं।
उत्तीर्णं महतः कृच्छ्राद्धर्षदेवमुपस्थितं। दृष्ट्वा विजयमल्लोऽभूत्प्रहर्षान्निष्क्रियः क्षणं। ८२०
ततो ववन्दे तत्पादौ स चोत्काम्यालिलिङ्ग तं। तास्ताः कथास्तयोरासन्नुपकर्तुपकार्य्ययोः।
व्यापादयैनमेवादौ हर्षोत्कर्षं ततो नृपः। निष्कण्टकोऽसि भवितेत्याप्तस्योपांशु जल्पतः।
ततो विजयमल्लेन नाद्रेऽहेणाहृतं वचः। ज्ञात्वेङ्गितज्ञो हर्षस्तत्ततस्तु चकितः क्षणं।
॥ युग्मं ॥ स्वदेहमाभिषीभूतं स भ्रात्रोः श्येनयोरिव। निष्पत्रपक्षप्रतिमो रक्षावेगतश्चरन्।
आसन्नाभ्रजलस्य दावविगमे विद्युद्द्वयं शाखिनो नक्रास्याद्गलतश्च मज्जनमयी शङ्का भवेद्वारिधौ।
भोक्तव्यस्य विधिः शुभस्य रभसात्स्वादुत्वनिष्पत्तये जन्तोः सन्तनुते निराकृतभियो भीत्यन्तरोत्पादनं। ८२५
तं हयभ्रमणव्याजाद्रक्षितुं निजजीवितं। ज्ञातवार्ता निजाः केचित्पत्तयः पर्य्यवारयन्।
साकं विजयमल्लेन ततः संमन्त्र्य स क्षणात्। चचाल विश्वापायमाख्यातुं तं महीभुजे।
अयं तद्देश्मनः प्राप्तं विनिर्यान्तं नृपात्मजात्। ततो विजयसिंहस्तं सम्प्रवेशाद्व्यवारयत्।
ऊचे च मरणात्तीर्णो मर्तुं विशसि किं पुनः। निश्शङ्कं गत्वोपविश त्यक्तशङ्कं नृपासने।
एवमुक्तवतस्तस्य भृत्यैः कोशादुपाहृते। सिंहासने हर्षदेवस्ततस्तूर्णमुपाविशत्। ८३०
वैजात्यच्छादितामन्तप्रातिकूल्यात्तदन्तिके। उपाविशश्च सुगला महादेवीत्वसिद्धये।
तस्याभिषेकशब्देन समधत्यन्त सर्वतः। रसितेनाम्बुवाहस्य चातका इव मन्त्रिणः।
तदातीश्रवणेनान्तमुत्कर्षं मन्दिरात्ततः। धूर्तो विजयसिंहोऽपि हृष्टान्यमनयत्कृहं।
आस्थानस्थस्य भूभर्तुरग्रेण समितानुगः। मत्तश्रीर्दद्र्शे गच्छन् स्थिराः कस्य विभूतयः।
तस्य वेश्मप्रतिष्ठस्य बहिर्भिन्नस्य रक्षिणः। राज्ञो विजयसिंहस्तत्कृतं कार्य्यं न्यवेदयत्। ८३५
कारायां संस्तुतास्राजपार्श्वमानीय ठक्कुरान्। तत्सैन्येऽपि स्थितेऽत्याचीक्रयं विजयमल्लनः।
सोऽप्यग्रजं प्राप्तराज्यं श्रुत्वा तत्सविधं व्रजन्। सैन्ये सम्मान्य तद्दूतैः स्वामेव वसतिं क्षणात्।
तत्सैन्यं स्वान्तिकं प्राप्तमथ वीक्ष्य क्षमापतिः। आनिनाय तमभ्यर्णं क्षणमात्रेण नीतिवित्।
मह्यं प्राणाश्च राज्यञ्च त्वया दत्तमिति ब्रुवन्, स प्राञ्जलिस्तमकरोत् क्लेशसाफल्यदायिनं।
तस्य दैवानुकूल्येन नीत्यैवं सुप्रयुक्तया। तत्कालमेव तद्राज्यशय्यायां समुपाविशत्। ८४०
कारागृहान्तः संवीतान्येव वासांसि धारयन्। सिंहासनेन शुशुभे शोणाभिष्याजवो नृपः।

तादृक्साहससंरम्भपरिश्रान्तो दिनात्यये। कुमारोहोऽथ शय्यायां त्यक्तभार इवापतत्।
पश्यन्निवसतामेव सर्व्वतो विशराहतां। न स निद्रासुखं तत्र मीलिताक्षोऽपि लब्धवान्।
उत्कर्षो युधि बन्धूंस्तु मन्त्रं पृच्छन् स्वमन्त्रिणः। आक्षिप्यान्यद्वचो रूक्षं नोनकेनेत्यकथ्यत।
प्रातः प्रोक्तोऽसि यन्मन्त्रं तन्नाकार्षीर्महीपते। पतितामनयादस्माद्भाविनीं शृणु संविदं। ८४५
अध्याक्षिपो बन्धनस्थं त्वं तमुच्छिष्टभोजिनां। श्वः श्वमांसार्पिणां हस्ते स तु त्वामर्पयिष्यति।
शरणं मरणादन्यत्तस्मादस्मिन् क्षणेऽस्ति किं। त्यक्ताहवानामस्माकं तदप्यप्राप्यतां गतं।
अविस्वादफलास्वादकालेऽत्यन्तमरुन्तुदं। यद्दोपालम्भपाण्डित्यं न विपक्षेषु शोभते।
त्वयापायमनालोच्य य उपायः प्रवर्त्तितः। सर्व्वमेकपदे तेन मुहूर्त्तेनैव हारितं।
संस्थाप्यमानो दुर्नीत्या सूच्येव जरठः पटः। प्रत्युतोपद्रवोऽल्पोऽपि शतद्वारः प्रजायते। ८५०
एवं श्रुत्वा स तन्मध्यान्निर्गत्याभ्यन्तरं गृहं। अवरुद्धिकया सार्द्धं विवेश सहजाख्यया।
तत्र सन्ध्यासमाधिस्थस्तिष्ठामीत्यभिधाय तां। क्षणं तिरस्करिण्यन्तरेकार्थ्येवाकरोत्स्थितिं।
निःशस्त्रेण गले क्षिप्त्वा पटच्छेदनकर्तरीं। नाड्यः प्राणहरास्तेन छिन्नाः खिन्नात्मना ततः।
फणत्कारेण कर्त्तर्य्या च्युता या भुवि शङ्किता। अपश्यत्सहजा रक्तं श्च्योतज्जवनिकान्तरात्।
सोऽथ लम्बशिरोनिर्यत्सान्द्रासृग्ददृशे तया। वज्रावभग्नपृष्ठान्तःश्च्योतद्धातुरिवाचलः। ८५५
तस्यास्तदानीमौचित्यं निर्व्यूढं येन योषितां। भर्तृप्रसादमात्राणामद्याप्युच्चैस्तरां शिरः।
व्रजति रजनी त्यक्त्वा क्वापि क्षये क्षणदाकरम्पदमुपगतस्यास्तं सन्ध्या रवेरनुगच्छति।
इति परिणतौ प्रेमण्युच्चावचे परिचिन्तिते क्वचन नियमान्निन्द्या वन्द्या नवा सुधियां स्त्रियः।
कुलाचारपतिप्रेमसादृश्येऽप्यभवत्तदा। कय्यासहजयोर्यस्मान्निन्द्या वन्द्या च पद्धतिः।
॥ युग्मं ॥ सापि हि द्युषदो वेश्म नर्तकी नाट्यमण्डपे। दृष्ट्वा तेनावरुद्धात्वं निन्ये राजवधूः पुरा।
कान्तासृग्गैरिकास्यन्दक्षतमार्गाङ्गरागया। प्रेमोष्मेव द्रवीभूतं प्रविश्याग्निं तयार्पितं। ८६०
हर्षदेवस्यापि पूर्व्वं वेश्याले साभवत्प्रिया। अतस्तेनार्थ्यमानापि मरणान्न्यवर्तत।
चतुर्व्विंशाब्ददेशीयो दिनद्वाविंशतौ नृपः। मृतस्तिष्ठन्निशामेकां प्रातः सोऽक्रियताग्निसात्।
तस्यावरोधलोलाक्ष्यो लोहराद्रिस्थिता अपि। छायानुवर्त्मना काश्चित्पदवीं द्रुतमन्वयुः।
शस्त्रं सन्त्याज्यमानेषु तन्मन्त्रिषु नृपानुगैः। मुमूर्षुर्नोनकः शस्त्रं न तत्याज क्षणं तदा।
विनास्मान्मन्त्रदो राज्ञः कोऽन्यः स्याद्यद्विनैरसौ। मोचयत्यस्मांस्ततः प्राणान्नापेक्षिष्टाविचारयन्। ८६५
स्वयूथ्य एवेति वचः प्रशस्तकलशो वदन्। तदा सन्त्याजयामास स्वयं तत्र समर्पितं।
॥ तिलकं ॥ नोनसिद्धारभट्टारप्रशस्तकलशादयः। बद्धाथ हर्षदेवेन कारागारं प्रवेशिताः।
इत्येवमेकेनैवाह्ना तादृग्राजविपर्य्ययः। कृतस्य हर्षदेवेन देवेनेव महाद्भुतः।
यथाकथञ्चिद्व्युत्क्रान्ता बहवः पृथिवीभृतः। प्रतीतिविषमो मार्गः कष्टमापतितोऽधुना।
सर्व्वोत्साहोदकच्छेत्री सर्व्वानुत्साहदूतिका। सर्व्वव्यवस्थाजननी सर्व्वनीतिव्यपोहकृत्। ८७०

उद्रिक्तशासनस्फूर्तिरुद्रिक्ताशाजयस्थितिः । उद्रिक्तत्यागसम्पत्तिरुद्रिक्तहरणग्रहा ।
कारुण्योत्सेकसुभगा हिंसोत्सेकभयङ्करी । सत्कर्म्मोत्सेकललिता पापोत्सेककलङ्किता ।
स्पृहणीया च वर्ज्या च वन्द्या निन्द्या च सर्व्वतः । निःश्लाघ्या चोपहास्या च काम्या शोच्या च धीमतां ।
श्लाघ्या चापकीर्त्या च स्मार्य्या त्याज्या च मानसात् । हर्षराजाश्रया चर्चाकथा व्यावर्णयिष्यते ।
॥ कुलकं ॥ नूनं स तैजसैरेव सृष्टो परमाणुभिः । कुतोऽन्यथाभूत्प्रसवे दुष्प्रेक्ष्यो महतामपि । ८७५
न मर्त्येषु न देवेषु तद्वेषो दृश्यते क्वचित् । दानवेन्द्रेषु स प्राज्ञैः परमुत्प्रेक्ष्यते यदि ।
प्रतिमार्कपरीमाणज्वलत्कुण्डलमण्डितः । उत्तुङ्गमुकुटानद्धविकटोष्णीषमण्डलः ।
प्रसन्नसिंहविप्रेक्षी नीचश्मश्रुच्छटाञ्चितः । वृषस्कन्धो महाबाहुः श्यामलोहितविग्रहः ।
व्यूढवक्षाः क्षाममध्यो मेघघोषगभीरवाक् । सोऽमानुषाणामपि यत्प्रतिभाभङ्गकार्य्यभूत् ।
॥ तिलकं ॥ सिंहद्वारे महाघण्टाश्चतुर्दिक्कमबन्धयत् । ज्ञातुं विज्ञप्तिकामान् स प्राप्तांस्तद्वाद्यसंज्ञया । ८८०
आर्त्तानां वाचमाकर्ण्य तेषां तृष्णानिवारणं । प्रावृषेण्यः पयोवाहश्चातकानामिवाकरोत् ।
अचित्रवस्त्रो निर्व्वेमभूषणोऽल्पपरिच्छदः । ददृशे विगतोत्तापे न कश्चिद्राजमन्दिरे ।
सिंहद्वारे नरपतेर्नानाजनसमाश्रिते । सर्व्वदेशश्रियोऽश्रान्तमासन्नाशोकतादिव ।
अपेतसंख्याः सौवर्णशृङ्खलाकटकाञ्चिताः । भ्रेमुर्मन्त्रिप्रतीहारमुख्याः क्ष्मापतिमन्दिरे ।
एवं स्फूर्जन्स नृपतिर्नवसाम्राज्यसुन्दरः । अभूद्विजयमल्लस्य गुरोरिव मते स्थितः । ८८५
आदीयमानवचसः कृतज्ञेन महीभुजा । तस्याभूत्पार्थिवस्येव सेवकैः सङ्कटा सभा ।
स्वसेवकाननादृत्य रचयन् संस्थाव्यतिक्रमं । पित्र्येभ्य एव मन्त्रिभ्यः सोऽधिकारान् समार्पयत् ।
द्वारे चकार कन्दर्पं मदनं चापि कम्पने । अन्यान्विजयसिंहादीन् कर्त्तव्ये च निजे निजे ।
तेन प्रशस्तकलशप्रमुखाः शान्तमन्युना । बन्धात्सम्मुच्य कार्य्येषु निजेष्वेव नियोजिताः ।
स्मृत्वापकारान् स बद्धनमात्यो नोनकः परं । धात्रेयेण समं भ्रात्रा कोपात्कूले विपादितः । ८९०
काले काले तु कार्य्येषु सङ्कटेषु महामतिं । संस्मरन् स्वामिभक्तं तं पश्चात्तापेन पस्पृशे ।
योग्यः कृतापकारोऽपि कदाचिदुपयुज्यते । विहितागारदाहोऽग्निः शरणभोज्यसिद्धये ।
सन्दर्श्याग्रे स्वभार्य्यायाः कर्णनासावकर्त्तनं । विशाभट्टैराजभृत्यैः शूलेनैव विपादितः ।
उदये संविभेजे स भृत्यान् काराविनिर्गतान् । मधौ प्रफुल्लः शाखीव भृङ्गान्भूविवरोत्थितान् ।
राज्ञः क्षेमस्य यः पौत्रो वज्रजः स महीभुजा । सर्व्वामात्यप्रधानत्वं निन्ये सुज्ञः सहानुजः । ८९५
राज्ञो यात्रादिसमये प्रेक्षकाणां पदे पदे । एक एवाभवन्मन्त्री महीपालभ्रमप्रदः ।
सर्व्वप्रतीहारघटामूर्धानमधिरोपितः । याथराजोऽनुजस्तस्य जीवितादधिकोऽभवत् ।
जाह्नवीयाचया भ्रात्रोरानृशंस्यादिलक्षणः । धम्मटः सोऽपि तान्यक्रैर्भ्रातृपुत्रैः सहाययौ ।
संमान्य तं नरपतिः स्वकृते हारिताग्रजं । सम्राट्पुत्त्रमद्राक्षीत्स्वाविशेषेण सर्व्वदा ।
विभज्य भुञ्जता राज्यं तस्यैवं प्रेरितः खलैः । क्रमाद्विजयमल्लोऽथ दुदुर्व्विकृतिं दधे । ९००

राज्यं प्रादाः किमन्यस्मै जित्वेत्युक्तः स दुर्ज्जनैः। तल्लिप्सुर्मन्त्रयामास वधं प्रथमजन्मनः।
विजने मन्दिरे हन्यामिति सम्मन्त्र्य भूपतिः। यागं विधाय व्याजेन तेनागन्तुं निमन्त्रितः।
मन्त्रे श्रुतिङ्गते राज्ञः सोऽथास्कन्दविशङ्कितः। आदिदेश स्वसैन्यानां द्रुतं सन्नहनोद्यतं।
सन्नद्धे राजसैन्येऽथ द्रुतं निर्गत्य भूपतेः। हता विजयमल्लेन मन्दुराभ्यस्तुरङ्गमाः।
संहरंस्तुरगान्वीक्ष्य प्रहरन्नृपतेर्ब्बलं। कुर्व्वन्महाहवं वीरो निर्गन्तुं त्वरे पुरात्। ९०५
आश्लिष्य पृष्ठं तिष्ठन्त्या जायया सहितो व्रजन्। स चकार तुरङ्गस्थः सङ्ग्राममतिमानुषं।
धारासारैः क्षणे तस्मिन्नकालजलदोज्झितैः। विपर्य्यस्तेव पृथिवी सर्व्वतः समलक्ष्यत।
झाङ्कारमारुतारब्धभूरिभेरीरवे रणे। आसारेण शरैश्चासौ च्छाद्यमानो नृपात्मजः।
तं क्षीयमाणपृतनं यान्तं हन्तुं समुद्यताः। कर्म्माणि प्राकृतानीव न चण्डकसुता जहुः।
भग्नसेतुं पयोवेगैर्व्वितस्तासिन्धुसङ्गमं। सजानिरतरद्दोर्भ्यामवतीर्य्य स वाजिनः। ९१०
सत्त्ववानकरोत्पत्न्या मज्जनं रिपुसङ्कटे। सिन्धुं प्रवृद्धामुत्तीर्य्य तुरङ्गोऽपि तमन्वगात्।
द्विषां दृग्गोचरात्यातः स तमारुह्य वाजिनं। दरद्देशोन्मुखो वीरः प्रायाल्लहरवर्त्मना।
कन्दर्पद्वारपतिना सर्व्वतो रुद्धपद्धतिः। गिरीनुल्लङ्घ्य चाविचक्षिरिगुप्तां दरत्पुरीं।
दरदार्भ्यर्चितं तत्र श्रीविद्याधरदेहिना। केचिन्निजाः परिजनाः शनकैस्तं प्रपेदिरे।
श्रुत्वा स्वीकार्य्यमाणञ्च संरम्भं डामरादिभिः। प्रायुङ्क्त हर्षपृथ्वीभृदुपायांश्चकितोऽन्वहं। ९१५
तेषु वन्ध्येषु शीतन्तु सोऽतिवाह्य दरत्पुरे। डामरैः प्रहितालापास्तैत्रे यात्रामदान्मदात्।
उत्तीर्य्य सङ्कटांस्तिष्ठन्मार्गान्तःपटमण्डपे। अकस्मादभवन्मानी हिमानीहृतजीवितः।
यदुद्यामाय संरम्भो धीरैर्व्विस्तार्य्यते महान्। कृत्यं छिनत्ति तद्दैवमत्यल्पेनैव वस्तुना।

उन्मीलनं तिग्मरुचिः प्रयत्नाद्येषां सहस्रेण करैः करोति।
उन्मूलयत्येककरेण तानि पद्मानि धाता कुपितो द्विपेन।

द्वैराज्यशङ्कया कञ्चित्कालं संकुचितस्ततः। भूयः प्रभवतो लग्नं राज्यं हर्षमहीभुजः। ९२०
राजशब्दस्तदा सेहे न कुत्राप्यधिरोपणं। अत्युदग्रतया तस्मिन्लघुर्वेमान्यराजसु।
स शोभादायिनीर्भङ्गीः प्रावर्तयत मण्डले। निर्म्मत्सरो नरपतिः पुष्पर्तुरिव कानने।
मुक्तकेशा निरुष्णीषा निष्कलाभरणाः पुरा। सन्त्यज्यैकं महीपालमभवन्निह देहिनः।
धम्मिल्लग्रथनाद्यत्र मदनः कम्पनापतिः। जयानन्दोऽप्यमात्याग्र्याश्चित्रार्धोरुकधारणात्।
अन्वभूत्पार्थिवक्रोधमविशेषेण मण्डले। तेन राज्योचितो वेषस्तत्र राज्ञा प्रवर्तितः। ९२५
॥ युग्मं ॥ स केषाञ्चिदमात्यानामाकल्पोल्लासशोभिनां। निर्म्मत्सरः स्वदासीभिरारात्रिकमकारयत्।
दाक्षिणात्याभवद्भङ्गिः प्रिया तस्य विलासिनः। कर्णाटानुगुणष्टङ्कस्ततस्तेन प्रवर्तितः।
लडन्तालीदलाः स्थूलचन्दनस्थासमुन्दराः। रेजुर्जनास्तदास्थाने श्लाघ्यदीर्घासिधेनवः।
स्वर्णकेतकपत्राङ्कजूटलम्बार्जितस्रजः। चटुलास्तिलकाश्लिष्टविलोलतिलकाङ्कुराः।

अपाङ्गप्रान्तयोर्बद्धसन्धयोऽञ्जनरेखया । निर्नीरङ्गिककेशान्तबद्धहेमोपवीतकाः । ९३०
अधराम्बरपुच्छान्तैर्लम्बैश्चुम्बितभूतलाः । प्रच्छादितार्धदोर्लेखकञ्चुकाङ्कपयोधराः ।
कर्पूरोद्धूलनस्मेरा भ्रमन्त्यस्तरलभ्रुवः । वधुराश्रितपुम्वेशा झषाङ्कच्छलदक्षतां ।
॥ चतुर्भिः कुलकं ॥ अन्योपजीव्यतां प्रापुस्तस्यार्थित्वेन मार्गणाः । विश्वाप्यायकतां मेघाः प्रणयेनेव वारिधेः ।
प्रसादैस्त्यागिनस्तस्य राज्ञः कनकवर्षिणः । समस्ता गायकगणाः पार्थिवस्पर्धितां ययुः ।
विद्वच्चूडामणिर्भूभृत्पण्डिताखलमण्डिताम् । चकार युग्यतुरगच्छत्रादिप्रक्रियाभृतः । ९३५
कश्मीरेभ्यो विनिर्यान्तं राज्ये कलशभूपतेः । विद्यापतिं यं कर्णाटश्चक्रे पर्माडिभूपतिः ।
प्रसर्पतः करटिभिः कर्णाटकटकान्तरे । राज्ञोऽग्रे ददृशे तुङ्गं यस्यैवातपवारणं ।
त्यागिनं हर्षदेवं स श्रुत्वा सुगविबान्धवं । रिह्लणो वस्तूनां मेने विभूतिं तावतीमपि ।
सौवर्णामलसाराढ्याराजधान्यो धरापतेः । सुवर्णेराऽभ्रंलिहग्रहा भेजिरे भुवनाद्भुताः ।
तदीये नन्दनवने द्रुमेभ्यो न व्यधुः स्थितिं । त्यागिना निर्ज्जितास्तेन केवलं कल्पपादपाः । ९४०
विविधाभिरपूर्व्याभिः विहङ्गमृगजातिभिः । तेन व्याप्तदिगाभोगं चक्रे पम्पाभिधं सरः ।
सोऽज्ञासीद्यावतीर्व्विद्यास्तासां नामापि निश्चितं । वक्तुं नास्त्येव सामर्थ्यं व्यक्तं वाचस्पतेरपि ।
गीतमाकर्ण्यतेऽद्यापि तस्य वाग्गेयकारिणः । विपक्षैरपि पक्ष्माग्रलुठद्बाष्पोदबिन्दुभिः ।
स्वपतो दिनयामौ द्वौ सर्व्वकालं विलासिनः । दत्तस्थानस्य तस्यासीद्यामिनीषु प्रजागरः ।
तस्य दीपसहस्राङ्के स्थितस्यास्थानमण्डपे । विद्वद्गोष्ठीगीतनृत्यप्रस्तावेन क्षपा ययुः । ९४५
कथान्ते शुश्रुवे तत्र न पर्णचर्व्वजः परं । कान्ताधम्मिलशेफालीत्रुटिजन्मा च मर्मरः ।
वितानैः सपयोदेव साग्निवप्रेव दीपकैः । रुक्मदण्डैः ससर्पेव सधूमेवासिमण्डलैः ।
साप्सरादिव कान्ताभिः सनक्षत्रेव मन्त्रिभिः । सर्पिषाब्धेव विबुधैः सगन्धर्व्वेव गायनैः ।
नित्यसङ्केतवसतिर्धनदस्य यमस्य च । एकं विहरणारण्यं दानस्य च भयस्य च ।
सभास्थानस्थितिस्तस्य राज्ञः शक्राधिकश्रियः । कस्य वाचस्पतेर्व्वा वा वक्तुं कार्त्स्न्येन शक्यते । ९५०
॥ चतुर्भिः कुलकं ॥ रैक्कस्य राजतेश्चासीद्व्यवहारस्तदा घनः । मण्डले विरलोऽमुष्मिन्दीनारैस्ताम्रजैः पुनः ।
दण्डनायकतां प्राप्य सुन्नः सर्व्वोन्नतिं भजन् । तस्मिन् काले लभूत्तोभासीचो मुष्टिंपचः परं ।
निजाजयवने सूर्य्या मूलके विजयेश्वरे । आख्यान्ति यस्य सुभ्रलं निर्व्ययस्थितयो मठाः ।
क्षुधितव्याधितानाथदीनाद्यार्तिनिवारणं । सुस्पष्टं प्राप पद्मस्य राज्यलक्ष्मीः कृतार्थतां ।
नन्दिक्षेत्रे व्ययीकृत्य प्रत्यब्दं सप्त वासरान् । चम्पकः सफलां चक्रे सर्व्वकालार्जितां श्रियं । ९५५
कृष्णाजिनोभयमुखी मुख्यैर्दानैः क्षमाभुजा । अदरिद्रीकृता विप्रा निःशेषार्तिच्छिदार्थिनां ।
राज्ञो वसन्तलेखाख्या शाहिवंशप्रियाकरोत् । मठाग्रहारान्नगरे पूज्ये च त्रिपुरेश्वरे ।
माहेश्वर्य्यमयी कार्यदित्थं ज्वालेव सोद्यथा । उदारव्यवहारन्तु न तद्राज्ये प्रवर्तते ।
अथ प्रवृद्धिं सम्प्राप्ताः शनकैर्नवमन्त्रिणः । पूर्व्वामात्यद्विषो राज्ञो मतिमोहं प्रचक्रिरे ।

कुष्ठार्ताङ्घ्रियुगः शिखी खञ्जपदं रटन्नाति धावन्नहिं भानुः पादसहस्रभाक् प्रतिपदं सन्नार्थ्यतेऽनूरुणा।
वर्धत्यन्ते बलिनोऽपि यत्लघुबलैः सामर्थ्यहीनैश्च यद्भ्राम्यन्ते परिपूर्णवृत्तय इदं दैवस्य लीलायितं। ८९०

स सर्व्वशास्त्राधिगमप्रौढः परिवृढो विशां। यन्मोहितमतिश्चक्रे वैधेयैरपि मन्त्रिभिः।
विपन्नस्य पितुर्व्वैरप्रतिकारविधित्सया। स राजधानीनामाङ्कमठादिभिरलोठयत्।
त्यागी तत्कोशसम्भारं व्यर्थीकुर्व्वन्नितस्ततः। लुब्धस्य चाभिधान्तस्य पायसेन इति व्यधात्।
शुद्धान्ते शुद्धशीलानां ढौकितं मूढचेतसा। स्पष्टं षष्ठ्यधिकं दाशा स्त्रीणां तेन शतत्रयं।
यादृशीस्तादृशीस्तत्र नाडीर्व्विन्यस्यतानिशं। नाग्टह्यन्त परं डाम्भजनंगमकुलाङ्गनाः। ८९५

अत्रान्तरे पूर्य्यमाणो गूढं कोटपदातिभिः। पुनर्भुवनराजोऽभूत्सहरालश्रिलुब्धधीः।
मदर्पितपुरं प्राप्तः कन्दर्पद्वारनायकं। श्रुत्वा योद्धुं विनिर्यान्तं यथौ भूयोऽप्यदृश्यतां।
तस्मिन् प्रसङ्गेऽपि नृपोदृप्यद्राजपुरीपतिः। सङ्ग्रामपालः केनापि हेतुना विक्रियां ययौ।
कन्दर्पे कोटभृत्यानां भिन्नानां सङ्ग्रहोद्यते। क्रुध्यन्राजपुरीं राजा व्यसृजद्दण्डनायकं।
स महद्भिः समं सैन्यैर्गच्छन्नोहरवर्त्मना। अधीरः कोटकच्छेषु सार्द्धं मासं व्यलम्बत। ९००

प्रत्यासन्नाच्च कुचेर्भासात्प्रतापाच्च विरोधिनां। त्रस्यतस्तस्य यात्रायां न सङ्कल्पोऽप्यराजत।
अविशेषज्ञभावेन भर्तुस्तिष्ठन्निरुद्यमः। ततो जगाम कन्दर्प एवोपालम्भमात्रतां।
कृतप्रतिज्ञोऽनाहारतया राजपुरीजये। उपालम्भार्दितः सोऽथ निःसामर्थ्योऽप्यत्राचलत्।
निराहारस्य वसतः कन्दर्पस्याद्रिगह्वरे। षष्ठेऽह्न्यभूद्राजपुरी योजनेऽभ्यधिके स्थिता।
अव्याहतः सोऽरिबलाद्विषच्छस्त्राणि पातयन्। कदलीपल्लवान्मृद्नन् वनं सिंह इवाविशत्। ९०५

दण्डनायकसैन्येभ्यः परमेकस्तमन्वगात्। सेनानीः कुलराजाख्यो बुद्धराजकुलोद्भवः।
तं वात्यात्यां राजपुर्य्याहता संख्याहितं द्विषः। निहत्य शुक्रचक्रचाङ्कं कन्दर्पं मेनिरे हतं।
मध्याह्ने स तु कन्दर्पः स्वयं सम्प्राविशद्बली। राजधानीं राजपुर्य्याविंशत्रिंशैः समं भटैः।
द्विषां त्रिंशत्सहस्राणि योधानामनिवर्तिनां। रुरोध राजपुर्य्यग्रे तत्पदातिशतत्रयं।
काश्मीरकाणां निहतं रणे तत्र शतद्वयं। चत्वारि तु शतान्युर्व्वीं खशानामप्यशेरत। ९१०

भग्ने रिपुबले दूरमसंख्येयैस्त्रिताश्रिभिः। संस्कुर्व्वद्भिर्हताञ्शीघ्रं रणोन्मत्तोर्महामसः।
तेनैवं स्वाम्युपालम्भवेतालो रभसार्पितः। रणश्मशाने वीरेण शमितो मांसशोणितैः।
याममात्रावशेषेऽह्नि पुनरेवाथ संहताः। द्विषः परिभवोत्तप्ताः कन्दर्पं योद्धुमाययुः।
ततस्तानथ नाराचान्निचिक्षेप स संयुगे। लिप्तानौषधितैलेन विद्धा यैः प्राज्वलन्द्विषः।
आग्नेयं वेत्त्यसावस्त्रमिति मूढा विशङ्किताः। ते दूरं प्रययुर्भीता निन्दन्तः पुनरागमं। ९१५

प्रगल्भभावः प्रतिभाससौजः प्रयोगचातुर्यमसम्भ्रमस्य। महाशयानामतिसङ्कटेषु धैर्योपनद्धा न धियं जहाति।
राजधानीं प्रविष्टस्य भानावस्ताभिलाषिणि। भूयोऽप्यपश्यत्स चक्रां वात्याली वहलैर्बलैः।
योद्धुं यियासुः शुश्राव प्राप्तं तं दण्डनायकं। घोरां रणाटवीं दृष्ट्वा भयात्स्थगितसैनिकं।

स्वीयैर्दृष्टैः क्षतैः कैश्चिद्दूष्यभ्यधिकमाहवे । परकीयैस्तथान्यैर्वा कोऽन्तरं वेत्ति देहिनां । ९९०
आनीतोऽथ विनिर्गत्य तेनैव सभये व्रजन् । स्पर्द्धमानो यथाम्भोधौ मज्जन् हंसेन वायसः ।
रक्तप्रजम्बीतसैन्यमभिन्नं बद्धकोशवत् । परराष्ट्रं विशेदेवं स्वत्रीर्य्येणैव कोऽपरः ।
प्रणनात्करमादाय ततो राजपुरीपतेः । मासमात्रेण कन्दर्पः पुनः स भुवमाययौ ।
प्रत्युद्गमादिसत्कारैः कृतपूजो महीभुजा । स दण्डनायकादीनां शिरःशूलावहोऽभवत् ।
परिहासपुरे पारिपाल्यं कुर्व्वन् कठोरधीः । वातगण्डा[illegible]या ख्यातिं निन्ये यत्तत्र पर्षदा । ९९५
प्रभृतोत्कोचसम्प्रीतसचिवप्रेरणस्पृशा । अपास्य वासनं राज्ञा प्रादाग्रादौ नियोजितः ।
आनन्दः स क्षणे तस्मिन्निच्छन्द्वाराधिकारितां । कन्दर्पद्वेषिणामासीन्मन्त्रिणामतिसम्मतः ।
तत्प्रेरितस्ततः पातुं लहरं विप्लुताहितं । मण्डलेश्वरतां दत्वा कन्दर्पं प्राहिणोन्नृपः ।
मन्त्रविक्रमसम्पन्नः कुभृत्यैः खेदयेत्प्रभुः । युक्त्या तया राजपशोः समीपात्सोऽतिवाहितः ।
दूत्याहोयमिति प्रहाय निकटाद्देशान्तरं वाग्मिनं शूरं बन्धुवियोगकृत्तनुवचोऽमुष्येति मन्त्यज्ञ च ।
शूरं राज्यमसौ हरेदिति तया हित्वा विचारोज्झितो धूर्त्तप्रेरणया बुधो नृपपशुर्नायाति नाशश्चिरात् । १०००
अदर्शनात्स्वबद्धापि कन्दर्पप्रीतिराश्रयात् । राज्ञो जगाल कालेन सा मुष्टेरिव वालुका ।
उत्कर्षपुत्त्रावादाय चिकीर्षुर्लोहरे शतां । कन्दर्पो वर्तत इति क्षितिपं मन्त्रिणोऽवदन् ।
तथेति नृपतिर्ग्टह्णन् बन्धुं हम्मुमथाशु तं । ससैन्यं व्यसृजत्पट्टं टङ्कं चासिधराभिधं ।
तयोः सम्प्राप्तयोर्व्वार्तां तां लेख्यव्यत्ययाद्विदन् । विमुखश्चकितात्मा च कन्दर्पोऽभूद्यथा मुहुः ।
कलिद्यूतक्षणे हस्तं म्टदूत्वेवकवत्पुरः । आसीदसिधरस्तस्य बन्धुमभ्युद्यतस्तदा । १००५
ततः पाणिं विनिष्कृत्य सोऽङ्गुष्ठाग्रेण तत्करं । असृग्दाघेन निस्तथ्यं क्लिन्नः पन्नीव सोऽगमत् ।
अनन्तराजो भूभृच्च तेनात्मा च नृपाश्रितः । विगम्यते स्म खिन्नेन पट्टश्चैवमकथ्यत ।
नेयाश्रयो नरपतिः कुटुम्बं प्रहिणोतु मे । अर्पयित्वा ततः कोटं प्रयास्यामि दिगन्तरं ।
आनीय दत्तांस्तैर्ज्ञातीनादाय द्रोहवर्ज्जितः । स विमुक्ताधिकारोऽथ मन्त्री वाराणसीं ययौ ।
हत्वा गयायां सामन्तमेकमन्यं निवेश्य च । काश्मीरकाणां चक्रे स श्राद्धशुल्कनिवारणं । १०१०
स हत्वा चौरसेनान्यं ससैन्ये दुर्गमेऽध्वनि । पूर्व्वाशामध्वनीनां स व्यधान्निर्धूतकण्टकं ।
व्याघ्नं निहत्योग्रसत्त्वं वाराणस्यां निरस्यता । पूर्व्वा दिक् भूषिता तेन मठैः सुकृतकर्म्मठैः ।
ते तन्निर्व्वासनादेव लब्धलक्ष्याः कुमन्त्रिणः । अन्योन्यासूयया जघ्नुरप्यकार्य्याणि भूभुजः ।
खेगाहारोदितगुरुमदाः शृङ्गकण्डूतिशान्त्यै दुर्व्वारेर्ष्याकलुषमतयो यत्र दुर्मन्त्रिमेषाः ।
घ्नन्त्यन्योन्यं भवति गणितैर्व्वासरैरेव कस्मिन्मध्यस्थाणोरिव नरपतेस्तत्र सर्व्वाङ्गभङ्गः ।
अतिक्रामति कालेऽथ पार्थिवं हम्मुमुद्यमं । दुद्रुवुर्जातराज्येच्छस्तान्चङ्गिर्धम्मटोऽभजत् । १०१५
द्रोहापवादभागेष भवेद्राज्यमिदं पुनः । मामेव वेश्यापुत्त्रत्वाद्दनर्हेऽस्मिन्नुपेक्ष्यति ।
इति सम्मन्त्र्य सुचिरं निहन्तुं पृथिवीभुजं । प्रेरितो जयराजोऽभूत्तेनासरलचेतसा ।

॥ युग्मं ॥ विलावग्रामजान् क्षिप्त्वा तीक्ष्णं द्रोहाय भूपतेः। सावरोधवधूर्द्विश्या विदधे मध्यपातिनीः।
क्रमाद्विद्युन्मुखे तस्मिन् कार्य्ये राजपुरीं नृपः। दूत्याय व्यसृजज्ज्ञातु वल्गमानेन धम्मटं।
सहस्रमङ्गलगृहे सुदिनापेक्षया स्थितिं। तं सिद्धिभङ्गचकितो जयराजः समाययौ। १०२०
तमर्थं मण्डपे गूढं तयोर्मन्त्रायमाणयोः। प्रयागानुचरः कश्चिद्भित्तिव्यवहितोऽशृणोत्।
तदावेदिततद्वार्त्तात्प्रयागात्तत्कथां ततः। बुद्ध्वा निवर्त्तयामास धम्मटं गमनान्नृपः।
कुलक्षयभयात्तिष्ठंस्तत्प्रतीकारमन्थरः। स्वमेव केवलं रक्षन्नासीत्स चकितोऽन्वहं।
असिद्धिं जयराजस्तु दृष्ट्वा दूतैः स्वसम्मुखौ। शमालडामरौ वीरौ नागपाशाभिधौ व्यधात्।
स्वभृत्यैर्मदनिर्यातैर्थियासुस्तं निवेदितं। श्रुत्वा क्षपायां क्षितिभृद्दिक्षु चिक्षेप रक्षिणः। १०२५
व्याजाद्यात्रां वदन् सज्जः प्रातस्तान्पङ्क्तिरेव तं। चतुष्कं पूजने धूर्त्तो जयराजमुपानयत्।
राज्ञोदत्तार्गले धाम्नि स्थितस्य स्नानमण्डपं। सत्रासो भ्रातृपुत्रेण धम्मटेन ततोऽविशत्।
रक्षिणोऽथ वहिर्न्यस्य प्रयागः पार्थिवाज्ञया। जयराजं वधानेति नीचैर्धम्मटमभ्यधात।
धम्मटे विश्वसन् शस्त्रं जयराजस्त्यजेद्ध्रुवं। निर्देशेनामुना वेत्ति स्वमज्ञातश्च धम्मटः।
द्वयोरेकस्य वा युद्धे तयोर्म्मृत्यौ हितश्च नः। व्यक्तीकृतैकयोर्वापि वधो लोकेऽप्यगर्हितः। १०३०
इति निर्ध्यायतः शश्वदविरोधेन वेधसः। प्रज्ञास्य प्रत्यभाद्राज्ञो मन्त्रो युक्ततमस्तथा।
॥ तिलकं ॥ नावद्ध मां ध्रुवं राजा तान्पङ्क्तिरिति विश्वसन्। जयराजमुपागत्य ततोधार्ष्ट्याद्वचोऽब्रवीत्।
अप्रसन्नस्त्वपि नृपो यद्यद्रोहोऽसि निश्चयात्। तत्त्वयात्मविशुद्ध्यर्थमसिधेनुः समर्प्यतां।
दैवेन वा मोहितः स तद्विश्वासेन वात्यजत्। आक्षिप्यमाणः शस्त्रास्त्रकोविदः शस्त्रमन्यत्रत्।
वैक्लव्यदर्शनात्सिध्यस्ततः स परुषां गिरं। तत्पक्षपौत्रस्तुलाख्यस्तं जगादाब्जकात्मजः। १०३५
न त्वं निःसत्त्वकन्याया जातः कलशभूभुजा। आसीज्जनयिता नूनं क्लीवो यः कश्चिदेव ते।
निष्ठायां धैर्य्यचर्य्याणां परिणाममजानता। तेनेत्युक्तः स शीताम्बुसिक्तसुप्तोपमोऽभवत्।
॥ युगलकं ॥ द्रोहोदन्तं प्रच्छमानोऽधीरस्तन्मध्यपातिनं। यातमात्रोक्षितोऽप्यूचे स्वमेव न तु धम्मटं।
विषघ्नमन्त्रवीर्य्येण मोघीकृतविषाशनः। रज्ज्वा निपीड्य ग्रीवायां ततो निशि विपादितः।
जयकेन प्रतीहर्त्रा शिरश्छित्त्वोज्झितं ययौ। भट्टारमठ्ठलातोये तद्वपुर्भस्त्रभोज्यतां। १०४०
तमेकसप्तते वर्षे हत्वा भाद्रपदे नृपः। वधं गभीरहृदयो धम्मटस्याप्यचिन्तयत्।
आदिदेशाथ तस्मिन्सो रहः शस्त्रभृतां वरं। शूरं कलशराजाख्यं ठक्कुरं लोहराश्रयं।
प्रहिणोति यदा दूतं प्रयागस्ते तदा त्वया। सम्पाद्यमेतदित्यूचे तं चोपचितसत्क्रियं।
असिद्धिभीत्या स्वं दूतं स प्रहिण्वन् प्रयागकः। सम्मन्त्र्य क्रियतामेतदित्यूचे कुपितो नृपं।
राज्ञि मन्त्रीयमाणेऽथ पश्चानीयाग्र्यमन्त्रिणः। वामनः सार्गले द्वारे त्यक्तदेहेऽब्रवीद्वचः। १०४५
मन्त्रश्च मन्त्रिणश्चैते न यावन्निःसृता वहिः। तावत्क्रियेत चेदेतन्न भद्राणि दरिद्रति।
राजाज्ञया प्रयागेण ततो दूते विसर्जिते। तीक्ष्णः कलशराजाख्यस्तमयाभ्यां सहाययौ।

तस्मिन् प्रसङ्गे ताम्बङ्गिः श्येनस्य ददतातपं । राजधान्यन्तरेवासीद्विचैरनुचरैः समं ।
पुरः कलशराजं तं दृष्ट्वा पश्चाच्च तत्सुतौ । यावत्सशङ्कमासक्तौ तावद्भृत्यैर्निजैर्जहे ।
भक्तोऽपि धम्मटः क्रष्टुं कृपाणीमिति वादिनं । हन्तुं कलशराजन्तु यावच्छस्त्रे व्यधात्करं । १०४०
तावत्तेनायतः पश्चात्तत्पुत्राभ्यां कृताहतिः । आसनादुच्चलन्नेव चिप्रं प्राणैरमुच्यत ।
मुमूर्षुणा हतस्तेन ज्यायान् कलशराजजः । चित्रमायुधवैगुण्यान्नाभीत्त्वणव्रणितोऽभवत् ।
तस्य ह्यभाग्ययोगेन तेष्वेवाहःसु शस्त्रिणः । निजा कृपाणी तुत्रोट तेनाभद्रायुधोऽभवत् ।
निहत्य पातितः पृष्ठात्स तैर्व्याधैरिवाण्डजः । मुडनां ग्रासाय सन्त्यक्तः श्वपाकैः पार्थिवाज्ञया ।
राज्ञा तन्वङ्गनागौ स्वयं निह्नुणमङ्गलौ । आगत्य प्राङ्गने त्यक्तकृपाणौ परिरक्षितौ । १०४५
दत्तास्कन्दास्तु टुक्काद्याः संरम्भेण युयुत्सवः । माययोदयसिंहेन दाम्भिकेनैत्य वञ्चिताः ।
यूयं पुत्रा ममेत्युक्तवतस्ते धार्मिकस्य यत् । प्रत्ययात्तस्य शस्त्राणि तत्यजुर्जीवितेच्छवः ।
राज्ञो विशुद्धिः क्रियतां पार्श्वमेत्येति तद्वचः । तैः समागत्य जगृहे मार्गो राजगृहान् प्रति ।
तन्वङ्गजगृहोच्छिष्टैर्व्याल एव विवर्धितः । दुःखान्ततो विहस्यैवं खड्गमयाहकोऽवदत् ।
तन्वङ्गमप्रर्यत्पूर्व्वं जयराजमभाषथाः । न त्वं निःसत्त्वकथ्याया इति तद्विस्मृतं तव । १०५०
स ते तादृश एवायं वर्तते सङ्कटचणः । किं धैर्य्यावसरे मूढ वैक्लव्यमवलम्बसे ।
तस्माज्जातोऽसि नियतं मत्पित्रोच्छिष्टमुष्टिना । अहन्तु तेन वीरेण त्वत्पित्रा कीर्त्तिभागिना ।
इत्युक्त्वा मरणे गृह्णन् खड्गधाराचलज्जलं । पपात जन्ममालिन्यं मार्गी प्रचालयन्निव ।
नृपान्तिकं प्रयास्याम इति निश्चयतस्ततः । टुक्कादीन्राजपुरुषाः कारागारे निचिक्षिपुः ।
ते यौवनभरोन्मत्ता द्रुमा वासन्तिका इव । प्रत्यभासन्त कारुण्याद्रक्षणीयाः चमाभुजः । १०५५
टक्कस्तु बिम्बियोनाम पापः सम्प्रेक्ष्य भूभुजं । न्यजिघ्रहत्तान् ग्रीवासु निशि पाशान्निवेशयन् ।
गुङ्गोविजयराजस्य वुक्तोगुङ्गस्य तेऽलुठन् । तत्वङ्गपौत्रास्त्वारो हता बध्यमहीतले ।
हतानामपि सौन्दर्य्यं तेषामद्यापि वर्ण्यते । कथान्तरे वयोवृद्धैरुद्गाश्रुस्यन्ददुर्दिनैः ।
सतताभ्यस्तनाम्लैः स्वसैस्तद्भ्रमाङ्कुरैः । कीर्णगोणाश्ममालेव सुचिरं बध्यभूरभूत् ।
इङ्गिमानीतयोराज्ञाप्युत्कर्षापत्ययोस्तयोः । ज्यायान् प्रसिष्ये डोम्बाख्यो गूढदण्डैः कुलच्छिदा । १०६०
स्फुलिङ्गमिव सम्भाव्य तेजोविस्फूर्जितं शिशुं । जघान जयमल्लञ्च तद्वद्विजयमल्लजं ।
गोभृत् स्वगोत्रजान् हत्वा भोक्तुमेकस्य कस्यचित् । कुर्व्वन्ति दैवोपहता राज्यं निष्कण्टकं नृपाः ।
संरूढं मधुगोलमुच्चविटपव्यूहावलीगह्वरे मूढः कर्तुमलक्ष्यहार्य्यमभितः कस्यापि भव्यात्मनः ।
दैवप्रेरणया प्रकम्पविवशः पत्रप्रहारैर्दृढं तद्धोऽम्मधुपान्निहत्य शमयत्यश्वत्थपृथ्वीरुहः ।
ज्ञातिद्रोहमहापापमदृष्टधीरथ पार्थिवः । डिम्बानामप्यसम्भाव्यामभजद्दिट भोग्यतां ।
वामनस्यात्मजः चेमस्तज्ज्ञानन् जनकद्विषं । प्रैरयत्कलशेशस्यच्छन्दे मनिवर्हणे । १०६५
तामिच्छामच्छिनत्तस्य भक्तो युक्त्या प्रयागकः । धावतां श्वभ्रपातेच्छां धीरोयं तेन वदन्ति नः ।

अनिशन्नष्टचेष्टानां भवानामिव भूभुजां । अन्तःप्रवेशकुशलो यो वेताल इवाभवत् ।
नप्ता हलधरस्याथ विटो लोष्ठधराभिधः । जगाद निर्जने जातु राजानं रञ्जनेच्छया ।
॥ युग्मं ॥ ह्रियतां ताम्रहेमादि कलशेश्वरसंश्रयं । तत्प्रसादाश्मभिः सेतुं वितस्तायां करोमि ते ।
आलेख्यं गगने लिखामि विषिनीं सूचैर्व्वयाम्यम्बरं स्वप्नालोकितमानयामि कनकं बध्नामि वप्रं हिमैः ।
इत्याद्युक्तमपि स्फुटं जडमतिर्जानाति सत्यं नृपो यस्तादृक् त्रपया न वक्ति मगतप्रौढिः परस्वञ्चयते । १०८०
निषिषेध चिकीर्षान्तु प्रयागस्तामपि प्रभोः । सदुपस्थायिकोऽपथ्याभ्यर्थनामिव रोगिणः ।
अथ लोष्टधरो हास्यावसरे जातु भूपतिं । बद्धस्य मोक्षो देवस्य क्रियतामित्यभाषत ।
स्मित्वा किमेतदित्युक्तवन्तं तं स व्यजिज्ञपत् । तद्भुण्डपुरे भीमस्वाहिरण्यमभूत्पुरा ।
विरोधात्परिपत्यानां तस्त्रातो भीमकेशवः । राज्ये कलशदेवस्य बद्धद्वारोऽभवच्चिरं ।
तैः शान्तवैरैर्विदधे यदाथ विहृतार्गलः । चौरापहृतदुर्व्वर्णकवचो ददृशे तदा । १०८५
भूयोऽपि चक्रे तद्भीत्या कोशमामग्यभागिति । ततः प्रभृत्यद्य यावद्बद्धद्वारार्गलः स्फुटं ।
आदीयतां तदीयस्तत्कोशश्चौरभयावहः । सोऽपि बन्धाद्विमुक्तोऽस्तु पुष्पदीपादिभोगभाक् ।
इति सम्प्रेरितस्तेन तथा चक्रे स भूपतिः । कोशमस्दा प्रपेदे च मणिस्वर्णादिनिर्भरं ।
अचिन्तयच्च यन्नेदृग्वस्तु शून्यसुरास्पदे । कीदृक् तत्रापरेषु स्याद्दाढ्येषु सुरवेश्मसु ।
कृतप्रायः स तत्रत्यैः पारिषद्यैस्ततो नृपः । निष्क्रयं रूढभारोढिवारणेन प्रदापितः । १०९०
क्रमेण सेनानामाकव्ययव्यसनशालिनः । सुराकुहरणे रूढा धीःसम्भावनया तथा ।
पूर्व्वराजार्पितान् कोशांस्ततः स भुवनाद्भुतान् । सर्व्वगीर्व्वाणवेश्मभ्यो लुब्धबुद्धिरपाहरत् ।
हृतेषु कोशेष्वानेतुं देवानां प्रतिमा अपि । चकारोदयराजाख्यं देवोत्पाटननायकं ।
वदनेषु सनशाढैः शीर्णघ्राणाङ्घ्रिपाणिभिः । मूर्त्तिनाशाय देवानां शकृन्मूत्राद्यपातयत् ।
स्वर्णरूप्यादिघटिता गीर्व्वाणाकृतयोऽलुठन् । अध्वस्विन्धनगण्डाश्च इव सावस्करेष्वपि । १०९५
विबुधप्रतिमास्वङ्गराकृष्टा गुल्फदामभिः । थूत्कारकुसुमच्छन्ना रथ्याशृङ्गाटकादयः ।
ग्रामे पुरेऽथ नगरे प्रासादो न च कश्चन । हर्षराजतुरुष्केण न योनिष्प्रतिमीकृतः ।
तस्य देवावशिष्टौ द्वौ परमास्तां प्रभाविणौ । नगरे श्रीरणस्वामी मार्त्ताण्डापत्तनेष्विव ।
द्वौ सद्धा प्रतिमामध्याद्बुद्धबिम्बावरच्चतां । दानप्रसङ्गे तं जातु याचित्वा त्यागिनं नृपं ।
परिहासपुरे जन्म मेदिन्यां कनकाभिधः । गायनः कुशलश्रीश्च श्रमणो नगरान्तरे । ११००
अधिगतवतां लोके विश्वाद्भुतामपि सम्पदं न खलु विरतिर्दुष्कर्मभ्यो धनार्जनकाङ्क्षिणां ।
किमपि कमलावाप्त्यै पद्माकरोद्धृतिपातकं भजति कमला लीलावासो भवन्नपि हि द्विपः ।
पैतामहेन पित्र्येण तथा राज्यचिकीर्षया । लोहरादाहृतार्थस्य कोशेनोत्कर्षभूपतिः ।
युक्तोऽपि पूर्व्वराजार्थं दिवौकेभ्यो जहार यः । ऐच्छद्धनार्जनं हा धिक् सोऽपि वास्तव्यपीडया ।
॥ युग्मं ॥ तदाज्ञामात्रमादाय सचिवैरथ पापिभिः । ते ते नवनवायासनामाङ्का नायकाः कृताः । ११०५

कालानुवृत्तिपरतां धिग्विद्योपजीविनां। यत्र मन्त्री वयस्यः सम्यदाचारोऽपि गौरकः।
सर्व्वदेवग्टहग्रामसर्व्वस्थापहृतिव्रतं। स्त्रीचकाराज्ञया भर्तुरर्थनायकतामपि।
॥ युग्मं ॥ पार्षदः समरस्वामिदेवागारे च सेलकः। श्राप्तोविजयमल्लस्य यो राज्ञो द्वेष्यतां ययौ।
द्विगुणोत्पत्तिदानेन सोऽर्थनायकतां गतः। लब्धावकाशो राजाग्रे क्रमेणासीन्महत्तमः।
किमन्यच्छूरता तेन सर्व्वार्थान् सर्व्वनायकैः। व्यधीयत धनावाप्त्यै पुरीशस्यापि नायकः। १११०
श्रीगर्भपदपर्य्यायच्छन्नजाड्यप्रभावतः। तथार्जितस्य कोशस्य सोऽनुरूपव्ययोऽभवत्।
मृगोद्भूयां दुर्लभतां हयानां श्वासाञ्चिटानां कुवचःसहत्वं।
वैतालिकानाञ्च विकत्थमत्वं श्रोतुं क्षितीशाः क्षपयन्ति लक्ष्मीं।
कोपप्रसादैर्दयिताजनस्य हयादिवृत्तान्तगवेषणेन।
भृत्यानुवृत्त्या मृगयाकथाभीराज्ञां शिशूनामिव याति कालः।
विलासहासासनपानदानयानाशनाद्या श्रसतीः सतीर्व्वा।
छायेव चेष्टाः क्षितिपालवर्गः परानुकारेण करोति सर्व्वाः।
श्रमानुषत्वं पुरुषाधिराजा विटस्तवैः स्वस्य विचिन्त्य सत्यं।
तृतीयमत्यभ्यधिकं भुजौ वा ममेति मत्वा न विदन्ति मृत्युं। १११५
निशासु येषां प्रभवन्ति दारादिमेष्वमात्या नियताधिकाराः।
श्रहो भ्रमः स्वस्य यदत्र तेऽपि विदन्ति भूपाः प्रभविष्णुभावं।
स्वादूचितं स्वादुतयैव भुंक्ते सूत्कृत्य मुञ्चत्यपि सूत्कृतानि।
विचारितस्तासमुपेत्यकस्मात्क्ष्माभृच्च वालस्य समानभावः।
जाड्यमित्यादि यत्किञ्चित्क्षितिपानां कटाक्षितं। तत्सर्व्वं हर्षदेवस्य जाड्येन लघुतां ययौ।
तुष्टः पटहवाद्येन चुम्भातोद्यविदे ददौ। भीमनायकनाम्ने स करिणं करिणीसखं।
स्वस्निग्धस्तेन तस्यासीद्गायनः कनकोऽथ सः। चम्पकावरजः खेदाद्गीताभ्यासकृतोद्यमः। ११२०
प्रसादीकृतमस्मै च खेदच्छेदनमिच्छता। तेन काञ्चनदीनारलक्षमक्षतचेतसा।
कर्णाटभर्तुः पर्माण्डेः सुन्दरीं चन्दलाभिधां। श्रालेख्यलिखितां वीक्ष्य सोऽभूत्पुष्पायुधक्षतः।
उत्तेजयन्ति सद्धर्षे हास्ये जडमतीन्विटाः। सारमेयानिवाजस्रं प्रोत्साह्य प्राकृताशयाः।
सविटोद्रेचितो वीतत्रपस्तस्मिन्सभान्तरे। प्रतिज्ञां चन्दलावाप्त्यै पर्माण्डेश्च विलोडने।
कृता पश्चिमकर्पूरपरित्यागं प्रतिज्ञया। तच्च स्तुतिमिषादेवं जहसुः कविचारणाः। ११२५
भाषावेषविशेषतः परिगतश्चन्द्राक्षिणात्योऽध्वगो गन्धादप्यवधारितं यदुत ते कर्पूरकोलङ्करे।
पक्वश्चेदिदमङ्ग हर्षनृपतेस्तत्कल्पयोपायनं नो चेत्तिष्ठतु नारिकेलकुहरे सम्प्रत्यमुष्मिन्यतः।
श्राकर्णाटवसुन्धराधववधादाचन्दलालिङ्गनादाकल्याणपुरप्रवेशनविधेरापिम्मलादर्शनात्।

आराजाश्रयकामनान्तवसुधापारङ्गिकोठहलाद्देन प्रतिषिद्धसिद्धमहसा पोतासमस्वर्वणं ।
विटः प्रसादनृपतिर्मदनः कम्पनापतिः । महत्तरत्वं जग्राह तस्याश्चित्रार्पिताकृतेः ।
वस्त्रालङ्कारनिर्वाहकृतेऽमुष्यास्य वेतनम् । नित्यमादत्त भूपालादायमीर्ष्याशमाय च ।
विटत्वे निस्त्रपत्वे च मदनस्य कथाक्रमः । मौग्ध्ये पारिप्लवत्वे च नृपस्य निकषोऽभवत् । ११३०
मातेयं विद्धि कम्पाकान्तवामीनेति वादिभिः । सन्दर्श्य जरतीं नारीं मुषितः सोऽपरैर्विटैः ।
दासीश्च देवता एता इत्युक्तान्यैः प्रवेशिताः । उत्थानिश्च श्रियं चौज्झत्प्रणमन् जहसे जनैः ।
दास्यो मदनसंलापमन्त्राद्युल्लेखकारिभिः । अध्यापिता विटैस्तस्य मतिमोहं प्रचक्रिरे ।
ताभ्यः काभिरपि च्छाम्भत्सुरतं समयोचितं । वाञ्छन्तीभिः कृतः स्वाङ्गस्पर्शाद्भाग्याश्रयोज्झितः ।
आयुष्कामाय भूयांसं कालं जीवितकाङ्क्षिणे । आयुर्वर्षशतान्यस्मै ता मूढमतये ददुः । ११३५
डोम्बेन पिण्डसिद्धार्थी केनाप्येतद्रसायनं । पिण्डसिद्धिकृदित्युक्त्वा पेयं किमपि पायितः ।
किं तस्य कथितैरन्यैर्मौग्ध्यैर्यो याचितो विटैः । विद्यमानादिव धनादायुषोऽपि व्ययं व्यधात् ।
बलत्कूपेश्वरपरानुपायान् यानसेवत । कथयेत्कः सदाचारस्तानतोऽपि त्रपावहान् ।
स एवमन्धतामिस्रे निक्षिप्तः शाश्वतीः समाः । मुग्धबुद्धिः स्वजन्येन दुर्जातस्य कुमन्त्रिभिः ।
मेघवाहनमुख्यानां कृत्ये लोकोत्तरे यथा । सन्दिग्धास्त्वल्पधियः केचित्सन्देहान्दोलिताशयाः । ११४०
तथास्मिन्नपि दुष्कृत्ये वर्ण्यमानेऽद्भुतावहे । भविष्यतीव कालेन नूनमप्रत्ययो जनः ।
राज्ये बहुच्छले तादृक् दुर्नीत्योपहतोऽप्यभूत् । आयुःशेषेण न वशे स रन्ध्रान्वेषिणां द्विषां ।
नर्तकीः शिक्षयन्नाचावुत्थायाभिनयं स्वयं । तिष्ठन्दीपोज्ज्वले धाम्नि दूरात्केनापि शत्रुणा ।
क्षिप्तेषुरपि नाभून्निहतो जनितोऽथ वा । फलं तस्यायुःशेषस्य प्रजानां कुकृतस्य वा ।
कश्चिदेवाथ शुद्धान्ते पातदूतो महीपतेः । सर्वशुद्धिनिधेः प्राभून्नारीचारित्रविप्लवः । ११४५
ते युवानो मदोन्मत्तास्ताः स्त्रियो यौवनोन्मदाः । नाशाय हर्षदेवस्य तस्मिन्नेवाभवन् क्षणे ।
निगृहीतास्तेन रोषान्न राजा काश्चन स्त्रियः । काश्चित्त्वाकृष्य शुद्धान्ताज्जारैर्नीता दिगन्तरम् ।
स्वेन दौःशील्यदोषेण सर्वैरेव विशङ्किताः । भृत्यास्तस्याशुभान्वेक्षन्नयतन्त च शान्तये ।
तस्यापि शीलकैवल्यं तावत्सर्वत्र पप्रथे । यावत्कलशभूपालात्सञ्जातस्योपपद्यते ।
शैशवे वर्धितो याभिरङ्कमारुह्य मातृभिः । सोऽङ्कमारोप्य ता एव चुम्बन्संबुभुजेऽनिशम् । ११५०
सम्भोगम्भगिनीवर्गे कुर्वता दुर्वचो तृषा । निगृहीता च भुक्ता च नागा पुत्री पितृस्वसुः ।
स तुरुष्कशताधीशाननिशं पोषयन् धनैः । निधनावधि दुर्बुद्धिर्बुभुजे ग्राम्यशूकरान् ।
अथ सेवाभिसारेण कदापि कुपितो नृपः । स मन्दबुद्धिरास्कन्दमदाद्राजपुरीं प्रति ।
विलोक्य सैन्यसामग्रीमनन्यसदृशीं पथि । त्रैलोक्याक्रान्तिसामर्थ्यं पार्थिवैस्तस्य शङ्कितं ।
स तु पृथ्वीं गिरिं दुर्गं दृष्ट्वा तद्ग्रहणोद्यतः । अप्रविष्टो राजपुरीं तन्मूले समुपाविशत् । ११५५
मासमभ्यधिकं तेन तस्थुषा परिपीडिताः । प्रक्षीणाम्बादिसंभारा बभूवुर्दुर्गरक्षिणः ।

यातुं सङ्ग्रामपालस्तानूरोचक्रे धरापतिः । कियन्तं न करश्रीतः कियतीर्नच संविदाः ।
उपोढदार्ढ्ये नृपतौ स तदप्रतिग्रहति । लुब्धमुत्कोचदानेन स्वीचक्रे दण्डनायकम् ।
प्रमथ्यमाने नृपतौ व्यावृत्तिं प्रेरिता रहः । प्रवासवेतनं भूरि मार्गितुं तेन मन्त्रिणः ।
तैः प्राये प्राकृतप्रायैः कृते सोऽनुपढभाषितैः । राज्ञो दूरस्थकोशस्य कटकः क्षोभमाययौ । ११६०
स तत्समर्थनां यावच्चक्रे तावद्विभीषिकाम् । तुरुष्कास्कन्दजामन्यां प्रददौ दण्डनायकः ।
अथाल्पधैर्यो नृपतिरुत्थाप्य कटकं ययौ । कृत्स्नाश्च कोशसामिग्रीं तत्याजाध्वसु साध्वसात् ।
अपरीक्ष्याद्दृतो भृत्यः स्वामिनामतिसङ्कटे । करोति व्यसनापातमजात्याऽसिरिवाहवे ।
तेन स्वयमयोग्येन योग्यानन्यानानिच्छता । कलङ्किता नरेन्द्रश्रीः क्षुद्राश्वेनेव मन्दुरा ।
ततः प्रभृति निर्व्वाणप्रतापस्य महीपतेः । प्रतापचक्रवर्त्याख्या सर्व्वतो ग्लानिमाययौ । ११६५
ग्लानामनोन यत्सिद्धं स्वेन भृत्यैस्तथाखिलैः । तत्कर्म्म कृतवन्तं स कन्दर्पं वक्रमन्यत ।
आनिनीषोस्स तं तस्य जडस्याकृत भूपतेः । दण्डनायक एवेच्छाच्छेदं पैशुनकर्म्मणा ।
ज्ञातद्रोहोऽथ नृपतिरबध्नाद्दण्डनायकम् । प्रतिपत्त्यानुरोधेन न क्रुधा न्यग्रहीत्पुनः ।
दुग्धे संदिग्धजीवोऽपि निवसन् सचिकाय सः । लब्धस्ताम्बूलवस्त्रादि प्रहितं भृत्यबान्धवैः ।
आत्मनः सर्व्वनाशाय सञ्जातं देवमोहिनः । बधार्हं प्रत्युत पुनर्निन्ये तं स्वपदं नृपः । ११७०
तं विटाश्चाटुभिर्भूयो राजानमुदतेजयन् । घोषयाचाजितं स्तोत्रैः कर्णाद्या इव कौरवम् ।
वादी वादपराजितः प्रतिभटश्लाघीभिरत्याक्षिपन् योषिन्नसुसतीव्रता कुकलहैरुद्वेजयन्ती पतिम् ।
कायस्थस्च हृताखिलार्थमहिमा कृच्छ्रे नृपं पातयन् स्वस्यासन्नपराभवस्य कुरुते भूयः समुत्तम्भनम् ।
भुक्तदेयधनोविभ्यत्तं सद्देसमदक्तमः । उर्वीपतिं दुर्व्यसने प्रेरयन् स्वार्थपण्डितः ।
बन्धुमन्विष्य दरदां लवन् येस्तहलाहरैः । दुर्गघाताभिधं दुर्गं ग्रहीतुं तमचूचुदत् ।
तद्धि लक्षनचन्द्राख्ये पुरा गोप्तरि डामरे । अनकदारपतिना हृतेऽनन्तनृपाज्ञया ।
प्रायोपविष्टया दारे तत्पत्न्यापि समर्पितम् । कलशक्ष्माभुजाक्षेपेयं प्राप दरन्नृपः । ११७५
तद्बलाद्दारदैः क्रान्तानन्तग्रामेऽत्र मण्डले । राजा च मन्त्रिणा साथ बभूव स्वीकृतोद्यमः ।
निर्द्वारे तत्र गोप्तॄणां वृत्तये स भृतं हिमम् । अत्यग्रहेण तत्तस्मिन् क्षणे निःशेषतां ययौ ।
चारैस्तदुत्क्रमालक्ष्य तद्ग्रहाय महत्तमः । अभीक्ष्णं प्रेरयत् क्ष्मापं स च तत्रोद्यमं व्यधात् ।
वातगण्डस्तदुद्योगे प्रतिष्ठासुं नृपाज्ञया । चम्पको द्वारकार्यस्थमभिसन्धातुमैहत ।
द्वारं निर्वार्य्य भूपेन प्रापितो मण्डलेशताम् । सर्व्वैः सहाभजद्द्वारं स हि द्वाराधिकारिभिः । ११८०
विप्रचिता च कटके तेन द्वारपतिस्ततः । तीर्त्वा मधुमतीं सिन्धुं सैन्यैर्दुर्गमवेष्टयत् ।
समस्तानपि सामन्तान् प्रहिण्वन् सर्वतः स्वयं । एकः प्रयाणान्तरितः कोटेऽपि न्यवसन्नृपः ।
त्यजन्द्विर्गण्डशैलादिदुर्गसंश्रयदुर्जयैः । काश्मीरकाः सह दरत्सैनिकैः समरं व्यधुः ।
विदधे प्राजिमठिका नाम्नाघातपदे वसन् । सपुत्रो गङ्गजो मल्लः सम्भ्रमानतिदुःसहान् ।

तत्पुत्त्रौ देवविख्यातौ राज्यप्राप्तौ तदिच्छया । मानं व्यवर्धिषातां यौ वीरावुच्चलसुस्सलौ । ११८५
अत्युद्दामस्तयोर्ज्यायान् द्विषन्नपि नृपाधमं । आसीन्नाव्यर्थमाहात्म्याद्याधावायान्न निर्गतः ।
अवग्रहेण भूपालप्रतापेन च शोषिताः । यथाकथञ्चित्तद्दुर्गं ररक्षुर्द्वारदा भटाः ।
अथात्रैव विधेर्हर्षप्रतापपरिपन्थिनी । पपात महती वृष्टिरेकीकृतजलस्थला ।
दुर्गभङ्गं हिमैः कृत्स्नं दुर्भेद्यैः पर्य्यवार्य्यत । अनुकूलेन विधिना सन्नाहैर्निहितैरिव ।
उत्थाने पातयन् कांश्चित्पतने कांश्चिदुत्क्षिपन् । वेधाः कन्दलयत्येव कन्दुकक्रीडितभ्रमं । ११९०
ततः स्मृत्वा ग्रहान् दृष्टिदुःस्थास्ते दुष्टमन्त्रिणः । चक्रिरे पूर्व्ववद्राज्ञः स्कन्दावारे विसूत्रणं ।
ऊर्ध्वस्रोतोनुसारीव तिमिः शैलहताननः । ततोऽपि चक्रे व्यावृत्तिं राजा जयपराङ्मुखः ।
मुक्तापणः शीर्णकोशः त्यक्तश्रीकच्युतायुधः । कटकः सर्व्व एवाभूत्पलायनपरायणः ।
धावतः पथिभिस्तैस्तैस्त्राकन्दाच्चाजवैनिकान् । पृष्ठलग्नरिपून्दीर्घा मार्गेऽग्रसिष्यतापगा ।
दोर्भिः सहंसमालेव साब्जषण्डेव खेटकैः । सशैवलेव खड्गौघैः सशिलेव तुरङ्गमैः । ११९५
सौवर्णैः सरथाङ्गेव राजतैर्भाजनैरपि । सफेनेव जनत्यक्तैरासीन्मधुमती सरित् ।
नीतानाञ्च हतानाञ्च दरदैः प्रसृतोदयैः । अभून्नदीहतानाञ्च सङ्ख्या काचिन्न देहिनां ।
अनाथवत्तथा भूतं सैन्यं त्रातुं कृतोद्यमः । एकस्तु सानुजो मानी नाचलन्माल्लिरुच्चलः ।
दरदलाम्बुधिधावन्स विश्वाक्रमणोद्यतः । ताभ्यां वेलागिरीन्द्राभ्यामिव संस्तम्भितोऽखिलः ।
तौ रक्षित्वा बलं प्राप्तौ प्रसिद्धिमतुलां गतौ । पतिम्बरेव राजश्रीर्भेजे लक्ष्येण तेजसा । १२००
ततः प्रभृति लोकस्य सर्व्वस्यासीदसौ मतिः । राज्यार्हौ मानिनावेतौ क्लीवोऽयं ननु भूपतिः ।
तथा कृत्वापि यद्राज्ञो दर्शनं परिजहृतुः । तौ प्रीतिदायविमुखौ बबन्धास्थां ततो जनः ।
अथ शान्तरिपुत्रासो नगरं प्राविशन्नृपः । प्रतापस्तु दिशः प्रायान्मल्लराजतनूजयोः ।
तौ रामलक्ष्मणावेताविति सर्व्वस्तदाब्रवीत् । रावणप्रतिमे राज्ञि भाव्यर्थानुगुणं वचः ।
राजा तु गतलज्जस्स नित्यकृत्योपमं जडः । कर्तुं प्रारभताखिन्नः पुनर्मण्डलपीडनं । १२०५
अल्पापकारमपि पार्श्वगतं निहन्ति नीचो न दूरमसमागसमप्यरातिं ।
श्वा निर्दशत्युपलमन्तिकमापतन्तं तत्त्यागिनं ननु विदूरगमुग्रदोषः ।
ततः प्रविष्टः सम्प्रीतः सेवया दत्तकम्पनं । मदनं सोऽग्रहणोत्केरं श्रमन्तं तत्पराभवं ।
तद्रोषेण जिघांसुस्तमागोजयाह सोऽपरं । तस्य देवी विसृष्टाज्ञा लेखोदाहनलक्षणं ।
प्राप्ता मडवराज्यात्स क्ष्माभुजा दत्तदर्शनः । भीतो लक्ष्मीधरस्यागान्मन्दिरं ब्रह्ममन्त्रिणः ।
राजा प्रसाद्यमानोऽपि तत्कृतेऽन्येन मन्त्रिणा । सस्मितं वीचितं सैन्यैस्तं स पुत्त्रमघातयत् । १२१०
कोपस्मितं नरपतेरकालकुसुमं तरोः । वेतालस्याट्टहसितं नैवमेव प्रशाम्यति ।
ये सम्प्ररूढविपुलप्रणयाभिमाना निःशङ्कमीश्वरनिषेवणमाचरन्ति ।
मन्त्रानुषङ्गरभसाद्भुजगेन्द्रसख्यं प्रख्यापयन्त इव ते प्रलयं प्रयान्ति ।

कर्णजपकुले तावन्मदनप्रलयावधिः। शापः सूर्य्यमती देव्याः प्रसारितभुजोऽभवत्।
विक्रमालोकनोत्कम्पी निचिक्षेप क्षमापतिः। बद्ध्वा कलशराजं तं लक्ष्मीधरनिवेशने।
विरुद्धं तस्य बद्धस्य शिक्षापेक्षामिषान्नृपः। तेजोवधाय स्वविधमुदयाख्यं व्यसर्जयत्। १२१५
लक्ष्म्या जाज्वल्यमानं तं वीक्ष्य प्रज्वलितः क्रुधा। लब्धासिधेनुः कस्माच्चिन्मनस्वी सहसावधीत्।
तद्भृत्यैरधमं क्रुद्धैर्निपत्य स विपादितः। दुर्बुद्धेस्तस्य भूभर्तुरेवं भृत्या विपेदिरे।
मण्डले राजदण्डेन क्षतेनेव परिक्षते। क्षारपातोपमान्यापि प्राक्रुद्दुःखपरम्परा।
अहारि काञ्चनस्थाली यैः पार्थिवगृहादपि। असत्यहस्करे जग्मुस्तस्करास्तादृशा विशः।
प्रवर्द्धमाने मरके क्रन्दितध्वनिनिर्भरः। निर्घोषः प्रेतवाद्यानां न व्यरंसीद्दिवानिशम्। १२२०
उदीयकाण्डितग्रामे वत्सरे पञ्चसप्तते। अखण्डं सर्व्वभाण्डानां दुर्भिक्षमुदजृम्भत।
दीन्नाराणां धान्यखारिः प्राप्याभूत्पञ्चभिः शतैः। दीन्नारेणाभवल्लभ्यं माद्वीकस्य पलद्वयं।
ऊर्णापलस्य दीन्नारैः क्रयः षड्भिरजायत। लवणापणहिंग्वादेरभिधाप्यास्त दुर्लभा।
शवैर्नद्योऽभवन्नम्भःसंसेकोच्छूनविग्रहैः। छन्नतोया गिरिप्रस्थैश्छिन्नदारुतनैरिव।
एतच्छावच्छता राजधानी दूरान्न दृश्यते। ध्यात्वेति सर्व्वतो राजा द्रुमाणां च्छेदमादिशत्। १२२५
सप्रसूनफला वृक्षा गृहस्था इव पातिताः। कुटुम्बिभिरिव रोलम्बैरशोचन्त पदे पदे।
प्राणापहं महादण्डं तथान्तेऽपि जने नृपः। हलावदृष्टे वृद्धाक्षे गण्डशैलमिवाक्षिपत्।
निपीड्य लोकं कायस्थैर्महादण्डव्यवस्थया। पुरग्रामादिषु क्वापि नाभून्मृद्वशेषिता।
अथोत्खणलं सम्प्राप्तान्निहन्तुं सर्व्वडामरान्। स दण्डमृदिव क्रुध्यन्नादिशन्मण्डलेश्वरम्।
पूर्व्वं मडवराज्योर्व्यां लोहरान्तः स डामरान्। दत्तास्कन्दोऽवधीत्तांस्तान् कुलाये विहगानिव। १२४०
घ्नता लवन्याननद्धकुन्तलोविकटाकृतिं। जीवन्मडवराज्यान्तस्तेन विप्रोऽपि नोज्झितः।
लावन्यबुद्ध्या शूलानि पार्श्वेष्वस्य रोपितैः। भीमरूपाभवद्भूमिर्भैरवस्य महानसः।
शूले लवन्यमेकस्य क्रूरान्विन्यस्यतो वधूम्। ययुः सर्व्वे दिशो भीता लवन्यामण्डलेश्वरात्।
केचिद्बुभुजिरे तेषां गोमांसं म्लेच्छभूमिषु। अरघट्टघरट्टादिकृष्टाः केचिदवादयन्।
प्राहिणोत्प्राभृतं भूरि भैरवाय महीभुजे। लवन्यमुण्डमालालीरखण्डामण्डलेश्वरः। १२४५
तोरणावलयो राजद्वारेऽदृश्यन्त सर्व्वतः। डामराणां करोटीभिर्घण्टीभिरिव निर्भराः।
द्वारे कङ्कणवस्त्रादि लम्बमानं नृपोक्षयः। नेता डामरमुण्डस्य यः कोऽपि स किलासदत्।
भोक्तुं डामरमुण्डानि व्याप्ता विस्तीर्णतोरणाः। विदधुर्गृध्रकङ्काद्या राजद्वारोपसेवनं।
यत्र यत्रास्त भूपालास्तत्र तत्र व्यधुर्जनाः। लवन्यमुण्डैरखण्डैर्व्विस्तीर्णास्तोरणस्रजः।
गन्धेनाशुचिना घ्राणं कर्णौ भीमैः शिवारुतैः। अखिद्यत शवाकीर्णे श्मशान इव मण्डले। १२५०
वलेरकप्रपाप्रान्ताल्लोकपुण्यावधि व्यधात्। एकश्रेणीं मण्डलेशो डामरैः शूलकीलितैः।
एवं मडवराज्यं स कृत्वा निर्नष्टडामरम्। अधावत्क्रमराज्योर्व्वीं कर्त्तुं तामेव पद्धतिम्।

अवश्यं न भविष्याम इति निश्चित्य डामराः । चक्रिरे क्रमराज्यस्था लोलाहे सैन्यविग्रहं ।
तैः सर्वैर्दत्तसङ्ग्रामैः कुर्वद्भिः कदनं महत् । आस्ते स्म तत्र सुचिरं निरुद्धो मण्डलेश्वरः ।
किमन्यद्राक्षसः कश्चित्सुरतीर्थर्षिपूजितं । निहन्तुं मण्डलमिदं हर्षव्याजादवातरत् । १२५५
उज्जागरो रात्रिषु दिने स्वापः क्रौर्य्यमुदग्रता । अत्राप्यचलं कर्त्तव्ये दक्षिणे शोचिते रतिः ।
इत्यादयस्तस्य केचिद्दुर्म्मानकाश्चरोचिताः । तथापि तत्कालभवैः प्रियाः प्राज्ञैः प्रकीर्त्तिताः ।
अत्रान्तरे मल्लसूनुः कनीयान् यौवनान्मदः । लक्ष्मीधरस्य गेहिन्याश्चद्याह्लादकोऽभवत् ।
सा हि राजसुते तस्मिन्संसक्ता प्रातिवेश्मिके । नारज्यत निजे पत्यौ वानरप्रतिमाकृतौ ।
ज्ञातीनगण्यान्हत्वान्यान्कस्माद्राज्यार्हलक्षणौ । नावधीरुद्धतावेतौ राजन्नुच्चलसुस्सलौ । १२६०
इति लक्ष्मीधरेणेर्ष्यारोषादुक्तोऽपि भूपतिः । नच क्रोधानुतापार्त्तिं पूर्वज्ञातिवधाद्गतः ।
स्वयमन्यमुखेनापि स तेनोक्तस्ततोऽसकृत् । तेषां घाते तदौद्धत्यं ध्यात्वा साध्वसमादधे ।
ज्ञातिप्रीत्यनुवृत्त्यादि तेन विस्मरता ततः । सम्मन्त्र्य मन्त्रिभिः साधं दध्रे तद्वधनिश्चयः ।
आसन्नवारवनिता थक्कनाख्या तु तं व्यधात् । भूभर्तुर्दुरभिप्रायं तयोः कर्णपथातिथिं ।
सख्या दर्शनपालेन तत्रार्थे च्छिन्नसंशयौ । निरगातां निशीथिन्यां द्वित्रैस्तावनुगैः समं । १२६५
षट्सप्ततेऽब्दे नगरान्मार्गशीर्षेऽथ निर्गतौ । तत्रासवसतेः प्राप्तौ डामरस्योपवेशनं ।
प्रशस्तराजो दृशुतुः सिल्लराजं निजानुजं । सोऽभिसन्धाय तौ निन्ये लवन्यो मण्डलान्तरं ।
ततो राजपुरीं ज्यायान् प्रायात्कल्हस्य भूपतेः । कनीयान् प्रययौ पार्श्वं कलिञ्जरधरेशितुः ।
तयोर्निर्गतयोराज्यं न कश्चित्कुहधीयत । निमित्तज्ञेन राज्ञैव दुर्निमित्तैस्त्वशङ्क्यत ।
लक्ष्मीधरमुखेनैव प्रार्थनां हन्तुमुच्चलं । चक्रे सङ्ग्रामपालस्य सोऽङ्गीकृत्य धनं ततः । १२७०
स त्वन्तिकागतस्येषन्मल्लसूनोः कृतादरः । तया विशङ्क्या शत्रोरासीदधिकगौरवः ।
आसन्नाभ्युदयं शत्रुदेष्टैव विधिचोदितः । शङ्काविष्करणाल्लोके नयेत्सम्भावनाभुवं ।
राजपुर्य्याः प्रकृत्यैव काश्मीरानर्थकाङ्क्षिताः । प्रभविष्णौ रिपौ प्राप्ते चक्रिकायां किमुच्यतां ।
कांश्चिन्निकृतिकप्रायान् पार्श्वयातानथोच्चलः । गमागमान् कृतोद्योगो डामराणामकारयत् ।
डामरास्तु महोत्साहास्तमानेतुं व्यसर्जयन् । राज्ञा विप्रकृता दूतान्वितीर्णोपायनान्वहून् । १२७५
तं सूर्यवर्मचन्द्रस्य तनयो जनकाभिधः । चकारोपचितोत्साहं मायादूतैर्विसर्जितैः ।
वीक्ष्य डामरदूतांस्तान् जहता राजतोभयं । व्यक्तं सङ्ग्रामपालेन निन्ये माहात्म्यमुच्चलः ।
स कार्य्यगौरवात्प्रह्वो मूर्ध्नि कर्पूरचूर्णनं । कृत्वा तमविनाशाय यावद्विसृष्टुमैहत ।
तावत्कलशराजाख्यस्तद्देशे मुख्यठक्कुरः । हर्षदेवार्पितोत्कोचस्तमेत्य विजनेऽब्रवीत् ।
राज्ञः प्रसादनं त्यक्त्वा तवोच्चल हितैषिणः । कामधेनुं विनिर्धूय छागकण्ठग्रहे ग्रहः ।
कोऽयं काश्मीरभूपानां कास्य शक्तिस्तपस्विनः । आराधनेन तद्राज्ञो विधेहि स्वमसाध्वसं । १२८०
अयं राजगिरौ दुर्गे स्थापितो पार्थिवस्ततः । स्थास्यसीप्सितवर्षीव आशान्मित्त्वञ्च सर्वदा ।

तेनेति प्रभुराख्यातः खशानां शमिताशयः । तन्नीतः स्वार्थलुब्धस्य तथेति प्रत्यपद्यत ।
तमभ्यधाच्च नो बन्धुं शक्तोऽहममुमुद्यतं । त्वयैव बध्यतामेष मिषतः प्रेषितोऽन्तिकं ।
इत्युक्त्वा तं स्ववसतिं विसृज्यावदद्दुच्चलं । प्रातः कलशराजस्य त्वया गन्तव्यमन्तिकं ।
इह प्रधानामात्योऽसौ तेन ते स्याद्भयत्यथः । ततो विपक्षोच्छित्त्यै त्वां प्रतिमोक्ष्यामि सानुगं । १२८५
अथ तद्वसतिं गन्तुं चलितोऽन्येद्युरुच्चलः । प्राक् दुर्निमित्तैस्तत्कृत्यमाप्तैरथ विबोधितः ।
मन्त्रे भिन्ने निवृत्तं तं श्रुत्वा खशनृपान्तिकं । कुप्यन् कलशराजोऽथ सज्जसैन्यैः समाययौ ।
तमास्कन्दाय सम्प्राप्तं जानन् शस्त्रभृतांवरः । रैच्छद्रणाय निर्गन्तुं निजभृत्यैस्तथोच्चलः ।
चोभे सम्प्रस्तुते तं स सान्त्वयित्वा खशाधिपः । तिष्ठन् कलशराजेन सहानिन्ये निजां सभां ।
निषेधाधायिनो भृत्यान्स विधूयौजसां निधिः । सज्जं खशसमाजं तं कोपकम्पाधरोऽविशत् । १२९०
द्रष्टुं तस्याशकत्कश्चित्कल्पान्तात्किमिवोल्बणं । क्रुद्धं कलशराजो वा राजा वा तेजसां निधिं ।
स विविक्तीकृतो धाम्नि खशाधीशं समन्त्रिणं । सान्त्वयन्तं महातेजाः कोपरूक्षाक्षरोऽब्रवीत् ।
पूर्व्वं दार्व्वाभिसारेऽभूद्भारद्वाजो नरो नृपः । नरवाहननामास्य सूनुः फुल्लमजीजनत् ।
स सार्थवाहनं तस्माच्चन्दनोऽभूत्सुतासुतौ । गोपालसिंहराजाख्यौ चन्दुराजोऽप्यवाप्तवान् ।
सङ्ग्रामात्मजः सिंहराजो दिद्दाख्यां तनयान्ददौ । क्ष्माभुजे क्षेमगुप्ताय सा वीरा भ्रातृनन्दनं । १२९५
राज्ये सङ्ग्रामराजाख्यं व्यधादुदयराजजं । भ्रातापि कान्तिराजोऽस्या जस्सराजमजीजनत् ।
पितानन्तस्य सङ्ग्रामो जस्सस्तन्वङ्गगुङ्गयोः । अनन्तः कलशक्ष्माभृद्गुङ्गान्मल्लोऽप्यजायत ।
कलशाद्धर्षदेवाद्या जाता मल्लात्तथा वयं । कोऽयमित्यादि तन्मन्दैः क्रमेऽस्मिन् कथ्यते कथं ।
पृथिव्यां वीरभोज्यायां क्रमो वा कोपजायते । वीरस्य च सहायोऽस्तु कः स्ववाहूदयात्परः ।
दिष्ट्या तदनुकम्प्यानां मूर्ध्नि हस्तमिवास्पृशन् । काश्मीरकाणां भूपानां नाभूवं कुलपांसनः । १३००
तस्माद्वृध्यध्व मे शक्तिमित्युक्त्वा निर्गतस्ततः । विजयाय स पत्तीनां शतेनानुगतोऽचलत् ।
निहतं शशमादाय तस्याग्रे कश्चिदाययौ । स तेन सुनिमित्तेन प्राप्तां मेने रिपुश्रियं ।
अरघट्टघरट्टादि क्षुष्टिमुत्सृज्य निर्गतः । डामरावाट्टदेवाद्यास्तं यान्तमुपतस्थिरे ।
कटकस्थस्य संग्रामपालस्यायातमन्तिकात् । तद्देव्या राजपुर्थ्यन्तः खिन्नं निन्युः प्रसन्नतां ।
भुक्त्वा तद्वसतेर्गच्छन् स्वावासं स दिनात्यये । सैन्यैः कलशराजस्य दत्तास्कन्दोऽभवद्बहिः । १३०५
राज्ञीभिर्निर्गमात्तस्मिन्द्वारं सम्बध्य वारिते । तदीयाः सैनिका युद्धे लोष्टावष्टादयो हताः ।
मध्यं प्रविश्य शमिते प्रधानैस्तत्र संयुगे । सोऽल्पसैन्योऽपि सम्वृत्तः सुतरामल्पसैनिकः ।
चैत्रस्य पौर्णमास्यन्तः कृच्छ्रमप्यनुभूतवान् । वैशाखासितपञ्चम्यां यात्रामत्रस्तधीर्व्यधात् ।
विसृज्य वङ्कदेवादीन्विश्वासाय स्ववर्त्मभिः । आललम्ब प्रवेशेच्छां क्रमराज्याध्वना स्वयं । १३१०
यं राजोदयसीहान्ते कपिलं क्षेमजात्मजं । अस्थापयत्लोहरोर्व्यां स विश्रब्धं मुमोच तं ।
स्वयमप्ये समयाणां खड्गचर्म्मधरोऽव्रजन् । पलायने पूर्व्वमिथ्यात्वर्णोत्थे तद्भटान् व्यधात् ।

बद्धा निःशङ्कमासीनं दारेशं सुज्जकाभिधं । कश्मीरानामिषाकाङ्क्षी चिप्रं श्येन इवापतत् ।
तं डामराश्च कतिचित् स्वामिकाश्वाद्रिसंश्रयाः । राजद्विषः प्राप्तमात्रं सर्व्वतः पर्य्यवारयन् ।
तमाकाशादिव स्रस्तं भुवोगर्भादिवोत्थितं । निशम्यातर्कितं प्राप्तं चकम्पे हर्षभूपतिः । १२१५
माभूदसौ बद्धमूलः क्रमराज्यान्तरस्थितिं । मासधीन्मण्डलेशस्य ध्यायन्नित्याकुलोऽथ सः ।
विलम्बमाने सन्नद्धसैनिके दण्डनायके । त्वरितं प्राहिणोत् पट्टं वितीर्णाशङ्कनायकं ।
दैवोपहतवीर्य्यो वा क्रान्तो वा द्रोहचिन्तया । अभ्यमित्रीणतां त्यक्त्वा स तु मार्गे व्यलम्बत ।
अन्यांश्च यान्यांस्तिलकराजादीन् व्यसृजन्नृपः । ते ते पट्टं समासाद्य नाकुर्व्वन्नग्रनिर्गमं ।
दण्डनायकमुख्येऽपि लोके राज्ञा विसर्जिते । याते विमूढतां प्राप बद्धमूलत्वमुच्चलः । १२२०
वराहमूलं प्रविशन्नागतां द्विषतान्तलात् । अस्वां सुलक्षणोपेतां राजलक्ष्मीमिवासदत् ।
महावराहमौलिस्रक्तस्य मूर्ध्नि पपात च । तदंसस्थितया पृथ्व्या वरणार्थमिवार्पिता ।
काकाद्यवैद्यकुलजैर्य्योधैस्संहृद्धपद्धतिः । स हुष्कपुरमुत्सृज्य क्रमराज्योन्मुखो ययौ ।
अत्रान्तरे तमायान्तमाकर्ण्याभिकमागतैः । विद्रवोन्मुखतां निन्ये डामरैर्मण्डलेश्वरः ।
तैर्हि प्रागेव भङ्गं स नीतो हत्वा महाभटान् । यशोराजमुखान्शूरान् ययौ मन्दप्रतापतां । १२२५
शनैरपसरन् सोऽथ तारमूलकमासदत् । उच्चलाधिष्ठितास्तेऽपि विद्विषस्तसमन्वयुः ।
समेता ननु सैन्येन तेन तत्र चिरं धृतः । उच्चलप्रलयाभ्रस्य पौरस्त्यानिलविभ्रमः ।
सैन्ययोरुभयोस्तत्र जयश्रीकरिणीकृते । बभूव तुल्यसंघर्षस्स्पर्द्धयोरिव दन्तिनोः ।
आनन्दनामाप्युत्पिञ्जोत्थानमुच्चलमातुलः । चक्रे मडवराज्येऽथ निविडीकृतडामरः ।
तद्विप्लवे डामरौघादिग्देशेभ्यः सहस्रशः । उन्ममज्जुर्हिमापाये रन्ध्रेभ्य इव षट्पदाः । १२३०
तत्क्षणं क्षीणभाग्यस्य यथा द्वारपतिस्तथा । कार्य्येष्वः कम्पने राज्ञः सहलोभूमहत्तमः ।
आनन्देन कृतास्कन्दो बङ्गशो विहिताहवः । औज्झीत् मडवराज्यं स नयत्तद्वक्षभूत्तदा ।
अथाद्भुतप्रतापेन वेष्टयित्वा महाचमूं । उच्चलेनाहवे बद्धस्ससैन्यो मण्डलेश्वरः ।
न विद्मः किं तदा वृत्तं योधानां यत्किलाविदन् । ते सखड्गाः ससन्नाहा बद्धावयमिति स्फुटं ।
तथा बद्धोऽपि निर्दध्यौ स भव्यः प्रभवे हितम् । स्वामिभक्तिर्विपर्य्येति पर्य्यन्तेऽपि न मानिनां । १२३५
तूर्णं पुरप्रवेशाय सोऽथ प्रैरयदुच्चलं । विश्वास्य नेदृगन्योऽस्ति चण इत्यमकृद्भुवन् ।
विशतस्तस्य चानेकैः पुरग्रामाद्यलुण्ठयत् । कर्म्मणानेन कौलीनमस्यास्त्विति विचिन्तयन् ।
परिहासपुरं तेन सततः सम्प्रवेशितः । स्वभ्राम्बुविषमाद्यस्माश्निगर्मोऽत्यन्तदुर्गमः ।
तत्रोच्चलं चतुःशाले स्वस्य दग्धुमचूचुदत् । निजान् स निशि ते तत्तु न चक्रुस्तद्धितैषिणः । १२४०
यथा चित्तं तथास्य स्यात्कायस्योत्साहसंक्रमः । तदात्मनिरपेक्षस्य किं न सिद्ध्येन्मनीषितं ।
क्लीवस्फुरन्नवपुस्त्वचा सह वसत्यच्छेद्यया कच्छपो निर्व्वर्मा रणकर्म्मसाहसमहोत्साहस्य सिंहः सदा ।
धिक् प्रादुष्कृतपक्षपातरभसो नीचेषु मुग्धोविधिर्वीराणां कुरुते शरीरमभितो वैकल्यशल्याहतं ।

सन्दिदेशाथ स श्वापमाकल्यायं मयायतः। शृगाल इव ते क्षिप्तः क्षिप्रं निर्गत्य बध्यतां।
ततः समस्तसामन्तसैन्यसन्ततिसंयुतः। अद्य मृत्युर्जयोवेति निश्चित्य निरगान्नृपः।
स प्राणसंशये सर्व्वायासप्रशममादिशत्। पटहोद्घोषणेनासीत्परैरनुगतोऽखिलैः। १२४५
प्राप्तं भरतसेतुं प्रान्तः सैन्यं विरोधिनं। आजानेयराजभृत्याः क्षणान्मार्गमलङ्घयन्।
क्षुभितेऽस्मिन्विवाघाते राजसैन्ये द्विषद्बलं। मण्डलेश्वरएवान्तः प्रविष्टो निरनाशयत्।
अयोचलबले भग्ने विदुद्रुः केऽपि जाङ्गिकाः। आप्ता राजविहारञ्च प्राविशन्केऽपि डामराः।
तिक्कसेनाभिधं दृष्ट्वा प्रविष्टं डामरं परे। उच्चलोऽसाविति भ्रान्त्या विहारं तमदाहयन्।
सोमपालाभिधेनारिहयारोहान्तरे चिरं। कुर्व्वन्दर्शनपालस्य पितृव्येन सहाहवं। १२५०
सल्लाङ्गनकचन्द्राद्यैर्भीमी व्यावर्तितो रणात्। परिहासपुरात्प्रायान्मृत्युवक्त्रादिवोच्चलः।
वितस्तां गौरिकावालग्रामात्तीर्त्वा हयान्वितः। स डामरैः सह पुनः प्रययौ तारमूलकं।
जयेन तावन्मात्रेण कितवोऽल्पइवोन्मदः। राजा प्रशंसन्नानन्दं राजधानीं न्यवर्त्तत।
जीवन्तमप्यरिं श्रुत्वा न पश्चादलगत्तु यत्। आसन्नुच्छ्वसितास्तेन भङ्गभाजोऽपि डामराः।
यातान् पलाय्य तान् ज्येष्ठामूलीये मासि सर्व्वतः। भूयोऽपि सङ्घटयितुं स्थिरधीरैच्छदुच्चलः। १२५५
स्वदेशमात्रसहायस्य परायत्तस्य मानिनः। दुर्भिक्षान्मर्म्मघाती योगः स तस्य विषमोऽभवत्।
तन्मध्येऽतिदरिद्रोऽपि सम्प्राप्तं स ररक्ष यत्। तमुत्पाद्यानयद्राजा श्रीपरीहासकेशवं।
तस्मिन्विघटिते पांसुः कपोतच्छदधूसरः। रोदसीच्छादनं हर्षशीर्षच्छेदावधि व्यधात्।
प्रागन्धकारदेशेऽस्मिन्दिवसेऽपि व्यजृम्भत। रूपिकादिवसालोक इति यत्पप्रथे जने।
निवेशिते परीहासकेशवे प्रशशाम तत्। तस्मिन्नुन्मूलिते भूयः सार्द्धं मासमजृम्भत। १२६०
किञ्चिदुच्छ्वसिते राज्ञि मन्दोद्रेकतया रिपोः। दिशा शूरपुरस्याथ सुस्सलः प्रत्यदृश्यत।
अवनाहे सहि वसन्नुपालम्भपरैः पितुः। सन्देशैः शंसतो ज्येष्ठमौदासीन्यादपाहृतः।
हृत्तान् कल्पचितीशेन कांश्चिदादाय वाजिनः। चिरेण राजदाक्षिण्यमौज्झीत्तेन व्यलम्भत।
आरम्भादुदयान्तञ्च तिष्ठन्वैरेऽपि निष्ठुरे। साम प्रयुयुजे मोहावहम्मायानिधी रिपोः।
जित्वा माणिक्यनामानं तेन सेनापतिं रणे। प्रापि शूरपुराद्भ्रंशाज्जयश्रीः श्रीश्च भूयसी। १२६५
तस्याभ्युदयघातस्य तया सम्प्राप्तया श्रिया। आरम्भसमयः हन्तः स विभूत्यङ्कुरोऽभवत्।
मण्डलेश्वरपट्टादीनविचिन्त्योच्चलस्ततः। प्राहिणोन्नृपतिर्योद्धुं सुस्सलं चित्रकारिणं।
तेन शूरपुरे भग्नास्तद्योधाः शौर्य्यशालिना। भूयांसः प्रलयम्प्रापुर्मग्ना वैतरणीजले।
तत्र दर्शनपालस्य स्वामिद्रोहहतो वपुः। विक्रामतोन संस्पृष्टं खिन्नयेव जयश्रिया।
राजसैन्यं तदन्येद्युर्हतशेषं पलायितं। लोकपुण्ये निवसतः सहेलस्यान्तिकं ययौ। २७०
सुस्सलापातकल्पान्तं विशङ्क्यापि सहेलकः। तैस्तैर्भग्नैर्बलैः साकं नगरं प्राविशत्ततः।
एवमभ्येत्य नृपतौ। सुस्सलेन विसूचिते। अवाप तारमूलस्थः प्रतिष्ठां पुनरुच्चलः।

विभ्यद्भिस्तुरगानीकाम् पत्तिप्रायैः स डामरैः। आनिन्ये शैलदुर्गेण भूयो लहरवर्त्मना।
राजाप्युदयराजाख्यं कृत्वा द्वारपतिं पुनः। प्राहिणोदुच्चलं जेतुं लहरं मण्डलेश्वरम्।
ततः पद्मपुरं प्राप्ते मातुले मल्लजन्मनोः। न कोऽपि कम्पनं भूपाज्जन्मी चाचातुरोऽग्रहीत्। ११७५
कोऽमेऽस्तीति त्रिनिश्वस्य वदतोऽथ महीपतेः। अधिकारस्रजं हस्ताच्चन्द्रराजः समाददे।
अमाश्रीः शयने मृत्युर्येषां तेषां सवंशजः। श्रीजिन्दुराजमुख्यानामौचित्यं प्रत्यपद्यत।
स द्रौणिरिव निर्नष्टे काले सेनापतिः कृतः। निर्गत्य तत्पद्मपुराद्रिसैन्यं न्यवारयत्।
विपक्षः कम्पनेशः स तेन क्षमां क्रमता शनैः। नवम्यां शुक्लनभसो हतोऽवन्तिपुरान्तरे।
स हि गोवर्द्धनधरोपान्ते कुर्व्वन्निराहवं। स्वसैन्यैर्वर्जितो गीतं शृण्वन् परिमितानुगः। ११८०
प्रविश्यारिहयारोहैर्वितस्तातीरवर्त्मना। प्राप्तोऽकस्माद्वधं लेभे प्रमत्तानां शुभं कुतः।
अहितं चन्द्रराजेन क्ष्मापतिर्वीक्ष्य तच्छिरः। भूयोजयाशामकरोदानुकूल्यं विदन्विधेः।
वैमुख्येन व्रजन् कुर्य्यात्साम्मुख्यैरन्तरा विधिः। प्रत्यागमभ्रमं सिंह इव व्यावृत्य वीक्षितैः।
अथ लब्धबलश्चन्द्रराजोऽमन्दोद्यमोऽविशत्। विजयक्षेत्रमाकर्षन् कटकं दशधाष्टधा।
तुलाधर इव स्रष्टा साम्यभङ्गं न चक्रमे। तदा द्वयोः कटकयोस्तुलायाः पुटयोरिव। ११८५
प्राप्ते यतस्तृतीयेऽस्मिन्दिवसे मण्डलेशितुः। अकालवृष्टिविवशं लहरे व्यद्रवद्बलम्।
शीतवातहता योधा मग्नाः केदारकर्दमे। तुरगासिननुन्नादि द्राक्तिर्य्यञ्च इवामुचन्।
उच्चलेन ततो रक्ष्यमाणमप्यार्द्रचेतसा। प्राप्तं जनकचन्द्राद्या निजघ्नुर्मण्डलेश्वरं।
हर्षभूभृद्भृत्यवर्गे द्रोहशङ्काङ्किते परं। कलेवरव्ययात्कीर्तिः क्रीता तेनैव मन्त्रिणा।
ध्रुवं संस्पर्धतो वन्द्या देवशर्म्मोदयोऽस्य ते। न चेत्कोऽपि विपर्य्यासे दोषमुद्घोषयेज्जनः। ११९०
लवन्योन्मूलनारातिव्यूहव्यामोहनादयः। विध्यधीने फले ध्याते स्तुत्याः कस्य न तत्क्रियाः।
किं पातालतमो न हन्ति हिमगुः किं नो विषं भीतये पानीयं गिलतः किमान्तरशिखिध्वस्तेन धाम्वम्बरिः।
सर्व्वत्रैकपदे प्रयात्यफलतां वाच्यो जडो नाम्बुधिः सिद्धेर्दैवविधेयतां विमृषतां स्तुत्यैव वस्तुज्ञता।
स्वामिहत्योद्यमस्तुत्यमूर्त्तिषु स्त्रीषु पूज्यतां। राज्ञा तज्जननी स्वस्य नमस्यन्त्यविशङ्किता।
साहसे साहितनये यत्र तत्र महीभुजा। प्रहीयमाणे तं स्नेहमोहिताह्वमभूभुजं।
अनन्यसन्ततेरेकं सुतमेतं प्रभोर्मम। मा नियुङ्क्था यत्र तत्र कार्य्ये सन्देहितासुनि। ११९५
स तामकथयन्मातर्यथा तेऽनन्यसन्ततेः। तथा मेऽनन्यभृत्यस्य स्वयमेकोऽवलम्बनं।
स्वसम्भाविष्यतो भर्त्तुर्भक्तिसम्भावनामसौ। प्राप्तप्रतिष्ठा निष्ठायां मेने मानवती सती।
उच्चलस्य क्षणे तस्मिन्हिरण्यपुरमीयुषः। राज्याभिषेकं सम्भूय तत्रत्या ब्राह्मणा ददुः।
नृपमत्यन्तविवशं प्रभञ्जे तत्र मन्त्रिणः। भूयांसः सन्ति तैः सार्द्धं व्रज तस्मात् हराचलं।
प्रजा एव ततः शान्तोत्कण्ठा नवनृपं प्रति। त्वामानेष्यन्ति नचिराद्विनैर्व्वा स्वयमेष्यसि। १२००
सोऽभ्यधादवरोधस्त्रीकोशसिंहासनाद्यहं। असामान्यं परित्यज्य गन्तुं सपदि नोत्सहे।

पुनस्तेऽकथयन्त्रातो यान्तोऽध्यारुह्य वाजिनः । पृष्ठे विन्यस्य नेष्यन्ति कोशान्तःपुरयोषितः ।

श्वपाकीकामुकोऽप्याशीयस्मिंस्तदपरोऽपि चेत् । सिंहासनं समारोहेत्काभिमानच्युतिस्ततः ।

आस्तामेतत्परं ब्रूथ मन्त्रमित्यथ चोदिताः । ते पार्थिवेन भूयोऽपि ससंरम्भं बभाषिरे ।

क्षत्रधर्मं पुरस्कृत्य शासतां क्ष्मां क्षमाभुजां । को सैन्यस्यावकाशः स्यादाशौर्य्यैषां मृधे वधः । १४०५

अनुयोगस्य लज्जा च भयं द्वैधस्य मन्त्रिणां । भूभुजां व्यसनोत्पाते शत्रवो ननु गोत्रिणः ।

कार्य्यं न पश्येदलसः स्वयं यो भृत्येषु विन्यस्तसमस्तकृत्यः । यस्याश्रयस्येव विनष्टदृष्टेः पदे पदे तस्य किलोपघातः ।

लक्ष्मीऽहमस्य स्वयमाप्तशस्त्रः स्वल्पस्य शत्रोः कलयन्नवज्ञां । एवं किलादीर्घमतिर्ददाति स्वयं प्रवृद्धिं त्रपया विमुग्धः ।

कालेन याति क्रिमितां महेन्द्रोमहेन्द्रभावं क्रिमिरप्युपैति । अयं प्रयोऽथानयमप्रतिष्ठ इत्येष निष्ठानुचितोऽभिमानः ।

पराभवाधायि भयं जिगीषोस्सर्व्वाङ्गवैकल्यवता हि तेन । येनाभियुक्तः स समस्तसम्पत्पूर्णोऽपि वैकल्यहतत्वमेति । १४१०

लब्धस्थितिः स्फीतविभूतिपात्रं दीनोऽभियोक्ता परपिण्डवृत्तिः । आद्ये कथं नाम पराभवः स्याद्द्वयं भवेच्चेह न तत्प्रभावः ।

अमात्यवैमत्यवशेन निष्ठा दृष्टा न कार्य्यस्य तनीयसोऽपि । वैशाखरज्जोरिव कर्षकाभ्यां पर्य्यायये।गेन कृते विकर्षे ।

समग्रशक्तेरेकेनाप्याशाक्रान्तस्य भूपतेः । वैरी सर्व्वाङ्गहीनोऽपि राज्यमायुश्च कर्षति ।

यत्र द्विषस्तत्र याहि क्रान्तां क्रान्ताश्च मेदिनीं । पातार्थी न चिरादेवं पुनर्जयमवाप्स्यसि ।

विधुरेऽपि विधौ शूरसहस्रपरिवारितैः । पतद्भिराहवे भूपैः ख्यात्याभिख्योपलभ्यते । १४१५

नृत्यच्छिन्नशिरोधराङ्कुरनटोञ्ज्वालावुवीणागुणप्रक्वाणिन्युरु यच्छतो मुखशिखिज्वालाप्रदीपाङ्कुरे ।

धन्यः कोऽप्युपलभ्य वीरशयने शान्ताभिमानज्वरोल्लाघश्लाघ्यशरीरता सफलितस्निग्धाशिषः शेरते ।

उदात्तमित्यं तत्कृत्यं सशिष्य कितवादिव । राज्ये भजन्ते दीव्यन्तः चचियास्तामहीनतां ।

मन्त्रान्तरानुयोकारं तदप्युत्सृज्य मन्त्रितं । पुरुषं प्राप्तकालञ्च ते निःश्वस्य तमब्रुवन् ।

उत्कर्षवदसंस्त्यक्तमपि शक्नोषि सङ्कटे । अन्यथानुचितं किञ्चित्प्राप्स्यस्यहितचिन्तितं ।

स तानुवाच स्वं हन्तुं न शक्तोऽहं ततोमयि । भवद्भिरेव विषमे प्रहर्त्तव्यमुपस्थिते । १४२०

गिरं कापुरुषस्येव क्लैव्यग्रस्तस्य तां प्रभोः । सबाष्पास्तेऽनुशोचन्तः पुनरेवं बभाषिरे ।

प्रतीकाराय नः शक्तिर्न चेद्देवहतौजसां । प्रत्युतैवंविधे कृत्ये प्रसरेयुः कराः कथम् ।

पशून् पुरुषरूपान् स नूनं भूभृत्पुपोष तान् । दुःखेनादाय नस्तस्य ये तादृग्दैन्यमीयुषः ।

युगान्तानपि जीवित्वा कायः सापाय एव वः । तत्त्यागमात्रसाध्येऽर्थे धिग्दैन्यमनुजीविनां ।

योषितोऽपि विशन्त्यग्निं यं ध्यात्वा विस्मृतिं व्रजेत् । भर्त्तस्नेहं स पुंसोऽपि यस्य कोऽन्यस्ततोऽधमः । १४२५

शैलूषस्येव ये शोकभयदैन्यादिविक्रियाः । भर्त्तुः पश्यन्ति तैरेषा भूस्तीर्थाप्यपावनी ।

क्षुत्क्षामस्तनयोवधूः परगृहप्रेष्यावसन्नः सुहृद्दुग्धा गौरशनाद्यभावविवशा हम्बारवोद्गारिणी ।

निष्पथ्यौ पितरावदूरमरणौ स्वामी द्विषन्निर्जितो दृष्टो येन परं न तस्य निरये भोक्तव्यमस्त्यप्रियं ।

भूयोऽपि मानुषपशून् स तान्नृपतिरब्रवीत् । तदात्वकृत्योऽप्याविश्य भूतैरिव विमोहितः ।

एतस्मिन् पश्चिमे काले भुक्तं राज्यं यथा मया । जाने विशालेक्षणतया तथान्यो नोपभोक्ष्यते ।

यमः कुवेरश्चोष्टाये राज्ञां तिष्ठत इत्यसो। मदेकशरणेवाभूत्ख्यातिरस्मिन् कलौ युगे। १४३०
रुद्रोपेन्द्रमहेन्द्राद्याः प्रयातारो यदध्वना। उपस्थितायां नियतो तस्य मर्त्यस्य काः शुचः।
किन्तु दूये यदेषा भूर्भूत्वा कुलवधूरिव। महोषाकूटचेटीव प्राप्ता प्रसभभोग्यतां।
इतः प्रभृति यः कश्चिद्राज्यस्यास्य गतोजसः। चक्रिकामात्रसाध्यत्वं जानन्नाशां करिष्यति।
अलौकिके कृते यद्यत्तदीक्ष्य फलवन्ध्यतां। प्राप्तोदयैरल्पसत्त्वैर्दर्पान्नूनं हसिष्यते।
कार्य्यारम्भः फलोल्लासमालोक्य प्रायशो जनैः। अनानुगुण्यगणनां कुर्व्वाणैर्न विगर्ह्यते। १४३५
पश्चात्तकारिरवलम्बनभूस्तनेन दुग्धेन यस्य मरणश्चियि कैरिवेत्थं।
पारक्षते मथनकर्म्मणि मन्दराद्रेर्दोषोऽर्प्यते विगुणहेतुपरीक्षणेन।
शास्त्रसन्दर्भविस्तीर्णेऽपि श्रीगर्भत्वमदर्शयं। जनोपजीवनार्थं यत्तज्जातं जाड्यसिद्धये।
उच्चलेनापि सत्कृत्ये हस्तायोच्छ्रयचेतसा। दर्शितश्यामदशनं करिष्यन्ते विडम्बनाः।
ततोऽवमानाञ्च भाषात्सम्प्राप्तोऽस्म्यविहस्ततां। स मन्थनेच्छुर्व्वाञ्छामि मृत्युमीदृशमप्यहं।
क्षैरेव महतो नोचेत्कलशस्मादसुधां हरेत्। लक्ष्मीं रक्षितुमिच्छामि ख्यातिमेतेन हेतुना। १४४०
मुक्ता पीडा पुरा राजा ज्वलित्वा मूर्ध्नि भूभुजां। कार्पण्यप्रलयं प्राप लब्धरन्ध्रो विरोधिभिः।
स ह्युत्तरापथे नानापथस्थगितसैनिकः। मितानुगो हितैरुद्धमार्गोऽभूद्दुर्गमेऽध्वनि।
तं शल्यो नाम सामन्यवैरल्यविवशं नृपः। रुद्धुं प्रतिज्ञामकरोद्राजिलचैर्द्वतोऽष्टभिः।
स सामप्रमुखोपायापायध्यानावसन्नधीः। भवस्वाम्यभिधं कृत्यमपृच्छन्मुख्यमन्त्रिणं।
असाध्यांशोऽपि निर्ध्याय विनिपातप्रतिक्रियां। न्याये निश्चित्य नैश्चल्यं कर्त्तव्ये प्रत्युवाच तम्। १४४५
उपाययुक्तिप्रत्युक्ते कृत्ये कीर्त्यभिमानिनां। निःसम्भ्रमेव प्रतिभा लोभेनाक्षोभिते हृदि।
कृत्यं कृत्यविदो लब्धप्रसिद्धिपरिरक्षणं। साम्राज्योपार्जनमुखो व्यापारस्त्वानुषङ्गिकः।
गच्छन् शरीरविच्छेदादपि भस्मावशेषतां। कर्पूरः सैारभेणेव जन्तुः ख्यात्यानुमीयते।
शान्तयोर्जीवितस्थानं द्वयमत्यद्भुतं द्वयोः। अनङ्गस्याङ्गनापाङ्गः स्तोत्रजिह्वा यशस्विनः।
ख्यातिसंरक्षणं नाम जन्तोः कल्पान्तरस्थितिः। वर्त्तन्ते कीर्त्तिकायस्य सम्पूर्णाः परमाणवः। १४५०
धीरैर्व्विधस्य निध्यायो विरोधिष्ववधानवान्। यस्तेषामुन्नतिधनध्वंसाय यततेऽन्वहं।
तुङ्गावपातनहठव्यसनी विधाता स्वोत्पत्तिपद्मकुलजेऽपि सरोजषण्डे।
सङ्कोचिनि द्विजपतावपि शुद्धिबन्ध्ये मातङ्गहस्तपतनैः कुरुतेऽवमानं।
ये हठापातिनो धातुरियं ख्यातिनिपातने। रक्षितुं समुपेक्षन्ते तैः किं नाम न रक्षितं।
जातिः क्ष्माभृति वंशजाश्रयतया ख्यातिप्रतिष्ठामिमामुद्दीप्यानलमुज्झितस्ववपुषः केऽप्यत्र वेत्राङ्कुराः।
त्रातुं हन्त विशन्ति येन विधिना कुब्जेन पृथ्वीभृता द्वारि द्वाःस्थकरैर्गतागतखलीकाराणि सम्प्रार्थिताः।
भोगान्निर्व्वाणभूयिष्ठान्निष्ठां प्राप्तामवेत्य तत्। प्रतिष्ठासौष्ठवत्राणे संरोद्धुं देव साम्प्रतं। १४५५
दण्डकालसकाशस्य तद्रोगस्याशुकारिणः। पार्थिवाकस्मिकोत्थानं मिषादन्यः प्रकाश्यतां।

श्वावकाश्यय कर्त्तव्यं व्यापत्प्रचपणचमं । उक्तेति स महामात्या निर्गत्य स्वगृहानगात् ।
दण्डकालसकं दण्डधरोव्यञ्जम्भिणाशनः । अधीर इव चक्रन्द लुठन्निष्पन्दलोचनः ।
स्वेदसम्बाहनस्नेहवमनाद्यैरुपक्रमैः । निःशेषितव्यथं तेन मुमूर्षुं तं जनोऽवदत् ।
ततो निश्चितमृत्युत्वं पत्युः कथयता कृतः । वह्निप्रवेशोऽमात्येन कृतज्ञत्वनिवेदकः । १४६०
कर्त्तव्यशेषं दाचिण्यादनाचचाणमप्यतः । युक्त्योक्तानिष्ठुराचारमन्त्रस्तुष्टाव तं नृपः ।
अप्रौढः सोढुमुद्दामां व्यथामस्मीति वादिना । राज्ञाप्यनलसाहृदं ततस्त्वकेऽभिमानिना ।
तेन प्राणानुपेक्ष्यैवमन्यख्यातेर्मनस्विना । ऊर्ध्वाधिरोहे सोपानं कृतं न निजकीर्तनात् ।
एवं दैवोपनीतानामख्यातीनां चिकीर्षितं । स्वधियामात्यबुद्ध्या वा पारमेति मनस्विनां ।
इत्युक्त्वा विरतो वंशबीजरचार्थमात्मजः । भोजो विसृज्यतां कोटमेवमूचेऽथ मन्त्रिभिः । १४६५
तं राजपुत्रं प्रस्थानमङ्गलान्ते विनिर्गतं । पुनर्व्यावर्त्तयामास दण्डनायकमोहितः ।
सा धीः स साहसारम्भस्तद्वैक्लव्यमापदि । नष्टमेकपदे तस्य नाशकाले ह्युपस्थिते ।
लक्ष्मीस्तडिल्लताकीर्तिवलाकाशौर्य्यगर्जितं । प्रतापशक्रचापश्च भागधेयाम्बुदानुगं ।
धी शौर्य्यादिगुणेन भाग्यसमये प्रागेव एको नृपः शक्रस्याक्रमणं क्रियेत न कुतोऽनेनेति सम्भाव्यते ।
मौग्ध्यं पङ्कजडान्धवच्च स ततो गच्छन्नभाग्योदये दत्तोऽनेन पदक्रमो भुवि कथं नामेति सञ्चिन्त्यते ।
विरोधिप्रतिबोधाय तन्निसैन्यं विसर्ज्जितं । नगरस्थमपि च्छापत्प्रवासधनमादधे । १४७०
दायादाश्रयणं राजभृत्याः सर्व्वेऽपि चक्रिरे । ये केचित्त्ववसन् गेहे तदेहैरेव केवलं ।
पराश्रयपरं हित्वा न सङ्कल्पमपि व्यधुः । किं वा स्तुतैस्तैर्थ्ये स्त्रीवदमुष्यदचिरादसून् ।
यां काणश्रावती नर्तक्यन्वये कापि नर्तकी । पुत्रीचक्रे कापि जातां जयमत्यभिधाच सा ।
भूत्वा गृहीतकौमारा तरुणुचलरागिणी । धनलुब्धावहुङ्कात्वमभजन्मण्डलेशितुः ।
तस्मिन् हते तदेवास्तापत्रपोच्चलमाययौ । तथैव दैवयोगेन पट्टदेव्या भविष्यते । १४७५
आवद्धपंक्तयस्त्वंचामुच्चलाश्रयिणीं व्यधुः । भूपालदर्शनेऽप्यस्तभीतयो राजसेवकाः ।
वेतनस्वीकृतैः सर्व्वैः शिवाधायी पुरस्कृतः । लोभावमानावुद्दोप्य योधश्रद्धां हरन् युधि ।
मन्दप्रतापतावाप्तो नर्म्मोक्त्या मर्म्मभेदकृत् । आहारादिचणे कर्त्ता प्रक्रियार्थनया कलेः ।
अतीव प्रभुदानादिमाहात्म्याख्यानकोविदः । एकएकोऽकरोद्योधः पृतनानां विलचणं ।
श्रीलेखाभ्रातृसूनोर्यस्तनयोर्व्यङ्गमङ्गलः । मल्लभ्रातोथकोपेन स राज्ञास्कन्द्य घातितः । १४८०
मातुलस्यात्मजा मल्लापत्ययोस्तस्य गेहिनी । श्वश्र्वा समं स्ववसतीरारोप्य दहने मृता ।
मौनव्रतातिनियमकृच्छ्रकार्य्यान्तकोपमः । करोत्यभ्यन्तरान् भिन्नान्मल्लः परमदाम्भिकः ।
तदेष पुत्रराज्येच्छुर्व्वध्यतां निर्भयं रिपुः । शाहिपुत्रीभिरित्यूचे तस्मिन्नवसरे नृपः ।
स्वयं प्रादात्समास्कन्दं द्वारि स्थितवता पुरः । तस्य प्राणार्थिनो वाञ्छापूर्त्यै मल्लस्य निर्ययौ ।
यद्वि देराज्यसंज्ञाभ्यां पुत्राभ्यां प्रार्थितोऽपि सन् । मुनिव्रतः सदाचारानुरोधाच्चात्यजन्नृपं । १४८५

विश्वासाय परं राज्ञो भ्रातॄन् राज्ञीर्भविष्यतः । द्वैमातुरान् सह्लणादीन्वीर्ये द्दत्यावसद् द्वे ।
आसेदुषे मुनिद्व्यामाजन्मप्रीणिताग्नये । तदा स तस्मै चुक्रोध प्रत्यासन्नवधो नृपः ।
स सुराभ्यर्चनं कुर्व्वन्नाक्रान्तः परिपन्थिभिः । रेजे तेनैव वेशेन समराय विनिर्गतः ।
उपवीत्यचलस्रग्वा कृपाणिदर्भोज्ज्वलाङ्गुलिः । भस्मस्मेरललाटाङ्को जामदग्न्य इवापरः ।
स्नानार्द्रधवलश्यामलोलधम्मिल्ललीलया । देहत्यागे प्रयागाम्बु धारयन्निव मूर्द्धनि । १४९०
उष्णीषी वीरपट्टेन खेटकेनोष्णवारणी । सोऽसिधारातीर्थपान्थो दण्डी खड्गेन दिद्युते ।
भोगे पुरस्कृताः केचित्तत्कृत्याः पूर्व्वनिर्गताः । अमर्त्यनारीभोगेऽपि तस्यासन्नग्रभागिनः ।
द्वौ रथावद्दविजयौ द्विजौ पौरोगवास्तथा । कोष्टकः सज्जकाख्यस्य योधा युद्धे हता बभुः ।
सतोऽप्युदयराजाख्यः ज्ञातायुः शेषसक्तया । प्राणैर्नियोगभागाजौ नाञ्जकोऽपि व्ययुज्यत ।
विरोधियोधैर्नीरन्ध्रं द्वारमालोक्य सर्व्वतः । त्यक्तकार्ष्यो ददौ झम्पां स तेषामेव मूर्द्धनि । १४९५
शैवलेष्विव खड्गेषु खेटकेष्वम्बुजेष्विव । जरसा धवलोऽभ्राम्यद्राजहंस इवाबभौ ।
क्षणाच्च ददृशे शातशरशङ्कुशताचितः । प्रवीरो वीरशयने सुप्तो भीष्म इवापरः ।
शाश्वत्कृतायुषो राज्ञः किं नाभूत्तस्य तादृशः । चिच्छेद यः शिरः पृष्ठे हयस्य भ्रमयन् स्वयात् ।
राज्ञी कुसुमलेखाख्या मल्लस्याशापत्रप्रभा । स्नेहव्यक्तां वीतिहोत्रे गात्राणि सत्कृते ।
राजावकल्पयोः पत्न्यौ बाले सल्हणरल्हयोः । कुषे मल्लस्याप्यसती सहजा चाग्निसाद्गते । १५००
सर्व्वोपभोगभागिन्यस्तदन्तःपुरयोषितां । परिवाराङ्गना वह्नौ षट् चाप्येव विपेदिरे ।
महास्त्रहाग्नितापेन शोकोष्णैस्त्र जलाम्बुभिः । तत्राश्मसौ वितस्तायास्तीरे वामे बभूव तत् ।
प्रवर्द्धितायाः स्तन्येन द्रष्टुमक्षमया पयः । दाह्यमानं निवापेषु पुत्र्याशान्त्याख्यया समं ।
धात्र्या परस्मिन् वैतस्मिंस्तीरे स्वान्तःपुरे स्थिता । माता भविष्यतो राज्ञो नन्दानिम्बकुलोद्भवा ।
महानसाग्निधूमेन संलक्ष्या वीक्ष्य पुत्रयोः । सोत्कण्ठकुटकौ सोधादुदग्दाचिर्णदिक्स्थयोः । १५०५
क्रियता दिवसैरेव पुत्रौ शत्रोः पितृद्विषः । जामदग्न्यायितं वंशे शशंसेति नृपतिं सती ।
अनिषण्णेव दीप्ताग्नौ गृहे स्वं निरदाहयत् । प्रनृत्यन्तीभिरालीभिरिव ज्वालाभिरावृता ।
बधं दर्शनपालस्तु नृपे प्राप्ते प्रतिक्षणं । अत्यद्भुतैरन्तरायैरायुःशेषेण रक्षितः ।
वर्षमात्रावशेषायुर्यदा द्रोहेण रक्षितः । सोऽवमानस्य पूयस्य रोगजस्य च भुक्तये ।
कृष्णभाद्रनवम्यां तं बधं श्रुतवतः पितुः । मल्लात्मजन्मनोः शोकः कोपेन निरधीयत । १५१०
आवश्निपुरकल्यामान् प्रज्वलन् क्रोधवह्निना । अधावद्विजयक्षेत्रं सोऽन्येद्युरथ सुस्सलः ।
योद्धुमस्यापतन्तन्तं चन्द्रराजोऽथ निर्गतः । पङ्कदर्शनपालाद्यैः ससैन्यैः पर्य्यवर्ज्यत ।
निर्जेतुपेचितस्यैके स चिरं तत्र दुष्करं । स्वल्पसैन्योऽपि सङ्ग्रामं भूरिसैन्येन सङ्गुणा ।
अक्षोटमल्लः समरे तत्र मल्लस्य चाचरिः । अगातां राजपुत्रौ द्वौ स्वर्गस्त्रीभोगभागितां ।
रजोन्धकारे स्वर्भेन्दुद्योतिन्यालिङ्गितो हतः । चन्द्रराजः सुरस्त्रीभिरिन्दुराजोऽस्य चानुगः । १५१५

तस्मिन्नपि हते वीरे चक्रे हर्षमहीभुजः। आधारविन्दिनीमूलकन्दनिर्दलनं विधिः।
पट्टादयः प्रविश्याथ विजयेशाङ्गणं भयात्। प्रविष्टे सुस्सले देवं द्वारं दत्तार्गलं व्यधुः।
आस्थानीयः परं पद्मनामा युद्धाद्धतो वशिः। लक्ष्मीधरोमर्तुमिच्छुर्वेश्मा नीतः स डामरैः।
विजयेश्वरगङ्गायसौधारूढोऽथ सुस्सलः। अधो ददर्श तान् सर्व्वान् पशूनिव भयाकुलान्।
धूर्त्तः स दत्तमध्यस्थो हस्तमानीतवान् पुनः। पङ्कदर्शनपालौ द्वौ तेषां पूर्व्वं निजान्तिकं। १५२०
निःश्रेण्यभावादारोढुमक्षमौ सुस्सलानुगैः। तौ मृताविव निर्व्वद्धपाणी रज्ज्वाधिरोपितौ।
तयोर्व्विदेशगमनं भीडाद् याचमानयोः। प्रतिश्रुत्याकरोच्छ्रीमान् सुस्सलोऽत्यानिमाञ्जनं।
स्निग्धोक्त्या भृष्टमांसादिभोगैस्तत्रायतस्तयोः। तस्मिन्नेवाह्नि मन्दत्वन्निर्देशेनात्युक्षमायये।
केनाप्यधिष्ठितस्यके परेद्युर्यत्स सुस्सलः। जाने विमत्सरोऽप्यङ्गं रोमाञ्चयति तत्स्मृतिः।
जातष्टो नृपतिर्हर्षभूभर्त्तुर्मातुलात्मजः। उमाधरमुखास्तस्यान्ये राजानो यत्र च त्रयः। १५२५
राजपुत्रहयारोहतन्त्रिसामन्तसन्ततेः। न यत्र गणनाः काश्चित्सैन्येष्वष्टादशस्वभूत्।
विजयेशाङ्गणस्थानां द्वारमुत्पाट्य सोऽविशत्। एकाश्वत्रान्तरं तेषां साभिराजेशवच्चवाक्।
स तत्र साचिव्यं कृत्वा चमावान्विजयेश्वरं। प्रतिश्रुत्याभयं तेभ्यः प्रणतेभ्यो विनिर्ययौ।
पुनः सौधाग्रमारूढस्तान् सर्व्वानर्पितायुधान्। रज्जुबद्धकरान् भृत्यैरानिनाय ततोऽन्तिकं।
स्वर्णरूप्यतन्त्ररत्नश्रेणिपूर्णायुधपरिष्कृता। कीर्णपुष्पोपकारेव सुस्सलास्थानभूरभूत्। १५३०
विन्यस्य पशुपालानां पशूनिव स तान् करे। संरक्षितं डामराणां त्र्यहं तत्राकरोत् स्थितिं।
ततः सुवर्णसानूरग्रामं संप्राप्य बन्धनात्। पङ्कदर्शनपालौ द्वावौत्सुक्याद्देशान्तरोन्मुखौ।
पङ्कः शूरपुरं प्राप्तो भार्य्यया गतया गृहात्। संस्पृष्टमानोऽप्यस्मार्षीद्व्यपसत्तो दिगन्तरं।
यावन्माचाप्यौचिती सा विदेशोन्मुख्यलक्षणा। द्रोग्धुर्दर्शनपालस्य पङ्कभैक्ष्याविलम्बिता।
अहंपूर्व्विकया राज्यञ्जिघृक्षुरथ सुस्सलः। नगराभादमादेक्कदभिसन्धातुमग्रजं। १५३५
समानप्रियवयसोः सर्व्वदोद्दामयोरभूत्। यस्माज्ज्येष्ठं कनिष्ठत्वं प्रक्रियारचितं तयोः।
दिवेष्वहस्सु यातेषु क्रामंस्तान्तां भुवं बली। उदतिष्ठद्राजधान्याः सविधादेव सुस्सलः।
निर्दग्धुं कलशाख्यं तत्प्रसूत भूपतेः सुतः। बुप्पापराभिधो भोजदेवो योद्धुं विनिर्ययौ।
आत्मवच्छत्रमानेन कुमाराणां प्रवृत्ततां। यो भाव्यर्थबलात्पित्रा हतौजा विदधे सदा।
हतो गत्यन्तराभावात्तदानीन्तु निरङ्कुशः। केषु केषु न युद्धेषु योधानामग्रणीरभूत्। १५४०
प्रपितामहतुल्यः स स्याद्येत्ताणेव वर्द्धितः। कुर्य्यादुत्साहसंपन्नो निर्दायादान किं द्विषः।
नानीतिविज्ञान कश्चित्प्रयोगस्तु विद्यीयते। अस्त्रविलभ्यते सर्व्वा श्रिय यत्नस्तु दुर्लभः।
स राजसूनुरुद्दामविक्रमस्य रिपोरभूत्। अत्युद्दामोऽधिकं जातस्तिमेरिव तिमिङ्गिलः।
हतप्रभावं पितरि प्रपन्ने विगर्हणां नार्हति तत्प्रसूतिः।
प्रस्थी भवेदेष्तितमुज्झ्यते किं तैलेन दत्तः कुसुमाधिवासः।

देवेश्वरात्मजः पित्र्यः पार्थिवेनाधिगौरवं । वर्द्धितोऽप्यभजत् पापः प्रतिपक्षसमाश्रयं । १५४५
ततस्तदात्मजो मल्लः प्रस्थिते सुस्सलाहवे । नृपेणार्थ्यमानस्य खेदात्तावद्दीक्षितः ।
आस्यस्याभ्यन्तरं राज्यमेत्युक्त्वा विनिर्गतः । खड्गधाराजलैर्मानी ग्लानिमक्षालयद्रणे ।
सर्वनाशाद्भूद्दुःखं तथा न हृदि भूपतेः । तदन्तरापरित्राणात्तत्तस्य यथाधिकं ।
विभवैर्नित्यसंमूढा जानते नान्तरं नृपाः । तदा भक्त्या यदा तेषां प्रलापैरेव सत्क्रिया ।
भोजेन निर्जितानीको विद्रुतः सुस्सलो रणात् । लवणोत्सवलाग्यागाद्दुर्दर्शितगतागतः । १५५०
प्रत्याहृत्तस्ततो भोजस्तीव्रातपकदर्थितः । उद्यानान्तस्तनुं तत्रे पित्रा सह मुञ्जर्जहौ ।
अथोऽन्तरेणादतिष्ठन्नादः पाराकृपीकसः । ज्यायान्मल्लात्मजः प्राप्तः सेतुराच्छिद्यतामिति ।
सुस्सलेन हृतं राज्यं नाधायामि द्रुतं यदि । स दण्डनायकेनाभूत्सन्दिष्टइति पापिना ।
अतो जवेन चाविक्षत्प्रथमद्यावधीन्मृधे । नरेन्द्रेश्वरदेवाग्रवर्त्तिनं देवनायकं ।
अथोऽज्जगाम स्वामस्थः सह व्यूहेन सादिनां । नगराधिकृतो नागस्तस्याग्राङ्कूरिसैनिकः । १५५५
यत्रास्थां पार्थिवोऽवध्नात् प्रधानपृतनान्विते । बभार नोच्चलाग्रज्ञां सुस्सलाहवनिर्गतः ।
अल्पसैन्यो मल्लसूनुर्यावत्तस्मादवप्लुत । अपनीतशिरस्त्राणस्तावत्स तमवन्दत ।
मण्डलेश्वरवत्तं मप्रियं शत्रोरविश्वसन् । शुम्भे स्ववेश्म याहीति स च पापस्तथाकरोत् ।
तस्य द्रोहफलं दृष्टमेतस्मिन्नेव जन्मनि । मण्डले यदनन्यस्मिन्निच्छितं जीवितं जहौ ।
ततो राजा सरित्तीरं प्राप्तः प्रैक्षत डामरान् । सेतवे श्यामविकृतान्दावदग्धान् द्रुमानिव । १५६०
बलचवारवाणस्य तेषां मध्ये वपुर्बभौ । परं जनकचन्द्रस्य शुक्रस्येव तमोऽन्तरे ।
महासेतुः स घटितो राज्ञा नौभिः स्वसिद्धये । पर्य्यवस्यन् विधिवशाच्छत्रूणां सिद्धये पुनः ।
अथारुरुक्षुरादाय वह्निं हर्म्यचतुष्किकां । मतद्वारे मर्त्तुकामा देव्याः शान्तिलतादिकाः ।
लोके विरक्तः सेतवे दायादैस्तत्र सङ्गरं । ददर्शाश्वयुजोनाग्निमिव निर्विक्रियः प्रभोः ।
विजये सावशेषेऽपि वह्निदानोद्यताः प्रियाः । अनिशं वारयन्राजा सेतवे रणमग्रहीत् । १५६५
अथ विन्यस्तवर्म्माणं राजसेनागजं शरैः । सेतोर्जनकचन्द्राद्याः प्रमुखस्थमताडयन् ।
स विद्धोमर्मसु शरैः पुत्कारोद्गारलङ्गजः । स्वचमूमेव चरणैरमृद्गाद्विमुखीकृतः ।
विधिनेव विदङ्गेन सिन्धुरेण कदर्थिता । अक्षयत्पत्तिहयारोहा समपद्यत वाहिनी ।
सेतुं तीर्णस्ततो वैरिसैनिकैर्व्विमुखीकृतः । मतद्वाराक्रमं चलः साश्वारोहोऽविशन्नृपः ।
तदा तु वेश्मरहितो रहोऽपि ददृशे न यः । भुञ्जानस्यापि यस्यास्य मुद्रा नैव व्यभाव्यत । १५७०
सभयद्विगुणाकीर्णखेदप्रस्विन्नविग्रहः । पुनः पुनः च्छिद्यमाणसस्तवर्म्मांसयोर्निजैः ।
अनवस्थितपार्श्वान्ताघातप्रचलितं हयं । शिरोऽङ्कुशसुभ्रमः कर्षन्नपत्वल्गापरं करं ।
खल्वाटशीर्षपर्य्यन्तलम्बिनीं कुन्तलच्छटां । प्रापयन् श्रवणोपान्तं करेण गलितासिना ।
लडत्प्रलम्बनिर्भूषश्रोत्रपालिलताच्छलात् । कालाहिनेव मूर्तेन वेष्टितोरुस्कन्धकन्धरः ।

निस्ताम्बूलतयोच्छुष्कौ जतुपीताविवाधरौ । ओष्ठावुल्लिप्तपङ्केन विक्लवो जिह्वया लिहन् ।  १५७५
कनीनिकासक्तरेणुक्षामधूसरमाननं । उत्तानीकृत्य पृष्ठस्थाः पश्यन्तीगममाः प्रियाः ।
परिभ्रमन्नङ्गनान्तः स्रस्तः स ददृशे जनैः । वह्निदानोद्यतांस्तांश्च वारयन् करसंज्ञया ।
मल्लराजस्य वेश्माभूद्राजधान्यन्तिकेऽपि यत् । तीर्त्वा जनकचन्द्रेण तत्र वह्निरदीयत ।
राजधान्युन्मुखं दृष्ट्वा ज्वलन्तं वह्निमागतं । भेजे पलायनं भोजो राज्यं निश्चित्य हारितं ।
स धूमैर्व्विद्विषां भीमैर्मण्डलैरिव तिरोहितं । द्वारं भित्त्वा तुरङ्गस्थः प्राङ्गनान्निर्ययौ बहिः ।  १५८०
पञ्चषैः सादिभिः सार्द्धं लोहरोन्मुख्यमाश्रितः । प्रतस्थे सेतुमुत्तीर्य्य सिंहराजमठाग्रगं ।
या तस्य दृक्पथात्सूनोः सानुरालोकयन्दिशं । राजाश्ववारैः सहितो वेश्मनां बहिरभ्रमीत् ।
अत्रान्तरे मर्त्तुकामास्त्रातुं काश्चिन्नृपाङ्गनाः । अश्मभिस्तत्परिजनैरभज्यत चतुष्किका ।
ग्राहिपुत्र्यस्तदा ज्ञात्वा शत्रवः पतिता इति । मत्वा चतुष्किकाग्रस्थे ततोऽग्निमुददीपयन् ।
वास्तव्या डामराश्चाथ घ्नन्तोऽन्योन्यमुदायुधाः । ज्वलतः क्ष्मापतिगृहाद्भाण्डागाराद्यलुण्ठयन् ।  १५८५
केचित्तत्र बधं प्रापुर्व्विपदं केच नात्यजन् । अदृष्टवस्तुसम्प्राप्तिः केषाञ्चिद्धास्यदाभवत् ।
सितेयं शर्करेत्येकः कर्पूरं वदनेऽक्षिपत् । ततः सरिति नक्ताण्डं निर्दग्धवदनोऽव्यधात् ।
पामरैः स्वर्णचित्राणि कैश्चित्स्वर्णग्रहेच्छया । विनिर्दग्धानि वासांसि विचित्य भस्म सादरान् ।
अविद्भुर्मौक्तिकस्तोमं सिततण्डुलविभ्रमात् । कचित्पामरनारीभिर्घरट्टेषु विचूर्णितः ।
वस्त्यदृश्ये देशेऽस्मिन् खलीकारेण तादृशा । एवं विडम्बिता लक्ष्मीर्न पुनः क्वापि दृश्यते ।  १५९०
विद्याधरीरिवोदात्तवेशाः क्ष्मापतिसुन्दरीः । हरन्तो डामराः क्रूरा दृश्यन्ते स्म पदे पदे ।
वसन्तलेखाप्रमुखाः सखुषास्तत्र चक्रिरे । निर्यातशेषाः स्वान्देहांस्ताः सप्तादशाग्निसात् ।
गृहाणां दह्यमानानामश्रूयत चटत्कृतिः । गाढोपकथमानाभ्रसिन्धुघोषप्रतीतिकृत् ।
श्रीपद्मश्रीप्रपापार्श्वस्थितस्तद्दीक्ष्य पार्थिवः । आर्षं श्लोकमिमं शोकात्स्मृत्वापाठीत्पुनःपुनः ।
प्रजापीडनसन्तापात्समुद्भूतो हुताशनः । राज्ञः कुलं श्रियं प्राणान्नादग्ध्वा विनिवर्त्तते ।  १५९५
दग्धाथ राजधानीत्यमुचलोडामरान्वितः । प्रत्यक्षसैन्यं वीक्ष्यारिं पारमवातरत्पुनः ।
ततो युद्ध्वा मर्त्तुमिच्छन्निन्ये राजा कुलात्मतां । उच्चावचैर्मतिद्वैधैः पदातीनां क्षणे क्षणे ।
गच्छन्ननन्तपालादिराजपुत्त्रधिया मृधं । दण्डनायकवाक्येन न्यषिध्यत पदे पदे ।
युध्यस्व लोहरं वापि याहीत्यूचे स चम्पकः । प्रयागस्योत्तरः पश्चः प्रत्यभाष्यायिमः पुनः ।
वार्त्तामबुद्ध्वा पुत्त्रस्य नृपतिर्व्याकुलीभवन् । पदवीं भोजदेवस्य याहीत्याह स्म चम्पकं ।  १६००
प्रयागमाचानुचरो राजन् संपत्स्यसे क्षणात् । तस्मात्त्वामपि मा त्याक्षीरित्यूचे तं स निःश्वसन् ।
सोऽन्तर्वाष्पस्तं बभाषे निर्द्रोहोऽसीति कथ्यते । त्वयाप्यस्मिन् क्षणे कस्मात्तस्मादुच्चार्यते वचः ।
विना पुत्रं न पश्यामि सार्केऽपि दिवसे दिशः । त्वं तस्मिन्नङ्गसंस्पृष्टे न मन्युं कर्त्तुमर्हसि ।
अस्मानिमित्तं कलहस्तेष्वेव दिवसेष्वभूत् । मन्त्रिणा राजपुत्त्रेण तेन तस्याभिमानिना ।

गिरा प्रभोरुपालब्धस्तदा गूरणगर्भया । स लज्जानम्रवदनो राजपुत्रानुयात्र्यगात् । १६०५

पञ्चाशताश्ववारैः स भ्रातृभृत्यादिभिः समं । उत्तीर्णः सरितः पारमात्मना पञ्चमोऽभवत् ।

भ्रातृदारेऽश्ववारे च शेषा राजात्मजे पथि । हताश्वे पतिते सोऽभूद्भुनकेनान्वितोभ्रमन् ।

अनाप्नुवन्राजसूनोर्व्वार्त्तां वा वर्त्मनाप्यटन् । गलितेऽहनि सम्प्राप वितस्तासिन्धुसङ्गमं ।

एवमाप्तान् परान् पुत्रमन्वेष्टुं प्राहिणोन्नृपः । अन्येऽपि तन्मिषं लब्ध्वा तस्य पार्श्वादवाचलन् ।

उत्कोचदायिना क्रुद्धं राजपुर्य्यादिविग्रहे । योग्या न संहता भृत्याग्निसारः कटकः हृतः । १६१०

लोहरप्रस्थितो विघ्नं राजपुत्रस्य कारितः । प्रवेशितः पुरं वैरी राजन्यन्याहवाकुले ।

सर्व्वस्वध्वंसिना येन स एव नृपतेरभूत् । तदाप्युचितकर्त्तव्यं निषण्णाद्दण्डनायकः ।

राज्ञः कृतघ्नावसन्नस्य शृण्वतोबहुमन्त्रितं । नैकत्र कृतिकर्त्तव्ये क्वाप्यधीरधियोऽभवन् ।

सर्व्वैर्यथा निखिलरन्ध्रमुखेन वंशः संपूरितो न खलु शब्दमपाकरोति ।

तैस्तैस्तथा बहुपथप्रचयेन मन्त्रः सङ्कल्पितः किल न निश्चयमभ्युपैति ।

भाग्यक्षयस्यैतदेव लक्षणं प्राकृतोऽपि यत् । अपृष्टः कथयेद्धार्ष्ट्यान्मन्त्रं स्वहृदयोचितं ।

त्रैलोक्यनाम्ना सूतेन शंसता दण्डनायकं । निरोध्य वल्गामित्यूचे भूयः स्वाम्यङ्गणोन्मुखः । १६१५

एकाङ्गैः साश्ववारैः प्राक् जिगाय त्वत्पितामहः । तद्गच्छामोऽक्षपटलोपान्तात्तत्संग्रहेच्छया ।

पदातिप्रायसैन्यांस्तान्निहन्मः संहतान्रिपून् । पश्चान्निपत्य तैः साकं श्येनादिव विहङ्गमान् ।

ततश्चिचलिषावेव राज्ञि तत्कटको दिशः । सद्यस्समुद्धतो रङ्गप्रेक्षिलोकइवागमत् ।

पारेवितस्तं प्राप्तेभ्यः पाथेयायात्मजन्मनः । सशस्य राजजन्मभ्यो रत्नग्रैवेयकाद्यदात् ।

आरामिकैस्तैः सम्प्राप्ते राजविघ्ने क्षणादिव । तेजःस्फारोर्जितो राजा गतश्रीर्ददृशे जनैः । १६२०

पदे पदे भज्यमानः सैन्योऽक्षपटलादिषु । स्थानेषु चाभ्रमीत्कश्चिन्न च तस्य पदान्तिकं ।

संश्रयार्थ्यथ बभ्राम सायं वेश्मानि मन्त्रिणां । प्रवेशं प्रददौ चास्य न कोऽपि द्वारि तस्थुषः ।

प्रायोपवेशकुशलाः शक्तास्त्वन्तेन कुत्रचित् । मिथ्यासम्भावनाभूमिर्भूपानां ब्रह्मबन्धवः ।

ये केऽपि देशे सन्त्यस्मिंस्तद्गेहेष्वास्थया भ्रमन् । प्रविविक्षुर्गृहान् प्राप कपिलाख्यस्य मन्त्रिणः ।

तस्मिंल्लोहरकोट्टस्थे तत्पत्न्या स्थातुमर्थितः । नैभिस्य कोट्टं गन्तुं न प्राविशद्दैवमोहितः । १६२५

आर्तस्य तस्य तत्पुत्रैः पितृवद्द्रोहकारिभिः । क्षणिकैरुत्तमर्णस्य स्वं निःस्वैरिव गोपितः ।

सदोषोऽस्मीति सोऽश्रौषीत् स्वयं शृण्वन्विगर्हणां । तदेव गोपिताशेषकृत्यो दुर्मन्त्रिभिः पुरा ।

गृहीतसर्व्वैर्नैराश्यः पार्श्वस्थेष्वप्यविश्वसन् । अभूत्प्रद्युम्नमुत्तीर्णो नितरां विरलानुगः ।

प्रख्यापयन्तः सम्भूतिं षट्त्रिंशतिकुलेषु ये । तेजस्विनो भास्वतोऽपि सहन्ते नोच्चकैः स्थितिं ।

तेऽप्यन्तेऽनन्तपालाद्या राजपुत्रास्तमत्यजन् । सार्द्रतां दधति ध्वान्ते स्थगिताश्वाः पदे पदे । १६३०

वाहनाज्जोहिल्लमठोपान्तं प्राप्यावतीर्णवान् । सदण्डनायकेनापि तत्यजे सोऽनुजन्मना ।

इहास्मच्छ्वशुरावासस्तत्र वस्तुमिदं निजं । वोढ्यते स्थानमेष्यामीत्युक्त्वा व्याजेन सोऽचलत् ।

यियासोरनुजं तस्य पाथेयार्थं प्रयागकः। यथाचेऽङ्गदमस्मै स प्रादात्सकूम्न तत् पुनः।<br>
एकांशुकावशेषश्रीस्ततो वा शेषजीवितः। प्रयागशेषानुचरो नृपतिः समपद्यत।<br>
सूदस्यम्पकभृत्यस्य जेलकाख्यस्य तत्क्षणं। मुक्तो नामान्तिकं प्राप्तोनृपतेराप्ततामगात्। १६३५<br>
भद्दीपविहितैः खातैरग्रे दुःसञ्चरा क्षितिः। भ्राम्यतस्तानुवाचेति नारी काचिद्गृहान्तरात्।<br>
ततस्तीरे वितस्ताया निषण्णेऽस्मिन् प्रयागकः। गन्तुं जयपुरं कोट्टमाजुहाव स नाविकाम्।<br>
स हि प्राक्संविदं चक्रे तच्चत्यैः सह शस्त्रिभिः। नृपं प्रेयाश्रयं नेतुं भीमादेवस्य मन्दिरं।<br>
उच्चलार्थिणाप्यूचे भीमादेवेन येन सः। राज्ञोऽनुगो गमिष्यामि प्रविष्टस्योपवेशनं।<br>
नौचरैराहृतां नावमारुरोह न भूपतिः। नाशोन्मुखः समासन्नदृष्टिपातभयाकुलः। १६४०

पर्य्यापतत्कालकरस्थभोगिसन्दर्शनेनेव मतिप्रदीपः।<br>
क्षिप्रं प्रशान्त्युन्मुखतामुपैति विनाशकालेषु शरीरभाजां।

तस्मिन्द्रोहसुभिक्षेऽपि यस्य मानवतः परं। अनन्यालोकिनी दृष्टिर्भेजे कुलवधूव्रतं।<br>
नीलाश्वीयः स बिम्बाख्यो डामरामिलितो स्थितैः। तदापि प्रययौ राज्ञो विस्तृतिं संश्रयार्थिनः।<br>
युगलकं ॥ ततः प्रावर्त्तत त्यक्तुं वारि वारिमुचां गणः। क्षमामिव क्षालयितुं द्रोहस्पर्शेन दूषितां।<br>
भूर्निर्जना दृष्टिपाततमिस्रा दुःसहायिता। वैरिभीतिरिति प्राभूत्किङ्किं तस्य न दुःखदं। १६४५<br>
इति वृत्तानुरोधेन धिक् दुष्कर्म्मविधायिनां। अस्मर्तव्यमपि व्यक्तं नाम याहिष्यतेऽधुना।<br>
सोमानन्दाभिधानस्य पूज्याः सिद्धस्य देवताः। सोमेश्वराभिधाः सन्ति काश्चित्पिहवनान्तरे।<br>
तत्राश्रितांगना तुङ्गतरुप्रच्छन्नवाटिका। अभूच्छिन्नाभिधानस्य कुटी क्षुद्रतपस्विनः।<br>
वारस्त्रिया मविरहभुजङ्गीति प्रसिद्धया। भिस्साख्यया समं भेजे चेष्टितं कुट्टिनोचितं।<br>
तस्य प्रतापगौरीश देवागारान्तिकस्थिते। कुण्डी मुक्तेन तां निन्ये क्षामाह्वदस्तुं सतां क्षमं। १६५०<br>
मुक्तमालम्ब्य नृपतिस्तमालम्ब्य प्रयागकः। यान्ति स्म विद्युद्योतेन क्षमां पश्यन्तोऽन्तरान्तराः।<br>
निरुष्णीषोऽङ्गसंसक्तस्यूतवासाः स्खलन्नृपः। सतां प्रयागमुक्ताभ्यां कथञ्चित्प्रापितः कुटीं।<br>
तदा कुमन्त्रिनिष्कृष्ट सव्यापद्द्वारणक्षमं। शोचम् सस्मार कन्दर्परुद्रं दैत्यमिवोत्पलः।<br>
प्राकारमूर्ध्ना मुक्तेन प्रविष्टेन कृतार्गलां। नृपः कुटीप्राङ्गनोर्व्यां विवेशास्थिततापसां।<br>
विशतोऽस्मच्चतः पादस्तस्यासृग्दक्षिणोऽत्यजत्। मेने तेनानिमित्तेन स मृत्युं समुपस्थितं। १६५५<br>
कुट्यामर्गलरुद्धायां निषण्णस्याङ्गने यथा। रात्रिर्भीतिमतो भीमा तस्य घोराभ्रमालिनी।<br>
पङ्कोपलिप्तः पङ्काङ्कस्थण्डिलस्थो निनाय तां। दासकम्बलिकाच्छन्नगात्रोऽष्टाचुसरां निशां।<br>
विसस्माराऽन्तरा दुःखमासीनप्रचलायितैः। निर्निद्रस्त्वभवच्छ्वासाङ्ग्रयन्निव समाकुलः।<br>
कोऽहं केनाभिभूतोऽद्य क वर्त्ते कोऽनुगोऽधुना। किङ्कृत्यमिति निर्ध्याय मुहुर्मुहुरकम्पत।<br>
हृतं राज्यं प्रिया दग्धा भ्रष्टा स्वगुरबान्धवः। जातोऽस्म्येकाकपाथेयोलुठन् भिक्षाभुजोऽङ्गने। १६६०<br>
इत्येकैकस्य निर्ध्याय दुःखं नैच्छिष्ट सोऽपरं। प्राप्तावसानं शोचन्तमात्मतुल्यं कथास्वपि।

युग्मं ॥ भोजस्तु वाजिभिर्द्वित्रैरवशिष्टैः समं व्रजन् । हस्तिकर्णान्तरं प्राप निर्गत्य नगरान्तरात् ।
व्रजतस्तस्य धीरासीन्नियतं पञ्चषैर्दिनैः । पुनः सम्प्राप्स्यते राज्यं यदीन्द्रोऽपि भवेद्रिपुः ।
गर्भवास इव पौरुषे स्फुरन् किञ्च कर्म पुरुषश्चिकीर्षति ।
कर्म वायुरिव संस्पृशन् हठान्मूढमेव कुरुते तु तं विधिः ।
मातृभिर्दत्तपाथेयं भृत्यं नागेश्वराभिधं । प्रतीक्षमाणश्चक्रे स रङ्गवाटान्तरस्थितिं । १६६५
शून्ये देवगृहे तत्र तिष्ठन् श्रुत्वा तमागतं । स निर्ययौ तेन तस्मिंस्त्रिःशङ्कं प्रहृतं पुनः ।
तत्र प्रादुष्कृतद्रोहे क्षत्रधर्मादविच्युतः । राजपुत्त्रः स यच्चक्रे न तत्कस्याद्भुतावहं ।
स सिंहइव संहारं कृत्वा युधि विरोधिनां । असृगङ्गरागलिप्ताङ्गो वीरशय्यामभूषयत् ।
भ्रातास्य मातुलापत्यं विपेदे पद्मकाभिधः । खेलोल्लालितवच्चैव सद्योऽसह्यपराक्रमः ।
मठं सूर्य्यमतीदेव्याः शर्व्वर्य्यामुच्चलोऽविशत् । भ्राताप्यस्य रणश्रान्तो लवणोत्सात्समाययौ । १६७०
हतं भोजं श्रुतवतोर्हर्षमात्रे स्थिते तयोः । मनस्युत्खातशूलेऽग्निरिवैका पर्य्यशिश्यत ।
प्राप्तमप्राप्तवद्राज्यं तथापि प्रत्यभात्तयोः । प्रवासे विस्मृते राज्यं सुखे लब्धे च कुत्रचित् ।
प्राज्ञे कुतश्चिदानीतो मुकेनाविश्य तापसः । प्रणम्य नृपतिं चक्रे स्वकुटीं तां निरर्गलां ।
तां दंशमशकाकीर्णामास्तीर्णतृणविष्टरां । कृतानुमेकां मुकेन नृपतिः प्राविशत्कुटीं ।
यद्गिरा शङ्कमानोऽभूच्छ्रुतया भूभुजामपि । स भूभृच्चाटुकारित्वं भीतोभिक्षाभुजोऽप्यगात् । १६७५
भिक्षाकस्योचितोग्राम्यमनुदात्तं त्रपावहं । आलापव्यवहाराभ्यां तस्य शृण्वन् स विव्यथे ।
स भिक्षाकः प्रयागेण विक्रियायाधरांशुकं । निजं दत्वा विससृजे विपणिं भोज्यसिद्धये ।
कदुक्तिः कटुवागग्रे परोक्षं भेदभीतिकृत् । कुतापसो दौःस्थ्यहेतुर्नृपस्यारिर्यथाप्यभूत् ।
मध्याह्ने स्कन्धविन्यस्तभोज्यभाण्डकरण्डिका । तपस्विन्याप्यथानिन्ये तेन क्षुद्रतपस्विना ।
भृत्यभिक्षाकयोः पूर्व्वं स्थित्या श्रप्यय पार्थिवः । स्वं वीक्ष्य गोचरीभूतं निराशो जीविते ऽभवत् । १६८०
तेन प्रयागोपहृतं भोज्यं तदनुरोधतः । स्पृष्टमेव न भुक्तन्तु तीव्रदुःखोल्बणात्मना ।
का वार्त्तेति प्रयागेण प्राज्ञमस्थेन पृष्टया । तापस्या ग्राम्यया मुक्तो व्यक्तभोजो वधस्ततः ।
मिथ्यैतदिति तेनार्द्धकथ्यमानोऽपि पार्थिवः । श्रुतिं तामशुभशकुनं परीक्ष्याबुद्ध नान्यथा ।
नारोहति गिरं शत्रोर्गप्रियाख्यायिनोऽपि यत् । तस्य सम्बद्धते दुःखं निमग्नस्य तदापदि ।
स शोचन्नात्मजं बाल्ये नीत्यै यां यन्त्रणां व्यधात् । आजन्मदुःखदायित्वं मेने तस्यात्मनस्तया । १६८५
हतः स समरे तृष्णा प्रवीरस्पृहणीयया । यच्च तेनातिवात्सल्यादङ्कशायीव घातितः ।
गात्रेषु हारान् पुत्रस्य यौवनव्यूढवक्षसि । पश्यन्नात्मनि सङ्कल्पैर्व्विक्लवः सोऽकृताशिषः ।
रक्षणीयो हतो बालो हद्धस्त्वेवं स्वजीवितं । रक्षाम्यनुचिताचारैर्जिह्रीयेति स चिन्तयन् ।
एवं स पुत्त्रशोकेन धृतावाच्यव्यथोव्ययन् । निनाय तापसावासे द्वितीयामपि यामिनीं ।
कृतार्थनः प्रयागेण प्रयातुं भगवन्मठं । शोकहारितधीराज्ञौ न सङ्कल्पमपि व्यधात् । १६९०

लम्बेन्दुवदनं सान्द्रावश्यायोम्भोऽश्रुवर्षिणी । रथाङ्गाक्रन्दिनी रात्रिः सशोकेवाथ सागमत् ।
क्षुत्पिपासापरिक्षामं प्रभुं वीक्ष्य स तापसः । प्रार्थ्यते स्म प्रयागेण प्रातर्भोक्तव्यसिद्धये ।
उपसिन्ध्ये विनिर्गत्य प्रविष्टस्तापसस्तयोः । सव्यञ्जनान्नपूर्णे द्वे पात्रे सद्दीक्षणात्पुरः ।
कस्यापि गृहिणो यागोत्सवादेते मया हृते । तस्मिन्नित्युक्तवत्यूचे विनिश्वस्य प्रयागकः ।
राजन् स्वामिवियोगेऽस्मिन् पश्य लोकस्य सुस्थतां । स तां जगाद विहसन् किं मूढ इव भाषसे । १६९५
योगतो गतएवासौ तस्त्वत्या नापरः क्षतः । सर्व्वो निजसुखापेक्षी न किञ्चित्कोऽपि शोचति ।
लोकैकचक्षुषि गते परलोकमर्के लोकः स्वपित्यखिलएव सुखं गृहेषु ।
कोऽन्यो विचिन्तयितुमर्हति विश्रमेत तिष्ठेन्मया विरहमेत्य कथं किलेति ।
पुत्त्रस्य स्नेहविश्वासः पूर्व्वमाप्तक्षये श्रुते । यथैकः प्रभवेन्नायुस्तथा स्नेहोऽपि देहिनः ।
अहमेव हतं पुत्त्रं श्रुत्वा जीवितजीविनं । तिष्ठामि स्वस्थवद्यत्र तत्रान्यो निन्द्यतां कथं ।
इत्युक्त्वा विरते राज्ञि पुनर्गूढं प्रयागकः । प्रैरयत्तापसं भोज्यं कर्त्तुं ते भाजने त्यजन् । १७००
स्वास्तनव्ययशिष्टं मे पर्याप्तं नास्ति वेतनं । यते तथापीत्युक्त्वा स सखेद इव निर्ययौ ।
गोप्यं रहस्यभणितमत्यल्पहृदयातिथि । अस्तं पारतमिव नाल्पसत्त्वैस्सुदुर्जरं ।
कुल्यो मनोरथो नाम विप्रस्य वनवासिनः । सुहृत्तपस्विनस्तस्य तां कथामुपलब्धवान् ।
राज्ञः सन्दर्श्य दायादं भवावो भूतिभाजने । इत्युक्त्वा तेन निन्ये स दोग्धृतां क्षुद्रतापसः ।
जज्ञे भृत्येन गर्भेण जातः सोऽन्येन केनचित् । सदृशं यत्सदसतोर्ज्ञापकं जन्मकर्मणोः । १७०५
इल्लाराजस्तां प्रवृत्तिं बुद्ध्वा ताभ्यां न्यवेदयत् । उच्चलाय समादिक्षत्कार्ये तत्र तमेव सः ।
केचित्तु भूरि भिक्षाख्यमिल्लाराजोपसर्पणे । कायस्थं कारणं प्राहुस्तयोस्तापसविप्रयोः ।
वार्त्ता चेदत्रगीतेयं सुवज्ञोऽत्र सङ्कुले । काले तत्कृत्यपादस्य तस्यैव द्रोहमुख्यता ।
श्वपाकस्कन्धमारूढो लब्ध्वा तास्ता विमाननाः । विपेदे यत्सकारायां युक्तं तत्तस्य कर्म्मणः ।
क्षुत्तप्तो हर्षदेवस्तु प्रयागेणार्थितोऽसकृत् । प्रत्यग्रे पुत्त्रशोकेऽपि भोजनायाकरोन्मनः । १७१०
गृहीतभोजनं जानन् प्राप्तं प्राप्तं स तापसं । तमोरेर्व्वहिरैक्षिष्ट नीडाभ्यर्णशुरिवाण्डजः ।
अपश्यच्च कुटीं कृत्स्नां वेष्टितामेत्य शस्त्रिभिः । शुश्राव चाक्रन्दद्वाराद्दार्य्यमाणार्गलाध्वनिं ।
जातं जातं ततो द्रोहमज्ञानात्तापसाधमं । सशस्त्रिणं मुक्तभेहीत्याक्रयन्तं व्यलोकयत् ।
मुक्तं विसृज्य कृत्वा च द्वारमुद्घाटितारररिः । त्यक्तभीराददे लध्वीं क्षुरिकामन्तिकस्थितां ।
एकस्तत्सविधं क्रूरस्साहसाहंक्रियोन्मदः । आरुरोहाथ कृष्टासिधनुः कवचितो भटः । १७१५
तं राजा सङ्कटकुटी रुद्धायाभोऽप्यपातयत् । क्षितौ व्यायामकुशलो नावधीत्कृपया पुनः ।
पतितेन हतेनार्थो वराकेणामुना न मे । इत्यूचे दुरहङ्कारग्रस्तस्तस्मिन्नपि क्षणे ।
नीध्रमुत्पाट्य निपतन्नेकोऽन्योऽप्युत्पतन् भटः । भयाक्रान्तौ न्यपततां तं विलोक्योद्यतायुधं ।
पृष्ठे पूर्व्वं प्रविष्टस्य तिष्ठन् स्थानकनिष्ठुरः । स हराब्रिव चामुण्डा रेजे दण्डाहतिः क्षणं ।

स सिंहनादैर्गौ भेरीतूर्य्यघोषैर्मवोन्मदैः। शस्त्रशब्दैः स शुशुभे भूपस्यान्तचणे रणः। १७२०
आखोर्भाण्डप्रवेशस्य विडाला इव डामराः। परं प्रवेशितास्तस्य निःशब्दं शस्त्रिणः कुटीं।
अथान्यो नीध्रमार्गेण सम्प्रविष्टः प्रयागकं। हत्वा दोष्णि च शीर्षे च राजानं समुपाद्रवत्।
राज्ञः प्रहरतः शस्त्रं वञ्चयित्वा स शस्त्रभृत्। वचसि चुरिकाघातद्वयं प्रादात्कृतत्वरः।
वर्णान्महेश्वरेत्येतान् द्विरुक्त्वा गतजीवितः। पपात निहतो भूमौ छिन्नमूल इव द्रुमः।
पलाय्य संप्रविशतो योगयशौरस्य यादृशः। चक्रवर्त्त्यपि स प्राप वधं वेश्मनि तादृशं। १७२५
नान्यः सदृव कालेऽस्मिन्दृशे भूतिमान्नृपः। गर्ह्यंनिर्हरणत्वञ्च तस्यैवान्यस्य नेचितं।
यदेकेनैव संग्रामवैमुख्येनोन्नतात्मनः। सर्वप्रकारं सुभगं माहात्म्यं तस्य खण्डितं।
नेयबुद्धित्वमेवासीदथ तातस्य दूषणम्। सर्वक्लेशावहा दोषाः कृत्स्नास्तन्मन्त्रिणां पुनः।
द्वाचत्वारिंशतः साष्टमासा यस्य वयः समाः। स शुक्लभाद्रपञ्चम्यां हतोऽब्दे सप्तसप्तते।
राजा दुर्य्योधनद्व स्ववंशच्छेदमिच्छता। सोऽभूज्जातकयोगेन कारितः स्वकुलचयं। १७३०
तस्यासीत् च्मार्कजौ जीवबुधौ शुक्रोष्णगू शशी। तनयामित्रजामित्रखेषु कर्कटजन्मनः।
चन्द्रदैत्येज्यपापेषु स्वमदात्मजगेषु यत्। आङ्गः सुसंहिताकाराः कौरवादीन् कुलान्तकान्।
निर्ब्रह्मण्यजनः कृत्स्नो देशेऽस्मिन् वैरिणोऽन्तिकं। दस्योरिव शिरश्छित्वा स्वामिनोऽपि निनाय तत्।
तस्योत्तमाङ्गे भूभर्तुश्छिद्यमाने ससागरा। चकम्पे भूर्निरभ्रापि द्यौर्वृष्टिं महतीं जहौ।
तन्मुण्डे लगुडारूढे यदयुक्तं जनोव्यधात्। अभूत्तेनाभिशापेन सोऽग्रे दीर्घोपसर्गभाक्। १७३५
मण्डले देवविम्बानां यथामुष्मिन् विपाटनं। तथा सवं प्रवृत्ते भूपतेर्मुण्डखण्डनं।
नैचिष्ट तच्छिरः प्राप्तमौचित्याद्दुच्चलो नृपः। भूत्वा चिरमुदयस्तु कारयामास वह्निसात्।
धिक्कष्टं तस्करस्येव तादृशस्य चक्रवर्त्तिनः। नोच्चलाद्यां विना प्राप्ता शरीरेणान्त्यसत्क्रिया।
भृत्यत्यक्तोमष्टवंशो गौरकाख्येन केनचित्। स काष्ठागारिणा चक्रे नग्नो नाथ इवाग्निसात्।
दोर्घौ हर्षनृपोदन्तः सोऽयं कोऽप्यद्भुतावहः। रामायणस्य नियतं प्रकारो भारतस्य वा। १७४०
भाग्याम्बुवाहतडितस्तरलाः श्रियस्तास्तत्त्वावसानविरसं प्रसभोन्नतत्वं।
तत्रापि नैष वत मोहहताशयानां शान्तिं प्रयाति विभवानुभवाभिमानः।
तावत्यप्यवरोधिकापरिकरे नैकापि चक्रन्द तं तावत्यप्यनुगेऽधुनानुसृतवान् कोप्यास्त तीर्थेन वा।
लोकस्य स्वसुखोपलिप्तमनसो वीच्येति निःस्नेहतां निर्वेदं समुपेत्य नाश्रयति धिक् स्वान्तं वनान्ते रतिं।
नादौ किञ्चिद्भवति नियतं यच्च पश्चान्न किञ्चिन्मध्ये कस्मात्सपदि घटयन्दौरस्थ्यदौरस्थ्यानुरोधं।
निःशीर्षाश्मिन्नट इव मुहुः कोऽपि जन्तुर्न्नटित्वा नो जानीमो भवजवनिकान्तर्हितः क्व प्रयाति।
श्रीसातवाहनकुले कृतकान्तराजवंशे त्यजन्त्युदयराजकुले प्रतिष्ठां।
षट्कं सुरैर्विरहितं जहती हिमाद्रेर्दिव्ये तटे सुरगिरेरिव वासरश्रीः।

इति श्रीकाश्मीरिकमहामात्यचम्पकप्रभुसूनोः कह्लणस्य कवेः कृतौ राजतरङ्गिण्यां सप्तमस्तरङ्गः समाप्तः ॥
समाष्ट नवतावस्यां व्यहोनायां महीभुजः । षडश्वोदयराजस्य वंशे जाताः प्रकीर्त्तिताः ।
राजानः ॥ ६ ॥ श्लोकाः ॥ १७३२ ॥



## ॥ अष्टमस्तरङ्गः ॥



प्रौढाः कञ्चुकिनो जरद्गववपुः कुब्जस्तुषारद्युतिर्नित्याप्तोऽपि बहिष्कृतः परिकरस्तोऽयं समस्तोऽप्यहो ।
अर्धाङ्गे दयितीकृता भगवता चारित्रचर्य्याविदा सा भिक्षाटुरितं चराचरगुरोरन्तःपुरं पार्व्वती ।
उच्चलकोपप्रसादोऽभूत्कञ्चित्कालं नवो नृपः । प्राङ्मन्थादिव पाथोधिरव्यञ्जितविषामृतः ।
सोदर्यो डामरौघस्य तस्याभूतां भृशोन्मदौ । मेघस्येव पुरो वातावग्रहौ स्फूर्तिहारिणौ ।
यत्किञ्चनविधाय्यासीज्ज्ञाता यद्यौवनोन्मदः । राज्ञो दुष्प्रक्रिया दौःस्थ्यकरी वात्सल्यशालिनः ।
सोऽनिशं हि गजारूढो विकोषासिः परिभ्रमन् । आत्तसारां महीं पीतरसां रविरिवाकरोत् । ५
एकीभूतानमून्सर्व्वान् डामरान्निर्दहाग्निना । इत्युक्तं तेन नोर्वीभृत्तल्लैकार्थ्यावधोऽग्रहीत् ।
दस्यवो मन्त्रिसामन्तादिराज्येच्छुः सहोदरः । भूर्निष्कोषेत्यभूत्किं न भूपतेस्तस्य सङ्कटं ।
अधिराज्याभिषेकेण सत्कृत्य भ्रातरं ततः । पातुं लोहरसंबद्धं प्राहिणोन्मण्डलान्तरं ।
द्विरदायुधपत्त्यश्वकोषामात्यादि स भजन् । निनाय सर्व्वं वात्सल्यादनिषिद्धोऽग्रजन्मना ।
आशङ्क्य कोटभृत्येभ्यः प्रवेशे प्रत्यवस्थितिं । तत्कर्षजं प्रतापाख्यं सह निन्येऽग्रवोच ताम् । १०
कुर्याममुं नृपमहं प्रातिहार्य्यं समाचरन् । सखाः स्वभृत्यवत्तस्थुर्भूभुजो भूम्यनन्तराः ।
दिनानि सप्त संरुद्धे मार्गे तदनुयायिनां । गायनः कनकोलक्ष्यान्तरोदेशान्तरं ययौ ।
वाराणस्यां विजहता निर्व्वेदात्तेन जीवितं । हर्षभूभर्तृभृत्येषु व्यक्तं निन्ये कृतज्ञता ।
ऊर्ध्वाधिरोहं दाक्षिण्याद्दस्यूनामुच्चलः पुनः । सेवास्तत्या सुधीः सेहे चन्दनो भोगिनामिव ।
तथा जनकचन्द्रेण दर्पाद्यवहृतं तदा । राजान्ये डामरास्त्रासन् यथा नष्टप्रभा इव । १५
अभयस्यौरसा भर्तुस्तनयायामजीजनत् । राज्ञ्यां विभवमत्यां यं भोजो हर्षनृपात्मजः ।
जातं मृतद्वित्रिपुत्रानन्तरं गुरुभिः शिशुं । आयुष्कामैस्तमावद्धाभव्यभिक्षाचराभिधं ।
शुल्कमप्यरिसन्तानतन्तुलेशाप्रियोचितं । ररक्ष तद्गिरा राजा राज्ञ्यास्याङ्के समार्पयत् ।
तिलकं ॥ तमादाय स्वयं वासौ यावद्राज्येऽकरोन्मनः । तावदभारेङ्गितज्ञो नीतिकौटिल्यमुच्चलः ।

तुष्टोत्साहाशसहिष्णुत्वादस्मै कुप्यत डामरा:। एष एवातिसत्काराद्यद्दास्तुविप्रदाश्रय:। २०
इति सञ्चिन्त्य स द्वारदित्सां तस्योदघोषयत्। यथाविकारं प्रययुर्भीमादेवादयोऽखिला:।
तेषां तस्य च मात्सर्य्यं यदापर्य्याप्तिमाययौ। तदान्योन्याश्रिता भृत्या: पणं चक्रुर्युयुत्सव:।
दिदृक्षु: क्ष्मापतिस्तेषां सेतुपृष्ठे रणं मिथ:। वार्य्यमाणोऽपि सचिवैरारुरोह चतुष्किकां।
द्वन्द्वयुद्धे प्रवृत्ते तु डामरैरुभयाश्रितै:। अथ प्रारभताकस्मात्संरब्धैर्दारुणो रण:।
सेत्वत्ययाध्वना युद्धे लग्ने राज्ञि सरित्तटात्। योधा जनकचन्द्रस्य शरवर्षमवाकिरन्। २५
याच्ञ: शरा: ससीत्कारास्ते स्पृष्टनृपविग्रहा:। मग्नास्तम्भेष्वदृश्यन्त कोपेनेव प्रकम्पिन:।
आकृष्य दोर्भ्यां भूपालं बलादिव ततोऽनुगा:। प्रविष्टं मण्डपद्वारं चक्रिरे निहतार्गलं।
शस्त्रञ्जनकचन्द्राद्या भीमादेवादयोऽपि ते। चतुष्किकायां चक्रुषुस्ततोऽन्योन्यं जिघांसव:।
तुमुले तत्र शस्त्राङ्गं भीमादेवानुगोऽभिनत्। तीक्ष्णेन जनकचन्द्रस्य कालपाशात्मजोऽर्जुन:।
स वीक्ष्य स्वं क्षतं द्रोहं प्रयुक्तं भूभुजा विदन्। पादप्रहाराद्दिदघे क्रोधाद्द्वारि नृपौकस:। ३०
अभेद्ये तत्र संत्रासात् स्थानद्रोण्युत्तरं गतं। अधावत्कृष्टशस्त्रीको भीमादेवो जिघांसया।
स्तम्भच्छन्नस्तद्विलोक्य तद्गेहगणनापति:। मध्यं जनकचन्द्रस्य कृपाणेन द्विधा व्यधात्।
तस्मिन् हते तदनुजौ गग्गसङ्घौ प्रधावितौ। स एव करवालेनालक्षिते ऽकृत विक्षतौ।
अवभज्य तरुं वज्र: सुचिरं नावतिष्ठते। उदयकर्मा च पुमान्निहत्यात्युन्नतं रिपुं।
स हि द्विभाद्रे तत्राब्दे हर्षाब्दाद्दादनन्तरं। अन्यूनानतिरिक्तैर्यत्त्रिभि: पक्षैरहन्यत। ३५
यद्दोपकर्त्तुरप्येष द्रोहं यत्स्वामिनो व्यधात्। औत्कंठ्यात्पाप्मनस्तस्य क्षिप्रमेव क्षयं ययौ।
शान्तस्तोषे कोपशोकावाविष्कुर्व्वति क्षत्रिमौ। भीमादेव: पलायिष्ट गग्गस्तु व्यश्वसीन्नृपे।
प्रहिते लोहरं गग्गेऽच्छमुत्साघयितुं क्षतं। त्रस्तास्तेन व्यसृज्यन्त स्वोर्व्वीरन्येऽपि डामरा:।
उपयापक्षतै: प्राप्तराज्यं दस्युभिरुज्झितं। एवं शनैरवष्टम्भं भेजे भूपतिरुच्चल:।
तेनाथ लब्धस्थैर्य्येण दिनैरेव जिगीषुणा। त्याजिता: क्रमराज्यान्तद्दयसैन्यादि डामरा:। ४०
ततो मडवराज्यं स प्रस्थितो विप्रियप्रियान्। डामरान् कालियमुखान् बद्ध्वा शूले व्यपादयन्।
द्वाराजोऽपि बलवांस्तेन क्रान्तचिति: क्रमात्। बलैर्नगरएवोग्रैरवस्कन्देन घातित:।
प्राग्जन्मप्रेमसंस्कारादन्तरज्ञतयाथवा। तस्य पुत्त्र इव प्रीतिर्गग्ग एव व्यवर्द्धत।
न सेहे नाममात्रं य: कण्टकानां प्रियप्रजा:। नृपो गग्गाय चुक्रोध सापराधं न कुचचित्।
राज्यारम्भेऽनुयुक्तेन भीमादेवेन धीमता। उक्तं शुभावहे क्षिप्रे दे स मन्त्रवदस्मरत्। ४५
एकया लोकवार्त्तार्थं प्राक्कात्प्रभृति निर्गत:। वहिरुद्दिश्य वाह्यालीरचारीदादिनक्षयं।
अन्यायोत्थानशीलेन श्रुत्वा नामापि वैरिण:। अर्धरात्रेऽपि याचाभिस्तेनाक्ष्यत विप्लव:।
तस्यैवालुप्तधैर्य्यस्य राज्ञां मध्ये मनस्विन:। कार्मण्योपहतं वृत्तं न प्राभूदमलीमसं।
अद्योज्ज्वल सदाचारजाह्नवीजलमज्जना। कुनृपोदीरणोद्भूता गिर: पाप्मापनेष्यते।

तेनानुपचिताङ्गेन प्रायशो विनिवारिताः। अनूनेणैव सद्वृत्तिध्वंसिनो ध्वान्तसंश्रयाः। ५०
प्रायोपविष्टसमये देहत्यागप्रतिज्ञया। निर्बद्धया प्रत्यवेक्षां धर्म्माध्यक्षानकारयत्।
निशम्य कृपणस्यान्तं क्रन्दितं तदनिष्टकृत्। बभूव तस्य स्वात्मापि मानिनाथो महात्मनः।
कार्प्यिणो यस्य वा दोषाद्धत्ताक्रन्दितमुच्चयैः। तस्य स्वशान्स्वाक्रन्दैस्तस्मिन् क्रुद्धे शशाम तत्।
अबलानुग्रहव्यग्रे तस्मिन् राजनि सर्व्वतः। वास्तव्यावलिनस्तस्युरबलास्त्वधिकारिणः।
सोऽश्वैनैकश्चरन् राजेत्यज्ञात्वा कथितं जनैः। यं यं स्वदोषमश्रौषीत्तं तं त्वरितमत्यजत्। ५५
येन केनापि सम्प्राप्तः प्राप्त्युपायेन पार्थिवः। अमोघदर्शनः सोऽभूत्कल्पद्रुव इवार्थिनां।
सुधावर्षी प्रियालापप्रीतिदायजनप्रियः। नायकस्त्वेककांस्त्यक्तुं विश्रम्भभवनेष्वपि।
स्वाढ्यः श्रमैः प्रतिकलं तस्य सेवाविधायिभिः। प्राप्नन्ति चतुरान् वारान् क्षणदास्वपि दर्शनं।
सेव्यमानः सदाचिन्त्यः क्षणेनैव फलप्रदः। कस्यैन्द्रजालिकैस्तः शाखीव न बभूव सः।
वास्तव्यानां निशम्यार्तिं तेन दैन्यनिवारणं। चक्रे पित्रेव पुत्राणां सन्ध्यंतरकर्म्मणा। ६०
स्वसञ्चितानि स्वर्णानि विक्रीणानोऽल्पवेतनैः। दुर्भिक्षमुद्गतावेव जघान जनवत्सलः।
निवार्य्य चौर्य्याचरणात्कृपार्द्रस्तस्करानपि। कोशाध्यक्षान् स विदधच्चकाराग्रजीविकाम्।
कस्मिन्निभाग्यः स्वेनैत्या विपदः कस्य मण्डले। इतोऽन्विष्यन् सदैकैकं चारैश्चिन्तापरोऽभवत्।
तस्य काऽप्यर्थनैस्पृह्यं नाम कोऽपि महान् गुणः। अनुषक्तो गुणैस्तैस्तैराश्रः पल्लवितोऽभवत्।
स स्थित्यै दण्डयन्दण्ड्यानघाक्षेपभयाद्धनं। तेषां नादत्त सत्कर्माशुद्धये तांस्त्वकारयत्। ६५
प्रस्तुतस्यार्थिने दातुं वस्तु तस्यैकसङ्ख्यया। सहस्रसङ्ख्यया दानश्रद्धागात्पूर्णतां यदि।
श्रूयतेऽर्थी यथा मह्यं देहि देहीति गां वदन्। तथास्मै देहि देहीति वदन् दाता स शुश्रुवे।
अनुदातुं चिरकालं क्षोणसङ्ख्यं न सत्कृतं। नेत्यदूतादिनीतार्द्धं न तद्दत्तमदृश्यत।
उत्सवे दैन्यविक्षेपे रञ्जने कार्य्यसाधने। आलेख्यलीनशाखीव नाधो लभ्यफलोऽभवत्।
उत्सवे शिवरात्र्यादौ जनतां सोऽसिचद्धनैः। ग्रहयोगे पयःपूरैर्मेघेन्द्र इव मेदिनीं। ७०
ताम्बूलदानव्यसनं पराध्यात्मवता तथा। नाभूद्धर्षनृपस्यापि तादृक् तस्यास्त यादृशी।
लोष्टमात्रावशेषेऽपि लब्धे नृपपदे व्यधात्। स दानविभ्रमांस्तान् ये धनदेनापि दुष्कराः।
निर्माणलोठनैर्धाम्नामजस्रं वाजिनां क्रयैः। काश्मीरकोऽपि चक्रे स न मृत्तस्करसाद्धनं।
अध्वन्यध्वनि योगेन प्राणविन्यासनैस्तथा। बभूव सर्व्वकृत्यज्ञः सोऽन्तरात्मेव देहिनां।
भागावाजोषितान् विप्रा भैषज्यं व्याधिपीडिताः। वेतनं वृत्तिहीनाश्च तस्मात्समुपलेभिरे। ७५
पिञ्छोपरागकेलादि दुर्निमित्तोपमार्तिषु। गोसहस्राश्वहेमादिसम्भवैः सोऽभजद्द्विजान्।
नन्दिक्षेत्रे पुरं कृत्स्नं दग्धमुत्पातवह्निना। पूर्व्वाधिकगुणं तेन नवं राज्ये व्यधीयत।
श्रीचक्रधारयोगेशस्वयम्भूत्थानयोजनं। जीर्णोद्धृतिव्यसनिना कृतं तेन सुकर्म्मणा।
हर्षदेवेन यो निन्ये श्रीपरीहासकेशवः। परिहासपुरे तं स नवं नरपतिर्व्यधात्

प्रागर्जितश्रुकावल्या भूपितो हर्षनीतया। तेन त्रिभुवनस्वामी निर्लोभेन महीभुजा। ८०
जयापीडाहृतं हर्षोत्पाटने सृष्टमग्निना। सिंहासनं नवं चक्रे स्वराज्यककुदं नृपः।
लब्ध्वा तदङ्काध्यारोहं भर्त्तुः प्रेम्णातिदुर्लभं। सामान्ययापि देवीत्वं जयमत्या न दूषितं।
सा स्वानुवंश्यमाधुर्य्यत्यागसत्प्रियतानयैः। अलब्धा तु परित्राणमुख्यैर्भर्त्याभवद्गुणैः।
लब्धभूपालवाल्लभ्या नार्य्यः क्रोधात्प्रजाक्षयं। रचयन्तीव भङ्गाय लावण्यललिता अपि।
प्रियप्रजस्यायमन्यो गुणः सर्व्वगुणाग्रणीः। उच्चलक्ष्मापतेरासीदर्थनैस्पृह्यशालिनः। ८५
जिघांसवः पापकामाः परस्वादायिनश्च ताः। रक्षांस्यधिकृता नाम तेभ्यो रक्षेदिमाः प्रजाः।
तेनेतिहासिनीं नीतिं श्रद्दधानेन सर्व्वदा। येन सम्पठता श्लोकं कायस्थोद्दर्जनं कृतं।
यत्ते विषूचिकाशूलसंन्यासेभ्यः किलेतरे। ग्रन्थाशुकारिणो विश्वं प्रजा रोगानियोगिनः।
पितरं कर्कटो हन्ति मातरं हन्ति पुत्त्रिका। हन्ति सर्व्वन्तु कायस्थः कृतघ्नः प्राप्तसम्भवः।
गुणान् समर्थ्य स्फुरता येनैवोत्पाद्यते शठः। वेताल इव कायस्थस्तमेवाहन्ति हेलया। ९०
विपद्धेतोर्नियोगी च यदेवाश्रित्य वर्त्तते। चित्रं करोति तस्यैव स्थानस्यानतिगम्यतां।
येन ते क्ष्माभुजा मानक्षतिकार्य्यनिवारणैः। काराप्रवेशैश्च खलाः श्रमं नीताः पदे पदे।
कार्य्यान्निवार्य्य बङ्गशः सहेलस्याप्यहेतुमान्। भङ्गास्तृणमयं वासः कारायां पर्य्यधापयत्।
सकार्य्यवेषं हास्याय सभायां वरणोचितं। अकारयद्भूतिभिश्च धावनं डोम्बयोधवत्।
स प्रांशुर्वेष्टितश्मश्रुरुष्णीषेणोत्पालन् पुनः। शूलहस्तः सजानूरुः केषामासीन्न हास्यकृत्। ९५
स शीर्षदशनं साम्यवादवेश्या विटान्वितं। प्रियवेश्यं कश्चिदयेऽनृतनं यमकारयत्।
बद्धान्यं शकटे नग्नं चुरलूनार्द्धमस्तकं। अकारयत्स्तटान्यस्तचीनपिष्टकृटाङ्कितं।
ते कुम्भवादनैर्मुण्डमण्डनैश्चाङ्किताभिधाः। नियोगिनो भज्यमानाः सर्व्वतः ख्यातिमाययुः।
काव्यभ्रष्टाभ्रलिप्तचीणवस्त्रावगुण्ठनाः। सर्व्वार्थिनो व्यभाव्यन्त केऽप्यटन्तः प्रतिव्रजं।
वृथावृद्धासुखप्राप्यं पाण्डित्यं भूर्जवत्परे। मत्वा बाला इवाचार्य्यगृहे प्रारेभिरे श्रुतं। १००
केऽप्युच्चैरट्टभिक्षाकाः सादरं स्तोत्रपाठिनः। कृतानुपाठाः स्वापत्यैः प्राहे लोकमहासयन्।
माता स्वसा सुता भार्य्या स्वापि केरप्यकार्य्यत। सामजं सेवनं कार्य्यप्राप्तैः सुरतसेवया।
जातकस्वप्रश्नकेन स्वलक्षणनिरीक्षणं। कारयद्भिः शुनैरन्यैर्गणकाः परिखेदिताः।
पिशाचा इव शुष्कास्या रुक्षश्मश्रुकचाः कृशाः। बद्धाः परैर्व्यभाव्यन्त शृङ्खलामुखराङ्घ्रयः।
नृपेण कार्थिणां दर्पलिङ्गनाशे विपाटिते। अन्तर्ज्योतिःपरिश्रामचमत्वं समजायत। १०५
भारतस्तवराजादिस्तोत्रपाठमशिश्रयन्। ते दुर्गोत्तारिणीविद्याजनंशोदस्तलोचनः।
इत्थं दैःस्थ्योदये दीर्घे मज्जन्तो नित्यदुर्जनाः। नस्त्रिवाजनि कायस्थाव्यलोक्यन्त पदे पदे।
भिन्नसन्धानभूर्य्यर्थदानभोज्यादिढौकनैः। नहि मोहयितुं शक्ताः प्राज्ञं तं तेन राजवत्।
तान् प्रजाकण्टकान् पुष्टान् कृतधीरकृतानिमं। तैतैः शुचिभिरध्यक्षैः सविश्रामीश्वरोऽवशान्।

भूतेशस्य यथा पुरी कृतवसुस्पृष्टा तदाशावलात्मुषः स्वां श्रियमाससाद सहसा तद्वत्समस्तामिमां ।
त्वं कायस्थकुटुम्बिकृतसचिवप्रायाश्च पश्चात्तनीलीठासुचलदेवनिर्वृतिसुखस्थित्या पुरीं स्वां क्रियाः । ११०
शिवरात्र्युत्सवे श्लोकममुं शिवरथाभिधः । विद्वान् पठंस्तेन हठात्सर्व्वाध्यक्षो व्यधीयत ।
व्यवहारानभिज्ञोऽपि कश्चित्कालमदीदृशत् । शुचित्वादार्य्यभाजः स क्रमन् कृतयुगस्थितिं ।
शीघ्रदण्डत्वमुच्चण्डतेजसस्तस्य भूपतेः । क्रूरानुद्दिश्य कायस्थान् धीमन्तश्चैकमन्यत ।
नहि क्षुद्रस्वकायस्थपिशाचाविष्टवैरिणां । शंसन्त्यन्तरितं दण्डं दण्डनीतिविशारदाः ।
चिरेण दण्डिताश्चैते कुर्य्युर्दण्डधराद्ध्रुवं । लब्धान्तराः प्राणहरं कष्टं किञ्चित्प्रमाद्यतः । ११५
दण्ड्यानान्दण्ड्यमानानां पुत्रस्त्रीमित्रबान्धवाः । राज्ञां विचारशीलेन न तेनोपद्रुताः क्वचित् ।
कर्णजपांश्चाष्टधरप्रमुखांस्तेन दुःखदैः । कर्म्मभिः क्षिपताद्यापि पैशुन्यस्य खिलीकृताः ।
विस्मृतिं लब्धराज्यानां पूर्व्वसङ्कल्पवासनाः । प्रयान्ति प्राप्तजन्मनां गर्भवासस्पृहा इव ।
प्राग्राज्याधिगमात्किञ्चित्तदसद्यश्चिन्तयत् । राज्ये तच्च विसस्मार जातिस्मरइवोच्चलः ।
ददर्श शनोरद्रोहान् यान् द्रोग्धृन् वा पुरानुगात् । कर्त्तव्यानुगुणं तेषां प्रतिपत्तिमदर्शयत् । १२०
स्मरेन्नोपपतिः पूर्व्वपतिद्रोहं कुयोषितः । पूर्व्वस्वाम्यरितां चास्य कुभृत्यस्योद्धुरो जडः ।
शेषाहिदेहान्मेदिन्या समं प्रज्ञापि राज्यभृत् । तस्मिन् परिणता नूनं कृत्याकृत्यविवेकरि ।
तथाह्येकस्य वणिजो व्यवहर्त्तुस्स सोऽभवत् । विवादे संशयं छिन्दन्नेवं स्थेयाद्यगोचरे ।
सोऽष्टदाह्रकसद्भावे व्यापदोपचिकं धनी । न्यासीचकार दीनारलक्षं कोऽपि वणिग्गृहे ।
तेनोपयुज्यमाना च व्ययेषु वणिजः करात् । कियत्यपि गृहीताभूदनुमासान्तरान्तरा । १२५
त्रिंशद्विंशत्सु यातासु समासु न्यासधारिणं । गृहीतशेषं दातुं स धनं प्रार्थयताथ तं ।
वणिक् तु कृतघ्नी तस्य न्यासन्यासाय सोद्यमः । कालापहारमकरोत्तैस्तैः कलुषधीर्मिषैः ।
स्रोतोभिर्व्यस्तमम्भोधौ लभ्यं मेघमुखैः पयः । प्राप्तिर्भूयास्तु नाद्यैव वणिक्कोशास्य वस्तुनः ।
तैलस्निग्धमुखः स्वल्पालापाम्हदाकृतिर्भवन् । न्यासन्यासविवादोपो वणिक् व्याघ्राद्विशिष्यते ।
विवादे श्रेष्ठिना शाठ्यं स्मितैः प्राक् सभ्यदर्शनैः । सुखं सुखं शायमानं प्राणान्तेऽपि न मुच्यते । १३०
निसर्गवञ्चका वेश्याः कायस्थोऽपि वरो वणिक् । गुरूपदेशोपस्कारैर्विशिष्टाः सविषाशिवाः ।
चन्दनाङ्कालिके श्वेतांशुके धूपाधिवासिनि । विश्वस्तः स्वात्किराटेभ्यो विप्रकृष्टेष्वनापदः ।
ललाटदृक्कचश्रोत्रहृद्वद्धसचन्दनः । पञ्चविन्दुर्वृश्चिक इव क्षणात्प्राणान्तकृद्वणिक् ।
पाण्डुश्यामोऽग्निधूमार्द्रैः स्वच्छास्यो गहनोदरः । तुम्बीफलोपमः श्रेष्ठी रक्तं मांसञ्च कर्षति ।
सोऽथ निःशेषितमिषः क्रुद्धो निर्बन्धकारिणः । गणनापत्रिकां तस्याः सभ्रूभङ्गमदर्शयत् । १३५
यदादौ श्रेयस इति न्यस्तमश्रेयसे पदं । भ्रातरेस्त्वत्यये सेतोर्गृहीता घटसुधालया ।
छिन्नोपानत्कशासन्धि शतं चर्मकृतेऽर्पितं । विपादिका कृते दास्या नीतं पञ्चाशतो घृतं ।
स्फोटने भाण्डभारस्य क्रन्दत्याः कृपयार्पितं । कुलालया वङ्गः पश्य भूर्जे लग्नं शतत्रयं ।

शिशुभ्योऽस्य विडालस्य क्रीताः पोषाय मूषिकाः। त्वया शतेन वात्सल्यात्पट्टान्मत्यैरसस्तथा।
चरणोद्वर्त्तनं सर्पिः शालिचूर्णस्य सप्तभिः। क्रीतं शतैः आद्रूपचस्थाने च घृतमाक्षिकं। ८०
नीतं चौद्राद्र्कं का सा या माया दम्भकेण ते। सोऽव्यक्तजिह्वः किं वेत्ति वक्तुं लग्नं शतं ततः।
म्रक्षणोत्पाटको भिक्षाचरस्ते इव याचकः। यो वारितो युद्धपटुस्तस्मै दत्तं शतत्रयं।
आनीतं भद्रपादानां मध्यं सर्व्वव्ययोपरि। शतं शतद्वयं धूपगन्धामूलपलाण्डुषु।
इत्याद्यचिन्तता युक्ता परिहार्य्य व्ययानसौ। तस्यैकीकृत्य गणनां लाभेऽपि शनकैर्व्यधात्।
वर्षमासग्रहतिथिप्रत्याहन्तिः पुनः पुनः। संसारमेव तस्यान्ते न यथौ गर्त्तिताङ्गुलेः। १८५
समूलग्रहणं पिण्डीकृत्याथ सकलान्तरं। प्रसारितौष्ठस्तन्नेत्रे मीलयन्नभ्यधान्मृदु।
शक्यमुद्धरनिक्षेपं मयोद्गासधनन्त्विदं। विस्रम्भदत्तं निर्दम्भं दीयतां सकलान्तरं।"
तस्य धर्म्यमवचोजामन् चणमुच्छ्वसितोऽभवत्। चुरं चौद्रोपलिप्तन्तु ध्यात्वा पश्चादतप्यत।
युक्तापकृतसर्व्वस्वं कार्य्यानार्य्यमयार्थकः। विवादे नायक न्नेतुं नापि स्थेया विचारकाः।
स्थेयैर निश्चितन्यायं पुरोन्यस्तं ततो नृपाः। तदित्यमिति निश्चित्य वणिजं तमभाषत। १९०
अद्यापि न्यासदीन्नाराः सन्ति चेत्तत्प्रदर्श्यतां। अंग्रः कियानपि ततस्ततो वच्मि यथोचितं।
तथाकृते तेन वीक्ष्य दीन्नारान्मन्त्रिणोऽब्रवीत्। राजाभिर्भर्तृनां राज्ञां नाम्ना टङ्कः क्रियेत किं।
न चेत्कलशभूपालकालीन्याधीकृतेष्वमी। दीन्नारेष्वकृतटङ्कामत्रासाङ्का अपि स्थिताः।
निक्षिप्तेनैष लक्षेण वणिक् तस्मात् व्यवाहरत्। वणिजोऽर्व्विणेनायमप्यालेनान्तरान्तरा।
तस्माद्यदा यदेतेन गृहीतं दीयतां ततः। तदा प्रभृत्यप्ययानलाभोऽस्मै वणिजोऽर्थिनः। १९५
न्यस्यमानेहसस्यैष प्रभृत्यस्मै प्रयच्छतु। लचादखण्डितालाभं किम्वाच्यं लौलिके धने।
अवधारयितुं शक्यं मादृशैस्तपृणैरियत्। श्रीयशस्करवर्द्रोत्यमीदृचेनु लयुज्यत।
विवादे सन्दिहानस्य युक्तं चान्यनुशासनं। भाव्यं दण्डपराचारैः प्रयुक्तं कुशलैः पुनः।
अनिहार्य्येषु शक्येषु महामर्मगतेष्विव। सविवादेषु चोपेचां कालापेचो व्यधान्नृपः।
पप्रथे पार्थिवस्येत्थं निस्रोधं तस्य पालनं। प्रजास्वजागरूकस्य मनोरिव मनस्विनः।
सत्यं कारणनिर्व्यपेचमिनताशङ्काशहीना सती भावोवीतजनापवाद उचितोत्थितं समस्तप्रियं। १६८
विदग्धाविभवान्विता तरुणिमा पारिप्लवत्वोज्झिता राजत्वं विकलं कमत्र चरमे काले किलेत्यन्यथा।
स तादृशोऽपि राजेन्द्रचन्द्रणः स किलाभवत्। मत्सर्यांविष्टवैतथ्याद्दोषोल्कावर्षयोषणः।
औदार्य्यशौर्य्यधीधैर्य्यगुणतारुण्यमत्सरः। बभूव संख्यातीतानां मानप्राणहरो नृणां।
मानोन्नतेश्च भूयोऽपि वाक्पारुष्यरुषाहतैः। लाघवं प्रत्युपालम्भैः पार्थिवोऽप्यनुभावितः।
प्रसुप्तानां फणीन्द्राणामिव कोपोद्गमं विना। तेजोविस्फूर्जितं श्रेयं नहि नाम शरीरिणां। १६५
विविधे भूतसर्गेऽस्मिन्नच कश्चित्स विद्यते। वपुर्वंशचरित्रादि यस्य दोषैर्न दूषितं।
जातिः पङ्करुहादपुः कपिलता शान्तं शिरःखण्डनं प्रभ्रश्यत् प्रशुचिर्मीलता दिग्गुणाचारसदुष्टं यशः।

विश्वसृष्टिरिति प्रभूतविषयव्याप्तिस्पृशो दुःसहा दोषा यत्र पुरस्तु तत्र कतमो निर्दोषतोत्सेकभूः ।
अविचार्य्येति भूपालः स चक्कारानुजीवनं । वंशचारित्रदेहादिदोषोद्घोषण मन्वहं ।
अन्योन्यदोषमुत्पाद्य संख्यातीता महाभटाः । युद्धश्रद्धालुना तेन द्वन्द्वयुद्धेषु घातिताः । १७०
मासार्द्धदिनमाहेन्द्रमहाद्यवसरेषु सः । निनाय योधान् सन्नद्धानन्योन्यं प्रधनैर्धनं ।
स नाभूदुत्सवः कश्चित्तदा यत्र नृपाङ्गने । भूमिर्न सिक्ता रक्तेन हाहाकारो न चोद्ययौ ।
नृत्यन्त इव निर्याता गेहेभ्यो वंशशालिनः । बांधवैर्निन्यिरे योधालूनाङ्गाः पार्थिवाङ्गनात् ।
स्निग्धश्यामरुचांश्चारुश्मश्रूनाकल्पशोभिनः । हतान् वीक्ष्य भटान्राजा मुमुदे न च विव्यथे ।
भार्य्या राजगृहं गत्वा प्रत्यायातेषु भर्तृषु । मेनिरे दिवसं लब्धमनास्था नित्यमन्यथा । १७५
भवेत्तद्यदहं कुर्य्यामित्यहंक्रियया वदन् । साचिव्यमव्याहतवाक्तैस्तैर्भृत्यैरजिग्रहत् ।
प्रवर्द्धमानांस्तानेव विद्विषः कलुषाशयः । हृताधिकारान् विदधे वञ्चयंश्च विमानितान् ।
दंशकः कम्पनाधीशः प्रवृद्धे तत्र सङ्क्षुभि । विद्रुतो विषलाटायां निपत्य निहतः खशैः ।
तेन स्ववर्द्धितो द्वाराधीश्वरो रक्षकाभिधः । हृताधिकारो विदधे विभूतिं वीक्ष्य भूयसीं ।
माणिक्यमन्यपतिना द्वारेऽकस्मान्निवारिते । खिन्नेन विजयक्षेत्रे चक्रे हृत्तपरिग्रहः । १८०
कम्पनाद्यधिकारस्थाः प्रवीरास्तिलकादयः । काकवंशादिमन्त्रित्वे न तत्कोपेन भाविताः ।
भोगसेनानिरनुगः क्षीणवासोऽभवत्ततः । तेनातिसेवाप्रीतेन राजस्थानाधिकारभाक् ।
यस्येन्द्रद्वादशीयुद्धे मान्द्रसैन्योऽपि विद्रुतः । क्षुद्रवद्गर्गचन्द्रोऽपि रौद्रमालोक्य विक्रमं ।
येऽपि मल्लाभिधानस्य पुत्राः सामान्यशस्त्रिणः । तान् मड्डच्छुड्डव्यड्डासमन्त्रिणः समपादयत् ।
पुत्रौ विजयसिंहस्य तत्सेवात्यक्तदुर्दशौ । तिलको जनकश्चास्तामामात्यश्रेणिमध्यगौ । १८५
यशोलाभयशोनादिमुख्या द्वारादिनायकाः । कस्तान् समर्थः सङ्ख्यातुं तद्वित्तरलसम्पदः ।
द्विजाः प्रशस्तकलशादयः पूर्व्वं तदन्तरे । प्रापुर्बालद्रुमास्तस्य जीर्णानोकहविभ्रमं ।
कन्दर्पः स्वभुजा दूतैः समानीतोऽपि नाददे । तस्यासहमतां वीक्ष्य प्रार्थितोऽप्यधिकारितां ।
आस्थानाचारसंलापव्यवहारादिमण्डले । नवमेवाभवत् सर्व्वं तस्मिन्नभिनवे नृपे ।
लक्ष्मीः कार्म्मणचूर्णाढ्यवेश्यायावेशवर्त्तिनः । धीरानपि विधायेयं करोत्युन्मार्गवर्त्तिनः । १९०
सपिण्डानामपि व्यक्तमूलवीक्षणतत्परा । प्रततेव नरेन्द्रश्रीर्जातिस्नेहापकारिणी ।
समस्तसम्पत्पूर्णोऽपि यस्मात् सुस्सलभूपतिः । दध्यौ भ्रातुरवस्कन्दं राज्यापहरणोद्यतः ।
अकस्माद्ग्रहणोच्छ्येनमिव तं शीघ्रपातिनं । स्थानं वराहवार्त्ताख्यमुल्लंघ्यायातमग्रजः ।
क्षिप्रकारी विनिर्गत्य तमप्राप्तपदं ततः । निपत्य सैन्यैर्बहलैः सोऽपकारमकारयत् ।
विद्रुतस्यास्पदे तस्य नानोपकरणैश्च्युतैः । ताम्बूलवेलाकूटस्य सामियो समभाव्यत । १९५
कृतकार्य्यः परावृत्त्यासावरूढोऽपि पार्थिवः । प्रत्यावृत्तं तमशृणोदन्येद्युः क्रूरविक्रमं ।
गर्गचन्द्रस्तदादेशाद्गत्वा बहलसैनिकः । चक्रे सुस्सलभूपालबलनिर्दलनं ततः ।

असङ्ख्यैः सैस्सलैर्योधैराहवायामनिस्सृतैः । क्रान्तिर्व्विमानोद्यानेषु सुनारीणाममुच्यत ।
भर्त्तुः प्रसादस्यानृण्यं प्राणैर्युधि समर्पितैः । राजपुत्रौ गतौ तत्र सहदेवयुधिष्ठिरौ ।
वराश्वान् सुस्सलानीकान् गग्गलान् प्राप विद्रुतान् । चक्रे भूरितुरङ्गस्य यैर्भूपस्यापि कौतुकं । २००
निविष्टकटकं तं स श्रुत्वा सैन्यपुराध्वना । क्रमराज्योन्मुखं यातुं द्रुतमन्वसरन्नृपः ।
अन्विष्यमाणसरणिः प्रयत्नादग्रजन्मना । प्रविवेश दरद्देशं परिमेयपरिच्छदः ।
दत्तमार्गे तस्य राजा डामरं लोष्टकाभिधं । स सैन्यपुरजं हत्वा नगरं प्राविशत्ततः ।
तस्मिन् दूरं गते वैरे कलुषोऽपि स नाददे । आह्लेषैरसंरम्भं ग्रहीतुं लोहरं गिरिं ।
कह्लः कालिन्दराधीशो दौहित्रीं पुत्रवद्गृही । यामवर्द्धयत स्नेहादपुत्रः पितृवर्जितां । २०५
राज्ञो विजयपालस्य सुतां सुस्सलभूपतिः । उपयेमे स तां श्रीमाननघां मेघमञ्जरीं ।
तस्य प्रभावाधिष्ठानाच्छिबिरेऽपि न लोहरे । अशक्तिरासीत् विरुद्धानामपि बाधाय वैरिणां ।
धीरः सुस्सलदेवोऽपि मार्गैर्निर्गत्य दुर्गमैः । आसदङ्कूरिभिर्मासैः क्षोणीं दुर्गिरिवर्त्मना ।
प्रशान्ते व्यसने तस्मिन् धीरस्योच्चलभूपतेः । अन्येऽपि व्यसनाभासा उत्पन्नध्वंसिनोऽभवन् ।
भीमादेवः समुत्थाय भोजङ्कलशदेवजं । साहायकार्थमानिन्ये दरद्राजं जगद्दलं । २१०
सङ्घोद्धर्षमहीभर्तुरवरुद्धात्मजोऽभवत् । भ्राता दर्शनपालस्य सज्जपालस्तु तद्दलं ।
नीतिज्ञेन ततो राज्ञा सान्त्वैव दरदीश्वरः । आक्षेपात् पारितप्रायात्प्रत्याहृत्य निजां भुवं ।
सहसमन्वनाच्छन्नं भोजोऽविशत्स्वमण्डलं । भेजे सुस्सलदेवश्च सज्जपालानुजीवितां ।
गृहीतार्थेन भृत्येन निजेनैव प्रदर्शितः । भोजः क्षिप्रं नृपात्प्राप निग्रहं तस्करोचितं ।
देवेश्वरात्मजः पित्र्यकोऽपि द्वैराज्यलालसः । डामराश्रिते राज्ञि निर्याते व्यद्रवद्द्विषः । २१५
विचारपरिहारेण धावन्तः सर्वतो जडाः । तिर्य्यञ्च इव हास्याय प्रसिद्धशरणा जनाः ।
मलस्य रामलाख्योऽहं सूनुरासं दिगन्तरे । अर्द्धसूदः कश्चिदेवं चक्रिकाचतुरो वदन् ।
निन्ये प्रहृष्टिं व्यामूढैर्वङ्कभिर्विश्वप्रियैः । धनमानादिदानेन भूमिपैर्भूम्यनन्तरः ।
ग्रीष्मे प्रविष्टः काश्मीरानेकाकी घर्मपीडितः । व्यधीयत छिन्ननासः परिज्ञाय नृपानुगैः ।
कटके पर्य्यटन्नाशः स एव ददृशे पुनः । स्वजात्युचितभक्त्यादिविक्रयी सस्मितं जनैः । २२०
मिथ्यैव नीतिकौटिल्यैः क्रियतेऽभ्युदयश्रमः । शक्यतेऽपरथा कर्त्तुं न दैवस्य मनीषितं ।
शान्तापि ज्वलति क्वापि क्वचिद्दीप्तापि शाम्यति । दैववातवशाच्छक्तिः पुंसः कक्षाग्निसन्निभा ।
पलायने नापयाति निस्तुला भवितव्यता । देहिनां पुच्छसंलीना वह्निज्वालेव पक्षिणः ।
नाच्छिन्नवृक्षविषमस्वशरप्रयोगैर्न श्वभ्रपातरभसेन नचाभिचारैः ।
शक्ता निहन्तुमसवो विधुरैरकाण्डे भोक्तव्यभोगनियतोच्छ्वसितस्य जन्तोः । २२५
भिक्षाचरः समादिष्टवधो जयमतीग्रहात् । नक्तं वध्यभुवं निन्ये वधकैः पार्थिवाज्ञया ।
याति प्रक्षिप्य निक्षिप्तो वितस्तायां समीरणैः । क्षिप्तस्तटान्तरे स्यन्दमानस्तत्रे कृपालुना ।

द्विजेनैकेन सम्प्राप्तस्त्रिया दुर्गतचेतनः। आससमत्यभिधानायाः शान्तिर्देहेति गौरवात्।
सा हि पुत्त्रीति कृत्याथादत्तस्ततुरग्या तथा। नीतो देशान्तरं गूढं ववृधे दक्षिणापथे।
स कृतप्रत्यभिज्ञोऽथ पुत्त्रवत्सरवर्म्मणा। मालवेन्द्रेण शास्त्रास्त्रविद्याभ्याससमकार्य्यत। २२०
अन्यदीयं घातयित्वा तत्तुल्यवयसं शिशुं। रक्षितो जयमत्यैव स किलेत्यपरेऽब्रुवन्।
देशान्तरागताद्दूतात्तद्वार्त्तामुपलब्धवान्। अतएवाभवत्तस्यां भूभृद्विगलितादरः।
बहिरप्रतिभिन्नं स्नेहं धीरो मार्गवर्त्तिभिः। चक्रे तदग्रजस्याथ सम्बन्धं पार्थिवैः समं।
ईर्ष्यामगोपयन्नार्य्याः सङ्ग्रामाच्छादयन्प्रियोः। स्वयमन्याभिगम्यत्वं करोति हि जडो जनः।
भिक्षाचरे हृते बालं कश्चिदादाय तत्समं। तन्नाम्ना ख्यातिमनयद्द्दैवेत्यपरेऽब्रुवन्। २२५
तथैवैषोऽस्तु मिथ्या वा प्रतिष्ठां तां तथाप्तवान्। यथा लघुत्वमानेतुं न दैवेनाप्यशक्यत।
स्वप्नेन्द्रजालमायानामपि निर्व्विषया इमाः। कर्म्मवैचित्र्यजनिताः काश्चिदाश्चर्य्यविप्रुषः।
सराजबीजी नाशाय विशां गूढं व्यवर्द्धत। पुरग्रामादिदाहाय कक्षान्त इव पावकः।
रोहत्यन्तिकसीमनि प्रतिविषा वीरुद्विषस्याङ्कुरः काले प्रावृडुपद्रुतान्नसलिले मूर्च्छात्ययस्योदयः।
सर्गच्छेदविधिक्षमानुदयतो दृष्ट्वा किलोपद्रवान् सन्धत्ते प्रतिकारकल्पनमहो दीर्घावलोको विधिः। २३०
अजायत विपन्मज्जज्जगदुद्धरणक्षमः। तस्मिन्नेव क्षणे यस्मात्कुलमूलक्ष्मापतेः सुतः।
तज्जन्मकालादारभ्य सर्व्वतो जयमर्ज्जयन्। नामान्वर्थं नृपस्तस्य जयसिंह इति व्यधात्।
शास्तुः सर्वार्थसिद्धाख्यां यथा सर्व्वार्थसिद्धिभिः। तथा तस्याभिधानार्थ्या मात्यजद्दृढिमश्रुतां।
मुद्रां तां कुङ्कुमस्याङ्गमुद्रीयस्याभ्युपागतां। विलोक्योच्चलदेवोऽभूद्विमन्युर्भ्रातरं प्रति।
बालस्यैवाङ्घ्रिमुद्रास्य वैरं पितृपितृव्ययोः। निवारयन्तो विदधे सुस्थितं मण्डलद्वयं। २३५
स स्वर्गिणः पितुर्नाम्ना ततः सुकृतसिद्धये। चकारोच्चलभूपालः पैतृके स्थण्डिले मठं।
गोभूमिहेमवस्त्रान्नदाता तस्मिन्महोत्सवे। आश्चर्य्यकल्पवृक्षत्वं त्यागी सर्वार्थिनामगात्।
प्रसादैः प्रहितैस्तेन महार्घ्यैः श्लाघ्यसम्पदा। महान्तोऽपि दिगन्तेषु पार्थिवा विस्मयं ययुः।
भर्त्तुः प्रसादाधिगतां श्रियं नेतुं परार्थतां। विहारं समठं देवी जयमत्यपि निर्ममे।
केषाञ्चित्पूर्व्वपुण्यानां विरहेण महीभुजः। सुताभीष्टाभिधानाभून्मठे नवमठाख्यया। २४०
स्वलां स्वसारमुद्दिश्य परस्मिन् स्थण्डिले पितुः। विहारोऽपि कृतस्तेन नोचितां ख्यातिमाययौ।
मृत्योर्हस्तकपातित्वं तस्याः कलयता किल। न निष्ठा स्वप्रतिष्ठासु सम्प्रपेदे व्यवस्थितिः।
कदाचित् क्रमराज्यस्थो दृष्टमग्निं स्वयंभुवं। ययौ वर्द्धणचक्राख्यं गिरिग्रामं स भूपतिः।
तद्दुर्व्विलम्बरग्रामाध्वना यातुमचेष्टयन्। अकस्मादेत्य तत्रत्याश्चोरा राजपुरुषान्वयस्थिताः।
प्रजिहीर्षुभिरप्याशु तस्मिन्नत्यल्पसैनिके। न तैः प्रहृतमत्युग्रौजोवष्टम्भस्तम्भितायुधैः। २४५
अथ हारितमार्गः स गहने गिरिगह्वरे। भ्रमन्नल्पानुयात्रैकां क्षणदामत्यवाहयत्।
ऊषचार चणे तस्मिन् स्कन्दावारेषु दुःसहा। न चिरं मातर्दुर्व्वार्त्ता सर्व्वतः क्षोभकारिणी।

कटकाग्नि: स्रुतात्यल्पा वात्येव गिरिगह्वरात् । सा दुष्प्रवृत्तिर्दीर्घत्वं पुरेऽरण्य इवासदत् ।
नगराधिकृतस्तस्मिन् क्षणे शङ्कुभिधोऽभवत् । शस्त्रिण: कामदेवस्य कुम्भोरङ्गादिसोदर: ।
कृत्वा पुरक्षोभशान्तिं शस्त्रौघैस्ते नृपास्पदे । प्रविश्य भ्रातृभि: सार्द्धं कार्य्यशेषमचिन्तयन् । २६०
नृपं कं कुर्म इत्येवं तान् विचिन्तयतोऽब्रवीत् । सङ्गाभिधोऽपि कायस्थ: कुटुम्बिकुटिलाशय: ।
यूयमेव सुहृद्बन्धुभृत्यवाञ्छ्यदुर्जया: । राज्यं कुरुत सम्प्राप्य राष्ट्रमेवमकण्टकं ।
तेनैवमुक्तास्ते पापाजातराज्यस्पृहास्तत: । सिंहासनाधिरोहाय क्षिप्रमासन् समुद्यता: ।
श्रीयशस्करदेवस्य वंश्यायत इति श्रुति: । तदन्वयेऽभूत्सर्व्वेषां राज्यौत्सुक्यप्रदायिनी ।
अतएवाभजत्क्रोधं तेषां कुसुहृदुक्तिभि: । सा वासनान्त:संलीना सदाचारानपेक्षिणां । २६५
कथं व: प्रतिभात्येषां सङ्गस्यापि कुपद्धति: । भारिकस्य कुले जातो लवटस्य हि सोऽधम: ।
क्षेमदेवाभिधानस्य पुत्त्रोऽप्यल्पनियोगिन: । क्रूराशयत्वमभजन्महासाहसिकोचितं ।
चौर्य्येण स्वर्णभृङ्गारं हृतवान् भूपतेर्गृहात् । सम्भावितोऽपि गाम्भीर्य्यान्नाज्ञाय स किलेङ्गितै: ।
स्वामिधेनुर्निरुष्णीषे विहसन्नखिलान् स्मयन् । राजपुत्त्र इवात्यल्पं स त्रैलोक्यममन्यत ।
तस्य चिन्ता काचिदासीत् सदा दोलायतोऽङ्गुलो: । या राज्यहेतुक्रूरेण फलेन समभाव्यत । २७०
तद्विरानिजसङ्कल्पादपि ते राज्यलालसा: । नृपं जीवन्तमाकर्ण्य ततोऽभूवन् हतस्पृहा: ।
स स्फुरन्नच संमीलन्नवा सुप्त इवानिशं । तेषां चेतसि सङ्कल्पस्तदाप्रभृति सोऽभवत् ।
असुस्थिरादरेणाथ शनकै: पृथिवीभुजा । निन्यिरे मध्यमां वृत्तिं राजस्थानान्निवार्य्य ते ।
प्रकृत्या रुद्रवायाजा सर्व्वेषामेव सर्व्वदा । तेषामप्यकरोदन्तर्मर्म्मस्पृश: कथा: ।
ते राज्ये हर्षभूभर्तु: पितरि प्रभयं गते । मातुस्तारुण्यमत्ताया विधवाया गृहेऽवसन् । २७५
तैर्व्यासक्तको नाम शस्त्रभृत्प्रातिवेश्मिक: । सुहृद्भूतोऽस्य विश्वस्तो जननीजारशङ्कया ।
असतीमपि किं नैते न्यग्रक्षन्निति भूपति: । विचार्य्य कोपात्तन्मातुर्नासाच्छेदमकारयत् ।
तां कथां स नृपस्तेषां परोक्षमुदघोषयत् । क पुत्र्याश्छिन्ननासाया वदसीत्यन्वियेष च ।
वृहद्दङ्गादिगन्धेशं कृत्वा कार्य्याण्यवारयत् । स कायस्थ: कृतान्तालं भजन् सङ्गमपि प्रभु: ।
पीडितस्तेन रौद्रेण निजोऽथ गणनापति: । कोशोत्पत्त्यपहर्त्तारं तं नृपाय न्यवेदयत् । २८०
प्रवेशभागिकपदे हृते राज्ञा रुषा तत: । स क्रूरोरङ्गकुङ्गादीन् प्रैरयत् पूर्व्वचिन्तिते ।
जिघांसवस्ते नृपतिं प्रसङ्गप्रेक्षिण: परै: । समगंसत दुष्प्राशैरथ हंसरथादिभि: ।
प्रजिहीर्षुभिरुर्व्वीशं पीतकोशै: समेत्य तै: । चतुष्पञ्चानि वर्षाणि नावाप्यवसर: क्वचित् ।
बहुभिर्बहुधा भिन्नैर्बहुकालं विचिन्तित: । न भेदमगमन्मन्त्र: सचित्रं लोकदुष्कृत: ।
तवैतां कुरुते शश्वन्नृपो मर्म्मस्पृशं कथां । इति प्रत्येकमुक्ता ते विरागं पार्थिवेऽभजन् । २८५
तैरुर:पार्श्वपृष्ठादि गूढैर्वर्म्मभिरायसै: । प्रच्छाद्य पार्थिवोऽगस्त्रमनुसन्ने जिघांसुभि: ।
असह्यो विरहं सोढुं यां प्रसादयितुं न कां । राजापि सन्दधे चेष्टां प्राक्प्राकृतभुजङ्गवत् ।

स्वभाववैपरीत्येन मार्गचिह्नेन स स्थिरां । जयमत्या महाप्रीतिं तदादादत्सरद्वयं ।
रत्नां भिक्षाचरस्याङ्गनिमित्तं तत्र केचन । केचित्तु विद्युत्सदृशीं प्रेम्णां तरलद्युतितां ।
अथ वर्तुलभूभर्तुरात्मजा विल्हलाभिधा । कृतपाणिग्रहास्यागादालम्बं वसुधाभुजः । २९०
सङ्ग्रामपाले नृपतौ तस्मिन्नवसरे मृते । तत्सूनुः सोमपालाख्यः पितृराज्यं समादधे ।
राज्यार्हमग्रजं बद्ध्वा सोऽभ्यषिच्यत चाक्रिकैः । इति कोपाकरस्त्रेऽभूत् क्रुध्यन् राजपुरीं प्रति ।
लक्ष्मीस्थैर्य्यप्रतिभुवः पुत्र्याः पाणिमजिग्रहत् । तं प्रेष्ठं सर्व्वलोकानां श्रेष्ठं सर्व्वक्षमाभुजां ।
अर्थिचिन्तामणेस्तस्य प्रीणतो निखिलाः प्रजाः । नानाव्ययोर्जितो रेजे पश्चिमः स महोत्सवः ।
याते जामातरि क्ष्माभृच्चक्रे निखिलतन्त्रिणः । निर्ह्रत्तीन् किमपि क्रुध्यन् दृप्तुं तु व्यसर्जयत् । २९५
भोगसेनोऽपि भूपेन काले तस्मिन् समन्युना । निवारितो द्वारकार्य्यात्स्वैरः समपद्यत ।
विक्रान्तः स हि कार्य्येष्वोनिर्जितः खिल डामरः । सुस्सलक्ष्मापतिं जेतुं प्रतस्थे लोहर पुरा ।
वात्सल्यमिश्रवैरेण वारितोऽथ महीभुजा । तत्परीवादमकरोत्क्रोधावेश तत्र सः ।
प्रावेशयत् रड्डुकड्डमुखान् स समया ततः । समादिसद्वरं वीरं तदा राज्ञा विमानितं ।
विमानिताविश्वालिच्छाः संहता हतद्रुत्तयः । न ते बहिष्कृतास्तेन यमराड्रं जिगीषता । ३००
तान् भोगसेनरिन्यस्तसद्भावान् कुटिलाशयः । सङ्गो निनिन्द वीरत्वात्तत्त्वानन् सरलान्तरं ।
ऊचे चाद्यैव हित्वापि प्राणान् व्यापद्यतां नृपः । भोगसेनोऽन्यथा भेदं कुर्य्यादगहनाशयः ।
अन्यथाभूत्स रड्डाकं भोगसेने यदब्रवीत् । किञ्चिद्रुद्धोऽस्मि वक्तीति नृपतिं भेदलालसः ।
स तु किं दक्षिणद्वारं तव दद्यामिति ब्रुवन् । दृप्तुपचप्रणयं निन्ये तमवमानयन् ।
प्रबाधाधायिनो द्वेष्टि नियतिप्रणयी भवन् । तापात्ययाहनिद्रान्तइव जन्तुर्गतस्मृतिः । ३०५
तन्त्रिणो यामिका भूत्वा स्वस्मिन्वारे ततोऽविशन् । ते राजधान्यां सन्नद्धैः स्वमैन्यैः सह संहताः ।
यामिन्यां यं वयं हन्मस्तं हतेत्यभिधाय च । प्रावेशयन् न्यस्तचिह्नांश्चण्डालान्मण्डपान्तरं ।
भुक्तोत्तरं स्थिते राज्ञि ते बाह्ये मण्डपे स्थिताः । सरोषनृपदत्युक्ता सेवका सारणं व्यधुः ।
राजा च विज्जलाविष्ट यियासुर्मण्डपान्तरात् । दीपिकाभिःकृतालोको निर्ययौ मदनालसः
मध्यमं मण्डपं तस्मिन् प्राप्ते स्वल्पैः सहानुगैः । तत्स्थकं मण्डपं सङ्गो रड्डान्यानरङ्गाञ्जनान् । ३१०
अन्यैरप्यपिमे द्वारं निरुद्धे सर्वएव ते । जिघांसवः समुत्थाय नृपतिं पर्य्यवारयन् ।
विश्रब्धमादेकेन रड्डमये निषेदुषा । तं द्विजादोर्घसत्तेजाः शस्त्र्या कण्टकेऽभिमत् ।
ततः काञ्चनगौराणि तस्याङ्गान्यसिधेनवः । वक्षयः सुमेरुशृङ्गाणि महोरगयइवाविशन् ।
स द्रोहो द्रोहदत्युक्ता केशान् कृष्टान्विमोचयन् । क्रोडाशस्त्र्या कर्षां रड्डमुष्टिं दन्तैर्व्यपाटयत् ।
सुजनाकरनामा हि भृत्यः कट्टारकं वहन् । तस्यान्तिकात्पलायिष्ट प्रहरत्सु विरोधिषु । ३१५
अतो वालोचितां लघ्वीं छुरिकां स चकर्ष तां । मुष्टावर्गलिता कोशात् सा कष्टेण विनिर्ययौ ।

निर्घातान्धः शत्रुभिस्तैस्त्यक्तकेशो बबन्ध तं । धम्मिल्लमथ तां शस्त्रीं जानुद्वन्द्वान्तरर्पयन् ।
न छित्वा प्रहरंस्तेजस्वाद्दृढवीर्य्योऽपि सोऽभवत् । येन क्षितौ निपतितः सर्वमर्मस्विवाहतः ।
अभिमत्र ततो रङ्गं प्रहरन्तञ्च पृष्ठतः । नदन् सिंह इव व्यङ्गं परिष्वज्य व्यदारयत् ।
अन्यञ्च शस्त्रिणं कञ्चित्सवर्माणमपातयत् । विचेष्टमानो यः प्राणैरचिरेण व्ययुज्यत । १७२०
लब्धान्तरे प्रवासाय तस्मिन्धावति मण्डपः । रक्षिभिर्भूमिपालोऽयमित्यबद्धा कपाटितः ।
द्वारमन्यत् प्रसर्पन् स क्व प्रयासीति जल्पता । च्छुड्डेन रुद्धमार्गेण खड्गपातैरहन्यत ।
भोगसेनं ततोऽपश्यत् द्वारस्यान्ते समुत्थितं । दारुतूलिकया भित्तिमालिखन्तं पराङ्मुखं ।
भोगसेने चमे कस्मादमुं त्वमिति वादिनं । सोऽयमं किमपि ह्रीतः प्रधावन्तं जगाद तं ।
रथ्यावट्टाभिधो दीपधरस्तिष्ठन्निरायुधः । अयोदीपिकयारब्धयुद्धस्तैर्व्विचतोऽपतत् । १७२५
चाम्पेयः सोमपालाख्यराजपुत्रः क्षताहितः । प्रहारैः प्राप्तवैक्लव्यो न ग्राम्याचारतामगात् ।
पुत्रः श्रीशूरपालस्य राजकापत्यसञ्ज्ञकः । विदद्रो श्वेव संच्छाद्य शस्त्रीं पुच्छच्छटोपमां ।
ततः प्रधावन् प्रग्रीवमारुरुक्षुः क्षितीश्वरः । निकृत्तजानुखण्डालैरानिनिन्ये वसुन्धरां ।
तत्पृष्ठे स्वं क्षिपन्देहं प्रहारैर्जर्जरीकृतः । प्रशृङ्गारनामा कायस्थो निर्द्रोहो वारितोऽरिभिः ।
पुनरुत्थातुकामस्य सर्व्वे शस्त्रावलीट्विषः । न्यपातयंस्तस्य कान्त्या नीलाम्बुजवर्णस्रजं । १७३०
तिष्ठेत्कदाचिद्भूतोऽयमविपन्नो विपन्नवत् । कन्धरामधमः मङ्गलस्येति स्वयमच्छिनत् ।
हतं पदापहरणं यस्य सोऽहमिति ब्रुवन् । छित्वाङ्गुलीश्चकर्षापि रत्नाङ्कामूर्म्मिकावलीं ।
एकपादस्थितोपानत्स्रस्तमाल्यैः शिरोरुहैः । च्छन्नवक्त्रः स ददृशे सुप्तो दीर्घभुजः क्षितौ ।
पर्य्याप्तयास्य पर्य्यन्ते वीरवृत्त्या सहौजसः । निर्दोषनामोषदगान्निस्त्रिंशत्वं जनान् प्रति ।
सेवकः प्रूरजोनाम पूत्कुर्व्वन् द्रोहमुच्चकैः । निर्गत्य भोगसेनेन बहिः क्रोधान्निपातितः । १७३५
प्रस्थितो दयितावासं स दिङ्मोहवशादिव । पन्थानं पृथिवीनाथः कान्त्या जग्राह वेश्मनि ।
राज्योद्याने नृपतिमधुपा सोगकिञ्जल्कलोलाश्चेतो नानावसनकुसुमश्रेणिभिः प्रीणयन्तः ।
हा धिग्दैवानिलतरलया पात्यमाना नियत्या वल्लीवैते किमपि सहसा दृष्टनष्टा भवन्ति ।
तिर्य्यग्भ्यस्त्रिजगज्जयी परिभवं लङ्केश्वरो लब्धवान् प्रापाशेषनृपोत्तमः कुरुपतिः पादाहतिं मूर्द्धनि ।
इत्थं ते वहमानहृत्परिभवः सर्व्वस्य सामान्यवत्तत्को नाम भवन्महानहमिति ध्यायन् धृतार्द्रक्रियः ।
परासुमर्द्दितैस्त्यक्तं तमनाथमिव प्रभुं । नग्नं कृताश्रमात्कर्तुं स्वच्छत्रग्राहिणोऽनयन् ।
भुग्नो कण्ठे गट्टोलिकः कराभ्यां चरणौ परः । तं भुग्नग्रीवमालोलकुन्तलं रुधिरोक्षितं । १७४०
सथूत्कारस्रग्णं नग्नमनाथमिव पार्थिवं । राजधान्यां विनिष्कृष्टं न्यधत्तां पितृकानने ।
महामर्द्दितस्तास्यःसभे द्वीपभूतले । अकाय वह्निसंस्कारं ते भूतास्तस्य चक्रिरे ।
न हृष्टो नापि निर्दग्धः स केनापि व्यलोक्यत । उड्डीयेव गतस्त्वाशु नेत्रनिर्व्विषयोऽभवत् ।
व्यतीतेन सवर्षैकचत्वारिंशतमायुषा । सप्ताशीत्यब्दे पौषस्य शुक्लाषष्ठ्यां व्ययुज्यत ।

चक्रेऽथ मासिकवचोरङ्गः शोणितमंडितः। श्मशानाश्मनि वेतालइव सिंहासने पदं । १४५

तस्यावरोहतः सिंहासनाद्योद्धुं पुरोयुधि। विक्रामन्तो सन्धुभृत्या युद्धभूमिमभूषयन्।

तन्निर्णौ बट्टपद्माख्यौ युद्धा तदान्वयौ चिरं। योधाश्च कट्टसूर्य्याद्याः सिंहद्वारेऽपतन् हताः।

रणरङ्गनटोनृत्यन्निव राजा रहाङ्गने। सखङ्गाखेटकोरङ्गः खंडयन्नहितान् बभौ।

द्विषन् विजयसन्देहमहितानां क्षणे क्षणे। प्रहारैः सुबहून् भित्त्वा स चिरेणापतद्रणे।

राजद्रोहोचितं तस्य निहतस्यापि निग्रहं। वैशमत्यक्तमर्य्यादो गर्गः कोपादकारयत्। १५०

दिद्दामठान्तिकोव्यङ्गः पौरैर्भस्माश्मवर्षिभिः। अवस्करप्रणालान्तर्भग्नवक्त्रो न्यपात्यत।

ते गुल्फदामभिः कृष्टाः स्थाने स्थाने प्रभुद्रुहः। तत्क्षणं लोकथूत्कारपूजाकृत्योचितां दधुः।

पलाय्य प्रययुः क्वापि मङ्कहंसरथादयः। मरणाभ्यधिकां कञ्चित्कालं सोढुं विपद्व्यथां।

दृष्ट्वा पराजितं गर्गं नष्टे तदनुजे विदन्। भोगसेनोऽथ तां वार्त्तामश्रद्धेयोत्पलोपमां।

व्यावृत्य प्रत्यवस्थातुकामः पश्यन् पलायिनः। योधान् स्वैः सहितः कैश्चित्ततः क्वापि भयादगात्। १५५

इत्थं निहतविध्वस्तनायका द्रोग्धृसंहतिः। स्वदोर्मात्रसहायेन गर्गचन्द्रेण सा कृता।

सत्वं साहससिद्धिश्च नेतिहासेष्वपि क्वचित्। अश्रोषन्तादृशं यादृक्तस्यास्ते स्म प्रतापिनः।

निशाम्प्रहरमक्रुश्च राज्यं कृत्वा स लब्धवान्। द्रोहकृच्छ्रं खराजाख्यां गतिं कुकृतिनामगात्।

यशस्करकुले जन्म द्रोग्धृभिस्तैः प्रमाणितं। क्षणभङ्गुरभजद्राज्यं यस्माद्दर्णटदेववत्।

दावोद्दीपनकूटयन्त्रघटनैः सिंहादिसंहारिणो याम्याकस्मिकगण्डशैलपतनैरन्तं किरातावने।

एकेनैव ननु प्रधावति जनः सर्व्वोऽपि मृत्योः पथा हन्ता हन्ति हतोऽयमेष तु वृथा कालस्य भेदग्रहः। १६०

स्वादाहि ललनौघमङ्गलरवो यैर्हर्युलैः श्रूयते दीनैस्तैर्दयिताविलाप उदयन्नाकर्ण्यते तु क्षणे।

योऽपि प्रच्छन्नहितं प्रद्वेक्ष्यति परः स्वं प्रान्तमन्ते मुदोद्वृत्तं सोऽप्यत्रलोकयत्यहह धिङ्मोहोऽयमान्ध्यावहः।

सायं विचिन्तितो रात्रौ फलितोऽन्यत्र वासरे। दुर्व्विपाकप्रदाताभूद्द्रोग्धृणां साहसद्रुमः।

अथ सिंहासनस्यान्तः कार्थ्यान्ते त्यक्तविग्रहः। गर्गः प्रचालितामर्षस्त्वक्रन्द स्वामिनं चिरं।

तस्मिन् रुदति सर्व्वोऽपि पौरलोकोऽभयोज्झितः। संप्राप्तावसरो भूपं व्यलापोल्लोकवत्सलं।

कारुण्योत्पत्तये दत्वा कोशं जीवितकामया। जयमत्या तदावादि गर्गः कपटशीलया। १६५

कुरु ने सम्बिदं भ्रातरिति सत्वभयस्तु सः। तत्प्रक्रियावचो ज्ञात्वा चिन्तितस्याप्यकल्पयत।

चिकुरनिचये यत्कौटिल्यं विलोचनयोश्च या। तरलतरता यत्काठिन्यन्तथा कुचकुम्भयोः।

वसति हृदि तद्यासां पिण्डीभवन्ननु ता इमा। गहनहृदया विज्ञायन्ते न कैश्चन योषितः।

दौःशील्यमप्याचरन्त्यो घातयन्त्योऽपि वल्लभान्। हेलया प्रविशन्त्यग्निं न स्त्रीषु प्रत्ययः क्वचित्।

युग्याधिरूढा सा यान्ती यावन्मार्गे व्यलम्बत। अश्रुतो विज्जना तावन्निर्गत्य प्राविशच्चितां।

अथ तस्याश्चितारोहं कुर्व्वन्त्या भूषणार्थिभिः। लुण्ठकैर्लुप्यमानाया व्यथा गात्रेषु पप्रथे। १७०

सच्छत्रचामरे राज्ञा दह्यमाने विलोकयन्। लोकः सर्व्वोऽपि साक्रन्दो दग्धदृष्टिरिवाभवत्।

भ्रे चिन्त्यं तेन च तदा निन्येऽत्यन्तपविच्चतां । सर्व्वैर्यद्दृश्यमानोऽपि नोपाविशन्नृपासने ।
सुतमुच्चलदेवस्य बालमङ्के निधित्सता । राज्येऽभिषेक्तुं ते केचित्तेनान्विष्यन्त यत्नतः ।
लोकौचित्येषु केषाञ्चित्तत्त्वमालोक्य सस्मितः । भिक्षामप्यटितुं जाने नैष जानाति योग्यतां ।
राज्ञ्यां श्वेताभिधानायां मल्लराजस्य ये सुताः । सल्हणाद्यास्त्रयोऽभूवन् मध्यमे प्राक् क्षयं गते । १७५
हन्तुं ज्येष्ठकनिष्ठौ द्वौ शेषौ सल्हणलोठनौ । प्रश्लिष्टौ शंखराजेन भयान्नवमठङ्कृतौ ।
निर्लज्जैर्निहतान् द्रोग्धुं त्रिशाथ मिलितैः पुनः । तथ्यश्वारोहसचिवैरानीतः कृतचाक्रिकैः ।
दृष्ट्वा राज्यार्द्धमप्राप्यं कश्चिज्ज्यायांसयोस्तदा । गर्गेण राज्ये संरम्भादभ्यषिच्यत सल्हणः ।
हा धिक् चतुर्णां यामानामन्तरेण पतिद्वयी । अहस्त्रियामे तत्रासीद्दृश्या या पुरुषायुषैः ।
ये सायमुच्चलनृपं प्राह्णे शङ्खं सिषेविरे । मध्याह्ने सल्हणं प्रापुर्दृष्टास्ते राजसेवकाः । १८०
अथ लोहरकोट्टास्थः सार्द्धेऽह्नि गलिते नृपः । सुस्सलो भ्रातृमरणं श्रुत्वा उद्भ्रान्तमानसः ।
गर्गेण प्रहितो दूतः सक्रन्दं स्वं क्षिपन् क्षितौ । ततस्तं वीतसन्देहं चकारार्त्तप्रलापिनं ।
आद्यात्सल्हणवृत्तान्तपर्यन्ताग्नां नाशृणोत् कथां । गर्गदूताद्भ्रातृवधं स्वस्याज्ञानस्य केवलं ।
अश्रद्दधानस्तं शीघ्रमरिच्छेदं सुदुष्करं । तदाज्ञानाय गर्गीयं प्राहिणोत्सुस्सलन् गृहात् ।
आक्रन्दमुखरो भूत्वा तां रात्रिमरुणोदये । कश्मीराभिमुखो यात्रामसम्भृतबलोऽप्यधात् । १८५
अन्योऽथ गर्गदूतस्तं पथि संगदितोऽभ्यधात् । कृतत्नमावेद्य वृत्तान्तं नागन्तव्यमिति ध्रुवं ।
क्षिप्रं हतेषु द्रोहेषु त्वय्यसन्निहितेऽनुजः । कृतस्तु सल्हणो राजा कृत्यमागमनेन किं ।
श्रुत्वेति गर्गसन्देशं कोपादसहनो नृपः । अप्रयाणैषिणो भृत्यान् विहस्यैवं वचोऽब्रवीत् ।
नास्माकं पैतृकं राज्यं यदि रिक्थहरोऽनुजः । मज्ज्यायसा मया चैतद्भुजाभ्यामर्जितं पुनः ।
राज्यं स्वीकुर्वतोरन्यो नादाताभूत्तदावयोः । येनाहृतमिदं पूर्वं स क्रमः क्व गतोऽध्वनः । १९०
इत्युक्त्वा विरतैरेव वहन्नासीत्प्रयाणकैः । दूतांश्च पार्श्वं गर्गस्य स्तोककृत्यै प्राहिणोदकन् ।
स काष्ठवाटं सम्प्राप सल्हणस्य हितैषिणा । निर्गत्य गर्गचन्द्रेण चक्रे शुष्कपुरे पदं ।
प्रवृत्तायां विभात्रर्थ्यां दूतैः कृतगतागतैः । तस्याज्ञोत्कतषामापि गर्गो द्रोग्धाभ्यधीयत ।
कार्यमध्यगतो राजा तथापि प्राहिणोत्तदा । धात्रेयं भ्रातरं गर्गाभ्यर्णं हितहिताभिधं ।
भोगसेनः क्षणे तस्मिन्नाययौ दैवमोहितः । खाशकान् विल्वबनजानभ्यर्थीकृत्य नृपान्तिकं । १९५
सोऽभ्यर्णे कर्णभूत्याख्यमश्वारोहं महीपतेः । विसृज्य गर्गं जेष्यामीत्युक्त्वाभूत्क्षोभनोद्यतः ।
कालापेक्षामपि त्यक्त्वा हन्तुं भ्रातृद्रुहं स तं । योऽयं प्रसक्तमन्विष्यन्नसौ लोकैरसज्जनः ।
यस्य भ्रातृद्रुहः पार्श्वे स त्वमाश्रीयसे कथं । गर्गोऽपि तमुपालेभे दूतैरित्यादि संदिशन् ।
स तु मार्गात्पलाय्यायन्नमसीति विलम्बकृत् । दत्तास्कन्दः क्षपापाये तं सानुगमघातयत् ।
पतयन्सन् कर्णभूतिर्वीरहत्या व्यरोचत । तस्य द्वैमातुरो भ्राता तेजःसेनोऽप्यनूनसा । २००
तेजःसेनस्तु प्रत्याप नृपाद्भ्राश्यवेश्मन । मरिचो लवराजस्य तनूजोऽश्वपतेरपि ।

अवष्टम्भेन भूपोऽभून्निग्रहावग्रहक्षमः। नयेनाचितुमसामर्थ्यं तावदासीत्तु तद्बलं।
पुरोगोऽपि हतः पश्चाद्योऽनीतेऽस्मि महीभुजा। स मल्लपालस्तत्पार्श्वमथाहायाययौ द्रुतान्।
तेष्वायातेष्ववष्टम्भं यातं किञ्चिच्च तद्बलं। प्राप्तश्च गर्गसेनानीश्चत्वार्य्योऽमल्पसैनिकः।
दुधुक्षून् वीक्ष्य तानाप्तैर्नृपोऽश्वमधिरोपितः। उत्सेककण्ठधोर्ध्वभे ह्नक्काश्च परिधापितः। ५०५
गगणं शलभच्छन्नमिव कुर्व्वन्नथापतत्। शरासारो रिपोर्व्विल्लान् सर्व्वतोऽच्छिन्नसन्ततिः।
ओंकारं शरफूत्कारैः कृत्वा द्रोहस्य दुःसहाः। प्राहरन्नाजकटके सर्व्वाङ्गसर्व्वायुधैर्द्विषः।
हतविक्षतविध्वस्तसैन्यः साहसिको नृपः। वेगादपससारैको मध्यान्निर्गत्य वैरिणां।
गर्जत्सिन्धुरयाक्रान्तनत्युन्नतिरलङ्घ्यत। सवाजिना तेन सेतुर्नीलानगः पक्षिणामपि।
मल्लपालादयोद्विजाः शेकुस्तमनुवर्त्तितुं। पृष्ठलग्नान्निरुन्धन्तः स्थाने स्थानेऽवरोधिनः। ५१०
वीरानकाभिधस्तीरः स ग्रामान्निवेशनं। त्रिंशद्दिनैः समं भृत्यैः प्रविष्टस्तत्यजेऽरिभिः।
निरम्बरैर्निराहारैस्तिष्ठन् कतिपयैः समं। स तत्र चिरमाक्रम्य निर्भयादण्डयन् खशान्।
क्रमेण च हिमापातदुर्लङ्घ्याध्वनि सङ्कटे। अविपक्षोभाग्ययोगात्प्रययौ लोहरम्पुनः।
पदे पदे प्राप्तमृत्युरायुःशेषेण रक्षितः। तथाप्यासीत्स कश्मीरप्राप्तिमेव विचिन्तयन्।
वराकं द्वारपेलग्याद्गर्गोहितहितं क्रुधा। विरुद्धधीर्वितस्तायां बद्ध्वा पाण्यङ्घ्रिमक्षिपत्। ५१५
तस्मिन् प्रक्षिप्यमाणेऽप्सु चेमाख्यः स्वं क्षिपन् पुरः। द्वासेऽस्याश्चैः पदारोहमधःपातेऽपि लब्धवान्।
राज्यप्रदः सतारिस्य गर्गः प्राप्तोऽन्तिकन्ततः। प्राप सल्हणराजस्य सविश्रेषमधीशतां।
स भूभृन्मन्त्रिविक्रान्तिहीनो राज्यमवाप्तवान्। चक्रभ्रममिवापश्यत्सर्वतो भ्रान्तमानसः।
न मन्त्रो न च विक्रान्तिर्न कौटिल्यं न चार्जवं। न दातृता न लुब्धत्वं तस्योद्रिक्तं किमप्यभूत्।
तद्राज्ये राजधान्यन्तर्मध्याह्नेऽपि मलिम्लुचः। लोकं मुमुषुरन्याध्वसञ्चारस्य कथैव का। ५२०
पङ्गुरप्यङ्गनाकालं क्रान्त्या यत्रात्यवाहयत्। पुमानप्यभवत्तत्र साध्वसाध्वस्तधीरसौ।
यामद्य सल्हणोऽन्येद्युर्भेजे तां लोठनः श्रियं। साधारण्यं गतो राज्यभोगस्त्यभवत्तयोः।
पुरुषान्तरविज्ञानविहीनस्य प्रमाद्यतः। सर्व्वोऽपि तस्य तन्त्रस्थैर्व्यवहारो व्यहन्यत।
श्वशुरो लोठनस्योजःस्त्वयस्तेन व्यधीयत। द्वारे तापसगोष्ठीषु योग्यो विक्रमनिष्ठुरे।
यः सुस्सलभयोच्छेदमङ्गीकुर्व्वंस्तदागमे। स्वमन्त्रलक्षजापेन सिद्धिं मन्त्रगणेऽभ्यधात्। ५२५
जिह्मो गर्गाज्ञया राजा तदप्रियमपातयत्। बद्ध्वाश्मानं वितस्तायां विम्बं नीलाश्वडामरं।
राजानुग्राहको गर्गस्तांस्तान् व्यापादयन् रिपून्। हालाहां डामरान् भृगीन् दत्तभोज्यानघातयत्।
राज्ये किञ्चित्करे गर्गायत्तजीवितमृत्यवः। बहिश्चाभ्यन्तरे चासन्नन्ये वा पृथवोऽपि वा।
कदाचिल्लोहराद्दुर्गे प्रविष्टेऽथ नृपान्तिकं। चुक्षोभ नगरे लोकः सर्व्व एव भयाकुलः।
तदा क्षुद्रचरद्वार्त्ता शूलान्यारोप्य नौषु यत्। क्रुध्यन् गर्गोऽयमायातो हन्तुं सर्व्वान्नृपाश्रितान्। ५३०
गर्भिणीगर्भपातिन्या तादृशा भयवार्त्तया। दिवाप्यदृश्यन्नभावि जनैर्ज्वरदवाक्षितैः।

ततस्तिलकसिंहाद्यैर्द्रङ्गाद्द्रागदीयत । अनवेक्ष्य नृपादेशमास्कन्दो गर्गमन्दिरे ।
देशस्यात्युल्वणः क्रन्दो धावति स्म धृतायुधः । प्रत्यग्रहीत्तानखिलान् गर्गचन्द्रस्तु निष्कलः ।
निर्लज्जा दिल्हभट्टारलक्ष्मकाद्यास्तुरङ्गमैः । भ्राम्यन्तस्तत्र दृश्यन्त गर्गावसथवीथिषु ।
निषिषेध न तान् राजा प्रत्युतास्कन्ददायिनां । लोठनं कुण्ठशक्तीनां तेषां स्फूर्त्यै व्यसर्जयत् । ५२५
तेनापि योधैर्गर्गस्य रुद्धमार्गेण मन्दिरं । न रुद्धं नापि निर्दग्धुं पारितं दस्युवङ्गिना ।
धानुष्कैः शवोनाम मठोऽभीलोठिकामठे । श्रबाधतैव नाराचैस्तद्योधान् घातयन् परं ।
प्रकाशेन समं राजलोके विरलतां गते । सायं सानुचरो गर्गो हयारूढो विनिर्ययौ ।
धमरैरप्रतिहतो निनाय लोहरं व्रजन् । बद्धौजःसूर्य्यमस्वस्थमासीनं त्रिपुरेश्वरे ।
तापसेन किमेतेनेत्युक्त्वान्यैर्मुमुमोच तं । तं सुस्सलेऽपि विधुरे नृपतिं नोदपाटयत् । ५३०
क्षणे क्षणेऽभवद्देशस्ततःप्रभृति सर्व्वतः । गर्गागमनसन्त्रस्तपौरार्गलितमन्दिरः ।
अथार्त्तस्य महीभर्त्तुर्गर्गसन्धानमिच्छतः । महत्तमः सहेलोऽभूल्लोहरे दूत्यमाचरन् ।
तेनाङ्गीकारितो गर्गः कथंचित्कन्यकार्पणं । भृत्यास्तु तेन सम्बन्धं नैच्छन् भूतस्य भूपतेः ।
ततः सुस्सलदेवेन सह सन्धिं निबद्धवान् । पश्चात्सम्प्रार्थ्यमानोऽपि सम्बन्धं न व्यधत्त सः ।
मण्डले विशराकृतमेवं याते नृपोऽब्रवीत् । सद्यं हंसरथं नोनरथञ्चासादितांस्वरैः । ५३५
तामग्रिकणस्त्व्यादिप्रवेशैरिह दर्जनः । अत्यकामसुभिर्घोरामवस्थामन्वभवत् ।
भोगसेनाङ्गनामन्यामनुमेने स्वयं नृपः । अनुसर्तुं पतिं स्वच्छं वसन्तीं साधु तद्व्यधात् ।
तादृग्दृष्ट्वापि वैक्लव्यं शङ्कितेन तदन्तरे । प्रमिम्ये दिल्हभट्टारो रसदानेन भूभुजा ।
न राजवोजी वोक्काण्डविक्रमो वा बभूव सः । शमितो गूढदण्डेन यत्तथा तेन पापिना ।
तं या निनिन्दानिष्पन्नपौरुषं तत्स्वसुस्तदा । तस्या वह्निप्रवेशेन सिद्धं मानव्रतीव्रतं । ५४०
सोऽस्पोऽपि राज्यकालोऽभूद्देवमातङ्गदुस्सहः । दीर्घत्तपादृश्यमानदीर्घदुःस्वप्नसन्निभः ।
कालवित् सुस्सलो गर्गाद्बद्धसन्धिरपि भ्रमन् । न्ययुङ्क्ताथ सञ्जपालं काश्मीरीन्प्रत्यभाक्रतः ।
दारेण सह दस्त्वार्थी लक्षकः सल्हभूभुजा । बराहमूलं सम्प्राप कथञ्चित्प्रस्थितं भजन् ।
गर्गः स्मरन्नवस्कन्दं पश्चादभ्येत्य नाशयन् । वराहमूलेन समं तस्य सैन्यमलुण्ठयत् ।
विद्द्रो स तु तद्योधैर्दत्तैश्च परिषस्वजे । अदित्यैर्मेदिनी दिव्यैर्देहैस्त्वप्सरसां गणः । ५४५
नायकैर्गलितैः शृङ्गहृत्तैः सर्दशजैर्मही । पतितैस्वप्यचूडाद्यैर्भूषिता मौक्तिकैरिव ।
आगच्छता च्छिन्नभीति सञ्जपालेन लक्षकः । निराश्रयः सम्प्रपेदे पार्श्वं सुस्सलभूपतेः ।
सोऽथ भूभृत्सञ्जपाले दूरं क्रान्तरिपौ गते । आजगामान्तिकं प्रातैः प्रेरितः पौरडामरैः ।
सन्धिं तव विधास्यामि सार्द्धं सुस्सलभूभुजा । इत्युक्त्वा सल्हणं प्रायात्तदभ्यर्णं सहेलकः ।
काङ्क्षिताभ्युदयं पौरैस्तातकैरिव वारिदं । अभिभिषयन्वाजतव्यं सर्व्व एवोच्चलानुजं । ५५०
गर्गस्य गृहिणी कुङ्काभिधानाथो तदन्तिके । कन्यकाद्वयमादाय परिणेतुमुपाययौ ।

उपयेमे स्वयं राजा राजलक्ष्म्यभिधां तयोः। गुणलेखां सुस्सलेन स्वीचक्रे तद्यवीयसीं।
सल्हणे सानुजेऽभ्येत्य सज्जपालेन वेष्टिते। राजापि राजसदनः सिंहद्वारं समासदत्।
साचाद्विरोधिभृत्येन द्वारमेकेन पातितं। अभुक्तोघं तमप्राप्य साङ्कं वैरिमनोरथैः।
ससैन्ये गलितद्वारराजवेश्मस्थिते रिपौ। गर्गास्कन्दविशङ्काशीर्षकितं सोल्लसं बलं। ४६५
गर्गे वितीर्णकन्येऽपि राजसैन्यमविश्वसत्। तस्थौ स्वातन्त्र्यमित्येव हृणस्पन्देऽपि सङ्कितं।
अस्ताभिलाषिणि दिने तादृक्कामहते बले। स्नेहाददहति स्वापे दुर्भेदौकस्थितान्रिपून्।
प्रविश्य द्यामभिर्भुग्नकवाटेन तमोरिणा। द्वारं विहृत्याङ्गनस्थैः सज्जपालोऽग्रहीद्रणं।
तस्य निश्चित्य पातङ्गीं वृत्तिं भूभृत्यरिव्रजे। अनुप्रवेशं विदधे पदा तिलकसाभिधः।
दरदानयने काष्ठवाटसङ्कटविक्रमे। यस्तस्य सदृशो योधः प्रतिबिम्ब इवाभवत्। ४७०
स केशवश्च स मठाधीशस्तमनुसस्रतुः। शैनेयमारुती पार्थमिव प्रार्थितसंश्रवं।
निर्गत्य मण्डपात्सद्यप्रहारैस्तैः कथञ्चन। विवृते प्राङ्गनद्वारे धीरो राजाविशत् स्वयं।
निर्व्विभागे वर्तमाने सङ्कटे सैन्ययोर्द्वयोः। प्राङ्गने प्रमयं प्रापुर्भूयांसस्तत्र शस्त्रिणः।
सचित्रः सल्हराजस्य पतंगग्रामजो द्विजः। आजौ प्रापाज्जको नाम स्वस्त्रीसम्भोगभागितां।
कायस्थेनापि रुद्रेण लब्धा गञ्जाधिकारितां। स्वामिप्रसादः साफल्यं निन्ये त्यक्त्वा तनुं रणे। ४७५
सायं वनस्पतिर्लीनैः खगैर्व्याचालितो यथा। याम्नि प्रविष्टे प्रोड्डीननिःशब्दविहगोऽभवत्।
आयोधनोर्व्वी वाचाला चक्रे चित्रार्पितेव सा। तथा सुस्सलभूपेन तुरङ्गस्थेन तर्जिता।
अनारूढेऽङ्गनान्तःस्थे तस्मिन् सिंहासने ध्वनिः। सुस्सलो जयतीत्येव ढक्कावाद्यश्च शुश्रुवे।
मल्लराजगृहे तादृक्कान्यस्याप्युदपद्यत। आगातां तत्र वैक्लव्यं यादृक् सल्हणलोठनौ।
आबद्धकवचावश्वारूढावालिङ्ग्य सुस्सलः। बालौ युवामिति वदन् धूर्त्तोऽत्याजयदायुधं। ४८०
आदिश्य मण्डपेऽन्यस्मिन् बद्धयोश्च स्थितिं तयोः। प्राप्तराज्यस्ततो राजा विवेशास्थानमण्डपं।
त्र्यहोनांश्चतुरोमासान् भुक्तराज्यं बबन्ध तं। सितस्य सोऽष्टाशीतेऽब्दे राधस्य त्रितयेऽहनि।
तेन सिंहासने क्रान्ते भास्वतेव नभस्तले। क्षणादेवाखिलो लोकः क्षोभमब्धिरिवात्यजत्।
विकाशश्वस्तःसन्द्रोहावेक्षणक्षोभतः सदा। व्याधलोके व्यात्तवक्त्रो मृगराजइवाभवत्।
आलद्रुहः कुलच्छेदमन्विष्यान्विष्य कुर्व्वता। न तेन नीतिनिष्ठेन रिपवोऽप्यवशेषिताः। ४८५
जनस्य वीक्ष्य दौर्जन्यमधृष्टाकारतां वहन्। स कार्य्यापेक्षयाऽप्यासीन्न क्वाप्याहितमार्दवः।
वस्तुतस्त्वार्द्रहृदयः क्रूरन्दमयितुं जनं। अवास्तवं तक्षीमत्वाद्वृत्तिं व्यालइवादधे।
कालवित्स मतत्यागी प्रगल्भः प्रतिभाववान्। इङ्गितज्ञो दीर्घदृष्टिः स एवान्यो न कोऽप्यभूत्।
अधिकः कोऽपि कोऽप्यूनः कोऽपि तस्य समोगुणः। दोषोऽथ वा पूर्व्वजस्य स्वभावे क्वाप्यदृश्यत।
अन्वकारि ममानेऽपि कोऽपि तत्पूर्व्वजन्मनः। कोपेन विषमालर्कं तरीयेन तु सारधं। ४९०
न बभूव स वेदादौ सास्त्रयोऽनुचितं पुनः। स्थितिभेदभयात्स्नेहे नात्येक्रमनुजीविनां।

नेच्छत् स द्वन्द्वयुद्धादि सन्धानैर्मानिनां वधं । तस्मिन् प्रमादान्निर्व्यूढे व्यदीयत कृपाकुलः ।
वाक्पारुष्यं नृपस्यासीदाद्यस्यातङ्कदुःसहं । तस्य तु प्रणयप्रायं हिंसाद्याबाधवर्जितं ।
तस्यार्थगर्भात्त्यागो भूयानासीत् स सम्पदां । त्यागो विषयकालादिनैयत्यानुमितोऽभवत् ।
नवकर्म्माश्वबाहुल्यप्रिये तस्मिन् दरिद्रतां । तत्यजुः कारवो वाजिविक्रेतारश्च दैशिकाः । ४९५
दुःसहव्यसनोत्पन्नो जिगीषोः प्रशमैषिणः । तस्यासीदपरित्याज्यं न किञ्चिदसुवर्षिणः ।
तस्येन्द्द्वादशीभूरिपराङ्मुखकदायिनः । यथा नृपस्य शुशुभे तथा नान्यस्य कस्यचित् ।
यथा प्रागुच्चलो राजा सुप्रापः प्रियसेवकः । स तथा सेवकैरासीद्भूपा दुर्लभदर्शनः ।
नोच्चलादपरस्यासीद्भ्रमणं हयवाहने । नान्यस्य सुस्सलनृपाद्राढ्यं तत्र च पप्रथे ।
शममुत्पन्नमुत्पन्नं निन्ये दुर्भिक्षमुच्चलः । राज्ये सुस्सलदेवस्य न तत् स्वप्नेऽप्यदृश्यत । ५००
किमन्यदखिलैः सोऽभूदग्रजादधिको गुणैः । त्यक्ता त्यागार्थमस्पृश्यसुप्रापत्वानि केवलं ।
श्रीउच्चलैः पालको गर्गो यं राज्ये कर्तुमैहत । सहस्रमङ्गलस्तेन निरावास्यत स क्रुधा ।
तस्मिन् भद्रावकाशस्थे प्राशनामा तदात्मजः । काश्चनोत्कोचदस्यूके डामरैः सह चाक्रिकं ।
असम्यजन्मुच्चलजं पितृव्येणार्थितं शिशुं । प्रसङ्गे तत्र गर्गोऽपि प्रातिकूल्यमदर्शयत् ।
प्रहितानां नरेन्द्रेण तृणानामिव शस्त्रिणां । गर्गदावाग्निदग्धानां निःसंख्यानामभूत् चयः । ५०५
गर्गश्यालोऽपि विजयः स देवसरसोद्भवः । प्रातिलोम्येन नृपतिसैन्यानां कदनं व्यधात् ।
राज्यप्राप्तेर्मासमात्रे दिनैरभ्यधिके गते । तेनात्यिक्षेन राज्ञोऽभूदधीरस्याकुलं मनः ।
सुरेश्वर्यमरेशो वा विनस्तासिन्धुसङ्गमाः । गर्गेण राजसैन्यानां कृताः कदनकाषिणः ।
संग्रामे तुमुलेऽमात्यौ शृङ्गारकपिलौ हतौ । कर्णश्रुद्रकनामानौ तन्त्रिणौ च सहोदरौ ।
निहतानन्तसुतटसमूहान्तरलचितान् । तादृशानपि निर्क्रष्टुं नासीत्कस्यापि पाटवं । ५१०
हर्षमित्रः कम्पनेशो भूभर्त्तुर्मातुलात्मजः । विजयेन हतानेको विदधे विजयेश्वरे ।
पुत्रो मङ्गलराजस्य तिल्हो राजन्यवंशजः । तत्र तिब्बाकरमुखास्तन्त्रिणश्च प्रमिम्यिरे ।
राजानीके सज्जपालः प्रवीरप्रवरोऽभवत् । भूरिसैन्येन गर्गेण नाल्पसैन्योऽपि योजितः ।
संस्तभ्य विजयक्षेत्रे लक्ष्मकाद्यैर्विसर्जितैः । धीरो राजा बलं भग्नं स्वयं गर्गोन्मुखं ययौ ।
सोऽन्विष्य गर्गेण हतान् योधांश्चाशीकृतान् बहून् । निरदाहयदन्येद्युरसङ्ख्यैश्चिताग्निभिः । ५१५
बलिना भूभुजा गर्गः पीड्यमानः शनैः शनैः । ततः स्ववसतीर्दग्ध्वा फलाहाभिमुखोऽभवत् ।
स तत्र रत्नवर्षाख्यं गिरिदुर्गं समाश्रितः । हृताश्वोऽनुचरैस्त्यक्तो नृपेणारादवेष्ट्यत ।
अन्वारूढेन तत्रापि सज्जपालेन वेष्टितः । चरणौ शरणीचक्रे राज्ञो दत्वोच्चलात्मजं ।
शान्तिकस्थे नृपे कर्णोकाष्ठजं मल्लकोष्ठकं । विरुद्धं बद्धवत्याशु गर्गो विश्वासमाययौ ।
गृहीतप्रणतिस्तस्य नेष्टेषु विजयादिषु । शमितोपप्लवो राजा विवेश नगरं शनैः । ५२०
गत्वाथ लोहरेऽन्यस्य बद्धा मल्लणलोठनौ । स कल्हसोमपालाद्यैरेम सेवितो नृपः ।

भूयः प्रविष्टः कश्मीरान् सेव्यः सर्व्वातिशायिभिः । गर्गं प्रसादैरनयत्प्रवृद्धिमधिकाधिकैः ।
ग्रीष्मार्कप्रतिमे तस्मिन् ह्रादिनावनुचक्रतुः । महादेवी कुमारश्च द्रुमच्छायावनानिलौ ।
डामरौ देवसरसोद्भवौ विजयरोचिषौ । बृहट्टिक्कस्तथा सुज्जटिक्कौ वेलां प्रचक्रतुः ।
सानाथ्यकाङ्क्षिणौ पार्थिवेऽस्य प्रविशतः पुरः । लोकपुण्ये तस्थतुस्तौ क्रन्दद्भिः स्वानुगैः समं । ५२५
विजये गर्गसम्बन्धात्सदाचिण्ये महीपतिः । सदाचारं परित्यज्य वेत्रिभिस्तावताडयन् ।
तौ मानिनश्च तद्भृत्याः क्लृप्तशस्त्रास्ततोऽव्यधुः । साहसं सुमहत्सैन्ये प्रहरन्तो महीपतेः ।
श्वपाके भोगदेवाख्यः कृपाण्या प्राहरन्नृपं । धीरो गज्जकनामा च करवालेन पृष्ठतः ।
सावशेषतया भूपस्यायुषो मोघतां ययुः । द्विषत्प्रहृतयो वाहतुरगी तु व्यपद्यत ।
नृपस्यान्तरयेद्वैरिप्रहृतिं वाणवंशजः । निहतस्तत्र शृङ्गारसिंहः सार्दो सशम्यकः । ५३०
सैनिकैस्तैर्हहिक्कभोगदेवादयो हताः । सुज्जटिक्कस्तु निस्तीर्णो हेतुर्भाविनि विप्लवे ।
शूले व्यापादिता गज्जकादयो द्रोहसंश्रिताः । सन्देहितासुरित्यासीद्राजा गर्गानुकूल्यभाक् ।
न भवेत्परिपातेऽपि प्रमयः समयं विना । प्रसूनमप्यसून् हन्ति जन्तोः प्राप्तावधेः पुनः ।
ज्वालाभिरौर्व्वदहनस्य पयोधिमध्ये न श्यामतामपि हि यानि मुहुः स्पृशन्ति ।
तान्येव यान्ति विलयं किल मौक्तिकानि कान्ताकुचेषु युवभावभुवोष्मणापि ।
प्राक्सेवामपि विस्मृत्य परोत्सेकासहिष्णुना । मल्लुलाक्ष्मपालाद्या निरावास्यन्त भूभुजा । ५३५
सम्बन्धी काकवंश्यानां यशोराजाभिधस्ततः । सहस्रमङ्गलाभ्यर्णं राज्ञा निर्वासितो ययौ ।
तमन्यांश्च विनिर्य्यातान् देशाद्रुक्मसमृद्धिमान् । ऐच्छल्लब्धप्रतिष्ठः स राज्ञः प्रत्यभियोगितां ।
तत्पुत्रः कान्दमार्गेण विविशुः स्वापसैनिकैः । यशोराजे चते प्राप्तः प्रत्याहृत्य ययौ भयात् ।
अथान्येष्वपि भृत्येषु राज्ञा निर्व्वासितेषु सः । मिलितेषु प्रथां यावत् यथावदुपलब्धवान् ।
उपरागे नवे सञ्जे पर्व्वतीयास्त्रयो नृपाः । चाम्पेयो जासटो वज्रधरो वल्लापुराधिपः । ५४०
राजा रुद्रजपालश्च वर्तुलानामधीश्वरः । युवराजौ त्रिगर्त्तीर्व्वल्लापुरनरेन्द्रयोः ।
कह्ल आनन्दराजश्च पञ्च सङ्घटिताः क्वचित् । प्रस्थानार्थं कृतपणाः कुरुक्षेत्रमुपागताः ।
आसमत्याहृतं तावदभ्येत्य नरवर्म्मणः । प्रापुर्भिक्षाचरस्तेन दत्तपाथेयकाञ्चनं ।
कुलकं ॥ स जासटेन सम्बन्धिस्नेहाद्विहितसत्कृतिः । नीतोऽन्यैश्च प्रथां भूपैर्व्वल्लापुरमयाययौ ।
देशादिनिर्गतैर्व्विश्वप्रमुखैर्वर्द्धितप्रथे । तस्मिन् प्राप्ते सहस्रस्य प्रतिष्ठा लघुतामगात् । ५४५
आशेयं हर्षदेवस्य क एते राज्य इत्यथ । उक्त्वा त्यक्त्वा सहस्रादींस्तमेवाशिश्रियञ्जनाः ।
कृतप्रभावमुत्सृज्य सम्बन्धिस्नेहमोहितः । दर्पको राजपुत्रस्तं राज्ञा निर्व्वासितोऽप्यगात् ।
पुत्रः कुमारपालस्य तत्पितुर्मातुलस्य सः । दृष्टिं सुस्सलदेवेन पुरा निन्ये हि पुत्रवत् ।
प्रेरितो युवराजेन जासटेन च कन्यकं । वल्लापुरेशः प्रददौ भिक्षवेऽस्य सपक्षकः ।
तद्देशठक्कुरा भूपान् सङ्घट्याखिलांस्ततः । तमैच्छद्रयपालाख्यः कर्तुं पैतामहे पदे । ५५०

तां वार्तां श्रुतवान्राजा यावद्दासीत्समाकुलः । गयपालो हतस्तावद्द्रोग्‌जैश्छद्मना बली ।
पश्चके तान् प्रतियतो योद्धुं प्रधनमध्यगः । भिक्षाचरचमूधुर्य्यो दर्पकोऽपि व्यपद्यत ।
तेन प्रधनमार्गेण ततो भिक्षाचरो ययौ । अकिञ्चित्करतां मेघइवावग्रहवारितः ।
आसमत्यां प्रयातायां क्षणे पाथेयकाञ्चने । श्वशुरोऽपि ययौ तस्य शनैर्मन्दोपचारिता ।
चतुःपञ्चानि वर्षाणि तिष्ठन् जासटमन्दिरे । ग्रासाच्छादनमात्रं स ततः क्लेशात् समासदत् । १५५
ठक्कुरो देङ्गपालोऽथ चन्द्रभागातटाश्रयः । दत्वा सुतां धम्मिकाख्यां तं निनाय निजान्तिकं ।
प्राप्तसौख्योऽवसंस्तत्र कञ्चित्कालं भयोज्झितः । स राजबीजो दैन्येन शैशवेन च तत्यजे ।
तदन्तरे साहसिकः प्रासः साहसिरुन्मदः । गतागतानि कुर्व्वाणः संरम्भमनयन्नृपं ।
स सिद्धपथमार्गेण विविक्षुर्विस्रंसोन्मुखः । तैरेव भृत्यैर्भूभर्तुर्ब्बद्ध्वा पापैः समर्पितः ।
तत्रोत्पिञ्जे परं सत्वं सज्जपालस्य पप्रथे । खिन्नोऽपि द्रोहविमुखो यस्स देशान्तरं ययौ । १६०
तस्मिन् शूरे कुलीने च किं वाच्यं स दिगन्तरे । शौर्य्येण च यशोराजः पप्रथे यत्तदद्भुतं ।
अथ राजा निवास्यायान्महीलादीन्महत्तमान् । सर्व्वाधिकारे विदधे कायस्थं गौरकाभिधं ।
स तापसस्य सम्बन्धी कथञ्चिद्विजयेश्वरे । सेवया लोहरस्थस्य तस्य वाल्लभ्यमाययौ ।
शमिते पूर्व्वकायस्थवर्गे तेन ततः क्रमात् । नीतः सर्व्वाधिकारित्वं सोऽन्यामेव स्थितिं व्यधात् ।
अशेषकर्म्मस्थानेभ्यो वृत्तिं राजोपजीविनां । निर्व्वादकोशे भरणं तेनाकार्य्यनिशं प्रभोः । १६५
अदित्सा पापिनस्तस्य नाज्ञायि क्रूरता जनैः । मधुरिम्णो विषस्येव शक्तिः प्राणापहारिणो ।
न्यधात्कृपणवित्तं स पूर्व्वसञ्चितनाशकृत् । विशुद्धं नृपतिः कोशे हिमं हिममिवाम्बुदः ।
कोशः कृपणवित्तेन प्रविष्टेन हि दूषितः । भुज्यते भूमिपालानां तस्करैरथवारिभिः ।
लोभाभ्यासेन भूपोऽपि सञ्चितं कोशमन्वहं । आस्ते स्म लोहरगिरौ प्रहिण्वन्सर्व्वसंपदः ।
गौरकाश्रयिभिर्व्वेट्टपञ्चकाद्यैर्नियोगिभिः । विधीयते स्म निःसारा महोत्पातैरिव क्षितिः । १७०
उच्चलच्छापतो शान्ते मूर्द्धाकक्कटशिलोपदे । अधावंस्तं पुनर्लोकं व्याधाइव नियोगिनः ।
प्रशस्तकलशस्यान्ते तद्भ्रातृतनयः परं । कायस्थकनकोनाम श्लाघ्यामकृत सम्पदं ।
नानादिगन्तरायातो दुर्भिक्षपतितो जनः । येनाविच्छिन्नसत्रेण शान्तव्यापद्व्यधीयत ।
सञ्जातमुच्चलस्यान्ते येषां तत्परीक्षणं । त एव चक्रिरे राज्ञा प्रमत्तेनाधिकारिणः ।
द्वारे तिलकसिंहस्य तादृक्त्वेन व्यधीयत । राजस्थाने च जनकः कणस्तस्य सहोदरः । १७५
प्रतापैर्नृपतेस्तोहर्णैः करमाक्रान्तमण्डलः । जितात् द्वाराधिपः सोऽपि स्वीचकार रसाधिपात ।
काकवंश्यस्तु तिलकः क्ष्माभुजा दत्तकम्पनः । निन्ये प्रकम्पमहिताम् प्रकम्पनइव द्रुमान् ।
याम्यशस्त्रभृता शेङ्गुराजस्थानाधिकारिणा । नृपाः प्रतापैरहिताः सज्जकेनापि निर्जिताः ।
काकवंश्याश्रयाश्वासराजद्वारेण धीमता । अद्धमेलकभृत्येनाप्यवापिटेन मन्त्रिताः ।
एवं स्वाहङ्कृियां त्यक्त्वा गुणापेक्षेण मन्त्रिणः । कुर्व्वतोच्चावचांस्तेन कञ्चित्कालोऽत्रवाह्यत । १८०

वितस्तापुलिने सोऽथ कर्तुं प्रारभताश्वतं । स्वयं श्वश्र्वाःस्वपत्न्याश्च नाम्ना सुरगृहत्रयं ।
उत्पातवह्निना दग्धो निःसंख्यधनदायिना । तेन दिद्दाविहारोऽपि नूतनत्वमनीयत ।
पुरीमट्टिलिकां जातु स प्रयातोऽन्तिकस्थितैः । आप्तैः प्रैर्य्यत कल्यो गर्गो द्रोहाय भूपतिः ।
गार्गिः कल्याणचन्द्राख्यस्तानतिक्रम्य हि स्फुरन् । मृगयादिक्षणे तेषामसूयामुदपादयत् ।
सर्वाभ्यधिकसामर्थ्यं तस्त्रियाद्यं निवेद्य ते । नित्योपजपनैर्गर्गे विक्रियामनयन्नृपं । ५८५
बद्ध्वा त्वां लोहरे भर्तुमिच्छति क्ष्मामित्यथ । गर्गः शशङ्के भृत्येन राज्ञा चैकेन बोधितः ।
ततः स ससुतस्तत्र पलाय्य स्वभुवं ययौ । दिनैर्भूपोऽपि संप्राप्तः प्रविवेश स्वमण्डलं ।
अन्योन्यशङ्कया भेदं यातयो राजगर्गयोः । चाक्रिकैः कृतसञ्चारैर्वैरं प्रौढिमनीयत ।
श्यालं गर्गस्य विजयं स्नेहशेषवशंवदः । समीपात्संत्यजन्राजा पश्चात्तापेन पस्पृशे ।
कारायां गर्गशत्रुर्यस्तेन पूर्वं न्यधीयत । स मल्लकोष्ठकस्तस्मिन् कालेऽमुच्यत बन्धनात् । ५९०
निबन्धे येन सोऽबद्ध डामरैरपरैः समं । तद्द्वारयित्वा सामर्षो निनाय स लतां नृपः ।
शनैर्युद्धेषु निर्याते राजसैन्येऽथ पूर्ववत् । गर्गेण कदनं चक्रे योधानाममरेश्वरे ।
तत्र सर्वातिशायिन्या वीरवृत्त्या नृपाश्रितः । शमालो डामरः प्राप प्रथां पृथ्वीहरः परां ।
रणे द्वारपतेर्गर्गनिर्जितस्य पलायने । शौर्यं तिलकसिंहस्य प्राप सर्वोपहास्यतां ।
हतशेषाः क्षताः शस्त्रवस्त्रादि त्याजिता भटाः । तदीया गर्गचन्द्रेण कारुण्यात् केऽपि रक्षिताः । ५९५
वह्निसात्क्रियमाणेषु वीरदेहेषु सर्वतः । राजसैन्ये चिताशानां गणना कापि नाभवत् ।
कृष्टसैन्येन राज्ञाथ गर्गो निर्दग्धमन्दिरः । सन्त्यज्य लोहरं प्रायाद्गिरिचूडावनाभिधं ।
गिरिमूलोपविष्टस्य भूपतेः सैनिकैः समं । तेषु तेष्वकरोन्नित्यं गिरिमार्गेषु सङ्गरं ।
कूटयुद्धैर्नृपानीकं प्रतिरात्र्युपतापयन् । रणे त्रैलोक्यराजादिप्रमुखास्तत्क्षणेऽवधीत् ।
फाल्गुणे हिमसम्भारभीमे परिमितानुगः । स धीरो राज्ञ्यपि रिपौ न धैर्येण व्ययुज्यत । ६००
धैर्यवान् काकवंश्यस्तु तिलकः कम्पनापतिः । परं शिखरिशृङ्गस्थं शक्तोऽभून्न प्रधावितुं ।
पीडितस्तेन सम्प्रेष्य स्वभार्यां तनयान्तिकं । निन्येऽनुकूलतां भूपं प्रसादाच्छादितक्रुधं ।
गूढमन्युर्नृपः सन्धिं बद्ध्वा प्रचलितस्ततः । तं मल्लकोष्ठकं वृद्धिं निनाय न पुनः शमं ।
सेहेऽथ लोहरे द्वित्रान्मासानविशदे नृपे । स मल्लकोष्ठकासह्यस्पर्धां नीचविमानतां ।
तन्मध्ये नृपनिर्गूढं विभेदं तद्बलं नयन् । तदीयानकरोद्भृत्यान् कर्णाशीनहितावहान् । ६०५
स खिन्नो नीचदायादसमशीर्षिकयाथ तैः । प्रेरितः पार्थिवाभ्यर्णं सदारतनयोऽविशत् ।
स्नानप्रवृत्तः पार्श्वस्थस्नानद्रोण्युपरिस्थितः । अथैकदा तमाक्षिप्तशस्त्रमत्याजयन्नृपः ।
कुर्यादास्थामवष्टम्भे कोऽन्यः पौरुषगर्वितः । आक्षेपसमये सोऽपि यत् क्लैब्यं भीरुवद्ययौ ।
उत्खातरोपितनृपः क्व नु सोऽभिमानः कार्पण्यभागितरलोकसमा क्व वृत्तिः ।
यद्वा वशं नटयति प्रकटं विधातुरिच्छैव यन्त्रगुणपंक्तिरिवात्र जन्तुं ।

अशकन् युधि ये द्रष्टुमपि तं नाश्यते शठाः। के ऽपि राजप्रिया वाञ्छ ग्रन्थिबद्धा तथा व्यधुः। ६१०
श्रीसङ्ग्राममठाभ्यर्णमन्दिरस्था नृपे स्वयं। सङ्ग्रामोपस्थिते युद्धात्कल्याणाद्या व्यरंसिषुः।
जीवन्तं पितरं श्रुत्वा विदेहो गर्गनन्दनः। मन्यमानः स्वयं राज्ञा कक्काच्छत्तं समार्पयत्।
गर्ग सदारतनयो राजौकस्येव भूभुजा। उपाचर्य्यत दाक्षिण्याद्धृद्योभोगैर्निजोचितैः।
गार्गिः पलाय्य यातोऽपि चतुष्कं निजमन्दिरात्। अवर्णभाजा कर्णेन दृष्ट्वा राज्ञः समर्पितः।
रूढच्छन्नप्रकोपस्य प्रमादस्य महीभुजः। अतः शुद्धिविहीनस्य हीनस्येव न निश्चयः। ६१५
दरद्राज्ये मणिधरे दिदृक्षावागते नृपः। उत्संगमाय निर्यातो गर्गं भृत्यैरघातयत्।
दिवान्मासान् सोऽनुभूतकारागारस्थितिर्निशि। सत्वात्त्रिभिः सुतैः कण्ठबद्धरज्जुर्न्यपात्यत।
निष्ठां विम्बमुखोनिन्ये यथैव स नृपानुगैः। तथैव कण्ठबद्धात्मा सपुत्त्रोऽक्षिप्यताम्भसि।
तं चतुर्नवते वर्षे हत्वा भाद्रपदे नृपः। सुखेच्छुः प्रत्युत प्राप दुःखमुद्भूतविप्लवः।
वद्धे कालिञ्जराधीशे महादेव्याश्च मातरि। मल्लाभिधायां शान्तायां स ततोऽभूत्सुदुःखितः। ६२०
तन्मध्ये नागपालाख्यः सोमपालस्य सोदरः। तेन प्रतापपालाख्ये हते द्वैमातुरेऽग्रजे।
शङ्कितस्तन्निहन्तारं हत्वामात्यं पलायितः। त्यक्तस्वदेशः शरणं ययौ सुस्सलभूभुजं।
क्रुद्धः स कारणात्तस्मात्प्रणयं वशवर्त्तिनः। अग्रहन्सोमपालस्य निश्चिकायाभिषेणनं।
निश्चित्य सर्व्वोपायानामसाध्यं विधुरं नृपं। स भिक्षाचरमानिन्ये तस्य वल्लापुराद्रिपुं।
निशम्य नीतदायादं तं प्रकोपाकुलो नृपः। दत्तास्कन्दोऽविशत्तीक्ष्णतेजा राजपुरीं ततः। ६२५
दत्वा राज्ये नागपालं सोमपाले पलायिते। सप्त मासान्स तत्रासीत्तांस्तान संत्रासयन्रिपून्।
राज्ञां वज्रधरादीनां राजा वज्रधरोपमः। सेवावसरदानेन प्रमादविवशोऽभवत्।
भ्रमतां चन्द्रभागादिसरित्तीरेषु सर्व्वतः। तान् सैन्यानां मुखमपि द्रष्टुं शेकुर्न वैरिणः।
अग्रग्राम्यभवत्तस्य तिलकः कम्पनापतिः। पृथ्वीहरो डामरश्च मार्गरक्षणदीक्षितः।
धार्म्मिको नृपतिर्ब्रह्मपुरी देवरहस्य सः। मण्डलं द्विषतो रक्षन् प्रपेदे सैन्यिके फलं। ६३०
तस्येन्द्रविभवस्यान्यत्सामर्थ्यं वर्ण्यते कियत्। आययावश्वघासोऽपि सैन्यतस्य स्वमण्डलात्।
तत्र प्रसङ्गी तत्रासीभवत्स्वजनवर्द्धनः। दूरस्थस्यानयद्वृद्धिं गौरकस्योपरि क्रुधं।
राष्ट्रगुप्त्यै स्वयं राज्ञा स्थापितः स स्वमण्डले। अन्तायि पैशुनाशुद्धबुद्धिना निखिलार्थहृत्।
तत्सम्बन्धेन तिलकं स निन्दन् नगराधिपं। मनस्तिलकसिंहस्य तद्भ्रातुरुदवेजयत्।
हृत्वाधिकारं स्वस्याथ क्रुद्धा पर्णोत्ससंभवं। अनन्ताधिपमानन्दाभिधं दाराधिपं व्यधात्। ६३५
सोमपालादयः श्लाघ्यास्तदा प्रकृतयोऽभवन्। राज्ञस्तथास्थितस्यापि न याः सविधमाययुः।
स पञ्चनवते वर्षे वैशाखेऽथ स्वमण्डलं। प्राविशन्नागपालोऽपि राज्यभ्रष्टस्तमन्वगात्।
दुःसहातङ्कदूतेन लोभेन क्षोभितस्ततः। अदण्डयच्च वास्तव्यानानयच्चाल्पतां व्ययं।
निवार्य्य गौरकं कार्य्यात्कार्य्यिणस्तत्समाश्रितान्। तस्य दण्डयतः सर्व्वे विरागं मन्त्रिणो ययुः।

अकाण्डव्यवहारेषु स विपर्य्यासितेष्वभूत् । अवसन्नधनो गाढमप्राप्त्यान्नवमन्त्रिणां । ५४५
सौवर्णीरिष्टिकाः कृत्वा प्राहिणोत् लोहरान्तरे । काञ्चनाद्रिप्रतीकाशान् स्वर्णराशीनढौकयत् ।
अथ दण्डयितुं गर्गभृत्यान् दण्डाधिकारिणं । लहरेऽकृत गर्गस्य मन्त्रिणं गज्जकाभिधं ।
तं दण्डभीतैर्गर्गस्य सेवकैराश्रितस्ततः । विश्वस्तमवधीत् क्रुध्यन् छद्मना मल्लकोष्ठकः ।
लहरे विश्रुते राजा द्वैमातुरमथाग्रजं । मल्लकोष्ठस्यार्जुनाख्यं बबन्ध सविधस्थितं ।
हस्तञ्च सहचन्द्रस्य पुत्रं गोत्रिणमप्यसौ । बद्ध्वा व्यधादिन्दकाख्यं तस्य तद्भ्रातरं हितं । ५५०
पूर्व्ववैरं स्मरन् सूर्य्यं सपुत्त्रं तं परांस्तथा । बबन्धानन्दचन्द्रादीन्नीत्युल्लङ्घनमाचरन् ।
निर्गते लहरं मल्लकोष्ठके विद्रुते ततः । आरोप्यार्ज्जुनकोष्ठं तं शूले कोपाद्व्यपादयत् ।
निवेश्य सैन्यं तत्राथ प्रविष्टस्य पुरं ययुः । डामरा निखिलास्तस्य वैरं विश्वस्तघातिनः ।
क्रुध्यन् पृथ्वीहरायापि कृतसेवाय मन्त्रिभिः । आदिष्टैः कम्पनेशाद्यैरवस्कन्दमदापयत् ।
कथञ्चित्स तु निस्तीर्णो जयन्तीविषयोकसः । बन्धोः चोराभिधानस्य प्रविवेशोपवेशनं । ५५५
दिनेऽवन्तिपुरादीनां पुराणामन्तरेण तं । अजन्त विधुरं केचिन्नाशकन् बाधितुं द्विषः ।
तद्वैधुर्य्यविधानं तत्प्रजासंहारकार्य्यभूत् । प्रमादान्नृपतेः क्रुद्धवेतालोत्थापनोपमं ।
चोरोऽथ तीक्ष्णधीर्द्वङ्गः सह पृथ्वीहरेण सः । अढौकयच्छमालामान्तरेऽष्टादश डामरान् ।
अभेद्यसङ्घांस्तान् जेतुं निर्यातो विजयेश्वरं । न्ययुङ्क्त भूभृत्संभ्रान्तस्तिलकं कम्पनापतिं ।
संग्रामः खण्डशः कुर्व्वन् स तानतुलविक्रमः । विद्रावयामास रयैः पुरोवायुरिवाम्बुदान् । ५६०
संमानावसरे तस्य जित्वा यातस्य डामरान् । प्रवेशं प्रत्युत नृपो न प्रासादवमानकृत् ।
स भग्नमानो नगरं प्रविष्टे नृपतौ ततः । खिन्नः स्ववेश्मन्यवसत् स्वामिकार्य्ये निरुद्यमः ।
सम्प्राप्ताः ससशीर्षिकां विसदृशैस्तुल्यैर्निरुद्धोदया वैरे विद्विषतां कृता धुरि पदं सन्धौ वहिः स्थापिताः ।
कार्य्यान्तेऽद्भुतकर्मकौशलकृतावज्ञाविरागस्पृशः । सर्पाकीर्णमिवाशु वेश्म गृहिणो भृत्यास्त्यजन्ति प्रभुं ।
त्यक्तकार्य्यानुसन्धाने तस्मिन् सर्व्वत्र डामराः । सम्भृतिं विक्रियां निन्युः कृषिं वायधनादिव ।
आतङ्कोद्वेजितैर्विप्रैः कृतप्रायैः पुरे पुरे । वह्नौ हुताग्निभिश्चौरा कुकीर्त्तिरुदपद्यत । ५६५
उपसर्गेण तुरगाः करभाश्च क्षयं गताः । न्यवेदयन्मण्डलस्य प्रत्यासन्नमहाभयं ।
प्रत्यासन्नाशुभा कम्पं भयेन जनता दधे । आसन्नवज्रपतना वातेनेव द्रुमावलिः ।
अथ षण्णवताब्दस्य प्रारम्भे डामरावलिः । उष्णस्पृष्टा हिमानीव बभूवापतनोन्मुखी ।
प्रथमं देवसरसाद्विस्तप्रसरस्ततः । मुख्यं व्यथावहो गण्ड इव पाकं व्यदर्शयत् ।
एककार्य्यत्वमानीय टिक्कादीन् गोत्रजान् बली । स्यामसः विजयोऽभ्येत्य राजानीकमवेष्टयत् । ५७०
तत्र कायस्थपुत्त्रोऽपि स्यामस्यानीकनायकः । संरम्भं नागवट्टाख्यस्तंहे तस्य चिरं युधि ।
कथञ्चिदथ भूपेन प्रार्थितः कम्पनापतिः । निर्ययौ स्वामिदौर्ब्बल्यात्संहतिश्रयशोऽवः ।
विजयेन समं तस्य सद्गसूलेन संयुगे । सन्देहं प्राणवृत्तिश्च जयश्रीश्चासक्तद्ययौ ।



प्रवृद्धिं मल्लकोष्ठेऽपि प्रयाते लहराभ्तरे। वैशाखे निर्ययौ राजा ग्रामं यम्योरकाभिधं।
सैनिकाः शत्रुभिस्तस्य भ्रामितास्तत्र रात्रिषु। अराति निन्यि धीरैः स्वप्नैरिव मुमूर्षवः। ८७५
बाहुमात्रसहायेन सर्व्वशक्तिमतां वरः। येन हर्षनरेन्द्रोऽपि विधुरेणोदपाद्यत।
भूरीर्षया जितवतो विक्रमेण महीमिमां। साहसानां न सङ्ख्यास्ति जामदग्न्यस्य यस्य वा।
स सङ्कुचितविक्रान्तिः कालस्य बलवत्तया। तत्र भग्नबलोऽकस्माद्वियुज्यत जयश्रिया।
ततः पलायिते तस्मिन्नकस्मादित्य सञ्ज्ञकं। हामिग्रामस्थितो वीरं भङ्गं पृथ्वीहरोऽनयत्।
पलायितस्यानुसरंस्तस्य पृष्ठं स निष्ठुरः। प्रतापी नगराभ्यर्णे दग्ध्वा नागमठं ययौ। ८८०
स चान्ये च ततः क्रूरा डामराः सर्व्वतोऽनयन्। राज्ञो राजाश्रितानाञ्च चरकेभ्यस्तुरङ्गमान्।
निस्त्रिंशतां तीव्रकोपस्ततो भूपः समाश्रयन्। अभाग्यभागिनां योग्यामाललम्बे कुपद्धति।
सीवो पृथ्वीहरस्याथ हता डामरमन्तिकं। पृष्ठन्यस्तविषं भोज्यमिव राज्ञा व्यसर्जयत।
विसृज्य भ्रातरं हर्म्यं विन्दकस्य तथैव सः। अन्येषां प्राहिणोत्पार्श्वं भ्रातृन् पुत्रांश्च विश्रुतः।
मातरं जयकाख्यस्य सिंफिसायामवासिनः। विच्छिन्नकर्णघ्राणाञ्च कृत्वाभ्यर्णं व्यसर्जयत्। ८८५
सपुत्रं सूर्य्यकं शूलेऽधिरोप्य नगरे परान्। भूरीन् बध्यानबध्यांश्च क्रोधाक्रान्तो न्यपातयत।
कालस्यैवैत्क्षणस्याथ तस्य सर्व्वेऽपि शङ्किताः। आभ्यन्तराश्च बाह्याश्च विरागं प्रतिपेदिरे।
येनैवानीतिमार्गेण हारितं हर्षभूभुजा। निन्दन्नप्यादधे तं स राज्ये व्यवहरन् स्वयं।
प्रविष्टानां युद्धे गहनकरिकर्म्मप्रणयिनां प्रसक्तानां द्यूते नरपतिधुरायां विहरतां।
तटस्थत्वे वक्तुं स्खलितमसकृत्सोऽर्हति परं प्रयोगे वैकल्यं स्वयमविकलो यो न भजते।
तीव्रप्रयत्नो नृपतिस्तत्रापि विहितोद्यमः। निनाय मल्लकोष्ठादीन् किञ्चिन्मन्दप्रतापतां। ८९०
अथानिनाय विजयो विषमापद्यध्वना शनैः। कमारं हर्षदेवस्य तं भिक्षाचरमन्तिकं।
विविचन्देवसरसं कम्पनापतिना ततः। निरुध्यमाणः श्वभ्रागात्प्रधावंस्तोऽपतत् चितौ।
परिज्ञाय हतस्याथ स तस्य विजयी शिरः। विससर्जान्तिकं राज्ञः फलं जयतरोरिव।
तदप्यत्यद्भुतं कर्म्म भजन्भूभृत्कृतघ्नतां। न तस्य तुष्टस्तुष्टाव न चकार च सत्क्रियां।
अवजानन्नघानां स श्वभ्राख्यः कम्पनापतिः। तत्र कस्मात्त्वोत्सेक इति तं सन्दिदेश च। ८९५
सर्व्वप्रकारं तिलकः कृतघ्नं नृपतिं विदन्। अथ जातविरागः स द्रोहोन्मुख्यं समादधे।
सतां स्यादनुपालभ्याभजेद्दैमुख्यमेव चेत्। द्रोहेच्छया स निर्याय ययावग्राह्मनामतां।
सेवाशैथिल्यमयशोचितकृत्यकृत्वं नीतिप्रियाः प्रतिपदं समुदाहरन्तु।
मानोन्नतास्तु विहितस्तुतयः कृतघ्नैस्त्यक्त्वाप्यसन्यपरहितं घटयन्ति सन्तः।
पटं वह्निस्पर्शज्वलितमहिदष्टान्त्यचमरैः श्रुतिं यातं मन्त्रं पतननिरतां जीर्णवसतिं।
असेवाय्यं भूपं व्यसनविमुखं स्निग्धमजहन्न धीरोऽप्युत्थानोपहतमहिमा शर्म लभते।
इत्युपायं परित्यज्य न्याय्यं ये प्रभवे क्रुधि। द्रोग्धारः कथितास्तेभ्यः कोऽन्ये पापीयसां धुरि। ९००

जन्मान्येकोपकारित्वं पित्रोः सर्व्वत्र च प्रभोः । अधिकाः पितृघातिभ्यः पापिनः स्वप्रभुद्रुहः ।
निहते विजये शान्तप्रभावेष्वपरेष्वपि । नाशायि कस्यचित्स्वास्थ्यं तल्पेनाम्बरात्मना ।
कश्चित् क्षणं सोऽपसृतः प्रत्युतोग्रोपतापकृत् । विप्लवप्रसरोन्मातः सर्व्वं ऊर्द्ध्व इवोन्मदः ।
आनिनीषुस्ततोमल्लकोष्ठम्भिक्षाचरं पुनः । विषलाटान्तस्य पार्श्वे निजं सैन्यं व्यसर्जयत् ।
कम्पनेशस्तमायान्तं द्रोग्धाप्यावेदयंस्ततः । राज्ञा न्यषेधि तद्रोषादेवञ्च समदिश्यत । ७०५
एनं वर्त्मन्यनुद्वृत्ते त्यज हन्यामहं ततः । पुरोगतं मृगव्यान्तः शृगालमिव वाजिभिः ।
द्वैराज्यकार्य्यभंशभावेऽपि विधिचोदितः । कर्त्तव्ये तत्र शाठ्यं स नृपतिः प्रत्यपद्यत ।
सर्व्वराजसुखानेवं लब्ध्वा द्रोग्धाथ डामरान् । तिलकोऽकारयच्छैलमार्गैर्भिक्षाचरानुगान् ।
स्थाने स्थाने ततः प्राप ततः कर्णोपकर्णिका । जनानां या ख्यातिहेतुर्भिक्षोराज्ञस्तु भीतिदा ।
नासंस्कृतं वक्ति शिला भिनत्त्येकेषुणा दृश । अश्रान्तो योजनशतं यात्यायाति च सञ्चरन् । ७१०
इत्यादि तादृक् माहात्म्यं भिक्षुस्तुत्यानयञ्जनः । निखिलान्पलितश्वेतलम्बकूर्चोऽपि कौतुकं ।
भविष्यन्निव साम्राज्यस्यैक एकोऽर्थभारभाक् । वार्त्तामव्यवहर्त्तापि भिक्षोरूचेऽन्वियेष च ।
सरित्स्नानगृहे स्नान्तो वृद्धाः चोणनियोगिनः । राजवेश्मन्यगणिता नाममात्रं नृपात्मजाः ।
स्वभावदुर्जनाः केचिद्योधाश्चोत्साश्वकाङ्क्षिणः । कारयन्तोऽप्युपाध्यायाः शिष्यान् स्फिक्कषणं मखैः ।
वृद्धाः सुराको नर्त्तक्यो देवप्रासादपालकाः । वणिजोभुक्तनिक्षेपाः पुस्तकश्रुतितत्पराः । ७१५
प्रायोपवेशकुशलाः पारिषद्यद्विजातयः । शस्त्रिणः कार्षुकप्रायानगरोपान्तडामराः ।
सुखयन्तः स्वमन्योन्यं किमप्युत्पिञ्जवार्त्तया । एते प्रायेण देशेऽस्मिन् पार्थिवोपप्लवप्रियाः ।
॥ कुलकं ॥ प्रवर्द्धमानया भिक्षाचरागमनवार्त्तया । वेपमानोऽभवल्लोको दध्यौ चिन्ताञ्च भूपतिः ।
पृथ्वीहरस्तदुच्छन्ने गिरिकच्छे वसन्नथ । राजानीकं बभञ्जाजौ निर्गत्यातुल्यविक्रमः ।
अनन्तकाकयोर्वंश्यावानन्दद्वारनायकौ । चक्रे तिलकसिंहञ्च मन्त्रिणस्तेन पलायिनः । ७२०
निहते विजये ज्येष्ठे शुक्लपक्ष्यां पराभवं । तमाषाढस्य नृपतिः प्राप्याभूद्विवशः पुनः ।
तद्दौकिते गवां हृत्तमूर्द्धारोहेण भोगिनां । पिपीलककुलस्याण्डोपसंक्रान्त्येव वर्षिणां ।
प्रत्यासन्नं स राजाय दुर्निमित्तैरुपद्रवं । विचिन्त्य यातमुचितं कर्त्तव्यं प्रत्यपद्यत ।
तृतीयेऽह्नि शुचेः शुक्ले ततः प्रास्थापयत्सुतं । देवीमन्यकुटुम्बञ्च स कोटं लहरं पटुः ।
ताननुव्रजतस्तस्य सेतुभङ्गात्परिच्युताः । लोष्टद्विजातयो विप्रा वितस्तायां प्रपेदिरे । ७२५
स तेन दुर्निमित्तेन छिन्नोऽरूष्कपुरान्तिकं । अनुगम्याथ तान् द्वित्रैर्दिनैर्भूयोऽविशत्पुरं ।
विना पुत्त्रेण देव्या च स ततः प्रत्यपद्यत । प्रतापेन च लक्ष्म्या च परित्यक्त इवान्यतां ।
स भेत्ता व्यापदि शुभः प्रत्यभात्तस्य तद्दशात् । अभ्यन्तरप्रकम्पोऽपि सर्व्वाभ्युदयभङ्गभूत् ।
स्वयमुत्थापितानर्थः सोऽपि दर्पनरेन्द्रवत् । अद्यापि साम्ययोनीत्या तया साम्राज्यभोगभाक् ।
श्रावणे लाहरैर्योधैरानीय बलशालिनां । भिक्षुर्भड्डवराज्यानां डामराणामयार्थ्यत । ७३०

तेऽपि जन्या इव वरं श्वशुरालयसन्निभं । प्राविशयस्तं लहरमनुयान्तः ससैनिकाः ।
सभाजयित्वा तान्मल्लकोष्ठमुख्यानिजाम्भुवं । व्यसर्जयन् कम्पनेशप्रमाथायायुषे श्रियः ।
सर्व्वतः परचक्रेऽथ पर्य्यापतति पार्थिवः । संरक्षितुं प्रववृते पदातीनतुलव्ययः ।
तस्मिन्दुर्व्यसने राज्ञि वसुवर्षिणि सर्व्वतः । अकारि शस्त्रग्रहणं शिल्पिशाकटिकैरपि ।
नगरे सैन्यपतयः प्रतिमार्गमकारयन् । तुरगान्त्यस्तसन्नाहान् व्यायामसमरोन्मुखाः । ७३५
मयग्रामस्थिते भिक्षावसरेश्वरवासिभिः । राजसैन्यैः समं युद्धमरचन्नेत्य लाहराः ।
तैर्हिरण्यपुरोपान्ते प्रबन्धारब्धसङ्गरैः । श्रीविनायकदेवाद्या राजसेनाधिपा हताः ।
आद्य एव रणे याता राजानीकाद्विरोधिनः । लब्ध्वा वराश्वामायातामसमन्यन्त नृपश्रियं ।
राजधान्यन्तिके क्षिप्तिकाख्यायाः सरितस्तटे । पृथ्वीहरस्सुकाराजावशेषसुभटव्रजं ।
तिलके विजयेशस्थेऽप्यरचन्नेत्य डामराः । महत्सरित्तटे युद्धं खड्गाचीहोलडीकसः । ७४०
ते रुद्धनगरा दाहं क्वापि क्वापि च लुण्ठनं । वास्तव्यानां विदधिरे विशदन्तो दिवानिशं ।
निर्य्यत्सतुर्य्यपृतनाः प्रविशच्छस्त्रविक्षताः । क्रन्दद्भृतात्मनिवहाः प्रधावच्छस्त्रसैनिकाः ।
प्रसरत्पत्तिनिवहा वहदाशुगतारिकाः । संचार्य्यमाणसन्नाहाः कृष्यमाणतुरङ्गमाः ।
आसन्नशतसंमर्दप्रसरत्पांसवोऽनिशं । दिने दिने राजपथा उपप्लवविशृङ्खलाः ।
प्रतिप्रत्यूषमायातसु सर्व्वारम्भेण वैरिषु । अद्य ध्रुवं जितो राजेत्यज्ञायि प्रतिवासरं । ७४५
धीरः कः सुस्सलादन्यो न यः प्रत्यभियोगिनां । कृच्छ्रेणापि स्वराष्ट्रेण कुष्टं दर्पादुपार्थ्यन ।
शणपथ्यञ्जनं शल्योद्धारं यद्वा धनार्पणं । शस्त्रक्षतानां सततं कारयन् स व्यलोकयत ।
प्रवासवेतनप्रीतिदायभैषज्यदत्तिभिः । शश्वल्लोके नरपतेर्निःसङ्ख्योऽभूद्धनव्ययः ।
युद्ध एव विपन्नानां क्षतानाञ्च स्ववेश्मसु । नित्यं नरतुरङ्गानां सहस्राणि क्षयं ययुः ।
तुरङ्गवहलैर्हन्यमानानृपबलैस्ततः । लाहरा मल्लकोष्ठाद्या मन्दोद्रेकत्वमाययुः । ७५०
भिन्नैराभ्यन्तरैरेव दत्तसञ्ज्ञाः सुरेश्वरीं । ते निर्य्युर्भिक्षुसञ्ज्ञेन तन्मार्गेण युयुत्सवः ।
सेतुना स्वल्पपार्श्वेन धन्विप्रायैः सरोन्तरे । अत्रापि तैर्जयोऽमोभिर्वाजिभ्यश्च भयं रणे ।
द्रोग्धाथ कम्पनेशस्स निवसन्विजयेश्वरे । वलितान् डामरान्छिन्ने मन्दोद्रेकं स्फुरन्मणे ।
लवन्यलोको मान्त्रासीदशक्तिं मेऽथ गच्छतः । पृष्ठे निपत्य माकार्षीद्वृथा चेति विचिन्तयन् ।
स प्रभावं दर्शयितुं प्राप्तस्य विजयेश्वरं । अजराजस्य सेनायां व्यावृत्य प्रस्थितोऽभवत् । ७५५
सार्द्धं शतद्वयं तस्य योधानां हतवानपि । संत्यज्य विजयक्षेत्रं द्रोग्धाक्रन्नगरं ययौ ।
पथि नान्वसरन् भीत्या भयात्त डामराः क्वचित् । नदन्तोऽद्रिशिरोरूढामार्गान् सर्व्वांश्च तत्यजुः ।
त्यक्ता मडवराज्यं स प्रविष्टो व्यसनान्तरं । पूर्व्वचेष्टः स्मरन्भूपं जहास कृतसत्क्रियं ।
इतरामात्यवत् स्वामस्थितोऽव्याजोनिजोचितं । रणे प्रादर्शयत्किञ्चित्साक्षिभूतइव स्थितः ।
ततो मडवराज्यं ते समस्ता एव डामराः । अभ्येत्य प्रत्यपद्यन्त तां महासरितस्तटीं । ७६०

उपायाः सामभेदाद्या रिपुचक्रे प्रयोजिताः। राज्ञो विफलतां जग्मुर्वैहिरात्रैः प्रकाशिताः।
क्रान्ततत्तन्महीपालमण्डलस्यापि भूपतेः। फलं दोर्व्विक्रमस्यायमासीन्नगररक्षणं।
अमरेशे द्वारपतिः सार्द्धं तस्थौ नृपात्मजैः। राजानवाटिकोपान्ते राजस्थानीयमन्त्रिणः।
दूरद्वीपान्तरगता इव स्वीचक्रिरे नृपात्। ते प्रयासदनभूरि नचायुध्यन्त कुत्रचित्।
कटका विद्विषां सर्व्वे पर्य्यायेण जयाजयौ। लेभिरे विजयादन्यन्नतु पृथ्वीहरः क्वचित्। ७६०
मधुमत्तेन तेनासौ वेतालेनेव वल्गुना। प्रायोवराबराख्ये ग्रस्ता नृपचमूभटाः।
उदयस्य क्षटिकुलोद्भूतस्यैकस्य पप्रथे। युद्धे यस्यापि शौर्य्यमेकस्मिंस्तु तदाहवे।
पृथ्वीहरस्यापजह्रे द्वन्द्वयुद्धाभिमानिना। प्रहृत्य कृष्टकूर्चेन कराग्रेणासिवल्लरी।
युद्धे पुरोपकण्ठेषु वर्त्तमाने शराहताः। स्त्रीबालाद्या अपि वधं प्रमादात्प्रतिपेदिरे।
एवं जनक्षये घोरे वर्द्धमाने किमप्यभूत्। अनुत्साहान्नृपोव्यूहादपि निर्गन्तुमक्षमः। ७६५
तस्मिन्निरुद्धसञ्चारे सोमपालस्तदन्तरे। अलुण्ठयच्चाटलिकां लब्धरन्ध्रो ददाह च।
सिंहे गजाहवव्यग्रे तद्गुहायपरिग्रहे। समयोग्यामगोमायोः पौरुषस्य पुरोऽस्तु कः।
राष्ट्रद्वयोपमर्देन राजा निःसद्मेन सः। तेन यथाविधेयोऽभूत्स्वमपि द्रष्टुमक्षमः।
सर्व्वानौचित्यबहुलः सर्व्वव्यसनदुःसहः। सर्व्वदुःखमयः कालस्तस्यावर्त्तत कोऽपि सः।
तथाप्यस्खलिते तस्मिन् हितव्याजाद्धितापहः। राजानवाटिकाविप्रैः प्रायश्चक्रे विरागिभिः। ७७०
प्रार्थयन्ते स्म ते युद्धे तटस्थास्तव मन्त्रिणः। गृहीत्वा सीविरेतेभ्यो लोहराद्रौ विसृज्यतां।
न चेद्याप्यदवैतस्मिन् व्यसने स्थायिताकृते। कोदध्यास्म परैर्नीतं प्रत्यासन्नं शरत्फलं।
न प्रत्यभैत्सीत्ताटस्थ्यं यत्कालापेक्षया नृपः। तस्मिंस्तैर्दर्शिते शङ्कां निखिला मन्त्रिणो दधुः।
शक्तिस्तृणं कुञ्जयितुं न यस्य स तदार्थिभिः। विसूत्रव्यवहारत्वं निन्ये राजा शठद्विजैः।
कर्मस्थानोपजीव्युग्रपारिषद्यादिसङ्कुला। तत्पार्श्वात् प्रययौ वृद्धिमन्या सेनेव वैरिणां। ७७५
तत्साम्वनक्षणे तैस्तैः प्रमादैरुत्थितैरगात्। देशो व्याकुलतां क्रूरं लुण्ठिश्चाघटतोत्कटा।
अदृष्टपार्थिवास्थानैः शठैरव्यवहारिभिः। ऊचे तैः सान्त्वयन्राजा दुःस्थितस्तत्तदप्रियं।
लवन्यविप्लवाद्राज्ञा सोऽधिकोविप्लवोऽभवत्। गलरोगः पादरोगादिव तीव्रव्यथावहः।
काञ्चनोत्कोचदानेन तन्मध्येऽधिकचक्रिकां। कांश्चित् स्वीकृत्य स प्रायं कथंचिद्विन्यवीवरत्।
विजयोर्व्वशीसोमादिशस्त्रिवंश्योहठात्पुरं। प्रविशन् भिक्षुसेनानीरश्वारोहैरहन्यत। ७८०
तेनातिरभसात् स्थानं भित्त्वा प्रविशता पुरं। प्रायशः कृत एवाभूत्तदा राज्यविपर्य्ययः।
ईषन्मन्दप्रतापेन नचान्येष्वपि भूपतेः। पृथ्वीहरेण सन्धित्सा भेदैश्चौः सम्प्रकाशिता।
तस्मिन् धुर्य्ये जिगीषूणां सन्धित्सौ भूभुजा समं। द्वयेऽपि सैनिकाश्चान्तं तममन्यन्त विप्लवं।
राज्ञा नागमठोपान्तमानेतुं प्रहितांस्ततः। चौनमात्यान् स्वविश्वस्तानागच्छन् छद्मनावधीत्।
धन्वियो सम्मको गङ्गो द्विजोरामस्य वारिकः। तेषां तिलकसिंहस्य पार्श्वे भृत्यास्त्रयो हताः। ७८५

गोविन्दक्ते गोरकस्तु हतोभूत्पतिं स्मरन्। दृष्टे त्वाक्रन्दिनि परैः प्रहतं करुणोज्झिते।
तद्देशसं श्रुतवतो देशः सर्व्वो विरागकृत्। राजधान्यन्तरे राज्ञो दुष्कृतिमुखरोऽभवत्।
दृषे शुक्लचतुर्द्दश्यां तद्विपर्य्यस्तमण्डलं। अतिवाहयितुं कष्टं दिनम् सौम्यमहीपतेः।
अथ सञ्जातवैक्लव्यो नेदमस्तीति चिन्तयन्। किङ्कृत्यमित्यसदृशानपि पप्रच्छ भूपतिः।
विषमे वर्त्तमानस्य तस्य कश्चित्स नाभवत्। अन्तर्जहास योनान्तर्वैहिर्योन तुतोष वा। ७९०
तमतिव्यसनापातं तस्यामोढवतस्ततः। अभजन्त क्रमाद्भृत्याः प्रतिपक्षसमाश्रयं।
कम्पनेशस्य त्रिम्बाख्यो भ्राता द्वैमातुरो हि तान्। समाश्रयद्द्वारकार्य्यं तद्दत्तं प्रत्यपद्य।
गूढं जनकसिंहेन दूतान्प्रेषयताभिशं। भिक्षवे भ्रातृतनया वाग्दत्ता निरवर्त्तत।
असिवाजितनुत्रादि हृत्वा भिक्षाचरान्तिकं। अश्ववारा व्यभाव्यन्त प्रयान्तः प्रतिवासरं।
किमन्यद्धुर्य्यमेवाह्नि येऽवमन् पार्थिवान्तिके। अलक्ष्यन्तागतो भिक्षोस्ते निशायां गतत्रपाः। ७९५
यतो याति ततश्चैति लोकोव्यक्रमतन्त्रितः। इति राजनि कुण्ठाज्ञे कोऽप्यजृम्भत विप्लवः।
डामरैः शरदुत्पत्तौ नीतायां सर्व्वतस्ततः। कान्दिशीकोऽभवल्लोकः कृत्स्नो धनजनोज्झितः।
प्रयाते सुस्सलनृपे स्वर्णपूर्णामिमां महीं। भिक्षुः कुर्य्यादिति मृषा लोकस्यासीद्विनिश्चयः।
क्व दृष्टा त्यागिता भिक्षोः कुतोवा तस्य सम्पदः। परामर्षणा नेति गतानुगतिको जनः।
सन्दृश्यते परिवृता चिरमम्बरेण रेखा स्वयं न खलु या शशिनो नवस्य।
तस्यां जनः प्रकुरुते नतिमम्बरार्थी धिग्लुब्धतामपसरत्सदसद्विचारां। ८००
विजये राजवर्य्याणां भुग्नग्रीवइवाभवत्। भिक्षुपक्षजये लोको हृष्यन्नासीद्विशृङ्खलः।
द्विजकौलेयकन्यायो राजडामरसङ्गयोः। ततोऽन्योन्यभयभ्रश्यद्वैरयोरुदजृम्भत।
राजाभ्यन्तरभेदेन राज्ञस्थैर्य्येण चारयः। ऐच्छन् पलायितुं भीता अज्ञातान्योन्यनिश्चयाः।
बान्धवानपि दुध्रुक्षूनविश्वस्तो विदन्नृपः। स्थितौ पलायने वापि श्रद्दधे न स्वजीवितं।
तं सहाव्यसने वासःस्वर्णरत्नादिवर्षिणं। नाभ्यनन्दन् गृहीतार्थानिनिन्दुः शस्त्रिणः परं। ८०५
नष्टोऽयन्नैष भक्तिनेत्यभीतैर्जल्पतो जनात्। वचोरोगी भिषक्त्यक्त इव शृण्वन्स विव्यथे।
अप्ययोपस्थितं किञ्चित्तदादेशेन ढौकयन्। सविलासं सर्व्वगञ्ज तमैच्छिष्टानुगव्रजः।
सैन्यएवाभवत्तस्मिन् क्षणे साहसिकोऽप्यहो। स्वगृहादपि निर्गन्तुं नाशकद्भययाकुलः।
यावदैच्छन् सङ्गभेदाच्चलितुं डामरव्रजाः। स्वैरेव शस्त्रिभिः सर्व्वनिर्न्ये भूभृद्विसूत्रतां।
ते कृष्टशस्त्राद्वाराणि रुन्धतो नृपमन्दिरे। प्रवासवित्ते लब्धव्ये प्रायं चक्रुः पदे पदे। ८१०
ददद्भूनं धनेशश्रीर्दैयादप्यधिकं नृपः। तेषामभिमतो नाभूदवमानाभिलाषिणां।
मर्त्तुं चिचलिषुस्तीर्थं वणिकैरिव सामयः। स हृत्वा निखिलैर्द्देयं दापितोऽथ गतत्रपैः।
स्थानपालैरपि प्रायकृद्भिराक्रम्य दापितः। धनं सुवर्णभाण्डादि चूर्णीकृत्य विशृङ्खलैः।
सट्टङ्कवालं नगरं ततः क्षुभ्यत् क्षणे क्षणे। सोऽभूदब्धिमिवोद्धृत्तं न संस्थापयितुं क्षमः।

एकदा प्रातरेवान्येद्युर्द्वारः स शस्त्रिभिः। सर्व्वतः क्षोभमागच्छन्नगरं स व्यलोकयत। ८१५
ततः क्षोभं शमयितुं जनकं नगराधिप। पुरभ्रमार्थमादिश्य चलितुं क्षणमैक्षत।
कथञ्चिद्दानमानाभ्यां तानावर्ज्यापि शस्त्रिणः। सावरोधः स सन्नद्धो राजधान्या विनिर्ययौ।
अङ्गनान्तुरगारूढो वहिर्यावन्न निर्ययौ। राजधान्यन्तरे लुण्ठिस्तावत्प्रारम्भि तस्करैः।
अददन् केऽपि केऽप्युच्चैरनदन् केऽप्यलुण्ठयन्। तद्भृत्यावाज्यमुत्सृज्य तस्मिन् व्रजति शस्त्रिणः।
विशृङ्खलास्तत्पाकोपशङ्काभिः शस्त्रिणां नृपः। सहस्रैः पञ्चषैरासीद्व्रजन्ननुगतोऽध्वनि। ८२०
वर्षे षट्सप्तते कृष्णषष्ठ्यां मार्गे विनिर्गतः। याममात्रावशेषेऽह्नि सम्पत्याद्रोहविह्वलः।
निर्जैर्हरद्भिरश्वादि त्यज्यमानः पदे पदे। स प्रतापपुरं प्राप क्षपायामल्पसैनिकः।
तिलकस्य पुरोगत्वा प्राप्तस्याग्रस्य विश्वसन्। तत्र वन्ध्यारिवाश्रूणि चिरं दुःखात्क्षणोऽमुचत्।
द्रोहं न कुर्य्यादेवं मे चिन्तयित्वेति सत्वरं। वेश्म डक्कपुरेऽन्येद्युस्तस्य स प्राविशत्स्वयं।
तद्गौरवेण स्नानादि कृत्वेच्छन्सैन्यसंग्रहं। प्राविशत् क्रमराज्यं स कर्तुं भूयोजनोत्सुकः। ८२५
गृहं युयुत्सुकल्याणवाश्चादीनथ डामरान्। आनीय स पुरस्तस्य धैर्य्यभ्रंशमकारयत्।
गृहान्तेन तया युक्त्या निष्कृष्टः स ततो ययौ। स्वीकुर्व्वन् स्वर्णदानेन दस्यून्मार्गविरोधिनः।
प्रयान्तं ततएवोऽज्झीत्तिलकस्तत्सहोदरः। प्रयाणमेकमानन्दो दाक्षिण्यादन्वगात्तु तं।
भृत्यत्यक्तः स दानेन विक्रमेण च तस्करान्। अगान्मार्गेण शमयन्नायुःशेषेण रक्षितः।
त्राणं सिंहनखाद्द्रुमाद्रिगहनस्यारादरण्यस्य ये तेषां वालगताश्रयादपि भवेत्कालातिवाह. क्रमात्।
ये दन्ताः करिणां रणप्रहरणं तेऽप्याप्नुयुर्दीव्यतां क्रीडायां करताडनानि न दृढा शौर्य्यस्य रूढिः क्वचित्। ८३०
जन्तूनां विक्रमत्यागयशःप्रज्ञादयो गुणाः। भवे चित्रस्वभावेऽस्मिन्न भवेयुरभङ्गुराः।
भास्वानप्याप्यमृदुतां भिन्नावस्थां दिने दिने। तां तामायाति जन्तूनां कः प्रभावेषु निश्चयः।
अशक्नुवन्नचलिकामरिसृष्टां निरीक्षितुं। मन्युनिःशब्दसैन्योऽद्रिमारुरोह स लोहरं।
स्वकुलत्रमपि द्रष्टुं तत्रातित्रपयाक्षमः। शयनीयविमुक्ताङ्गस्तप्यते स्म दिवानिशं।
दत्तदीपादनिर्गच्छन्नन्तर्गेहाद्दिनेष्वपि। दाक्षिण्यादशनं प्रादाद्भृत्यानां भोजनक्षणे। ८३५
विलेपनानि नास्प्राक्षीन्नारुरोह तुरङ्गमान्। गीतनृत्यादि नैक्षिष्ट सुखगोष्ठीर्न चादधे।
तान्यंस्ताटस्थ्यमौखर्य्यैर्क्षणद्रोहादिदर्शितं। एकेनैकेन च स्मृत्वा स्मृत्वा देव्यै न्यवेदयत्।
अन्वगात्स्वां भुवं त्यक्त्वा मामेतेऽन्वगुरित्यपि। निन्ये वृद्धिं परार्ध्यश्रीः स दाक्षिण्याङ्कनार्पणैः।
कश्मीरेषु गते तस्मिंस्तदैवाखिलमन्त्रिणः। पुराणि राजधान्येव ससैन्याः समगंसत।
मध्यस्थारोहमासन्नतन्त्रिपौरादिसम्मतः। तेषां जनकसिंहोऽभूदग्रणीर्नगराधिपः। ८४०
स भिक्षोर्मल्लकोष्ठाद्यैरापैः कृतगतागतैः। विश्वासाय सुतभ्रातृसुतौ नीतिप्रदायितः।
प्रावर्त्तत भयभ्रश्यत्स्त्रीबालाद्याहते पुरे। अराजकाथ रजनी सर्व्वभूतभयावहा।
निहताः केऽपि मुषिताः केऽपि केऽप्यरिभिः पुरे। दग्धगेहा व्यधीयन्त दुर्व्वलाराजवर्जिते।

सैन्यैरन्येद्युरुन्मादैर्निरुद्धाखिलदिक्पथः । सिन्दूरारुणपुण्ड्रांसादिमण्डलमध्यगः ।
विकोशशस्त्रकदलीषण्डदुर्लक्ष्यविग्रहः । मृगेन्द्र इव लोकस्य भयकौतूहलावहः । ८४५
वीरपट्टाञ्चलश्लिष्टैर्यौवनोद्रेचितैः कचैः । अबद्धैः शोभितः पृष्ठे जयश्रीबन्धपट्टल्लैः ।
कुण्डलद्योतिना स्निग्धधवलायतदृष्टिना । प्रत्यग्रश्मश्रुणा चारु चन्दनोल्लेखशोभिना ।
ताम्राधरेण वक्त्रेण श्रीसान्निध्याधिकत्विषा । पक्षपाति विपक्षाणामपि सम्पादयन्मनः ।
असेर्विकोशस्यान्तःस्थां श्रियमश्मेन वल्गता । केसरच्छटया चापि चामरेणेव वीजयन् ।
पदे पदे निवृत्ताश्वः सामन्तैरुपपादिता । स्वीकुर्व्वन्सर्व्वणां भिक्षुः प्राविशन्नगरं ततः । ८५०
कुलकं ॥ तस्यार्भकस्य धात्रीव पृष्ठस्थोमल्लकोष्ठकः । प्रययावप्रगल्भस्य सर्व्वकार्य्योपदेष्टृतां ।
अयं पितुः प्रियस्तेऽभूत्स्वमस्याङ्के विवर्द्धितः । राज्यस्यायं मूलमिति प्रत्येकं समदर्शयत् ।
गृहं जनकसिंहस्य प्राक्कन्यावाप्तयेऽविशत् । राजलक्ष्मीं स सम्प्राप्तुं राजधानीं ततः परं ।
दूरनष्टे कुले तेन पुनरुद्रेचिते यथा । बद्धास्थोगर्भकेऽपत्ये स्त्रीजनोमत्रहास्यतां ।
दृष्टेन तादृशा भिक्षोरिति वृत्तेन शत्रुषु । चित्रस्थेष्वपि साशङ्का नोपहास्या जिगीषवः । ८५५
प्रावर्त्तन्त धनाधीशश्रियः सुस्सलभूपतेः । कोषेण नीतशेषेण त्रिलासा नवभूपतेः ।
वाजिवर्म्मासिभूयिष्ठां राजलक्ष्मीं विभेजिरे । राजडामरलुण्ठाकमन्त्रिणो यन्त्रणोज्झिताः ।
पुरे स्वर्ग इवास्वादं भोगानामुपलेभिरे । दस्यवो ग्रामभोगार्हाः पिशाचा इव गल्वराः ।
आस्थानेन बभौ भूभृद्ग्रामीणैः सर्व्वतो वसन् । प्रलम्बकम्बलप्रायविलासावरणैः समं ।
भिक्षाचरस्यासम्भाव्यप्रादुर्भावतया प्रथां । डामरा अवतारोऽयमित्यन्यां निन्यिरे प्रथां । ८६०
राज्यस्यानन्यदृष्टस्य कर्त्तव्येषु मुमोह सः । अदृष्टकर्म्मेव भिषग्भैषज्यस्य पदे पदे ।
शनैर्जनकसिंहेन कृतभ्रातृसुतार्पणं । कम्पनाधिपतिर्दत्तकन्योऽपि तमशिश्रियत् ।
जज्ञोराजपुरीयस्य राज्ञः कटकवारिकः । पादाग्राधिकृतोऽद्राक्षीत् स्वार्थमर्थं न तु प्रभुः ।
सर्व्वाधिकारिणं राजलक्ष्मीर्बिम्बमशिश्रयत् । राजशब्दस्यैव पात्रमभूद्भिक्षाचरः परं ।
वेश्यायत्तीकृतैश्वर्य्यः प्राकृताचारभागपि । अन्तरङ्गः सदसतां किञ्चिद्बिम्बस्तदाभवत् । ८६५
द्वैमातुरो दर्प्यकस्य भ्राता सार्य्यशौर्य्यभूः । नृपान्तरङ्गज्येष्ठत्वं ज्येष्ठपालोऽप्यशिश्रियत् ।
मन्त्रिणो भूतविश्वाद्यास्तस्य पैतामहा अपि । लक्ष्मीसरोजिनीभृङ्गा बहवोऽन्ये जजृम्भिरे ।
मुग्धे राज्ञि प्रमत्तेषु मन्त्रिमुख्येषु दस्युषु । उत्थानोपहतं राज्यं नवत्वेऽपि बभूव तत् ।
स्त्रीभिर्नवनवाभिश्च भोज्यैः प्राज्यैश्च रञ्जितः । भिक्षुर्नैच्छिष्ट कर्त्तव्यं सुखानुभवमोहितः ।
स सुखानुभवप्राप्तच्छिद्रान्धो विजयोद्यमे । स्वैः प्रेरितः सभामध्ये खड्गमैक्षन्मदालसः । ८७०
दर्पेण सचिवे वाचं कथयत्यनुकम्पिकां । न स चुक्रोध मुग्धस्तु पितरीवान्वरज्यत ।
निष्प्रतिष्ठैः सेव्यमानो वेश्याच्छिद्रैरशिष्टवत् । अङ्गा चेटोचिताश्चेष्टा विटैः प्रैर्य्यत सेवितुं ।
पानीयरेखाप्रतिमस्थैर्य्यस्याखिलवस्तुषु । तस्याप्रमाणवचसः सेवाम्पुणखिन्नोजकः ।

यदूचुः सचिवास्तत्तामन्ववीचत भूभृतः । वचः सुचिरगर्भस्य तस्य किञ्चित्समुद्ययौ ।
सचिवैः स्वगृहानीत्वा दत्तभोज्यः स मुग्धधीः । धनी विपन्नपिटकइव प्रमुषितो विटैः । ८७५
आहारमुष्टिं विम्बस्य गृहे विम्बनितम्बिनी । तस्याश्वस्येव वडवा रागिणोऽप्यगताहरत् ।
वञ्चयित्वा दृशौ पत्युर्दर्शितैः स्मेरया तया । कुचकचकटाक्षैः स लुप्तधैर्य्योऽव्यधीयत ।
पृथ्वीहरोमल्लकोष्ठश्चान्योन्योद्भूतमत्सरौ । क्षोभं व्यधत्तां संरब्धौ राजधान्याः क्षणे क्षणे ।
स्वयं राज्ञा सुतोद्वाहं गृहान् गत्वापि कारितौ । तावन्योन्यमुपेक्षेतां न मन्युं विक्रमोन्मदौ ।
अथ पृथ्वीहरगृहात् कृतोद्वाहः स्वयं नृपः । जातामर्षेण सुस्पष्टं मल्लकोष्ठेन तत्यजे । ८८०
दृप्यन् जनककाणोऽपि सम्बन्धापेक्षयोर्ज्जितः । विरागभोजानन्दादीन् भिन्ने ब्राह्मणमन्त्रिणः ।
तटस्थोद्रोग्धृदुर्बुद्धिप्रायभृत्यविधेयधीः । विसृष्टव्यवहारत्वं निन्द्यत्वञ्च ययौ नृपः ।
डामरस्वामिके लोके प्रभवेत्कोन विप्लवः । ब्राह्मणोधर्षणं यत्र श्वपाकेभ्योऽपि लेभिरे ।
अराजकेऽथवा भूरिराजके मण्डले तदा । समस्तव्यवहाराणां स्फुटं तु चोट पद्धतिः ।
द्वीन्नाराभेद्यवे राज्ये निष्प्रचाराः पुरातनाः । तच्छतेन तु नव्यानामशीतेरभवत् क्रयः । ८८५
राजपुर्य्यध्वना विम्बं ससैन्यमथ पार्थिवः । लोहरं प्राहिणोत्कर्तुं सुस्सलास्कन्दमुन्मदः ।
तुरुष्कसैन्यमाभिन्ने सोमपालेन सोऽर्थितः । साहायकाय सस्मारे विस्मये मित्रतां गते ।
सन्दर्श्य पाशमेतेन बद्धाकर्ष्यामि सुस्सलं । इत्येकएकोऽश्वारोहस्तुरुष्कैः समकथ्यत ।
कश्मीरकखशम्लेच्छयोधव्यतिकरोऽभवत् । न केषां नाम सम्भाव्यो विश्वोत्पाटनपाटवः ।
भिक्षाचरः प्रयाते तु विम्बे विगलिताङ्कुशः । न कासामव्यवस्थानां मूढः स्थानमजायत । ८९०
स निमन्त्र्य निजं नीतो गृहं विम्बावहद्भुया । भोगसम्भोगदानेन धर्षया पर्य्यताप्यत ।
कार्य्यापेक्षापि तस्यासीन्न मन्त्रिस्त्रीसमागमे । कौलीनभीतेरासन्ननिपातस्य कथैव का ।
आयूनानुगुणं भोज्यं कुम्भकांस्यादिवादनं । तच्च प्राकृतकर्म्मैव न स जिह्राय शीलयन् ।
शनैःशनैस्ततो नष्टावष्टम्भस्य महीपतेः । काले भोज्यमपि प्राप्यं नासीद्गलितसम्पदः ।
तादृक् प्रलोभकौर्य्यादिकान्तो यः प्रागगर्ज्जत । स सुस्सलोऽहि लोकानामभिगम्यत्वमाययौ । ८९५
धनमानादिनाशं या विरक्तास्तस्य चक्रिरे । काङ्क्षन्ति स्म च सोत्कण्ठास्ताएवागमनं प्रजाः ।
प्रत्यक्षदर्शिनोऽद्यापि माश्चर्य्यावयमस्य यत् । ताः प्रजाः कोपिताः केन केन भूयः प्रसादिताः ।
क्षणादैमुख्यमायान्ति साम्मुख्यं यान्ति च क्षणात् । न हेतुं कश्चिदीक्षन्ते पशुप्रायाः पृथग्जनाः ।
ते मल्लकोष्ठजनकाद्योद्दूतैर्विसर्जितैः । त्यक्तराज्यं पुनर्भूपं जयोद्यममजिग्रहन् ।
अथोसुत्रायहारेऽथ लोकैष्टिकस्य लुण्ठिते । तत्रत्या ब्राह्मणाः प्रायं नृपमुद्दिश्य चक्रिरे । ९००
तैश्चान्यैश्चाग्रहारेस्थ संश्रितैर्विजयेश्वरे । राजानवाटिकाप्राणे नगरेऽपि न्यविक्षत ।
भोजानन्दादिभिर्मुख्यद्विजैरुत्तेजितास्ततः । गोकुलेऽपि व्यधुः प्रायं निरन्नाशयपार्षदः ।
युग्यार्पितैः सितच्छत्रवस्त्रचामरशोभिभिः । विबुधप्रतिमावृन्दैः सर्व्वतश्छादिताङ्गनः ।

काहलाकाख्यतालादिवाद्यघोषाभिनन्दिमुखः। अदृष्टपूर्व्वो ददृशे पारिषद्यसमागमः।
ते सान्त्वमाना भूभर्त्तुर्दूतैरत्नेकवादिनः। न विना लम्बकूर्चं नो गतिरित्यन्वबन्धत॥ ९०५
ते हेलया लम्बकूर्चाख्यया सुस्सलभूपतिं। तं निर्द्दिशन्तोऽमन्यन्त क्रीडापुत्त्रकसन्निभं।
प्रायम्प्रेक्षितुमायातैः पौरैः सह दिने दिने। अमन्यत काङ्क्षां न व्यवस्थां पार्षदां गणः।
नृपापातभयात् क्षोभं मुहुर्मुहुरुपागतैः। पारिषद्यैश्च पौरैश्च योद्धुमाश्लीयतोद्धतं।
ततो जनकसिंहस्य नगरं तन्मतेन तत्। सर्व्वं सुस्सलदेवस्य हस्तन्नमानयनेऽभवत्।
प्रायाद्दारयितुं पूर्व्वमग्रहारद्विजान्नृपः। प्रययौ विजयक्षेत्रं तत्रासीच्च हतोद्यमः॥ ९१०
तन्मध्ये निखिलांस्तत्र डामरांस्तिलकोऽब्रवीत्। व्यापादयेति तं तत्र सत्कार्यो न सोऽग्रहीत्।
राज्ञ एव मुखाद्दृष्ट्वा लवन्यास्तद्दिशस्ततः। तस्मिन् पृथ्वीहरमुखास्तत्रसुस्सिलकात्पुनः।
भागिनेयं प्रयागस्य कर्त्तारं लवकाभिधं। बन्धुमेकत्र नृपोऽप्यलिगधं प्रययौ स तु सुस्सलं।
ततः प्रविश्य नगरं स निपत्याखिलं जनं। अकारणविरक्तानां पौराणां प्रददौ सभां।
युक्तमप्युक्तवांस्तत्र हतोक्तिः शठबुद्धिभिः। पौरैः स चक्रे नाख्येव भेषजं विप्लवस्पृशां॥ ९१५
अत्रान्तरे सोमपालविम्बाद्या लहरे स्थिताः। योद्धुं सुस्सलभूपं ते सर्व्वे पर्णोत्समाययुः।
तस्य पद्मरथो नाम राजा का लञ्जरेश्वरः। मैत्रीं संस्मृत्य कह्लाद्यो गाययौ तत्कुलोद्भवः।
सोऽथ शुक्लत्रयोदश्यां वैशाखे बलिभिः समं। तैर्मानी सुस्सलो राजा सङ्ग्रामं प्रत्यपद्यत।
प्रेक्षकैर्व्वर्ण्यतेऽद्यापि स पर्णोत्सान्तिके रणः। तस्याकुतोऽवमानाग्निज्वालनप्रथमक्षणः।
कुतोऽप्येत्य निजस्फारस्ततःप्रभृति भूपतिं। तमशून्यं पुनश्चक्रे मृगेन्द्र इव काननं॥ ९२०
भयस्खलितपाशानां कालपाशैः समागमं। स चकार तुरुष्काणां क्षणात्पुष्कलविक्रमः।
मातुलं सोमपालस्य निन्ये कवलतां बली। रणे तत्कोपवेतालो वितालासरितस्तटे।
किमन्यदल्पसैन्यस्य बहूनपि स तान् व्यधात्। हतविद्रुतविध्वस्तयथात्मपरिपन्थिनः।
कश्मीरकाणामौचित्यं किं नाभूत् स्वामिनो द्रुहः। एकस्य ये रणं नष्टाः कुकीर्त्तिमपरस्य च।
तुरुष्कैः सह यातेऽथ सोमपाले गतत्रपाः। विम्बं काश्मीरकास्त्यक्त्वा राजान्तिकमशिश्रियन्॥ ९२५
व्याधनूंषि शिरांस्यन्य नमयन्तोऽहुताश्रयाः। कुलप्रभोः पुरः स्पष्टं न ते धृष्टा ललज्जिरे।
आगच्छद्भिस्ततः पौरैर्डामरैश्च समं नृपः। प्रतस्थे दिवसैर्द्वित्रैः कश्मीराभिमुखः पुनः।
राजपुत्त्रः साहदेविः कल्हणो विश्रुतः प्रभोः। डामरान् क्रमराज्यस्थान् संघट्टाग्रेसरोऽभवत्।
यएव प्रथमं राजा सैन्याद्भिक्षुमशिश्रियत्। सएव विम्बो राजानं तमुत्सृज्य समाययौ।
अन्ये जनकसिंहस्य सम्मता मन्त्रितन्त्रिणः। प्रत्युच्चक्रो व्यलोकयन्त नृपतिं निरपत्रपाः॥ ९३०
काण्डिलेत्राभिधग्रामजन्मा शस्त्री सुलक्षणः। भाङ्गिले कश्चिदभवत्कुन्ये कान्तोपवेशनः।
भिक्षुर्व्वितीर्णमार्गं तं सुस्सलान्तिकगामिनः। लोकस्याचान्तरे जेतुं सहपृथ्वीहरो ययौ।
जितवांस्तं बबन्धेच्छां निहन्तुं सुस्सलोन्मुखं। क्रोधाज्जनकसिंहस्य वार्त्तां तां च विवेद सः।

नगरस्थेन तेनाथ पौराश्वारोहनन्दिनः । सङ्घट्याखिलान् भिक्षोः प्रातिपक्ष्यमग्राह्यत ।
जानंस्तेनाहृतं राज्यं ततो भिक्षाचरो नृपः । पृथ्वीहरेणानुयातो नगरं सहसाविशत् । ९३५
सेतौ सदाशिवायत्ते तत्सैन्यैः सह सङ्गरं । कुर्व्वं जनकसिंहोऽथ सान्त्वमानोऽपि सोऽग्रहीत् ।
द्रष्टुं जनकसिंहस्य योधानां वल्गतां महात् । अविश्वस्यपराभूतिं मुहूर्तः समजायत ।
अलकेन समं पृथ्वीहरस्तक्षाटसूनुना । अन्येन सेतुना तीर्त्वा तस्य सैन्यमनाशयत् ।
तस्याश्वारोहपौरेषु विद्रुतेषु सबान्धवः । नक्तं जनकसिंहोऽथ पलाय्य लहरं ययौ ।
भिक्षुपृथ्वीहरौ प्रातस्तत्पृष्ठग्रहणोद्यतौ । तत्पश्चान्तेऽश्ववाराद्याः पृष्टा भूयोऽप्यशिश्रियन् । ९४०
क्षिप्त्वा क्षिप्रं स्वकक्षान्तर्व्विबुधप्रतिमाभयात् । ते पारिषद्यविप्राद्याः प्रायमुत्सृज्य विद्रुताः ।
शून्यानि सुरयुग्यानि रक्षन्तः केऽपि भिक्षुणा । प्राचाश्चिद्रन्ता बध मित्युक्तवन्तो न बाधिताः ।
श्वाजानके भैक्षवेऽथ वल्गत्तुङ्गतुरङ्गमाम् । दृष्टवन्तो वयं सैन्यैः सादिनोऽद्यापि साद्भुताः ।
भिक्षुराजप्रदीपेन द्योतितः क्षणभङ्गिना । पिष्टविक्ताधिकारेण श्यालस्तिलकसिंहजः ।
गते जनकसिंहेऽथ प्रतिपक्षानुसारिणाम् । विधातुं वेश्मभङ्गादि लब्धं भिक्षुमहीभुजा । ९४५
अत्रान्तरे ऋष्यकपुरे नीतेषु तिलकादिषु । भङ्क्तुं सुलहणसिन्धाद्यैस्समेतानन्तसैनिकैः ।
अग्रायातैर्मल्लकोष्ठजनकाद्यैः ससैनिकैः । अपरैरपि सामन्तैर्व्वलवाडव्यवासिभिः ।
अन्वीयमानो दिवसैर्द्विचैराक्रान्तमण्डलः । विजयेश्वरमार्गेण विपक्षापेक्षितोऽपतत् ।
नगरापणवीथ्यन्तहयारोहमुखात्पुरः । द्रोहयोधानुपायातांस्तान् वीक्ष्योच्छ्रितसाध्वसः ।
चेष्टितो लम्बकूर्च्चेन वक्त्रेण भ्रूकुटीस्पृशा । कोपकम्पिततारेण फुल्लनासापुटस्पृशा । ९५०
कांश्चित्सन्तर्ज्जयन् भिन्दन्नन्यान् भग्नांस्तथापरान् । तीव्रातपश्यामवपुस्ताम्यत्कालद्रवोल्वणः ।
आशीर्द्दोषकृतां पुष्पवर्षिणां पुरवासिनां । पूर्व्वापकारिणां श्रेणिष्ववज्ञान्यस्तलोचनः ।
स्कन्धमात्रोपरिन्यस्तं कवचं हेलया दधत् । केशानन्तश्शिरस्त्रान्तनिःसृतान् धूलिधूसरान् ।
पद्ममालाश्च बिभ्राणः सकोशासिस्तुरङ्गिणां । आकृष्टखड्गमालानामन्तर्व्वलात्तुरङ्गमः ।
स सिंहनादैरुद्दामैर्भेरीभाङ्कारनिर्भरैः । बलैर्भरितदिक्कोशः सुसूलः प्राविशत्पुरं । ९५५
कुलकं ॥ षड्भिः सहाद्यदिनैर्माघेऽथ सितेऽहनि । स सप्तनवताब्दस्य तृतीये पुनराययौ ।
राजधानीमप्रविष्टो भिक्षुं पूर्व्वपलायितं । अन्विष्यन् क्षिप्रिकातीरे सबलन्योऽव्यलोकयत् ।
सरित्पारं रिपौ प्राप्ते स सपृथ्वीहरो गतः । मार्गे लवन्यैर्मिलितैरन्यैः साकं न्यवर्त्तत ।
तन्निद्राव्य रणे राजा बद्धा प्रहतिविक्षतं । सिंहं पृथ्वीहरभ्रातिं राजधानीमथाविशत् ।
उपभोगैः सपत्नस्य तत्कालनिहृतस्य सा । अङ्किता मानिनस्तस्य वेश्मैवोद्वेगदाभवत् । ९६०
भिक्षुः सन्त्यज्य कश्मीरान् सह पृथ्वीहरादिभिः । ग्रामं पुष्पाणनाडाख्यं सोमपालाश्रयं ययौ ।
प्रस्थितो डामरान् सर्व्वान् राजा स्वीकृत्य तु व्यधात् । खर्व्वां वड्डात्मजं मल्लं दर्पमिच्छन्न कम्पने ।
पूर्व्वापकारं स्मरतोद्रेककालानपेक्षिणः । पूर्व्वविद्वेषिणस्तस्य न कृपां प्रति पेदिरे ।

भिक्षुसम्पर्कजं गन्धमपि सोढुमशक्नुवन्। भृत्येभ्यः खण्डशः कृत्वा देशात्सिंहासनं ददौ ।
अनेयोपार्ज्जितां त्यक्तुमनीशा डामराः श्रियं। समन्यास्त नृपाद्भीता नात्यजन्विग्रहोद्यमं। ८९५
भिक्षुस्तु राज्यविभ्रष्टः सुहृदो विषये वसन्। उत्साहं सोमपालस्य दानमानैः पुनर्व्यधात् ।
बिम्बः साहायकप्रार्थी विजयस्यान्तिकं गतः। तस्मिन्विरोधिभिर्व्यक्तौ रणे धीरस्तनुं जहौ ।
भिक्षाचरो बिम्बशून्यो भजन् सुनयपात्रतां। अनैषीदवहेलां यत्तत्प्रियां तां गतत्रपः ।
निपत्य स्वल्पसैन्योऽपि ततः शूरपुरे बली। जित्वा पृथ्वीहरो बद्धात्मजं व्यद्रावयद्रणात् ।
तस्मिन् पलायिते भिक्षुं पुनरानीय सोऽविशत्। भुवं मडवराज्यानां दस्यूनां स्वचिकीर्षया। ९००
तत्रत्यैर्मङ्क्ष्वथ ज्यायैर्डामरैः स्वहृतैः सभं। जगाम विजयक्षेत्रं विजेतुं कम्पनापतिं ।
जितस्तेनाहवे हर्षमित्रो विहतसैनिकः। विजयेश्वरमुत्सृज्य भीतोऽवन्तिपुरे ययौ ।
विजयक्षेत्रजास्तत्पुरग्रामोद्भवाश्च ये। जना भयेन प्राविशन्नथ चक्रधरान्तिकं।
योषिच्छिशुपशुग्रामोपधिनोपेतैरपूर्यत। स्थानं तन्तैश्च राज्ञश्च योधैः सायुधवाजिभिः।
सम्बाधैरथ स्पृष्टं लोकोपघ्नलालसैः। तैर्भक्षवैरवेष्ट्यन्त कटकैर्व्याप्तदिक्तटैः। ९०५
तान्दारुमयवप्रौघद्वारगुप्ते सुरौकसः। अन्तर्ने तिष्ठतो हन्तुं बद्धुं वा नाशकन् द्विषः।
तदन्तरस्थितं दग्धुं कर्पूराख्यं स्ववैरिणं। कश्चित्कतिस्थलीग्रामजन्मा निर्गूढडामरः।
पापो जनकराजाख्यस्तत्राग्निमुदतीदिपत्। मूढस्तादृगपर्य्यन्तजन्तुसंहारनिर्घृणः ।
तमापतन्तं ज्वलितं ज्वलनं वीक्ष्य सर्व्वतः। भूतग्रामस्य सुमहान् हाहाकारः समुद्ययौ।
विग्रहतान्तवाहारिभियेव छिन्नबन्धनैः। अश्वैरसूचीसञ्चारा भ्रमद्भिर्जज्ञिरे जनाः। ९१०
प्राच्छाद्यत बलज्ज्वालैः करालैर्धूमराशिभिः। व्योम पिङ्गकचश्मश्रुज्वालैर्व्यक्तसुरैरिव।
निर्धूमस्य विसारिण्यो ज्वाला हव्यभुजो दधुः। सन्तापद्रुतहेमाभ्रसुवर्णलहरीभ्रमं।
सन्तापविद्रुतव्योमचारिमौलिपरिच्युताः। रक्तोष्णीषा इव भ्रमुर्ज्वालाभङ्गान भोङ्गने।
दीर्घदारुग्रन्थिभङ्गजन्मा चटचटारवः। तापप्रक्वाथ्यमानाभ्रगङ्गाघोषद्वोद्ययौ।
स्फुलिङ्गैः शोषविन्यस्तजन्तुजीवितसन्निभैः। अयाहि गहनव्योममार्गभ्रमणसम्भ्रमः। ९१५
शकुनैः शावसञ्चारकोशादाक्रन्दिभिर्नभः। मानुषैर्दह्यमानैश्च भूमिर्मुखरिताभवत् ।
भ्रातृन् भर्तॄन् पितॄन् पुत्रानालिङ्ग्याक्रन्दनिर्भराः। भीमीलितदृशो नार्य्यो निरदह्यन्त वह्निना।
तदन्तरात्साहसिका ये केचिन्निरयासिषुः। वध्यन्ते निहताः क्रूरैर्डामरैर्मृत्युचोदितैः।
तावन्तो जन्तवस्तत्र व्यपद्यन्त तदा क्षणात्। छिन्ना एव न ये दग्धास्तावतापि कृशानुना।
अन्तःशान्तेषु सर्व्वेषु बहिःशान्तेषु दहनेषु। क्षणादेव प्रदेशः स निःशब्दः समजायत। ९२०
वह्नेः कहकहाशब्दो तूष्णीभूतार्च्चिषः परं। खिद्यतश्च शवौघस्य श्रुतः सिमसिमाध्वनिः।
विलीनाश्मवसामेदोनिःस्यन्दाः सरणीशतैः। प्रसस्रुर्व्वितस्तामभ्यस्य योजनानि वहन्त्यगात्।
एकः सुश्रवसः कोपात् द्वितीयो दस्युविप्लवात्। ईदृग्जनवधाबाधो घोरश्चक्रधरेऽभवत् ।

भूतग्रामादिसंहारः सम्वर्त्त इव वह्निना। तादृक् त्रिपुरदाहे वा खाण्डवे तच्च वाभवत् ।
पुण्येऽह्नि शुक्लदशम्यां नभसः सुकृतं महत्। तद्भिक्षुः कृतवानाज्यलज्ज्या भाग्येन तत्यजे । ९९५
सकुटुम्बेषु दग्धेषु तदानीं गृहमेधिषु। पुरग्रामसहस्रेषु गृहाः शून्यत्वमाययुः ।
मल्लाख्योडामरस्त्विन्वन् शवान्नागरोद्भवः । प्रीतिं प्राप्तस्तदीयार्थैः कापालिकदशाययौ ।
अवरोद्धाथ विजयक्षेत्रं भिक्षाचरस्ततः । लब्ध्वा नागेश्वरं पापं यातनाभिरमीमरत्।
गर्ह्ये पैतामहे देशे किं नामीत्तस्य चेष्टितं । पितृद्रुहः स तु बधः सर्व्वप्रीतिकरोऽभवत्।
गृहिणी हर्षमित्रस्य पत्यौ त्यक्त्वा पलायिते। पृथ्वीहरेण सम्प्राप्ता विजयेशाङ्गनान्तरात्। १०००
निमित्तभूतमेतादृक्प्रजासंहारवैशसं। स्वं निन्दन् सुस्सलो राजा ततो योद्धुं विनिर्ययौ।
संवेगात्पाप्मनः शीघ्रं निरयक्लेशभुक्तये। प्राप्तोजनकराजेन बधोऽवन्तिपुरान्तिके।
यत्नेन क्रियते कर्म्म लोकान्तरसुखात्मकं। स मूढैः सुलभापायः कायस्त्विंच न गण्यते।
कम्पनाधिपतिं सिम्बं कृत्वा डामरमण्डलं। चकर्ष विजयक्षेत्रादन्यतोऽपि ततो नृपः।
शमालां प्रययौ पृथ्वीहरो मडवराज्यतः। विजित्य मल्लकोष्ठेन त्याजितो निजमण्डलं। १००५
क्षिप्ताः केचिद्वितस्तायां केचिच्चक्रधराङ्गने। अक्रियन्ताग्निसात् कष्टमसङ्ख्या बहवः शवाः।
क्रमराज्येऽथ कल्याणवारादीन् रिल्हणोऽजयत्। आनन्दोऽनन्तजस्तत्र ततो द्वाराधिपोऽभवत्।
शूले प्रभापितं सिंहं नयन् पृथ्वीहरो बली। सार्द्धं जनकसिंहाद्यैरयुध्यत् क्षिप्तिकातटे।
तीर्थं प्रस्थाप्यमानेषु विपन्नास्थिष्विहास्वहः। भाद्रे मास्येकमवलाक्रन्दिताक्रान्तदिक्पथं।
हतवीरावलाक्रान्तमुखरे नगरान्तरे। पृथ्वीहराहवे सर्व्वैर्दिवसैरन्वकारि तत्। १०१०
॥ युग्मं ॥ अथ यातो यशोराजश्यालः शूरोदिगन्तरात्। श्रीवको विदधे राज्ञा खेरीकार्य्याधिकारभाक्।
अप्रियं स लवन्यानां तेऽपि वा तस्य नाचरन्। कालन्तु गूढसौहार्द्दैरन्योन्यस्य न्यवीवहन्।
पुनराश्वयुजे राजा शमालान्निर्गतस्ततः। परैश्चनीमुषग्रामे युधि भङ्गमनीयत।
नित्याभ्यासेन युद्धानां लब्धोत्कर्षान्यदर्शयन्। सर्व्ववीराग्रणीर्भिक्षुस्तत्पूर्व्वं तत्र विक्रमं।
तुक्कद्विजादयो मुख्या भिक्षुपृथ्वीहरादिभिः। आसारापातविवशा निहताः सौस्सले बले। १०१५
प्रधानवीरभूयिष्ठे सैन्यद्वन्द्वे न कोऽप्यभूत्। स वीरव्रतः सङ्ख्ये भिक्षोरश्चिप्रियोन्मुखः।
पृथ्वीहरस्य भिक्षोश्च संग्रामे भूरिवार्षिके। कादम्बरीपताकाख्ये द्वे अश्वे पीतपाण्डुरे।
आस्तामत्यद्भुते याभ्यामनेकतुरगव्यये। न विपन्नं प्रहृतिभिर्नाम्भाव्यथवा क्लमः।
सैन्यानां सङ्कटे त्राणमश्रान्तिरविकत्थनः। अभूत् लोष्ठसहोवीरो नान्योभिक्षाचरात् क्वचित्।
योधानां सौस्सले सैन्ये विद्रवेषु न कश्चन। त्राणं बभूव तेनैते बहवो बहुधा हताः। १०२०
नवेषु डामरानीकाः केचिद्भङ्गेषु सैनिकाः। भिक्षाचरगजेन्द्रेण कलभा इव पालिताः।
नान्यस्योत्थानदीनत्वं दृष्टं पृथ्वीहरात्तदा। स्वयं यो भैक्षवे द्वारे अजागार प्रतिक्षपं।
तत. प्रभृत्यभूल्लोप्ता पुरः पश्चाच्च सर्व्वदा। विश्वेदेवा इव श्राद्धे युद्धे भिक्षुर्महाभटः।

आहवे साहसं कुर्व्वन् सर्व्वतः सोऽभ्यधान्निजान् । एवमस्खलितस्थैर्य्यमुपपत्तिमसंत्यजन् ।
न मे राज्याय येनाऽयं पर्य्याप्त दुर्य्यशः पुनः । कृत्ये प्रसक्तं पूर्व्वेषां व्यवसायं व्यपोहितुं । १०२५
अनाथा इव ते नाथा विशां व्यापादनक्षणे । ज्ञात्वा नष्टं कुलं नाथवन्तो नूनं स्पृहां दधुः ।
इति मत्वा सोऽकष्टेऽपि सुदृढनिश्चयः । दृश्यमानोऽस्मि दायाददुःखदायी दिने दिने ।
नास्त्येवाप्राप्तकालस्य विपत्तिरिति जानतः । कस्य साहसवैमुख्यमुत्पद्येत यशोर्थिनः ।
किं कार्य्यगतिकौटिल्यैरत्थैस्तान्यथ वा कथं । न वदामः प्रतिज्ञाय स्वयमार्षेऽध्वनि स्थितिं ।
सोत्कर्षपौरुषाद्भिचोरशङ्किषत डामराः । ततो दायादविच्छेदं नास्याशङ्कत जातु चित् । १०३०
प्रायाज्याधिगमाद्राज्ञामन्येषां राजवीजिनः । चिन्तयन्तो व्यवहृतिं व्युत्पद्यन्ते शनैः शनैः ।
पितुः पितामहस्याथ न दृष्टं तेन किञ्चन । अतएवाभजन्मोहं राज्यं सम्प्राप्तवान् पुरा ।
तत् स भूयोऽपि चेदीचेत् केव वार्त्ता विपाटने । सापेक्षं वीक्षितुं जाने न दैवेनाप्यशक्यत ।
जानन् लवन्यकौटिल्यं प्रमादात् स हितेऽहितं । प्राप्नुयां राज्यमित्याशां बद्धाहान्यत्यवाहयत् ।
इत्यूनां सुस्सलो राजा मेने तत्स्वहितं मतं । जिगीषोर्नीतिविक्रान्त्योः प्रयत्नो लिप्यनन्तरः । १०३५
युद्धे स्वान् स स्मरन्वैरं नापासीत्तेन तेऽभजन् । नास्मिन् विश्वासमेतस्माद्धेतोर्नास्याभवज्जयः ।
इत्थं नानामतैः पक्षैः प्रतिपक्षैरुपेक्षितं । राष्ट्रं निखिलमेवागात् सर्व्वतः शोचनीयतां ।
यत्सम्बन्धादिटपिनिवहैर्निग्रहव्यग्रवन्यव्याधप्रप्तानलपरिभवः कोऽपि नन्वन्वभावि ।
व्याधिरधात्रा विघटनपरः सोऽपि सान्द्रादमोषां लभ्यं श्रेयोविधिविधुरितैर्नान्यतान स्वतोऽपि ।
द्वैराज्ये प्रभवत्येवमकाण्डापतितैर्हिमैः । विवशं सुस्सलच्छाम्यदजयद्भैरवं बलं ।
पुष्पाणनाडसूयोऽपि भिक्षुपृथ्वीहरौ गतौ । अन्यैर्लवन्यैर्भर्त्तुर्नतिर्दत्तकरैः कृता । १०४०
सिम्बोऽपि कम्पनाधीशो व्यधाद्विजितडामरः । सर्व्वां मडवराज्योर्व्वीं वीरः शमितविप्लवां ।
तावत्यापि विपक्षाणां शान्त्या शीतलतां गतः । पूर्व्ववैरं स्वपक्षाणां प्रादुश्चक्रे स भूपतिः ।
जिघांसुकथिते राजन्युल्हणेन पलायितः । मल्लकोष्ठः सोऽपि कोपाद्राज्ञा राष्ट्रात् प्रवासितः ।
अनन्तात्मजमानन्दं बद्धा द्वाराधिकारिणं । व्यधत्त सैन्यवं प्रज्ञिनामानं राजवीजिनं ।
गतोऽथ विजयक्षेत्रं सिम्बेन सहितोऽविशत् । नगरं तच्च विश्वस्तं बद्धा कारागृहेऽक्षिपत् । १०४५
अनुस्मृतिमहावात्याप्रेरितो ऽमर्षपावकः । आचचाम क्षमावारि तस्य भृत्यान् दिधक्षतः ।
सिंहचक्रनसिंहाभ्यामनुजाभ्यां सहावधीत् । शूले ऽधिरोप्य सिम्बं स रोषावेशविलुप्तधीः ।
कम्पने श्रीवकं चक्रे सुज्जिं प्रज्जिः सहोदरं । बद्धा जनकसिंहस्य राजस्थाने न्ययोजयत् ।
आप्तास्य मन्त्रिणश्चाधंस्तस्य वैदेशिकास्ततः । स्वदेशजस्तु सोऽभूद्यो लोहरस्थं तमन्वगात् ।
अथ सर्व्वेऽपि साशङ्कास्तं त्यक्त्वाशिश्रियन्रिपून् । शतैकीयः कश्चिदासीद्राजधान्यां नृपाश्रितः । १०५०
तेनाप्रतिसमाधेयोभूयश्चान्ते ऽप्युपद्रवे । इत्यमुत्थापितोऽनर्थो न पुनर्य्यः शमं ययौ ।
एकाक्षेपे परेऽपि स्युर्यच्च सत्या विशङ्किताः । तथापराधे प्राज्ञस्य राज्ञोऽवश्यैव शस्यते ।

माघेऽथ मल्लकोष्टाद्या आक्रान्ताः पुनरायायुः । ते शूराः पुरमार्गेण भिक्षुपृथ्वीहरादयः ।
वितस्तापरिखाक्षिप्ता भूरगम्या द्विषामियं । इति प्रायात्क्षवमठं त्यक्त्वा राजगृहं नृपः ।
वर्षेऽष्टानवते चैत्रे डामरेषु हृतेष्वपि । अभ्येत्य मल्लकोष्टेन प्रागेवायाहि सज्ज्वरः । १०५५
सोऽश्ववारैः सह रणं चकार नगरान्तरे । नृपावरोधैः सौधाग्रादालोकितमथाकुलैः ।
भिक्षुणा क्षिप्तिकातीरे स्कन्धावारो न्यबध्यत । रामेण वानरी सेना यथा पाथोनिधेस्तटे ।
नृपोद्यानाद्द्रुमान् निन्युरिन्धनाय महानसे । दूर्वाङ्कुरान्मन्दुराभ्यो वाहभोज्याय डामराः ।
पृथ्वीहरस्तु संघटयन् दस्यून् मडवराज्यजान् । चकार विजयक्षेत्रे यावत्कटकसंग्रहं ।
तावत्प्रक्षिप्तमुखान् मल्लकोष्टयुद्धाय भूपतिः । आदिश्याद्यावस्कन्दं वैशाखे साहसोन्मुखः । १०६०
अकस्मात् पतिते तस्मिन् हतावष्टम्भविच्युताः । प्रययुः सेतुमुल्लङ्घ्य जीवन्तस्ताः कथञ्चन ।
नगरं मल्लकोष्टाजिव्यग्रे प्रक्षावयाविशत् । पृथ्वीहरानुजः सुज्जिं निर्जित्य मनुजेश्वरः ।
परं पारं वितस्तायाः सेतुच्छेदादनाप्नुवन् । अर्वाचि तीरे स गृहान्दग्ध्वागाक्षिप्तिकान्ततः ।
लवन्यैर्नगरं प्राप्तं मत्वा सुस्सलभूपतिः । आययौ विजयक्षेत्रात् सैन्यमुत्थाप्य विक्लवः ।
अहंपूर्विकयारातिसंक्रान्तैश्च निजैर्बलैः । पीडितस्तस्य गम्भीरः सिन्धुसेतुरभज्यत । १०६५
स कृष्णषष्ठ्यां ज्यैष्ठस्य तस्यासङ्ख्यसमुच्चयः । यथाग्निना चक्रधरे तथा तत्राम्भसा मृतः ।
भुजावुद्यम्य शमयन् सैन्यानां सम्भ्रमं नृपः । वस्त्रैर्भ्रष्टस्तथा पृष्ठे पतितः सरिदन्तरे ।
अनभ्यस्ताम्बुतरणैराश्लिष्य ब्रुडितोऽभवत् । तरसा युद्धविद्धाङ्गः स निस्तीर्णः कथञ्चन ।
अनुत्तीर्णम्बलं त्यक्त्वा पारे सामन्तसंकुलं । सहसांशेन सैन्यस्य तीर्णेनानुगतो ययौ ।
सन्त्यक्तानन्तसैन्योऽपि सोऽवष्टम्भमेवा ययौ । प्रविश्य नगरं मल्लकोष्टमुख्यान्रणेऽग्रहीत् । १०७०
विजयस्याथ जननी सिल्लाख्या स्वामिनोर्जितं । निनाय देवसरसं सैन्यं तद्विजयेश्वरात् ।
साथ पृथ्वीहरेणेत्य हता तत्रोपवेशने । टिक्कश्च दत्तो भूपालसैन्यं विद्रावितश्च तत् ।
परं व्यायामविद्याविदि द्रुते निखिले बले । द्विजः कल्याणराजाख्यः समरेऽभिमुखो हतः ।
सन्धिडामरसामन्तसङ्कुलात् सौस्सलाद्बलात् । पृथ्वीहरेणागृह्यन्त बद्ध्वा वृन्दानि शस्त्रिणां ।
अभ्यगात् स त्रितस्तान्तर्यावत्तान्विद्रुतान् बलात् । ओजानन्दद्विजादींश्च बद्ध्वा शूले व्यपादयत् । १०७५
सन्त्रिणो जनकश्रीवत्साद्या राजात्मजास्तथा । तीर्त्वाद्रिं विषलाटायां शरणं प्रययुः स्वशान् ।
इत्थं पृथ्वीहरो लब्धजयः संघट्य डामरान् । जिगीषुर्भिक्षुणा साकं नगरोपान्तमाययौ ।
भूयोऽपि मानुषाश्वौघसंहर्त्ता सर्वतस्ततः । रणः प्रववृते प्राग्वत्पुरे सुस्सलस्य भूपतेः ।
निर्निरोधः पथानेन नृपावसथ इत्युभृत् । सैन्ये मडवराज्यानां स्वयं पृथ्वीहरोऽग्रणीः ।
तत्तत्सामन्तकुलजैर्वीरैः काश्मीरकैर्भटैः । समेतं डामरकुलं दुर्जयं सर्वतोऽभवत् । १०८०
काश्मीरकाः शोभकाद्याः काकवंश्याः सहस्रशः । प्रख्याता भैक्षवे पक्षे रत्नाद्यास्वापरे ऽस्फुरन् ।
नदतः स्वबलाद्वाद्यं तुमुलं शृण्वता मिषात् । पृथ्वीहरेणागृह्यन्त वाद्यभाण्डानि कौतुकात् ।

हित्वा भूर्य्यथ तूर्य्यादि परिच्छेत्तुं स कौतुकी। श्वपाकदुन्दुभीभाण्डशतानि द्वादशाकरत्।
तथा विनष्टसैन्योऽपि चिरं द्वित्रैर्नृपात्मजैः। मितैः स्वदेशजैश्चारोन् प्रतिजग्राह सुस्सलः।
राजन्यार्विश्चिकटकुलोद्भूतावुदयधान्यकौ। चम्पावल्लापुराधीशावुदयश्चजज्जलौ। १०८५
तेजःसल्हणहंसानां धुर्य्यौ हरिहडाकसः। चम्पिकाभिक्षिकाख्यानसव्यराजादयस्तथा।
विडालपुत्रानीलाद्याभावुकान्वयसम्भवाः। रामपालः साहजिको युवा तस्य च नन्दनः।
नानावंश्याः परेऽप्युग्रसंग्रामव्यसनाजुषः। पुरोपरोधसंनद्धानरुन्धन् सर्व्वतो रिपून्।
तनूजनिर्व्विशेषेण रिल्हणेन महीभुजः। रणाग्रेसरतापादि विजयाद्यैश्च सादिभिः।
स्वयमुद्यमिना राज्ञा वर्मणेव निजौ भुजौ। सुज्जिप्रज्जौ पाल्यमानावभूतां रणकर्मठौ। १०९०
ताभ्यां साधारणीं कुर्व्वञ्ज्योत्पत्तिं महीपतिः। स महाव्यसने तस्मिन् सम्यग्गूढधुरोऽभवत्।
तत्पश्चाभागिकशरङ्कासिमुम्मुनिमुङ्कटाः। कलशाद्याश्च कुशला विपक्षक्षोभणेऽभवन्।
भूभर्त्तुष्टक्कविषये लवराजस्य नन्दनः। आसीत् कमलयश्चास्य संग्रामाग्रेसरः प्रभोः।
प्रहारं बलिनस्तस्य चामरध्वजशोभिनः। प्रभिन्नस्येव नागस्य हयारोहा न सेहिरे।
अनुजः सज्जिकः पृथ्वीपालोभ्रातुः सुतोऽस्य च। पाञ्चालौ फाल्गुनस्येव पार्श्वरक्षित्वमाययुः। १०९५
एतावद्भिर्भृत्यरत्नैराष्ट्रेऽपि कुपिते ऽजयत्। भूरिस्वर्णार्पणोपात्तैर्वाजिभिश्च महीपतिः।
तत्र तत्राहवे सोऽपि बभ्रामासम्भ्रमो नृपः। उत्सवे गृहमेधीव मण्डपे मण्डपे स्वयं।
तस्य हि व्यसनं त्रासहेतुः प्राभूदुपक्रमे। प्रवृद्धिप्राप्तमभवद्धैर्य्योदार्य्यय धीमतः।
क्षैव्यस्कन्धयमापाते मध्यपातेन तादृशं। करच्चिष्टं यथा शीतं मज्जनेन तथा पयः।
वैरिसैन्यतमोघत्र यत्र ज्योत्स्नेव निर्व्ययौ। सितासिता च भूभर्त्तुस्तत्र तत्रास्य वाहिनी। ११००
एकदा कृतसङ्केतास्तुल्यमाहवमेलके। महासरितमुत्तीर्य्य डामरा नगरेऽपतन्।
असीमनगरस्थानविभक्तकटको नृपः। परिमेयाश्ववारस्तान् विक्षतः स्वयमाद्रवत्।
नाभजत् डामरानीकस्तेन विद्रावितो धृतिं। हेमन्तमरुताकीर्णपर्णराशिरिवेरितः।
आनन्दः काककुलजो लोष्टधाख्यनलाङ्कयः। अन्ये च डामरानीके ख्याता भूभृद्भटैर्हताः।
लब्धाभिधाना नानीता राज्ञः क्रूरस्य दृक्पथं। बहुभिर्जघ्नुश्चाण्डाला इव राजोपजीविनः। ११०५
भयाद्रोपाद्रिमारूढास्तापरे भैरवास्ततः। आःसन्नमृत्यवोऽभूवन् कटकैर्व्वेष्टितादिशः।
योमार्गो दुर्गमः पक्षिणोऽपि चातुन्ततः स ताम्। तत्र व्यापारयामास भिक्षुशानी तुरङ्गमान्।
कथञ्चित्पक्षिणा विद्धग्रीवस्तस्याग्रहोन्मुखः। पार्श्वे पृथ्वीहरो रूढिं दिवास्यान्ये महाभटाः।
वेलाद्रिभिरिवोद्वृत्तैः सिन्धौ तैर्द्धिषतां बले। हन्त्रे गोपाचलं त्यक्त्वा तेऽन्यानारुरुहुर्गिरीन्।
अथोदतिष्ठत् सुस्सल राजानीकस्य वाहिनी। मल्लकोष्ठस्य पत्त्यश्च क्षोभिताशेषदिक्तटा। १११०
अरिपक्षग्रहव्यग्रैस्तिष्ठन् स्वैर्व्वर्जितो बलैः। तदाशाप्यखिलैरेव हतो राजेत्यसंशयं।
आपातं सुस्सलो राजा यावत्तस्थाविषोढवान्। तावत् सावरजप्रज्जिराजगाम रणाङ्गनं।

आषाढबहुलाष्टम्यां सहयारोहमेलकः। निजग्राहध्वनिप्रस्तसाधुवादो महानभूत्।
ताभ्यां स शमितो युद्धे ससूनुः ससमीरणः। दावानभोनभस्याभ्यामिव प्रापाम्बुवृष्टिभिः।
सङ्ग्रामवङ्कले काले तादृगन्यो न कोऽप्यभूत्। यादृक् स दिवसोवीर्य्यशौटीर्य्यनिकषोपलः। १११५
अनीकिनी लाहरी सा विलम्बेनाययाविति। तेषामुत्पाटनेच्छूनां नाभवद्धस्तमेलकः।
अन्योन्यस्य परिम्लाना दिवसे तत्र सङ्कटे। भिक्षोर्भूमिभृता शक्तिर्भूमिभर्त्तुश्च भिक्षुणा।
ततोमडवराजांस्तान् योद्धुं तत्रैव निर्दिशन्। क्षिप्तिकारोधसा युद्धमेत्य पृथ्वीहरोऽग्रहीत्।
दिगन्तराद्यायातोयशोराजो महीभुजा। मण्डलेश्वरतां निन्ये रिपून् प्रति जिहीर्षुणा।
खेरीकार्य्ये पुरा तस्य लवन्या दृष्टविक्रमाः। रणेषु मुखमालोक्य शतशः प्रचकम्पिरे। ११२०
कुङ्कुमालेपनच्छत्रहयादिप्रतिपत्तिदः। सर्व्वेषामभिनन्द्यत्वं तं राजा स्वमिवानयत्।
दीर्घोपप्लवयाप्येष दुःस्थितः स्वास्थ्यलिप्सया। जनो बबन्ध तत्रास्थां नववैद्यइवातुरः।
ज्यायांसं पद्मचन्द्राख्यं शेषाणां गर्गजन्मनां। नृपतिर्मल्लकोष्टस्य प्रातिपक्ष्ये न्ययोजयत्।
शिशुर्लुङ्कुत्राख्यया मात्रा पालितः स शनैः शनैः। आश्रीयमाणोऽनुचरैः पित्र्यैः किञ्चित् प्रथां ययौ।
यशोराजानुयातेन राज्ञा जन्येषु निर्ज्जिताः। केचित्तत्पक्षमभजन् भग्नाः केचिच्च डामराः। ११२५
सभिक्षुः प्रययौ पृथ्वीहरः स्वमुपवेशनं। मल्लकोष्ठोन्मुखो राजा निर्जगामामरेश्वरं।
अत्रान्तरे मल्लकोष्ठो विसृज्य निशि तस्करान्। सदाशिवान्तिके शून्यां राजधानीमदाहयत्।
पृथ्वीहरेण भूयोऽपि योद्धुमागच्छताऽसकृत्। प्रक्षिप्तुज्ञिमुखा युद्धमकुर्व्वन् क्षिप्तिकातटे।
वारंवारं लवन्यः स नगरे निर्द्दहन् गृहान्। प्रायः शून्यत्वमनयद्वितस्तातीरमुत्तमं।
तत्र तत्र रणान् कुर्व्वन् प्राणसन्देहदायिनः। आचक्रामाथ नृपतिर्लहरं वहलं बलैः। ११३०
सिन्धुं तरन्तो निःसेतुं द्रुतिभङ्गादयुर्ज्जले। मन्दिरं कन्दराजाद्यास्तदीयाः समवर्त्तिनः।
दरद्देशं ययौ मल्लकोष्ठो राज्ञा निराकृतः। सपुत्त्राप्यभजच्छुत्रा प्ररोहं लहरान्तरे।
आनिन्यिरे जय्येकेन लवन्येन नृपान्तिकं। विषलाटान्तरास्तेऽथ जनकश्रीत्रकादयः।
लहरारम्भव्यतिक्रान्तनिदाघः शरदागमे। शमालां निर्ययौ राजा यशोराजान्वितस्ततः।
भग्नं पृथ्वीहरत्रासात् सैन्यं रक्षन् मुहीमुखे। आजौ सञ्जातमजो जग्धनामा राजसुतो हतः। ११३५
युद्धं सुवर्णसानूरग्रामशूरपुरादिषु। कुर्व्वन् शम्बनृपः प्राप पर्य्यायेण जयाजयौ।
श्रीकल्याणपुराद्ग्रामं नीते पृथ्वीहरादिभिः। श्रीवके नागवट्टाद्या युधि प्रापुः प्रमापणं।
पौषे सुवर्णसानूराज्जिहन्तुं मातुरन्तिकं। टिक्कं स देवसरसं व्यसृजद्गर्गजन्मभां।
स्वेन राज्ञश्च सैन्येन सहिता सा जिताहिता। अकस्मात्तत्र टिक्केन निपत्य निहता युधि।
स स्त्रीवधं व्यधात् पापी द्वितीयमपि निर्घृणः। विशेषः कोऽथवा तिर्य्यक्षु च कृतस्करचरणां। ११४०
अबलां स्वामिनीं हन्यमानां त्यक्त्वा पलायिताः। चित्रं पशूपमाः शश्वत् स्त्रीसमुल्लोहराः पुनः।
ईषत्प्रागागतं शय्यां भूयश्वोत्क्षणं नृपः। ज्ञात्वा मडवराज्यं स प्रययौ विजयेश्वरं।

मल्लराजतनूजानां निजा जिह्वेव दुर्जना । बभूव प्रभविष्णुत्वे व्यापदापातदूतिका ।
प्रायस्त्वायतने काले भृत्याश्रितजडत्तयः । दर्शयन्ति समुत्साध्य सारं दोषत्तुषयहं ।
आबाल्यात् संस्तुतः शीलव्रवःपरुषभाषितैः । निर्गौरवैर्यशोराजो राज्ञि तस्मिन् व्यरज्यत । ११४५
स दुर्ज्ञातिमहासैन्ययुतोऽवन्तिपुरस्थितः । अभजत्ततउत्थाय प्रतिपक्षसमाश्रयं ।
वैरिपक्षगते तस्मिन् बलैः सर्व्वोत्तमैः समं । विक्लवो विजयक्षेत्रात् पलायिष्ट महीपतिः ।
धिग्राज्यं यद्गतः सोऽपि सेहे प्राणान्विरक्षिषुः । मुण्डाङ्गिस्वारचण्डालप्रायैः परिभवं पथि ।
माघे पलाय्य नगरं प्रविष्टस्तत्रथाभिधे । भृत्ये द्रोग्धर्य्यशक्लिष्ट स्वेषामपि तनूरुहां ।
काश्मीरिके जने शेषे निराशे नितरां ततः । अद्वन्यस्तोत्तमाङ्गोऽभूत् प्रज्ञिपक्षे क्षमापतिः । ११५०
मुद्रिता रुद्रपालादिपूर्व्वराजात्मजप्रथा । प्रज्ञिना विक्रमत्यागनयाद्रोहादिभिर्गुणैः ।
तेनैव वर्द्धितामुत्र देशे विशदकीर्त्तिना । कालदोरात्म्यलुठिता प्रतिष्ठा शस्त्रशास्त्रयोः ।
अमन्त्रयत सङ्गम्य यशोराजस्तु भिक्षुणा । नेच्छन्ति डामरा राज्यं तव विक्रमशङ्किताः ।
उत्पाद्य पुनरुत्पिञ्जं साधिष्ठानबलावयं । राज्यं स्वयं ग्रहीष्यामो यास्यामो वा दिगन्तरं ।
इति तैर्मन्त्रिते च्छत्रां हतां श्रुत्वा दरत्पुगात् । आगत्य मल्लकोष्ठोऽपि प्राविशत् स्वोपवेशनं । ११५५
वर्षोऽथ दुस्तरः ख्यातएकान्नशतसङ्ख्यया । सर्व्वभूतान्तकल्लोके प्रावर्त्तत सुदारुणः ।
वसन्ते डामराः सर्व्वे प्राम्यन्मार्गैर्निजैर्निजैः । आगत्य भूयोभूपालं नगरस्थमवेष्टयन् ।
धीरः सुस्सलदेवोऽपि पुनराशीहिवानिशं । निःसीमसमरस्तामारम्भसंरम्भभाजनं ।
दाहलुण्ठनसंग्रामकर्म्मशौण्डैः स डामरैः । प्राग्विप्लवेभ्योऽप्यधिको विप्लवः पर्य्यवर्द्धत ।
महासरित्पथे निर्निरोधे तस्थुर्विविक्षवः । नगरन्ते यशोराजभिक्षुपृथ्वीहरादयः । ११६०
ततः कतिपुचिद्युद्धाहेषु यातेषु सङ्गरे । निजैनैव यशोराजः परकीयभ्रमात् हतः ।
कथ्यात्मजेन हि समं विजयाख्येन सादिना । सात्मलेन तु सङ्ग्रामे पराहृत्तीः प्रदर्शयन् ।
विप्रलब्धैः सुवर्णाश्वकवचाविचक्षणैर्निजैः । शूलायुधिभिरुद्दामैः शूलाघातैरहन्यत ।
भिक्षोराज्यं समर्थोऽयं दातुं हन्तुं ततश्च नः । भीत्या तैर्डामरैरेव स घातितइति श्रुतिः ।
यथैव तेन विश्वस्तः स्वामिद्रोहेण वञ्चितः । तथैव प्राप विश्वस्तः क्षिप्रमेव वधं मृधे । ११६५
पृथ्वीहरस्तत्र तत्र योधविलाय डामरान् । क्षिप्रिकारोधसा भूयोऽभ्येत्य संग्राममयहीन् ।
तत्राधिष्ठानयोधानां भिक्षुपक्षोपजीविनां । पौरुषं स्वपरोत्कर्षं परिभावि व्यभाव्यत ।
वक्त्रिदानमहायोधसंहाराद्यैरुपद्रवैः । एकमेकमहस्तत्रानीहस्यासीद्भयावहं ।
अतपत्तरणिस्तीव्रमभीक्ष्णं भूरकम्पत । ववृद्धुर्मादीन् भञ्जन्तो महोत्पातप्रभञ्जनाः ।
पवमोत्थापितैः पांशुकूटैर्दर्भे मुदोद्धूतैः । व्योम्नि प्रोत्तम्भनस्तम्भभङ्गिनिर्घातदारिते । ११७०
ज्येष्ठस्य शुक्लैकादश्यां प्रहृत्तेऽथ महारणे । काष्ठीले डामरा वह्निमेकस्मिन् प्रददुर्गृहे ।
सोऽग्निर्वा मारुतोद्धूतः प्रसरन् वेधुनोऽथवा । जज्वालैकपदे कृत्स्नं नगरं निरवग्रहः ।

दृष्टस्तदानीमेतावद्गजव्यूहस्त्वापतत् । साधिकस्वामिनो धूमोद्गमस्ततो यदुत्थितः ।
अथेन्द्रदेवी भवनविहारं सहसागमत् । ततोनगरमुज्ज्वालं क्षणात् सर्व्वमदृश्यत ।
न भूमिर्न दिशो न द्यौर्धूमध्वान्ते व्यभाव्यत । उल्कामुखचर्म्माभो दृश्यादृश्योऽभवद्रविः । ११७५
धूमान्धकारसंच्छन्नास्ततः प्रज्वलिताग्निना । अपुनर्दर्शनायेव मुहुराविष्कृता गृहाः ।
वितस्तादृश्यतोज्ज्वालवेश्माश्लिष्टतटद्वया । रक्ताक्तोभयधारेव कृतान्तस्यासिवल्लरी ।
ब्रह्माण्डोर्द्ध्वकवाटान्तसंस्पर्शात् पतितोन्नतैः । ज्वालाकलापैः संहृष्टैर्नभश्छववनायितं ।
उच्चावचैर्यतो ज्वालाग्रशृङ्गैर्हेमाद्रिसन्निभः । वह्निर्धूमच्छलान्मूर्द्ध्नि वभाराम्बुधरावलिं ।
आविर्भवन्तोज्वालाभ्यो गृहास्रकुमुकुङ्मुकाः । अदग्धायत इत्याशां विमुग्धगृहमेधिनां । ११८०
ज्वलितैस्तापितजला वितस्ता पतितैर्गृहैः । श्रोर्व्वाग्निवेदनाक्लेशं विवेद सरितां प्रभोः ।
दीप्तपक्षैः खगैः साकं ज्वलितावालपल्लवाः । उद्यानद्रुमषण्डानां व्योमोत्पतनमाययुः ।
सुधाधिताः सुरगृहा ज्वालासम्मिलिता व्यधुः । चयसन्ध्यासमाश्लिष्टहिमाद्रिशिखरभ्रमं ।
मज्जनावासनौसेतुकदम्बैः शेषशङ्कया । अपास्तैर्नगरस्यान्तर्वयुर्व्योऽपि शून्यतां ।
किमन्यन्मठदेवौकोगृहहट्टादिविवर्जितं । नगरङ्क्षणमात्रेण दग्धारण्यमजायत । ११८५
लोष्टावशेषे नगरे धूमश्यामो निरास्पदः । उच्चैरेको बृहद्बुद्धो दृष्टो दग्धद्रुमोपमः ।
सैन्येषु ज्वलितावासत्राणाय चलितेष्वथ । शतमात्रेण योधानां युतो भूभृदजायत ।
पारं गन्तुं वितस्तायाश्छिन्नसेतुं तमक्षमं । लब्धरन्ध्रा द्विषोऽनन्ता निहन्तुं पर्य्यवारयन् ।
पुरन्दग्धं स्वमत्यन्तं प्रजा नष्टाश्च चिन्तयन् । श्लाघ्यं मरणं राजा निर्व्विण्णो बह्वमन्यत ।
प्रस्थातुमथ तं प्रत्यङ्मुखमाश्वङ्ग विद्रुतं । संज्ञितोऽन्यैः कमलयः क द्रवेत्यवोचत । ११९०
संरम्भस्मितविद्योतिचन्द्रमौलिस्वमाननं । परिवर्त्य निरुद्धाश्वो धीरः स तमभाषत ।
तदन्यं करवै भूमेः कृते हंमीरसंगरे । चकार राजाभिप्रायस्तोऽभिमानी पितामहः ।
कुतस्त्योऽप्येष दायादोऽयङ्कातास्माकमस्ति वा । स हर्षदेवोऽपश्ययशः कार्य्यशेषं पलायितः ।
कोनाम मानिनां पङ्क्तौ प्रविष्टोऽन्ते निजां भुवं । असिना स्वाङ्कुरकान्तां व्यालः कृत्तिमिवोज्झति ।
इत्युक्तोदस्य यष्ट्याग्रमुत्क्षिप्तपायमुखं हयं । सम्प्रष्टुमिच्छुः पाणिभ्यां कृपाणमुदनामयत् । ११९५
ततो निगृह्य वल्गायां वाजिनं लवराजजः । ऊचे भृत्येषु सत्वयं प्रवेशादानभुभुजः ।
प्रहारविक्षतस्तिष्ठन् गृहादेकोऽभ्युपायथो । सङ्कटे तत्र भूभर्त्तुः पृथ्वीपालोऽन्तिकं परं ।
कोलपुत्रं स्तुंस्तस्य वात्सल्यादेष भूपतिः । स्वस्यान्तनिक्कयां मेने सेवाविष्कृत्युपक्रियां ।
अथ स्थितास्त्रिभिर्व्यूहैरचितास्तेऽकिरन् शरान् । हन्तुं वामेन ते योधाः सर्व्वे वाहमदुम्मदाः ।
स प्रेरयंश्च तुरगं दैवात्तस्य च तादृशः । सहस्राण्यपि भूरीणि व्यधीयन्त विरोधिनां । १२००
अल्पसैन्योऽद्विषत्खड्गमण्डलप्रतिविम्बितः । नृपः साहायकायातविश्वरूपइवावभौ ।
कलविङ्कानिव श्येनः कुरङ्गानिव केशरी । एकोव्यद्रावयद्भूरीनरीन् सुस्सलभूपतिः ।

निपत्य पत्तीन् हस्त्यानाम् खुराग्राण्यपि वाजिनां । प्राहरंस्ते हयारोहा व्यूहव्याहतरंहसः ।
विज्ञितज्वलनज्वालाः सर्व्व एव महाभटाः । हन्तव्याश्च हताश्चासन्नन्योन्योतोदणाइव ।
स द्विषां कदनं कृत्वा दिनस्यान्ते न्यवर्त्तत । वाष्यायमाणलोकाग्रं हत्याघ्नेनोर्ज्जितं पुरं । १२०५
तादृशेऽप्यजिते तस्मिन् जयाशागौरवं द्विषः । स चौजश्चोद्गमणीयस्य विनाशाज्जीवितादरं ।
आयत्त्वपंस्खलंस्तिष्ठन् सन्नमन्नथ सोऽरिभिः । निर्गच्छन्नित्यमाहृतोऽनेकैर्हदाप्यमोचित ।
वह्निनिर्द्दग्धसर्व्वान्नसम्भारे मण्डलेऽखिले । दुःसहं सहसैवाथ घोरं दुर्भिक्षमाययौ ।
दीर्घविप्लवसंक्षीणसम्पदा डामरैर्बहिः । तन्तुच्छोत्पन्नयोरुच्चसञ्चाराद्दग्धमन्दिराः ।
अनाप्नुवन्तो विधुरे राज्ञि राजकुलाहुतं । दुर्भिक्षे तत्र सामन्ता अपि क्षिप्रं प्रपेदिरे । १२१०
वह्निनिष्कृतशेषाणि वेश्मान्यन्नाभिलाषिभिः । बुभुक्षार्त्तैर्जनैर्दत्ता दशाशाग्निर्दिने दिने ।
सरितां सेतवो वारिभिःसेकोच्छूनविग्रहैः । दुर्गन्धाः कुणपैरुच्चप्राणैस्तीर्णास्तदा जनैः ।
निर्मांसनरकङ्कालकपालशकलाकुला । उवाह सर्व्वतः श्वेता क्षितिः कापालिकव्रतं ।
सङ्क्रमसञ्चारिणोऽर्काग्निश्यामक्षामोक्षविग्रहाः । अभाव्यन्त बुभुक्षार्त्ता दग्धस्थाणुनिभा जनाः ।
अथ प्रबन्धयुद्धेन दिनैः क्वापीषुणा क्षतः । पृथ्वीहरोऽसुतहति श्रुतिर्मिथ्यैव पप्रथे । १२१५
गाढप्रहारविवशे तस्मिन् प्रच्छादिते जनैः । तां वार्त्तां श्रुतवान्राजा ननन्दायुद्ध चोद्धतं ।
धीरेव पुंश्चली व्याजोत्सुक्यसन्दर्शनेन तं । जयश्रीर्लोभयन्त्यासीत्सतु भेजे समुत्सुकं ।
एकान्तवामहृदयो विधिरानुकूल्यं मिथ्या प्रदर्श्य विपिनस्थनुबध्नि दुःखं ।
अन्धीकरोति भृशमभ्रमगं ज्वलन्तं भास्वन्महौषधिभिदे प्रकटय्य वज्रं ।
दीर्घदुःखानुभूत्यन्ते यदीयागमनोत्सवं । तपःफलमिव क्ष्माभृत्काङ्क्षन्नासीन्मनोरथैः ।
वात्सल्यमान्वितं प्रेम गौरवेण प्रियं वचः । औचित्येन च दाक्षिण्यं सापत्न्यमिव या दधे । १२२०
तस्यापकरणीभूतविभूतिर्गृहिणी प्रिया । तस्मिन् काले महादेवी विपेदे मेघमञ्जरी ।
विनोदशून्यनिर्व्विण्णलोकयात्रं जगद्विदन् । प्राणैराज्येन वा कृत्यं न स किञ्चिन्निरैक्षत ।
सा भर्त्तुर्व्यसनोदन्तैः कृशा काश्मीरसम्मुखी । श्रोतुक्यादुत्तयाचासीच्छान्ता फलपुरान्तिके ।
पूर्व्वं तद्दर्शनाशाया दुर्व्वारोत्थाश्ततोऽतिथिः । भवन्नतोऽधिकं राजा दुःखावेगेन पस्पृशे ।
राज्ञीमत्यातपात्ययतया हूषितभक्तयः । अनुसस्रुस्तत्वन्तः परिवारवरस्त्रियः । १२२५
अप्रत्यक्ष क्षयेऽप्यस्या भर्त्तुर्द्भिक्तत्वमत्यजन् । तेजोनामाभवत्सूदो वस्याम्ब्यास्तरेऽधिकं ।
स ह्यसन्निहितोऽन्यस्मिन्नायातो निजं शिरः । तच्छितापान्तरुद्धेन भक्त्या यात्रां विघ्नन्दीं ।
आहवाक्कानसंरम्भैः शोकविस्मृतिकारिणः । राज्ञो द्विषः कार्य्यवशादुपकारित्वमाययुः ।
स राज्यमथ निक्षेप्तुकामो निर्व्विण्णमानसः । व्युत्क्रान्तशैशवं पुत्रमानिन्ये लोहराचलात् ।
मण्डलेश्वरतां प्रज्ञोभ्रातृव्यं भागिकाभिधं । नीत्वा च गुप्तिमकरोल्लोहरे कोशदेशयोः । १२३०
वराहमूलं सम्प्राप्तमथायातः प्रियं सुतं । आश्लिष्य विवशो राजा बभूवानन्दशोकयोः ।

राजसूनुस्त्रिभिर्व्वर्षैः प्रत्यायातः स्वमण्डलं। स पश्यन् पितरं स्वान्तरसुस्थितमतप्यत।
खेदनग्रामगोष्ठ्यावसथं सोऽविशत् पुरं। अम्बुलम्बोऽम्बुदो दावनिर्दग्धमिव काननं।
राज्येऽभ्यषिञ्चदाषाढस्याथेऽह्नि जनकोऽथ तं। अवादीद्राज्यतन्त्रस्य कृतघ्नमुखाश्रुगद्गदः।
श्रान्ताः पितृपितृव्यास्ते न यां वोढुमशक्नुवन्। धुरमुद्वह तां वीर त्वयि भारोऽयमर्पितः। १२३५
साम्राज्यप्रक्रियामात्रपात्रं पुत्रं नृपो व्यधात्। नत्वार्पितपदश्रीकारं तस्मिन्दैवविमोहितः।
अभिषेकविधावेव राजसूनोः शमं ययुः। पुरोपरोधावग्राहव्याधिचौराद्युपद्रवाः।
सम्पन्नशस्या च तदा देवी भवद्वत्ते मही। दुर्भिक्षं श्रावणे मासि यथावत् प्रशमं ययौ।
अत्रान्तरे सिंहदेवोऽरण्ये कुर्व्वन् परिचयं। कर्णजपैर्जनयितुर्द्रोग्धायमिति सूचितः।
कोपादविमृशंस्तत्त्वं सवन्धुं तं व्यसर्जयत्। कथ्यात्मजं राजसूनुस्ततः प्रागेव बुद्धवान्। १२४०
कोपस्मितोत्कटस्याग्रे स तस्याप्रतिभोऽभवत्। निनाय रक्षामात्रेण पार्थिवाज्ञाममोघतां।
अभुक्तवान् मनस्तापात् प्रत्ययोत्पत्तये पितुः। साकं तेन सुतोऽन्येद्युर्गन्तुं प्रावर्त्ततान्तिकं।
आखेटुं शङ्कितोऽशक्य इति मत्वा स मन्त्रिभिः। मार्गाद्व्यवर्त्तयत तं पिता मिथ्या प्रसादयन्।
अन्तस्तु निस्त्रिकायेति प्रविश्य तर्किताऽऽगमः। बद्ध्वैनं स्थापयिष्यामि कारायामिति सोऽनिशं।
धिग्राज्यं यत्कृते पुत्राः पितरश्चेतरेतरं। शङ्कमाना न कुत्रापि सुखं रात्रिषु शेरते। १२४५
पुत्रपत्नीसुहृद्भृत्या येषां शङ्कानिकेतनं। विस्रम्भभूर्भूपतीनां कस्तेषामिति वेत्ति कः।
साञ्ज्ञाभिधानप्रख्यातकुग्रामोपान्तवासिनः। स्थलपालस्य तनयः स्यानकाख्यस्य कस्यचित्।
शैशवे पाशुपाल्येन वर्द्धितोऽडामरोद्भवैः। गृहीतशस्त्रस्तन्नित्यं क्रमाद्विक्रमस्य लब्धवान्।
प्रथमाब्दात् प्रभृत्यास्तदृत्यो भूभर्त्तुराप्ततां। प्रथयावुत्पलो नाम वैरिविच्छेदमिच्छतः।
स हि भिक्षाचरं टिक्कमथ व्यापादयेत्यमुं। जगादाङ्गीकृतैश्वर्य्यदानटिक्कोपवेशने। १२५०
कृतप्रतिश्रवं तस्मिन्नर्थे तस्य महर्द्धिभिः। दानैरुपाचरद्भूपतिनाप्यथायोजयत्।
भोगलाभप्रभुद्रोहच्छिन्नादोलायमानधीः। स कार्य्यं परिहार्य्यं वा न कृत्यं निश्चिकाय तत्।
प्रासोष्टापत्यमत्यान्तस्तद्वधूः कार्य्यतो नृपः। ततस्य प्राहिणोत्तस्यै पितेव प्रसवोचितं।
सा तस्यात्युपचारस्य कारणं परिशङ्किता। पतिं पप्रच्छ निर्ब्बन्धात् सोऽपि तस्यै व्यवर्णयत्।
न कार्य्यः स्वामिनो द्रोहः कृते वास्मिन् स सुस्थलः। त्वामेव शनकैर्हन्याद्द्रोग्धायमिति चिन्तयन्। १२५५
वरं सएव विश्वास्य व्यापाद्यस्तत्र चेद्बुधः। भवेत्ते स्वामिपुत्रादिकुटुम्बं स्वादिभूतिभाक्।
भार्य्ययेति प्रेर्य्यमाणः स निश्चयविपर्य्यये। टिक्कं विहितवृत्तान्तं कृत्वा बद्धोद्यमः कृतः।
गतागतानि कुर्व्वाणे दुष्टचावथ पार्थिवः। स पुत्र इव विश्वासं ययौ दैवविमोहितः।
विपर्य्यस्ता मतिः पुत्रे विश्वासो वैरिसंश्रिते। आयते क्षीणभाग्यानां कोनाम न विपर्य्ययः।
वैधेयैः स्वार्थलोभान्धैर्यद्दामर्थसमागमः। सरघोपद्रवः क्षौद्रलुब्धैरिव न चिन्त्यते। १२६०
तं पीडितं प्रज्विना च राज्ञा चावनतं ततः। उत्पलोऽकारयद्दिक्कं नीवीशादापयत्सुतं।

राजाथ देवसरसं जितं मन्यश्च कार्त्तिके । वाहुकाख्यमगाद्ग्रामं खेरीविषयवर्त्तिनं ।
स कल्याणपुराभ्यर्णे रणैस्तैस्तैर्व्विलक्षतां । भिक्षुकोष्टेश्वरमुखानपि निन्ये महाभटान् ।
मध्याङ्गिलाचरादीनां सुज्जिं काककुलोद्भवं । जीवग्राहं महावीरं युधि जग्राह शोभकं ।
भवकीयस्य हत्यादौ विजयस्य पराभवं । भूभुजा तद्भृता दग्धाः कल्याणपुरवर्त्तिनः । १२६५
इंध वडीसके भिक्षाचरो नष्टाश्रयो व्यधात् । त्यक्त्वा तां क्ष्मां शमालायां ग्रामे काकरुहे स्थितिं ।
अनुजो भवकीयस्य विजयस्य भयान्नृपं । संश्रितस्तेन तूर्णेण बद्धा कारागृहेऽर्पितः ।
भूरिसैन्यानुगं शूरपुरे विन्यस्य रिल्हणं । आस्कन्दाशङ्किनीं राजा चक्रे राजपुरीमपि ।
इत्थमुद्दण्डया वृत्त्या खण्डिताखण्डडामराः । लोकावशेषं सोऽपश्यत् कर्त्तव्यमरिनिर्ज्जयं ।
भिक्षाचरोलवन्यास्र शक्तित्रयमुपागताः । विदेशगमनं भीत्या रिपौ बलिनि मेनिरे । १२७०
किमप्यभाग्यावतारैर्भिक्षुपक्षजुषां यतः । जीवतामप्यनुत्साधान्निर्जीवत्वमिवाययौ ।
स सोमपालकौटिल्यं स्मरन् कुर्य्यां हिमात्यये । स्मशानेवीं राजपुरीमिति ध्यायन्नवर्त्तत ।
शान्तप्रायखदेशोर्व्वीविप्लवस्य महीपतेः । तस्यार्णवान्तक्रमणप्रतीतिः समभाव्यत ।
शतैकीयो योऽवशिष्टोविप्लवक्षयिते जने । वर्षं वर्षं स तद्राज्ये युगदीर्घत्वमन्यत ।
असुखत्रासदारिद्र्यप्रियनाशादिवैशसैः । स राज्यकालः सर्व्वस्य परितापावहोऽभूत् । १२७५
नरः पौरुषनैष्ठुर्य्यशठत्वेन करोति किं । विधातृवित्तिवैचित्र्यपराधीनासु सिद्धिषु ।
पुरोभूतं कश्चित्परिहरति राशिस्तमद्दव व्यतीते कस्मिंश्चित् हरिरिव विहत्यास्यति दृशं ।
समुल्लङ्घ्यासन्नं क्वचन नृपतिं दर्दुरइव क्रमोत्सृष्टदृष्टः स्फुटमिति गतीनामनियमः ।
विश्वासनिहतान्निन्दसुबलादीन् पुरावसत् । नित्यं विकोशशस्त्रोघः पुराविक्षो निशम्य च ।
विदूरथादिवृत्तान्तं नादात्केलिक्षणे भुवम् । स्त्रीषु सम्भुज्यमानः स विश्वासविशदां दृशं ।
संबन्धाविव निर्बन्धाद्विश्वास यदुत्पले । तत्र सम्भाव्यते केन दैवादन्योविभोद्दृतत् । १२८०
ठिक्काद्योभूमिपतेः सुज्जेर्वान्यतमे हते । त्वां तुल्यकार्य्यकर्त्तारं विद्म इत्यूचुरुत्पलं ।
सुज्जिर्न्न व्यश्वसीत्तस्मिन् स जिघांसुस्तु भूभुजं । तत्र तत्राभवत् सज्जः प्रसङ्गं नासदत्पुनः ।
प्रतिश्रुतिविलम्बेन समन्योरथ भूपतेः । प्रत्ययोत्पत्तये देवसरसाक्षोविमात्मजं ।
व्याघ्रप्रशस्तराजादींस्तोत्तृणाद्यात्मसरान् परान् । आदाय कार्य्यमेतैर्मे सिध्येदित्युक्तवान्नृपं ।
उचितोचित्य सेनाभ्यो गृहीतैः साहसक्षमैः । शतैः स मन्त्रिचतुरैः पत्त्रीणामेकदा ययौ । १२८५
समयान्वेषिणो हन्तुस्तस्यासन्नस्य सर्व्वदा । प्रियाहारादिदानेन हन्तातः प्रतिकार्य्यभूत् ।
तुरङ्गं मन्दुराचक्रवर्त्याख्यं नगरस्थितं । आश्वस्यमुत्साधयितुस्तुरङ्गव्यसने नृपः ।
स लक्ष्मकप्रतीहारकव्यात्मजमुखान् निजान् । पार्श्वादिसृष्टवानासीत् क्षणे तस्मिन् मितानुगः ।
शृङ्गारो लक्ष्मकापत्यं निशम्यार्त्तैर्निवेदितं । व्यधाच्छ्रुतिपथे राज्ञस्तदुत्पलचिकीर्षितं ।
विरुद्धे बन्धुधीदृष्टोहंसारम्भोऽपि सम्भवेत् । आसन्नजीवितान्तस्य जन्तोः स्रुता पयोरिव । १२९०

स शापः सन्धार्य्यस्तदपि सह्योभाषितन्देवैस्तदुत्पातसूचुः स्वमपि तदभीमं प्रकटयन्।
कुलान्तं तत्त्राणाक्षममकृत वैकुण्ठमपि तद्दिदृक्षप्यन्यत्वं क इव भवितव्यस्य कुरुतां ।
मिथ्यैतदित्यधिक्षिप्य क्षितिपालः प्रदर्शयन्। तमङ्कस्थोत्पलादींस्तानपश्यन्नेवमब्रवीत्।
द्रोग्धुः सुतोऽभवद्योगादनिच्छन् स्वास्थ्यमेष मे। तं दुष्टमुत्पलापष्टे स्वेनान्यैर्व्वाथ चोदितः।
ते व्याहादयन्तः स्मेरास्या धार्ष्ट्येन भयवैकृतं। वक्ति देवो यदस्माभिर्व्वाच्यमित्येवमूचिरे।
निर्य्यातेष्वथ तेष्वीषत्साशङ्क इव निश्चलान्। द्वास्थेनाकारयद्धित्वानन्तिकोमुख्यमन्त्रिणः। ११९५
उन्मनाश्च किमप्यासीद्दिनिःश्वस्य स चिन्तयन्। साशङ्कश्च न रतिं लेभे नृत्यगीतादिदर्शने।
मेने वैदेशिकप्रायानाप्तानपि धृतभ्रमः। पुण्यक्षयेऽपि पतितु वैमानिक इवाम्बरात्।
राजान्तरङ्गः साशङ्कः प्रभौ शाठ्येन मोहिते। पूत्कारमैच्छन्दातारमन्यं केचिद चेतसः।
अयमेव स कालस्य बलात्कवलनग्रहः। विदन्तोऽपि यदायान्ति जन्तवः कृत्यमूढतां।
सर्व्वान्तरक्षिष्वस्तक्षणोदिवसद्वयं। उत्पलाद्याश्च साशङ्काः कथमप्यत्यवाहयन्। १२००
रहःक्षणप्रार्थिनस्तांस्तृतीयेऽह्न्यब्रवीन्नृपः। स्नात्वा प्रत्यूषे तद्यूयं भोक्तुं यात मुहूर्त्तकं।
देवतार्च्चनपर्य्यन्तमवसायाह्निकं विधिं। आजुहावोत्पलं दूतैर्मध्याह्नेऽथ रहःस्थितः।
कार्य्यसिद्धिं श्रद्दधानो वैजन्याद्राजसद्मनः। राज्ञोऽभ्यर्णं स साशङ्कद्वास्थरङ्गानुगोऽविशत्।
प्रावेशयद्द्वारि रुद्धं व्याघ्रं तदनुजं नृपः। शेषाणामपि भृत्यानामादिदेश बहिः स्थितिं।
विलम्बमानेष्वाप्तेषु केषुचित्सहृषोवचः। सत्यं तस्योत्प्रयावांस्तं सोऽच द्रोग्धा य इत्यपि। १२०५
ताम्बूलदायिकप्रौढवयस्तेनावशेषितः। सान्धिविग्रहिको विद्याचाहिलस्यान्तिके परं।
दूतौ टिक्कस्याघदेवनिष्टवेश्याभिधावुभौ। नच प्रसङ्गादाप्तातामज्ञातोत्पलसम्बिदौ।
वाङ्गात्यः सुखराजाख्योडामरोभिक्षुसम्मतः। प्रयास्यति प्रभोर्द्रष्टुं पादौ तत्कार्य्यसिद्धये।
इत्युक्तवांस्तेष्वहःसु तं नृपं नातिदूरगं। ससैन्यं डामरं चक्रे स्वस्य त्राणार्थमुत्पलः।
तथाचैनं तस्थिवांसं कृत्यमस्यमुनेति च। उक्ता प्रशस्तराजन्तं पार्श्वं प्रावेशयत् द्रुतं। १२१०
प्रविष्टो निर्जनं वास्ममाकलय्यास्य मण्डपं। अलक्षमाणव्यापारो द्वारमर्गलितं व्यधात्।
स्नानार्द्रकेशं शीतालुतया प्रावारवेष्टितं। कृत्वा कृतह्नं वपुः कृष्टशस्त्रीकं विष्टरोपरि।
आसीनं वीक्ष्य नृपतिं प्रसक्तोनेदृशोभवेत्। विज्ञप्तिं कुरु भूभर्त्तुरित्यूचे व्याघ्रउत्पलं।
स तया संज्ञया व्याघ्रः पादप्रणतिकैतवात्। राज्ञोऽग्रमेत्य तच्छस्त्रीं विष्टरस्थामपाहरत्।
विकोशां चाकरोत् पश्यंस्तां तयोश्चात्मलोचनः। प्राह स्म हा धिक्किं द्रोहहति यावद्वचो नृपः। १२१५
प्राहरत् प्रथमं तावत् सव्ये पार्श्वे तयैव सः। तस्य प्रशस्तराजेन मूर्द्धनि प्रहृतं ततः।
व्याघ्रेणाथ पुनः वक्षस्याभ्याभिवासकृत्तदा। प्रहृतं तत्र स पुनः प्राहरच्च दिहुत्पलः।
पूर्व्वयैव प्रहृत्या हि च्छिन्नपार्श्वास्थिमालया। मेने कृष्टान्तशस्त्रीकं स तं प्रोषितजीवितं।
गत्वा तमोरिपुं कर्त्तुमिच्छन् व्याघ्रेण राहिलः। पृष्ठे कृताहतिर्द्दिक्वानालिकानोऽभिहतोऽसुभिः।

ताम्बूलदायिकस्त्वन्ना कन्हालाख्यज्जकोऽव्रजन्। दीनो निजेभ्यः कारुण्यादुत्पलेनैव रक्षितः। १२२०

अन्तःसमुत्थिते चोभे वाह्यमण्डपवर्त्तिभिः। टिक्ककाद्यैः क्षता लुण्ठिर्द्रोहग्रहैरुदायुधैः।

उत्पलोऽनिहतोराजेत्यवेत्य कटकस्थितैः। वहिःस्थान् हन्यमानान् स्वान् समाश्वासयितुं ततः।

रक्ताग्रशस्त्रं सन्दर्श्य तोमरैर्व्वपुरुत्पलः। ऊचे मया हतो राजा न त्याज्यास्तवसूरिति।

तच्छ्रुत्वा दुःश्रवं राजभृत्याः क्वापि भयाद्ययुः। द्रोहानुगास्तज्जनान्तर्लब्धाशा ययुः क्षितिं।

निर्य्यान्तोमण्डपात्तीक्ष्णस्त्रिजभुर्जाङ्गकाभिधं। द्वारात्प्रविष्टं निष्कृष्टखङ्गपाणीकं नृपानुगं। १२२५

भूपालशाक्यपालस्य चैलोक्याख्यस्य सेवकः। निन्दन् द्रोहं टिक्ककाद्यैर्द्वास्थैरेकोऽव्यपादितः।

उत्कृष्टं नष्टसत्वानां मध्ये राजानुजीविनां। सखेटकासिं धावन्तं भावुकान्वयभूषणं।

दृष्ट्वा सहजपालाख्यं पार्श्वद्वारेण निर्ययुः। तीक्ष्णः स त्वपतद्भूमौ तत्कृत्यप्रहतिक्षतः।

जाते कुकीर्त्तिकालुष्यपात्रे राजात्मजव्रजे। वैलक्ष्यक्षालनं सिद्धं तस्य स्वक्षतजैः परं।

हतदेशिकसम्बादिदेहोराजात्मजभ्रमात्। विद्वान् द्विजन्मनोनाख्यस्तीक्ष्णपचैः पुरोगतः। १२३०

अक्षतान् व्रजतो वीक्ष्य तीक्ष्णान् ग्रामान्तरोन्मुखान्। चिरार्प्पितादव क्रोधान्नाधावन् केऽपि क्षत्त्रिणः।

राजवंश्यामहीपालप्रीतिपात्रप्रथां ययुः। स्थगयन्तोऽङ्गनं स्थूलकाया जनविवर्जितं।

तांस्तान् कापुरुषान् हर्षदेवोदन्तात्प्रसत्यलं। स्मृत्वा च कीर्त्तयित्वा च कृतभारग्रहादव।

जातदुष्कृतसंस्पर्शात् खेदात् कर्त्तुं न शक्नुमः। पापात् पापीयसां येषां नामग्रहणसाहसं।

अङ्गनान्मण्डपारूढिं मन्वानाः पौरुषं महत्। पापिनः केऽपि तन्मुख्या ददृशुः स्वामिनं हतं। १२३५

अधरेणास्तसंस्कारलेशलेशप्रकम्पिना। वदन्तं दन्तदष्टेन स्वान्तस्वान्तेऽनुतप्ततां।

वञ्चिता कथमेषोऽहमिति नामेति चिन्तया। निस्पन्दे जीवितान्तेऽपि तथैव दधतं दृशौ।

श्यामायमानं वाष्पेण व्रणवक्त्रोदञ्चता। अन्तःप्रशान्तामर्षाग्निशेषधूमलतात्विषा।

आननस्य स्फुटीभूतचन्दनोल्लेखकुङ्कुमं। छायया लिखितस्येव घनघातजलाच्छया।

आश्यानासृजटीभूतकेशं नग्नं भुवि च्युतं। पर्य्यस्तपाणिचरणं स्कन्धाग्रालम्बिकन्दरं। १२४०

तं वीक्ष्य नोचितं किञ्चिदाचेरुस्ते नराधमाः। वैजन्यस्य फलं भुंक्ष्वेत्यावेगादधिचिक्षिपुः।

बद्धा तुरङ्गे युग्ये वा न तैर्नीतश्चिताग्निसात्। कर्त्तुं न वा पारितः स प्राणत्राणाय धावितैः।

आस्तां विलम्बसाध्यं वा कर्म्मैतद्भ्राष्ट्रदारुणात्। पञ्चाग्नि चाग्निसाद्देहमपि कश्चन नाकरोत्।

राजवाजिनमेकैकं तेऽध्यारुह्य पलायिताः। निर्लुण्ठितस्तु कटको व्रजन् ग्रामेषु डामरैः।

न पुत्रः पितरं पुत्रं पिता वा प्रत्यपालयत्। मृतं हतं लुण्ठितं वा प्रचलन् स हिमेऽध्वनि। १२४५

न कोऽपि शस्त्रभृत् सोऽभूत् स्मृत्वा मानोन्नतिं पथि। परैराक्षिप्यमाणो यः शस्त्रं वस्त्रञ्च नात्यजत्।

लवराजयशोराजद्विजौ व्यायामवेदिनौ। कान्दस्य राजा निहता वीरस्तुत्या चयः परं।

अदूरादुत्पलाद्यास्तु कटकं वीक्ष्य विद्रुतं। प्रविश्यावाहकां छित्वा शिरो निन्युर्महीपतेः।

गतेषु देवसरसं तेषु छिन्नशिरा नृपः। हतश्चोर इव प्राप ग्राम्याणां प्रेक्षणीयतां।

एवं द्वाविंशतीयाब्दामावास्यायां स फाल्गुने । पञ्चपञ्चाशतं वर्षानायुषोऽतीतवान् हतः । ११८०
विलासभ्रमणस्थस्य सिंहदेवस्य सा श्रुतौ । प्रेमार्द्रेणैव दुर्वार्त्ता धात्रीयेन व्यधीयत ।
सम्भाव्यते योऽनुभावः सत्त्वस्थस्याप्रियश्रुतौ । हतशक्तोऽपि तं प्राप स तदा पितृवत्सलः ।
मोहलुप्तस्मृतिः स्थित्वा चिरादुद्गतचेतनः । तद्दुःखाहतधृतिर्विललाप स्फुटास्फुटं ।
मदर्थं कुर्व्वता राज्यं प्रयत्नादपकण्टकं । अधमे किं महाराज त्वयात्मा परिभावितः ।
अहेतोः पश्यतः शत्रूनन्ते वैरविशुद्धये । अपि ते मानिनोऽगच्छस्तात सम्भावनाभुवं । ११८५
त्वया निषेधिते वैरे पिता भ्राता च ते दिवि । निर्मन्युः सम्प्रति त्वन्तु वर्त्तसे मन्युदुःखितः ।
अनरण्यकपद्रोणजामदग्न्यादिषु स्पृहां । कुल्यवालितवैरेषु मा कार्षीः काञ्चनच्छवं ।
श्रेयस्त्वदाश्रयो मन्युरहं शोधयिता नृप । दूये न तच्च यातं यत्त्रैलोक्यमभियोज्यतां ।
वात्सल्योत्पुलकस्मेरं स्निग्धोक्तिमधुरं मुखं । मद्दर्शने यदासीत्ते तन्मे पुर इवाधुना ।
इति चान्यच्च विलपन् गाम्भीर्योल्लङ्घनेक्षतः । शोकभयमूकान् स ददर्शाप्तान् पितुः पुरः । ११९०
अशिश्रियत यन्मन्युर्दाक्षिण्यं निरुरोध तत् । तथाप्येवं स तानूचे किञ्चिदाक्षेपकर्कशं ।
कोशैः सदंशतां वीक्ष्य कुहतां सत्क्रियागताः । धिग्भवन्तश्च शस्त्रञ्च तातस्यान्ते विपर्ययं ।
यस्मात्पितृव्ये निहते कृतमुच्छिष्टजीविभिः । मान्यानां भवतां सिद्धं हा धिक् तदपि नाधुना ।
इत्युपालभ्यमानस्तान् द्विचैरभिक्रमागतैः । द्विचैरमात्यैः कर्त्तव्ये श्रुतएव हितः कृतः ।
प्रस्थानं लोहरे केचिदूचुः सन्त्यज्य मण्डलं । त्वराश्च तत्र राज्यन्ते वदन्तो भैरवं भयं । ११९५
गर्गात्मजं पञ्चचन्द्रमालम्ब्य लहरस्थितं । देराज्याचरणायान्ये धीरप्राया बभाषिरे ।
नहि स्पष्टहवद्भिचोर्म्मिविचोर्मनगरान्तरं । अद्यापि प्रत्यवस्थानं केनाप्यसति सुस्थले ।
आत्मन्यसम्भावनया तादृशा मन्त्रिणां नृपः । सान्तःखेदं स्म विधेयं द्रक्ष्यथेत्यब्रवीद्वचः ।
कालापेक्षापरित्यक्तपितृव्यापत्तिदुःखितः । स कोशादिव्ययादिच्छद्दक्षिणस्याणदीक्षितान् ।
इतश्चेतश्च बभ्रम्यमाणैः पांशून्श्रुताम्बरं । अन्योन्याख्यायिभिर्लोकैः पुरं मुखरतामगात् । १२००
मत्तवेतालमालेव कालरात्र्याकुलेव च । बभूव सा यामवती सर्व्वभूतभयावहा ।
दीपैर्निर्वातनिष्कम्पैश्चिन्तास्पन्दैश्च मन्त्रिभिः । तिष्ठन् परिवृतो राजा त्वन्तरेवमचिन्तयत् ।
निर्द्वारे स तमस्युपमाहते शून्यवेश्मनि । तातोऽपि निहतः शून्ये मयि जीवत्यनाथवत् ।
कष्टमेतादृशासह्यवैशसचालनावधि । कथं गोष्ठीषु शक्ष्यामि द्रष्टुं मानवतां मुखं ।
विरोधिवशवर्त्तिभ्यो देशेभ्यः सैन्यनायकाः । स हिमैरेव दुर्लङ्घ्यैः कथमेष्यन्ति वर्त्मभिः । १२०५
इत्थं विकल्पतस्तस्य तत्तच्चिन्ताभिषङ्गिनः । ययौ भीतिमतोभीमा कथञ्चित् सा निशीथिनी ।
प्रातश्चतुष्किकां पौरसमाश्वासाय निर्गतः । नष्टं कटकमन्वेष्टुं सोऽश्वारूढान् व्यसर्जयत् ।
मार्गानस्पृश्यसञ्चारैस्तुषारैर्विवरोज्झितान् । आश्लिष्टवसुधाभेदाः कर्त्तुं प्रारेभिरे ततः ।
नामाप्यलब्ध्वा सैन्यस्य मोक्षसैन्येषु दूरतः । निवृत्तेषु नियुक्तेषु विस्मयन्नृपतिः क्षणं ।

यद्येनाप्तं तत्तत्परित्यक्तं मयाधुना। इत्यग्राहीत्स्मितवतामभयं सागसामपि। १३८०
इत्याज्ञां भ्रमयामास पटहोद्घोषणैः पुरे। साशीर्वादास्ततः पौरास्तत्पारज्ञम्न सर्व्वतः।
अनन्तरं नृपाचारवैधर्म्योद्धारकल्पया। तया सोऽनघया वृत्त्या फलं सद्योऽन्वभावितः।
शतादप्यूनसङ्ख्यैः स्थितवाननुगैः समं। अनुरागवतैर्लोकैस्तत्कालं पर्य्यवार्य्यत।
प्रियोक्त्या वेदनं प्रीतिदायोपायः प्रभोः पुरः। भजंल्लोकस्याघ्यमन्त्रिपदवीं लक्ककोऽग्रहीत्।
राज्यं प्रथ्यां नयत्येवं प्राप्ते राज्ञि नयक्रमैः। याति मध्यन्दिने भिक्षुर्व्यविक्षुः पुरमाययौ। १३८५
तस्य डामरपौराश्ववारलुण्ठाकसङ्कुलः। अदृष्टपूर्व्वो ददृशे सैन्यव्यतिकरस्तदा।
इतं श्रुत्वा रिपुं राज्योत्सुकः स नगरं व्रजन्। राजा काकात्मजेनेति तिलकेनाभ्यधीयत।
इतः समस्तविद्विष्टः स देवाद्यदि सुस्थितः। कथं प्रकृतयो जह्युर्गुणवन्तं तदात्मजं।
पुरप्रवेशका राजंस्तस्मादेकमहस्त्वरा। एहि पद्मपुरं यामो मार्गं रोद्धुं विरोधिनां।
आगच्छन्तो नष्टसैन्याः सुज्जिमुख्या महाभटाः। मिलिता यदि वा तद्वासाश्च सायुधवाहनाः। १३९०
प्रविष्टोऽसि ततोऽन्यस्याशक्तो द्वित्रैर्दिनैर्ध्रुवं। नगरं नगरीकोभिः स्वयमभ्यर्थितागमः।
अलमेतैर्ज्जरन्मन्त्रैर्मन्दमन्द इति चक्रिरे। स च कोष्टेश्वराद्याश्च वीरास्तस्यावधीरणां।
राज्यं विदद्भिः सम्प्राप्तांस्तांस्तान् ग्रासनपट्टकान्। द्रुतमर्थ्यमानैश्च विलम्बं कारितो निजैः।
सतोषबद्धिमापातविवशाशेषसैनिकः। आसदन्नगरोपान्तं समयेन स तावता।
एतस्मिन्नन्तरे लब्धे निःसैन्यस्य ससैनिकः। गर्गात्मजः पञ्चचन्द्रो नृपतेः पार्श्वमाययौ। १३९५
हतस्वामिपरित्यागमन्युत्थालनकाङ्क्षिभिः। राजपुत्रैः समं सोऽथ वीरो योद्धुं विनिर्ययौ।
असम्भावनसंग्रामान्वीक्ष्य तान् भिक्षुसैनिकाः। यावत्प्रारेभिरे योद्धुं तावत् किमपि सर्व्वतः।
क्षणेनैव ययुर्भङ्गं तांस्तान् वीक्ष्य हतान्निजान्। न संस्तम्भयितुं शेकुः स्वचमूश्च पलायिनीः।
सेनानाथाश्च ये मुख्या भिक्षुपृथ्वीहरादयः। अदृष्टपूर्व्वं सन्त्रासं तेऽपि ग्रस्तिवदाययुः।
विद्रवन्तोऽनुयाताः स्युस्ते चेद्दूरं नृपानुगैः। तन्नूनमवशिष्येत क्षणादेव न किञ्चन। १४००
वैमुख्यं तेषु यातेषु चिरात्साम्मुख्यमाययौ। नवभूपप्रभावेण नगरे विधुरे विधिः।
अन्यथा कलितो लोकैरन्यथा दैवयोगतः। इत्थं राज्ञोर्द्वयोरासीद्विजयाविजयक्रमः।
कञ्चिन्निपातयति वद्धपदं क्षणेन कञ्चित्परं निपतितुं नयति प्रकृष्टिं।
सद्भूपनिर्व्विषयचिन्तराजभावश्चाधोऽश्मसामिव नटं पुरुषं विधाता।
अथ तत्पञ्चट्टस्थानस्थाक्तः सुज्जिर्दिनात्यये। दावव्याप्ताद्रिनिष्क्रान्तो निःसहोऽहिरिवाययौ।
मेधाचक्रं पुरग्रामस्थितः श्रुत्वा हतं नृपं। सहि सैन्यमध्य राज्यमज्ञोऽन्तस्त्राववसत्परं। १४०५
रिल्हणादीन् स्थितान् शूरपुरादौ सैन्यनायकान्। प्रतीक्ष्यमाणस्तैः साकं निर्व्याधं नगरेऽविशत्।
तमिस्रायां प्रत्यभिज्ञाकृते तेषामनश्वरान्। स्वावासपृष्ठे ज्वलितोद्दीपानस्थापयत्ततः।
वैमत्यात्तु पत्तीनां विद्रुतानां पृथक् पृथक्। निशि क्वापि परिभ्रष्टा न तत्कटकमाययुः।

प्रत्यूषे प्रचलंस्तैस्तैः पृष्ठलग्नैः स डामरैः । न मुहूर्त्तमपि त्यक्तः सहरद्भिरिवच्युतः ।

वृद्धस्त्रीबालभूयिष्ठान् सहप्रस्थायिनो जनान् । ययौ रक्षन् पुरस्कृत्य पशुपालः पशूनिव । १५१०

पश्चाद्गत्या हयारोहैः सह व्यावृत्य तिष्ठता । कश्चिज्जल्पणकेन रक्षा तेषां कर्त्तुमशक्यत ।

द्राक्षाखण्डद्रुमव्यूहसम्बाधेऽध्वन्यसावध्वगैः । वाध्यमानोऽरिभिर्लोकं सोऽत्याक्षीत्तु पदे पदे ।

हतस्य स्वामिनः स्वामिसूनोश्च व्यसनस्थितेः । आनृण्यकाङ्क्षिणा तेन तत्र त्रातेव रक्षितः ।

येषां प्राणपरित्यागे निश्चय बध्नतामपि । न योग्यकालापेक्षास्ति किन्तैर्हिंस्रपशूपमैः ।

इनं तु तमनष्टमायान्तं दृष्ट्वा पद्मपुरान्तिकं । अत्रसन् डामराः क्रूराः खण्डूवीविषयोकसः । १५१५

खेरीतलालसायामादुत्थाय पृथुसैनिकः । अजनन्नाययौ तत्र प्रसङ्गे श्रीवकः प्रथां ।

तमनुष्ठानुगं सुज्जिरसाविति विशङ्किताः । निपत्य ते विदधिरे हतलुण्ठितसैनिकं ।

मेरुश्च सज्जनश्चाश्ववारौ तत्राहवे हतौ । हतोऽहमात्मजो मत्तो द्विवसैर्व्यपद्यत ।

उद्दीपविहतस्वभ्रवहत्सलिलसङ्कटे । उद्दीपपुरवास्तव्यस्त्रानमत्र क्षणेऽभवत् ।

युद्ध्वा युद्ध्वा प्रचलतस्तत्र पद्मपुराद्बहिः । हृदुसैन्यस्य विशिखाः श्रीवकस्याविशन् गलं । १५२०

प्रहारविवशो नासौ सुज्जिर्शालेति डामरैः । स निर्लुण्ठिपरित्यक्तः पूर्व्वमैक्ष्यमुरोधनः ।

लुण्ठितः श्रीवकोऽनीकशोकभारग्रहाननैः । तैः कैश्चिद्वलितैरासीत् सुज्जेर्मार्गेऽनुपद्रवः ।

प्रस्थिते पथिकेऽकस्मात् यन्त्रपूत्सादयन् वने । आयुःशेषो मृगेन्द्रस्य विदध्याद्ध्वशोधनं ।

निःशब्दसैन्यो निर्य्यातः सुज्जिः पद्मपुरान्तरे । उद्दीपश्वभ्रसविधं सम्प्राप्तोऽज्ञायि डामरैः ।

पदातिकोशशस्त्रादि मुष्णतः सोऽनवेक्ष्य तान् । तीर्त्वा श्वभ्रं वाजिगम्यां साश्ववारो भुवं ययौ । १५२५

ततः पुरं प्रशान्तारिभयं दूरादिरोधिनः । भूभङ्गनर्त्तनीकम्पहस्तालापैरतर्जयत् ।

सन्नस्तैस्त्वचमात्रं तैस्त्यक्तमादाय च द्रुतं । प्रविश्य नगरं साश्रु नृपतेः पार्श्वमाययौ ।

ज्यायसि भ्रातरीवास्यं तस्मिन् प्राप्ते जहौ नृपः । दुःखोष्णैरश्रुभिः सार्द्धं वैरिव्यापातसाध्वसं ।

महत्तमोऽनन्तसूनुरानन्दस्तत्र वासरे । लोचनोड्डारकग्रामे डामरैः प्रचलन् हतः ।

तस्य तु मण्डन्यदण्डादिदुःसहायासकारणात् । स विपत्पतितो नाभूत् कस्यापि करुणावहः । १५३०

भासाभिधः सुज्जिभृत्यो लोकपुत्र्यात् पलायितः । आप्तोऽवन्तिपुरेऽविश्वद्वन्तिस्वामिनोऽङ्गनं ।

कम्पनोद्ग्राहकः क्षेमानन्दः स च तदन्तरे । अमर्षणैरवेष्टितो डामरैर्होलडोद्भवैः ।

इन्दुराजोऽपि सेनानीः कुलराजकुलोद्भवः । टिक्कं तद्वेष्टितोऽध्यानोड्डारं व्याजादम्रियत ।

पिश्चदेवादयोऽन्येऽपि बहवः सैन्यनायकाः । अत्यजन् क्रमराज्यं तड्डामरैः कृतवेष्टनाः ।

पाते वनस्पतेः ग्रावाद्रुव तन्नीडविच्युताः । इत्थं हताः अनाथासंस्तत्र तत्र नृपानुगाः । १५३५

निष्पादुका हिमक्लिष्टचरणा मग्नविग्रहाः । कुहलामावहवोऽभूवन् मार्गेषु गलितासवः ।

न व्यलोक्यत मार्गेषु तदा नगरगामिषु । पलालच्छन्नदेहेभ्यो मानुषेभ्यः परः क्वचित् ।

घासं विलासवासार्थं तेऽपि चिनरथादयः । किन्तुर्व्वैरचिरेणैव महामात्यैर्भविष्यति ।

द्वितीयेऽपि दिने हृद्गसञ्चाराः पक्षिणामपि । तुषारवर्षिणो मेघा न मुहूर्त्तं व्यरंसिषुः ।
वनपूर्व्वाभिधग्राममस्थितस्य कटकान्निशाम् । भिक्षोर्निक्षिप्य धन्योऽग्रे सिंहदेवमशिश्रियत् ॥ १४४०
निमन्त्र्य कृतसत्कारं नृपं तदनुयायिनं । सर्व्वेऽपि भैक्षवास्तस्थुः सैनिका नगरोन्मुखाः ।
मन्दप्रतापे दायादे संप्राप्तावसरास्ततः । राज्यस्थं तस्य राजानमनुमन्तुं विनिर्ययुः ।
परापातभयच्छन्नयातास्य विवरैर्ज्जनैः । न तानेतुमशक्यन्त दूरस्थं पित्र्यकाननं ।
चक्रिरे स्कन्दभावेनोपान्ते देहांस्त्विताग्निसात् । ते सत्वरन्तस्तासामदूरे राजसद्मनः ।
राज्ञी चम्पोद्भवा देवलेखा तरललेखया । स्वस्रा सहाविशद्वह्निं रूपोन्मेषावधिर्व्विधेः ॥ १४४५
गुणोज्ज्वला जज्वला सा मृता वल्लापुरोद्भवा । गङ्गात्मजा राजलक्ष्मीरपि वह्नौ व्यलीयत ।
मत्वा हिमर्त्तूपायातं राज्यं तस्य निजप्रभोः । डामरानत्र भूभर्त्तुर्हिमराजाभिधां व्यधुः ।
ददर्श सोत्पलं मुण्डमथ भिक्षुरुपागतं । गाढामर्षाग्निसन्दीप्तैर्दृक्पातैर्निर्दहन्निव ।
कोष्ठेश्वरज्येष्ठपालादयस्तस्य तत्क्रियोद्यताः । असहायत्वतां वैराद्भजता तेन वारिताः ।
नगरं हिमहृद्यन्ते स यियासुर्युयुत्सया । नाटेस्थेनाहिताकृष्टान् भृत्यान् ज्ञात्वाब्रवीद्वचः ॥ १४५०
प्रसह्य प्रभुतां राज्यमिति दृश्योदरे सति । हते तु तस्मिन्दायादे विपक्षः स्यात्पतिर्भुवः ।
इति चिन्तयतस्तत्तु दैवात्सञ्जातमन्यथा । राज्यश्रीरपि विरता हते प्रत्युत यद्रिपौ ।
किं राज्येनाथ वा कृत्यं भोगमात्रोपयोगिना । जिगीषोरुचितं कस्य मम त्वन्यच्च मे स्मृति ।
मुण्डं न्यपातयद्भूमौ यः पूर्व्वेषां पुरा मम । सिंहद्वारे मदीयेऽद्य तन्मुण्डं वर्त्तते लुठत् ।
दशमासान्मदाद्यानां मुखच्छेदं व्यधत्त यः । तत्तु दुःखं स तु मया दशाब्दाननुभावितः ॥ १४५५
एवं निर्व्यूढकर्त्तव्यतया नेष्याम्यवन्ध्यतां । उपशान्तमनस्तापः सुस्थितः शेषमायुषः ।
इत्याद्युक्त्वा गतश्लिष्टाभ्यर्णन्तं प्रणतं व्यधात् । प्रीत्या सहेमघटिकाश्वेतच्छत्रादिभाजनं ।
तद्विसर्ज्जन राज्याशापिशाचोदितया पुनः । गृहीतोऽभ्येत्य भीतान्तस्तस्थावन्तर्व्विचिन्तयन् ।
अत्यन्तानुचितं चान्यतन्त्रैः संविविधित्सुभिः । रचितं रक्षिणान्यस्य हन्त्राम्मत्कलेवरं ।
विपक्षाश्रयणेऽप्यस्मिन् स्वामिनोऽन्ते किमीदृशी । दशा शरीरे स्वत्यन्तः कृतघ्नत्वेन चिन्तयन् ॥ १४६०
दिदृक्षाव्याजतः सज्जकाख्यानगरग्रस्तम्भत् । आयातो वाहुकां गोप्नन् युद्धैर्जित्वाग्निसाद्व्यधात् ।
स चतुर्नवताद्वर्षादारभ्यासादितच्छलैः । भूतैरधिष्ठितस्तिष्ठन् प्रजासंहारकार्य्यभूत् ।
देवताधिष्ठिताविष्टदेहिवाक्यादिति श्रुतिः । भावितद्वचसंवादजनितप्रत्ययो ययौ ।
तदीयानन्यथात्वेन च्छेत्ता भ्रमयिता च यः । तन्मुण्डस्यास्य स पुमांस्तस्यः सुप्तो मृतस्तथा ।
भक्षुः कापुरुषाचारहतौचित्यो व्यसर्जयत् । प्राचण्ड्याख्यातये मुण्डमथ राजपुरीं रिपोः ॥ १४६५
उच्चलात्मजया तत्र देव्या सौभाग्यलेखया । नेष्टन् पितृव्यमुण्डस्य जिघांसन्त्या निजानुगैः ।
राजपुर्य्यामाकुलत्वं नीतायामासदाद् ततः । तद्भर्त्तुः सोमपालस्य दूरस्थस्यान्तिकं चिरात् ।
आदीनास्य मधुचैत्यग्रामद्यधर्म्मादिकर्म्मसु । तिरश्चद्व भ्रोचस्य नेयबुद्धेः स्वप्रभोः ।

सभ्यैरुच्चावचं तत्र कर्त्तव्यं परिचिन्तितं। स्वोचिते व्यञ्जनौचित्यानौचित्यं निरवद्यधीः।
नागपालस्तु सौभ्रात्रं लब्ध्वा भ्रातुः स्थितोऽन्तिके। मेने मुण्डावशेषस्य नोपकर्त्तुर्व्विमाननं।। १७७०
सुदीर्घदर्शिनोऽप्यन्ते काश्मीरेभ्यः पराभवं। विशङ्क्याचुस्त्वयैवेदं सत्कार्य्यं वः शिरः प्रभोः।
क्रियते येन नियतेरन्यथात्वं समाप्यतां। विनिहस्य हरेर्दृष्टाः कुर्व्वन्तो यत्र जम्बुकाः।
तद्भोपालपुरे कालागुरुचन्दनदारुभिः। काष्ठैर्निष्ठां शिरो निन्ये वीतिहोत्रेऽथ शत्रुभिः।
यथा प्राप्तिभ्रंशौ धरणिपतिभावस्य विविधा यथा ह्रासोल्लासा अपि समरसीमासु बहुशः।
यथा तत्तद्दीर्घव्यसनविनिपातानुभवनं तथा दृष्टस्तस्य प्रमयसमयोऽप्यद्भुततरः।
कस्यापरस्य तस्येव लेभिरे वह्निसत्क्रियां। एकत्रेतरगात्राणि मुण्डमन्यत्र मण्डले। १७७५
टिक्कादयोऽथ नगरं यान्तोऽवन्तिपुराध्वना। तत्र हन्तुं व्यलम्बन्त भासादीन् पूर्व्ववेष्टितान्।
युद्धान्युद्दीपनग्रावप्रहारच्छेदकारिभिः। न ते जेतुमशक्यन्त तैः प्रयत्नैः परैरपि।
स्थितैर्महाश्मप्राकारगुप्ते सुरगृहाङ्गने। तैर्हन्यमानास्ते स्थातुं गन्तुं वा नाभवन् क्षमाः।
एवं प्राप्तविलम्बेषु तेषु लब्धान्तरः सुधीः। स्वीचकार प्रदानेन खण्डूवीडामरान्नृपः।
गृहीतनीविना तेषां सुज्जिः प्रायोजि सत्वरं। तेन भासादिमोक्षाय पद्मचन्द्रादिभिः समं। १७८०
प्रापावन्तिपुरं यावन्न स तावत्तदग्रगान्। कय्यात्मजादीनालोक्य भग्नं टिक्कादयो ययुः।
देवागाराद्विनिर्याता भासाद्यास्ते च विद्विषां। भग्नानामनुगान् हत्वा सुज्जेरन्तिकमाययुः।
लब्धप्रतापे नगरं प्रविष्टे कम्पनापतौ। आययाविन्दुराजोऽपि टिक्कं सन्त्यज्य सानुगः।
चक्रे चित्ररथश्रीवभासादीनपि भूपतिः। पादाग्रद्वारखेर्य्यादिकार्य्यं स्थानाधिकारिणः।
यथा पूर्व्वमधीकारान् न जहत् सुज्जिरप्यभूत्। प्रतीहारमुखप्रेक्षी का कथेतरमन्त्रिणां। १७८५
प्रतीहारोऽपि निःसीमडामरग्रामसम्मतः। तद्भद्रचक्रिकां कुर्व्वन्नगाद्राज्ञः प्रतीक्ष्यतां।
स नासीदस्य दृष्टूहे कोऽपि तत्प्ररणेन यः। नाशिश्रियन्नृपं नोवा बभूवाश्रयणोन्मुखः।
निष्कृतेशिल्वसद्दृशस्फूर्त्तिर्धूर्त्तौ महीपतिः। आहारमप्यनासाद्य तस्मात न न्यषेवत।
इत्थं नगरमात्रान्तलब्धपादप्रसारिकः। सोऽवर्त्तिष्ट समासन्नफलं कन्दलयन्नयं।
सङ्घट्याखिलान् भिक्षून् डामरान्विजयेश्वरे। अथातिष्ठदधिष्ठानं जिघृक्षुः शिशिरात्यये। १७९०
अदृष्टपूर्व्वं स्वचमूचक्रैक्यं वीक्ष्य डामराः। भिक्षोर्हस्तगतं राज्यं मत्वाशङ्किषताथ ते।
एकैकस्याथधीशौर्य्यमित्रामित्रादि दृष्टवान्। नोत्तिष्ठेत् प्राप्तराज्यः किमास्कन्देषु गृहान्तरं।
इति संमन्त्र्य ते राज्यं सोमपालाय दित्सवः। दूतान्निगूढं प्राहिण्वन् सोऽपि दूतं व्यसर्जयत्।
आकारचारवैक्लव्यैः पशुतुल्यस्य तस्य तैः। राज्यभोगास्त्र भक्तानोभविष्यन्तीत्यचिन्त्यत।
भोगलोभार्जितौचित्यदस्युसङ्घचिकीर्षितं। देशेऽत्र पापात् पापीये दैवान्न समपादि तत्। १७९५
दास्येऽप्ययोग्यो योराज्ये सदभ्यासे सपान्वितः। शक्येत पातुं देशोऽयं किमीषदपि तादृशा।
शालीन् पलालपुरुषोऽवति यः क्षमानुदग्धानमर्कटकपेटकभीतिदानैः।

चातुं स काननतरूर्म्मिाहितो विदध्यात् किन्तत्र भञ्जनकृतां वनकुञ्जराणां ।
भिक्षोर्म्मानिष्टतां दिष्टद्धिव्याजात्ततोभजन्। तद्भूतोडामरान् गूढं नीविदागोद्यतान् व्यधात्।
वैशाखेऽथ कृतारम्भस्तदा संभावितत्वरः। निर्गत्य नगरात् सुज्जिर्गम्भीरातीरमाययौ।
तस्यापि योगः साध्योऽभूद्दोङ्कु यत्समवायिनः। एकाकी तावता वीरानुरीकृत्य स निर्ययौ। १५००
अन्तःपाते साहसानां माहुतं तद्विधेर्व्यधात्। जीयते लक्षमेकेण लक्षेणैकोऽथ वा युधि।
पारं तरीतुं निःसेतोः सरितोऽपारयन्नसौ। पारे परस्मिन्नहितानपश्यच्छरवर्षिणः।
द्विता निशाः स ते चासंसक्ताः सिन्धोस्तटद्वये। रुद्धाः सन्नाहिनोऽन्योन्यरम्भावेक्षणदीक्षिताः।
अथावन्तिपुरान्नौभिरानीताभिरबन्धयत्। सेतुं साश्वोऽतरत् सुज्जिरारुह्य तरणीं स्वयं।
तरन्तमेव तं दृष्ट्वा योधैः कतिपयैः समं। द्विषच्चमूर्म्महल्लोला द्रुमालीवाभवच्चला। १५०५
द्रष्टुं मुहूर्त्तमेतावदारूढः स च यत्तटं। बद्धश्च सेतुस्तीर्णाश्च योधाभग्नाश्च विद्विषः।
न खड्गी न हयारोहो नापि शूली न चापभृत्। व्यावृत्य प्रेक्षितुं कश्चिदशकद्विद्रुताद्बलात्।
निबद्धबन्धशैथिल्याल्लोलपल्ययने हये। कोष्टेश्वरस्याश्ववारा व्यलम्बन्तान्तरे क्षणं।
निर्यत्य तेऽपि पर्य्याणं सुज्जौ पश्चात्प्रधाविते। वातोद्धुतं रजश्चक्रमिव क्षिप्रं तिरोदधुः।
हतलुण्ठितविध्वस्तध्वजिनीका विरोधिनः। ध्यानोड्डारादिषु ग्रामेष्वमिलन् खण्डशो गताः। १५१०
विजयेशाग्रगन्तोर्व्वी वितस्तासेतुमग्रगः। भासोऽपि दस्यून्विदधे पलायनपरायणान्।
उषित्वा विजयक्षेत्रे तदान्येद्युरुपागते। कम्पनेशं ययुस्त्यक्त्वा ध्यानोड्डारं विरोधिनः।
तत्र स्थित्वा दिनैः कैश्चित् स देवसरसोन्मुखः। शिश्रिये भेदनिर्यातैरेत्य टिक्कस्य गोत्रिभिः।
जयराजयशोराजौ तन्मुख्यौ भोजकात्मजौ। प्रविश्य देवसरसं व्यधाद्दिक्षोपवेशने।
ययुर्व्विनष्टसङ्घातास्तस्मिन् पश्चात् प्रधाविते। भिक्षादयः शूरपुरं स्वोर्व्वीं कोष्टेश्वरादयः। १५१५
गर्हौ महाभये सोमपालदूतः पलायितः। दास्याः सुतेन प्रहितः कुत्रास्मीति प्रभोर्व्यधात्।
सहि तादृक्प्रहारम्भक्षोभसाध्योन्नतोक्षुतां। तस्य सिंहीस्पृहाक्रान्तगोमायुवदमन्यत।
प्रसादात् स्वामिनो राज्यं चिरं नष्टं मितैर्दिनैः। सुज्जिः प्रसाद्य प्रददावेवं स स्वामिसूनवे।
शमालादीनपि व्यूढान् दानोपायेन डामरान्। पौरांश्च भिक्षाश्रयिणो राजाभ्येतुं प्रचक्रमे।
राज्ञः परीक्ष्य सामर्थ्यमथ कुर्वो यथोचितं। इति सर्व्वाभिसारेण तं संमन्त्र्य रणं दधुः। १५२०
रजोजवनिकालक्ष्यभटौघनटताण्डवः। दामोदरेऽभूत् संग्रामः स वीरग्रामघस्मरः।
कोष्टेश्वरवशं यातं रक्षता पितरं क्षतं। लब्धाः सहजपालेन श्लाघाः प्रकृतिभिः समं।
असमस्त्वाविशेषोऽभूद्राज्ञो भिक्षाचरस्य च। भिक्षुस्त्वहन्यसंवेद्यं विवेदात्मपराजयं।
ततःप्रभृति यः प्रातः स न सायमदृश्यत। योऽद्य वा न परेद्युः स सैनिको भिक्षवे बले।
एवं त्यक्त्वा परान् पौरडामरेषु नृपान्तिकं। प्रयात्सु लाभसत्कारानुचितान् प्राप्नुवत्सु च। १५२५
कप्यर्द्धपूर्व्विकोत्तस्थौ मनुजेश्वरकोष्टयोः। प्रयातुं पार्थिवाभ्यर्णं लाभसंख्याभिलाषिणः।

ज्ञात्वाथ तत्काकरुहाहृतीं तस्य परिच्छदः । देशान्तरोन्मुखोभिक्षुणापाठे माक्षवाचलत् ।
अनुयाद्भिः सदाश्लिष्यप्रेषादिहितसान्त्वनैः । तदावेर्डामरैः कृध्यत्न निरोद्धुमपार्य्यत ।
अकरोत् स्वैरिणीस्नुतया शीलवहिष्कृतः । अतिरूपेषु दारेषु तस्य कोष्टेश्वरः स्पृहां ।
सटां हरेः फणारत्नमहेर्ज्वालां हविर्भुजः । बालाश्च तस्य संस्प्रष्टुं कोऽप्रशान्तस्य शक्नुयात् । १५३०
समं सोत्पलिना बद्धसन्धिराश्रयकाङ्क्षिणः । सोमपालः स्वविषये नादात्तस्य प्रतिश्रयं ।
तद्विजेतुः प्राणहरैः प्रयत्नैस्तस्य सर्व्वतः । तद्देशदुर्गममहीसीमान्तं सुल्हरीं ययौ ।
त्रिगर्त्तेषु दया शीलं चम्पायां मद्रमण्डले । त्यागोदार्व्वाभिसारेषु मैत्रीणं मर्त्यधर्म्मिणां ।
पीडयेत्त्यक्तभीर्भूम्यद्दूरस्थे त्वयि डामरान् । त्वामेवाभ्यर्थ्य राजानं ततः कुर्य्युः क्रमेण ते ।
ध्वान्तप्रजाः सोऽर्थयितुं साम्प्रतं नरवर्म्मणः । मन्त्रिभिर्युक्तमित्युक्तमपि मन्त्रं न चाग्रहीत् । १५३५
वात्सल्यपरिवारोऽसकृद्धृदत्यथ गच्छतः । श्वशुरप्रार्थनां तस्य भृत्याः पार्श्वादवाचलन् ।
प्रावर्त्यताथ नगरे विशद्भिर्व्विभवोज्ज्वलैः । सुलभसुलभे काले वरयात्रेव डामरैः ।
वीक्ष्याश्वच्छत्रतुरगैरेकैकपार्थिवाधिकं । सुस्सलक्ष्मापतेर्धैर्य्यं नैष्ठुर्य्यं तुष्टुवुर्जनाः ।
औदार्य्याकारतारुण्यवेशसौन्दर्य्यमन्दिरं । कोष्टेश्वरोऽधिकं स्त्रीणां प्रययौ प्रेक्षणीयतां ।
प्रशान्तविप्लवे देशे यथावृत्तववश्यतां । विशङ्कुरिलवन्याघत्तर्य्यघोषादिकोऽनिशं । १५४०
चीराद्या लक्ष्मकेणापि सर्व्वे मण्डवराज्यतः । आनीताः पार्थिवाभ्यर्णं सैन्यार्णवभयङ्कराः ।
अपि भूपालवाल्लभ्यादभूद्राजोपजीविनां । प्रतीहारगृहद्वारप्रवेशो वल्लभानकृत् ।
लवन्यलुण्ठितग्रामतया दुर्भिक्षदुःसहः । व्ययोत्तरङ्गकालोऽभूत् स राज्ञोऽधनदश्रियः ।
डामरेभ्यो नृपः पौरानसंगृह्णन् हृतवेतनः । निनायाभ्यन्तरं दृष्टिं बाह्यं चापचयं जनं ।
तिष्यवैश्यार्घदेवाद्या ज्ञातयो जनकद्रुहां । राजद्रोहोचितां राज्ञा विपत्तिमनुभाविताः । १५४५
मासैश्चतुर्भिः स पितृप्रमयाहादनन्तरं । अनन्यशासनं राष्ट्रं स्वमेव समपादयत् ।
निवासनगरं पौराः सर्व्वसामर्थ्यवर्जिताः । अनन्तैराष्ट्रमाकीर्णं डामरैः पार्थिवोपमैः ।
बद्धमूलो नातिदूरे सर्व्वभारसहो रिपुः । सबाह्याभ्यन्तरामन्त्रिसामन्तावैरिसंश्रिताः ।
मन्त्रोपदेशहृद्भृत्यस्य नैकस्यापि नृपास्पदे । अधर्म्मवत्सलाः सर्व्वे भृत्या द्रोहैकतत्पराः ।
राज्यारम्भे बभूवेयं या सामिग्र्यस्य भूपतेः । सा स्मर्त्तव्यान्तराज्ञातुं प्रत्युदन्तविविक्तृभिः । १५५०
प्राप्तप्रसङ्गात्तदिदं गुणग्रामोपवर्णनं । वक्ष्यमाणं सुवक्तृशोऽप्यत्र लेशात् प्रदर्श्यते ।
पूर्व्वापरानुसन्धानवन्त्यैर्दृष्टान्तवत् कथाः । मावुद्धातिगभीराणां शक्या रमयितुं गुणाः ।
प्रत्यक्षस्य गुणाश्चाशाविविच्यन्तोयथास्थिताम् । अमीर्थ्यस्य भविष्यामो विवेकस्यानृणावयं ।
स्थितस्य तत्वविज्ञाने नान्यस्य हि पटुर्जनः । अमानुष्यानुभावस्य राज्ञः किं पुनरीदृशः ।
हितानां दाराणां सदृशसुखदुःखस्य सुहृदः कवेः सोल्लिखस्य प्रियसकललोकस्य नृपतेः ।
स्थितानां कोऽप्यत्र व्यवहितविवेकः स्वकुशतेरसामान्यं ज्ञातुं सुभगमनुभावं न कुशलः । १५५५

भवेत्प्राप्तप्रसरणा परिणामेऽथ वा मतिः। कथं सर्व्वस्य भूतायां निष्ठायां गुणदोषयोः।
सन्त्येवास्यापि विषमाः स्वभावा दोषतां जनः। येषां विपाकभव्यत्वमजानन् गणयत्ययं।
विकाशः केषाञ्चिन्नयनविषमैर्व्विद्युदुदयैः परेषामुद्भूतिः श्रवणकटुभिर्दीर्घरसितैः।
न चेष्टा काप्यन्योपकृतिपरिहीना जलमुचो जडो वर्षादन्यं गणयति गुणं नास्य तु जनः।
गुणांस्तांस्तान्कान्तरान् प्रष्टव्यन्नस्यानुभवगोचरान्। भविता पूर्व्वभूपालकृते सप्रत्ययो जनः।
अनुच्चलन्नपि स्थानात् भूभङ्गेन चकार सः। विलोलांल्लोमकम्पेन दिङ्नागइव भूधरान्। १४९०
विरुधद्दाह्निनीवृन्दा गूढं यद्भयसम्भवं। वहन्ति तापं भूपालास्तोर्व्वाग्निमिव सिन्धवः।
भूमिमृद्भास्वतस्तस्य तेजसाप्यायितो गतः। पूर्व्वराजयशश्चन्द्रो भुवनेष्वप्रकाशतां।
योयस्तं पश्यति स्वात्मसंमुखं स स सर्व्वतः। जानाति वक्षोलिखितं देवबिम्बमिवेश्वरं।
स्थिरप्रसादोदत्ते यत्तदादत्ते न स क्वचित्। भयं पुनः प्रणमतां दत्तं हरति विद्विषां।
कृष्टासेः प्रतिबिम्बं स्वं हित्वा नान्योऽस्य संमुखः। नापरः प्रतिशब्दश्च गर्ज्जतः प्रतिगर्ज्जति। १४९५
तस्य नातिशितं कोपे प्रसादे निशितं पुनः। धत्ते तीक्ष्णैकधारस्य तरवालेस्तुलां वचः।
तस्याकुजन्मनो नित्याश्वानलक्ष्मीविकाशिनः। प्रभवन्त्याश्रिताः कल्पशाखिनः पल्लवाइव।
राज्ञि गाम्भीर्य्यदुर्ल्लक्ष्यमाहात्म्यप्रभविष्णुतां। बिवेद मन्त्रिणां लोकस्तेष्वेवे तांश्च सर्व्वतः।
प्ररूढस्तु प्रतीहारो नो विसेहेऽन्यमन्त्रिणां। पार्श्वद्रुमाणामेषाख्योषधिस्तम्भइवोद्गतिं।
तस्योत्पाटयतः सर्व्वांस्तृणानीवावहेलया। स्फूर्ज्जन् जनकसिंहोऽभूदशक्योन्मूलनः परं। १५००
आवाल्यात् संस्तुतो राज्ञः स कृतज्ञव्यवहारवित्। अधृष्यस्सरणीभूतनयोहस्तसर्व्वतः।
अद्वैधं यौनसम्बन्धादिच्छतस्तस्तुतोमदात्। कुङ्काभिधस्तस्य ततः कृतावज्ञोऽतनोत्त्रपां।
रन्ध्रान्वेषी स तद्रोषादुपजापैः क्षणे क्षणे। मल्हनो जनकं यत्नान्नृपाद्वेषमजिग्रहत्।
राज्ञस्तुल्यवयःस्थो हि जननीगाढसंस्तवात्। राज्यकाले हि सोऽस्यैकावासो तदवकाशदो।
तुरङ्गयोग्योपस्कारस्नानाहारादि राजवत्। अकालस्यावकुरुतां राजधान्यन्तरे च तौ। १५०५

सह खट्टङ्कैः समशीर्षिका प्रभोर्न युज्यते प्राप्तसमुन्नतेः क्वचित्।
श्रितोन्नतेर्द्दुर्दृष्टन्दलनं सरोजषण्डस्य महाविडम्बना।

तद्भिन्नितलाभसंरूढपैशुन्यालेख्यकल्पनाः। तद्वर्गेऽप्यखिले चक्रुस्तद्द्विषः कलुषं नृपं।
अथ राजा विजयिनं सत्कर्त्तुं कम्पनापतिं। कृतज्ञः श्रावणे मासि जगाम विजयेश्वरं।
अत्रान्तरे पिञ्छदेवादागच्छन् गिरिगह्वरे। प्राप शूरपुरद्रङ्गाधीश्वरादुत्पलोवधं।
पुष्पाणनाडादुत्पिञ्छकृतये पुनरागतः। द्रङ्गाधिपेनागुडिकान्वेषिणा स व्यापाद्यत। १५१०
च्युतो निपतितः पार्श्वप्राप्तमेकं द्विषद्भटं। मुमूर्षुर्व्विशिखाविद्धजानुमर्म्मापि सोऽवधीत्।
प्रत्याहृत्तस्य सत्कृत्य कम्पनेशं महीपतेः। दार्थ्वन्तिपुरवास्य द्रङ्गे शूरः शिरो व्यधात्।
स दृढघाटिकामुष्टिरसदृङ्मुण्डमुद्गरः। चक्रे तस्य दृढामर्षशोककशङ्कुविपादनं।

आद्यायामेव यात्रायां जातारातिक्षयो जनैः । स निःशेषयिताशेषकण्टकानामगण्यत ।
तस्मिन् प्रविष्टे नगरं विद्रुताः केऽपि सागसः । प्रापुर्जनकसिंहाद्याः केऽपि कारागृहस्थितिं । १५८५
केश्चित्पलायितैः शङ्कां ग्राहिताः पृथिवीपतेः । ततः कोष्टेश्वरमुखाः प्रातिलोम्यं प्रपेदिरे ।
ग्रामाणां निर्गतः श्रीमान् कार्त्तिकेऽथ कृती नृपः । तत्र तत्रासुखग्रामं संग्रामोद्यमबाधत ।
यत्र सुस्सलभूपाद्याः प्रापुर्भग्नप्रतापतां । तं हाडिग्राममदहत् सुस्सिरूर्जितविक्रमः ।
महीभुजा पीड्यमानैराक्रान्तः कोष्टकादिभिः । अथ भिक्षाचरो राज्यभ्रष्टभूयोऽप्युपाययौ ।
एकेनाह्ना योजनानि प्रोल्लङ्घ्य दश पञ्च च । शिलिकाकोष्टनामानं गिरिग्राममवाप सः । १५९०
क्षुत्पिपासाक्लमारातिभीतिमार्गश्रमोद्भवं । क्लेशं नाजीगणन्मोनी धावितः स जिगीषया ।
कार्य्यमायाति वैमुख्यं जिगीषोर्व्विधुरे विधौ । प्रस्थितस्य पुरोवाते रथस्येव ध्वजांशुकं ।

आरम्भमात्रमपि कस्यचिदेव सिद्धौ कश्चित्प्रयत्नपरमोऽप्यफलप्रयासः ।
मन्थाद्रिणामृतमवाप्युदधेर्मुकुन्दात्किञ्चिराद्विदधता न हिमाद्रिजेन ।
भ्रष्टा सरित् स्ववसतेर्जलधिप्रवेशे वेलोर्म्मिवेल्लनवशेन विवर्त्तमाना ।
मिथ्यैव यच्छति धियं पुनरुद्गतेति मोत्थानमस्ति तु विधिव्यपरोपितानां ।

तस्य तावन्महायत्नकठोरस्योदयक्षणे । सिद्धेर्व्विबुद्धो त्रिधिना विधुरेण व्यधीयत । १५९५
आयातं तमबुद्ध्वा तु तस्मिन्नेव क्षणेऽश्रयत् । पृथ्वीहरानुजः प्राप्तभङ्गः कृताञ्जलिर्नृपं ।
कोष्टेश्वरः स चावेत्य सम्प्राप्तं तमतिष्ठतां । हत्याक्षमौ हतौ सर्पाविव मन्त्रनियन्त्रितौ ।
ताभ्यां त्यक्तोऽथ सोऽन्यस्मिंस्त्याजितोऽध्वपरिश्रमं । कार्कोटद्रङ्गमार्गेण निर्गतः सुल्हर्णिं ययौ ।
आसीच्च तत्र प्रोच्चण्डदर्पकण्डूलदोर्द्रुमः । जृम्भायमाणः कश्मीराक्रान्तिसन्ततचिन्तया ।
उदीपसलिलस्येव तस्य रन्ध्रगवेषिणः । पुरं प्रविष्टो राजातिप्रतीकारमचिन्तयत् । १६००
अद्वितीयस्त्वमात्येषु प्रतीहारोऽमदोद्यतां । सुस्सेरसहमानोऽभूच्छलान्वेषणतत्परः ।
आयथावद्य विश्रम्भावष्टम्भं वल्लातः प्रभोः । धन्याग्रजः पूतमूर्त्तिर्जाह्नवीजलमज्जनात् ।
तदाद्याः संस्तुता राज्ञश्चिरं सम्भावितास्ततः । अनाप्नुवन्तोऽधीकारान् पर्य्यतप्यन्त चिन्तया ।
कुर्व्वाणे कार्य्यतस्तस्मिन् भरं पिव्येषु मन्त्रिषु । कालप्रतीक्षाक्षमतां मुञ्चन्ते गहनाशयाः ।
प्रतीहारस्तु दुर्लक्ष्यसुस्सिनिर्लोठनोद्यतः । अप्रियानपि तान् प्रीत्या जयाहोद्योपयोगिनः । १६०५
व्यतीतेष्वथ मासेषु केषुचिद्दैवयोगतः । अकस्मादभवद्भूभृत् स्फीतलूतामयातुरः ।
विस्फोटशोफातीसारवङ्क्रमान्द्याद्युपद्रवैः । सन्दिग्धाभ्युदये तस्मिन् देशः पर्य्याकुलोऽभवत् ।
इत्थं स्थितः कुलेऽस्यैकभर्त्तुः स्वामी बली रिपुः । तत्पक्षा डामरा राज्ञं दुष्टमेव व्यचिन्तयन् ।
आयत्याञ्च तदात्वे च हितकृत्यं विचारयन् । राज्ञाः श्रीगुणलेखाया जातमेकं सुतं शिशुं ।
पञ्चाब्ददेश्यं पर्माडिं सुस्सिर्भूमिपतिं तदा । चिकीर्षुर्मन्त्रयामास मातुलेनास्य गर्गिणा । १६१०
इत्थं भूतस्य दुष्प्रभुः सहनुः सुस्सिरस्य ते । पञ्चचन्द्रादिभिः सार्द्धं युक्त्वा मन्त्रयतेऽनिशं ।

लब्धरन्ध्रः प्रतीहारो धन्याद्यास्य उदीरिताः । इत्यवोचंस्ततो भूपं स तथेत्यग्रहीच तत् ।

पूर्व्वप्रजास्वजड्वाद्भुतवस्तुतत्त्वव्यावर्णनेन कुतुकं जनयन्ति तज्ज्ञाः ।

बालाद्वाल्पमतिहार्य्यधियश्च सन्ति प्रायो नृपा नियमशून्यमनोनुभावाः ।

शोचस्थाने कृतवसतिभिः स्त्रीव्यवायालये वा निःशक्तोयच्छलनकुशलैर्मानवं सम्प्रविश्य ।

नीतोभूतैरिव विवशतां निर्भरं गर्भचेटैर्भद्रं भूपात्कथमितरतः स्यादवष्टब्धचेष्टात् ।

निर्हेतु प्रहसन्विटः प्रविशति क्षोणीपतेरन्तिकं प्रत्युत्फुल्लदृगेष किं किमिति तं पृच्छत्यनच्छाशयं ।

ब्रूते किञ्चिदसौ कदाप्यथ कपटस्वैकं मानिनां मानप्राणगुणेषु यत्सरभसं दम्भोलिपातायते । १५१५

सविभ्रमगतागतः किमपि भाष्यमाणः श्रुतौ प्रभुर्व्वलितलोचनं जगदवज्ञयालोकयन् ।

निजस्य मुखविक्रियाप्रणयिताडनाद्यैर्व्विटस्त्वनुग्रहमिवाहितं नृपतिवल्लभो दुःसहः ।

अपि जातु स दृश्येत निःसङ्क्षोभमतिर्नृपः । योयन्त्रपुत्रक इव व्यक्तं धूर्त्तैर्न नर्त्यते ।

यतोभृत्यान्तराज्ज्ञाताज्ज्ञातः सर्व्वस्वसंचयः । तत्प्रजादुष्कृतैराज्ञां हा धिङ्नाद्यापि शाम्यति ।

सुज्जिरारोग्यमन्विष्टुमागच्छन्पूर्व्ववत् प्रभोः । विन्यस्तरक्षिणः पश्यन्नविश्वासमखिद्यत ।

दाक्षिण्यं वामतां यातमाशये प्रतिबिम्बितं । दर्पणस्येव राज्ञः स विभाव्याभूत्पराङ्मुखः । १५२०

तस्मिन्राजगृहे खेदान्मन्दीकृतगतागते । नृपतेस्तत्कृतां प्रीतिं निःशेषां जघ्नुरेऽखिलाः ।

मृत्यः सुज्जेस्त्विचरथोऽप्याख्यानद्विजभूः शठः । प्रातिलोम्यावहैर्भर्त्तुर्भर्त्तैरासीत्क्रियोऽन्तकृत् ।

नीरोगे राज्ञि दृष्टः स शिष्टदृष्टो नृपास्पदे । वसुवर्षौ विनिर्य्याय प्रार्थनार्थी गृहान्ययौ ।

न तं प्रासादयद्राजा विशालबलवाहनः । आक्रम्यासौ कथं न स्यादित्युपायं विचिन्तयन् ।

त्यज्येत कृतकार्य्योऽसौ निराशैरनुजीविभिः । मत्वेति तदधीकारानन्येभ्यस्तूर्णमार्पयत् । १५२५

राजस्थानात्प्रजं धान्यमुदयं कम्पनादपि । अजिग्रहन्नरपतिः खेरीकार्य्यञ्च रिल्हणं ।

हिताधिकारे प्रव्यक्तीकृते नृपतौ ततः । अल्पावशेषानुचरः सुज्जिरासीद्विशङ्कितः ।

विमानितः पुराङ्गङ्गायात्रामुद्दिश्य मानवान् । सोऽथ सुस्सलभूभर्त्तुरस्थीन्यादाय निर्ययौ ।

आत्मुक्यात् प्रार्थनाकाङ्क्षी राजधान्यन्तिके न सः । निर्गच्छन्राजपुरुषैर्न राज्ञा वान्वरुध्यत ।

तन्निर्वासनगर्व्वस्य स्थापनायानुयात्रिके । प्रतीहारस्तस्य गुप्त्यै कोषादेः स्वात्मजं व्यधात् । १५३०

निग्रहानुग्रहावस्मदायत्ताविति रक्षिणं । पुत्रं प्रादात्स्वकोऽथ इति ध्यायन् स विव्यथे ।

निवृत्तो लक्ष्मको द्वारात् पर्णोत्सं शनकैर्गतः । अत्रारोपयद्द्रोहोभागिकं लोहराचलात् ।

प्रतीहारविसृष्टाय धात्रीयाय महीभुजः । प्रेमाभिधाय तत्कोट्टाधीकारञ्च समार्पयत् ।

उत्खाय लोहरत्यागाच्छङ्काशङ्कुं महीपतेः । स ग्रीष्मविषमं कालं राजा पुर्य्यामलङ्घयत् ।

अमात्यकन्दुकव्रातपातनोत्पातनक्षमः । आयत्तडामरः प्राप प्रथां कामपि लक्ष्मकः । १५३५

द्वारेऽथाकारयत् सुज्जिप्रतिमल्लविधित्सया । कृष्यमाणो राजवंशपौरुषं राजमङ्गलं ।

अनन्यदेशजः सुज्जिः शूरो मत्कोशपोषितः । कीर्त्तिमेष हरेद्ध्याविती र्ष्याकलुषो हि सः ।

खड्गग्राहिसहाय: स कुल: पर्य्यटितुं पथि । निःसुखस्थोपहास्यश्च तेन कार्य्यार्पणात् कृत: ।
कर्त्तुं पदव्यां योग्यानामयोग्यात्प्रभवेन्न क: । तेषां गुणैस्तान् संयोक्तुं न शक्यं कारणैरपि ।
पदे श्रीखण्डस्यानुचितमुचिते वर्त्मनि निजे हृषाङ्क: प्रक्षेप्तुं प्रभवति चिताभस्म रभसात् ।
न तत्स्वेच्छायत्तत्रिजगदुदयापायघटनोऽप्यसौ तद्गन्धेन स्फुटमिह पटु: सङ्घटयितुं । १९४०
तस्मिन् सुज्जिप्रतिस्पर्द्धामप्रौढां वोढुमक्षमे । दूतानसृजदानेतुं मल्लपालं दिगन्तरात् ।
निर्वैरे मण्डले दैव्योऽप्यवापत्कार्य्यगौरवात् । कोष्टेश्वरो नरपतेर्न्नितरामन्तरङ्गतां ।
प्रीतिदायैः श्लाघ्यमाणैस्तैस्तैस्तुष्टेन भूभुजा । विश्वम्भोमगरे तस्थौ सोऽपि लूतामयातुर: ।
एवं दमकदम्बैक्यं राज्ञि कुर्व्वति कार्य्यत: । चालकै: सोमपालाद्यै: सुज्जिर्न्निन्येऽथ वैकृतं ।
प्रतिज्ञाय लतामात्रसाध्यं कश्मीरनिर्जयं । सोमपालाय तद्राज्यं सोऽङ्गीचक्रेऽवमानित: । १९४५
प्रतिशुश्राव तस्मै च भागिनेयीं स कन्यकां । सोमामत्रान्तरे सामदाने प्रयुयुजे नृप: ।
द्वौ तावल्पाशयौ राजकन्ययो: स्त्रीक्रियान्तदा । रभसाद्यावकुर्व्वाणावदातामन्तरं द्विषां ।
उपायैर्जयसिंहस्य शकुनैश्च निरीक्षितै: । प्रेरित: सोमपालोऽथ सुज्जेर्म्मन्दादरोऽभवत् ।
स्वयमेत्य प्रतीहारस्तत्र राजपुरीपतिं । सोऽशान्तभुवमानिन्ये कन्यकोद्वाहसिद्धये ।
जातां कल्पनिकाख्यायां महादेव्यां महीपते: । उपयेमे नृपसुतां सोमोऽम्बापुत्रिकाभिधां । १९५०
जाते तस्मिन् कृतोद्वाहे नागलेखाभिधां सुधी: । तत्स्वस्त्रेयीं प्रतीहारो भूभुजे प्रत्यपादयत् ।
इत्थं राष्ट्रद्वये बद्धमन्धा निरवकाशतां । प्राप्त: प्रस्थे हेमन्ते सुज्जिस्त्रिपथगोन्मुख: ।
जालन्धरे सङ्घटितो ज्येष्ठपालो निनाय तं । गाढावमाननिर्भिन्नसौष्ठवं भिक्षुपद्धतां ।
त्वयि भिक्षाचरे चैकसैन्यनायकतां गते । नोपेन्द्रो वा महेन्द्रो वा समर्थौ प्रत्यवस्थितौ ।
राज्यप्रदस्य ते यस्य चक्रे राजा विमाननां । तत्पुत्रो यस्य विषये प्रतिकुर्म्मस्तयोर्द्वयो: । १९५५
इति सम्प्रेरितस्तेन देङ्गपालान्तिकस्थिते: । यियासु: सोऽन्तिकं भिक्षाभागिकेन न्यषिध्यत ।
अनिश्चितप्रवृत्तोऽस्मीति स्वामिनो जाह्नवीजले । न युक्तमेतत्ते कृत्यमित्यावेगादभासि च ।
स्नात्वा द्युनद्यामेष्यामि पार्श्वं व इति निश्चयं । स पीतकोश: कृत्वास्य ययौ प्रस्तुतसिद्धये ।
प्रतीहारकरन्यस्तसर्व्वभारस्तु भूपति: । मन्दाक्रान्ततया राज्यमस्वस्थितममन्यत ।
यो यो हि व्यग्रहीत्तं तं सन्धाय सविधस्थित: । तमन्वहं प्रतीहार: सानुग्रहमिवैक्षत । १९६०
प्रगल्भमाने [illegible]वमुदय: कम्पनापति: । अवधीच्छद्मना हृष्टं प्रकटं कालियात्मजं ।
अविश्वासोल्बणान् सर्व्वलावन्यानय लम्भक: । निर्म्मर्य्यादान् कम्पनेशमीषत् साम्यमजिग्रहत् ।
स्नात्वाभ्येष्यति गङ्गायां यावत् सुज्जिर्व्विलम्बतां । यावत् कथं मया नेय: काश्मीर इति चिन्तयेत् ।
तावन्मात्रान्तरव्याप्त्या राज्ञो विज्ञाय डामरान् । भिन्नान् भिक्षाचरोऽविक्षद्विषलाटां हिमागमे ।
मण्डलस्यान्तरे तस्य विविधोद्रुडामर: । प्रतीहारो हि मन्तुश्च निषेद्धा समपद्यत । १९६५
स टिक्केन पितृद्रोहादेकान्तद्वेषिणा रिपो: । आनीत: सम्मतैर्दस्याप्याय: सर्व्वैश्च डामरै: ।

प्रतीक्षमाणो राज्याप्तिहेतुं सुज्जिसमागमं । निर्भयष्टिक्कजामातुर्भागिकस्य खशप्रभोः ।
बाणशालाभिधे दुर्गे वसन्नल्पोच्छ्रितावपि । दूतैर्व्विभेदमनयत्सर्व्वडामरमण्डलं ।
प्रमोदं सुहृदां चासं द्विषाञ्च विसृजन् पुरः । व्यावर्त्तताथ गङ्गायाः सुज्जिर्व्विहितमज्जनः ।
पूर्व्वविप्रकृते भिक्षावस्मिंश्चाभेदमागते । यथामुष्य महीभर्त्तुस्तथास्माकं भयं भवेत् । १९७०
ध्यात्वेति सिंहदेवेन प्रार्थितो व्याजमादधे । सुज्जिस्वीकरणोद्योगे सोमपालोभयाकुलः ।
सुज्जिर्जालन्धरं प्राप्तः प्रातर्भिक्षाचरान्तिकं । यावद्यास्यति तं सायं तद्दूतस्तावदासदत् ।
प्रेरितो ज्येष्ठपालेन निषिद्धो भागिकेन च । विरराम स तस्योक्त्या विपक्षाश्रयणग्रहात् ।
स्वर्णं देशान्तरोपात्तं तव भूपोऽपनेष्यति । स्वञ्च दास्यत्यधीकारं मन्युरप्रहितार्थनः ।
इति दूतमुखेनोक्तः सोमपालेन चान्वहं । विपक्षौत्सुक्यमुत्सार्य्य तद्देशाभिमुखाययौ । १९७५
उदयः कम्पनाधीशो वैशाखे तीर्णसङ्कटः । खशान्वितेन संग्रामं प्रत्यपद्यत भिक्षुणा ।
प्राक्सुप्यत्सपृतने जाते पृथुबले ततः । तस्मिन् कोट्टान्तरं भिक्षुः प्राविशन् प्राप्तवेष्टनः ।
राजाथ विजयक्षेत्रं निर्य्यातः प्रत्यपूरयत । कम्पनेशस्य कटकं तास्तास्संप्रेषयच्चमूः ।
यन्त्रोपलशरासारविविधायुधवर्षिणी । दुर्गस्थितैर्न्नृपचमूः प्रतियोध्यमन्नर्षिभिः ।
पतत्स्वश्मसु भिक्षोश्च नामलक्ष्मसु पत्तिषु । ग्रहीतुं दुर्गजाम्राजसेना दीर्घापि नाशकत् । १९८०
दिनैरभ्यधिके मासमात्रे याते ऽग्रहीत्ततः । विहार्य्यमूलं दुर्गस्य धान्यखाताम्बुसम्भृतं ।
दुर्गभाजोऽवलासख्याराज्युपायपरे धियं । जाततद्वैरिवाधेच्छां धनलुब्धामदर्शयत् ।
विससर्ज प्रतीहारमथ तद्वस्तुसिद्धये । राज्ञा डामरसामन्तमन्त्रिराजात्मजैः समं ।
कोष्टेश्वरत्रिल्लकाद्याः कृच्छ्रस्यस्य विमोक्षणं । करिष्यामो वयं भिक्षोरिति बुद्ध्वा तमन्वयुः ।
पश्यन् सङ्कटशैलाग्रादधः कोट्टं मितोन्नति । जितं मेने प्रतीहारो वीक्ष्यानन्ताः स्ववाहिनीः । १९८५
पूर्व्वस्थितैः प्रतीहारानुगैश्चान्यत्र वासरे । अयोधि सर्व्वसैन्यस्य बलात्कोट्टं जिघृक्षुभिः ।
ते तावन्तोऽप्यसम्बद्धा तथा तैः प्रतिचक्रिरे । नासीदं विक्रमेणेति यथागच्छन्विनिश्चयं ।
वीरदेहद्रुमाग्रेभ्यो न्यपतन्नश्मभिर्हताः । निर्यद्रक्तौघसरघाः शीर्षभ्रमरगोलकाः ।
कोष्टेश्वरस्य मूढत्वं निर्व्यूढं तत्र किञ्चन । स्वस्य भिक्षोर्लवन्यानामन्येषाञ्च विनाशकृत् ।
नास्त्यत्र मत्समो वीर इत्येतावत्प्रसिद्धये । स स्वयुद्धोद्धतेर्भिक्षोर्यत्प्राणक्षयकार्य्यभूत् । १९९०
दुर्भुक्षूणां खशानां स सङ्कटे धैर्य्यमादधे । कोष्टेश्वरोऽस्मि चाभिन्नस्तदश्याडामराः परे ।
यदेतद्दृश्यते भूरि सैन्यमस्माद्दिनापतत् । पर्य्यवस्येदिति वदन् समभाव्यन्यथा च तत् ।
विश्रम्भभूरमुष्यारिर्थच कोष्टेश्वरोऽप्यसौ । अन्येषु तत्र केवास्थेत्यथ ते निश्चयं दधुः ।
भूभृत्पिटदुहः कार्य्यवशेन स्वोपवेशने । अङ्गीकृताधिकारस्तु धीमांष्टिक्कस्य लक्ष्मकः ।
खशाधीशं महाग्रामस्वर्णादित्यागसंश्रयात् । स्वीकृत्य भिक्षुदुर्भुक्षुवञ्चकत्वमकारयत् । १९९५
आनन्दाख्यः खशाधीशश्यालः कृतगतागतः । नीत्वा टिक्कं प्रतीहाराभ्यर्णं भूयोऽप्यरोपयत् ।

प्रतीहारस्य टिक्केन सहैक्यं वीक्ष्य डामरैः। निःसंशयं हतोऽज्ञायि भिक्षुः कोष्ठेश्वरादिभिः।
संरब्धास्तद्विनाशाय प्राहिण्वंस्ते खशान्तिकं। दूतानूरीकृतस्वर्णदाना भूरिधनैः समं।
खशस्तु दद्यात्कोशं गृहीत्वास्माभिरुज्झितः। जानाति रक्षितान् प्राणान् भिक्षुः कोष्ठेश्वरादिभिः।
समन्युः प्राप्तराज्योऽथ देङ्गपालोऽथ दूरगः। हन्यान्मां जयसिंहस्तद्रक्ष्यः पक्षः प्रयत्नतः। १०००
मत्वेति तेन प्रत्युक्ता भिक्षुणोचं स्थिरं रहात्। विपाट्यातः फलहकं निर्गच्छेत्युचिरेऽपि ते।
स त्वमेध्यापलिप्ताङ्गः श्वभ्रावस्करवर्त्मना। यात इत्ययशो लोके ध्यायन्मानी न निर्ययौ।
कोष्ठेश्वरो व्यक्तकल्पसैन्यस्थानेच्छया क्षिपन्। एवं कालविदा प्राक्तनात् प्रतीहारेण सान्वितः।
नीवी खशैर्दत्तायामाप्रत्यूषादरक्ष्यत। व्यवसायः प्रतीहारमुख्यैर्भिक्षुप्रमापणे।
गच्छद्भिरागच्छद्भिश्च राजा दूतैः प्रतिक्षणं। अन्विष्यन्विजयक्षेत्रे वार्त्तां पर्य्याकुलोऽभवत्। १००५
तावद्भिरागतैस्तैस्तैः साहसाहृत्य वत्सरान्। कृतयत्नस्य साध्योऽभूत्रयो हन्तुं महीभुजः।
डिम्बा राजा तु गाण्डावास्तस्य भिक्षोः प्रमापणं। साध्यमेने हि मन्यन्ते हन्त किं केन सत्कृतं।
विहस्य नीयते वित्तं खशैरेत्य क्षणादमी। भग्ना नूनं प्रयास्यन्ति मुषितास्त्वखिलाः परैः।
पृष्ठगूढः कोष्ठकोऽयं त्रिलकस्यैव बान्धवः। एते भिक्षाचरोच्छिष्टपुष्टा आभ्यन्तरा अपि।
को नु नोऽत्र सम्प्राप्तो योऽराज्ञः साधयेद्धितं। सामग्री नूनमायाता सेयमस्यैव सिद्धये। १०१०
इत्यूचुः शिविरे यावज्जनास्तावदवेक्ष्यत। कटकैर्मन्त्रिणां दुर्गं विकोशायुधवाहिभिः।
एकाकी चिरसंक्लिष्टो हन्तव्यस्तत्कृतेऽखिलैः। हा धिक् परिकरो बद्धो निर्लज्जैः सर्व्वशस्त्रिभिः।
तरत्वेत्यूचुरगामीच्च कषच्छस्त्रोर्मिनिर्म्मलः। स्फुरद्योधाविशफरो निःशब्दः सैन्यसागरः।
व्योम्नोड्डीयेत वा सैन्यं लङ्घयेद्वा मृगस्नुने। दृष्टाभ्रदृष्टिरिव वा निखिलांस्ताडयेत् समं।
साश्चर्य्यशौर्य्यः पर्य्यन्ते स्वीकुर्व्वन् भिक्षुरायुधं। सम्भ्रान्तश्चकितस्त्वासीदित्यन्तश्चिन्तयन् जनः। १०१५
एतावन्मन्त्रिणां सिद्धमथ प्रत्यूहसम्भवः। तच्छान्तिः कार्य्यसिद्धिश्च प्रतापैर्नृपतेरभूत्।
सैन्ये भिक्षाचरायातं पश्यत्यूर्द्ध्वार्प्पितेक्षणे। कोट्टान्निष्कृष्टशस्त्रीकः पुमानेको विनिर्ययौ।
रुदतीभिः परीतस्य नारीभिस्तस्य चिच्छिपुः। पृष्ठे केऽपि वपुर्लोलकौसुम्भाधरवाससः।
बद्धः पलायमानोऽत्र सोऽयं भिक्षुरिति ब्रुवन्। तन्मुखात् स जनोऽश्रौषीद्धिक्कां तमथ निर्गतम्।
स ह भिक्षोः कृतद्रोहस्तुमुले प्रस्तुतावधं। तस्माद्राजानुगेभ्यो वा स्वस्याशङ्क्य विनिर्ययौ। १०२०
अद्रोहोऽस्मीति लोकस्य प्रत्ययाय चकर्ष च। कृपाणीमुदरं हन्तुं रक्ष्यमाणो निजानुगैः।
सानुगस्त्यक्तमार्गो स विलङ्घ्य नृपवाहिनीं। अद्रिप्रस्रवणोपान्ते नातिदूरेऽभ्युपाविशत्।
उच्छ्वसंश्चिरसम्प्राप्तैरम्भोभिर्दुर्गनिर्गतः। मायां प्रयोक्तुं प्रारेभे प्रेरितः सैन्यडामरैः।
सञ्जातं लम्बमानार्कमहस्तद्रक्ष्यतां क्षणं। भिक्षुः क्षपायामास्कन्दमपनेष्यन्ति डामराः।
इति तदाचिकात्तीत्राम्नीर्विभिर्मन्त्रिणां समं। खशैस्त्यजद्भिर्दृषदोन्यरुध्यन्तादरक्षवः। १०२५
ततः किलकिलारावमुखरैः करतालिकां। योधैर्ददद्भिस्त्वरिवा व्यग्रहन्ताकुलाशयाः।

मुक्तास्वामिद्रुहः कुक्षगता राज्यं प्रसाधितुं । द्विषतो मन्त्रिभिः स्वार्थादन्तार्थान् को नु साधितः ।
राजकार्य्ये च भानौ च लम्बमानेऽथ लक्ष्मकः । किमेतदिति तं नीतिं खशश्यालमभाषत ।
सोऽभ्यधात्कुम्भदास्यापि रोद्धुं शक्यं चिकीर्षितं । खशानां प्रत्ययस्थाता कथं तत्रास्य सन्निधिः ।
स हन्तुं वैपरीत्यन्तं खशानां त्वं व्रजेत्यथ । उक्त्वा व्यसृजदामन्दं जहसे चान्यमन्त्रिभिः । १७३०
सुदूरदर्शिना राज्ञा विषलाटावपाततः । देङ्गपालगृहादस्मादारम्भः समभाव्यत ।
अत प्रधानकोट्टेशश्यालः स समगृह्यत । प्रागिवार्थैरेतदर्थं यशुना दीर्घनागुरां ।
संक्षोभावतरे चक्रा ततो निस्तम्भोऽभवत् । शिञ्जितं पञ्चिणमिव त्यक्तं प्राप्यं विवेद तं ।
स तामूचे न हास्यं मे नष्टे कार्य्येऽत्र साहसं । सर्व्वनाशे हतेऽमुष्मिन् खशश्यालेऽपि किं भवेत् ।
अकुण्ठया भाग्यशक्त्या राज्ञः श्यालः खशस्य सः । सर्व्वान्नियच्य दुर्गाग्रान् तीक्ष्णादीनाजुहाव तान् । १७३५
दस्यूनामसवः कण्ठे सन्देहे मन्त्रिणां धियः । स्वस्त्रीणां प्रीतयः काष्ठां तीक्ष्णस्यारुरुहुर्गिरिं ।
स चर्म्मकापोनपट्टीबद्धस्तत्स्वाभिधाङ्कितैः । इषुभिः स्वामिवत्सस्य ख्यापनं सर्व्वतोयुधि ।
स ताम्बूलधरः सक्तिस्याकिंशस्त्रप्रयोजने । याभूदनुमुमूर्षूणां भिक्षुराजोपजीविनां ।
निश्चितान्ते ततस्तस्मिन् स तेषामन्ववर्त्तत । कोष्टेश्वरादिशिविरं तूर्णं शरणमीयुषां ।
एकैकशो लक्ष्मकेण युक्ताश्वैः प्रेरितैर्भटैः । टिक्कः स्वं वीत्य वलितं निचकर्त्ताङ्गुलिं भयात् । १७४०
स्वशैरस्मिन्नवसरे सपलायनशङ्किभिः । रक्ष्यमाणस्तैस्त्वहस्तु मनस्तापादभुक्तवान् ।
वीरस्ताम्यन्विलम्बेन तीक्ष्णानामाहवोत्सुकः । तस्थौ भिक्षाचरस्वान्तमचवत्या विनोदयन् ।
हर्म्यप्राङ्गनमायाते तीक्ष्णलोके युयुत्सया । उत्तिष्ठता तेन दायः स्तोकशेषः समाप्यत ।
दीव्यतः कान्तया साकं कामिनः सुहृदागमे । प्रत्युत्थास्नोरिव चेतोभोगास्तस्य व्यजृम्भत ।
किमद्यापि वधेन स्यादङ्गनामिति चिन्तयन् । स विहाय शरं चापं साभिधेनुर्श्विनिर्ययौ । १७४५
स्वदीर्घचिन्ता गलिता यामश्यामलिभिः कचैः । चञ्चच्चित्रपताकाङ्कमिव चीरपटाञ्चलैः ।
गण्डताण्डविना स्फुरद्रशङ्कुताटङ्करोचिषा । चन्दनेलेखकान्त्या च द्योतिताहंक्रियास्मितं ।
वितीर्णं चित्रचर्य्यन्ते विपर्य्यस्ताङ्कुताडनं । द्योतयन्तमिवालानैः स्वस्तीनेत्राधरांशुकैः ।
कौसुम्भाधरवासोग्रबद्धधौताम्बराञ्चलैः । लोलैर्वीरहरिं बद्धसटाटोपमिवांसयोः ।
दृश्यनःपाणिपादैक्यचारुप्रचुरवारिभिः । चरन्तं मण्डलैस्त्रिवैर्लघुचित्रस्थिरक्रमैः । १७५०
औचित्यस्योचितां चर्य्यामलङ्कारमलंकृतैः । अभिमानविभूतीनां नित्योत्सेकमनत्ययं ।
अलक्षितक्षिप्रयातं स सर्व्वोऽप्युन्मुखोजनः । विचरन्तं तमैक्षिष्ट भिक्षुमग्रे विरोधिनां ।
राजवीजी सधीनेष्टा तं प्रवीरः कुमारियः । भ्रातापज्ज्येष्ठपालस्य निर्यातोरक्षिकोऽन्वगात् ।
हर्म्यैर्निर्म्मातैर्लक्षैर्विंशतः परिपन्थिनः । दुर्गीधैकः शरासारैर्गार्गिको भिक्षुसंश्रितः ।
ते धावन्तो न्यभाव्यन्त शरैस्तच्चापनिर्गतैः । वर्षोपलैः पुरोवातप्रेरितैरिव दन्तिनः । १७५५
स रोद्धा प्रतियोधानां पापैः क्षिप्रास्त्रभिः खशैः । चताङ्गोभग्नचापश्च चिरेण विमुखीकृतः ।

तस्मिन् प्रचलिते मार्गैः प्रविश्योच्चावचैर्भटाः। ते च भिक्षाचरादीनां सर्व्वे गोचरमाययुः।
भिक्षोरेकं क्षणात्त्यक्तधैर्य्यं पार्श्वधृतायुधं। अधावत्तूर्णमादाय शूलमेकोऽत्र चक्कटः।
तस्य प्रहरतः शूलं भिक्षुराश्रितवत्सलः। छिन्नापहस्तेनावेगात् केशान् जग्राह धावितः।
प्रजहार कृपाण्या च निर्यत्प्राणे पतिष्यति। तस्मिन् प्रहरतां भूयस्तौ कुमारियरक्किकौ। १०६०
निर्विभागैर्हते तस्मिन्नविधायुधवाहिभिः। विरोधियोधैस्तत्रैकैकस्त्रयो युयुधिरेऽथ ते।
अजायन्त विविक्ताश्च शस्त्रमन्त्राभिताहिताः। कोटराजगरापास्तसरघौघादिव द्रुमाः।
अशक्नुवन्तस्तान् हन्तुं खड्गशूलादिभिर्द्विषः। अपसृत्य शरासारैस्ततो दूरादवाकिरन्।
भिक्षाचरमृगेन्द्रस्य भञ्जतः शरपञ्जरान्। ततो हर्म्यात् खशैर्मुक्ताः पुष्टाः पाषाणवृष्टयः।
धावतस्तस्य घोराश्मवृष्टिकुट्टितवर्म्मणः। निममज्ज यकृत्पिण्डं भञ्जन् पार्श्वे शिलीमुखः। १०६५
कृत्वा त्रीणि पदान्याशु स पपात दिशन् चितेः। ततस्थिरप्ररूढन्तु कम्पं विद्विषतां हरन्।
कुमारियोऽपि वाणेन विद्धवंक्षणवर्त्मना। शोणितोऽप्यपतद्भर्त्तुः पादोपान्तोपजीवितः।
रक्किकस्तु शरेणैव विद्धो मर्म्मणि विक्लवः। सजीवितोऽपि निर्जीववद्भूमावुपाविशत्।
महाकुलीनैस्सहितोहतोभिक्षुरशोभत। दग्धावभग्नशिखरो पुष्पितैरिव पादपैः।
इयतोराजचक्रस्य मध्ये हर्षनृपात्मजः। नावमानस्य मानस्य लभ्भ्ङ्क्षिचोः परं पदं। १०७०
विधाता नित्यविधुरम्भोजोधैर्य्याभिमानितः। अकुण्ठेन ध्रुवं चक्रे गृहीतात्मपराजयः।
कोवरः कोमहर्द्धीनां सोऽग्रे पूर्व्वमहीभृतां। उदात्तनात्तसत्त्वेन ते लभ्याग्रे न किञ्चन।
आहोपुरुषिकाग्रस्तैरारोहद्भिर्द्विषद्भटैः। तदवस्थस्तदात्तोऽपि शस्त्रायुद्ध कुमारियः।
स्फुरन् योद्धव्यमित्येव स प्रहारावशस्तथा। त्रिशाततत्त्वैररिभिर्वितत्य वक्रशोहतः।
विपन्नेऽस्मिन्नलं मूढाः प्रहारैरिति निन्दिताः। खशैः प्रजह्रुर्वक्रशोहते भिक्षौ द्विषद्भटाः। १०७५
अविधेयायुधस्तात्रणवेदनयाद्रमैः। कैश्चिन्निर्जीवितप्रायो रक्किकः शस्त्रिभिर्हतः।
वयसस्त्रिंशतिं वर्षान्नव मासांश्च भुक्तवान्। स षष्ठाब्दासितज्यैष्ठदशम्यां नृपतिर्हतः।
निदानं विस्रंत्रे दीर्घे सर्व्वनाशेऽपि कारणं। येषां बभूव तेऽप्येवं तुष्टुवुः सत्त्वविस्मिताः।
नेत्रस्पन्दं भ्रुवोः कम्पं स्मेरास्यत्वञ्च नामुचत्। सजीवमिव तन्मुण्डं कियतीरपि नालिकाः।
एकं व्योमरविशच्चित्रभानुं भूमौ पुनः परं। तद्देहमप्सरस्त्वङ्गं धारामु च चिराज्जडं। १०८०
सचिवा विजयक्षेत्रस्थितस्याग्रे महीपतेः। तेषां त्रयाणां मुण्डानि ततोऽन्येद्युरुपाहरन्।
श्रीसुधारश्मदन्यस्वशशाङ्कादिप्रकाशने। दृष्टचित्रस्वभावोऽभिर्यथायं पार्थिवस्तथा।
तत्र तत्राद्भुतं भावं दर्शयन् भुवनाद्भुतं। परिच्छेद्यानुभावत्वं न केषामपि गच्छति।
नादृप्यन्निहतोऽसाध्यः पितुर्मे योऽप्यभूदिति। न जहर्ष विनष्टोऽयं राजकण्टकइत्यपि।
नाक्रुध्यत् स पितुर्मुण्डमेष भ्रमितवानिति। वीक्ष्य भिक्षोः शिरो व्याजभावादायस्त्वचिन्तयत्। १०८५
आकारस्यास्य सम्भाव्यं सत्त्वं न दृषवैकृतं। वैषद्यं स्फटिकस्येव नार्कालोकापतस्रतां।

उत्कर्षात् प्रभृति व्यक्रमम् यावन्महीभुजं । हा धिक् च मृत्युना दृष्टं नेह देहविसर्जनं ।
प्रमादविश्वा येऽप्यासन् पूर्व्वमस्मोर्व्वराभुजः। तटस्थादेव बीत्यन्ते तेऽप मृत्युवशवेतां ।
इति चिन्तोऽसामान्यैरजन्यान्तर्निवारयन् । आदिदेश रिपोः शीघ्रं तादृशस्यान्तसत्क्रियां ।
निद्राच्छेदे च निशि च ध्यायंस्तेयादयात्यथो । भवस्वभाववैचित्र्यं मुहुर्मुहुरविन्तयत् । १७९०
अपि वर्षसहस्रेण देशे दायाददुस्थितिः । नूनं न भविता भूय इति लोकोऽप्यमन्यत ।

इग्ध्वा तृणं तनुघनं प्रतनोति शस्यं दृष्टिं सृजत्युपचितामदिनं प्रदर्श्य ।
वैचित्र्यसंस्पृशि विधेर्नियमेन तेन कः प्रत्ययः क्वचन चञ्चलनिश्चयस्य ।

कृत्यं निर्व्वर्त्य विश्राम्ये घोरस्यास्यतो मनः । विधिर्व्विधत्ते दीर्घान्यकार्यभारसमर्पणं ।
आरोढुं प्रथमस्य दीर्घमदनप्रत्युक्रमस्वांचित्रिणा नो सन्त्यत्र एव पादकटकोयावदिनोयोऽखिलः ।
वाहस्यासनरक्षिणः कलयतोभागवतारान् सुखात्यारोहेण परेण तावदस्मदधिष्ठीयत पृष्ठभूः ।
एवमेव चपामात्रे राज्ये निःशत्रुतां गते । शोकमूकोनृपस्यायं प्राविशद्वेत्रहारकः । १७९५
पृष्टः सभ्यैः स सम्भ्रान्तैर्व्यस्मिन्नेवाङ्कि भूपतेः । यातोभिचाचरः शान्तिमरातिर्दन्तदुस्थितिः ।
भ्रातरौ लोहरगिरौ बद्धौ द्वैमातुरौ पुरा न्यस्तौ सुस्सलभूपेन यौ तौ मल्लणलोठनौ ।
ज्येष्ठे मृते कोट्टभृत्यैः कनिष्ठं लोठनं हठात् । तमिहाद्य त्रियामायामभिषिक्तमभावन ।
सुतभ्रातृसुतैर्द्दृशैराज्यार्हैस्सह पञ्चभिः । निर्यातं बन्धनाद्वे कोशेषु स तमीश्वरं ।
दूयेत मुष्टिदाक्रन्देत प्रसारितभुजः पतेत् । स्वयादिस्वेनिःस्पन्द्रक्तं गच्छेदथ भुवं । १८००
दीर्घदौस्थ्यश्रमचिरप्रूदूनतमना नृपः । अधो तत्कालनिपतद्दुर्व्वार्त्तावज्रचूर्णितः ।
इति सम्भाव्य दिक्पालैरपि साकूतमीक्षितः । नाकाराचारचेष्टाभिः प्रागवस्थां जहौ नृपः ।
नस्त्वनन्याभिभूतेन सर्व्वतोऽसत्त्ववर्त्तिना । तादृशा वैशसे नान्यः स्पष्टपूर्व्वो हि भूपतिः ।
पित्रास्य यद्बलाक्रष्टं राज्यं भूयः प्रसाधितं । अनेनापि हतारातिर्विहितं पैतृकं पदं ।
हारितो दुर्गकोशौ तौ नष्टनामापि दारकः । दायादशेषो यत्रैको निर्धनो वीतबान्धवः । १८०५
धनमानान्तकद्भूरिवर्षान् व्यसनमादधे । उपप्लवाप्रिये देशे तत्रैकस्मिन् हते हिते ।
मित्रदुर्गार्थसम्पन्नाः प्रोद्भूताः षड्विरोधिनः । भिन्नप्रकृतिकं केशशून्यमेतच्च मण्डलं ।
तादृक्निकषनिस्तीर्णमाहात्म्यस्य महीपतेः । धैर्य्येण स्पर्धितुं जाने राघवोऽपि सलाघवः ।
प्राक्पोषितं हि मासाज्यदाने निर्व्वासने च तं । तुल्यानुभावमस्मार्षीत्पित्रैवं गणयन् गुणान् ।
आहूतस्याभिषेकाय विसृष्टस्य वनाय वा । न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः । १८१०
कान्तेषु काननान्तेषु सकान्तं सानुजञ्च तं । भूयः श्रियं प्रतिश्रुत्य स्थातुं सावधि सोऽभ्यधात ।
एकचणानुभूतेऽस्मिन् सङ्कटे सुखदुःखयोः । ईदृकृत्तदृशाभेदादनयोरन्तरं महत् ।
नियतं निरुपादानां शक्तिं दर्शयितुं जने । नामोपकरणग्राम सन्नद्धोऽस्याच्छिनद्विधिः ।
अत्यद्भुतानि कृत्यानि वक्ष्यमाणानि भूपतेः । कोऽमुष्य वञ्च मन्येत सामर्थ्ये सति सम्पदां ।

धैर्य्याब्धिना कार्य्यशेषं ज्ञातुं राज्ञा सविस्तरं। पृष्टोऽथ कोट्टहन्ताज्ञमाचख्यौ लेखहारकः। १८१५
उत्सृज्य भागिकं कोट्टं प्रयाते मण्डलेश्वरः। लुप्तोद्योगोऽभवद्भुत्तो प्रेमा संपत्प्रमत्तधीः।
मण्डनाभ्यवहारस्त्रीभोगैकाग्रो मदोग्रया। स हन्त्वा भृत्यैर्मुख्याधाव्या भर्त्स्यं व्यवाहरत्।
कुल्यानुकम्पिना दृक्युत्पाटनाद्यैः स वारितः। दैवेन नादादङ्गानां काश्चिद्रक्षाक्षमाक्रियां।
मायाभ्युदयनो नाम कायस्थः स्थूलवाञ्छितः। माजिकस्य प्रतीहारो बहुमूलस्य मन्त्रिणः।
पुत्रोभीमाकरस्येन्द्राकरश्चान्तरे समं। दुष्पुत्रस्तत्र तच्च वधं प्रेक्षोऽप्यचिन्तयत्। १८२०
अलब्धोहन्तुमप्राप्तावसरैस्तैः कदाचन। कोट्टादट्टालिकां कार्य्यवशादवहरोह सः।
कश्मीरेभ्यो नृपेणाप्यावशेषप्राणहन्तृणा। प्रेषि शासनमेतादृगिति प्रत्ययसिद्धये।
कोट्टीकसामग्रेषाणां गूढलेखाभिधाय ते। निबद्धसन्धिरः पूर्व्वमभिषेच्यस्य भार्य्यया।
दृष्ट्वा दुर्गाब्धिर्निविडं कृत्वा च निशि लोठनं। सिंहं राजस्वामिविष्णुप्रासादाग्रेऽभ्यषेचयत्।
शरदाख्या वधूरेका कापि सुस्सलभूपतेः। तत्र स्थिताभवत् क्रूरा तेषामनुमतप्रदा। १८२५
तदर्पितैरयोयन्त्रभञ्जनैरर्गलानि तैः। कोशान्निर्वार्य्य पर्य्याप्तं कोशरत्नादि जह्रिरे।
स भृत्यैः सम्भिस्तद्वत् साहसं सुमहत् कृतं। दानेन त्याजितायामा चण्डालैः प्रतिकूलता।
भेरीतूर्य्यादिनिर्घोषैर्निर्निद्राः कोट्टवासिनः। कृता राजोचिताकल्पमपश्यन्नथ लोठनं।
अदृष्टपूर्व्वतादृग्वेदात्तवेशः स विस्मयं। निन्ये जनान्नृपामात्ययोगदोपैः प्रकाशितः।
प्रेम्नः पार्श्वस्थितस्ताभ्यामानयद्वारकोऽन्तिकं। ससैन्यो स्वभुवस्थर्मपाशिकाख्यौ च ठक्कुरौ। १८३०
तदाख्यया हितास्कन्दभक्तस्तेषामशेषतः। रात्रिशेषस्य चन्द्रांशुस्पर्शपाण्डुरशौर्य्येन।
प्रातः प्रेमाथ दुर्व्वार्त्ताश्रवणेनोऽप्यादातुरः। सन्त्राप्यमानश्चाण्यांशकरेरोद्धुमुपाययौ।
तं प्रतोलीतलप्राप्तं निर्यातैर्वैरिसैनिकैः। पराङ्मुखीकृतं वीक्ष्य चलितोऽस्यन्तिकं प्रभोः।
श्रुत्वेति भूभृत्त्वरया लब्ध लोहरमण्डलं। विषसर्जोदयद्वारपतिमानन्दवर्द्धनं।
भूमिष्ठौ तौ हि कोट्टस्थ विवेदानन्यदेशजौ। सोऽप्योकनादिरश्माणां लक्षणाद्धरणक्षमौ। १८३५
प्रविष्टस्य पुरं दृष्ट्वा प्रीतिदायार्थिभिः शिरः। भ्राम्यमाणं भटैर्भिक्षोराक्षिप्यैतानदाहयत्।
राजादेशादथकृत्स्नोभूयिष्ठैरसौ जनैः। नप्ता पैतामहे देशे दह्यमानोऽप्यशोच्यत।
काले योग्योदयोद्रिक्तभानी स्वविषये नृपः। सिद्धिमश्रद्दधानोऽपि प्रहिणोति स्म रिल्हणं।
समोर्थ्यस्वामिभक्त्यर्थनैस्पृहादिगुणोज्ज्वलः। तेन सौमोघप्रारम्भः समभावि जिगीषुणा।
भवितव्यतया दक्षत्व्यामोहः प्रेरितोऽथवा। शठामात्यैरभूद्भूभृत्स्व व्यक्तायुक्तमन्त्रितः। १८४०
हीनोऽर्थदुर्गामात्यैर्ष्यन्निर्व्वीक्षव्यस्य वैरिणः। अनुमेने कृतारम्भान् भृत्यान् योग्योऽप्युपेक्षते।
उदयः कम्पनाधीशो राज्ञोऽपे पर्य्यशिष्यत। सर्व्वामात्यप्रतीहारमन्वगच्छत्पुनः परं।
राजात्मजद्वयारोहडामरामात्यमिश्रया। देर्ध्यं तत्सेनयावापि सर्व्वेषामभ्युदययया
सन्नेष्टयन्नट्टलिकालिविष्टफटकोदिशः। संग्रहीतुं प्रवृत्ते सर्व्वोपाय्यविरोधिनः।

लक्षाद्यः फुल्लपुरे कोट्टोपान्ताश्रये स्थिताः। भयभेदाद्व्यव्ययान् प्रकम्पमनयच्चिपून्। १८४५
सुस्सलक्ष्मापतिर्व्वद्धो लोठने तत्सुतामदात्। यस्मै प्राक्पद्मलेखाख्यां वज्रस्यस्वधराभुजे।
साहायकाय प्राप्तस्य तस्य सैन्यैर्द्दिषच्चमूः। शूराभिधस्य युद्धेषु प्रत्ययाद्धि प्रतिच्छणं।
तेषूपरुद्धराष्ट्रेषु भयदोलायमानधीः। अङ्गीचक्रे नरपतेर्नतिं दण्डञ्च लोठनः।
एतावत्सिद्धमफलारम्भोनामथ दृश्यते। काले व्याहन्तिरस्माकमुचितास्मिन्नलाघवः।
शारदारम्भसुभगे क्रमात् काले बलोर्जिताः। अथारम्भं विधास्यामः सर्व्वारम्भेण शोभनं। १८५०
प्रत्यग्रहं लक्ष्मकेण प्रहितं नादधे नृपः। अन्ये च मन्त्रिणोमन्त्रं शाठ्यादभ्यर्णवर्त्तिनः।
सर्व्वाधिकार्य्युदयनः प्रतिश्रुत्य धनं बहु। साहायकार्थमानिन्ये सोमपालमपि प्रभोः।
अपांक्तेयः स सम्बन्धबद्धोऽपि धनलुब्धधीः। द्रुह्यते स्म महाव्यापन्निमग्नाय महीभुजे।
वक्त्यर्थदो लोठनश्चेत् किं मे सम्बन्ध्यपेक्षया। अन्यथा भवतामस्मीत्यन्यान् वक्ष्यामि कैतवात्।
इष्टमित्यभिसन्धाय सोमपालोऽभ्युपाययौ। समर्थने हेतुरासीत् सुस्सलेर्व्याजे कियानपि। १८५५
स हि भिक्षाचरोन्मुख्यं निवार्य्यानायितो यदा। सोमपालमुखेनोर्व्वीभुजा राजविसर्जितः।
दूतः प्रार्थयमानस्य तानर्थान् प्राक् प्रतिश्रुतान्। क्षणिकस्यासमर्थस्य प्रदातुमनुबध्नतः।
तदा भिक्षाचरं जानन् हतकल्पमनेन नः। व्यसनप्रशमे कोऽर्थ इत्यवज्ञां प्रकाशयन्।
मदेन न ददौ किञ्चित्सोऽथ भिक्षाचरं हतं। श्रुत्वा निरुपयोगं स्वं राज्ञोज्ञात्वा सशोकतां।
यावदेकाहमभजल्लोहरव्यसने भयं। तावन्निशम्य सम्प्राप्तोत्सेको भूयोऽपि मन्युभाक्। १८६०
लोठनं बद्धसन्धिं वः करिष्यामीति भूभुजः। उक्त्वा दूतं लोठनेन दापयिष्यामि काञ्चनं।
युष्मभ्यं कथयित्वेति सोमपालश्चिकीर्षितुं। बलितामवलत्वञ्च सर्व्वेषां स्वार्थसिद्धये।
समं सोमेन तत्सैन्यमन्यप्रस्थितिलक्षितैः। मितैरनुगतो भृत्यैर्वीरमूलकमासदत्।
कुलकं॥ यदा नौचित्यदुष्प्रांशुर्व्वर्षदूषितकीर्त्तिना। भोगलुब्धतया तेन हता विततसत्वता।
तुषारशर्कराशुक्लजलपानादृदुर्जरं। त्यक्तुं भोज्यं मृदु स्निग्धं काश्मीरं न शशाक सः। १८६५
सतुषं शुष्कशष्पादि वह्निर्भोक्तुमपारयन्। यैस्तैरुपायैः कश्मीरान् प्रविविक्षुरतोऽभवत्।
काश्मीरकाः कार्य्यशेषमदृष्ट्वा शीघ्रशेषिताः। आकर्ण्य च तदायातमाकुलत्वमशिश्रियन्।
भुञ्जानैर्भृष्टमांसानि पिबद्भिः पुष्पगन्धि च। पतीहारायतो वारि मार्द्दीकं लघु शीतलं।
आनेष्यामो यवान् सुस्सिमाकृष्य स्मश्रु संयुगे। इत्थं विकत्थमैस्तैस्तैराहोपुरुषिकाः कृताः।
काश्मीरकैर्मितैर्युक्तं खशैः सैन्धवकैरपि। अभिषेणयितुं शक्तुं नतेऽप्युद्यमिनोऽपि तं। १८७०
भ्रातृव्याय च मुख्याय भूभुजा च करार्पणं। विदध्यां जयसिंहाय वरमित्यभिमानिनां।
बह्वर्थमर्थ्यमानेन लोठनेन तिरस्कृतः। सोमपालः प्रियं किञ्चिद्राजपक्षे न्यदर्शयत्।
मयि स्वशूरसैन्यानां व्यग्राणां वैरविग्रहे। सुस्सलेर्हिताय त्वं रक्षमन्विष्यसि किमाश्रितः।
इति निर्भर्त्सितस्तेन सुस्सिः स्वाहंक्रियोचितः। सर्व्वानुसरण सन्नद्धो राजसन्यग्रहेऽभवत्।

जरदाषाढसंजातशीतज्वरमहाभयः। वरूथिनीमथोत्थाप्य विदद्रौ निशि लक्ष्मकः। १८७५
विसृष्टदूताः कटकं नष्टं वक्तुं प्रभोर्द्रुतं। केचिदभ्यसरन् सुज्जिं सैनिकास्ते जिघांसवः।
पारैणैकेन भूपालसैन्यमन्येन वैरिणा। वर्त्मनः श्वभ्रदुर्गस्य तुल्यमेव प्रतस्थिरे।
शारम्बरपथं वैरिवश्यं त्यक्त्वा यियासवः। स्वोर्व्यां कालेननाख्येन सङ्कटेन तदन्तिके।
तस्मिन्नहन्यस्खलिते वनिकावासनामनि। ग्रामे सैन्यान्यवैत्स्यन्त लोकैस्त्यक्तावचेश्मनं।
अनुप्रस्थायिनोऽभ्यर्णग्रामकेष्वपि दुद्रुवुः। भुक्त्वा पीत्वाथ ते निन्युर्निशार्द्धमकुतोभयाः। १८८०
अथायातं विद्विषद्भिः स्वस्य श्रावयितुं द्रुतं। चोभम्हत् सुज्जिरभ्येत्य तूर्य्यघोषमकारयत्।
क्षणदाशेषएवाशु पलायाञ्चक्रिरे ततः। तैस्तैः शैलपथैः सेना निरवष्टम्भनायकाः।
चित्राम्बराणि मुष्णद्भिः प्राक्ष्णेऽत्यज्यन्त मन्त्रिणः। भूप्रकल्पैर्गण्डशैलानानाधातुद्रवैरिव।
लुण्ठ्यमानश्च मूर्खात्तुं नादधे कश्चिदायुधं। तदाश्वयेन वा तेन स्वात्मनान्यस्तु रक्षितः।
उत्प्लुत्य लङ्घयन्तोऽद्रीन् केऽपि शाणाधरांशुकाः। रक्तास्फिजो गता प्रापुर्मर्कटा इव पाटवं। १८८५
केऽप्यम्बरपरित्यागविकसद्गौरविग्रहाः। हरितालशिलाखण्डा इव वातेरिता ययुः।
स्थूलवेणुवनाकीर्णैः शैलैरक्षतविग्रहाः। केऽपि श्वासोर्द्धपुत्काराः करिपोता इवाव्रजन्।
किं नामादौ रणे भक्तो स नासीत्तत्र कश्चन। तिरश्चैव विपर्य्यस्तधैर्य्यैर्य्यैर्व पलायितं।
भृत्यस्कन्धाधिरूढोऽथ गच्छन् मूढः प्रधावितुं। प्रतीहारादिषष्ठाधैर्दूरात् केश्चिद्व्यलोक्यत।
निरंशुकः सस्त्र्यंशुकसत्केयूरकुण्डलः। प्रतिज्ञायामुसंसत्तैः सर्व्वप्राणप्रधावितैः। १८९०
अश्मास्तेन भृत्येन त्यक्तः स्कन्धात्पतन्नतः। स निष्पन्दरवस्तिष्ठंस्तैरग्राहि महाजवैः।
नवबन्धनशोकार्त्तशारिकाक्षामविग्रहः। स गलालिरिव व्यञ्जदिषः सङ्कुचितेक्षणः।
बद्धस्य मे मानधनप्रहर्त्तुर्व्वैशसान्तरं। इतोऽधिकं ध्रुवं सुज्जिर्व्विदध्यादिति चिन्तयन्।
स्कन्धेऽधिरोप्य निश्चेष्टीकृतप्रावारभूषणः। नदद्भिः सोपहासन्तैः सुज्जेरग्रं व्यनीयत।
प्रच्छाद्य सत्ववान् वक्त्रं सोंऽशुकेनैष नोऽर्चितः। इहद्राजइत्युक्त्वा तस्मै स्वान्यंशुकान्यदात्। १८९५
प्रावारिताम्बरं कृत्वा हयारूढञ्च तं पुनः। धैर्य्येणायोजयत् स्निग्धैर्व्वचोभिः परिसान्त्वयन्।
निर्लुण्ठिततुरङ्गासिकोशैः परिवृतः खशैः। ततो गृहीत्वा तं श्रीमान् सोमपालान्तिकं ययौ।
इमाश्चोमाङ्गनाक्रीडत्तडित्तरलविभ्रमाः। भाग्यमेघानुयायिन्यः स्थायिन्यः कस्य सम्पदः।
आराधनधिया स्वैरं यस्याग्रेऽभोजि भृत्यवत्। गात्राणि कुङ्कुमालेपैरुपाचर्य्यन्त च स्वयं।
सोमपालादिभिः प्रक्षैः स मार्धेरेव पशुवैः। तेषामग्रे तथाभूतस्तिष्ठंल्लोकैर्व्यभाव्यत। १९००
सोऽपि पलितश्वेतापाङ्गश्यामाननः परैः। वनौकाइव बद्धोऽभूत्क्रोशमूकोऽवनान्तरे।
अर्प्पितं सुज्जिना सोमपालः स्वीकृत्य लक्ष्मकं। जानन् गृहीतान् कश्मीरान्निजराष्ट्रं न्यवर्त्तत।
सोऽठनस्यान्तिकादेत्य स शूरैर्माजिकादिभिः। प्रतिश्रुत्य प्रभूतार्थैः प्रतीहारमयाच्यत।
कश्मीरादिप्रतीहारशिवापचानुयायिभिः। तदा न कैरमन्यन्त सम्प्राप्याश्चामराङ्कजैः।

लब्धेनापि प्रतीहारायत्तं राष्ट्रं जिघृक्षुणा । भूरि चादित्सुना वित्तं राज्ञोऽकारि न तेन तत् ॥ १९०५
भग्नमानेष्वमात्येषु प्राप्तेषु नगरं नृपः । हारिते च प्रतीहारं न धैर्य्यात् पर्य्यहीयत ।
यैस्सैन्यसारैर्द्वैराज्यं पुरा भिक्षाचरोऽकरोत् । यैस्ताप्युत्कुपिते राष्ट्रे हृष्यावर्त्तिष्ट सुस्सलः ।
भूयस्ता संगृहीतानां शीतज्वररुजा ततः । तेषां दशसहस्राणि योधानां निधनं ययुः ।
विरराम तदा देशे न मुहूर्त्तमपि क्वचित् । बान्धवाक्रन्दतुमुलं प्रेतवाद्यमहर्निशं ।
घोरघर्म्मघृणिश्रान्ताशेषपथ्यवहतिस्थितिः । सोऽनुत्साहहतः कालो नष्टराज्यदवाभवत् । १९१०
नानादिगन्तरायातैः प्राप्तैः काश्मीरकैरपि । लोहरेऽथ प्रवृद्धर्द्धि राजद्वारमजायत ।
काकतालीयसम्प्राप्तलोलोत्तरनृपश्रियः । अकुण्ठा लोठनस्यासीत् स्फूर्त्तिर्व्वित्तपतेरिव ।
तस्याकारपरिक्लेशवैशसाभिज्ञचेतसः । भोगेष्वनास्थाभ्रातृव्यभृत्यपुत्रादयोऽभवन् ।
नास्थानवर्षी स्थाने वा बद्धमुष्टिर्व्विभूतिमान् । सवयःपाकनिष्कर्षव्यसनारोग्यमाप्यत ।

छायानिरङ्कुशगतिः स्वयमातपस्तु छायान्वितः शतश एव निजप्रसङ्गं ।
दुःखं सुखेन पृथगेवमनन्तदुःखपीडानुबोधविधुरान्तमुखस्य वृत्तिः । १९१५

तादृगभ्युदयावाप्तेर्मासे न्यूनेऽधिके गते । एकसूनोः सुतो दिष्ट्या लोठनस्य व्यपद्यत ।
तमेकपुत्रा शोचन्ती शोकशङ्कुहताशया । ततः प्रपेदे प्रलयं मल्ला लोठनवल्लभा ।
पत्न्यामभिन्नभावायां गुणज्येष्ठे तथात्मजे । विपन्ने स तया लक्ष्म्या न कृत्यं किञ्चिदैक्षत ।
निर्व्यूहलस्य भूपालसुलभस्य विजृम्भितं । मोहनी वा श्रियः श्र कार्य्यदश्रासीत् पुनः सुखं ।
अकारयन्निर्धनोऽपि तथा हृद्यस्य कालवित् । लच्चैः षट्त्रिंशता मोचं लक्ष्मकस्य क्षमापतिः । १९२०
दृष्टहृद्धिपरिच्छिन्नपुष्पवृष्टो जनैः पथि । तस्मिन् प्राप्ते न कोऽप्यासीद्राज्ञा प्रत्याहृतां श्रियं ।
स लक्ष्मीमहिमच्छिन्नविस्तृताभिभवप्रथः । प्रभवन् पुनरेवासीन्निग्रहानुग्रहक्षमः ।
धनप्रलोभैर्निर्नष्टसर्व्वावष्टम्भपाटवः । सुज्जिः सार्च्चयमव्याजं भेजे लोठनभूपतेः ।
दत्तवान् भागिकसुतामविश्वासमपाहरत् । स तस्याद्यप्रियापायदुःस्थितिव्ययया समं ।
अभ्यर्थ्य पार्थिवं पञ्चरथ्यानीतवान् कृती । तस्य सोमलदेव्याख्यामुद्वाहाय तदात्मजां । १९२५
एवंप्रधानसम्बन्धैर्बद्धमूलं विधाय तं । सोऽव्याहतस्य साचिव्यप्रहस्यानृण्यमाययौ ।
अचिन्तयच्च कश्मीरप्रवेशं डामरादिभिः । वज्रश्च प्रार्थ्यमानेन प्रेरितो नवभूभुजा ।
इत्थंभूतं कृतैक्यञ्च समं सीमान्तभूमिपैः । अथ च्छलयितुं सज्जं नीतिं प्रायुङ्क्त सोस्सलिः ।
तत्रोदयद्वारपतिस्तस्यारम्भे गभीरधीः । अलुप्तसत्वः स्तुत्यत्वं सारेतरविदामगात् ।
तत्रत्यः स हि निर्नष्टसर्व्वस्वोऽप्यर्थितो हितैः । दानमानादिभिः स्वामिकृत्ये नित्योदितोऽभवत् । १९३०
वनप्रस्थाभिधे स्थाने लोहरादूरगे स्थितः । अखिन्नोऽङ्कुशसङ्ग्रामैर्बैरं सिन्ध्ये द्विषद्बलं ।
कटाक्षमाभिप्रायेऽस्मिन् मिथ्या तथ्येन वा दधुः । भयं लोठनभूपालात् माजिकेदारकादयः ।
हन्तव्यांस्ताक्किन्त्यानस्मान् सुज्जो न्यस्ताशयो नृपः । वेत्ति तत्प्रेरणेनाशो तदाशङ्किषतेति ते ।

सञ्जातं सहजाख्यायां राज्ञ्यां सुस्सलभूपतेः । कुर्वीमल्लार्जुनं भूपं लोहरेऽस्मिन् हिताय वः ।
तत्प्रेमाणमिवाकस्मादभिसन्धत्त लोठनं । सन्दिदेशाथ तान् धीरो जयसिंहो महीपतिः । १८३५
व्याजेन राज्ञा संदिष्टं तत्कोट्टं स्वीचिकीर्षुणा । प्रतिश्रुतमविश्वस्तैस्तस्मिंस्तैश्च तथैव तत् ।
मल्लार्जुनं लोठनोऽथ ज्ञात्वा प्रारब्धचाक्रिकं । तदाप्तान् भ्रातृसूनुस्तांश्चाक्रिकानप्यबन्धयत् ।
अवरुद्धतनूजेन शङ्कां सोल्लासिना भजन् । परं विग्रहराजेन प्रतिहार्य्यमजिग्रहत् ।
राजा व्याजात् पितृव्येण बद्धमन्धिरूपार्थवित् । तत्वरे हारितं राज्यं तैस्तैः स्वीकर्त्तुमुद्यमैः ।
विसृज्य शूरं निष्कम्पराज्यः सुज्जिः परिश्रमात् । मासान् कांश्चिदसङ्क्षोभोत्त्यावर्त्तिष्ट लोठनः । १८४०
सुज्जिः पश्चात्थापत्यं प्राक्कन्यामानिनाय यां । अनूढाया विवाहाय तस्या मातरमागतां ।
आकर्ण्यत जनादीनां प्रसङ्गेऽस्मिन् सगौरवां । मामान्योदर्पितपुरं हृतप्रत्युद्गतो ययौ ।
माजिकाद्यैरथ प्राप्तरन्ध्रैर्निर्गत्य बन्धनात् । मल्लार्जुनः कोट्टराज्ये संहतैरभ्यषिच्यत ।
ठक्कुरैः प्राग्वदानीतैः प्रतोलीतलमागतान् । भृत्यांस्तो सिंहभूभर्त्तुः प्रविविक्षून्यवारयत् ।
षष्ठेऽब्दे लोठनः शुक्लत्रयोदश्यां स फाल्गुणे । यथायुज्यत राज्येन तथैवाशु व्ययुज्यत । १८४५
अनूढां कन्यकां मूढः सम्पद्दायायीकृतां । प्राप्तां परस्य भोग्यत्वं भाग्यहीनः शुशोच सः ।
अटित्वाट्टालिकादिभ्यो देशेभ्यो नष्टशक्तिना । तेन सुज्जिबलात् कोशशेषः कश्चिदवाप्यत ।
पूर्वाक्षतान् सिंहभूभृद्भृत्यानप्यकृत्य माजिकः । निमायाप्रतिमल्लत्वं मल्लार्जुनमहीभुजं ।
तेनातिव्ययता नव्यवयसा भूभुजा कृतं । मौक्तिकैः पूगविच्छेदे ताम्बूलार्पणमेकदा ।
वर्षतो विषयौत्सुक्याद्धाटकं कुट्टनादिषु । त्यागित्वं तस्य तत्त्वज्ञैः सदोषमुदघोष्यत । १८५०
प्रजोपतापोपचितः कोशः सुस्सलभूपतेः । तेनातिव्ययता स्वैरमनुरूपव्ययः कृतः ।
गणकाचारणद्रोग्धृविटचेटादिपेटकं । साधून् विधूय सोऽपुष्णाद्दुष्कीर्णाः कुमतिर्यतः ।
सपत्नसादहितसाद्यदि वा वङ्क्षिसाद्भवेत् । द्रविणं क्षोणिपालानां जनतोपद्रवार्जितं ।
प्रजापीडनजं वित्तं जयापीडमहीभुजः । दास्याः पुत्रैरुत्पलाद्यैर्विलुप्तं नप्तुरन्तकैः ।
लोकसंक्षोभनोद्भूतशोकः शङ्करवर्मणः । प्रभाकरादिभिः स्वैरं जायाजारैरभुज्यत । १८५५
अनङ्गवशगा पङ्क्तोरङ्गनाष्टजिनार्जितं । ददुः सुगन्धादित्याय धनं सम्भोगभागिने ।
राज्ञो यशस्करस्यार्थान् व्यधीचक्रेऽतिमर्च्चितान् । अङ्गमानङ्गवैवश्यादालिङ्गनजनङ्गमा ।
पूर्वराजार्जितं पार्थ्वगुप्तिः प्राप्तधनं स्मृतः । दाता जायोपपत्येन तुङ्गादीनामजायत ।
सङ्ग्रामराजश्रीलेखामुखाजमधुपैर्धनी । मुषितोऽव्यक्तहसद्धार्थैर्निविडोपार्जनस्पृहः ।
अप्रत्यवेक्षात्तपितप्रजस्य जगदूर्जिता । अन्तेऽनन्तमहीभर्तुर्श्रीभूतिर्भस्मसादभूत् । १८६०
पुत्रेणापात्रसात्कार्य्या जारसात्सरसा कृतः । कुकलः कोशलोद्भूतः कोषः कलशभूपतेः ।
सह गेहः समं स्त्रीभिः सत्रापुत्त्रैरभूद्धुतं । अश्रान्तार्जनतर्षस्य हर्षदेवस्य वङ्क्षिसात् ।
चन्द्रापीडावलावन्तिवर्म्मादिधर्मनिष्ठुरैः । निष्ठा न्याय्यस्य कोशस्य नवाप्यानुचिता क्वचित् ।

चौरचाक्रिकभीमाख्यभूम्बदेश्याविटादय. । लुण्ठिमारेभिरे पुष्टां नवे मल्लार्जुनोदये ।
वञ्चयित्वाप्यरीन् भूभृत्ताम्यन्विघटितेषितः । अथ चिचरथं तूर्णमास्कन्दाय व्यसर्जयत् ।
द्वारपादाग्रयोस्तन्याधीकारेण प्रवर्द्धितः । सोऽनन्तसामन्तयुतः पदं फुल्लपुरे व्यधात । १९६५
उत्सेहिरे न वितता अपि दुर्गसमाश्रयात् । मल्लार्जुनचमूर्जेन्यं जेतुं तदनुजीविनः ।
भेदाय कोट्टमारूढस्तङ्कृत्यो राजसम्मतः । मल्लार्जुनानुगैरासौ हतः सम्बर्द्धनाभिधः ।
युद्धासाध्येऽपि तिष्ठन्तः कोट्टे भयविधेयतां । कोष्टेश्वरेऽभ्यगायाते तत्रामित्राः प्रपेदिरे ।
प्रतिश्रुततरो बद्धसन्धिः स व्यसृजत्ततः । सभाजनाय जननीं तेषां मल्लार्जुनोऽन्तिकं ।
सा वैधव्यं विविक्तेन वेशेनैश्वर्य्यशोभिना । कोष्टेश्वरादीन् सोत्कण्ठांश्चक्रे चपलचेतसः । १९७०
तस्यां गृहीतविश्रम्भं व्यावृत्तायां तदन्तिकात् । द्वारीशाय ददावूरीकृतं मल्लार्जुनः करं ।
आकृष्टो राजजननीचतुरागेण कोष्टकः । दिदृक्षाकपटात् कोट्टमारुरोह मितानुगः ।
अर्द्धरूढेन सहितस्तेन चिचरथस्ततः । सद्भूतप्राभृतोभूमिभर्त्तुः सविधमाययौ ।
राजा तु सम्मन्त्र्य ततः प्रायुङ्क्त बहुनिशालिना । उदयद्वारपतिना नीतिं जेतुमरीन् पुनः ।
वीतास्कन्देो लोठनेऽपि गते पञ्चरथान्तिकं । लेभेऽभिनवभूपालः किञ्चित्पादप्रसारिकां । १९७५
तदूढवान् सोमलाख्यां तां पञ्चरथकन्यकां उपयेमे धृतायामो नागपालात्मजामपि ।
तस्मादहंक्रियामूढाल्लेभिरे गूढकैतवाः । भूभुजः सोमपालाद्याभृत्यभावेन वेतनं ।
कविगायनजल्पाकयोधचारणचेष्टितैः । बहवो मुमुषुर्धूर्तास्तेऽपि तं राजवीजिनः ।
सवान्यानिष्परीपाकप्रज्ञा दृष्टा रटन् बत । जज्ञे वाक्प्रौढिमात्रेण वालिशोऽकुशलाशयः ।
केतोरिवाभद्रहेतोः प्रदीप्तं वदनं विना । अनिष्टुराकृतेर्दृष्टं तस्यान्यत्र न सौष्ठवं । १९८०
अत्रान्तरे नृपः सुज्जिं मध्यमाशौर्यविक्रमं । माभून्मल्लार्जुनेनापि श्रितोऽसाविति चिन्तयन् ।
निर्व्वासने प्रवेशे च प्रभुः सुज्जस्ततोऽधिकं । तात्कालिकीं प्रतीहारशक्तिं काञ्चिददर्शयत् ।
स कम्पनाद्यधीकारमग्रजं राजविसर्जितां । वितरन् सुज्जये राजस्थानकार्य्यमग्रजं विना ।
निर्लोभाय गृहायातसोमपालानुरोधतः । प्रसीदन् वामहस्तेन निजजूटस्रजं मुदात् ।
आकृष्य प्रददौ तस्य तत्प्राप्तिपरितोषिणः । आप्याय सान्द्रया दृष्ट्या यत्सम्पदोदधीव्यधात् । १९८५
भर्त्तै हिताय सौहार्दं विधूयोदयधन्ययोः । अनजद्रिल्हणः सुज्जेः प्रवेशे प्रतिलोमतां ।
प्रत्युद्गमेन सम्मान्य सुज्जिं प्रावेशयन्नृपः । देशान्तरस्थाद्धन्यादीन् मानसात्ततु तद्गिरा ।
कृतागाः क्ष्मापतालब्धः क्षणे तीक्ष्णैर्जिघांसति । कोष्टेश्वरः पलायिष्ट ज्ञातोदन्तस्तदन्तिकात् ।
आस्कन्दमागते राज्ञि गृहीतमनुजेश्वरे । सपत्नभेदोपहतः सोऽथ देशान्तरं ययौ ।
लोठनस्तु निजयाह कांश्चिदालम्ब्य ठक्कुरान् । वप्यनीलाभिधे स्थाने वसन् मल्लार्ज्जुनं बलात् । १९९०
तत्र दृष्टमसम्भाव्यमेवास्य खलु पौरुषं । परिभ्रष्टोऽपि यदङ्कपदं तमजयत् सदा ।
जहार तुरगांल्लुण्ठिं चकाराट्टालिकापणे । मार्गद्रङ्गादिभङ्गञ्च तदा सर्व्वत्र सोऽकरोत् ।

राजराजाभिधानेन डामरेणार्थितस्ततः। कश्मीरराज्यसम्प्राप्त्यै क्रमराज्यमगाहत।
तद्वेत्य समीपस्थे हते चित्ररथेन सः। तस्मिंश्चवन्ये प्रययौ बप्पीलभुवं पुनः।
तस्मिन्नास्कन्दमसकृद्ददत्यट्टालिकामपि। अवरोद्धुमशक्तोऽभूत् कोट्टे मल्लार्जुनोऽवसत्। १९९५
भ्रातृव्येण पितृव्यस्य दापयित्वा धनं बहु। ततः कोष्ठेश्वरो यात्रासक्तः सन्धिं न्यबन्धयत्।
लोहरे विहितस्थैर्य्ये गृहीत्वा लोठनं ततः। कश्मीरोर्व्यां पपातासौ विजिघृक्षुः क्षमाभुजा।
गिरीनुल्लङ्घ्य कार्कोटद्रङ्गे विहितवान् पदं। निपत्य मार्गेऽनुद्धाते यावदन्यैश्च डामरैः।
नावाप योगं निर्गत्य क्षिप्रकारी क्षमापतिः। सर्व्वोद्योगेन तं तावदुत्यानोपहतं व्यधात्।
अत्रान्तरे प्रतीहारः प्रापास्तमपपीडया। न सम्पत्स्वल्पपुण्यानामनपायित्वमायुषः। २०००

उत्सारणाप्रियतया परिहृत्य सर्व्वदारे गृहे निरनुरोधतया वसन्तः।
सम्पन्नघूर्णतधियोऽप्रतिघप्रवृत्तेर्धिग्जानते न रभसान्नियतेर्निपातं।

कुर्व्वाणोत्सारणं तस्य गृहजा सततं नृणां। नाज्ञासीत् सुखसुप्तस्य पृष्ठे पतितमन्तकं।
ज्वरितः स हि निह्नुतज्वरः स्वपिति विज्वरः। विदित्वेति न विज्ञातः स्वपन्नेव मृतस्तदा।
सलोठने कोष्ठकेऽथ प्रयाते नृपतिः पुनः। न स मल्लार्जुनो नापि कोष्ठको न स लोठनः।
छद्मनोदयनं पार्श्वस्थितं मल्लार्ज्जुनोऽवधीत्। तस्मै चुक्रोध मध्यस्थे स्थापितस्तेन कोष्ठकः। २००५
अनुनिन्ये न तं खिन्नं स सम्भृतबलस्ततः। अभिषेणयितुं क्रोधादधावत् सह लोठनं।
कोष्ठकोमल्लकोष्ठाद्यैर्मितैर्युक्तोऽपि सादिभिः। तीर्त्वा परोष्णीं तत्सेनां निर्ममाथाप्रमाथिनीं।
हतेषु तेषु संग्रामे स्वग्रसैन्यवकादिषु। वधं प्राप्तः सिंहभूभृत् दैवान्न स नृपोहतः।
आरूढः कोष्ठमूर्द्धानं मानमूर्ध्नः परिच्युतः। भग्नप्रतापोभूयोऽपि समधत्त स कोष्ठकं।
विसृज्य लोठनं तिष्ठन् निर्व्वैरमगमत्पुनः। अनिर्व्वाहितदेयेन तेन दैधं सडामरः। २०१०
बद्धाधिकारिणः शुल्कं गृह्णताकारि राजवत्। तेन स्वनाम्ना भाण्डेषु द्रङ्गे सिन्धुरमुद्रणा।
अतुसंहतयोः काचकलशोदलयोरिव। क्षणे क्षणे सन्धिभङ्गस्तयोः समुदपद्यत।
निर्व्यूढिश्लून्यैर्व्वाग्यैश्चैर्व्विरागं लोहरेश्वरः। निन्ये लवन्य सोऽप्येनं स्पर्द्धाबन्धैरनङ्कुशैः।
डामरेण ततो दत्त्वास्कन्दं तत्कटकान्तरं। पराद्ध्यायुधधुर्य्याश्वहरणात् सुस्थिरं कृतं।
दत्त्वाभयं तैरायत्यां विषमैर्हठपौरुषैः। एवं तं कोष्ठकोमूढः सुखोच्छेदं व्यधाद्द्विषां। २०१५
तनयादानसम्बन्धात् श्वशुरं मुख्यमन्त्रिणं। अत्रान्तरे नृपोहन्तुं माजिकं स व्यचिन्तयत्।
आसीत्कठोरतारुण्यतरङ्गितमनोभवः। सुव्यक्तं स हि तन्मातुरौपपत्येन सम्मतः।
आहारावसरे तीक्ष्णाः कृतसंज्ञाः क्षमाभुजा। दत्तप्रहरणाः प्राणैर्भुञ्जानन्तं व्ययाजयन्।
धुन्वन्नसिपटं बह्वीरपट्टोरटन् बहु। निर्लुण्ठयन् स तत्सेनां तां तामारभटीं व्यधात्।
अवाप्स्यत न द्रोहमध्यादिहाकरोऽप्यहो। राज्ञा विषमितस्तेन रक्षदानेन स स्वयं। २०२०
दैवेनोत्सारितारातिस्ततः सिंहमहीपतिः। स ददे कोष्ठकं सुस्थिं प्राड्विपोद्विजयाय च।

मार्गस्य याममात्रेण गम्यस्यान्तिकमाप सः। यावत्तुरङ्गहरणात्कोष्ठकेनाकुलीकृतः।
अश्वभेदाकुलस्तावत् प्रत्यवस्थातुमक्षमः। गृहीतकोशः सन्त्यज्य कोट्टे मल्लार्जुनो ययौ।
राज्यभ्रष्टः स निर्लुण्ठ्यमानो मार्गेषु तस्करैः। अवनाहोन्मुखो रक्षन् कोशशेषं कथञ्चन।
षष्टमष्टादशशरद्दैश्यस्याष्टमवत्सरे। राज्यात्तेन द्वितीयस्यां वैशाखस्यासितेऽहनि। २०२५

दाता शिखामृतत्वेऽरमृतं विलब्धकार्पण्यकृतसमिति लूनशिराः कृतस्य।
ईर्ष्येन यत्र उदकार्य्युपकर्त्तुरस्तु तत्रापरः कइव सन्निहितद्विजिह्वः।
मुक्ता इमा इति जलं नलिनेषु लीनं शाल्मलभेतदिति जाड्यमिनेषु लग्नं।
यज्जायते किमपि हन्त विमोहनी सा शक्तिः श्रियः स्फुरति कापि तदाश्रयायाः।
प्रत्यद्भुतप्रहरणाविपिनेषु केऽपि प्राणैन केचन दृशाथ रसज्ञयान्ये।
ते केऽपि सन्ति तु नरेन्द्रगृहेषु हिंस्रावाचैव ये विरचयन्ति किलोपघातं।
ज्योतीरसाश्मनइवाश्रितभीश्वरस्य निर्दग्धुमिन्धनमिवाग्रगतं न शक्ताः।
पश्चाद्भवेद्यदि न तत्प्रसृतावकाशाः कुर्य्युः खलारत्रिकराइव भस्मशेषं।

कापिलं हर्षटं कोट्टं नीतवान् मण्डलेशितां। उद्यैः कोष्ठभृत्यानां मङ्गृहं कम्पनाधिपः। २०३०
कुर्व्वन् शय्यां पुनर्नेतुं मण्डलं तद्व्यलम्बत। दिनानि कतिचित्तत्र यावत् प्रकृतिदुर्जनैः।
विटैरसूयाविषमैः प्रसादावसरो नृपः। तावत्कलुषतां तस्मिन्नुपजापैरनीयत।
राजा भवन् परः कोऽस्तु सुविचारदृढक्रियः। एषोऽपि शिशुवन्मृत्यैर्यत्र धूर्त्तैः प्रनर्त्यते।
शैशवे वालिशप्रायैः संस्तुतैर्जाड्यमर्पितं। प्रौढावपि नवा यायाद्राज्ञः कार्ष्ण्यं मणेरिव।
भृत्यान्तरपरिज्ञानमात्रेण जगतीभुजां। निरागसोऽवपातः काष्ठं राष्ट्रस्य जायते। २०३५
कृत्ये व्यवसिते साध्ये हास्यः स्यात्सन्नकादिवत्। सुज्जिः प्रायोजि राजापिनिर्ज्जेतुमिति लोहरं।
निर्य्यूढाद्भुतकार्य्येऽथ तस्मिन् प्रख्यास्त्वतुष्यया। अमोघया प्रजेऽसूसे पापाः पैशुन्यविद्यया।
गाम्भीर्य्यालक्ष्यविकृतेः प्रीत्यालापैर्महीपतेः। प्रत्यायातः कलुषतां नाज्ञासीत् कम्पनापतिः।
प्रकृत्या तस्य निर्द्रोहतया शङ्कास्य तादृशं। प्रियं कृतवतस्तस्य स्यादविश्वासोऽथवा कथं।
प्रीतिराभीन्न नृपतेः स्वकृत्यैरुचितैरपि। अप्रियप्रमदालापैर्व्विरक्तस्येव कामिनः। २०४०
जित्वा राष्ट्रद्वयं प्रादां हारितं नृपतेरिति। वक्रमानेन दर्प्पात्स स्वच्छन्दं स व्यवाहरत्।
पौरानगारहरणाद्यपकारैर्निरङ्कुशाः। तदन्येवावाधमानाविरागमनयञ्जनं।
निजागःस्मरणात् कोष्ठेश्वरोऽत्र व्यश्वसीन्नृप। न पितृव्येऽपि भूपालकोपात्रिष्कृतविक्रिये।
कोशं प्रजोपतापेन सञ्चिन्वन् सुज्जिना समं। सम्बन्धकृच्चित्ररथोनाभूदपि मतः प्रभोः।
धन्योदयो नृपः सुज्जिदाक्षिण्यालव्येशाह्वदः। अपुष्णाद्भूविर्णगूढं राज्यपुर्य्यां कृतस्थितिः। २०४५
तौ चावान्यगतौ शीलज्वरनष्टपरिच्छदौ। मल्लार्जुनस्य साम्राज्यभ्रंशेऽपि विपुलश्रियः।
सुज्जिद्वेषात् पुरा दूतैराकृतोलक्कणे यः। आगच्छत् सज्जपालः स प्राप रा पुरीं तदा।

सुज्जिचिचरथाभ्यान्तं रुद्धचेष्टेन भूभुजा । अविमृष्टप्रवेशाशं दूतैर्मल्लार्जुनोऽभजत् ।
तन्निमित्तं स केनापि सामन्तेन महाध्वनि । सञ्जातकलहे प्रस्खलतो लक्ष्म्या व्ययुज्यत ।
तथाभूतमपि स्वर्णं भूर्य्यरीकृत्य नाग्रकत् । यत्तन्मल्लार्जुनो नेतुं कार्य्यैस्तदपूज्यत । २०५०
सोऽस्वतन्त्रेण राज्ञा च सौजन्यादिलहणेन च । दूतैः प्रच्छन्नमाहूतोऽरभसादाययौ ततः ।
न न्यग्रहष्यचेत् हन्तुर्भामनुचेति चिन्तयन् । अभिनवविषमे मार्गे पुरं साहसिकोऽविशत् ।
स कान्यकुब्जगौडादिमण्डलेषु महीभुजां । स्पर्द्धया लब्धसत्कारो भूपतेर्यन्नियन्त्रितां ।
अनवाप्य निजे देशे सत्क्रियां दुःखितोऽभवत् । राजधान्यन्तिकैः पौरैः प्रहृतासु व्यलोक्यत ।
भूपालो गणयित्वाऽथ मन्त्रिणो हस्तदर्शनः । भेजे स्वहस्ततांबूलदानप्रक्रिययैव तं । २०५५
निष्किञ्चनोऽपि सन् ख्यातिमात्रेणानुगतो जनैः । यातायातं नृपगृहे कुर्व्वन् प्रनूनकम्पयत् ।
व्याहारव्यवहारादि व्यालोक्यालौकिकाकृतेः । पुरवान्तरवित् सुज्जिस्तस्य खैरमवेपत ।
दध्यौ सोऽथ ध्रुवं राष्ट्रे खर्व्वसर्व्वंकषक्रियं । नैवमेवाद्भुतं भूतमेतादृक् शान्तिमेष्यति ।
तांस्तान् देशान्तरे वीरानुत्सिक्तान् दृष्टवान् स च । तं पर्य्यालोच्य विश्रान्तिसोत्सेकानाममन्यत ।
भवितव्यतया दर्प्पेणाथ नीतः स्वतन्त्रतां । परिवादावहं सुज्जिस्ततोऽयत्तद्व्यवाहरत । २०६०
स्वानुगैर्लुण्ठितं कृच्छ्रमाचक्षाणं रुषा द्विजं । प्राशैर्मण्डवराज्यस्थः स शृगालमिवावधीत् ।
वाह्ये कुकर्म्मणा तेन विश्राव्य जनमागतं । तं प्रत्युग्रक्रियं लोको विरागं नगरेऽप्यगात् ।
अत्रान्तरे बन्धुमेकं व्यधुः कमलियादयः । अगण्यप्रायमुत्सेकाद्दुत्तमप्रक्रियास्पदं ।
मयि सत्यपरोऽपि स्यात्किमनुग्राहकः स्मयात् । अर्कारिचारणप्रायस्तादृक्कोऽपीति सुज्जिना ।
सञ्जातयौनसम्बन्धबन्धः कमलियादिभिः । अथास्याचिगतोऽव्यर्थं सामर्थ्याद्रिल्हणोऽप्यभूत् । २०६५
अल्पेन हेतुनोद्भूतं द्वैतं तेषाञ्च तस्य च । खलपैशुनमेकैस्तत् प्रापाशु शतशाखतां ।
प्रकृत्योत्सिक्तमुत्सेकावहैः समुददीपिपत् । दुर्मन्त्रैर्व्वियदैस्थाय्ये साहदेविस्तमुल्हणः ।
आसमानां सहास्माभिः चमते समशीर्षिकां । कृतघ्नोऽयमिति स्वैरं मन्युं राज्यपि सोऽग्रहीत् ।
विस्रम्भं भूपतिस्तस्माद्रिल्हणं वाह्यमत्यवत् । मन्त्रस्वैरकथाद्येषु विस्रम्भेषु व्यवर्जयत् ।
स तु धूर्त्तत्वदुर्लक्ष्यतादृक्स्वामिविक्षतः । स्वेषां धैर्य्यं परेषान्तु सन्त्रासं माययातनोत् । २०७०
समग्रप्रक्रियाकाङ्क्षयसंस्तवः पचयोर्द्वयोः । तस्य तु प्रययौ सञ्जपालो दानेन मित्रतां ।
सन्नद्धयोः प्रविशतोरन्योन्यस्पर्द्धया तयोः । चणे चणे राजधानी ययौ सम्भ्रमलोलतां ।
सुज्जिः स भूपानाचेर्मु प्रतिपन्नान् युयुत्सया । महीमानोत्सवास्थाने संक्षोभमुदपादयत् ।
कृकाटिकान्यस्तहस्तो द्वाःस्थाने वेदितो हि सः । तं निर्भर्त्स्य शिलाचिरं क्रोधकृज्जाचरोऽकरोत् ।
लिखितैरिव तान् सर्व्वैः सोढुं रचणमीशितुः । मिथ्यातथ्यमिवोदीर्य्य संग्रहीद्भिः समर्थतां । २०७५
उपावेशयदभ्यर्णे भूपतिः परिसान्त्व्य तं । सत्यस्मिन्नास्ति नः किञ्चिदित्यन्तस्तु व्यचिन्तयत् ।
चक्रे मण्डवराज्यस्थैरथ प्रायो द्विजातिभिः । न सुज्जेः कम्पनेशत्वमिच्छामहेति वादिभिः ।

अन्विष्य विद्विषः शङ्कां मन्त्रवित् निम्नि रिल्हणः । सम्बद्धसैन्यमानिन्ये पद्मचन्द्रं तदप्रियं ।
शङ्के सज्जपालाच्च तस्माच्च वज्रसैनिकात् । सुज्जिरन्यानगणयन्न बुद्धास्य च तद्रिपुः ।
आस्कन्दभीत्या निर्गत्य हयारोहैः समं रहात् । व्यूढानीको निरुद्धाश्वो जनागाराय सोऽध्वनि । २०८०
भूपतिः प्रातिलोम्येन वर्त्तमानस्तदाभवत् । कोष्टेश्वरोऽपि सम्बद्धसुज्जिना बद्धसौहृदः ।
स्थितमप्रातिलोम्येन सोऽवधीन्मनुजेश्वरं । इति द्वेष्योऽपि नितरां द्वेष्यतां नृपतेरगात् ।
तथा स्थिते निशीथिन्यामाचख्युस्तस्य विद्विषः । द्रुधुखाहेतुतां राज्ञा स्वगुप्त्यै तेन या कृता ।
अतथ्ये तथ्यवद्दस्तु तथ्यन्यातथ्यवन्नृपः । यः पश्येन्मूढवत् सोऽर्थैस्त्यक्तोऽनर्थैः कदर्थ्यते ।
रत्नज्योतिर्ज्ञतवद्दधिया त्यज्यते दृष्टिपातः श्यावाचाणामितरविषयः स्वल्प सम्भाविते च ।
वस्त्वेकैकं यदिह न मृषा तन्मृषा यन्मृषा तत्तथ्येनेत्यं किमवनजनैर्दृश्यते तत्वशून्यैः । २०८५
राजा यत्प्रधनादन्यदजानन् दोषभेषजं । न्ययुंक्त तस्य तीक्ष्णत्वे सज्जपालं महोजसः ।
स कापुरुषवद्वीरः प्रहर्त्तुं छद्मना क्षमः । काङ्क्षिणाचिप्य तं हन्तुं तत्र तत्रैक्षत क्षणं ।
मायाप्रयोगानन्योन्यमुद्दिश्य स्पृशतोर्द्वयोः । क्षणे क्षणेऽभजद्राष्ट्रं चाञ्चल्यासविलोलतां ।
प्रत्यासन्नोदयं रात्रौ सुज्जौ जाग्रति पूर्ववत् । अव्यग्रयामिकग्रामं राजधामाप्यजायत ।
राज्ञाभिर्व्वासने रिल्हणस्य सुज्जेरभीप्सिते । पार्थिवोऽप्यनुमन्ताभूदनीशः प्रत्यवस्थितौ । २०९०
सनिर्व्विवासुरामच्च तत्खेदात् क्षुभिताः प्रजाः । सन्दश्र्य द्वारपतिना राज्ञो युक्त्या समर्थितः ।
संमन्त्र्य नृपतिं मैत्रीप्रार्थिना सुज्जिना समं । पीत्वा कोशं सज्जपालः प्राप्तो राज्ञोऽभ्यजिज्ञपत् ।
प्रेरणाद्दुल्हणादीनां स्वात्मिकाचैव वर्त्तते । राजन् सुज्जेरभिप्रायस्पर्द्धिनोऽन्यानमिच्छतः ।
निर्द्रोहस्योपकर्त्तुश्च सुते स्याद्यदि मे नृपः । निर्व्वास्य रिल्हणं चित्ररथं बद्ध्वा महाधनं ।
लोहरारक्षिभिर्नष्टानश्वान् कोशस्य भूपतेः । नयेयं संभृताश्चान्यां दुर्दृष्टमपि कोष्ठकं । २०९५
कार्य्योपरोधान्निर्व्बन्धः सम्बन्धेष्वेव नास्ति मे । दाक्षिण्यं स्वामिनः कृत्ये यस्य प्राणास्तृणोपमाः ।
मध्येऽस्य प्रतिराजादिनिर्जयस्वीकृतोद्यमे । युवा विश्रान्तचित्तोऽयं नृपश्रीभोगभाग्भवेत् ।
साहायकाय दारैश्चमुल्हणं रिल्हणाश्रये । कार्य्यजाते च मामीश्रमाकारयितुमिच्छति ।
मृते च मामुल्हणश्च त्वं चाहं चाविभेदिनः । मिलिता यत्र तत्रास्ति गण्यः कोऽनु नृपास्पदे ।
इहस्थानवदायादमेकमानीय कञ्चन । निदध्योऽस्य पदे राज्ञो नानुतिष्ठेदिदं यदि । २१००
गुणान् प्रसरणाचामादन्धायेव गिरा सृजन् । द्विजोपयुक्तभक्त्या राजाथ विनिश्वस्याब्रवीद्वचः ।
यथाह स तथैवैतत्स्याद्द्रोहो नासमर्थता । नैदाघोऽन्यमथैतस्मिन् सम्भाव्यमभिमानिनि ।
निष्प्रतिद्वन्द्वभावोऽस्य दुरुच्छेदो भवेदिति । इयमप्यन्यतस्तावदस्त्वपायधियः कथा ।
किन्तु द्रूये य आक्रोपप्रायस्यात्तथ्यतोऽपि वा । निर्द्रोहस्य वधो ध्यातो योऽस्यासौ कार्य्यएव तत् ।
यथोऽयमस्पमत्त्वानामयोऽस्माभिर्हि मन्त्रितः । नूनन्तेनोपलभ्येत तानावर्जयता धनैः । २१०५
पुण्यैरपरिहार्य्यैः खेजःशौर्य्या मादृशाममी । आनतामपि जायन्ते निर्गुणाभोगभागिनः ।

वालिशान् गृह्णतां प्रायश्चित्तमेतन्महीभुजां । तन्मौर्ख्यस्य फलं मूढैरेतैर्यदनुभूयते ।
दुर्गमो भूमिभृन्मार्गो विटैर्दृष्टपैरिव । क स नीतिज्ञविज्ञेयः क च ते खलबुद्धयः ।
तन्वाना श्वेतवमुख्यं रसनालौल्यशालिनः । परपिण्डापहर्त्तारः खलाः कौलेयका अपि ।
इत्थं खलोपतापेन प्रयुक्तं तद्भयात् पुनः । असंहार्य्यं कुकर्म्मेदं पश्चात्तापाय नोऽभवेत् । २११०
इत्युदीर्य्य नृपः सुज्जेः सञ्जोऽव्यापादसिद्धये । ममजागारयच्छय्याजागरं चाग्रहीत् स्वयं ।
विश्रम्भम्लानस्तुतेः शङ्का जिघांसुः सुज्जिरित्यपि । तथ्यं भृत्यवचोऽजानंस्तस्थौ हीःस्थेन पार्थिवः ।
गत्वा स्वयं गृहान् यौनसम्बन्धं कुरुतां युवां । इत्युक्त्वा रिल्हणेनाथ स सुज्जिं समयोजयत् ।
विश्वास्यापि तथा हन्तुं तं प्रसङ्गमनाप्नुवन् । उदतास्थद्दिवारात्रं तस्योपपर्य्यवंश लुठन् ।
सञ्जपाले गृहाद्दन्धुनाशदुःखिन्यनागते । आशङ्क्य साहसासिद्धिमधिकं पर्य्यतप्यत । २११५
निपत्य वीरशयने सुस्सलस्यापसत्क्रियां । भ्रातरो यस्य कल्याणराजाद्याव्यस्मरन् युधि ।
सेनानीः कुलराजः स ख्यातो व्यायामविद्यया । प्राणैरानृण्यमिच्छंस्तमपृच्छच्छोककारणं ।
स संस्थापयितुं हन्तुं वाप्यशक्यं न्यवेदयत् । तस्याप्रतिमसाधेयं कम्पनाधीश्वराह्वयं ।
कियदेतन्निजप्राणमात्रं लभ्यं महीभुजां । इत्याभाष्य स जग्राह साहसाध्यवसायतां ।
दिनद्वयमनायातो गृहेभ्यः कम्पनापतिः । न प्रातिभाव्यमभजत्तस्य मृत्योः श्रियोऽथवा । २१२०
विश्रम्भभृत्यः शृङ्गारनामा चाप्यब्रवीत् प्रभोः । तं दृष्टवान्मृतीयेऽह्नि शयनेऽङ्गणे स्थितं ।
शोभोऽपि योगिनो भर्त्तुर्नित्यं सततसेवकः । कर्त्तुं साहससाचिव्यं विदा तेन न पार्य्यते ।

करे पिनाकीमकराङ्कशत्रोः शोभाविशेषाय सदानुषक्तः ।
पुराहवे कार्मुककर्म्म तस्य तत्कालमात्रेन तु मन्दरेण ।

ताम्बूलहारकव्याजात्ततो राजा व्यसर्जयत् । कुलराजस्तमव्याजधैर्य्यासंलक्ष्यविक्रियं ।
ध्रुवं मृत्युः पुनर्नाहमागन्ता तत्ततोऽस्य कः । आरब्धेति स निन्ये न ताम्बूलं स्वर्णभाजने । २१२५
व्यसनप्रशमं राज्ञः स्वदेहत्यागतोऽन्वगाः । एवं कर्त्तुं यतन्तेऽन्ये निर्व्यूढा स्खलिताः पुनः ।
सगणोऽवगणो वास्तु निहतो नियतं मया । जागर्त्त्यतः परं देवइत्युदीर्य्य विनिर्ययौ ।
गतस्य साहससिद्ध्यै शक्यं शक्तुं पलायनं । इति चिन्तयतस्तस्य मन आसीदिष्टसङ्कुलं ।
व्रजन् स्वामिहितं कृत्वा पुनः पश्चान्निनाय सः । शस्त्रिणौ द्वौ मिषाच्छस्त्रैरा बन्धस्थाने परान्मृषन् ।
स्वयं गृहीत्वा ताम्बूलं राज्ञा प्रहित इत्यथ । द्वास्थेनावेदितः सुज्जेः पार्श्वं हृद्ध्यानुगोऽविशत् । २१३०
ददर्श चाव चैत्तस्य मितैः परिजनैर्युतं । यूथनाथमिवात्यल्पैर्द्विपैररहितान्तिकं ।
गृहीतवन्दितस्वामिताम्बूलस्तं मितं स तं । दृष्ट्वा हत्यादि नृपतेः सत्यत्य व्यसृजत् क्षणात् ।
जनप्रवेशाशङ्की स त्वरमाणस्तमब्रवीत् । हतागाः कोऽपि कैवर्त्तः शस्त्रभृत्स्वमाश्रितः ।
तस्याक्षेपपरान् भृत्यान् स्वान्निवार्य्याधुना तव । सम्मान्या वयमित्यपेऽलक्षयन् प्रकृतिच्युतं ।
सोऽन्तिकामिव तां वाचं सदर्पादवधीरयन् । तस्य कृच्छ्रात्परं नाहं कुर्य्यामित्यब्रवीदवचः । २१३५

सरोषादिव निर्गच्छन् मान्योऽसाविति वादिभिः । तं सान्त्वयित्वा तद्भृत्यैरङ्गा व्यावर्त्तितः पुनः ।
तेनावादि ततः कर्त्तुं विज्ञप्तिं वस्तुनोऽमुतः । सज्जयोरादिशद्द्वारप्रवेशं भृत्ययोर्न्नृप ।
अवशेनैव तेनाथ वीक्ष्य तौ सम्प्रवेशितौ । सहायलाभाद्बुभुक्षुः प्रजिहीर्षुरवर्त्तत ।
यातास्य कुर्य्या प्रातर्व्वा विधेयमिति ताम्वदन् । दत्तपृष्ठोविनिद्रासुप्तकल्पे सुज्जिर्जहौ वपुः ।
गत्वाथ किञ्चिद्व्यावृत्तो निष्कृष्टच्छुरिको जवात् । प्राहरत्कुलराजोऽस्य वामे पार्श्वे कृतत्वरः । २१४०
तस्य धिक्कुर्व्वतोद्रोहमधावन् च्छुरिकां प्रति । यावत्पाणिः प्रहरणं तावत् सर्व्वेऽपि ते व्यधुः ।
विमर्षः पश्यतां यावदाशङ्के तत्र नोद्ययौ । स तावदेव सुचिरापेतश्वासइवाभवत् ।
भयत्यक्ताभिमानेषु विद्रुतेष्वनुजीविषु । चकर्ष शस्त्रं तत्रैकः पिञ्छदेवः परं तदा ।
प्रहरंस्तैस्त्रिभिस्तुल्यप्रतिप्रहृतिभिः क्षतः । भ्राम्यन् सुताद्धकस्मात् स मण्डपाजिरवास्थत ।
स्थितान्दत्तार्ग्गले धाम्नि रुद्धद्वारतमोरयः । जिघांसवः सुज्जिभृत्यास्ततस्तान् पर्य्यवारयन् । २१४५
तमोरिप्रतिकुर्व्वाणाभज्यमानेऽरिभिर्व्यधुः । ते द्वारे तूलशय्यान्तां प्रोत्सार्य्य शवमुद्धृतं ।
स्वेषुषुशूलपरशुच्छुरिकाश्माभिवर्षिणः । तान् स सम्भ्रमयन् मार्ग्गैरनेकैस्ते विविक्षवः ।
नैराश्यहेतोर्व्विशतां तेषां सङ्कटवर्त्तिभिः । पृष्ठाच्छित्वा शिरः सुज्जेरङ्गनेऽक्षिप्यताथ तैः ।
अश्रुनिःसरणाभीक्ष्णशुक्लेक्षणपुटश्रुतिः । उत्तरोष्ठकचच्छन्नसन्नघ्राणपुटद्वयं ।
अक्ष्णोर्व्विभ्रम्यमाणस्य लोकस्य प्रतिविम्बकैः । सम्भाव्यमानसंस्पन्दस्तोकप्रव्यक्ततारकं । २१५०
स्वपुटस्याक्रमच्छेदाङ्गलमांसस्य सन्धिषु । हरिद्रार्द्रैरिवाश्यानमेदोग्रन्थिभिरुल्वणं ।
धूलिध्वस्तकचश्मश्रु तदेतदिति निश्चयं । परं भालतलस्थेन ददत्कुङ्कुमविन्दुना ।
तद्वीक्ष्य तिर्य्यक्पतनव्यक्तसन्ध्यन्तरद्विजं । उच्चलत्तुमुलाक्रन्दा भृत्याः क्वापि विदद्रुवुः ।
कुलकं ॥ तीक्ष्णाम् प्रयुज्य क्ष्मापस्तु तिष्ठन् व्याकुलधीस्तदा । वहिर्वीक्ष्य जनक्षोभं साहसं निश्चिकाय तं ।
सुज्जौ हते क्षते वापि कार्य्यमेतदिति श्रुतं । सन्नद्धसैन्यस्यादिक्षत तन्मन्दिरवेष्टनं । २१५५
मिथ्यैव सुज्जिनिस्तीर्ण इति श्रुतवता जनात् । स्वयमग्राहि भूपेन ततः समरसम्भ्रमः ।
निस्संशयं हतं ज्ञात्वा सुज्जिं राजोपजीविनः । तत्र स्थितं शिवरथं सर्व्वदेश्यमबन्धयन् ।
छिन्नात्मजन्मनः सुज्जिभ्रातृव्यालस्य कौशलं । कलशस्याद्य निर्व्वर्ण्य वाणीयं पुण्यभागिनो ।
आक्षिप्यमाणैर्भिक्षाचैरन्ते वीरोचितं कृतं । तेन लवंशयस्थेन सदाचारान्न विच्युतं ।
राजोकस्यैव तां वार्त्तां श्रुत्वा सद्यपलायितः । हतस्य स्वामिनोऽभ्यर्णं जिहासुर्जीवितं ययौ । २१६०
द्वारं पदप्रहृतिभिर्भञ्जन्तं राजसैनिकाः । अपसार्य्य कथञ्चित्तं तीक्ष्णाः क्षणाद्दरक्षिषुः ।
प्रविष्टेऽस्मिन्न निर्व्यूढपीडिते मण्डपान्तरं । सद्यः प्राणनृपाभ्यर्णं कुलराजादयोऽययुः ।
हठप्रविष्टो हतवान् स तत्रैकं महाभटं । शरैरेव हतो दूरात् कथञ्चित् परिपन्थिभिः ।
आयातं क्षुभिते देशे सज्जपालं महीपतिः । रिल्हणं चोल्हणं हन्तुं प्राहिणोदिक्षितत्वरः ।
यातो मार्गात् पलाय्यायं परिशङ्क्येति रिल्हणः । क्षिप्तिकातटपर्य्यन्तमटित्वा यावदाययौ । २१६५

पूर्व्वायातः सज्जपालो गृहद्वाराद्विनिर्यतः । उल्हणस्य पथोरुन्धन् सुवङ्गन् प्रहरन्रणे ।
तावदेकस्य खड्गेन निकृत्ते दोष्णि दक्षिणे । त्वङ्मात्रशेषे छिन्नास्थिस्नायुग्रन्थिरजायत ।
अगण्यप्रायतां प्राप्ते वंशे यत्कोशलादयौ । दिगन्तरेषु स्वस्मिंश्च देशे प्राप प्रथां पुनः ।
फलकाले समासन्ने शौर्य्यप्रतिभुवाभजत् । स तेन दोष्णा वैकल्यं धिगिच्छां विधुरां विधेः ।
स प्राग्वदुदयावाप्तौ भवेदविकलो यदि । फलेन तस्य जानीयादिच्छां लोकोऽयमद्भुतां । २१७०

पीतामृतस्य क्षतविग्रहत्वं न प्राभविष्यद्यदि नाम राहोः ।
अज्ञास्यदिच्छान्तदमुष्य लोकः सामर्थ्यभाजः सुचिरप्ररूढां ।

दृष्टः शोलाभिधो वृद्धः पितृव्यः षड्दैर्विना । सस्पृहं निहतः साधु सम्यग्जातव्रणार्त्तिना ।
तस्यार्त्त्या विशता वेश्म मज्जलाख्योऽपगोहतः । मान्योऽनुगो भटौ द्वौ च यामिकस्य जनङ्गमः ।
बालं तनयमालोक्य निषण्णस्याङ्गनस्थितेः । तस्य निर्गच्छतो गेहे रिल्हणोऽग्निमदापयत् ।
आनीयमानो धूमान्धो बद्धा मुख्यैः ससैनिकैः । गृहद्वारे हतः कैश्चित् प्राकृतैर्व्रणविह्वलः । २१७५
तस्य प्रधानप्रकृतित्वयहेतोर्महीपतिः । मुण्डमप्यवलोक्यासीदशान्तक्रोधविक्रियः ।
व्यापाद्यमानः साकोपं भूपतिप्रेरितैर्भटैः । उच्चावचाः सुज्जिभृत्याः सत्यं सत्योपितं व्यधुः ।
अनुजो लवकः सुज्जेर्बद्धा नीतः स विक्रियां । नृपं वोच्याद्यैः कैश्चिद्राजधान्यङ्गने हतः ।
भ्राता पितृव्यजस्तस्य सङ्कटाख्यो नृपाङ्गने । खटखटद्व प्राणानौचित्येनामुचत् कृती ।
प्रविष्टः शरणं वाणवंश्यः पापैः प्रमापितः । उन्मत्तो मुम्मुनिस्तस्य भ्राता कैश्चित् स्वमन्दिरे । २१८०
सुज्जिश्यालस्तु शृङ्गारवृत्त्या भङ्गुरया हतः । महाकुलीनो विचरन्नौचित्येन च चिचियः ।
मल्लिकाख्यः प्रतीहारो भणितः शनकैर्हतः । अन्येऽपि संश्रिताः सुज्जेस्तत्र तत्र प्रमिम्यिरे ।
जात्या वाजिजवप्राप्तप्राणाः कोष्टेश्वरान्तिकं । आसाद्य वीरपालाद्या द्विजा मृत्युभयं जहुः ।
व्रजन् शन्दि यो दृष्टात्यानद्रुतुरङ्गमः । प्रपेदे सङ्कटभ्राता बन्धनं सुभटामठे ।
सूनुश्च सज्जलः सुज्जेः श्वेतिकस्याग्रजात्मजः । उल्हणस्य तनूजश्च कारागारं प्रपेदिरे । २१८५
इत्थं राजन्यमात्ये च प्राप्ते पिशुनवश्यतां । नवमेऽब्दे शुचेः शुक्लपञ्चम्यां विप्लवोऽभवत् ।
कार्य्ये क्वापि विपर्य्यस्तसत्त्वं संस्तुत्य मन्त्रिणं । तमथापि नृपस्तादृक् भृत्योपेतोऽनुतप्यते ।
वेतालोत्थापनाच्छ्वभ्रलङ्घनाद्विषचर्व्वणात् । व्यालाश्लेषाच्च विषमं सत्यं राजोपसेवनं ।
अनात्मायत्तनिस्तीर्णगुणानां चक्रवर्त्तिनां । शकटानामिवायस्तो विश्वस्तः कोऽनुभज्यते ।
अयुक्तं नृपतिं सुज्जिवधं मेने प्रजाः पुनः । युक्तं ज्ञात्वा तमुद्रिक्तशक्तितां विविदुः प्रजाः । २१९०
भेजे राजा सज्जपालं कम्पनाधिपतिं ददत् । कुलराजे च नगराधीकारित्वं समार्पयत् ।
त्यक्ता मल्लार्जुनो धन्योदयौ नगरमागतौ । प्राग्वत् पुनर्जजृम्भाते प्रियौ विश्वम्भराभुजः ।
इतराश्रयविच्छेदा वीतपारिप्लवस्थितिः । श्रीः सर्व्वाकारमकरोत् स्थिरं चित्ररथे पदं ।
अद्भुतैश्वर्य्यधुर्य्योऽपि राष्ट्रं दण्डेन पीडयन् । शमं नेतुमशक्योऽभूत्स भूपस्याप्यनङ्कुशः ।

गन्धर्व्वानाभिधे ग्रामे टिक्कं हत्वा व्यसर्जयत्। पारं विशोकं कोट्टेशस्त्विरः पार्थिवान्तिकं। २१९५
निसर्गद्वेषिणा प्राप्तप्रतापे नितरां नृपे। तदानीं तप्यमानेन दूतेनाप्यायितोऽसहत्।
कोष्ठेश्वरेण रभसादल्पैः परिजनैर्युतः। निशि लोठनदेवः स हाडिग्रामं ततोऽविशत्।
सहाकथितकन्योऽन्यैः संरम्भे राशि सर्व्वतः। बहुसम्भिर्लवन्यस्तं विससर्ज यथागतं।
उत्पलादिवशादात्तं राज्यं सरभसं भजन्। निर्व्यूढिशून्यदार्व्योऽगान्मूढो लोकस्य हास्यतां।
तीक्ष्णप्रयुक्तिभिः सैन्यभेदैरन्यैश्च कोष्ठकं। उपायैर्नृपतिस्तैस्तैस्ततो हन्तुं व्यचिन्तयत्। २२००
प्रतिद्वन्द्वीव तीक्ष्णानां पाटिताक्षः क्षमाभुजां। न संप्रसादयन् क्रुद्धः प्रतियोद्धुं त्वचिन्तयत्।
स्वैः स्वैः प्रदेशैरादिश्य प्रवेष्टुं पृतनापतीन्। स्वयमुच्चावचैः सैन्यैरवष्कन्द तां पुनः।
स भूपं रभसायातं ज्ञात्वाल्पपृतनं बली। प्राप्तस्खलयितुं तस्थौ प्रतापैः परिहारितः।
लग्ने रणे चित्ररथः पृथुसैन्योऽपि दैवतः। तस्य सैन्यैकदेशेन भिन्ने जयविपर्ययं।
अकुनामकुल्लाङ्कारकल्पेन किल तेन सः। ततः प्रभृत्यभूद्धृष्यदवष्टम्भो दिने दिने। २२०५
रिल्हणादीन् योधयित्वा व्यूढव्यस्ताखिलानुगः। लवन्योन्यपतत् सायं कम्पनाधिपतेर्बली।
ऊनैः शतादपि भटैर्युतोविगतसैनिकः। सह तत्सैन्यरोषं स गजश्चोभमिवाचलः।
किं वाच्यः स नरव्याघ्रः प्रवृद्धिं याति सङ्गरे। निजवर्म्मतनुत्रादि यस्य मानि न वर्म्माणि।
मन्दीकृतारिसंरम्भमवष्टम्भेन तादृशा। तन्निल्लकादयः प्रापुर्लवन्याः सैन्यशालिनः।
तैः सजातीयदाक्षिण्यात्तटस्थैरपि सङ्कटे। तस्यैवदुपयोगोऽभूत् स्ववीर्य्योपात्तविद्विषः। २२१०
काले सन्नहनं रात्रिं जाग्रतः सामन्तावलैः। समये ग्रहणात्त्यागतत्तद्युक्तिविकल्पनं।
लब्धभृत्या परित्यागा जिगीषोरीदृशैर्गुणैः। चलेयुररयोऽप्यस्य का धैर्य्याक्रमणे स्तुतिः।
अविश्वसन् भिन्नभृत्यस्तादृक् संरम्भपीडितः। पलायनोन्मुखः शैलात् कोष्ठकोऽथ व्यगाहत।
मार्गेष्वकालप्रालेयपातरुद्धेषु वाजिनां। गन्तुं तस्याक्षमं जग्मुः पृष्ठलग्नाविरोधिनः।
अवमानोपतप्तोऽथ परिमेयपरिच्छदः। स ययौ जाह्नवीं स्नातुं राज्ञा राष्ट्रादपाकृतः। २२१५
सोमपालोऽथ भूपालनाम्ना पुत्रेण खेदितः। दीर्घवैराच्च दुःखार्त्तः शरणं नृपतिं ययौ।
पुत्रौ दत्तवतो नीविं नागपालस्य तस्य च। अभयं प्रतिशुश्राव भूभृदाश्रितवत्सलः।
दृष्टद्राज्यस्य जिह्मोऽयं दौःस्थ्यहेतुरभूदिति। स तदापरि नाम्नार्थोद्व्याजौदार्यधुर्य्यधीः।
साहायकाय स्वं सैन्यं दत्तवांस्तं महीपतिः। भूयः प्रतिष्ठामनयद्दर्पप्रशममाहितां।
स्नात्वा द्युनद्यां व्यावृत्तः कोष्ठकोऽथान्तरे पुनः। मल्लार्जुनं गृहीत्वाभूत् देशाज्योत्थापनोद्यतः। २२२०
अर्कोपरागे प्राप्तः स कुरुक्षेत्रमवाप तं। लवन्यं कार्य्यतस्त्यक्तपूर्व्ववैरो नृपात्मजः।
आहूतो लोठनः पूर्व्वमायातस्तेन डामरे। निशम्य तं सङ्घटितुं खिन्नः प्रायाद्यथागतं।
विजयेशायतः पीतकोशोऽपि नृपतिद्विषः। प्रविविक्षुरुपेक्षितः सोमपालो दुराशयः।
आराधनाय भूभर्त्तुस्तत्पुत्तः कोष्ठकं पुनः। प्राप्तं स्वविषयैस्तैस्तैष्ठक्कुरैर्निरलुण्ठयन्।

अत्रान्तरे चित्ररथं संहृष्टायासदुर्ग्रहं । अनिष्क्रान्तोऽवन्तिपुरे प्रायं चक्रुर्द्विजातयः । ११२५
उपेक्ष्यमाणास्ते दर्पात्तेनागणितभूभुजा । ज्वलिते ज्वलने देहान् बहवो जुहुवुः शुचा ।
चरके धर्म्मधेनूनामुत्सर्गेऽपि तदाश्रितैः । वह्निं गोपालकोऽप्येकः कारुण्यप्रवणोऽविशत् ।
भट्टस्वाङ्कटवंशस्य पृथ्वीराजस्य नन्दनः । युवा विजयराजाख्यः सानुजोगाढदुर्गतः ।
देशान्तरं जिगमिषुर्व्विषमं वीक्ष्य तत्र तत् । व्याजहारानुजन्मानं कारुण्याश्रुकणान् किरन् ।
उपेक्ष्यमाणा दाक्षिण्यस्तम्भितेन महीभुजा । विप्राः सचिवपाशेन विवशाः पश्य नाशिताः । ११३०
छन्दानुवृत्त्यामात्यानां यत्र क्ष्माभृदुपेक्षते । कस्तत्रान्यस्तु दीनानामापच्छमयिता विशां ।
यद्वा न्यायोऽयमन्योन्यस्पर्द्धया यदुपप्लुतं । शमिता दण्डयेत्क्षाम्यं शमितारं परोऽथवा ।
विशृङ्खलं नयेत्क्षाम्यं दार्ढ्यसारं विघट्टनैः । कदाचिल्लोहमश्मानमश्मा लोहं कदाचन ।
दोषेणैकेन न द्वेष्यो राजा सर्व्वगुणोज्ज्वलः । बधाच्चित्ररथस्यान्यद्विधेयं नावभाति मे ।
धर्म्मः सर्व्वापकार्य्येकक्षुद्रक्षपणमुच्यते । जघानाजगरं सोऽपि जन्तूनामन्तकं जिनः । ११३५
दुर्वृत्तदमनेऽस्माभिः कृते तेजस्विनोजनात् । भूयोऽप्यधिकृतो विभ्यन्न कश्चित् पीडयेत् प्रजाः ।
कायस्यास्य परित्यागादमन्ता जन्तवो यदि । सुखिनः स्युरसौ भ्रातर्व्वणिज्या ज्यायसी न किं ।
सशुश्रुवांसं स तथेत्यथ कङ्कोशपोषिनं । विधायानुससारैत्य हन्तुं चित्ररथं तदा ।
कालेऽस्मिन् धर्म्मदौर्ब्बल्यकलुषेऽपि कलेः किल । प्रभावो भूमिदेवानां द्योतते ऽद्याप्यभङ्गुरः ।
ब्राह्मणैरपरिक्षीणपूर्णपुण्यो न कश्चन । धैर्य्यमारभते भ्रष्टदुष्टोत्पाटनपाटवैः । ११४०
द्विजानुद्वेजयन् सुञ्जिर्द्विजादेवासदद्बधं । विप्रेणैव हतश्चित्ररथोऽविप्रावमानकृत् ।
द्विजोत्थापितया क्रान्तचित्तोऽसौ कृत्यया ध्रुवं । दध्यौ तस्य बधं प्राणान्विना कारणमुत्सृजन् ।
कृशानुसादकुर्वत विप्रा देहान् यदेव ते । तद्द्वेषस्तस्य सर्गे तदैवासीत् हतासुगः ।
अनासादयतश्चित्ररथं पृथुबलान्वितं । गणराजमभूद्भर्तुर्द्विरात्रं प्रजागरः ।
स क्ष्मापर्य्यन्तसामन्तसीमन्तितपथो व्रजन् । अभूद्दृश्यो दृश्यस्य जनसम्बाधमध्यगः । ११४५
तेन सामर्थ्यनैस्त्र्यनिष्ठुरेणैकदा जवात् । सोऽनुसृत्ये व्यतिक्रान्तनिःश्रेणिर्नृपवेश्मनि ।
विलुण्ठितस्य स्तम्भाग्रे कृपाण्यामूर्द्ध्वयास्य सः । सामन्तमध्यगस्यैव प्राहरत्तीव्रसाहसः ।
मुमूर्षोरिव तत्रास्य वैक्लव्यगलितस्मृतेः । उद्भ्रान्तचक्षुषो वर्ष्मच्यवनं समपद्यत ।
प्रमापितोऽयं राज्ञेति ज्ञात्वा सत्त्ववहिष्कृताः । वित्रस्तास्तं तथाभूतमत्यजन्ननुजीविनः ।
तं वीतजीवितं ज्ञात्वा न तीक्ष्णं प्राहरत् पुनः । प्राप्तं द्वितीयनिःश्रेण्या भ्रातरं निषिषेध च । ११५०
न पलायिष्ट निर्व्विघ्नसर्व्वमार्गोऽपि घातितः । राज्ञा चित्ररथः शम्बदित्युच्चैः प्रोच्चकार सः ।
प्रनष्टं भ्रष्टभासादिराज्यभोगपुरःसरैः । सर्व्वैः कापुरुषैस्त्रासादथ चित्ररथानुगैः ।
ज्यायांस्तोठरथस्तस्य भ्राता भीत्या पलायितः । शरणं नर्म्मकौनेकां ययौ वक्त्रार्पितस्तनः ।
तादृक् प्रवेशितश्चित्ररथोऽभ्यर्णे महीभुजा । मा भैषः प्राहरत्कस्त्वामित्युक्त्वाश्वासितः स्वरं ।

नृपाज्ञया को निहन्ता हारेश्वस्येति वादिभिः। तीक्ष्णोऽभिषिष्टोभटैः सोऽहमित्युक्त्वा स्वं न्यदर्शयत्। २२५५
धीरो योधान् स्वधैर्य्यानुशासनश्लाघ्यविक्रमः। त्रिंशद्विंशान् स हत्वाथ प्रहत्य चरणे हतः।
परित्राणाय साधूनां विनाशाय च दुष्कृतां। धर्मसंस्थापनार्थाय सम्भवामि युगे युगे।
लब्धा लिखिततत्त्यकारणा पत्रिका करात्। तस्यान्तःसमयाशंसा श्लोकेनानेन पावनी।
अहच्युन्मादहीनत्वयुतश्चित्ररथस्ततः। रूढव्रणोऽपि लालाटसन्धिवेधादजायत।
स मासान् पञ्चषान् याप्य निराप्यायकृशाकृतिः। विनिष्टमांसोऽवर्त्तिष्ट शयनीयतलेऽन्वहं। २२६०
मल्लार्जुनं पुरस्कृत्य कोष्टेश्वरोऽविम्बोन्मुखः। तन्मध्ये तरुसंबाधं गिरिदुर्गमगाहत।
मा मामभ्रमयं भ्राम्यन् स्वयूथ्यसनोद्यमात्। अविस्मृतापदं लोकं पुनर्दैराज्यशङ्किनं।
अकाण्डाम्बुदजालेन पीडिताङ्कुरवाभजत्। परचक्रोदयेनाशु लोकः शिथिलशक्तितां।
तद्दुर्गं तदलध्वकोषवाप्यथ सर्व्वतः। व्याप्तोपान्तवनग्रामैः सचिवैः स न्यरोधयत्।
सज्जपाले यवनकैः स्कन्धावारं निवध्नति। अनुचक्रुर्द्दिषोऽस्पन्दान्निवातस्तिमितांस्तरून्। २२६५
धन्यकोशिलकाकोष्टपर्य्यस्तकटकोऽभवत्। गन्धद्वेषी गजरिपुः सिन्धुरस्येव वैरिणः।
आवासितबलो राज्ञा गोवासे रिल्हणोऽकरोत्। अटवीं पर्य्यटन् यूकानिवार्कोत्कण्ठितानरीन्।
तीव्रशकैर्नृपस्यैवमारम्भैः स्तम्भितोऽभजत्। कोष्टेश्वरस्त्रिचतुरान् मासान् सञ्चारशून्यतां।
क्लिष्टो देशान्तरे राज्ञामन्तरैर्निकृतो नृपैः। भिन्नस्ववर्गो भूभर्त्तृभृत्यव्यर्थीकृतोद्यमः।
वालिशत्वादकुशलोन्नातुं शक्तिं महीभुजां। सविस्मृतागः सन्धातुमैच्छच्छिन्नपदो नृपं। २२७०
उज्जिहीर्षोः प्रभोर्मन्युं वाच्यं तद्वचनादिदम्। भक्तिकायः सज्जपालस्तस्यैकां तामपूरयत्।
तथार्त्तोऽपि रिपुं राज्ञः सन्धित्सुर्न्यग्रहीन्न सः। पृथ्वीहरप्रभृतीनां निर्द्रोहत्वं न कौतुकं।
तेन प्रहिण्वता राजवैरिणं स्वकराङ्गुलिं। च्छिन्दतापि महीभर्त्तुर्मन्युच्छेत्तुं न पारितः।
कण्ठबद्धशिरःशाटः शीर्णोपानहं वहन्। भुक्तवेलोऽपि भूपालं कर्त्तुं नाशकदक्रुधं।
अस्त्रीकृतदिनभूभृत्साक्त्वनः स हि राजवत्। तत्तत्प्रत्युक्तभूपाज्ञः सर्व्वं गर्व्वान् व्यवाहरत्। २२७५
शुश्राव बद्धं तन्मध्ये यातं मल्लार्ज्जुनं नृपः। अनुबध्नाति भव्यानामुदयोऽभ्युदयान्तरं।
नियमानः स हि स्कन्धमधिरोप्यानुजीविभिः। अजाङ्किकतया मार्गोल्लङ्घनाय स निःसहः।
ततस्तोभयस्थानान्निस्तीर्णो लोहराचितं। सावर्णिकाभिधं ग्रामं प्राप्तो विन्यस्तरक्षिणा।
निरुद्धोऽजग्गिकाख्येन ठक्कुरेण महीपतिः। प्रियंकरं तस्य भृत्यं शुश्रावान्तिकमागतं।
दृढप्रायोऽरिणा दुर्गान्निर्गतः स कथञ्चन। बद्धस्तेन पुनः शक्तिः कस्य भावार्थलङ्घने। २२८०

गङ्गाद्युमार्गलुठिता जठरात्कथञ्चिदेकस्य संहतवतो निपतता महर्षेः।
यस्तापरेण कृतसागरगर्त्तपूर्त्तिः शक्तो न कोऽपि भवितव्यविलङ्घनायां।

जग्गिके बद्धसंप्राप्तिपर्य्यन्तोपान्तरक्षिणि। राज्ञोदयद्वारपतिः प्रायोजि प्राज्ञबुद्धिना।
तं विना धैर्य्यगाम्भीर्य्यशौर्य्यधुर्य्यं महाधियं। चङ्कटेन स्ववष्टम्भो राज्ञामात्यनिमन्त्रिणां।

स ह्यतिक्रम्य सावाधान् मार्गानुभयवेतनैः। तमोरिस्थितमट्टाश्चोष्णं क्ष्मापतिविद्विषं।
निष्ठाशून्येन धैर्य्येण शौर्य्यसम्भावनावहः। स्तुवन् स तं बहिःप्राप्तं नत्तदृक्षाब्रवीत् पुनः। २९८५
सर्व्वतो ज्यायसीं भर्त्तृभक्तिं यो बहु मन्यते। भवान्सुयोमतिमतामाद्यनोलोडनान्तरैः।
कृता रत्नामणिसमं सहायं त्वादृशं विना। हानिर्मे दुर्नरेन्द्रस्य वाल्ये राज्ये बहुच्छलैः।
दुष्प्रेक्ष्याणां भवत्येव नियमाद्राजभास्वतां। भाग्यास्तहेमस्तदिने जननेत्रविलङ्घता।
शोभते रुधिराताम्रमण्डलाग्रो यथोदये। तथा योऽस्तमये भास्वानिव वन्द्यः स भूपतिः।
धन्योऽवतारो यस्यासीत् कुप्यत्पौराङ्गनाजनः। उदयेऽस्तमयेऽप्युग्रे रागव्यापृतगोगणः। २९९०
पदे प्रयोगं लब्धार्थं किञ्चित् कृत्वा कुलीनवत्। अहं कविरिव प्रौढः प्राप्तो निर्व्यूढिमूढतां।
सत्यंकारोऽधुना भूत्वा विधत्तां स्वान्तसुस्थितिं। माध्यस्थानभिवृत्तेन वरेणैकेन सोऽभवान्।
इत्युक्त्वा प्रत्ययोत्पत्त्यै संस्प्रष्टुं स्फाटिकं ततः। सपीठं पुरतोद्वारपतेर्लिङ्गमुपानयत्।
अच्छलाहवसंमर्दप्रासशूलेषुवर्षिणः। योधान् योद्धुं वरं सायं मानवान्ननमिच्छति।
इति सम्भाव्य संस्पृष्टशिवलिङ्गः स वाञ्छितं। वरं तस्यारगीचक्रे स च भूयोजगाद तं। २९९५
आकृष्टदृष्टिरहतः स्वामिभुजोऽस्तिकमचलः। यथेदृगेव प्राप्नोषि तथा त्वामर्थयेऽधुना।
कार्पण्यापहृतं तस्य वचः श्रुत्वा त्रपाजडाः। सर्व्वेऽप्युर्व्वीभुजास्तस्युर्दृष्ट्या ऽर्द्राः पक्षता इव।
अन्त्येक्षणस्ततो भिक्षोः स्मर्य्यमाणः सचेतसां। विकाशहेतुतां प्राप स्वस्थस्य मनसः पुनः।
मनुष्यवाह्यमारूढः पत्रं निन्ये स निस्त्रपः। तेन स्वपालितांल्लोकानपि पश्यन्नविक्रियं।
अहीनाहारनिद्रादिवैवश्यः पशुवत्पथि। कृष्यमाणः स केनापि न विकल्पेन पस्पृशे। ३०००
पश्यन्नानीयमानस्तं गोसृभिस्तादृशं जनाः। दयार्द्रहृदयस्वामीन्नाभ्यनन्दत भूभुजं।
उवाच चानुकम्प्योऽस्मिञ्जन्मज्येष्ठस्य भूपतेः। नैतावद्भाति नैर्घृण्यमनुजे पितृवर्जिते।
आसेचनकमेतस्य मेचकाब्जदृशो वपुः। क्लेशगर्त्तमनिस्त्रिंशचेताः कः कर्त्तुमर्हति।
पूर्व्वापरानुसन्धानवन्ध्यस्तं दृष्टवांस्तदा। विस्मृतागा नृपं तत्तदित्युपालभताध्वनि।
गनणा काथ वा बालवान्निशादो विधीयते। न चित्तवृत्तेरैकाग्र्यं महतामपि सर्व्वदा। ३००५
भ्रातॄणां द्यूतपाञ्चालीकेशकृष्यादि शृण्वतां। पाण्डवेभ्योऽधिकः क्रोधो धार्त्तराष्ट्रेषु जायते।
कुरूणां चतजापाने भीमोरोर्मूर्द्धताडने। श्रुते पाण्डवविद्वेषस्तेषामेव च दृश्यते।
परावरज्ञः कार्य्याणां न कश्चिन्मध्यमं विना। ततस्तेऽनुभवाभेदस्तत्र तत्र कथं भवेत्।
स पौरान्वादयन्नङ्के च्छिन्नाङ्गुल्यङ्कमुद्वहन्। युग्याधिरूढो मृत्पात्रं सायं नगरमासदत्।
न्यधत्ताश्वयुजा शुक्लपक्षदश्यां महीपतिः। एकादशेऽब्दे तं रक्षितुं नवमठान्तरे। ३०१०
त्यक्ताहारस्य च निशाः पञ्चषास्तस्य ताम्यतः। पार्श्वं जगाम कारुण्याच्चरणस्पर्शनार्थिनः।
अवादीदर्थितं तस्मै प्रतिशुश्रुवुषे भयं। द्रोहावेकान्ततो बध्वा सचिवरथकोष्टकौ।
राजा निर्जग्मुषः स्वोर्व्यां कोष्टकस्याथ बन्धनं। विधित्सुः पञ्चषानाप्तान्विक्षणादीनचूचुदत्।

सर्व्वेषु गलितौजस्सु स्वयं राज्युग्रमस्पृशि । अथ तं रिल्हणो दोर्भ्यां स्वयं याहद्वायहीत् ।
हतशस्त्रः स बलिनस्तस्य दोष्पञ्जरान्तरे । तस्थावचेष्टो निद्रान्धो भूतेनैवालसीकृतः ॥ १११५

भ्रातृव्यो भिःक्षराजाख्यः कुलराजस्य कोपनः । भूभृद्वस्था कृपाण्यस्य निर्बिभेद स्फाटिकों
परश्वधेन मूर्ध्नि तं पृथ्वीपालस्य ताडयन् । राजवीजी स च क्रोधाद्यविध्यत महीभुजा ।
स्फाटिकास्थिसञ्जातमर्मवेधोपचेष्टितः । विवेष्टमानोऽवर्त्तिष्ट चितौ स रुधिरोक्षितः ।
महाबलैः कमलियप्रमुखैस्तस्य सोदरः । चतुष्कः पातितोऽप्युर्व्यां गण्डशैल इव द्विपैः ।
विलोक्य वैकल्यहतौ बद्धौ तौ स्वामिनौ तथा । हृष्टासिधेनुरुत्तस्थौ द्विजन्मा मल्लकाभिधः ॥ ११२०

उच्चावचेषु प्रहरन् स भूपालोपजीविषु । अतर्क्यमाणस्तुमुलं राज्ञैवाल त्यतापतन् ।
नृपान्तिकादापततस्तांस्तान् घ्नन्त महाभटान् । अधावत् सासिधेनुस्तं कुलराजो महौजसं ।
प्रतिप्रहरतिषु चिप्रापतत्पाणिमपारयन् । निहन्तुं संहरोधेव भित्तौ व्यायामवित् स तं ।
अपयातुमवस्थातुं प्रहर्त्तुं वाप्यशक्नुवन् । तस्थौ स बद्धसन्धानः संस्तम्भेनसमविस्मृतं ।
चरणास्फालनोत्थानदोःशब्दमुखरोऽन्तिकं । धाविते पद्मराजेऽथ मल्लकोऽक्षिपदीक्षणं ॥ ११२५

प्राहरत् कुलराजोऽस्य लम्बरम्भोऽथ वक्षसि । प्रहृत्य गच्छतः पाणेः स तस्याङ्गुष्ठमच्छिणोत् ।
तौ विज्जराजो दर्पोष्णनिविडे प्रहरत्युभौ । तस्मिन प्रतिप्रहरति चिप्रं प्राहरतां ततः ।
स त्रीनप्यभियोक्तांस्त्यक्त्वा दृक्पथमागतं । चतुष्किकाद्वारगते राजानं समुपाद्रवत् ।
लक्ष्यीभूते नृपे शीघ्रमनुधावन् ससम्भ्रमं । चकार कुलराजस्तं स्फिगस्थिवर्त्तिनिर्जवं ।
ततः सर्व्वैर्हतो योधैः क्लीवाक्लीवान् स सत्वरं । हत्वाभजद्दोरशय्यां रक्तस्यन्दोत्तरच्छदां ॥ ११३०

जीवद्ध्यापद्गतस्वामिवोचितः श्लाघ्यविक्रमः । स एवास्पृहणीयान्तच्चौ वीरैस्त्वगण्यत ।
वहिःकोष्टकन्त्येषु विद्रुतेषु दरिद्रतां । परं जनकचन्द्राख्यो धैर्य्येणावाप डामरः ।
निरायुधो राजभृत्याद्गृह्णेकस्मात् परश्वधं । स ह्ययुद्ध्यायदूतत्वं नयन् भूरीन् यमान्तिके ।
यियासोस्तस्य चण्डांशुमण्डलं परशुः करे । सुषुम्णासंविभागार्थी शशिखण्डद्वयाविशत् ।
नाद्राक्षं नाश्रौषं वापि बद्धे भर्त्तरि यत्तदा । कोष्टकस्य वधूरस्वतिष्ठन् मानवती सती ॥ ११३५

जीवन् भूयोऽपि लभ्येत त्वया स पतिरित्यसौ । बन्धूनामवधोऽकिं प्राविशद्यद्धुताशनं ।
सप्तर्षिधीषिदाश्रेषतर्षोकिल्बिषदूषितः । तस्याः सतीलोकगायाः पादाभ्यां पावितोऽनलः ।
बसन्तस्य सुताधन्योदयभ्रातुः पुपोष सा । शुचिवंशाभिमानेन न डामरवधूव्रतं ।
लवन्यललनाः कुर्य्युर्वैधव्येऽपि धनेच्छया । ग्रामकादिकुटुम्ब्यादीन्नितम्बाभोगभागिनः ।
सतिव्यामोहनिर्व्यूढवैक्लव्यस्याभिमानिनः । तयामुगाभ्याश्च कृतं कोष्टकेयावके शिरः ॥ ११४०

रूढव्रणोऽपि किमिमाङ्कूतः कैरपि किल्बिषैः । निष्प्राणो गणराचेण कारायां कोष्टकोऽभवत् ।
अथ चित्ररथः श्रोषकृशः कलुषितं नृपं । श्रुत्वा मल्लार्जुनेनाभूद्भयादत्यन्तदुःखितः ।
पत्नी तस्यैकभार्य्यस्य प्रियासुयमती सती । परलोकाधिपः पूर्वं विम प्रतिभूरभूत् ।

देहे वाप्यहताप्याये गेहे गतपरिग्रहे। पत्यौ वैमत्यकलुषे नैषदप्येष पिप्रिये।
तीर्थस्थितस्य न स्वःस्थे मागसोऽप्यप्रियं नृपात्। इति सञ्चिन्त्य स प्रायान्मिषान्मर्त्तु सुरेश्वरीं। २२४५
अथ नानार्थभूयिष्ठा धनाधीशाधिकश्रियः। स्थानास्ततस्ततस्तस्य पार्थिवोऽपाहरत् क्रियं।
कनकांशुकसन्नाहवाजिरत्नायुधादिभिः। स्वा स्वा प्रकाशिता लक्ष्मीः स्पर्द्धयेवाधिकाधिका।
लोहरद्रोहघर्म्माम्बशोषितो राजपादपः। तत्र श्रीमल्लनटिनीसेकेनाप्यायितोऽभवत्।
विप्लवे चिरनष्टेऽपि श्रीकल्याणपुरं न यः। वनवासोचितश्वासः सानुगोऽन्युमित्रात्यजत्।
श्वेतच्छत्त्रापदेशेन चिन्तापाण्डुरवर्त्मना। वन्दीकृता नरेन्द्रश्रीर्निर्निद्रा यस्य मन्दिरे। २२५०
राज्ञा प्रयुक्तं विज्ञाय विजयः स भवोद्भवः। तीक्ष्णमानन्दनामानमवधीत्तेन चावधि।
इत्थं स पप्रथे तादृक्प्रजापालनशालिनः। सर्व्वोत्साहमयोऽनेहा जयसिंहमहीभुजः।
तीर्थस्थिते चित्ररथे पादाग्रग्रहणैषिणौ। शृङ्गारजनकावास्तां तद्भृत्यौ थकचाक्रिकौ।
प्रचुरोत्कोचदानेन स्वीकृत्य नृपतिं ययौ। शृङ्गारोऽभग्नजनकः स्वामिश्रीभोगभागितां।
चिरप्रचलितं द्वारमुदये निदधे पुनः। मेघकालः सरित्पूरं प्रतीरदव पार्थिवः। २२५५
अवश्यभाव्यदृश्यं सदन्तमर्म्मव्यथस्थिरं। कथाशेषोऽभवच्चित्ररथो मासैरथाष्टभि.।

हास्यावेशोऽप्यविकृतो विकृतोऽनपायोदुर्गन्धिरप्यतिजडोऽपि गृहीतनामा यः।
पूर्व्वानुभावजयिनो भवति प्रभावाद्यस्य स्तुमस्तमतिमंत्रवमप्रतर्क्यं।

निन्द्योरायूतनाद्यैर्यस्थेष्टितैः प्रागभीष्टता। बाल्ये दुर्ललितस्यागाद्भर्त्तुश्चित्रश्चैनसः।
विसृज्यमानः सम्प्राप्तसाम्राज्येन दिवानिशं। क्रमात् स्वीकृत्य ताम्बूलं तेन चित्ररथान्तिके।
दूत्यैः कृत्यान्तराश्लं प्राप्तवानाप्ततां गतः। तदन्ते घटयस्ताश्चसद्भृत्यान् कोशदर्शकान्। २२६०
तदा सर्व्वाप्तताशेषमन्त्रिशून्ये नृपास्पदे। सञ्जकस्यात्मजः प्राप शृङ्गारोऽमुख्यमन्त्रितां।
तस्य वैधेयताभ्यस्तकुदृष्टेरपि दुष्कृतां। नातः पात्रार्पणात्तुच्छत्यागित्वनापि सम्पदः।
योषित्कशिपुभोग्येन धन्यंमन्योऽपि सोऽभवत्। धान्यदानवदान्यत्वं गुरूणामाजगाम यत्।
पीठं कृतवतो रूप्यं संयोज्य रजतैर्निजैः। विद्यमानं सुरेश्वर्य्यां सायुज्यं तस्य युज्यते।
उर्व्वीशैरपि नार्वाग्भिर्य्योऽनुगन्तुमशक्यत। आषाढ्यामाढ्यसम्भारो निविडद्रविणव्ययः। २२६५
नन्दिक्षेत्रे स तत्राद्यैः प्रणीतस्नपकादिभिः। तेन कालानुसारेण पोषितः पञ्चषाः समाः।
नर्माङ्गतायां निःसारो ज्ञातोयः सोऽधिकारभाक्। अचिन्त्यकृत्यकार्य्यासीत् स्वामिस्नेहप्रभावतः।
केलीसक्तैर्युवतिकरजैः कण्ठभूषादशायां यस्याशापि त्रुटनमसकृत् श्माधरैर्व्याप्तकृष्टौ।
सोऽप्यादिष्टस्त्रिपुररिपुणा प्राप भङ्गं न भोगी सत्याधायी क्वचन न परो भर्त्तुराज्ञाप्रभावात्।
तस्य रिल्हणधन्यौ च समाश्रित्येतरेतरं। कार्थ्यं जनकशृङ्गारावुत्कोचेनापजह्रतुः।
कदाचिज्जनकं मद्रा साढ्वं भूषणमौक्तिकैः। सपुत्रदारं शृङ्गारं बाष्पबिन्दुसमोचयत्। २२७०
स तस्य जातु निर्व्विद्य मानहीनमकारयत्। स्वरचार्प्पितोत्कोचधनाभ्यर्थितसेवनः।

अङ्गुष्ठनखनिर्घर्षैर्नर्त्तितानामिकोर्मिकः। वदन् वामोत्तराष्टाग्रोदश्चनैः कुरुते क्षणः।
भ्रूभङ्गादेङ्गितवल्गीर्निम्नोन्नतललाटभूः। पुनरेकस्तयोर्लब्धकार्य्यालोकमहासयत्।
अव्यक्ताक्षरवाग्गोच्यमीलिताक्षो रटन् बहु। हसन् सकरतालश्च सम्पद्यन्योऽव्यभाव्यत।
सोल्लेखप्रतिभान्नीतत्वरां संहास्यवस्तुनि। कथाशरीरं पर्य्याप्तं न दृष्टं किमपेतयोः। २३७५
सर्व्वस्मिन्वस्तुतो वाचि काले विगतयोग्यते। जाने तृणमणीं तुल्यौ ग्रद्गाराहत्यगद्यौतां।
यः सर्व्वकषनिष्कम्पशेमुषीकः क्षमापतिः। धुर्य्यतां धर्म्मचर्य्याभिगतः सुकृतशालिनां।
लब्धवोधिरिवारेर्य्यस्त्वक्के व्यापद्युपक्रियां। दावप्रदस्य दग्धाङ्गोल्लाघत्वमिव चन्दनः।
गुरुस्वरिद्विजानाथप्रभृत्युचितयापि यः। प्रतिपत्त्या संविभेजे संविभाग्यकुटुम्बकं।
प्रासादान्विजयेशादिदेवग्रातस्य शुद्धधीः। सुधादानेन निन्ये च धन्यः कैलासतुल्यतां। २३८०
मठदेवगृहाराममहृदकुल्यादियोजने। जीर्णोद्धृतिव्यसनिनस्तस्य चिन्ता निरन्तरा।
सकृद्दर्शितविद्वेषकार्य्यसब्रह्मचारिणा। सक्कीर्य्यधामपर्य्याप्तमीदृगप्युच्यते जडैः।
विश्वाप्यायनसप्तसिन्धुभरणब्रह्मादिसम्प्रीणनप्राय कृत्यमुदात्तमेकसमयोपात्तेन दुष्कर्म्मणा।
स्वःसिन्धोर्लघुतां गतं सुरगजश्रेणीचितास्पर्शमात् जाता येन जनाः श्मशानमिव सा योग्या किलास्थ्नां स्थिता।
तदन्तरे शिवरथो द्विजः प्रचुरचाक्रिकः। कायस्थपाशः पाशेन गलम्बद्धा व्यपद्यत।
इत्थं पृथ्वीपतिः कृत्वा तत्तत्कण्टकपाटनं। अपेतविघ्नं सौजन्यनिघ्नो व्यधित मण्डलं। २३८५
विपत्त्यावरणापायप्रायेण पृथिवीभुजः। तैक्ष्ण्यं नायान्ति जीमूतमुक्तारत्रिकरा इव।
परिणामनोज्ञत्वं राजरत्नं त्वयं नृपः। माधुर्य्याधिक्यमुत्पाको द्राक्षाद्रुमदवाययौ।
प्रावर्त्तयत सातत्यात्कृत्स्नान् विततदक्षिणान्। विवाहतीर्थयात्रादीन् मखितांश्च महोत्सवान्।
संविभेजे स्वसम्भारैः स क्रियाधर्म्मचारिणां। तेजोभिः कुलशैलानामोषधीरिव चन्द्रमाः।
प्रतिष्ठातं सुतोद्वाहप्रतिष्ठादौ पुरौकसां। तेनौपयिकसामग्रीदानमव्यग्रचेतसा। २३९०
दारुणामाकराः कोशदृढये ये धराभुजां। नवीचक्रे पुरं सर्व्वं स्वाधीनान् स विधाय तान्।
मज्जतो राजकार्य्येषु तत्त्वविद्भिर्दुरार्षने। विस्मितैर्वीक्ष्यते तस्य निष्ठा काष्ठा मुनेरिव।
प्रातादारभ्य सायाह्नपर्य्यन्तं चास्य दृश्यते। न तत्कृत्यं गता यत्र साध्यक्षत्वं विचक्षणाः।
अविचारान्धतमसे विद्या व्यद्योततान्तरा। जयापीडादिमेघश्रीसौदामन्या विलालया।
तेन श्रियन्तु विश्राण्य स्वास्थ्यं रत्नप्रभामिव। गुणवैचित्र्यचित्रस्य प्रकाशो नश्वरः कृतः। २३९५
सुरयोयेन संग्रामे विचक्षचेत्रसम्पदां। ग्रामाणामाग्रहाः कर्म्म सान्वयाः स्वामिनः कृताः।
विदुषां विततोत्सेधसौधास्तद्विहिता गृहाः। व्याप्ताः सप्तर्षिभिर्द्दृष्टमुत्कर्षमिव मूर्द्धसु।
प्रतिभाप्रभवे प्रज्ञो यज्ञे च पथि पान्थता। सार्थवाहन्तमालम्ब्य निर्द्दोषा विदुषां स्थिता।
आसीद्यथार्थ्यराजस्य प्रयानस्याप्यतिश्रियः। कामं लिङ्गाभिषेकाद्यः शङ्खाभप्रभवोऽध्वनिः।
निद्राणस्य तथा वेणुवीणादिपरिहारिणः। दयितं तस्य निर्द्दोषविद्वज्जल्पविकल्पनं। २४००

काले श्रीललितादित्यावन्तिवर्म्मादिभूभुजां। सिद्धं न यत्प्रतिष्ठादि निष्ठां तदधुना गतं।
मठदेवगृहेष्वेव स्वकालप्रभवेषु यत्। सर्व्वेष्वेव कृता तेन निर्धनापायनिष्कृतिः।
रत्नादेव्याद्दढाकृढभर्त्तृवल्लभताभुवः। सर्व्वप्रतिष्ठाप्रष्ठत्वविहारः प्रथमं गतः।
रिल्हणोऽथ गुणग्रामबान्धवो धर्म्मपद्धतौ। बभूव पूर्व्वपथिकः समस्तामात्यसन्ततेः।
तपोधनांस्त्र्यवर्णान्यस्मष्टङ्गांश्च शुद्धधीः। विश्रम्भभवनस्थोऽपि शक्त स्त्यक्तुं न यः क्वचित्। २४०५
कृष्णाजिनाभयमखदानमुख्यैः सुकर्म्मभिः। धर्म्मकन्याविवाहैश्च यस्याशून्यत्वमायुषः।
सर्व्वेषामाहिताग्नीनां निष्प्रत्यूहा महात्मना। सर्व्वयागोपकरणैर्येन विश्राणितैः क्रियाः।
भोगान्बुभुजिरे भव्यान्सद्ये सूचितविस्मये। यस्य वर्णाश्चतुःषष्टिः क्षुद्रृष्यस्पृष्टचेतसः।
अग्रहारगणोदर्यैर्व्विततैर्म्मठसेतुभिः। पुरे परिष्कृते येन द्वयोः प्रवरसेनयोः।
आद्ये प्रवरभूभर्त्तुः पत्तने प्रत्तविस्मयः। प्राप्तः प्रतिष्ठाप्रष्ठत्वं यत्कोऽपि रिल्हणेश्वरः। २४१०
लोकान्तरगतां कान्तां कृतिनोद्दिश्य सुस्सलां। भिक्षोरिकप्रपास्थाने विहारस्तेन कारितः।
मार्जार्य्यास्तिर्य्यगुचितस्नेहविस्त्रत्यपोहितः। मृतामनुमृतायाश्च नाम्ना यः ख्यातिमागतः।
तद्भर्त्तुरीर्ष्याकालुष्ये तस्याद्दूरागता पुरः। प्रदेशे मानुषीवासीत प्रिया क्रोडविडालिका।
तीर्थप्रस्थानदिवसादारभ्यास्याविराविणी। उत्सृजन्त्या हृतं भोज्यं मा शुचा जीवितं जहौ।
आरोहति परां काष्ठां प्रतिष्ठाविविधाधुना। दिष्ट्या नृपतिपत्नीषु मन्त्रिस्त्रीषु तु सुस्सला। २४१५
श्रीचङ्कुणविहारं या यातं नामावशेषतां। अस्मप्रासादवेश्मादिकर्म्मणा निर्म्ममेऽधुना।
अरघट्टप्रबन्धान्धुक्कावशालादिकर्म्मभिः। तस्याः सम्पूर्णतां पुण्यप्रकारानिखिलागताः।
पूर्व्वराजकुलाखण्डस्थण्डिलव्यापिनाखिलं। तद्विहारेण नगरं नीतं नेत्राभिरामतां।
प्रापि प्रतिष्ठयेवाशु यत्स्वर्पितया तया। विपक्तिः श्रीसुरेश्वर्य्यां प्राज्यप्रायुज्यदूतिका।
मठाग्रहाराधन्येन वल्लभाभिधया कृताः। नाभीष्टं लेभिरे नाम ख्यातिः पुण्यैर्विना कुतः। २४२०
अग्रहारमठांस्तद्वदुदयः कम्पनापतिः। कृत्वापि स्वाभिधामेव तत्सम्बद्धां सदाश्रृणोत्।
उदयद्वारपतिना सह ब्रह्मपुरोगणैः। कृते प्रष्ठे मठे शोभां लेभे पद्मसरस्तटः।
शृङ्गारतन्त्रपतिना श्रीद्वारेऽप्यग्र्यजन्मना। प्रत्यष्ठापि मठोद्यानदीर्घिका येन चात्मना।
स्नानकोष्टमठब्रह्मपुरीसत्त्रादिकर्म्मणा। सोऽलङ्कारालङ्कारोऽद्वह्रङ्गाधिपोधरां।
बुधः सदोषधीशान्तिहेतोर्जातः कलावतः। यः कविर्दानवत्वस्य ख्यातस्त्यागेन योऽजयत्। २४२५
नृसिंहसेवी निःशेषहिरण्यकशिपुच्छिदः। वराहसमये दत्तगोत्रश्च योऽपूर्व्ववैष्णवः।
भट्टारकमठाभ्यर्णे पूर्णवार्धाविव प्रहिः। मठः शृङ्गारभट्टस्य ख्यात्यानौचित्ययोज्झितः।
सान्धिविग्रहिकोदार्व्वाभिसारोर्व्वीभुजोऽकरोत्। अष्टमूर्त्तेर्जट्टनामा प्रतिष्ठां पुण्यकर्म्मठः।

पुष्पाकरप्रणयभूः सुभगा विभूतिरेकस्य हन्त करवीरतरोर्द्रुमेषु।
पुष्पाणि यस्य सफलीकुरुते स्वयं तस्मादभवत् किमपि लिङ्गमनङ्गशत्रोः।

विभूत्या संविभक्तेषु भूभुजाखिलमन्त्रिषु। उत्कृष्टकोटिं भुट्टाख्यः परं जह्नाकुञ्जोऽर्हति। २४३०
स्वयम्भूः प्रकटीभूय पूजां स्वीकुरुते स्वयं। ज्येष्ठरुद्रोविशिष्टस्य यस्य वा बालकेश्वरः।
स विहारमठोदग्रवेश्मभिः कलुषोज्झितः। तेन तत्र कृतं भुट्टपुराख्यं पुटभेदनं।
नगरेऽपि हरः प्रत्यष्ठापि भुट्टेश्वराभिधः। सरस्य मडवग्रामे धर्म्मविभ्रमदर्पणः।
नीत्वा प्रतिष्ठां वैकुण्ठमठादिस्वविहारभूः। रत्नादेव्या दृढं चक्रे स्वार्थग्रथनसुस्थिरा।
रत्नापुरे बह्वुदारमहार्घे निरघोमठः। धत्ते सुकृतहंसस्य स्फीतनीतं सविभ्रमं। २४३५
मृत्युञ्जयोराजतेऽस्याः सुधाधौतान् भजन् गृहान्। जनस्यानित्यतोच्छित्त्यै स्वतदीपं सृजन्निव।
गोकुलानां विधातारो गोकुले विहिते तया। गणिताः शूरवर्माद्याः सहणाभ्यवहारिणः।
गवामव्याहतस्वैरसञ्चारचरकाञ्चिते। तत्र वैतस्ततोयाब्धौ यदपोढामयं वपुः।
मुकुन्दस्तत्र माश्चर्य्यसौन्दर्य्यौदार्य्यमन्दिरं। अश्वागोवर्द्धनधरः सिद्धोनाविश्वकर्म्मणः।
मठप्रतिष्ठां कृत्वा सा नन्दिक्षेत्रेऽकरोत् स्थितिं। विहारान् यवनाद्येषु स्थानेषु च मनोरमान्। २४४०
दार्व्वागारेष्वपूर्व्वीशसुन्दरौदार्य्यमन्दिरं। स्वनामाङ्कपुरं चक्रे तया शक्रपुरोपमं।
उद्दिश्यापरतान्मान्यमहत्तरमुखानपि। प्रतिष्ठाविविधास्चक्रे सा राज्ञ्याश्रितवत्सला।
एवं सर्व्वाङ्गमामुक्तालङ्कृतेरथ स क्षितेः। विशेषकामं भूभर्तृस्नुषा स्वमकरोन्मठं।
अनुत्सिक्तेन योऽदत्त भूरिग्रामोमहीभुजा। तच्छ्रीरारोपितः ख्यातिं मुख्यः सिंहपुराख्यया।
व्यधात् कारपथेशस्य दौहित्रः सिन्धुजान्द्विजान्। निविडन्नविडंश्चात्र प्राक्सिद्धुच्छत्रमध्यगान्। २४४५
किम्वा मठादिनिर्म्माणस्तुत्या तस्य व्यधत्त यः। भूयः सङ्ग्रामनगरं कृत्स्नं कश्मीरमण्डलं।
जीर्णारण्यसधर्म्मायं कालदौरात्म्यतो भवन्। देशोधनजनाद्याशैस्तेन भूयोऽपि योजितः।
आरम्भात्प्रभृति क्ष्मापे दीक्षितेऽभीष्टदत्तिषु। शिल्पिप्रायैरपि प्रायोमठदेवगृहाः कृताः।
सन्तोषांशुकरत्नादौ निरस्पृयेन भूभुजा। साधारणीकृते पौरांस्तांस्तांश्चक्रुर्महात्मनान्।
अकाण्डतुहिनापातोद्दीपाद्यैरप्युपद्रवैः। नष्टेषु शालिष्वचीर्णं सुभिक्षं तत्र न क्षतं। २४५०
अद्भुतं चाभवद्वाचः श्रुता यस्मिंश्च रचसां। केनाद्युत्पातजातश्च दृष्टं नष्टास्च न प्रजाः।
कान्चेश्वरानुजच्छुड्डनामा विहितविप्लवः। आहवैर्गूढदण्डैश्च राज्ञा निन्येऽन्तकान्तिकं।
चक्रे विक्रमराजादीन्भूपानुन्मथ्य पार्थिवः। प्ररोहं गुङ्गणादीनां राज्ञा वल्लापुरादिषु।
प्रजेशः कान्यकुब्जादावजर्य्येण नृपार्य्यमा। स व्यधाद्भव्यभूभोगवैभवानपि मानिनः।
विद्योतमाने निश्चोर्ध्वैर्मन्त्रैस्तत्रैवमेकदा। भेजे जीवितदारिद्र्यं दरद्राजोयशोधरः। २४५५
स भूम्यनन्तरोऽप्यन्तरश्चाराज्ञोऽभिषेवया। विपत्तौ प्रकृतिक्रान्तसन्तानस्थिन्यतामगात्।
निकृत्यास्य निजामात्योविष्णुसिंहाभिधोयतः। सम्भुज्य दयितां राज्यमप्रौढतनयेऽग्रहीत्।
वशीकृत्य शनैर्देशं नाममात्रशिशुं नृपं। उच्छेत्तुमैच्छद्यावत्तं स जिघृक्षुः स्वयं क्षितिं।
अन्योऽमात्यः पुरस्कृत्य यशोधरसुतं परं। तावत्तेन समं भेजे पर्य्युकाख्याविपर्य्ययं।

काश्मीरान् पृष्ठतः कृत्वा द्वैराज्यं तत्र कुर्व्वति। उत्सृज्य सज्जपालादीन् सर्व्वकार्य्यभरक्षमान्। २४६०
देवाकप्रतिपत्त्यान्याभिधमौग्ध्यनिरुद्धधीः। सर्व्वाधिकाराध्यारोपान् मन्यमानोऽभिमानितां।
पर्य्युकाजय्यतः सुज्जरप्रौढमनुजं निजं। प्रहिण्वानोऽनुमन्त्रित्वं मन्त्रशोऽप्यभवन्नृपः।
अपूर्व्वमण्डलारब्धा वाटोपाड्डामशालिनः। क सर्व्वङ्कषनिष्कम्पप्रतिभाः कार्य्यवेदिनः।
क बालवालिशप्रायोनष्टव्यवस्थितिर्जनः। धिक् परीपाकविषमं स्वाम्यन्धं मेदिनीभुजां।
कार्य्यापेक्षित्रिपक्षैस्तैरिक्कन्युद्रिक्ततास्किदां। सैन्यस्मादुर्गकोषादेर्न शंसन्त्यन्तरज्ञतां। २४६५
प्रक्रियामात्रतो मन्त्रं गृह्णन्ति विद्यनन्तराः। कृतसाहायकैरेव चित्राचित्रमुत्स्वाद्विषः।
युक्त्यारब्धविधा तत्र वैरिसाहायकग्रहे। क वैधेयान् वक्रप्रायान् कार्य्यसन्दर्भवेदिनः।
दरद्राजद्रुमोऽन्योन्यं भेदकूलकषाच्युतः। कष्टं नाशक्यतास्रौढैः स्रोतोभिरिव मध्यगः।
पर्य्युकात्सङ्कटे कार्य्ये तन्त्रमुत्कोचमिच्छतः। स दुग्धधातुमादातुमप्यासीदलमक्रमः।
पर्य्युकेण समं विड्डसिंहः सन्धिं निबद्धवान्। यथागतं गते सुज्जो काश्मीरेन्द्रेऽग्रहीद्रुषं। २४७०
सर्व्वाधिकारप्रवहाचिरसञ्चारभूरुहः। प्रसङ्गे तत्र प्रटङ्गारोमृत्युर्धीहित्यकार्य्यभूत्।
आलम्बकाम्नात्सर्व्वाधिकारोऽस्थाद्द्वितीयया। वृत्त्या ततस्तु शतधा निर्झरामद्रवाभवत्।
अन्येऽप्यमात्याः साम्मत्याङ्गर्त्तुर्माहात्म्यभागिनः। प्रसयं समये तस्मिन्दैवात्किमपि लेभिरे।
प्रशंसा सा नृशंसस्य विदध्मान धराभुजः। मृतामात्यार्भकापत्यं निधत्ते यः पितुः पदे।
प्रवर्त्तिता त्वमात्यानां भृत्यैः पद्धतिरद्भुता। निर्व्वैलक्ष्याः प्रभोर्लक्ष्मीं जडैः स्वगृहिणीमिव। २४७५
भूभर्त्तुः प्राभृतीकृत्य मृतस्य स्वामिनः श्रियं। सन्तानस्य विभूत्यर्थं कृत्वा कार्य्यं हितेऽहरन्।
गञ्जाधिपं विश्वनाम्नि विपक्षे रचितापरं। एकेन सहजाख्येन सहायानां महार्घता।
नाध्यारुरोहाधिकारं पार्थिवेनार्थितोऽपि यः। स्वामिस्नेहोष्टिहनाम्नो वृद्धौ साहायकं व्यधात्।
निष्ठायाममतिष्ठत्वं दृष्ट्वापि प्रभविष्णुभिः। धिक् परस्परया भृत्याः प्रवर्द्धन्तेऽधिकाधिकं।
आसीदाचमनोपयोगि कलशे स्वष्टुंजगल्लङ्घनक्रान्ताङ्घ्रिक्रमहार्य्यथासुररिपोस्त्वेस्रोतसं यत्पयः।
यस्मुस्तन्निदधे स्वमूर्द्धनि जडेऽप्येकप्रयुक्तादृतौ स्युः सर्व्वेऽप्यवशा गतानुगतया गाढादराः स्वामिनः। २४८०
सुज्जनिर्व्वासनप्राप्तप्ररोहोदुर्णयद्रुमः। साञ्जिजाद्यकृताप्यायः क्रमेणासीत् फलोन्मुखः।
द्विवाः समाः समन्युः स विड्डसिंहस्ततोऽभवत्। अकुण्ठराजाद्युत्कण्ठं यूनैरकृत लोठनं।
दूरादाखण्डितात्यानः शूरमाश्रित्य भूपतिं। जीवत्कोषवणिज्यादिकर्म्मणा स सबान्धवः।
दरदां मन्त्रिणां जातघातैर्यैरभियोगभाक्। चक्रेऽलङ्कारचक्राद्यैर्डामरैः सह चक्रिकां।
साप्यद्रिदुर्गस्वाम्यस्य प्रथमप्रस्थितौ सृजन्। चुड्डो जनकभद्राख्यः पार्श्वं लिखार्थ्यपद्यत। २४८५
कर्णाटकादावभवत् स्थाने स्थाने विलोकयतां। प्रस्थितं कस्यचिद्द्रोहे बुद्धिः कस्यापि साधुता।
तं तथा विपुलारम्भमपि शाश्यादसम्भ्रमं। प्रविविक्षुमुपैक्षिष्ट कोशीद्यानुद्यमो नृपः।
पोषिते प्रेषितश्रीकैरुत्पिञ्जे विप्लवैषिभिः। अथोदयद्वारपतिः प्रैषि विश्वम्भराभुजा।

संग्रहता च मूर्द्धेन पुरे शङ्करवर्म्मणः। प्राप्तोऽलङ्कारचक्रस्य पार्श्वमश्रावि लोठनः।
अपि विग्रहराजाख्यः सूनुः सुस्सलभूपतेः। भोजः सुल्हणजन्मा च श्रुतौ तेन सहागतौ। २४९०
अथोपचितउत्थान एव तेषां स मत्सरः। मार्गं बहुदिनोल्लङ्घ्यमेकेनाह्ना व्यलङ्घयत्।
मयूख्यकन्यायचनासिद्धर्य्यातो विधेयतां। तदास्कन्दहतस्पन्दः स पलायिष्ट डामरः।
सिन्धोर्मधुमतीमुक्ताश्रियमन्तस्थितं ततः। शिरःशिलाभिधं कोट्टमथ तैरध्यशिश्रिये।
गहने गुप्तितः कोट्टे स्थितः किं वा स इत्यसौ। न निश्चिकाय दारेशो भ्राम्यन् दीर्घासु भूमिषु।
अथोपालब्धतद्दुर्गारोहणेऽस्मिन्नसञ्ज्वत। दैवेनापि न भूभर्त्तुः प्रभावो निष्पराभवः। २४९५
उत्थानोन्मुखतां सर्व्वेऽप्युत्पिञ्जे तत्र दस्यवः। पालालास्तिमयोत्रर्षपृथक्कृत इवाभवन्।
तैस्तिल्लकादिभिर्गूढवैकृतैरथ लोठनः। पालहारिः पुनश्चक्रे मायाचतुरचाक्रिकैः।
पुरग्रामादिदग्धारमसाध्यमथ धावतां। पदे पदे कक्ष्यगतं स्वपचासमरच्छिषः।
धिक् चक्रे नियतेर्भ्राम्यन् दृश्यादृश्यः स सर्व्वतः। कल्पात्ययोदयी ब्रह्मपुत्रः केतुरिवाभवत्।
श्रान्तैरमात्यैर्न्निर्बन्धे मन्दो कालानुरोधतः। मेने मडवराज्योर्व्वी हारितेवाखिला जनैः। २५००
असम्वृत्तप्रतीकारतयारोहत्सु वैरिषु। तदन्तरेऽथ सम्भाव्य धन्यं प्रास्थापयन्नृपः।
तत्स्कन्धारोपिते कार्य्ये शोडां गच्छेत्तटस्थतां। विपर्य्यासमय द्वाराधीश इत्यभ्यधाज्जनः।
भिक्षुर्मल्लार्ज्जुनस्वामीदेक एव चयस्त्वमी। संहतार्थ्यन्तदुःसाधादध्युश्चेत्यखिलाः प्रजाः।
द्वाराधिपस्त्वहेवाकव्यवहारो महीपतेः। सिद्धिं स्वस्याप्रसिद्धापि वाञ्छन् सद्योद्यमोऽभवत्।
एकाकी यः किल न भजते मूढतां भर्तृकार्य्ये नौदासीन्यं श्रयति च वृथा बद्धधीर्न च तस्मिन्।
निर्हेवाकव्यवहृतितया साध्यसिद्धिं किलेक्ष्वंस्तादृक् मन्त्री प्रभवति परं नाल्पपुण्यस्य राज्ञः। २५०५
पद्मचन्द्रे मृते तस्यानुजं राजोपवेशने। न्यधात्स षष्ठचन्द्राख्यं सोऽप्यारब्धे विनिर्ययौ।
द्विवाङ्ककादयोमुख्यास्त्राणैः सह गायकैः। धन्यमेवान्वयुर्व्वाश्चास्त्वान्ये राजोपजीविनः।
धन्यादिषु तिलग्रामं कोटिसिन्धुतटाश्रयं। अयत्स्वगच्छद्वारेशोऽद्रङ्गस्थः पृष्ठपद्धतिः।
हठप्रवेशायोग्याजिमुखहेवाकवर्ज्जितः। शोषयन् द्विषतो धैर्य्यगम्भीरं स व्यवाहरत्।
कुठारिकादिभिः कारुवृन्दैर्मन्दिरपद्धतीः। धन्यो मधुमतीतीरे नगरस्पर्धिनीर्व्यधात्। २५१०
निर्भ्रान्तं द्रुमसम्बाधं सनिकेतावनस्थलीः। कटकं सर्व्वभोगाढ्यं शकः परिवृढोऽकरोत्।
देशे भूरितुषारेऽयर्हिमर्त्तौ भाग्यसम्पदा। भूभर्त्तुरभियोग्येव भूरभूद्भानुभूषिता।
भुवनाद्भुतसम्भारप्रेषणं दिग्जयैषिणः। द्वैराज्यं मीलिताक्षोऽपि काले राज्ञो न खण्डितं।
उत्थानएवोपहतभये यास्वत्यगात्परं। भारोढिपोढितग्राम्याक्रन्दं शान्तिसमूपमां।
दीर्घप्रवासनिर्व्वेदास्खलितां दर्शयन्नृषं। स्थास्नुं तोषयन्दायैः स्थैर्य्यं निन्ये नृपस्स्वकः। २५१५
इत्थं त्रिचतुरान्मासांस्तिष्ठद्भिरभिनिष्ठुरैः। सैवादातुमशक्यन्त कटकैः कोट्टसंश्रयाः।
तेषां हि वीवधासारनिरोधादीनि कुर्व्वतां। अप्रियाणि न जातानि दैन्यदायीनि कानि चित्।

चिकीर्षवस्तुषारान्ते स्वविभूतिप्रकाशनं । तत्पुरङ्कुरितोल्लासाः पर्व्वता इव डामराः ।
कृषं कृषीवलैर्व्वेदपाठमुत्सृज्य च द्विजैः । उत्पिञ्जसज्जैर्ग्रामेषु सर्व्वतः शस्त्रमाददे ।
प्रतीक्षमाणाः प्रालेयप्रलयं मार्गभूभृतां । द्वारदास्तुरगानीकैस्तस्थुस्तर्ज्जिगीषवः । २९२०
हिमिकासंहतेः कालहुलतल्पाकृतेर्दधत् । पातभीतिं जनो राजसेना शश्वदवेपत ।
इत्थं प्रत्यर्थिसामर्थ्यपरमार्थापरीक्षणात् । क्ष्माभृन्मिथ्यैवमारेभे सन्देहस्य जयेऽभजत् ।

वैदग्ध्यदग्धमनसामयमेक एव कोऽप्यस्ति वञ्चनविधेरुचितः प्रकारः ।
येनात्मना किल विशङ्कितशक्तयस्ते मुग्धेऽपि वैरिणि विचारहतोद्यमाः स्युः ।

प्रवादमात्रसाराद्यस्तसेत्परिकरादरैः । स्वैव तस्य विघ्नेत सिद्धिश्चिन्तान्धया धिया ।
विध्येदाशु शिलीमुखैः प्रवितरेत् पत्रैरवस्कन्दनं बध्नीयात्तदिदं गुणैः परिकरैर्मिथ्याप्रसिद्धैरिति ।
स्याद्विदम्बुरं द्विपस्य भयकृच्चिन्तामदैः साहसं प्रत्यूहेन ततो निजैरपघनैरप्येतदुन्मूलने । २९२५
लोठनाद्यैर्हि कर्णाहाविस्तीर्णैस्तैः कथञ्चन । प्राप्तेऽलङ्कारचक्रेऽग्रे राज्यमशायि निर्जितं ।
मिथ्यैव प्रथिता कन्या स्वयूथ्यैः कथमन्यथा । तस्मिन्नमन्दमास्कन्दं धावन् द्वाराधिपो ददौ ।
प्रत्यवस्थित्यसामर्थ्यात्ततः कोट्टं व्यसर्जयत् । स राजवीजिनस्तांश्च परेद्युः स्वयमभ्यगात् ।
कोट्टाद्रिः सलिलस्यान्तः कृशौघः पृष्ठदैर्घ्यभाक् । स तैर्व्वैसारिणग्रामव्यपोत्रकवदैक्ष्यत ।
निःसामर्थ्यं तद्विलोक्य गजागारमिवागजं । तत्यजुर्विजयाशंसां भयस्त्वोदवहन् हृदि । २९३०
ततः शरैर्द्विषद्दर्पैर्वाध्यास्तेताविरोधिनः । अर्धसोरक्षणमितोरक्षायन्सोपनादृतः ।
इत्थं स तैरभिरुद्धैर्व्यावदादाय डामरः । मेने स्वगुप्तिमात्रार्थी न युद्धे बद्धनिश्चयः ।
ततः कन्दलितास्कन्दे तिलग्रामे द्विषद्दले । प्रतीकाराक्षमे हस्यौ ते चिन्ताक्षमतान्दधुः ।
विश्वत्रापि सुतप्रज्ञासौष्ठवो लोठनः पुनः । डामरं कृत्यसम्पूर्णमगूढं तमगर्हत ।
भोजं हृद्विजितं यस्मा द्रोहो रोहेदिति ब्रुवन् । हृद्धा पितृव्यं तं व्याजस्तुत्या नित्यमुपाचरत् । २९३५
विमुखे लोठने कुण्ठशाव्यस्तस्य तु सान्त्वने । मेने मन्मथतां किञ्चित्समतर्षिष्ट सम्विदि ।
हन्यान्मां भृम्र्हदित्येष यातेष्वितेषु सन्त्यजेत् । नास्मानुक्तोत्यरौत्सीत्स पितृव्यं गमनार्थनात् ।
त्वय्यस्मासु च सर्व्वेषु वेष्टितेषूत्कटान् द्विषः । पृष्ठकोपमसम्भाव्य कुतश्चिन्निश्चलोद्यमाः ।
यद्यद्विदध्युः सिद्धोत्तरदकं त्यज मामितः । अन्यांस्त्वन्यानानीय द्वन्द्वोवा यत्नेन वः ।
बन्धनं त्वपनेष्यामि युक्तमित्युक्तवांश्च तं । डामरं विदधे किञ्चिदिव साम्मत्यमाश्रितं । २९४०
विमोच्यामि चपायात्त्वामद्य श्वो वेति तं ब्रुवन् । सत्यसङ्कीर्णदाक्षिण्योविप्रलेभे प्रतिक्षणं ।
अध्वरोधि सुदूरस्थैर्यथावद्दूतैऽरिभिः । वाह्यग्रामाहृतैरन्नैस्ते त्वहान्यत्यवाहयन् ।
दुरुदर्कमथाशङ्कां समयं ते व्यजिज्ञपन् । धन्यादयोहि तैः सन्धिर्व्विधेय इति भूपतिं ।
तैस्तैर्निमित्तैः सन्धानमविधेयं विदन्नृपः । तानादिदेश कर्त्तव्यं कोट्टाट्टालकवेष्टनं ।
सन्दिदेश च दायादा वञ्चेरन् ख्यातिमागताः । निजास्पदे तां जहति दत्तोत्कोचेऽथ डामरे । २९४५

भूत्वा कठोरोऽप्यारम्भानिष्ठानिस्त्रोष्ठवा भुवं। क्रियातिपत्त्युपालम्भैर्थास्यामोऽसंशयं विशां।
मात्यचङ्कुर्षदेवस्वेन समाहान्युद्यमं ततः। दुग्धप्रवाहं प्राप्स्यन् स श्रुत्वेत्यन्योऽपि तप्यते।
प्राप्नव्यं प्राप्नवान् सर्व्वो निजैः कृत्यैः शुभाशुभैः। क्रियातिपत्तिर्लोकेऽपि त्रैलोक्यं तु मुखेऽर्प्यते।

पादेषु पञ्चेषु च सत्सु नोर्व्यां न व्योम्नि वा पञ्चपिपीलकस्य।
पङ्गुत्ववच्चङ्क्रमणं तु गर्भे किं सम्पदा स्यान्नियमे गतीनां।
सहस्रपादस्य गते निमित्तमनूरुभावेऽप्यरुणः प्रजातः।
तस्याभविष्यद्यदि पादयुग्मं ततोऽधिकं तत् किमिवाकरिष्यत्। २९५०

उपेन्द्य साचिता तस्मात् कृत्स्नं कोट्टं विवेष्ट्यतां। प्रयातु तत्रैवास्माकं तेषां च पुरुषायुषं।
अविश्रान्तो वातोदहनदव संयोजनयति प्रमर्शं मातत्याद्दलयति कुलाद्रीनपि जलं।
प्रसूते कृत्येषु व्यवसितिरनिर्व्यूढसुदृढा फलावाप्तिं लोके प्रतिफलमसम्भाव्यविभवां।
क्रूरां नरपते राज्ञां श्रुत्वा धन्यादयस्ततः। कोट्टप्रतोलिं कूलन्तं त्यक्ताप्यारुरुक्षैवात्।
कथं युद्धं विधास्यन्ति कथं स्थास्यन्ति वेति तान्। शरान् किरन्तः कोट्टस्थायावत्प्रैक्षन्त कौतुकात्।
अधःसोऽप्यूर्ध्वगान् युद्धैर्निष्पीड्य निविडैर्व्यधात्। धन्यः प्रदेशं तावत्तं निकेतैः पत्तनोपमं। २९५५
अविश्रान्तैस्ततः सङ्ख्यैरसंख्येयस्समुच्चयः। प्रतिक्षणं प्रववृते सैन्ययोरुभयोरपि।
परेद्युः सारदां दृष्ट्वा सम्प्राप्तो गर्गनन्दनः। संक्रन्दनपुरीपौरयोधैर्द्दिद्धं हतैर्व्यधात्।
अलङ्काराभिधोवाह्यराजस्थानाधिकारभाक्। अधृष्यामानुषैर्युद्धैर्निरुद्धाम्बकुधाऽवधीत्।
क भूधरचरैः स्पर्धा वसुधातलचारिणां। तथापि पृतनायन्त्रानन्यं चिन्त्यमचिन्त्यकृत्।
अल्पीयांसः कोट्टनिष्ठा भूयिष्ठाः कटकाश्रयाः। अतः पूर्व्वेऽवरुन्धन्तोऽप्यासन् कृत्याल्यशा चताः। २९६०
श्लिष्टद्वाराररिपटं द्विषैः पीडितमाहवैः। मीलिताक्षमिव आसात्ततो दुर्गमजायत।
गोप्तृभेदान्तरद्वैधमुखच्छिद्रानुसारिणः। धन्यादीन्वीक्ष्य विश्वासं कोट्टस्था नोपलेभिरे।
निद्राच्छेदार्थमन्योन्यं क्रोशन्तोनास्वपन्निशि। स्वपन्तोऽह्नि तु निःशब्दशून्यं कोट्टमदीदृशन्।
निशासु तत्तत्पृतनायामहर्थ्यरवैरपि। चटकाः कोटरगतामेघशब्दैरिवात्रसन्।
अहर्निशं भ्रमन्तीभिर्नौभिः संरुद्धपाथसः। तान् समभ्रमयन् सर्व्वप्रकारं राजसैनिकाः। २९६५
ते रुद्धपाथसस्तर्षदोषं कंचिद्विषेहिरे। निःसञ्चारास्तु सङ्कीर्णे भोक्तव्ये क्षयमाययुः।
बुभुक्षवः क्षमापयोग्यान् भोग्यान् भाग्यैर्ज्जितांस्ततः। कदन्नैर्नृपदायादा अशनाशंसनैर्व्यधुः।
दूरे स्पर्द्धास्तु निस्तीर्णाः क्षुधितास्तेऽधिकं व्यधुः। भूभर्त्तुर्भोगभागिभ्योऽमर्त्त्येभ्योऽप्यन्वहं स्पृहां।
व्यूहेष्वस्मासु पर्य्याप्तमकार्य्यमिति भाषिणं। भोजं व्यधान्मध्यघट्टे दुर्गस्याथ स तं पृथक्।
एकस्य वार्द्धकादेश्यापुत्त्वादपरस्य च। जानन्नयोग्यतां मेने देराज्यार्हत्वमेव सः। २९७०
विनाशं चानयोः सम्यक्संरम्भैरन्तवैविणः। इति मिथ्या प्रथां निन्ये तद्विनिःसरणं वहिः।
कान्तालङ्कारचक्रस्य काङ्क्षन्ती चयमित्वरी। चत्तूरागात् षष्ठचन्द्रे सान्द्रस्नेहार्द्रतां गता।

वहिराभ्यन्तरं भेदं नयन्तौ मन्त्रमाययो । माल्हणेः कर्णसरणिं सर्व्वमश्विग्येनोऽन्वहं ।
रागध्वान्तान्वितधियः प्रतिभेदभयेन सः । तस्य प्रकाशयन्नेनो गन्तुं तु प्रार्थनं व्यधात् ।
क्षमावान् शिक्षितापेक्षो मैत्रीस्थैर्य्ये मुदं भजन् । नागस्यागस्यपि दधे बोधिसत्त्वइव क्रुधं । १९७५
प्रियामन्युः सरागेण मृत्युहेतुर्महानपि । हृदि विमृश्यते पृष्ठे शरभेणेव वारणः ।
अथ प्रस्थापितो भोजः सुशारिशिविरान्तरात् । यातप्रायोऽप्यलङ्कारतनयेनानुयायिना ।
द्रोहेच्छया भयाद्वापि ध्वस्तस्खलेन सत्वरं । व्यावृत्त्यारोपितो भूयः कोट्टस्यस्यान्तिकं पितुः ।
निर्भर्त्स्य पुत्रं गन्तासि श्वो निशीत्यभिधाय तं । च्छन्नमस्थापयत्सोऽह्नि यातइत्यखिलान् वदन् ।
प्रोच्चल्यानिश्चयादेकः प्रायाद्भ्रौ श्वः प्रयास्यतः । बोधितैरथ धन्याद्यैरजागार्य्येखिलैर्निशि । १९८०
प्रस्थास्नुः स निशीथेऽथ कोट्टाट्टालाद्व्यलोकयत् । जाग्रतः कटके सर्व्वान् परितोदीपितानले ।
प्रकाश्य वह्निना दुर्गी प्रतोलीनिर्गतो यथा । पिपीलकोऽप्यलक्ष्यत्वं नोन्मुखानां द्विषां व्रजेत् ।
ज्वालाप्रकाशं चाश्वल्यादिलोलाइव रचिताः । न्यषेधन्मूर्द्धकम्पेन साल्हणिं साहसाद्गृहाः ।
तद्गन्तुमक्षमः क्षिप्रं क्षपाप्राह्णे स डामरः । अधोवातीतरक्षभ्रमालिङ्गितवटाकरं ।
क्षेमराजाभिधानेन डामरेशेन सोऽन्वितः । शिलां वितर्दिकातुल्यामध्यास्त श्वभ्रमध्यगां । १९८५
आरुह्यासनमात्रे तां पर्य्याप्तां पातभीतितः । निर्न्निद्रौ पञ्चरात्रीस्तावत्यवाहयतामुभौ ।
निर्वर्त्तितप्राणयात्रौ करस्थैः शक्तुपिण्डकैः । ततएव व्यजहतां विष्ठां नीडादिवाण्डजौ ।
अव्यक्तव्याहृती चित्रासूचिता विह्वलौ स्थितौ । वीक्ष्यारिकटके लक्ष्मीं पृष्टाद्विस्मयमीयतुः ।
तयोराशीयत स्फीतशीतविस्मृतिकारिणा । अर्यासंहमतापाशिमन्तापेनोपकारिता ।
षष्ठेऽह्नि तत्र निःशेषीभूतभोक्तव्ययोरथ । क्षतक्षारइवारब्धि तुषारं वर्षितुं घनैः । १९९०
अस्पृष्टोताचिते दत्तवीणावाद्यावमे तथा । शीतासादितसादेन पाणिपादेन सुप्तता ।
तावच्चिन्तयतामद्य क्षुच्छीताभिहतौ भुवं । पतिष्यावोऽरिकटके पाशवद्धाविवाण्डजौ ।
कं पूत्कुर्व्वः कस्य वावां विदितौ यो विनिर्हरेत् । ततः पद्माश्मरामश्री यूथपः कलभाविव ।
विषमस्थावथेत्थं तौ नक्तमभ्यर्थ्य डामरः । आरोप्य रज्ज्वावसथे शून्ये स्थापयति स्म सः ।
कृतशीतप्रतीकारौ पलालानलसेवनैः । दुःखं व्यस्मरतां तत्र निद्रया चिरलब्धया । १९९५
ततोऽप्यभ्यधिका व्यापद्भेजे लाठनविग्रहौ । अचक्षुष्यौ जनान् स्निग्धा गिरमप्यापतुर्न यो ।
यवकोद्रवपूपादि तयोः सतुषमश्नतोः । गात्रैर्वस्त्रैश्च वैवर्ण्यं शुद्धिवन्ध्यतया दधे ।
धन्योऽलङ्कारचक्रस्य क्षीणभोजस्य सर्व्वतः । स्त्रीचकाराव्रदानेन तुल्यौ होलयशस्करौ ।
ततः स दूतैर्भिक्षेतुमङ्गीचक्रे नृपद्विषः । वुभुक्षाक्षुभितोऽभृत्यभेदभीतश्च डामरः ।
दुस्तरव्यापदुद्रेकद्रुतसत्वतयात्यजत् । पापोपलिप्तचित्तमधर्म्माकीर्त्तिमाध्वमं । २०००
भूपतेर्व्विद्विषच्छेषस्थापनात् स्वस्य रक्षणं । ख्यातिशुद्धौ चिकीर्षुश्च कुशकाशावलम्बनं ।
भृत्यस्योदयनाख्यस्य धिया प्रच्छादितं तथा । ररक्ष साल्हणिं भोजं दो तु दातुं स सत्वरे ।

तं विना च तयोर्भूपाहृष्टं जानन्न साम्प्रतं। अवाधं स्वस्य चाशेषकृत्यं युक्तममन्यत।
भोज्यभावकृतां तस्य व्यापदं तत्र मन्त्रितां। तदामात्यास्तिपृथ्व्यादयः सन्धिं विधित्सवः।
मिथः स्थिरलिप्सा तेषां कस्माच्चिदभवत्ततः। किं पुनस्तेन दायाददये दातुं प्रतिश्रुते। १००५
देयविश्राणनानीकोत्थानादिपणसिद्धये। भ्रातृव्यमनयदन्यः कल्याणमत्रकल्पनां।
प्रबन्धं निर्भिन्नरिपुपचरच्छादितरूपं महाहिमं रटत्कलयकुटिलवेष्टं व्यवहरन्।
स भूमिः सिद्धीनां दधदुचितकर्त्तव्यपरतां भवेद्योनिर्व्यूढावपि सुदृढसंरम्भरभसः।
दुःखैर्दीर्घप्रवासोत्थैरपमारिसभोष्टवाः। तदा संरम्भशैथिल्यं भूभृद्भृत्याः प्रपेदिरे।
स सत्यं सचिवोऽप्राप्तः संग्रहीतुं प्रगल्भते। कथाशरीरमिव योनिर्व्यूढो कार्य्यमाकुलं।
सन्धिं निबद्धं विज्ञाय सैनिकाः स्वगृहोन्मुखाः। उपेक्ष्य स्वामिदाक्षिण्यं चणादेव प्रतस्थिरे। १०१०
तद्विक्रीतमवाप्यान्नं लवन्यः कार्य्यमन्थरः। धन्याद्याः स्वल्पसैन्यत्वादासन् कृच्छ्रागताशवः।
प्रतोलीकेलितद्गृहः प्रार्थितागमनाश्रया। तदहः सोऽभियोक्तृंस्तानददत्तावतापयत्।
रथाङ्गक्रन्दिनी रात्रिस्तेषां कृच्छ्रेण सागमत्। विना जीवितसैन्याससमन्यत् कार्य्यमपश्यतां।
प्रयत्नसंभृते कृत्ये नष्टे मन्दतया धियः। असम्भावनादूरीकृतवाक्यादरं प्रभुं।
नष्टानुशोचनव्याजात्तत्तद्युक्त्युपहासिनः। सदयं नो ध्रुवं दुःस्थीकरिष्यन्त्यन्यमन्त्रिणः। १०१५
सद्योयात्रातारतम्यात्ताम्यन्तोऽनल्पपार्पणं। कार्य्यनिष्ठामपश्यन्तः कुर्य्युर्वृत्यपरेऽब्रुवन्।
मायामेतां विहितवांस्तैः संमन्त्र्य नृपाहितैः। सिद्धसाध्योऽधुना दस्युर्हसन्नस्मान् ध्रुवं स्थितः।
अन्येतरांस्तु संकल्पानेवं तेषां वितन्वतां। दत्तानल्पतनुज्यानिः प्रभाता सा विभावरी।
कुलकं ॥ प्रातस्त्वथ राजस्थानीयोऽलङ्कारः साहसोत्सुकः। डामरं कोट्टमारुह्य निन्ये नयभयैर्वशं।
एकाहं गमने सोढविलम्बस्तत्र वासरे। लोठने चोणदाक्षिण्यः स गच्छेत्यब्रवीत् स्फुटं। १०२०
उपन्यस्यंस्ततस्तस्य ग्लानिप्रक्षालनक्षमं। मानिनः केऽपि कर्त्तव्यं कीर्त्तिव्ययनिवर्हणं।
कालः सोऽयं सकलजनतालोचनध्वान्तदायी नित्यालोकप्रकटनपटुः किन्नु सत्क्षत्रियाणां।
अभ्रश्यामाद्भुतमलिनतास्वर्व्वधूसंगतापि व्यक्तं सक्तिं दिशति रभसान्मण्डलेनोष्णभानोः।
संप्राप्नुवन्ति ननु मण्डलमेकमेव क्ष्मापाजये समरशौण्डि वपुस्तु हित्वा।
चण्डांशुमण्डलमथाभिमता निकामं प्रेमार्द्रनिर्जरवधूकुचमण्डलानि।
नास्मिन् सन्ततवेष्टनोल्बणतलैस्तल्पैरुदेति व्यथां ग्रन्थिभ्यस्खलितैर्न चालमसुभिर्मर्म्मव्यथा जन्यते।
क्रन्दद्वन्धुजनार्त्तनादचकितस्वान्तं नवा स्थीयते सन्त्वेतन्मरणं सुखस्य सुभगाकाम्येव संप्राप्तिभूः।
मार्गैः खड्गलतावितानगहनैर्यातः पिता ते दिवं भ्रातृभ्यामसिधेनुकण्टकवने भ्रान्त्वार्जिता सद्गतिः।
वंशसुखमिमं निषेव्य रभसादध्वानमुग्रद्युत्या हृत्या व्योम्नि विशार्कमण्डलमिह स्वान्तस्य तेजस्विनां। १०२५
साम्राज्यं विधिनोपनीतमसकृत् क्लैव्येन यद्धारितं तत्रापि प्रथमोचिते वयसि यत् सञ्चेष्टितं बालवत्।
प्रायश्चित्तममुष्य लब्धमधुना तद्वैधसापादितं माभूद्राज्यमिवैतदप्यसुलभं कर्त्तव्यमूकस्य ते।

राज्यं प्राप्तमपि प्रनष्टमसमोच्छिष्टाश्मनैर्थापितः कालः सर्व्वजनत्रयस्य विषये याता स्थितिर्हेतुतां।
इत्यामीत्किमिवोचितं प्रभवतो भिक्षाचरस्यापतेर्निर्व्यूढं तु तदस्य देहविरतौ येनैव सर्व्वात्मतः।
स तथार्त्तिजितोऽप्योजोनाददे तेजसोज्झितः। न ज्वलत्यग्निसङ्गेऽपि निर्व्वीर्य्यं वा सवेन्धनं।
श्रान्ताहन्तस्तु सम्वृत्तनिद्राभङ्ग इवार्भकः। ऐच्छद्दुःखक्षयैः वेगोरोदितुं प्रस्फुताधरं।
डामरेणार्पितं नेतुं प्रवृत्तास्तन्नृपाश्रिताः। तादृशं वीक्ष्य कारुण्याद्धैर्य्याधानार्थमभ्ययुः। १०१०
मा विषीद न दैवस्य दयाचन्द्रोदयोज्ज्वले। यदि प्ररोहति स्वैरं विकारतिमिरान्धता।
स सौजन्यसुधासिन्धुः स स्थिरत्वसुराचलः। स प्रपन्नार्त्तिसन्तापच्छेदचन्दनपादपः।
पुण्यां शुद्धाश्च संलक्ष्य शरदीव द्युवाहिनीं। मूर्त्तिं तवात्मनश्चेतः समाधास्यतएव ते।
निष्कलङ्कैर्वंशपूर्व्वैर्निर्व्विशेषं सभाजयन्। चारित्रं लाघवभुवोऽप्रियस्त्वां सोऽपनेष्यति।
अपकर्त्तॄन् विपन्नश्मान् दयमानः परानपि। क्षमापरोक्षाहेतुत्वात्स वेत्ति ह्युपकारिणः। १०१५
उक्तेति यष्टसैलेलास्थूलकूर्चा ग्टहास्ततः। व्यालम्बकम्बलोगोष्ठादृद्धोक्षइव निर्ययौ।
निर्भूषणं स्नानजीर्णवस्त्रशस्त्रं निरीक्ष्य तं। युग्याधिरूढमायान्तं धन्याह्वोनभ्रनां दधे।
दीर्घास्पन्देक्षणं रुक्षघनकूर्च्चं सविग्रहं। व्यलोकयद्यथोलूकमिव नष्टं गुहाग्टहात्।
रेजे शैलस्थलद्भिस्तैः शिविरोद्दीपितानलः। भूपप्रतापस्वर्णस्य कषाश्मलमिवागतः।
स्कन्धावारे गते वर्षत्तुषारं प्रसभं नभः। अमर्त्यभावे भूभर्त्तुर्विशश्चिच्छेद संशयं। १०२०
प्राच्चत्पतद्धिमं तावन्म्रियेरन् त्रुडिताः क्षणात्। पिष्टातकान्तर्गत्तोटाः प्रविष्टाइव सैनिकाः।
एवमेकोनविंशेऽब्दे दशम्यां शुक्लफाल्गुने। न्यूनाब्दषष्टिदेशीयो निबद्धो लोठनः पुनः।
दोर्घप्रवासादायातं सत्कर्त्तुं कटकं पुनः। निर्म्मो हर्म्यमुत्तुङ्गमारुरोह महीपतिः।
यथोदितं दानमानसम्भाषणविलोकनैः। सन्तोष्य व्यसृजत् सैन्यं धन्यादीन् प्रेक्षतामतान्।
तेषां पुनश्च दोर्द्वन्द्वमूले क्षिप्तकरं भटैः। न्यस्तेनानासिकं वासःप्रान्तेनाच्छादितानमं। १०२५
निर्भूषणश्रोत्रपालिप्रविष्टैः श्मश्रुलोमभिः। बलवद्भिः प्रव्यक्तकार्श्यक्लेशं कपोलयोः।
उच्चावचोक्तिमुखरे पौरलोकेऽन्तरागते। व्यापारयन्तं नेत्रान्तौ दीनस्तिमिततारकौ।
कातर्य्यदैन्यभीक्षान्तिक्षुद्रलक्ष्मीकटाक्षितं। वेपमानवितिन्द्राङ्कं गां शीतेनार्दितामिव।
भ्रान्तामिव क्ष्मां पर्य्यस्तानिवाद्रीन्पतितामिव। विदन्तश्च दिवं शोषवक्रशुष्करदच्छदं।
दैविकोवान्तरायोऽस्तु ध्वान्तस्वोयं प्रवर्त्तताम्। राजाकोऽभ्यर्णतां यातं वातावा जरयन्त्विदं। १०३०
सर्व्वापकारहृद्राज्ञः स्यास्याभि पुरतः कथं। पदानि सन्निरुन्धानं निर्ध्यायेति पदे पदे॥ अन्तर्युगलं॥
बह्वलोकाहततया स्तोकसंलक्ष्यमैक्षत। प्रतीहारैरथावेद्यमानं लोठनमग्रजे॥ कुलकं॥
भूसंज्ञया वितीर्णाज्ञो राज्ञा तामारुरोह सः। सभां पारिप्लवां भोजामिव प्रेक्षकलोचनैः।
दृष्ट्वा निर्दिष्टपार्श्वोर्व्वीस्थितिः पृथ्वीभुजस्ततः। अस्प्राक्षीत् क्षितिनिक्षिप्तजानुर्भूर्त्तुर्ङ्घ्रिपङ्कजे।
हस्ताम्बुजाभ्यामालम्ब्य ललाटतटमानतं। सम्राट् सम्भ्रमनस्तस्तस्योदनमयच्छिरः। १०३५

रत्नौषधीजुषो: स्पर्शः पाण्योस्तापं स चेतसः । दौर्भाग्यमहरद्देहस्यास्य श्रीखण्डशीतलः ।
पुण्यानुभावात् कारुण्यभाजो भूभर्त्तुरञ्जसा । विश्रम्भसम्भावनया स क्षणात्पस्पृशे हृदि ।
मा भैषीरिति दृष्टोक्तिः सुखं सम्प्राप्स्यसीति वाक् । अगाम्भीर्य्येण भग्नेव मन्युना त्वयि साधुना ।
इत्युक्ते पूर्व्ववैराणां भवेदुद्घाटनं कृतं । वान्धवो नस्त्वमित्यस्मिन्परोहासइव क्षणे ।
क्लिष्टोऽसीति स्वप्रतापप्रभावभाषणं भवेत् । ध्यात्वेति भूभृद्दृष्ट्यास्य नाप्याययन्नु गिराकरोत् ॥ तिलकं ॥ १७६०
अभयार्थनया पादौ स्प्रष्टुं नमयतः शिरः । संस्पर्शं मौलिषु पुनर्व्विग्रहस्याग्रिणाकरोत् ।
का योग्यता सत्क्रियायां ममेति वदता बलात् । अजिघत्पितृव्येण ताम्बूलं स्वकरार्प्पितं ।
नम्रं द्वारे शमूचेऽभूच्छ्रमोवदति सस्मितं । धन्यं षष्ठश्च पस्पर्श प्रष्ठं सव्येन बाहुना ।
दाक्ष्यदाक्षिण्यगाम्भीर्य्यविनयाद्यैर्व्विभाव्य तं । भूभृद्गुणैः परीतं स्वं लोठनोऽमन्यतावरं ।
आदिश्य सान्त्वनं धन्यं मुखेनाथ त्रपानतं । पितृव्यं प्राहिणोद्देशं भ्राजिष्णुविनयाञ्जलिः । १७६५
अभियोगे य एवास्य नीतौ विन्यस्यतो दृशं । मुखरागः स एवाभूत्फलावाप्तावविप्लुतः ।
नायाति वाडवशिखिक्कथनेन तापं शैत्यं हिमाद्रिपयसा विशता न चाब्धिः ।
कस्यचिद्गभीरमनसां सततं विषादकाले प्रमोदसमये च समोऽनुभावः ।
प्रीतिस्थैर्य्यज्ञातियोग्यैश्चोपचारैरकृत्रिमैः । क्रमाद्राजा हरल्लज्जां पौरुषभ्रंशजीवयोः ।
दायादोऽष्टद्दयादेव राष्ट्रे कष्टेऽपि सर्व्ववित् । भोजनोत्पिञ्जसर्पत्य दन्तं सोऽन्तरचिन्तयत् ।
प्रवासायासभीत्या स्वैस्त्यक्तसंरम्भसम्भ्रमैः । जिगीषुर्व्विद्विषस्तैस्तैश्चक्रे यन्निश्च जागरः । १७७०
सल्हणः स तु विस्तीर्णः श्वभ्राच्छून्यगृहे वसन् । पितृव्यविग्रहोदन्तमुपलेभे न कश्चन ।
राजा गृहे लवङ्कारं डामरान्तिकमागतं । पृष्टादौत्याभयद्रोहाद्द्रोहसम्भावनस्तदा ।
ददर्श च क्रमाद्दूरतया दुर्लक्ष्यविस्मृति । स्कन्धावारं बद्धमालं मार्गे नगरगामिनि ।
अज्ञातेन विदूरत्वात्पितृव्येणाश्रितं ततः । युग्यश्चासौ धन्यषष्ठयुग्ययोरन्तरैक्षत ।
आचिक्षयच्च कोहेतुः कटकप्रस्थितेऽन्वितः । युग्यारूढश्च कोऽय स्यात्तौ धन्यषष्ठयोः । १७७५
पृष्टसेनावदत्कश्चित्पामरोऽथ प्रमोदभाक् । सन्धिर्निबद्धो नगरं गतो लोठनविग्रहो ।
सन्दोहोऽथ द्रतद्रोहोभयसम्मुखतां व्रजन् । ज्ञातिखेदेन तस्यासीन्मुहूर्त्तमपहस्तितं ।
सैन्ये गते शून्यतया मिलितैर्व्विहगैः सरित् । एवङ्गस्तेन तौ नीतौ क्रन्दतीव व्यकल्पत ।
त्वन्यएव मे दद्यात् ध्यात्वेहस्यमेवत्य ते । पुनर्भयेयुर्धन्याद्याः क्रमाद्ध्यावर्थेति सः ।
स्वं नेतुं पार्थिवचमूं प्रत्यावृत्तां निनादिनीं । श्रुतेऽन्तरान्तरा घोषे निर्झराणामशङ्कत । १७८०
अथाजायत जीमूतवितीर्णतिमिरं जगत् । बद्धं मध्यन्दिनेनैव निशीयच्यथितश्रिया ।
राधमासावधि दधुस्ततः प्रभृति वारिदाः । दीर्घां चैत्रं तुषारौघसञ्चारस्तम्भकर्म्मणि ।
विश्रम्भघात्यभव्योऽहं निर्भाग्यो ह्रियोज्झितः । भिन्दन् स्वमिति भोजाये तेनादस्युरुपाविशत् ।
समयापेक्षयाचोभामन्युं संस्तभ्य साल्हणिः । सान्त्वयन्निव नास्त्यामस्त्वचेति जगाद तं ।

ऊचे च संश्रितापत्यशातात्यापद्गतं त्वया । चातुर्नेतकृतं तत्र गर्हां नार्हसि कस्यचित् । १७८५
तव द्रोहस्पृहा स्याच्चेन्नानृशंस्यं भविष्यति । परहन्ताभवस्तस्मादियं कालानुरोधतः ।
राज्ञस्त्र्ह्र्षभूभर्तुर्वंश्याइव न वा वयं । उच्छेद्याः किन्तु संयम्या राजधर्मानुरोधिनः ।
स्वस्याख्यातिस्तयोर्बाधा राज्ञस्य मार्गगामिता । स्वां सभां रक्षता हन्त निषिद्धा धीमता त्वया ।
इत्युक्तवन्तं तन्यक्तलज्जाभारइवावदत् । साक्षी त्वमेव सर्वत्र ममेति सततं स्तुवन् ।
क्षणेन स प्रहिणु मामधुनेत्यभिधायिनं । तमेव हिमहृष्यन्ते कर्त्तास्मीत्युक्तवान् ययौ । १७९०
त्वयि दस्यून् विपर्य्यस्येत्यन्मन्युं जानन्स भोजनं । भोजस्तत्रेति केनापि कथितोऽव्यधिताश्चनं ।
स्पृश्यंस्त्वां चिरात्प्राप्तमिदं विक्रीयतामिति । ध्यायं ज्ञात्योर्द्विरमामं तयोर्मुक्तममन्यत ।
दस्युस्तु हिमहृष्यन्ते त्वां प्रहेष्यामि निश्चयात् । श्वोऽद्य वेति कथयन् द्वौ मासौ न मुमोच तं ।
मां ज्ञात्वेह स्थितं राज्ञा कृतारम्भे हिमात्यये । विक्रीणात्येव मत्वेति भोजोऽधाद्गमने त्वरां ।
मिषं यं यं निषेधाय गमनायोदपादयत् । दस्युस्तं तं समुच्छेद्य सापराधं व्यधत्त तं । १७९५
भोजोनाश्वोबलहरात्मजातं भाट्टमातृरः । अभ्यधाद्दाम्यमाश्रास्य लम्बकम्बनकाहृतः ।
तेजोविस्फूर्ज्जितास्तत्तद्वीरोत्कर्षकषोपले । द्वैराज्ये सोऽस्मिन् सैन्ये पंक्तिपावनतां गतः ।
पितुराप्ततया राज्ञा वर्धितस्तदनन्तरं । एवेनकादिविषयाधीकारित्वं क्रमाद्भजन् ।
विमुखे राज्ञि नागेन खूयाश्रमभुवा कृते । तं राजवदनो नाम विजिघृचूरच तं ॥ चतुर्भिः कुलकं ॥
आनृशंस्यं भृत्यभावादलत्वन्यतयास्य च । प्रत्यवस्थित्यसामर्थ्यं राज्ञि सर्वे शशङ्किरे । १८००
अतोऽलङ्कारचक्रेण कुर्व्वतात्यर्थमर्थनां । द्वैराज्ये क्षोराजवीजो तदा न स समर्प्यत ॥ युगलकं ॥
नीतः प्रत्यक्षतां दूरस्थितेऽप्युदये स तं । विस्मृष्टवति दस्युस्त्यक्तुमेनं न सोऽशकत् ।
राज्ञा कर्त्तुं विनियमं भोजस्य प्रहितो धनैः । प्राप्य द्रङ्गामलङ्कारो विषयाधिकृतस्ततः ।
तत्पार्श्वमुद्यतं गन्तुं मामसमुत्सृज्य यासि चेत् । त्यक्ष्यामि तदस्त्वनेनमूचे भोजस्तु डामरं ।
श्वस्त्वां प्रभाते द्रक्ष्यामीत्येतावत्तत्र जल्पति । कोट्टादनुल्वैव निशस्तुर्य्ययामे विनिर्य्ययौ । १८०५
घनवर्षेऽप्यपेक्ष्येण मार्गान्वेषी गवेषणं । यावच्चक्रे क्षपान्ते तं तावच्छुश्राव निर्गतं ।
असाध्यप्रतिषेधोऽथ तमन्वनुजगाम सः । प्रस्थितं शारदादेवीस्थानं यावन्मितानुगः ।
एकसार्थगतौ ज्ञातौ विना तौ ज्ञातियोषितां । दाक्षिण्यादक्षमः स्थातुमथ सागाभवन्निव ।
प्रत्रयाः पञ्चषान्वारान् व्यधादारब्धिमेव तु । युवापि कन्यः कौलीनमिति स्वस्य च चिन्तयन् ।
दुरगण्डगमने खण्डितेच्छः संश्रित्य दारदान् । संयुयुत्सुर्मधुमतीरोधसा मार्गमग्रहीत् ॥ तिलकं ॥ १८१०
क्वापि श्यानाश्मसञ्चयभिमृत्युदंष्ट्रान् दुरुत्कटान् । क्वचिद्रुद्धप्रकाशाभ्रकालपाशान्धकारिताम् ।
प्रभ्रश्यद्धिमसङ्घातगजव्यूहोल्बणाम् क्वचित् । क्वापि निर्झरफुत्कारमाराचचतविग्रहाम् ।
क्वचित्सुस्पर्शपवनस्पष्टस्फुटदसृग्धराम् । क्वाप्यातपचतर्हिमज्योतिर्निर्ह्नितदृक्पथान् ।
दूरावरोहे प्रसृते स्फुटमप्रसृते विदन् । ऊर्द्धावरोहमसकृन्मन्यमानोऽप्यधोगतेः ।

तुषारकालविषमान् षट्सप्तान् पथि वासरान्। उल्लङ्घ्य स दरद्राष्ट्रसीमान्तग्राममासदत्॥ कुलकं॥ १८२५

गूढार्पितात्मसामग्री हता किं साधुलाघवं। तं दुग्धघाट्टकोट्टेशः प्रणम्यानयदर्चितां।

दूरस्थितो विड्डसिंहस्तद्दूतोक्ततदागमः। प्रक्रियां प्राहिणोच्छत्रवादित्राद्यां नृपोचितान्।

आदिष्टदिष्टद्विष्ट राष्ट्रे कोट्टाधिपेन सः। अवारयत् स्वकोशस्य स्वामित्वं राजवीजिनः।

राजायमानो भोजोऽथ राजवासगतोचितं। आनिन्ये राजवदनापत्येनाभ्येत्य पचतां।

स पित्रैकान्ततो राज्ञो भिन्नेन प्रहितोऽन्तिकं। तेनाग्राह्यरिनोत्युग्रागाग्रस्थापनोपमः। १८३०

कार्य्यगौरवविस्रम्भाभावव्यतिकरोचितं। सन्दिश्य प्राहिणोत्तं स न स्वीकुर्व्वन्न चोत्सृजन्।

किमाप्तोऽहं किमेकान्तभिन्नो राज्ञः शनैरिति। मां शास्यसीति तं दूतैः स राजवदनोऽवदत्।

तस्यादार्ढ्यं दर्शयितुं गोत्रैररिमिषान्नृपे। ब्रुवाणेऽथ विदोषत्वं नागाद्यैरग्रहीद्रणे।

सामग्री नः शनैः स्थैर्य्यं ततः साम्यमथ क्रमात्। आधिक्यं चादधे तेषां विग्रहैर्धैर्य्यनिष्ठुरः।

तथा प्रतिष्ठां स प्राप तस्यापूर्व्वस्य भूमिजाः। दास्यमेत्य यथा क्रीडां नागुर्नागस्य वान्धवाः। १८३५

स हि त्यागक्षमास्तम्भालोभादिगुणभूषितं। अभिगम्योऽभवन्नित्याभ्यस्तभूतिरिवोन्मिषन्।

स्थैर्य्यं पृथ्वीहरादीनां साश्रयाणां न कौतुकं। आडम्बरो निरालम्बस्यास्य स्तुत्यस्तु विस्तृतः।

ग्रन्थयन् पृथुलान् व्यूहांस्तौराटविकधाविकैः। क्रान्तग्रामोऽथ तस्थौ स भोजादीन् प्रतिपालयन्।

जघ्नुरन्योन्यसङ्घर्षैर्षामात्यमतेन वः। ततो लुण्ठिप्रियत्वाद्वा नीतिमन्येऽपि डामराः।

उद्घातध्वंसितां विस्रवेच्छा लोठनबन्धने। याधात्तेषां तदानीं सा जगाम शतशाखतां। १८४०

त्रिल्लको जयराजश्च राज्ञा सम्वर्द्धितावपि। अकार्ष्टां नैव तपसा विवशौ चक्रमोलनात्।

यो यूकानामिव श्वभ्रमामयानामिव क्षयः। दैत्यानामिव पातालं यादसामिव सागरः।

आश्रयः सर्व्वदस्यूनां त्रिल्लको मायथोल्वणः। स देवसराधीशं सम्बध्नन्विप्लवं व्यधात्॥ युग्मं॥

काङ्क्षन्तोऽथ तदाक्षेपं क्षोणीत्राणार्थिनो द्विजाः। प्रायं नृपतिमुद्दिश्य चक्रिरे विजयेश्वरे।

अकालदस्युनिर्म्माथं जानतेऽभ्यर्थनां न ते। राज्ञो रट्टक्षस्ततः सोऽभूद्दाक्षिण्यात्तत्सभानुगः। १८४५

प्रस्थातुं पार्थिवे सज्जे ज्यायान् योविंशुतेष्वभूत्। स जातोत्पातपिटको जयराजो व्यपद्यत।

भाग्यवानेकतो जातदस्युवैविक्त्यमोशिता। ततो मडवराज्यं स विप्रप्रीत्यै विनिर्ययौ।

अमात्यदत्तवैमत्यैः स्वशाखं मठैरथ। द्विजैर्निषिद्धोऽलङ्कारो मन्त्री राज्ञोऽग्रितोऽन्तिकात्।

स व्यवस्थापने दुःस्थदस्यूनां सोद्यमः सदा। सेर्ष्याणां प्रत्यभात्तेषां तद्दोषपरिपोषकः।

त्रिल्लकोन्मूलनं कुर्य्यां कृत्वा वैराज्यभञ्जनं। प्रतिज्ञायेति नृपतिर्व्विप्रान् प्रायान्न्यवीवरत्। १८५०

चस्तोऽथ त्रिल्लकस्तैस्तैरप्रियैरुदवेजयत्। अनुद्भिन्नमुखो गूढामयो रोगान्तरैरिव।

जयराजानुजं राज्ञा यशोराजं निवेशितं। तन्मतेनावचस्कन्द भ्रातृव्यं राजकाभिधः।

चातुं तं देवसरसं वृन्तारात्याश्रितं गतः। सञ्जपालोऽल्पसैन्यत्वात्सन्दिग्धविजयोऽभवत्।

ज्ञातोदन्तस्ततोऽभ्येत्य रिल्हणो रणमुल्वणं। जयलक्ष्मीकटाक्षाणां प्रथमातिथितामगात्।

मन्दरेणाथ तेनारिवारिराशौ विलोडिते । कल्योऽभूत्सञ्जपालाब्धिस्तुच्छागातिजलाश्रिता । १८४५
जितेऽपि राजकं स्वोर्व्यां विनानुग्राहकं क्षमः । न बभूव यशोराजः शून्ये वाल इवासितुं ।
प्रतीक्ष्यमाणो दैराज्यपर्य्याप्तिं क्ष्माभुजेऽकरोत् । भिक्षुकः कालहरणं तैस्तैर्मायामतिक्रमैः ।
यथाकालं ततो गूढोऽपोढान्मण्डलकण्टकान् । स्वपक्षसूचीविशिखान् दिक्षु स्वाविदिवाक्षिपत् ।
अथ पांक्तीहरिर्योऽभूच्चतुष्कः कोष्टकानुजः । राज्ञा भ्रात्रा समं बद्धः कारागारात्पलायितः ।
स तेन निजजामात्रा रक्षितः स्वोपवेशने । असङ्ख्यडामरयुतः शमालं सम्प्रवेशितः ॥ युग्मं ॥ १८५०
आकर्ण्य कुररस्येव निनादं तस्य भेजिरे । व्यक्ततां दस्यवो गूढा ह्रदस्याः शफरा इव ।
दृष्यन्तं राजवदनं षष्ठचन्द्रोऽथ गर्गजः । रुरोध प्रलयोद्वृत्तं वेलाद्रिरिव वारिधिं ।
वर्द्धमानक्षीयमाणसंहनौ तौ व्यजायतां । घर्म्मे सजम्बालहिमतुषारांद्रितटाविव ।
षष्ठस्य जयचन्द्रस्य श्रीचन्द्रस्यानुजन्मनः । दूरविप्रकृतौ राजमन्दिरात्प्रवेतनौ ।
ज्ञातेर्निर्हृत्य गर्थ्याशौ धुर्य्यकार्य्यवशप्रियात् । प्रतीक्ष्यादयजाद्राज्ञः शङ्कितावप्यभागमं । १८५५
कटकाद्विद्रुतौ राजवदनान्तिकमागतौ । श्वशुर्य्यावपि भूभर्त्तुरागतौ प्रतियोग्यतां ।
शैलप्रस्थानपथिकैरसङ्ख्यैरथ खाशकैः । स पूर्व्वराजकोशार्थी भूतेश्वरमलुण्ठयत् ।
तस्कराक्रान्तशरणं बलवन्निहताबलं । अराजकमिवाशेषं राष्ट्रं कष्टां दशामगात् ।
उदयं कम्पनाधीशं रिल्हणञ्च ततो नृपः । चतुष्कयुद्धमादिश्य नगरं विवशोऽविशत् ।
पांक्तीहरिस्तु दुस्साध्यो महाव्याधिरिवौषधैः । स्तम्भितोऽभूत्तयोः सैन्यैः संहन्तुं न त्वशक्यत । १८६०
कालापेक्षां स्वरक्षाणां दुर्बुद्धिं वानुरुन्धतः । आसीन्मन्दप्रतापत्वं रिल्हणस्यापि तत्क्षणं ।
विड्डसिंहस्तु विज्ञातभोजोदन्तो व्यमर्जयत् । दूतानानेतुमुर्व्वीशान् सवहन्नुत्तरापथे ।
अपि वित्तेशवनितारहोवैयात्यवेदिभिः । अपि किं मानुषपुरागारोद्घाग्दिरोरटैः ।
अप्यौपण्यादालुकाम्भोधेः शीतावेदिभिरेकतः । अपि घट्टानिलैः प्रोतान् कुर्व्वाणैरुत्तरान् कुरून् ।
हिमाद्रिकच्छे म्लेच्छेशाः प्रधावन्तोऽधिशिश्रियुः । दिशस्तुरङ्गरुन्धन्तः स्कन्धावारं दरत्पतेः ॥ तिलकं ॥ १८६५
राज्ञो रुद्रटनं यावद्व्यधादेवं दरन्नृपः । दिग्भ्यो भोजान्तिकं तावत्तत्सामन्ताः प्रपेदिरे ।
स पिप्रिये तानज्ञातालापान वीक्ष्य गिरिव्रजात् । प्रीतिप्ररूढप्रणयानवरूढान् करीनिव ।
जयचन्द्रादयो राजवदनप्रहिता अपि । कोराः काश्मीरिकाः पार्श्वमभजन्राजवीजिनः ।
अभ्यर्णस्यान् बलहरप्रमुखांश्च विदूरमान् । अपुष्णात् साल्हणिः स्वर्णैः परां कोशगतां भजन् ।
ततः सुजनितात्पिञ्जतया निर्व्योद्यचाक्रिकः । भोजेन राजवदनः समगंस्तापमाध्वसं । १८७०
तयोरस्तकर्त्तव्यविशेषेणेतरेतरं । जातभीष्ठवयोः क्षिप्रमविश्वासो व्यशीर्य्यत ।
अभ्यमित्रीणतां तस्यानिच्छतोदरदं विना । महात्माहायकायेच्छन्मितानिव स तान् ह्यान् ।
स्युश्चेत् सोढाभिमाटोपाः कटकस्यास्य नो द्विषः । तत्साम्यमुन्मिषेद्यद्वा भङ्गाभूयोऽपि योगभित् ।
तस्मात्सर्व्वाभिसारेण रणमेकं समेच्छतः । विजयावजयावाप्तिरेकाहान्तरिता मता ।

व्याजहारेति यद्राजस्तदेषोऽथ हसन् स्मयात् । निन्ये तद्दारदं सैन्यमुपेत्याग्रमिनीश्वमूः ॥ तिलकं ॥ १८७५

सङ्कटान्ते वितीर्णानुयात्रस्तेषां प्रसर्पतां । स राजवीजी शुश्राव दरद्राजमथागतं ।
तत्सङ्गमाय व्यावृत्ते तस्मिन् कोट्टाग्निकं पुनः । प्रावेशयद्दलहरोमाहयामं स तद्दलं ।
दिग्भ्रस्ततोवीक्ष्य वाद्यैर्भ्रान्तवातमृगा इव । निसर्गधीरधीर्गार्गिर्न धैर्यात्पर्यहीयत ।
तस्य सर्व्वेऽपि नीलाश्वडामराः स्वे च सैनिकाः । विपक्षैः सह बद्धैक्याः सैन्यान्द्रष्टुं चेरा ययुः ।
स तथा विषमस्थोऽपि प्रस्थित्यै प्रार्थितो निजैः । स्वानानतः प्रभुं द्रष्टुं न चलोऽस्मीत्यभाषत । १८८०

स सूर्य्यवर्म्मा चन्द्रस्य न जातः कैश्चिदन्वये । उपयोगाय योनागान्मसाभिजनजन्मनां ।
भोजं सभाजयित्वाथ विग्रहेशः सपार्थिवः । मार्गे स्नमं ससामन्तैर्व्विजयाय व्यसर्जयत् ।
ततो म्लेच्छगणाकीर्णान्व्रजन् संवाहयंश्चमूः । प्रयाणमात्राक्रान्तः पृष्ठे तस्य बभूव च ।
प्राद्ध्वकृतजगत्क्षोभे बले तत्रानुयायिनि । उत्साहात् साल्हणिर्म्मेने कृत्स्नं हस्तगतां महीं ।
वाजिभिस्तर्ज्जितोम्लेच्छराजैश्च बलमूर्ज्जितं । स्थाने समुद्रधाराख्ये निर्व्वबन्धाथ तत्परं । १८८५

स राजवदनस्तादृग्दुर्ज्जयाग्र्यबलाञ्चलः । मृत्युदन्तान्तरे दिष्टं षष्ठचन्द्रममन्यत ।
ततः प्रावृट्पयोवाहहतोद्वीपपरिप्लुता । सञ्जायते स्म वसुधा समीभूतजलस्थला ।
धरित्रीपानपात्रे ऽम्भःशीधुपूर्णे दधुर्द्रुमाः । मयालव्यशिखामात्रावलक्षीलोत्पलोपमां ।
षष्ठस्य सङ्कटं जानन् भूभृच्छैर्व्वलैस्समं । अयोदयद्दारपतिं तस्य धन्यं व्यसर्जयत् ।
वाहिनीरुद्धमार्गौ तौ पदवीमनुसस्रतुः । मार्गौ धनञ्जयस्येव शोणेयपवनात्मजौ । १८९०

लम्बाम्बुदेऽम्बरे दूरं वारिपूर्णे च भूतले । स्फूलेव विद्युद्दृग्गे भिन्नद्योतननिःस्वना ।
शोभामात्रादितागदर्पगिवर्हावहिष्कृतः । तत्राविभक्तकटकः पार्थिवः समजायत ।
अनास्थाराजवदने सत्त्वावष्टम्भयोः पुरा । अत्रापरो न निर्वेद्यो राजवीजीति दारदान् ।
त्रिलकः सन्दिशन् दूतैर्दृष्टिं पांशीहरिं नयन । तयोरेकस्य सामर्थ्यमैच्छत्तं हस्तपातिनं ॥ युग्मं ॥
अभित्तिलिखितालेख्यकल्पं समहरस्य तत् । तादृग्विलोक्य सामर्थ्यमथ राज्ञश्च सर्व्वतः । १८९५

विभक्ताशेषसैन्यस्य तत्र तत्रारिसङ्कटे । ज्ञात्वा प्रतिसमाधेयच्छिद्रसुसुप्रद्दुर्नयः ।
अहमस्याविदाचारश्चिरं स्वाङ्गैः सगोपितं । वह्निर्दुर्धर्षमत्याचोद्दितीयमपि कण्टकं ॥ तिलकं ॥
ध्वान्तेऽम्बुधरजालान्ध्यमहावाते रजोभरः । स्वपक्षभेदयोर्ज्ञातकर्णेजपमहोद्यमः ।
कुलच्छेदकृतो राज्ञस्तत्र तत्रातिसङ्कटे । अशान्तजागरोत्थयमनर्थपरिपोषकः ।
सोऽथ शूरपुरेऽकस्माद्बहुभिः सह डामरैः । तेन सम्पूरितः पृथ्वीहरजोलोठकोऽपतत् ॥ तिलकं ॥ १९००

तस्य सङ्कटतः कन्थां प्रयातं वैकृतं चिरात् । पालिभङ्गे तटस्येव प्रावृट्पूर्णस्य लक्ष्यतां ।
निद्राणोपेन्द्रजठरप्रसादनिसृतं जगत् । समेतमिव तत्सैन्यं प्रत्यभाज्जलदागमे ।
यावद्भिः पार्थ्यते नेदृक् सङ्ख्यातुमपि तद्बलं । भक्तव्यकल्पैः सुस्वल्पयोधमध्यगतैरपि ।
तावद्भिरनुगैः पिङ्गदेवद्रङ्गाधिपोयुधि । तद्योधान् याम्यहरितः सरितश्चातिथीन् व्यधात् ॥ युग्मं ॥

ततोऽज्वलैश्चिताचक्रैर्बिम्बितैस्तटिनीजले । मृतानामपि संस्कारः क्रियमाण इवाभवत् । २९०५
इति निस्त्रस्तमृत्युः स कुर्व्वन्नेकाहसाहवं । कथञ्चिदाप्तैरन्येद्युर्भग्नसारोऽपसारितः ।
पुरे स शून्ये सैन्यानि संगृह्णंस्तत्र सर्व्वतः । द्वित्रैरहोभिर्नगरं सुखग्राह्यममन्यत ।
इच्छा पद्मपुरस्कन्दे मन्दत्वं त्रिलक्कोऽनयत् । पृष्ठस्थयोर्यशोराजकम्पनाधीशयोर्भयात् ।
स भृत्यैस्तद्विधस्सिद्धस्यैकस्मिन्न सम्मते । विधेयान्यलवन्यस्य डामरे होलरौकसि ।
द्वैराज्ये सुस्सलस्यापि नैवादृश्यत तादृशः । अनर्थो यादृगुत्तस्थौ तत्सुतस्य समं ततः । २९१०
चतुष्कमवधीर्य्याथ राज्ञा पादगदोपमं । रिल्हणप्रेषितं शीघ्रागण्डतुच्छं व्यपोहितुं ।
प्रस्थितस्तत्प्रमाथाय ग्रामालेस्थोऽन्वबध्यत । व्रजन् प्राग्ज्योतिषं हन्तुं पार्थः संशप्तकैरिव ।
अधावच्चाभ्यमित्रीणस्तान् व्यावृत्त्य निपातयन् । पद्माकरोन्मुखः पृष्ठलग्नान् भृङ्गानिव द्विपः ।
रणश्रान्तेन गमिता त्रियामा तेन रामशे । गर्जन् कुल्यार्पितारातिपृतनानादसंस्क्रिये ।
तत्कल्याणपुरं प्राह्णे विश्रान्तं सोऽयमागतः । रुरोधाभ्येत्य भूयोऽपि बलैर्भरितदिङ्मुखः । २९१५
आपतन्नेव चारातिपदातीन् सम्मुखागतान् । दृष्टनष्टान् व्यधाच्छागानिवार्योऽजगलोगिलन् ।
उद्वृत्तमारुतस्येव तस्यापाते पदातिभिः । तत्यजे रिल्हणः पर्णैर्हेमन्त इव पादपः ।
पश्यतस्तस्य ते विद्रवन्तो जिह्मा न जिह्रियुः । देहस्पृहापारमित्यै कस्यौचित्यमनत्ययं ।
आशीरथापसृत्य स्वैरर्थितो रिल्हणोऽब्रवीत् । नयन् प्रजास्त्वजा साम्यं स्वामिभक्तिच्युतैः स्थितं ।
स्त्रीप्रभावाविशेषेऽपि जनोर्जन्तोर्यदीशिता । भृत्यभावेऽपि योऽनुप्रकृत्योऽधिकस्य जीवितं । २९२०
जातं वक्त्रमरः श्मश्रुराजिनीलाब्जभोज्ज्वलं । जगाकैरवगौरस्य राज्ञः पादान् प्रपद्य यान् ।
स्त्रायन्तु तेषु भ्रूभङ्गभङ्गभ्राजिष्णुभिर्भवेत् । कथं लक्ष्मीविलासैस्तदाषण्डगविडम्बितं ॥ युग्मं ॥
एषा कापुरुषाख्या धीराणां नैव पद्धतिः । यदायासलवत्रासात्सौख्यवैमुख्यभागिता ।
बस्त्रापासन एव शीतजनितत्रासोऽथ तीर्थाम्बुभिः स्नाने ह्रादसुखोपलब्धिरसमब्रह्मानुभावोपमा ।
दैक्लव्यं समरे वपुर्विजहतां नैवं किलोपक्रमे वैकल्याख्यसुखोपलम्भपरमा पश्चात्पुनर्निर्वृतिः ।
एवमुक्त्वा परानीकमेकाकी स व्यगाहत । रक्षन् शरान् हरिप्रोथश्वाससन्दिग्धपल्लवतान् । २९२५
स्वर्णत्सरुप्रभाजालहरितालोज्ज्वलोऽभजत् । खड्गपट्टनटस्तस्य रणरङ्गान्तरङ्गतां ।
तत्खड्गस्य च्युतः खड्गान् जीवैर्जालच्छलाद्ध्रुवं । उत्थाय लग्नं शत्रूणां व्रणैस्तूणमणेरिव ।
आजौ तमनुजग्मुस्ते येरगण्यन्त वैरिणः । तिर्य्यञ्चो लक्ष्यतां यातास्तेषां प्राणास्तृणान्यपि ।
सम्प्रविष्टो मुखान्मृत्योः कैश्चिन्मार्गैः स निर्गतः । तिमेस्तम्मीलितास्यस्य श्रोत्ररन्ध्रैरिवोदकं ।
शश्वत्कुर्व्वन् परावृत्तीः श्रमशान्त्यै विनिर्गतः । प्रक्षीणभूयिष्ठबलो लब्धोत्सेको रिपावभूत् । २९३०
पृष्ठतोऽथ पपाताथ चतुष्कः पुष्कलैर्बलैः । साहाय्यकागतं प्राक्स यं स्वं कश्चिदमन्यत ।
तस्योभयमुखस्यारिसैन्यस्याहेरिवेक्षणात् । न संरम्भे शिखण्डीव परं ताण्डवितो भवेत् ।
तौ व्यूहावथ पर्य्यायैर्मुखपृष्ठं प्रदर्शयन् । सोऽक्षिणोद्युधि मन्थाद्रिर्मथनेऽब्धितटाविव ।

कीर्णनिश्चलयोर्भ्राम्यन्नसकृद्दान्तरे दयोः । कुविन्द इव पूरण्योस्तुरङ्गमजवान्वितः ।

भासः प्रत्ययहीत्तस्य तमेकपृतना रयं । एकतोऽम्भोभरं द्वीपस्येव कूलविलोड्गमः । २९३५

तेन वैरिचमूस्रक्के लुलितायुधकुण्डला । क्रीडता चण्डवेगेन पुरुषायितुमक्षमा ।

श्यामपाण्डून् द्विषां वक्त्रकुम्भान् खेदाम्भमाचितान् । स कुर्व्वन् भूभुजं जाने भूयोराज्ये ऽभ्यषेचयत् ।

स च पाञ्चीहरिश्चास्तामन्योन्यस्य क्षपाक्षणे । सञ्ज्ञौ मान्त्रिकवेतालाविव रन्ध्रगवेषिणौ ।

साहायकागतान् भाचीकृतक्ष्मापतिसैनिकान् । अन्येद्युः सोऽकरोच्छन्नं वनमार्गावगाहिनं ।

पर्य्यन्तशाचान् सञ्चिन्त्य चिल्लकादीनथाययौ । सज्जपालस्तृतीयस्मिन्दिवसे रिल्हणान्तिकं । २९४०

नृपप्रतापम्लपितः स ताभ्यां पर्य्यशोष्यत । वनान्तः शुचिशुक्राभ्यां घुणक्षोण इव द्रुमः ।

चितानलद्रवासारैर्युद्धैः श्रममनाश्रितः । उदयेन शनैर्निन्ये चतुष्कोऽपि मितोश्मतां ।

दारदं तद्बलं दृप्यद्धमसन्नाहवाहिभिः । हयैरवरोहाद्रिकुहरादाहवोन्मुखं ।

तुरुष्कलोकेनाक्रान्तान्देशांस्तद्वशमीयुषः । शङ्कमानैर्जनैर्ज्ञाता कृत्स्ना म्लेच्छावृतेव भूः ।

प्रयाणमात्रान्तरिते धन्ये दारपतावपि । साहसं निःसहायस्य तत्खड्गैरयतोऽभवत् । २९४५

ज्वलत्कनकसन्नाहं तत्सैन्यं स द्विषोऽरुधत् । कचञ्ज्वालावलिं दावं सनिर्झर इवाचलः ।

विधूय जयचन्द्रादीनयप्रस्थानरोधिनः । बलवाहुल्यदीप्तास्ते व्यगाहन्ताहवावनिं ।

तेषां हयसहस्राणि त्रिंशद्विंशत्तुरङ्गमैः । रंहसा प्रतिजयाह निजयाह च गर्गजः ।

तस्यामुच्चङ्गिर्दद‍ृशे पौरुषं तदमानुषं । एकैकस्याग्रतो यत्स वैश्वरूप्यमिवादधे ।

अश्ववल्गाग्रविन्यस्तवक्त्रास्ते विद्रुताः क्षणात् । जगाहिरे कापुरुषा गिरीन् किंपुरुषा इव । २९५०

अभूमिज्ञतया शाद्याच्चैष जातः पराभवः । स्वस्तदस्मान् पुरस्कृत्य जयं प्रत्याहरिष्यथ ।

इत्युक्त्वा राजवदनजयचन्द्रादिभिर्निशि । तथेति मिथ्याकथयन् दारदा विद्रवोन्मुखाः ॥ युग्मं ॥

प्रविश्य धन्यदारेशौ दूरं बलहरो बली । ऐच्छत् सन्नभिसन्धातुं रुद्धा पाश्चात्यपद्धतीः ।

स्कन्धावारेण सार्द्धञ्च दरदां राजवीजिनां । विधातुं विदधे बुद्धिं तं तनस्तारमूलके ।

चिकीर्षति ततस्तस्मिन् मन्त्रेष्वन्येषु दस्युषु । उत्सेहे साल्हणिः कृत्स्नं राज्यं निश्चितनिर्जितं । २९५५

जयाभावेऽप्यनन्तेदृक् सामन्तमहितांस्ततः । भव्योऽस्मि भवितेत्येवं विचिन्त्योत्सिषिचे च सः ।

पद्मोन्माथाद्द्विरदरदनैरप्रियैः पद्मबन्धोरिन्दोः स्पर्द्धचुदयति वपुः खण्डशः स्वं भिनत्ति ।

तापस्त्वज्येन च रुचिरमाभागिभिः सूर्य्यकान्तैर्भद्राभद्रं व्यसनसमये सम्भवेदप्रतर्क्यं ।

योडामरतया भिन्नाः प्रस्वत्कृच्छ्रेऽप्युपेक्षणं । टिक्कादीनाञ्च कौटुम्ब्याद्भूभर्त्तुर्दीर्घमूर्द्धनि ।

अनन्वयतयानन्यसामान्याश्चर्य्यवर्द्धनात् । ततः कृच्छ्रोपयोगाच्च विश्वासस्येव मूर्द्धनि ।

तौ नागराजवदनौ व्यसनावसरे तदा । चित्रं स्वकार्य्यतात्पर्य्यादद्भुतादरतां गतौ ॥ त्रिलकं ॥ २९६०

स्वयं विधेयं नागोऽन्यकृतं तं वीक्ष्य विश्रवं । अदूरमर्थमन्येन कृतं कविरिवाशुचत् ।

स्वामिद्विपक्षं स्वं पक्षीकर्त्तुं कृतानन्तं ततः । सम्यगुक्त्वा राजवदनं मां भजस्वेत्यभाषत ।

सम्प्राप्तं वः प्रतीक्षध्वं तेजोबलहरात्मजं। युग्याधिरूढं किं नाडीमिव स्वां यामिको यथा।
इति ते सन्दिशन्तश्च व्यहसन् संविहाय तं। कामधेनुसमं नागं च्छागाश्लेषो विधिर्न यत्।
सर्व्वः स्वकार्य्यतात्पर्य्यात् प्रवर्त्तेत प्रियाप्रिये। स्नेहं वतान्यदोषे तु न किञ्चिदधिगच्छति। १९६५
ज्योतिस्तर्ज्जितकान्ति दन्तयुगलं बाध्यं सुधादीधितेर्दानास्वादधिया प्रिया मधुलिहां कुम्भस्थली कुम्भिनः।
स्मरस्यैष विरोधभाक् सरसिजस्येत्यत्र मेन्दौ रतिस्तस्याप्यायकृतो हितोऽयमिति नाप्यस्य द्विरेफाद्विषः।
प्रतिष्ठा लोठनं कर्त्तुं ततो बलहरस्य सा। आजन्मवैरं संरेभे तेन भूभृद्धितेच्छया।
स तथा दारदान् भग्नानभिभूभुजेष वः। सभोजाश्राजवदनोहन्यादित्यभ्यधान्निजैः।
दरद्राजानकानीतनेतारौ कम्पनापती। प्रख्यातक्षेमवदनमधुभद्राभिधावुभौ।
अस्यन्नोजसनामा च कोट्टेशो मन्त्रितं रहः। ब्रुवाणास्तद्गृहस्यन्त भोजेनान्तरवेदिना। १९७०
स्फाटिकेनेव सैन्येन तेनाग्रे रुद्धमप्यथ। दिधक्षु राजार्कमहो विशुद्ध्यैर्न्यनेऽपतत्।
पार्थिवानर्थदुश्चिन्तामयत्यन्नपरिच्युतः। स यत्क्ष्माक्षपाचीणसोमसाम्यं समाययौ।
रोगग्रस्ते रणप्रष्ठे पृष्ठगेऽपरि भर्त्तरि। तथाभियोज्ये स्थाने च भयजर्जरतां गते।
आहारस्थं बलहरं विहाय निखिलास्ततः। पलायितास्ततोऽन्येद्युर्विगाह्य हरिभिर्गिरीन्॥ युग्मं॥
दृष्ट्वा सङ्गमतं प्रातरागन्तारः पुनर्व्वयं। कथयित्वेति सम्प्रार्थ्य साल्हणिं सह तेऽनयन्। १९७५
प्राक् पीतकोशो वैवश्यात्स तेषामनुगोऽभवत्। भ्रष्टकार्य्यस्तु वैक्लव्यं स्वभ्रे मज्जन्निवाददे।
वपुः सर्व्वशिरे दृक्करकपूर्णमिवोद्वहन्। अवरोहदनच्छाम्बुसोपानाश्मनिभं मुहुः।
स्नातेन पतितेनेव मुक्तर्श्वोक्ता महीसमं। प्रजतस्तस्य वैलक्ष्यादलक्ष्याक्रमभूम्मुखं।
दध्यौ च धिक् नो ये ग्रस्तप्रभावं वयमीदृशं। राज्ञो दृष्ट्वाप्यनात्मज्ञा जानीमो मर्त्यधर्म्मतां।
प्रतिभाप्रौढनिर्भाततत्त्वानां नान्यथा गिरः। महाकवीनामेतादृक्प्रतापानलवर्णने। १९८०
राज्ञः प्रतापशिखिनः काणाः चोणौ न सन्ति चेत्। तत्कस्मादयमायाताः पदन्यासेऽप्यधीरतां।
अनेकशोऽङ्गवीराणां पीतधाराम्बुडम्बरे। शोषः प्रादुष्कृतो न स्यात्तज्ज्वालासंज्वरं विना।
किमन्तरेण तद्धूममालान्ध्यं प्रोन्मिषद्दृशः। मार्गामार्गविभागस्य परिज्ञाने विमूढता।
मधुमत्यास्तटेऽन्यस्मिन् विवर्ज्य दरदः स्थितान्। वीचीजवनिकाच्छन्नः सोऽत्राप्याथ तटेऽवसत्।
क्रमादुत्खातखेदैस्तैर्नीला स्वशिविरान्तरं। तत्रैष्यतीति सन्धातुं रोहट्टोहः स्पृहातुरैः। १९८५
नृपस्तेषां ह्यगण्यार्थवर्षिणं नयनैपुणात्। उपजीवितुमिच्छाभूत्तद्रक्षणवणिज्यया।
नानेहाविग्रहस्यायं प्रत्यासन्नोहिमागमः। मधुमासि विधास्यामः पुनरारम्भिमुत्तमां।
कालक्षेपे क्षमत्वं चेद्धुद्दराद्राध्वनाधुना। त्वामनिरुन्धे बलिनस्त्विलकस्योपवेशने।
राजानं राजवदनः श्रितस्तैरित्यभावतः। उत्कोच्यतः स्वराड्ग्रान्तर्युक्त्या बन्धुं नराधिपः॥ तिलकं॥
अपि राजपुरीयाणाङ्कौटिल्यन्तैर्हि जीयते। दैर्घ्यं निदाघदस्राणां वियोगदिवसैरिव। १९९०
तथायातमुपालेभे दूतैर्ब्बलहरोऽथ तं। प्रहो निहितवांस्त्वमीतिर्न्नोटितवटाकरः।

उत्साहादाहवस्थोऽपि स तथा गागिभेगिमं। आयान्तञ्च नृपानीकं दृष्ट्वापि न व्यचिन्तयत्।
अकस्मादिक्षुतदरद्राजभोजादिवार्त्तया। न व्यदीर्य्यत यद्धैर्य्यपर्य्याप्तिस्तल्किनाङ्कनं।
अडम्बरालम्बनस्य भेदेऽप्यच्छिन्नविग्रहः। यदयोद्वाङ्कृतं सिद्धोत्तल्कस्यामानुषस्विना।
कालामरोधात्सन्धित्सू धन्यदाराधिपावथ। सोऽयोजयद्विलम्बेन भोजप्रत्यागमाशया। ९९५
ततोऽलङ्कारचक्रः स नेतुं साल्हणिमाययौ। ज्ञातेयाद्द्वारदावेत्य प्रार्थितापरिपन्थिनः।
बद्धा तदनुबन्धेऽपि द्रोहनिर्बन्धिनीः सभाः। अयहीन्मार्गभित्तये निधनाद्भवमायितां।
भृत्यैः सह युवप्रायैर्वीक्ष्य तं मन्तुमुद्यतं। दरातुरन्दरद्राजसैन्यं तद्दैन्यमाययौ।
व्यपोहन्ती बलहरी बाहुभिः कलहं सरित्। कल्लोलास्फालनोल्लापैर्निनिन्देव दरदलं।
हेपितः स्वावरोधैश्च सैर्थ्यैश्च म्लेच्छपार्थिवैः। सैन्यैः कदा न भीतैश्च विड्डसिंहोऽथ तं जहौ। १०००
पुरःसरैर्भग्नसेतुपालैः पारं परं ततः। विद्राविताग्नि स प्राप भिन्दंस्तुर्य्यरवैर्दिशः।
असामर्थ्यं वक्षयिन्त्या स्वस्य चार्थितसन्धिना। आनीतो विड्डसिंहेन दूतः प्रोक्तोऽथ भूपतेः।
असामुष्यानुभावेन तावत्तत्स्वामिना भवेत्। प्रातिसीमिकसामन्तबुद्ध्या स्पर्द्धास्तु धीवरः।
असद्धेयानुसन्धान एव यान्तौ यमान्तिकं। जयराजोऽस्मि चामुष्य प्रभावावेदको दिवि।
तेन दिव्यानुभावेन निर्जयोऽपि जयो मम। पान्थस्य कूलविभ्रंशात्तीर्थे पतनमुन्नतिः। १००५
अथायातः पुरे स्थित्वा कञ्चित्कालं निगेऽविशत्। यमराष्ट्रमसत्कीर्त्तिलसद्वन्दनमालिकां।
अबुद्धा भोजमायान्तं सन्धिं तत्रैव वासरे। सार्द्धं दारेशधन्याभ्यां स राजवदनोऽप्यगात्।
अभ्यागतं तं व्यावृत्य षष्ठं षष्ठं मनस्विनां। आदाय तावताभ्यर्णं प्राविशतां क्षमापतेः।
अहङ्कारादिमोहाद्वा विमर्षेण बहिष्कृतौ। उपेक्षामभजते भोजे भजते राजवीजिनि।
आहूतस्तु हठोत्कण्ठाभाजापि प्रभुणासकृत्। अनिःशेषीकृताराति न व्यावर्त्तत रिल्हणः। १०१०
प्रभोः पुरस्तात्कार्य्यान्ते तेन स्थातुमशक्यत। प्रसादाकाङ्क्षिणा सूदेनेव भोक्तुं नहि क्वचित्।
द्विधा कृता येन युद्धे पृथ्वीहरसुतद्वयी। मगधेन्द्राकृतिर्भीमेनेव कार्य्याच्चमाभवत्।
मातृकुक्षिमिव स्वाभ्वीं तेनाजौ लोष्टकः कृतः। खाण्डवे खण्डितः सर्पद्रव गाण्डीविनाविशत्।
भजंस्ततुच्कः सङ्कोचं दुर्भेदं चिल्लकालयं। स्वकायकर्परं दर्पोज्झितः कूर्म इवाविशत्।
निःशेषीकृतकार्य्यः स शौर्य्येणैव महीपतेः। पार्श्वं पादनखज्योतिः पद्मबन्धाप्तये ययौ। १०१५
प्रतापैर्नृपतेरित्थं विप्लवः शोषितोऽप्यभूत्। अमात्यमतिदोषेण भूयः प्रादुष्कृताङ्कुरः।
दण्डार्हो राजवदनो दानेनाप्यायितो यतः। निर्भयं भोजमायान्तं प्रतिजग्राह तं पुनः।
उत्कोचपरिणामान्तं सोऽथ स्थापयति स्म तं। दिन्नाग्रामाभिधे स्थाने स्वाशकाभां निवेशने।
इत्येनमब्रवीच्चक्षेदायास्यो मानुगामिनः। मितानुयायिदारेशः प्रायास्यद्धे चरान् मम।
सोत्कम्पः साहसस्रोतःपातिऽनीयत नौरिव। चिन्तयैनापि संशय्य शीतिरज्जुप्रसारणात्। १०२०
व्यसनोल्लासवैवश्यं विश्राम्यत्युर्व्यचिन्तयत्। येनाव्यवस्थाप्राथम्यं स आत्मः पुनरग्रहीत्।

अलङ्कारादिभिः स्वास्थ्ये स्थाप्यमानोऽपि मन्त्रिभिः । अत्यजन्नेव कौटिल्यमजितात्मेव दुर्ग्रहं ।
गदं वद्य इवापाकं तमवज्ञाय पार्थिवः । पक्षगण्डानिवारेभे रिपून् पाटयितुं परान् ।
आगन्तव्यं त्वया पश्चाद्यात्वस्मासु प्रकम्पतां । भोजमुक्तेत्यलङ्कारचक्रोऽगाद्विसंवादतः ।
तं जयानन्दवाराख्योदस्थुरानन्दवारजः । अन्वयुर्व्विक्रमादग्राः परेऽपि क्रमराज्यकाः । १०२५
अग्रस्थितो राजगृह्योऽलङ्कारः स्वल्पसैनिकः । वालुकासेतुकल्पस्तु जज्ञे सिन्धुरयैरिव ।
स तु शत्रुभिराधाजिक्षोभसम्भावनां विशां । उदपादयदेकाकी कुर्व्वन् बन्नभिराहवं ।
आपानरभसक्षुभ्यद्रक्षःसम्भ्रमदर्शिणं । रणं जगाम गन्धालमन्नमासन्नपरिष्कृतः ।
स तूलकूटमिव तत्कटकं विकटं द्विषां । किमन्यत्प्रेरयत् क्वापि प्रभञ्जनदवाञ्जसा ।
ग्रासाय रटभ्रकङ्कादि पातिमातस्य तत्यजे । आनन्दवारसूनुः स हत्वा तेनेषुणा रणे । १०३०
भोजस्योत्थातुकामस्य जिघृक्षोः कार्मुकस्य तत् । पङ्कप्रधावत्ककरव्याधन्यायोऽव्यवर्द्धत ।
अनुद्धयनसामर्थ्यः श्राम्यति क्रोडो यथा । धावन् पङ्के पतन् व्याधोऽप्यनुधावन् यथाम्बहं ।
प्रसङ्गे साहसस्यैवं भोजः कैश्यमगात् सदा । तत्प्राप्तुमिच्छुर्भूयोऽपि मतिमांहं मुहुर्मुहुः ॥ युग्मं ॥
दिन्नाग्रामस्थिते भोजे स राजवदनोऽप्यगात् । पुनः किन्नारचण्डालाः श्रेयसोत्सुक्तिमीशितुः ।
डामरा भग्नमङ्गताभूयः पूर्व्वाधिकां ततः । कन्थान्ते ग्रन्थयामासुर्म्मुख्यां शार्य्यशालिनः । १०३५
ते द्वारपतिमायातं सोढुं शेकुर्न्न केवलं । अग्रकैराहवैर्थ्यावृत्तात्पथ्यादुदवेजयन् ।
तेषां त्राणार्थमन्येषामुक्तानर्थमपाययौ । हृष्टोऽलङ्कारचक्रेण नीविन्दत्त्वा स सात्स्मृणिः ।
तेषां परेद्युः पार्श्वं स यियासुरभक्तयदा । छायाश्रमं श्रान्तसैन्यो द्वारेशोऽबुद्ध तं तदा ।
अजानन्निव तेषां स व्याजसन्धिं निबद्धवान् । मिषात्कुनोऽप्यगात्तिर्य्यक् स्थितं सन्तारमूलकं ।
तस्मिंस्तत्र स्थिते दूरात् कुतस्त्यामपि पुत्कृतिं । श्रुत्वा भोजोऽवदत् सार्थं किमपि व्याकुलोभवन् । १०४०
निजैर्व्विहस्यमानोऽपि चामात्तस्मादहेतुकात् । व्यरंसोत्सम्भ्रमात्मासौ चक्रे सञ्ज्ञां स्तु वादिनः ।
त्रस्तोऽलङ्कारचक्रोऽथ दग्धग्रामाच्यतोद्रुतं । क राजपुत्त्रइत्येवं कथयित्वा पलायितः ।
उदतिष्ठत्ततोग्राममध्यात्तूर्य्यध्वनिर्महान् । आस्कन्दावेदकः सेनानिनादश्च क्षपामुखे ।
अलक्षितो ध्वान्तमध्ये भेजे भोजः पलायनं । श्वः कर्त्तव्येष्वलङ्कारचक्रोयुद्धाय सन्दधे ।
दन्तोद्वाराधिपेनाग्निर्म्मार्गवर्त्म प्रकाशयन् । ध्वान्तध्वस्तात्मना तेषां तदाभूदुपकारकः । १०४५
द्वाराधिपस्य चाभ्यन्तः सन्धिं भोजप्रतीक्षया । श्रुत्वा ततश्च वृत्तान्तं भङ्गं ते डामरा ययुः ।
असन्त्यजन्नपत्यादिबन्धं धीरोचलाश्रयात् । आजिं स भोजोऽलङ्कारचक्रेणामङ्गलावहं ।
संरम्भात्कर्त्तुमारेभे सामर्थ्याश्च चक्रमे । भोजस्तत्राप्यभूत्तर्धान्नाहारादिसुखान्वितः ।

त्राणाग्निजस्त्रिपुरनिर्द्दहने प्रतापः पाथोनिधेः प्रमथने वडवाग्निजन्मा ।
आसाद्य मन्दरनगेन समागमं हि न क्वापि पन्नगपतेः सुखसौख्यमासीत् ।

क्षुत्पिपासाश्रमं हन्तुं प्राप्तः स्वविषयावनौ । अलङ्कारात्मजैर्भूयोबन्धुं भोजोऽभ्यलक्ष्यत । १०५०

पितुर्मतेन बुद्ध्या वा स्वया तत्तद्दिधित्सतः। सोऽभिसन्धाय निर्य्यातः प्रापाथ विषयान्तरं।
ततो बलहरेणैव कृत्यं निश्चित्य कार्य्यवित्। अनास्थोऽन्योलवन्येषु दिक्षायामं पुनर्य्ययौ।
द्वाराधिपो हितोद्वारधीरोऽप्यत्रान्तरे चमः। चतूरागेण भग्नाभियोगोऽकस्माद्व्यधोयत।
भोजाय दातुमैच्छद्यां डामरस्ते सुते ददौ। पर्म्माडये गुल्हणाय राजजाय च निर्जितः।
रोगखण्डतया दण्डप्रयोगावसरे कृते। तत्र साम प्रयुज्यैव द्वारेशोविवशोऽविशत्। २०४५
अभियोगक्षणे तस्मिन् ययौ भारसहः क्षयं। दुर्न्नामकामयच्चामः षष्ठश्चन्द्रोऽपि गर्गजः।
तन्नामयाविन्ध्यवार्त्तोद्रिकौ तमनुजं निजं। चक्राते वसुधां दुस्थामास्कन्दाद्यैरुपद्रवैः।
त्रिल्लकः प्रबलैरन्यैः सहाभेदं प्रवर्द्धयन्। नाग्रहीद्दियत्वैकाग्रः सान्त्वनामपि भूपतेः।
षष्ठे निष्ठां गते रोगमग्ने द्वारपतावपि। नियुक्तः क्ष्माभुजा धन्ये निरगात्तारमूलकं।
भोजस्त्रुतोमतोऽन्येषां बलिनां गोचरेऽपतत्। प्राप्तप्रतिष्ठो निस्तीर्णदेशादा साध्यतां व्रजेत्। २०५०
इति सञ्चिन्त्य सामाद्यैरुपायैस्तं जिघृक्षुणा। क्ष्माभुजा मर्म्मसंरम्भो विदधे सोऽभियोगभाक्॥ युग्मं॥
अज्ञातोदर्कवैषम्याद्दुर्नीतिः सा महीभुजां। व्यावृत्त्याबाधताच्छिन्नपुच्छाकृष्टेव पन्नगी।
बलिनं राजवदनं नृपं चावेत्य निर्ब्बलं। आभ्यन्तराश्च वाह्याश्च विक्रियां यत्क्रमाद्ययुः।
　　छिद्रान्तराणि सुलभानि सदैव हन्त पातालरन्ध्रसरणैरिव दण्डनीतेः।
　　वक्रीभवन् प्रसरमन्तरसम्प्रविष्टोयात्यप्रतर्क्यनियमात्पतनं भजेद्वा।
भोजत्यागोऽर्थितो राज्ञा क्षीणार्थोऽसौ प्रजेदितः। उल्लंघ्यमुं बलहरस्तस्य वृत्तिमकारयत्। २०५५
तां लब्धप्रसरां मायां राजपक्षे विलोक्य सः। युक्त्यान्तराणि संलेभे प्रयोक्तुं नीतिकौशलात्।
सन्धिं पदे पदे बद्ध्वा सार्द्धं बलहरादिभिः। कुर्व्वन् गतागतं धन्यो जनस्यावाप हास्यतां।
अश्वद्व्यावर्त्तमानस्य राजकार्य्यस्य नावधिं। अरघट्टघटीयन्त्रगुणस्येवाससाद सः।
तस्य चक्रदतोद्भ्रान्ते कर्त्तव्ये तेल्लणभागपि। भेत्तुं प्ररोढुं वाप्यासीन्नयो वाण इवाक्षमः।
नीतराजद्वये व्यग्रः शेषस्यैकस्य विग्रहे। चतुरङ्ग इव क्रीडन् विवशोऽभूद्दिशां पतिः। २०६०
बहुलक्ष्यः प्रदानार्थं ततश्च छद्मना परान्। भञ्जतो वाजिपत्त्यादि नाप्यामीन्नाप्यजीगणत्।
दस्युषु द्यूतसङ्गेषु शीतापायप्रतीक्षिषु। नागाद्बलहरः स्वेषामुन्मूलनमशङ्कत।
सामर्थ्याशिथिलामित्रभावे सूचितविप्रिये। तस्मिन्धावति धन्ये च शश्वत्सोऽवेपताकुलः।
ससाक्ष्य सार्द्धं भोजेन धन्यं समदिशत्ततः। बद्ध्वार्प्पयत नागं मे भोजं दास्यामि वस्तुतः।
भूरिकार्य्यकृतं स्वस्य बन्धनार्थावहं रिपोः। धन्यो व्यसनवैवश्याद्धियं नाबुद्ध तस्य तां। २०६५
पार्थिवाः स्वार्थसंसिद्धिलराविरतसत्त्वया। धिया विरुद्धं यत्किञ्चित्कुर्व्वन्तीति न नूतनं।
काकुत्स्थोऽपि प्रियाप्रार्थी व्यग्रः सुग्रीवसंग्रहे। वीरोऽविधेयं स्वार्थान्ध्याद्वधं व्यधित वालिनः।
संहृत्य सत्यनित्यत्वं राज्यगर्ब्बाविशुद्धधीः। आचार्य्यं पाण्डवो राजा धर्म्मनिष्ठोऽप्यघातयत्।
आभिक्षु विग्रहान्नित्यद्रोग्धुर्नागस्य विग्रहः। स्वार्थापेक्षो तटस्थस्य तत्कालं न विगर्हितः।

अगृहीत्वा तु भूभर्त्ता कश्चिद्भोजार्पणे पणं । सोऽवष्टम्भीत्यभूत्तस्मिन्मन्युर्म्मतिमतां मनाक् । १०८०
यथा तत्कृत्यमायत्यां हितं जातं तथैव चेत् । विचार्य्याकारि राज्ञा चेत्केमुषीयममानुषी ।
विभिन्नइव भोजस्तु नागं समदिशद्यया । दित्सुर्व्वनहरे राज्ञे त्वर्द्धपणपणेन तां ।
बन्धमश्रद्दधानोऽस्य राजस्वामादसौ श्रयेत् । स विदन्नथ माध्यस्थ्यमिति तं हि तथावदत् ।
षष्ठचन्द्रे गते निष्ठां जयचन्द्रेण पार्थिवः । सङ्गृहीतेन तं नागं पार्श्वं प्रावेशयत्ततः ।
पक्षीकृतः क्ष्माभुजायं हन्यामस्मान्नयादिति । चलन्तमपि तं भोजस्तन्मन्त्रिणमरोधयत् । १०८५
तथेति जानन्नपि तं कष्टोऽस्मीत्यैतरनीशतां । यातः किमपि हन्तेति दूतैर्नागोऽप्यभाषत ।
नियतं नियतिस्रोतोगर्भे जन्तोर्निमज्जतः । कथ्यमानं तटस्थेन श्रोतुं न श्रवणे क्षमे।
नागे बद्धे तत्कुटुम्बैर्भीतैरेत्य समाश्रितः । मायाशाली बलहरो दुर्द्दर्शः समपद्यत ।
भोजनिष्क्रयविक्रेयं तमादाय ययौ ततः । रिल्हणेन समं धन्यो धावन्बलहरान्तिकं ।
सान्तर्हासैर्मोहयन्तः प्राक् नागं दत्त मे ततः । भोजं दास्यामि व इति ब्रुवन् भ्रमयति स्म सः । १०९०
बद्धमूलतया दूरं दुर्द्दर्शायोद्धुमागतं । सर्व्वं तच्च तयोस्तन्त्रं निन्ये कृत्यविधेयतां ।
वर्षयुद्धापकर्षादिभङ्गिभिस्तौ ततोऽभ्यधात् । इतोऽपसृतयोः कुर्य्यां युवयोर्मतमित्यसौ ।
एकप्रयाणान्तरिते स्थितयोः पथि चाकरोत् । कार्य्यान्तःपातवैवश्ये तयोर्मतिविमोहनं ।
काचिद्बलहरस्यासीत्पर्य्याप्तिर्धैर्य्यसत्त्वयोः । निश्चायायतने काले वीराणां विरलैव या ।
तथा ह्यविरतमार्गाय साहसात्पार्श्वमीयुषे । द्रुह्यति स्म न धन्याय लोभाद्भोजाय नापि यः । १०९५
मतेर्व्विमोहे नागं चेद्दद्युर्मे सचिवास्ततः । कुर्य्यान्तं स्वपदेऽभ्यर्थ्य चकारेति च चेतसि ।
नागासान्निध्यलब्धर्द्धिर्दार्ढ्यार्थं गूढवैकृतः । भ्रातृव्योऽपातयन्नागं धन्यादिर्नाष्टकाभिधः ।
सचिवैर्निहते नागे निर्द्दैवहितमोहितैः । दुर्मन्त्रितं नरपतेः स्वैः परैश्च व्यगर्ह्यत ।
स्वजातीयबधक्रोधविरुद्धैः सर्व्वडामरैः । नागानुगैश्चाश्रितोऽभूत्ततो बलहरो बली ।
द्रोहिणोऽव्यसनापातवैवश्यात्क्रमतः पथि । अकार्य्यं कुर्व्वतः कार्य्यं सिद्धः संसाधयेद्विधिः । ११००
उद्यद्दुःसहवित्ततानवतया बद्धावधाने मनस्युन्मार्गभ्रमणेऽवशस्य रभसात् श्वभ्रे परिभ्राम्यतः ।
अन्योपाहितकाशपृष्ठलुठनात् सन्दर्शिताङ्कच्युतेर्जन्तोर्हन्त तनोति दुर्गतिशमं रम्यानुलोम्याविधिः ।
तथा निरनुसन्धानं नागस्योसचिवैर्हतं । नावुद्ध भोजः सञ्जातत्रासस्त्वेवं व्यकल्पयत् ।
लब्धवर्णस्य नावर्णावहं कर्म्मेदमीशितुः । अलब्धपणबन्धस्य वाञ्छितापत्तिशङ्किने ।
यस्य युद्धमिति व्ययं हर्षादाशामतापि यः । भोजमन्यकरस्थोऽयमशक्यो ह्यन्यथा मम ।
उक्तेति मोहयन् धन्यमुख्यान्मुग्धोऽस्मि सन्दिशेत् । इति मां राजवदनः स्थितस्तन्नूनमन्यथा ॥ युग्मं ॥ ११०५
आभिचुर्विश्वाट्टाहसुभिक्षस्यानुबन्धिनः । किं राजवदनोऽप्येष लोभात्सम्भाव्यते न भूः ।
अथाविशङ्किनस्तस्य व्युदासायाश्च स्वाशकाः । रक्ताद्रक्तान्तिसन्माहि कोशपानं प्रचक्रिरे ।
प्रादुष्कृतभियः क्षिप्तरक्षिणोऽमुष्य तिष्ठतः । विश्वासार्थं बलहरो विरलः पार्श्वमाययौ ।

अमात्यमतिजाड्येन नष्टे कृत्येऽथ कृत्यवित्। स्वयमुत्तम्भनं नीतः संरम्भेऽसमञ्जसो नृपः।
चैत्रः पादपमण्डलस्य तटिनीतोयस्य वर्षागमः सत्कारो गुणगौरवस्य नयनप्रेम्णोऽन्तिकासेवनं।
ऐश्वर्य्यस्य महोद्यमो जयविधेर्गाढाविषादग्रहः कर्त्तव्यस्य च सिंहदेवनृपतिस्त्यागो न तत्वाग्रहः। १११०
प्रग्राहेणेव कृत्यस्य हठेन ह्रतोऽन्तरे। प्रातिलोम्यं श्रितवता पारङ्गन्तुं न पार्य्यते।
अतोधूर्त्तानुपोभुग्ध इति ज्ञातोऽरिभिर्मुधा। भोग्यंस प्रदर्श्य यस्तेशां यतते स्माभिसन्धये।
स हि यत्तत्प्रदानेन भजन् भोजान्तिकस्थितीन्। तस्याविश्वासपात्रत्वं सन्त्वस्तस्याभितोऽनयत्।
गन्धेन वासितोत्सङ्गाः कुरङ्गार्य्याङ्गजन्मना। प्रज्वलन्त्यौर्विभाव्यन्ते तटिन्योऽपि कवाटिभिः।
नीडस्थान्तःसरन्ध्रस्य सर्व्वो हि भयं स्पृशन्। जाले द्वारायबद्धे च निर्गमे पतनं विदन्। १११५
तास्मिंद्यथा खगोभोजस्तथान्तःस्थैर्य्यविश्वसन्। बहिर्भूतेन रुद्धाभ्यां प्रस्थानेऽप्यभजद्भयं ॥ युग्मं ॥
तदा स दौस्थ्यातिथिना प्राप्तः प्रेत्त्वत न त्तणं। मनोविनोदनं किञ्चित् कृत्यं लोकद्वयोचितं।

उग्राभिषङ्गमनुषङ्गि परस्य दुःखं हन्ताश्रयं व्यथयति प्रसभार्द्रभावं।

बद्धः सरोजकुहरे विरहार्त्तनादैश्चक्राभिधस्य मधुपोऽधिकमेति दैन्यं।

रणे पूर्णव्रणाश्यानशोणितो लूनकुन्तलः। फेणाङ्कार्ध्वाननः क्रन्दंस्तेनैकः प्रैत्त्यत द्विजः।
स पृष्टोविस्मृतैर्नीतं सर्व्वस्वं विचतं तथा। स्वं डामरैर्निवेद्यैनं निनिन्द त्रातुमत्तमं। ११२०
स्वदौस्थ्यार्त्तं मनस्तस्य दुःखेन व्यथितोऽन्वहं। घट्टितार्द्रव्रणइव प्राह स्मेति स सान्त्वयन्।
गर्हार्होऽस्मि न ते ब्रह्मन् योऽनुग्राह्योऽहमीदृशः। विषमे वर्त्तमानश्चेत्यथ सोऽपि तमब्रवीत्।
दुर्ग्रहेणामुना ब्रूहि कोऽर्थः पार्थिवपुत्त्र ते। सारासारविदोयूमः कुले जातस्य मानिनः।
प्राणान्सन्देहनारोप्य प्राणस्य प्राकृताश्रयान्। पीडयित्वा विशः क्लेशैः कार्य्यं किमिव पश्यसि।
यश्च ते प्रतिभात्येव जेतव्यो विदितो न किं। अभिशोचः स सारङ्गः परशौर्य्याग्निमज्जने। ११२५
यत्र शस्त्रशलाकापि विकला तद्विधीयते। इन्दीवरदलद्रोण्याघटनां स्फाटिकाश्मनः।
पृथ्वीहरावतारादिप्रत्यनीकिजितः परे। के नामास्य न सङ्कर्षे क्षुद्रप्राया दरिद्रति।
किं दृप्य एव बुद्धापि कृत्यं दैराज्यजीविनां। भृत्याशयाः फणिग्राहिग्रहीताइव भोगिनः।
जातैः क्ष्मावलयोदरे फणिकुलैः धिग्भोगिडिम्बैर्मुधा व्यालग्राहिविकासितस्य कुहरे ग्रासस्य हा गृह्यते।
एतान्भित्तयितुं नतु प्रर्थयितुं ते जीविकायै जनत्रासार्थं ननु कारयन्ति हि स्वतेर्निर्मज्जनोन्मज्जनं।
इत्युक्तवन्तं तं सान्त्वयित्वा भोजो व्यसर्जयत्। तदेव चाशु व्याकोशविवेकः समपद्यत। ११३०
भव्यात्मत्वं प्रशममहिमोल्लासने हन्त हेतुर्भावानान्तु ध्रुवमपरथा मार्दवं क्रूरता वा।
स्पृष्टं पादैरस्तमहसः स्यात् कठोरं हिमांशोर्य्याति ग्रावाप्यहह रभसादार्द्रतां चन्द्रकान्तः।
राजन्याभिजने जातोऽप्यनञ्जलमशिक्षितः। सोऽन्तरं स्वस्य राज्ञश्च मुकुर्महदचिन्तयत्।
गुणैः शौर्य्यनयत्यागसत्यसत्वादिभिः प्रभोः। पूर्व्वेऽप्युर्व्वीभुजः खर्व्वाः क्षुद्राः स्पर्द्धासु के वयं।
तस्य प्रभावदीप्तेऽपि समये चान्तिशीतला। शक्तिर्जयजडत्वेऽपि मुग्धानां नोमहोष्मता।

क्ष्वेडाग्नितापनिर्निद्रोरगसङ्गमेऽपि तुङ्गस्य चन्दनतरोरपि शीतलत्वं ।
काले हिमर्त्तुपरिनिर्भरसंश्रयेऽपि निम्नस्य कूपकुहरस्य महोष्मयोगः । ११३५
कुतोऽपि पर्य्यटन्नार्य्यं मुनिं नृपममुं विना । प्राप्य कस्य पुनः प्राप्यमप्यशुद्ध्या न बाधितुं ।
भ्रष्टं निर्झरवारि शुभ्रमचलैः क्षोणौ च भूयः क्वचित् लभ्यं लभ्यमथाभ्रतः कलुषतादृष्टं प्रकृष्टं न तत् ।
निर्यन्निर्भरनिम्नगाम्बुनभसा प्राप्येत नित्यं दधत्स्थानेयत्वमुपेत्य शुद्धिमधिकां नार्द्रैर्हिमार्द्रैर्नगैः ।
तदर्थमत्र यथिनोथाऽनर्थोग्रथितात्मनः । स तेन स्वस्थतां नेतुमर्थितो न स्पृशेद्दृषं ।
शोषाय योऽस्य दवदक्रिमदारमुष्मिन स्वस्थे स तेन शिखिना स्वपितः समीपं ।
अभ्येति चन्दनतरोर्दवदाहशान्त्यै यदि प्रियकृदेष न तस्य किं स्यात् ।
समयोद्गतात्र्हदपकर्त्तेव भूपतिं । लोकनाथं तमुद्धर्त्तुं धीरं धन्यः पुनः पुनः । ११४०
राजप्रासादसोपानान्वेषी वलहरान्तिकं । राजदूतमथायान्तमेकमेकं व्यलोकयत् ।
दरहृष्टं व्रजन् दृष्टवाक् प्राक प्रष्टुमन्तिकं । स नमन्तं तमानीय ततः स्मेरदवाब्रवीत् ।
राज्ञः किमन्यमस्थाने सन्धिं बध्नात्यमी मया । प्राज्ञैर्हि भिषजा भोज्यमातुराय समर्प्यते ।
तत्तस्याश्रद्दधानस्य नर्मस्मेरस्य जानतः । प्रत्ययोत्पादनं तैस्तैरालापैः किञ्चन व्यधात् ।
निर्दम्भभाषितैरूढविश्रम्भः स कथान्तरे । अथाभिगम्य राजानं स्तुवन् भोजमभाषत । ११४५
राजपुत्राभिजातस्य पादच्छायास्य लभ्यते । स्वर्णाद्रेरिव कल्याणप्रकृतेः पुण्यभागिभिः ।
अनुवृत्त्यातिमृद्व्यापि तस्यापोह्यत वैकृतं । ज्योत्स्नयेव शशाङ्कस्य परितापोष्ण्यमम्भसः ।
अपि स्मरसि चारुत्वे नियुक्तोऽस्मि महीभुजा । विश्रतस्ते दरद्देशमभूवं पुरतः पुरा ।
ततो निवृत्तो वृत्तान्तं मुख्यमाख्याय तावकं । कालं क्षेप्तुं कथादैर्घ्यं नयन् मध्ये तमभ्यधात् ।
क्षुत्तृडध्वक्लमश्रान्तानिव तानवलोक्य मां । निन्दतः स्वानुगान् भोजं निर्भर्त्स्यैव तदाब्रवीत् । ११५०
स दैवतमिवास्माकं कुलालङ्करणं प्रभोः । वयं त्वसुकृतो यस्य नाप्नुमः पादसेवनं ।
गण्याः पर्य्यन्तनिःसारास्तत्सम्बन्धादिमे वयं । चन्दनभ्रान्तिकृत्काष्ठं यत्स्यात्तद्गन्धवासितं ।
तच्छ्रुत्वैव दयार्द्रत्वं त्वयि तातः स लम्भितः । पृच्छन् पितेव किं गर्भरूपो वक्तीति मां पुनः ।
तन्निशम्यैव भोजस्य द्रवीभूतमभून्मनः । सोऽन्तर्बाष्पोऽप्यपश्यत्तं सान्त्वयन्तमिवाग्रतः ।
सुव्यक्तमात्रासम्बोधमुग्धत्वेन विहीयते । तत्त्वचित्कारणज्ञानादन्तःकरणवेदना । ११५५
अश्रद्दधानस्तामिच्छां भोजस्याकृच्छ्रवर्त्तिनः । प्रतिदूतीकृते तस्मिन् धन्यो न प्रत्ययं दधे ।
देविताभूद्यथा नागवृत्तान्तेन भवेत्तथा । महीभुजं मोहयितुं मायया दीयते मया ।
मा भूद्विन्नोऽयमित्येवमुक्त्वा वलहरं रहः । व्याजार्जवेन भोजस्तु सन्धिबन्धाय तत्वर ॥ युग्मं ॥
तत्कालयोग्यसाचिव्यशक्तिकाचतुरस्तया । तेनाशु दैशिकापत्यमेको दूत्येऽप्ययोज्यत ।
स बालकतया नित्यस्वतन्त्रशक्तिकां स्वयं । आचरेदिति नाशङ्का भोजे वलहरोऽभजत् । ११६०
पार्थिवः प्रार्थितः सन्धिदूतमात्तं प्रतीच्छते । प्रत्यागतेन तेनेति ततो भोजोऽभ्यधीयत ।

तत्रासन्निहितान्याप्तः स्त्रीत्वादप्रतिभामपि । धात्रीं नोनामिधानां स्वां राज्ञोऽभ्यर्णे व्यसर्जयत् ।
मृतेन पित्रा मात्रा च हीने तमनुयातया । मातृकृत्यं यथाचासीच्छैशवे माननीयया ।
पत्युः प्रीत्यै विसन्धानध्वंसाकल्पादिकल्पनात् । सखीकृत्यं सपत्नीनां यथा शान्तेर्ष्यया कृतं ।
ह्रासोल्लासोहि कार्य्याणां योग्यकृत्याप्तनिश्चयात् । न यां सुचरितैर्यां त्वाम्लत्वभ्रान्त्या जातु वीक्षते । ११६५
श्वशुरेण प्रजाभिश्च कृतं राज्ञोऽभिषेचने । श्राश्रास्यं वा महादेवी पट्टबन्धं समादधे ।
अपत्यप्रियताभागलोभभर्तृप्रसादनैः । प्रेर्य्यमाणाप्यकार्य्येषु बुद्धिर्यस्यात्र धावति ।
अत्रान्यत्र च सन्धाने जाते भर्त्तुरभिन्नधीः । भाग्योदयेष्वनुत्सिक्ता या चाखण्डितसद्व्रता ।
आवाल्याद्भावविद्भर्त्तुः कुहृत्यनुहृता न सा । कार्य्यमध्यं विगाहेत मानाभिजनरक्षिणी ।
इति कल्हणिकादेव्या माध्यस्थ्ये स धियं व्यधात् । प्रस्थानपदयात्रां सा सीमन्ताप्रापणावधि ॥ कुलकं ॥ ११७०
गुप्त्यै लग्नकवित्तादिपरार्ध्यं मध्यपातिनं । पाथेयार्थं पृथुस्वर्णभाजिकोशादि चात्मनः ।
प्रापयामास किञ्चाष्टौ प्रकृष्टाभिजनोद्भवान् । पालनार्थं राजपुत्रान् देवीवत् सर्व्वमप्यिदं ॥ युगलकं ॥
वाचकन्तद्गृहीत्वा तामागमत् पार्थिवेन सः । धात्रीं स कारयन् धन्योवह्नेच्छासिद्धिनिश्चयां ।
विहितप्रत्ययस्तस्याः सद्यः स्नात्तु महीपतिः । रागधर्म्मस्य च वसन्नासीद्दोलाकुलाशयः ।
स हि दध्यौ निर्विरोधो वैराग्येणाथ मायया । सङ्कटान्मोचितव्यासौ यायात्कालेन विक्रियां । ११७५
अनिःशेषितजीमूतजालमाविर्भवन्नविः । अनूनक्लेशशेषश्च विवेकेन स्फुरेच्चिरं ।
मुग्धानिरनुसन्धाननागवाधादवत्य नः । स्वार्थस्य सिद्धये माया तेनेयं निरमायि वा ।
लब्धलक्षे परिक्षीणे शक्तो युनि गणाश्रिते । क्षत्रधर्म्मस्थितेनेदृग्विवेकः क्वापि लक्ष्यते ।
अनलिकुङ्कुमं पुष्पमपुष्पं वीरिणः फलं । अकालपर्य्ययापेक्षं वैराग्यं वा महात्मनां ।
न त्याज्या राजपुत्रोऽसावेवं मायानिधिर्यदि । एवं विवर्त्तस्वेत्तस्मिन्नदृष्टे किं दृशोः फलं । ११८०
राज्ञी राजात्मजास्वैते प्रतिष्ठाभङ्गशंसिनः । ऋजुप्रभावात्सुस्पष्टमन्यत् कार्य्यं न मन्यते ।
अटन्ती कुटिलं स्पष्टं सरित्स्वैर्व्वन लक्ष्यते । कान्ताकुन्तलनिस्यन्दी तोयविन्दोरिव क्रमः ।
इति ध्यात्वा राजधर्म्मं सत्यप्रज्ञोचितं व्यधात् । धन्यरिल्हणयोः कार्य्यं श्रुतावन्यान् विसर्जयन् ।
स्वस्यैवार्थस्य दार्ढ्याय साल्हणिस्त्वां दिदृक्षते । समागमायेत्युक्त्वाथ धन्योदूतैरनीयत ।
मा भैषीरेष सन्धित्सुः सैन्यादिति मितानुगः । अवर्त्तिष्ट तटिन्यास्तु द्वीपान्तस्तत्प्रतीक्षया । ११८५
सरित्सा जानुदघ्नाभ्मा भूत्वा चर्म्मद्रुते क्षिभे । गगणालिङ्गिभिर्भीमा तरङ्गैः समपद्यत ।
अवाप्ता चेष्टयालङ्घ्यभावं यान्त्यपि दन्तिनां । रुद्धः सिन्धावभूत् सोऽथ द्विषां रक्षैर्विणां वशे ।
सिन्धोरभयतस्तोयैर्व्याप्ततीरभुवोऽन्तरे । ते हिण्डीरोपमां प्रापुः पिण्डिताः पाण्डुत्रासमः ।
खशकानां सहस्राणि भोजस्य पतिते बले । स्थितवन्ति निहन्तुं तं तया स्थितमचिन्तयत् ।
दृग्भ्यां सम्भ्रमदीनाभ्यामघशान्त्यै स्पृशन्निव । कर्णौ मल्हणसूनुस्तान् सन्तर्ज्य हृजिनोऽब्रवीत् । ११९०
निर्दम्भमस्य विश्रम्भाद्धावतो विहिते विधेः । निरत्ययो निपातः स्यान्नियतं निरये पुनः ।

हतेऽस्मिन् बहुभृत्यस्य न च शक्तिक्षयः प्रभोः। नैकपत्रक्षये तार्क्ष्यरंहः संहारमर्हति।
अपि वा वाच्यता राज्ञामेवं विश्रम्भबाधनात्। तुल्यस्तुल्येन कर्त्तव्यं किमनुध्याय बध्यते।
यथायं हन्तयेऽनन्यकर्म्मा रूपं निषेवते। तथा ममापि यत्नोऽयं तत्स्वग्रासादने यतः।
युक्तमित्यादि तेनोक्ता अपि निश्चलनिश्चयाः। ते न्यषिध्यन्त निर्ब्बन्धात् प्रतिज्ञायात्मनो वधं। ११९५
राज्ञा तथैवादारिद्राच्छिद्रं तद्रचितुं गतः। कारिताः कोशपानं ते तमर्थं सोऽपि बाधितः।
तेनावेदितनिर्व्याजतया धीरो महीपतिः। अनुध्यायाथ सन्दिग्धं सन्धिसिद्धिममुग्धधीः।
अज्ञातनिश्चयः सिद्धेर्व्विनान्तःकरणं परैः। अथ प्रास्थापयद्देवीं सामान्यां तारमूलकं।
राजधर्म्मविधेयत्वादवार्य्यक्रूरशङ्किनी। प्रस्थानप्रार्थनां भर्त्तुः सा स्वीकृत्य ततोऽब्रवीत्।
असामान्येष्वमात्येषु कुदृत्यालोकमात्मकृत्। आर्य्यपुत्र विचार्य्योऽसि विश्रम्भः किं विरोधिनां। १२००
यदा निर्व्यानुयोग्यास्तेषां सेमुषो त्वं जिगाहितुं। प्रथते नु कथङ्कारं मूर्त्तं मर्य्यधर्म्मिणां।
देहोपकरणत्वं ने प्राणैर्मम विचिन्त्यते। सतीधर्म्मस्तु सहते राजधर्म्मस्य नोचितं।
व्यञ्जितास्य सदाचारं कलिङ्कत्यं द्विषि त्वयि। प्रारब्धादेव भोजेन हिमाद्रौ हिमविक्रयः।
न गृह्णाति मर्म्मं वेत्ति स्वस्यान्यस्य न चान्तरं। निर्व्यूढमददोषोऽद्य प्रायेण प्राकृतो जनः।
पुत्रमन्त्रविरोधादिबुद्ध्यशुद्ध्या प्रधावति। साध्वाचारोऽपि भूपालः कुर्व्वन् विश्रम्भबाधने। १२०५
सनयालग्ननामोघगिरा देवेन पीयतं। लोकत्रयैकपात्रेऽस्मिन् यशो नूनं मया सह।
चातव्यं सङ्ख्ययोपेत्यप्राणायास्त्वन्यदाशयः। ममैवास्वादयन्त्याद्दात्मभरिपुरास्थितिः।
इत्युक्त्वा विरतां सत्यसन्धः साध्वीं धरापतिः। शान्तशङ्कामकृत्वा तां माता सच्यान्ययोजयत्।
भङ्गं सर्व्वानयं चातुं प्रेयांकु वेतनं नृपः। संरम्भे किमयं ध्यायत्यन्तः सर्व्वोऽप्यचिन्तयत्।
उपायेषु प्रयुक्तेषु देवीसम्प्रेषणावधि। नान्यदस्य प्रयोक्तव्यं यदेवाशिष्यत कश्चन। १२१०
सपक्षभेदाद्भर्त्तुः स्वबलत्वाबलत्वयोः। परीक्षकत्वाद्वे केचिन्माध्यस्थ्यमावसन् क्वचित्।
तेऽप्यल्पे वा महान्तो वा द्रोणदाचिष्यशृङ्खलाः। भोजगृह्याः सहाबभ्रन् कन्यां सर्व्वेऽपि डमराः।
ते स्वाच्छिन्नतटस्थत्वाद्वैराज्येऽस्माभिरीदृशः। भोजः सञ्जातद्दत्याशु माध्यस्थं परिजर्हिरे।
त्रिल्लको भोजमविधन्तनूजं प्राहिणोद्द्रुतं। प्रावेशयच्च मालाख्यं चतुष्कं पुष्करैर्न्नैः।
ये भिक्षुविप्लवेऽप्यासन्राजद्विण्यरक्षिणः। विरोधिसविधं प्रापुस्तेऽपि नीलाश्वडामराः। १२१५
लहराद्वैत्रसरसात् होलरातश्च डामराः। त्र्यधोनीलाश्वतश्चैका डामरी पर्य्यशिष्यत।
न चरं नीत् हिमं तत्तत्स्वन्ये साल्हणे बले। पतत्प्रावृट्प्रमत्तौघवेषोऽम्भोधारिवोद्गतः।
भोजस्तु दीनोमायातः श्रुत्वा बलहरस्ततः। ध्रुवं सन्धित्सया सद्गु इति सुव्यक्तमभ्यधात्।
एतावन्ति दिनान्यासीत् पुंसो भ्रमयिता पुमान्। सम्बन्धिनोनां माध्यस्थ्ये स्वकुल्यात्कोऽन्यथा भवेत्।
कुलचूडामणिः सेवा स यत्रैवं प्रवर्त्तते। किं स्यादगण्यप्रायाणां कार्कश्यं तत्र मादृशां। १२२०
यत्र मायामिमां बूथ तत्तथास्त्वस्मि वञ्चितः। विश्वास्यैव भविष्यामि नाकीर्त्तीनां निकेतनं।

सा च भूद्विजयाशा वः समेतानिखिला इति। अद्राक्ष चेद्दुर्गं व्यूहमवरोद्धासि वोक्षते।
दुर्भिक्षमिदं धान्यकोशवान् बहु निश्चयात्। नाशक्य नान्यया कर्तुं भोजो बलहरादिभिः।
द्विजाश्चास्मरिते मिश्रप्रमाथेऽपरथा कथं। फलकालेऽपि सम्पृक्तइति तञ्चावदन्नृपः।
नारकूलस्थिते राज्ञि ससैन्यौ धन्यविल्हणौ। राजपुत्रैः सह ततः पार्श्वग्राममवापतुः। २२२५
प्राप्तावेत्य तौ नद्यास्तीरेऽपि च स्कन्धस्थितौ। परस्मिन् कूलगहने भोजोऽप्येतावुपाविशत्।
ऋश्रन्तं विशतोदिङ्मुखेभ्यस्तत्कटकं भटान्। पश्यन्तः केऽपि सन्धिं न श्रद्दधुर्नृपते र्भिये।
हठप्रविष्टान्निर्यातुमचमाकल्पसैनिकान्। धन्यादीन् राजवदनो हन्तुं प्रस्वदचिन्तयत्।
छित्वा सूर्य्यपुरात्सेतुं राज्ञः सैन्यं जिघांसवः। महापद्मसरोमैत्रेषु निभृतं केचनावसन्।
अन्ये तस्माद्दृगोदन्तान्वेषिणः पतनोन्मुखाः। खेः खैर्मार्गैस्तत्र तत्र तस्थुर्भूमदंममताः। २२३०
आस्कन्दं भाङ्गिलेयाद्याः पुरे शङ्करवर्म्मणः। ग्रामालाचिमिकावार्श्रि डामराः समचिन्तयन्।
प्राग्यं महामरित्कूलं त्रिलकाद्यैरगण्यत। नीलाश्वडामरैरोर्था कार्या च नगरान्तरे।
किमन्यद्राजगृह्याणां सम सर्वे जिघांसवः। कारण्डवानान्तोयान्तर्व्वेष्टितानामिवाभवम्।
सन्दिग्धधिचितं कार्य्यं सर्व्वतः समतां तदा। प्राप दृष्टेरवपाहग्रहयोगान्तरस्थितेः।
पदे पदे राजचमूपथःयोत्थानमिच्छतः॥ छिन्दन् बलहरस्येच्छां भोजोव्यग्रत्वमग्रहीत्। २२३५
क्षणे क्षणे विसन्धानध्यायिना तेन कश्चन। वर्द्धमानस्वाम्यगारः सन्निधासु व्यधीयत।
घटनामुभयौ योयो विरोधः कटकद्दयात्। सत्त्वैकाग्रः स्वयं भोजस्तं त्वरितमच्छिनत्।
दृत्ये च कल्पकले वा येऽहृवसाजरञ्जकाः। भयेन प्रथयुस्ते यदेकत्वं कार्य्यसङ्कटे।
कर्णौ तत्कथयन्ति दुन्दुभिरवैराष्ट्रे यदुद्घोषितं तन्नवाङ्गतया वदन्ति करणं यस्मात् त्रपावान् भवेत्।
आघन्ते तदुदीयते यदरिणाप्युपेण सर्व्वान्तके केचिन्ननु शाभ्यमाग्ध्यनिधयस्ते भूभृतो रञ्जकाः।
भाण्डस्ताण्डवमण्डपे कटुकथावीचीषु कन्या कविर्गोष्ठ्या स्वा खगदाङ्गने शिखरिभूगर्भे खटाकुः स्फुटं।
पिण्डीभूरतया विटस्य पटुतां भूभृद्गृहे गाहने गच्छन्ति हृदकष्टकच्छपतुलां चित्रन्ततोऽन्यच ते। २२४०
सुरेन्द्रिकविपर्य्यासाच्छान्तोष्मा व्याभूतस्ततः। वासरः शरणीचक्रे तुङ्गयोन्तुङ्गमञ्जसा।
भानुर्दत्तपदोऽमरोभ्रातुर्गोवलयान्तरे। व्याभ्यच्छिरोऽर्पितकरो रक्तमण्डलतां दधे।
अहस्त्रियामामुखयोरपि मध्यस्थया दधे। सन्ध्यया वन्दनीयत्वं जनस्य व्यञ्जिताञ्जलेः।
कवाटिदन्तैर्व्विस्फोटाचन्द्रकान्तैः शिरोद्गमः। श्वयथुः पयसां पत्या दधे राज्युदयोन्मुखे।
सदैन्येष्वरविन्देषु हीनदन्तोपजीवनैः। कवाटिनां घटेष्वेव षट्पदैर्घटितं पदं। २२४५
अदृष्टकार्य्यपर्य्यन्तास्ततस्ते विषमस्थिताः। सरित्तटे सकटकाः पर्य्यतप्यन्त मन्त्रिणः।
न किञ्चित्प्रत्यभात स्वं लघु भ्रान्तस्य जानतां। श्रोचेन ह्रियमाणानामिवैषामवलम्बनं।
तीरे परस्मिन् सरितोवसन् बलहरः पुनः। बद्धः कन्दलितास्कन्दबुद्धिः सालद्गिरा सहत्।
कार्य्यातिपाताद्यातं मन्त्रिणां तन्मितं बलं। तस्य प्रवर्द्धनामस्य सुखोच्छेदं बभूव यत्।

वितस्तासिन्धुसम्भेदयात्रायां नगरे यथा। नया तथापतद्रौद्रो लोकः शान्तोऽप्यवर्त्तत। १२१०
लेखैर्डामरसंहारखण्डनाथ विसर्जितैः। सान्तरैर्पथिताबाह्यैर्नागायैराजवीजिनः।
शाप्याश्वितैरनुसरैस्तुमुलोत्पादनैरपि। धीरो धैर्य्यान्निषयादा खेः स कष्टं न पारितः।
सामन्तानामागतानामविश्रम्भादसम्भ्रमं। न्यक्कृतोऽयं निपत्याशु कुर्य्यादत्याहितं रुषा।
हते च कदनोद्गारेऽनेन सर्व्वं समुच्छिषेत्। छिन्नानामिव दस्यूनां समूहस्तेन सर्व्वतः।
इति निर्ध्याय दुष्टधुरिव भोजः चमात्यये। कुर्व्वः साहसमित्युक्ता निन्ये बलहरं समं॥ तिलकं॥ १२१५
तेषां तदर्थयातानां सामन्तानामभोजने। दाक्षिण्यादिति नाभाजि तेनाप्यभिजनस्पृशा।
तथास मत्या वैमत्यं तमज्ञात्वा तु मन्त्रिणः। निषात्ययास्तेन आतममन्यन्त नयात्ययं।
पक्षिपक्षस्फुटास्फालशफरस्फुरितेऽप्यधात्। तेषामासविधास्कन्दं प्रधावद्दहितभ्रमं।
कूले परस्मिन् कूलिन्याः स्वाभिसन्धाननिर्वृतेः। समभाव्यत तैर्नान्यो रथाङ्गेभ्योऽभिषङ्गभाक्।
मरुत् काकुत्स्थदूतस्य कपेस्तीर्णाम्बुधेः पिता। ततान तेषां दूतानां सरित्पारगतो बलं। १२२०
कीर्णकर्णज्वरं स्वारोन पोत्क्रतैस्तारभैरवां। आश्रित्याश्रितकोणेत्यं निन्युस्ते तां निशीथिनीं।
चपान्ते व्याधरोत्तंसहेमतामरसभ्रमं। उद्गच्छतो रवेर्यावद्विच्छिद्दुर्न करच्छटाः।
चक्राङ्कविरहालोकमशोकानामिवागलत्। कुड्मलाक्षिपुटाद्यावन्नैशं नाम्भस्तु वीरुधां।
सितपत्त्रियुतस्तावत्तरुकच्छाद्विनिर्गतः। स वीरस्त्वरयन् युद्धवाहान्मूर्द्ध्नि रश्मिणा स्पृशन्।
रोद्धुकामान् डामरीयान् वीरान् दृष्टैर्विलोकितैः। सर्व्वतो धावतः कुर्व्वन् योधान् प्रतिहतौजसः। १२२५
पारस्वधी चारुवेषो युवा सम्मुखमापतन्। युग्याधिरूढस्तैः प्रैक्षि सम्प्राप्तः सरितस्तटं॥ कुलकं॥
अदृष्टपूर्व्वं तं दृष्ट्वा श्रीखण्डोल्लिखितालकं। कुङ्कुमालेपिनं चैते भोजोऽयमिति मेनिरे।
अतिवाह्य निशां राजवदनं तं विमोहयन्। प्रातश्च तरसा भक्त्या स तथा सम्मुखोऽभ्यभूत्।
प्रविष्टयुग्यं तोयान्तः पाराङ्गारितवाजिनः। धन्याद्यस्तमभ्येत्य मुदिताः पर्य्यवारयन्।
उदभूत्तुमुलः शब्दस्ततः कटकयोर्द्वयोः। एकचाकाण्डमुखरः परमानन्दनिर्भरः। १२३०
नादमाकर्ण्य संग्रामबुद्ध्या दिग्भ्यः प्रधावितैः। तं परैर्भक्षितं वीक्ष्य मूर्च्छितैर्युत डामरैः।
तस्याभिनन्दनालापप्रमुखाचरक्रियाभवत्। अदैन्यप्रभुधन्यादिष्वनुज्झितनिजक्रमा।
प्लवमानं मनोहर्षं वेगात् संस्तभ्य सर्व्वतः। अथेत्थं स्तुवता तत्तस्य धन्येनाभ्यधीयत।
राजपुत्र पवित्रेयं पृथिवी स्थैर्य्यशालिना। त्वया धाम्ना सुमनसा मेरुणा वा महीभृता।
सर्व्वान् जयति सर्व्वासां निर्व्विकारतया वसन्। त्रिक्रियोपहतं गौस्ते चोरं तं क्षीरवारिधेः। १२३५
कस्य पुंस्कोकिलस्येव त्वां विनाधममध्वरः। निर्गत्य निजकुल्यानां सिद्धं मध्यावगाहनं।
सदाचारस्य भवता प्रथमं प्रहते पथि। न तत्त्वियं सद्ग्रामसुरभं चेष्टितोऽधिकं।
इत्यादिप्रस्तुतालापदत्तोल्लापोऽधिरुह्य सः। जयोत्तरङ्गं तुरगं स्तुवद्भिस्तैरनीयत।
डावन्याः कतिचित् क्रोशादिक्रोशान्तस्तदा ययुः। स्वकुल्यैर्नीयमानन्तं काकादिव पिकान्तिकं।

स एवमेकविंशेऽब्दे ज्येष्ठस्य दशमेऽहनि । जयसिंहदर्पदेश्यः समग्रह्यत भूभुजा । ११८०

राज्ञी कृतप्रणामं तं प्रियं पुत्रमिवागतं । अभ्यनन्दच्च कान्तभृत्यमस्याहारमकल्पयत् ।

इक्ष्वाकुवंशाविसम्वादिगुणग्राममवेक्ष्य तं । प्रागदृष्टवती मेने वञ्चिते सा विलोचने ।

गुणैरस्याथ्यदाक्षिण्यमाधुर्य्यधैर्यरूचिमैः । तस्य विशदशीलं स क्ष्मापतिममन्यत ।

मुखरागमनोहारिसौदार्यौज्ज्वल्यं गृहश्रियः । भर्तृस्वभावस्याचारो योषितामनुमापकः ।

दिनत्रयव्यपनीताध्वक्लमं प्रस्थातुमुत्सुकं । राज्ञोऽभ्यर्णं विशत्येनं दाक्षिण्यात्कोऽपि नाब्रवीत् । ११८५

कथञ्चिद्दुःखमाध्यस्थ्यवैमत्यैः सचिवैरथ । तस्मादिन्दुर्नरपतिरशान्तेभ्योऽभ्यधीयत ।

राज्ञोऽभ्यर्णं विशत्युक्तैरपोह्यातोपमं वचः । तत्तस्य श्रोत्रशल्याकुल्यां तदाशङ्कुक्रियां व्यधात् ।

निरतायत मर्म्मेव समाश्वासैश्चताथ सः । मध्यस्थानां स्थितं स्थैर्य्यं दाक्षिण्यादोष्ठयोः परं ।

प्राणाम्मुमुचोस्ते स्वभाविणस्तस्य नाम्बनैः । मन्दत्वं विक्रियां निर्म्युर्विनयानतमौलयः ।

आचारं चैनमस्निग्धमपि न्याय्यं वचस्विनं । न कोऽपि प्रतिवाक्येन शक्यं जेतुममन्यत । ११९०

अथ स्वान्तस्थितस्वामिवैवश्यं दर्शयन्निव । दशनांशुवनैर्धन्यो वीरः स्निग्धमभाषत ।

पद्धतीराजधर्म्माणां सदाचारे स्थितिश्च ते । जानतोऽपि कथं मोहः क्रमायातेषु वस्तुषु ।

किं सन्धिः सोऽभिधीयेत यत्र सन्धेयदर्शनं । अकृत्वा गम्यतइति प्राक्नो कथमजीगणः ।

अनद्यतनभूभर्तृसुलभे भूभुजां तव । ज्ञात्वा सत्वोज्ज्वलं शान्तिधर्म्मजातप्रवर्त्तनं ।

नास्य दम्भस्मयसम्भ्रमीतिस्थैर्य्यस्वलोकाया । आदरादर्शनेवद्ये निश्वासस्यापि काः श्रियः । ११९५

अस्यापि जीवनाशा श्रीः साम्राज्यासादनाश्च सा । प्रकाशो विम्बितो योऽर्कादापात्याज्ज्वलतः स किं ।

निर्व्वाणगोष्ठी निष्ठत्वं शमिनामाश्रयेषु यत् । तत्पर्षत्यस्य राजर्षेर्ज्जनान् छन्दानुबन्धिनः ।

एवं स्वगृहसम्प्राप्यप्रायोनिःश्रेयसस्य ते । स्थानैः श्रियः समाप्याथ किं स्यादन्यैर्महीश्वरैः ।

मुग्धा न केचन परे गणिताः फणिभ्यः कालानुकूलनिजकुण्डगलत्यजो ये ।

श्लिष्यन्ति चन्दनतरून् शिशिरान्निदाघे माघेऽप्यशीतमनवं निजरं विशन्ति ।

प्राणोपकरणं राज्ञोराज्ञी राजात्मजाश्च ये । तद्धिते यदनौचित्यं तेषामौचित्यमेव तत् । १२००

त्यक्त्वाश्ववैकृतं पाथ इव कथितशीतलं । अनुतापेन ते कृत्यं भूयो वैरस्यमेष्यति ।

तथा समर्थासामर्थ्यात्स प्रत्याख्याय भारतीं । कुण्ठशास्त्रनवस्त्रस्थो प्रस्थानार्थं स मन्थरः ।

पथि सङ्कथितस्तोकान् वास्तव्यान् वीक्ष्य सर्व्वतः । अजायताथ संरूढरूढत्वमाधुत्वदार्ढ्यधीः ।

पदातिचरणक्षुण्णरेणुव्याजाददृश्यत । वसुन्धरातलं बद्धसन्धीव नभसा समं ।

दृष्ट्वा विस्मतरोभोजः कश्चित्तंप्रासुयां नृपं । कश्चिदमुष्य निर्गत दर्शनं विप्रलम्भकैः । १२०५

आराधयन् प्रभुं धाम्नि नान्तरान्तरितो विटः । स्वामिनां कद्वाप्नोति गुणाविष्करणक्षणं ।

शीतोपचारकरणादयितो भवेयमाब्धादितस्य जलधेः प्रहतं धियेति ।

स्रोतो हिमाद्रिपयसोऽतिनिपातरव ग्रासीकृतं तिमिभिराहतमेव तत स्यात् ।

इत्यादिचिन्तास्तैमित्यात् पुरस्ताभाद्यलक्षयन्। सैन्यस्य हस्त्यश्वतयाबुद्धासन्ननृपास्पदं।
नातिप्रांशुं नातिकृशं सूर्य्यांशुश्यामलाननं। सरोजकर्णिकागौरं शिथिलश्लथविग्रहं।
ककुद्मत्ककुदोत्सेधस्कन्धमायतवक्षसं। श्मश्रुणानतिदीर्घेण व्यक्तगण्डगलोन्नतिं। १११०
उन्नसं पक्वबिम्बोष्ठं विस्तीर्णानुल्बणाङ्गकं। तिर्य्यक्प्रेक्ष्यमाणास्यं धीरं मन्थरगामिनं।
समाहितांशुकोष्णीषमौलिं श्रीखण्डवर्द्धनं। सीमन्तस्थानचुम्बिन्या रेखया चन्द्रगौरया।
अश्वावरूढं हर्म्यस्थसचिवैः परिवारितं। अनङ्गतुल्यमायान्तं तमवैक्षत पार्थिवः॥ कुलकं॥
प्रीतिविस्फारितदृशा राज्ञा दृष्टस्ततः सभां। सोऽध्यारुरोह सम्बाधां कौतुकोत्कन्धरैर्जनैः।
स्पृष्ट्वा पादौ निषण्णोऽग्रे नृपस्यानीय पाणिना। खड्गधेनुं पाणिबद्धामासनाग्रे समार्पयत्। १११५
पाणिं सफणिवल्लीकं विहताग्राङ्गुलिद्वयं। ततोऽस्य चिबुकोपान्ते विन्यस्यन् पार्थिवोऽब्रवीत्।
न विग्रहग्रहीतोऽसि नाधुनापि न बध्यसे। तदङ्ग कस्माद्भूमः शस्त्रमेतत्त्वयार्पितं।
अजिज्ञपत्स भूपाल देव शस्त्रस्य धारणं। स्वामिसंरक्षणं स्वस्य परित्राणस्य कारणं।
देवे निजप्रतापाग्निगुप्तसप्तसरित्पतौ। सेवावकाशो विरलः स्वशस्त्रस्यापि दृश्यते।
लोकान्तरेऽपि शरणं चरणाश्रयणं प्रभोः। तत्रात्र लोके किं कार्य्यं त्राणोपकरणैः परैः। ११२०
राजा जगाद तं मत्स्पर्द्धासम्बन्धेऽधुना भवन्। निर्व्यूढकृत्यो वादीव कृत्यं नो वर्त्तते परं।
भोजो बभाषे दाक्षिण्यजननायाधुना प्रभोः। स्पष्टादृते मया किञ्चिन्नोपचारार्थमुच्यते।
किन्तेन चिन्तितं दृष्टं किं किं न कृतमप्रियं। यदसिद्धं न तद्युक्तिमगादित्यवधार्य्यतां।
किन्तु मल्लान्वये कश्चित्कारणेषूदितो भवान्। विप्रः स्मानुकूलं प्राग्र्यं वयं चर्म्मचक्षुषः।
यदा यदा देव वाञ्छामकार्षं भवदप्रिये। भूमिस्तदा तदा भूता पात्रं कम्पस्य भूयसः। ११२५
यावत्कवीनां निर्भाति प्रतिभानेन भासुरः। देवाभवन्नः प्रत्यक्षः प्रतापस्तादृशस्तव।
न शेखरे न प्रदरे न दरेऽप्युज्झितो मया। प्रालेये भूभृतः कुञ्जे संज्वरस्त्वत्प्रतापजः।
ततः प्रभृत्यवनतिप्रणयः शरणैषिणः। सिद्धः सन्ध्यायिबन्ध्यत्वाद्देव दूरस्थितेन मे।
अथाभेदाभिलाषेण पापाद्यत्किल चेष्टितं। स्फुरत्तामात्रकव्यस्य न तु तद्विग्रहाग्रहात्।
त्वत्सम्बन्धादिमे दिक्षु प्रतीच्याः क्ष्माभुजो वयं। सङ्गाद्गङ्गाम्भसः काचकुम्भसम्भावना भुवि। ११३०
अद्यापि द्योतते शाहेवाङ्कयेन दिगन्तरे। तत्सन्तानभवोऽनन्तः समूहः क्षत्रजन्मनां।
त्वय्यर्पिते पार्व्वतीयभूभृद्भङ्गेऽन्यदा दिनः। कदन्नायमदुर्भागामुस्थैः खेदोन्मुखैरभूत्।
इतोदृशीभिः स्तुतिभिः प्रमाणमथवा प्रभुः। इत्युक्त्वा भूपतेर्मूर्ध्ना सोऽगृह्णाच्चरणौ पुनः।
प्रणामसंभ्रमस्रस्तोष्णीषशीर्षं ततो नृपः। तस्योत्थितस्य स्वशिरोवाससा समवस्त्रयत्।
शान्तां च शक्तीं तन्न्यस्तामुत्सङ्गे सान्त्वयन् व्यधात्। तस्यामङ्कोभगाम्भीर्य्यस्तमूर्वे च निषेधिनं। ११३५
दत्तां मया बिभृहि वा त्वमेतां पूजयाथ वा। न शस्त्रग्रहवैमुख्यं कार्य्यं मच्छासनं त्वया।
अवन्ध्यशासनामानीत्यनुवर्त्तिनि तां न्यधात्। शक्तीं राजानुगम्यैव वन्दित्वा कामकालवित्।

ततो निर्य्यन्त्रणत्वस्य नर्मणः सान्त्वनस्य च । चिरसेवीव तत्कालं राज्ञोऽजायत भाजनं ।
अन्यत्प्रविष्टो धन्यो वा स्वाचाममलयन् कृती । कृतप्रणामो भूपाल त्वद्गुणाकर्णनं विना ।
न प्राणा द्रविणं नाद्य गण्यं निर्व्विक्रिया पुनः । सत्क्रिया स्वामिनोऽप्यर्थे तस्मात् पार्थिव चिन्त्यतां । ११४०
अथापि कथ्यमानन्तस्य स्यात् सम्भावना भुवि । यदास्मिन् चिन्त्यतेऽस्माभिरिति भूयो व्यभाषत ।
क्षणमुच्चावचां चर्चां विरचय्य विशाम्पतिः । भोजेन सार्द्धं शुद्धान्तं रड्डादेव्यास्ततो ययौ ।
कृतप्रणामस्तां वीक्ष्य सौजन्यादिगुणोज्ज्वलां । स राजपारिजातं तं मेने कल्पलताच्युतं ।
मान्योऽयं देवि सौजन्यख्यातेयात्त्वामिहागतः । विशिष्यतेऽस्मै पुत्रेषु त्वाम्येयेषेत्यभाषत ।
सभाजनाय सौजन्यनिधिर्भोजान्वितस्ततः । उदूढकार्य्यभाराणां दाराणामप्यगाद्गृहान् । ११४५
अभाणीन्निपुणा राज्ञी भोजं राज्ञा सहागतं । अधुनैव नृपस्यास्तः सम्बृत्तोऽस्मीति सस्मितं ।
लज्जास्मितमुखी पत्युः प्रणत्या स्वागतोऽर्थिषु । ददत्येवोत्तरं भोजं निर्दिशन्त्यप्यभाषत ।
आर्य्यपुत्र न विस्मार्य्यं प्रत्याख्यातास्मन्निरं । मामेकशरणस्यास्य ख्यातिप्रीतिप्रवर्त्तनं ।
पूर्व्वोपकर्तृसलिलं दृष्ट्वावस्पृशतोऽस्य वं । पश्चात् स्वकुलजातानां युक्तं जेतुं भवादृशां ।
कार्य्यकृच्छ्रेऽवसन्नानामनुव्यागमनं विना । सिद्धोऽदान्तत्यसंरचा नेह प्रत्यागमस्य नः । ११५०
उदीरे रचतस्तोरं शरीराश्रयिणो भवेत् । ध्रुवं वनस्थलीव्वीरुत्तन्निपातानुपातिनी ।
पनिगत्यनुगामित्वं प्राणानां परिचिन्तितं । तथा कार्य्यं यथा न स्यात्त्यातव्यस्यान्ययात्मनः ।
राजा जगाद तां देवि सर्व्वकर्त्तव्यसाचिणी । अन्यथा प्रतिपत्तुं मे त्वमप्यस्य न मन्यसे ।
निगृहीतव्रतो दृष्टौ सुज्जिमसालार्जुनावपि । निस्तापं मम नाद्यापि प्रातानुशयमाशयं ।
अथ राज्ञार्थितः स्थातुं पराध्येवाम्नि सानुगः । भोजो नामन्यतान्यत्र राजधान्यां स्थिरां स्थितिं । ११५५
विदूराश्रयनिर्गीतृभावा प्रचुरदर्शनैः । आराधनं धराभर्त्तुरसाध्यं ध्यातवान् हि सः ।
श्वित्रवदीर्ध्यापान् स्थिरश्च समकल्पयत् । अनयात्तं नृपं कार्य्या न सुराराधनागले ।
विज्ञाय भावं प्रोतेन राज्ञा दत्तं ततो गृहं । सर्व्वोपकरणापूर्णं राजधान्यन्तरेऽभजत् ।
राजापि ममतास्फीतप्रीतिभिः स्वैः परैस्तथा । उपासितस्तत्र रतिं चिराश्रितदृशा ययौ ।
भोगदेलाचिताश्चर्य्यदर्शनादी नृपोऽपि तं । प्रियं पुत्त्रनिरासतार्थोद्भूतेः पार्श्वं निनाय च । ११६०
जयाह दक्षिणे पार्श्वे भुञ्जानं ख्यातिगौरवात् । स्वांशस्वादितभोज्यादिदानेनैव व्यवर्ज्जयत् ।
अकृत्रिमन्तया स्नेहमुवाह जनकोयथा । लडितं ख्यातिवर्त्तिस्तद्दलापत्यकैः समं ।
तमेवालम्बन व्यक्तिं सोऽपि दृत्तिं यथा यथा । राजा सपरिवेदोऽपि विश्रम्भमविगर्हितं ।
आसन्नाभ्यन्तराभिन्ना ये देधे तामदर्शयत् । राज्ञां विरक्तिं स्वस्यारिबाडवाश्च व्यसर्ज्जयत् ।
अकृत्रिमात्मसाधानात् करणानां सभान्तरे । न प्रत्यभाज्जडो नापि धृष्टो नापि वक्रगतः । ११६५
प्रमादस्खलिते हीनातिरिक्तत्वे च भूपतेः । कार्य्येणावदधे शुद्धः कवितेव महाकवेः ।
स विक्रमकथासनदानाद्यैः स्वं व्यकत्थ्यत । प्राग्वृत्तमन्तरा पृष्टः सोपस्कारश्च नाभ्यधात् ।

विचारकाम्प्रभोः साम्यमक्तुल्यत्वादिषाटुभिः । धीरोष्टष्टैर्दृष्टिपातैरपुनर्भाषिणोऽव्यधात् ।
तदा स्पृष्टोऽप्यनुत्तानाशयोऽभूदवगाहितुं । न शेकुस्तं यथा जाल्मनर्मवित्पिशुनादयः ।
क्षणेष्वर्थितालोकशोभादिविभ्रमादिषु । प्राप्तोऽस्यावसरं गच्छच्छङ्कां कामपि नातनोत् । ११७०
यथा यथास्य विस्रम्भाद्भूपोऽभूच्छिथिलाग्रहः । तथा तथैव सिद्धोऽस्वदव साधावदुद्धतं ।
रुद्देवायेसरोऽन्यत्र पश्चाद्रुद्धपदोऽभवत् । अनिषिद्धोऽपि शुद्धान्तमन्त्रागारावगाहने ।
विद्ध्यौपयिकावाप्तिप्रार्थनः स दरत्स्वयं । दूरीचक्रे परापेक्षां प्रश्रयस्थितया ।
अनाप्तसमये तस्य न ययुः पथि रक्षिणः । न स्वप्रष्टत्तमप्यासीदनावेद्यं महीभुजे ।
मन्त्रान्तःपुरिकादीनां परस्परविगर्हणं । नावर्णयद्विस्मृतिश्च दुष्टस्वप्नमिवागमत् । ११७५
सचेतनोऽपि दुर्नर्मगोष्ठीष्वनुरणन् वचः । अवदत् स्फुरदप्यन्तर्व्विटानां नाम लाघवं ।
एवं शुद्धानुभावस्य तस्य कृत्येन कृत्यवित् । पुत्रेभ्योऽप्यधिकां प्रीतिं स्निह्यन् भेजे क्रमान्नृपः ।
कलिकालमहीपालदुस्तरर्णसिंहभुजा । सोऽयं गोत्रपरित्राणे नवः सेतुः प्रवर्त्तितः ।
इत्थं विद्राविताशेषोपद्रवस्तिल्लकस्ततः । अग्निप्रोषमपि स्वास्थ्यहेतुं भूभृदचिन्तयत् ।
असौ हि निर्हिमोर्मिमार्गे काले पलायनं । प्राप्य सत्त्वस्य दुःसाध्यं बद्धुं ध्यायन् व्यलम्बत । ११८०
अतः सुमेधायात्रायां यावत् क्षणमपेक्षत । मल्लपालेनाविचारात्तावत् प्रारम्भि धावनं ।
अल्पाधिष्ठानसुभटः स देवसरसोद्भटैः । बहुभिः सहितः सैन्यैर्मार्ताण्डे विदधे पदं ।
निर्निरोधप्रवेशः स प्रदेशः परिपन्थिनां । बाह्याश्च योधा निस्सारादर्पा इति विवेद सः ।
तिल्लकानुचरा युद्धमसन्निहितसायकाः । तेन सार्द्धं विदधिरे नत्वाश्रीदत्त पौरुषं ।
निःसीमसैन्यसहितो लवन्योऽन्यत्र डामरे । तत्र सर्व्वाभिसारेण धावतो युयुधे क्रुधा । ११८५
लुण्ठितद्रविणापूर्णास्ते देवसरलोकसः । सर्व्वे ततः मल्लपालं विद्रुताः परिजह्निरे ।
द्विषत्सम्बर्त्तवर्षाद्याः सर्व्वत्र कुण्ठितेऽभवन् । अधिष्ठाने भटा एव कुलशैलाइवोद्धुताः ।
ते तीक्ष्णतीक्ष्णतरणौ बोढारातिरुषश्चिरं । बहूनिहतवन्तोऽन्यांस्तत्र तदाहवे हताः ।
हतेषु युधि सर्व्वेषु विन्दानैर्मण्डलं निजैः । शूरेषु तत्र मार्त्ताण्डोऽप्यासीदविरलव्रणः ।
रराजाजौ साल्लपालिर्गयापालाहतेषु यः । त्रिषु वाजिष्वचातुर्य्यात् पदातिर्नोपलक्षितः । ११९०
तत्प्राथम्योपलब्धाजिर्जज्ञेस्तदनुजः शिशुः । निनाय विस्मयं वीरान् दृष्टासङ्ख्यमहाहवान् ।
दक्षिणं देशं तच्चक्रे यदासङ्कम्पनापतेः । महोभांस्तापयत्यर्कः कुर्व्वाङ्गमरदाश्विदुः ।
स धावन् वाजिनाराजदेकरो स्फुरितायुधः । सधूमदण्डो दावाग्निः सपक्षोऽद्राविव स्थितः ।
तं वैरितुमुले वाधं व्रणभङ्गेष्वसौ पुनः । पृष्ठादलोठयदाजौ तदन्वाबद्धपद्धतिः ।
वर्म्मगौरवभृत्पृष्ठकाठिन्याघातपीडितः । स त्रिभङ्गो द्विषन्मध्यात्तनयाभ्यां विनिर्हृतः । ११९५
कटके सर्व्वतोनष्टे मार्त्तण्डप्राङ्गणान्तरे । विरोध्यसाक्षि क्षिप्रा तं तावपासरतां ततः ।
तत्रस्थं कम्पनास्थाभृत् प्रस्थितः पृथुलैर्व्वलैः । तावद्भिः प्राप्यमप्याशु डामरं पिण्डितं व्यधात् ।

क्ष्मापाले विजयक्षेत्रं प्राप्ते त्रोटितवेश्मनः । मल्लपालो लवन्यस्य वसतीर्निरदाहयत् ।
स तादृगपि भूपाले क्रुद्धे वक्रीकृतभ्रुवि । अदरिद्रो गिरिद्रोणीश्रेणिभूमुलभाग्मनः ।
संवृत्तो निःसहायश्च परिग्रहवहिष्कृतः । आपत्सुलभपाण्डित्यमत्योपालम्भभाजनं । १४००
निकृत्तकरशाखोऽथ क्ष्मापकोपकृपेर्व्यधात् । निरालम्बतया तस्य स स्वशीर्षफलार्थनां ।
रड्डादेवीतनूजानां ज्यायांसं गुल्हणाभिधं । श्रीमल्लोहरराज्येऽथ क्ष्माभृत्सोऽभ्यषेचयत् ।
षट्सप्तहायनो राजतनयः स वयोधिकान् । चूताङ्कुरोजीर्णतरून्निवेशानजयद्गुणैः ।
अभिषेक्तुं सुतं देव्या यातायाः क्ष्माभुजोऽध्वधुः । शिरःशोणाश्मकिरणैश्चरणौ यावकारुणौ ।
तत्राभिषिक्ते वसुधामुग्रावग्रहशोषितां । देवीभावाभिषेकार्थमिवाभिञ्चन् पयोमुचः । १४०५
भूयोऽपि राजवदनो विप्लवोत्पादनोत्सुकः । अमन्दमवचस्कन्द जयचन्द्रं नृपाज्ञया ।
नागभ्राहव्यवहितागारैरनुप्रवेशिनः । पश्चात्प्रसर्पिणीः सेनाः सोऽवधीत्सङ्कटेऽध्वनि ।
गार्गिः परिभवस्थानानस्तिष्ठन्दिनैस्ततः । नागभ्राहसुतारण्यमबध्नाल्लोष्टकं मृधे ।
दुर्गमत्वादनाक्रान्तमन्यैर्वेगात् प्रविश्य च । दग्ध्वा सदिन्नाग्रामं स निरगाल्लघुविक्रमः ।
तथापि राजवदनो न शौर्य्यात् पर्य्यहीयत । न सन्दधे न चुक्रोध स क्षमस्य विनिर्गतं । १४१०
अहन्यहनि सेनाभिर्दीनाभिर्न्यरतन्नृपे । जयचन्द्रमुखाच्छश्वदसुखान्यवधीभवत् ।
क्ष्मानायकोऽथ निस्सीमसखबाहुप्रसारणः । रणान्तरेव तं तीक्ष्णैर्गूढन्यस्तैरघातयत् ।
तन्मुण्डगण्डलेखेन लुठता खण्डशः क्षतः । झटिति त्रुटितः स्वास्थ्यविवासं कुरणोन्मुखः ।
पृथ्वीहरकुलच्छेदस्वच्छधा मेदिनीपतिः । अवधीत्सोठनमपि च्छत्रदण्डप्रयुक्तिभिः ।
एकवारं वेष्टितोऽपि रचितस्तिल्लकेन सः । भूमिम्लोतिपाशस्य निपातेनाभ्यवर्त्तत । १४१५
मल्लकोष्टवरजय्यमङ्गचन्द्रादयोऽभवन् । जीवन्मृताश्च श्रान्ताश्च दारिद्र्योपद्रवार्दिताः ।
अविचिन्त्योञ्चलचौणिभृतः प्राणान्विनश्वरान् । ऐश्वर्य्यरूढिमूढत्वादनिर्व्यूढव्यवस्थितौ ।
मठेऽनुमितकोशत्वं तत्तद्राजाश्रयाद्गते । कुलोदहोविहितवांस्त्वं हदेशोव्यवस्थितं ॥ युग्मं ॥
सुल्लाविहारस्यैतव्यं पितुर्देवग्रहत्रयं । तत्रार्द्धसिद्धं प्रासादं परिपूर्णं व्यधान्नृपः ।
स एव ग्रामग्रामयीमहापणसमर्पणैः । निर्दोषपारिषद्यादिश्वर्याश्रिसोद्यधीर्व्यधात् । १४२०
अवरोधेन्दुवदनां मृतामुद्दिश्य चन्द्रलां । प्रत्यष्ठापि मठोऽनूनश्रीर्द्वारेऽवारितातिथिः ।
पृष्टोनगरनिर्म्मोहः सोऽपि सूर्य्यमतीमठः । पूर्व्वाधिकोपगर्व्वेण तेनैव निरमीयत ।
सञ्जाते सज्जपालस्य ततोलोकान्तराश्रये । कम्पने निदधे राज्ञा गयापालसुदात्मजः ।
विपाकसुकुमारोऽपि दुःसहः स्तनुनाभवत् । विस्मारितः स सौम्येन शरङ्कानुरिवेन्दुना ।
शोभाप्रदोषविषमेष्वविशेषवृत्तेर्मेघोदये तटतरोस्तटिनीप्रवाहः ।
भ्रंसत्यकाण्डतडिदापतनेन नाशं नाशंसति स्वपलिलस्य विभूतिलाभं । १४२५
आभिचुल्लपणाङ्कोजभञ्जनादपि भूभुजः । विधुरे कार्य्यभाराणां योऽभूदूढधरः परं ।

तस्य तस्मिन्नृपरते क्षीणप्रक्षीणकण्टके । स धन्यो नान्यसामान्यप्रेमा प्रसयमायया ।
ताम्बूलमायात्रिकतां नीत्वा स्वनामयानिव । आर्पिपन्मधुराबद्धं जीवं यस्य निजः सुतः ।
स जगज्जीवितेनापि रक्षणीयः क्षमापतिः । पदे पदे विपन्मग्ना प्रजोद्धरणधीरधीः ।
व्याधितस्य विनिद्रोऽपि संमङ्गान्मङ्गलेच्छुभिः । नान्तक्षणं तस्य पार्श्वात्कृतस्रो वाचलन्नृपः । २४३०
प्रियप्रजस्यामात्यस्य स्वरूपविपरीतता । तस्य कश्चित्क्षणं जाता जनजीवितदा भवे ।
भूभुजामपि मान्धातृमुखानां निधनेन याः । दुःखं ययुः प्रजास्तासां समभावि तदा सुखं ।
द्वैराज्योपप्लुते राष्ट्रे नवस्य नृपतेरभूत् । अव्याहतं यत्स्वाचिव्यं तस्य सर्वाभिषङ्गजित् ।
कालो बली व्यवहृतेर्ननु तद्वशेन पूर्वापराचरणविस्मरणेन कस्य ।
सक्तिः चितिर्व्वहनकर्म्मणि योग्यतायां निर्म्मारणे मुरजिदस्तु वराहतायां ।
नगराधिकृतो भूत्वा सुज्जेर्निर्व्वापिते पुरा । चिरप्ररूढां यो देशस्याव्यवस्थां न्यवारयत् । २४३५
भ्रष्टः क्रयेषु दीनारव्यवहारो व्यवस्थया । निरूद्य तं भ्रंशकार्य्यैर्निश्चितपण्डः प्रवर्त्तते ।
परिणीताङ्गनाशीलभ्रंशे गृहपतेरभूत् । दण्डप्रवृत्तिर्या तेन सा विचार्य्य निवारिता ।
एकान्ततो हितो भूत्वा विश्वामेवं पुनर्व्यधात् । नगराधिक्रियां लब्ध्वा स एव परिपीडयन् ।
बद्धाभिर्नर्त्तकीभिश्च परिवीतगृहस्थितो । सम्प्रयुक्तान् कथ्यमानान् हठेनादण्डयद्धन् ।
किं वोभवेद्दलेशानां तुषाणामिव चिक्कनैः । अद्रोहालोभयोर्भूमिर्न तादृगपरोऽभवत् । २४४०
भिक्षुमल्लार्ज्जुनौ कालानुवृत्त्या श्रुतवानपि । नासौ जहौ स्वामिहतं नतौ तावपि नावधीत् ।
अक्षीणत्यागहीनस्य विभूतिमनघेऽप्यभूत् । संस्कारोपयिकन्नास्य पर्य्याप्तं निधने धनं ।
कृतज्ञताया राज्ञोऽन्यत्पर्य्याप्तं किमुदीर्य्यतां । योजीवितदत्तानीतान् संविभेजेऽनुजीविनः ।
लोकान्तरातिथिं विज्जाभिधामुद्दिश्य वल्लभां । धन्यस्य विज्जनामाख्यविहारारम्भकारिणः ।
परलोकं प्रयातस्य निर्व्वाणप्रतिपूरणं । स्थितं व्यवस्थितेः कश्च विनियोगश्चकार सः ॥ युग्मं ॥ २४४५
भूभृद्धार्म्मिकतावाप्तसुकृतात्मिकवासवैः । यद्वैकवृत्तिभिरपि प्रवृत्ते पुण्यकर्म्मणि ।
विपक्षाणां सुभिक्षेण तुरुष्कविषयाश्रयात् । जन्मभूमेर्वृत्तये यैः कौर्य्यादन्यत्र शिक्षितं ।
येऽपि वृत्तिं विरोध्याजिव्यग्रे सुस्सलभूभुजि । कलहाश्रमरेष्वेव कश्मीरेषु प्रपेदिरे ।
गोत्रे तेषां क्षत्रियाणां जातः कमलियानुजः । राजबीजी सज्ज्ञियाख्यः प्रतिष्ठां स्वाख्ययाकरोत् ।
वितस्तापुलिने बाणलिङ्गे तेन निवेशिते । जायते स्वर्धुनीरोधःसम्प्ररूढविमुक्तधीः । २४५०
तदीयश्च मठश्चैव तपोधनविभूषितं । दृष्ट्वा निवर्त्तते रुद्रलोकालोकनकौतुकं ।
लोठनेऽन्यप्रतिष्ठानामधन्यद्रविणार्पणे । स तेनाद्यतने काले संरब्धे शुद्धबुद्धिना ।
उदयस्य प्रिया चिन्ताभिधाना कम्पनापतेः । पुलिनोर्व्वीं वितस्ताया विहारेण व्यभूषयत् ।
प्रासादपञ्चकव्याजात्तद्विहारस्थितः करः । उदस्त इव धर्म्मेण प्रोत्तुङ्गाङ्गुलिपञ्चकः ।
सान्धिविग्रहिकोमङ्खकाख्योऽलङ्कारसोदरः । स मठस्याभवत्स्रष्टः श्रीकण्ठस्य प्रतिष्ठया । २४५५

मठाग्रहारदेवौको जीर्णोद्धारादिकर्म्मभिः । अनुजा सुभनानाम रिल्हणस्यासदत्तुलां ।
भूतेश्वरे मठं कृत्वा त्रियाम्यमप्यपातयत् । तोयं कनकवाहिन्या वितस्तायाश्च यः पिबन् ।
प्रदेश्य कश्यपागाराभिधाने नीलभूः स्वरित् । जिगीषयेव जाह्नव्या यत्र पूर्व्वां दिशं गता ।
उपाराय गवादीनां यः सेतुं तत्र बन्धयन् । निर्म्ममे निर्म्मलं कर्म्म संसारोत्तरणक्षमं ।
नगरेऽपि स्वनामाङ्कहृष्टाङ्कागारकारिणा । मठो येन कृतोभ्रष्टजटाधरघटाश्रयः । २४६०
सम्मेश्वरं स सौवर्णामलसारं चकार यः । सोमतीर्थं तथा तोयोद्यानमुद्योतितान्तिकं ।
अत्र क्ष्माभूभुजां वंशे वंशोन्नत्यधनादिषु । साम्यलममात्यानां धनप्राणाधिहारिणः ।
कुप्यन्नवामनाथ्यामासूयया वासवोऽपि वा । प्राभ्रंशयद्दिवा देवो मान्धातारं धराभुजं ।
अविप्लुतमतिर्भृत्यान् कृत्यासत्यवतोऽस्पृहं । दृष्ट्वा ध्यातस्वमाहात्म्यवृद्धिस्तु प्रीतये नृपः ।
कलशक्ष्मापतिः प्राज्ञोपज्ञं भृत्योऽस्य रिल्हणः । कुर्व्वन् स्वर्णातपत्राणां प्रतिष्ठाप्रीतिकार्य्यभूत् । २४६५
स्वर्णपत्रा सुरेश्वर्य्यां शिवयोः समवेतयोः । सदीपारात्रिकामत्र मैत्रीमेति सघण्टिका ।
बन्धोर्हिमाद्रेर्दयितः सुताजामातरौ शिवो । स्वर्णच्छत्रच्छलान्मेरुमूर्द्धा घ्रातुमुपागतः ।
उद्दिश्य यद्विरुधदृश्यममात्ययोनिर्दग्धामयाङ्गघटनं दयितेन गौर्य्याः ।
सिद्धं तदत्र करुणामुमयेति हेमच्छत्रच्छलाद्धुरदृग्रस्खलितोऽग्निरुद्धं ।
छत्रं तत्र च रिल्हणेन विहितं रौक्मं महद्रुक्मिणीप्रेयोमन्दिरमूर्ध्नि नद्धमधुनाद्भ्रमपरिभ्राजते ।
चैत्येन चतजावपानजनुषा नष्टं ततः स्वामिना प्राप्तं चक्रमरेचितुं स्वरुचिरं भास्वानिवाभ्यागतः ।
तीर्थे मन्मथजित्खगध्वजदृढाजर्य्योर्जिताचार्य्यके साधाराभरणं क्रियापरिणतिस्वर्णातपत्रं प्रभोः ।
भात्येकस्य शिखाहिफूत्कृतिबलद्भूङ्गाजरेणूपमं केशान्तस्थितमघपार्श्वगतडित्पि त्राभमन्यस्य च । २४७०
सौवर्णद्रुहिणाण्डकर्परपुरे संसूचिताच्छत्रकथाकोशस्य समुद्गकप्रतिकृता दीर्घार्घितार्घे घने ।
सङ्गनेन्दुकिरीटकैटभरिपुश्यामासितालङ्क्रिया सद्रत्नाकरयोः पिधानकरणिं स्वर्णातपत्रं गतं ।
तं लोहरमहीपालमन्वजायन्त भूभुजः । रड्डादेव्यागुणोदाराश्चलारश्चतुरास्सुताः ।
गुल्हणोनापरादित्यो राघवेणेव लक्ष्मणः । अभिन्नभावः संवृद्धिं वर्त्तते लोहरं श्रयन् ।
ललितादित्यदेवेन जयापीडोहि दारकः । भरतेनेव शत्रुघ्नः पाल्यमानः प्रवर्त्तते ।
पार्थिवाहस्करायारुनमस्कारादशस्करः । पञ्चमः क्षितिभृद्दुर्म्मध्यावालातपदवोदितः । २४७५
चपलैः शैशवाच्छुद्धानुभावत्वात् समौष्ठवैः । लडितैर्ललितादित्योचितोरण्याद्र्यत्यहो ।
दत्तरत्नाञ्जनं ताम्राधरं गौरं तदाननं । सवालातपभङ्गाङ्कस्वर्णपङ्केरुहायते ।
आलापास्तस्य माहात्म्यगर्भावालास्फुटा अपि । अमृतप्रभवश्रद्धा मथ्यमानस्य वारिधेः ।
महाभिजनमञ्जातो राजसूनुः सशैशवे । अभिधत्तेऽनुभावेन भव्येनागामि जृम्भितं ।
अत्यर्थमण्डनशिखण्डशिखोऽपि तोयस्पर्शासहाश्चितकलापिकलापभङ्ग्या ।
वापीनिपीतसलिलोवलितं प्रयाति चेष्टाकभावमहिमावरवर्णिभावः । २४८०

ख्यातस्तोमेनिना राजलक्ष्मीः पद्मश्रिया समं। सञ्जाता कमला चास्य कन्याः सत्कन्यवृत्तयः।
विनोदलीलोद्यानैस्तैर्नित्यकान्तैरपत्यकैः। द्योतितावनवद्यौ तौ प्रावृट्पुष्पाकराविव।
तीर्थायतनपूतेऽस्मिन्मण्डले खण्डितैर्व्ययैः। रड्डादेव्या एव याता भाग्यभावं विभूतयः।
कृतानुयात्रा सा दैवयात्रासु क्षितिपाङ्गना। राजलक्ष्मीरिवाभाति राजसामन्तमन्त्रिभिः।
सतीदेशे तीर्थसार्थास्त्यजन्त्यस्या निमज्जने। स्नानासक्तमतीमूर्त्तिस्पर्शेनोत्सुक्यमञ्जसा। ३४८५
चित्रं कालेऽत्र यात्रासु द्रष्टुं तृष्णोत्तरैः सदा। यत्प्रावृडिव तैस्तैषं जीमूतैरनुगम्यते।
स पार्थिवेषु तीर्थेषु स्नानाय प्रस्थिता भुवं। दिव्यैर्वर्षमिषात्तीर्थैः प्रावृष्येत तदीर्ष्यया।
अभ्रंलिहांश्च गिरींश्च कूलङ्कषानदीः। सुदङ्गी दुर्गमामार्गे तीर्थौत्सुक्येन वेत्त्यसौ।
सुवर्णैभिः प्रतिष्ठाभिर्जीर्णोद्धारैश्च धीरया। तया चित्रं चतुरया पङ्गुर्दिहा विलङ्घिना।
अद्यापि विचरच्चीरार्णवकान्तिच्छटाच्छलात्। यो भातीव सुधासूतिसितश्वेताश्मनिर्गतः। ३४९०
उपमन्योरुदन्याया दारिद्र्योपद्रवापहः। रुद्रो रुद्रेश्वरो नाम्ना श्रीमान् कश्मीरभूषणं।
जगत्सौन्दर्यसारं स सस्वर्णामलसारकः। शान्तावसादप्रासादोद्धारश्च विहितस्तया।
सत्त्वानामिव भृत्यानां कोपोर्व्वविकृते नृपे। उदन्वतीव शरणं सिन्धुर्हिमवतीव सा।
स्थिरप्रमादे भूपाले निग्रहानुग्रहौ क्षणात्। भूभुजामपि सम्वृत्तावविच्छिन्नस्तदिच्छया।
सोमपालात्मजो भूभृद्भूपालः प्राकृतस्तया। मानिन्यामेनिलादेव्या विवाहेन महार्हतां। ३४९५

उत्पत्तिभूमिसुलभानुभवो न भूम्ना कस्याप्यहो व्यभिचरत्यनुभावभावः।
तेजस्तमोविलुठनव्रतमुष्णभानोः स्कन्दं तदत्यमकरोत्तमसोऽपि चक्रं।

भुवनाद्भुतसाम्राज्यमार्जनो भूभुजाभवत्। प्रातिभाव्यं दृढं रत्नाकान्तमन्मण्डलावनिः।
ऊढायां मेनिलादेव्यां परिणेतुरभूदपि। पिता वैमत्यमुत्सृज्य निर्व्याजं राज्यदायकः।
राज्ञा प्राजिधरस्याजौ तरसा भूभुजोऽनुजः। वैरिभिर्निहतस्याग्रे वैरसंशोधनोद्यतः।
रड्डां शरणमत्योच्चैर्मानोत्कर्षो घटोत्कचः। भेजे राज्यश्रियं प्राप्य चित्रं राज्यश्रियं परां ॥ कुलकं ॥ ३५००
कृतसाहायकोऽमात्यैराज्ञः सप्रश्निमङ्कदं। राज्यं प्राभ्रंशयङ्गाहद्रुहं पश्चवटो नृपं।
अलङ्घयत्तत्प्रभावात् स्फारदानाम्बुनिर्भरात्। सरितं खड्गवल्लोच्च कृष्णां त्रिदिवगोचरां।
द्वितीयस्योरशाभर्त्तुरकीर्त्तिर्निजयासृजत्। देवप्रभावाद्योधाग्रमत्युग्रपुरमग्रहीत्।
श्रीनोशवारणशशिद्यानकल्लोलितास्ततः। बहवो वाहिनीनाथाः प्रथामित्यं प्रपेदिरे।
समादाविंशतीराज्यावाप्तः प्राग्भूभुजो गताः। तावंत्यवाप्तराज्यस्य पञ्चविंशतिवत्सरे। ३५०५
दृष्टदृष्टमनन्यत्र प्रजापुण्यैर्महीभुजः। परिपाकमनोज्ञत्वं स्थेयाः कल्पातिगाः समाः।
असोऽपि प्रवहत्स्वभावसरणेराख्यानमभ्यायते यावाम्भः स्रवति द्रवत्वमुदितोद्रेकेषु चावेयुषः।
कालस्यास्खलितप्रभावरभसस्फाति प्रभुत्वेऽद्भुते कस्यामुत्र विधातृशक्तिघटिते मार्गे निसर्गः स्थिरः।

प्रयाते ऽधिकेऽप्यर्द्धसमाषट्कशते कलेः । कश्मीरेष्वास्त गोनर्दः पार्थानां सेवया नृपः ।
सूनुर्दामोदरोऽस्याथ तस्य पत्नी यशोमती । गोनर्दोऽन्यस्तत्सुतोऽपि ततोऽतीत्य महीपतीन् ।
पञ्चत्रिंशतमम्नातानुग्रहाभिजनाभिधान् । राजाभवल्लवो नाम सूनुस्तस्य कुशेशयः । १५१०
द्वौ खगेन्द्रसुरेन्द्राख्यौ पुत्रपौत्रावमुष्य तु । गोधरोऽथान्यकुलजः सुवर्णाख्यस्तदात्मजः ।
तज्जन्मा जनकोऽप्यासीत्सूनुः शच्याः शचीनरः । अशोकोऽभवद्भूभृद्राज्ञोऽस्य प्रपितृव्यजः ।
तज्जो जलौकाः सन्दिग्धवंशो दामोदरस्ततः । तुल्यं त्रयोऽथ हुष्काद्यास्तुरुष्काभिजनोद्भवाः ।
अभिमन्युस्तृतीयश्च गोनर्दोऽथ विभीषणः । ताविन्द्रजिद्रावणश्च पितापुत्रौ क्रमान्नृपौ ।
अन्यो विभीषणः सिद्ध उत्पलाक्षश्च तत्सुतः । पश्चात्ततो हिरण्याक्षो हिरण्यकुलकस्ततः । १५१५
राजा वसुकुलस्तस्य सूनुः ख्यातस्त्रिकोटिहा । श्रीमिहिरकुलो राजा वकाख्यस्तदनन्तरं ।
क्षितिनन्दस्ततो राजा वसुनन्दस्तदात्मजः । नरोऽन्योऽक्षस्ततो गोपादित्यगोकर्णकौ क्रमात् ।
तस्मान्नरेन्द्रादित्योऽभूत्तत्पुत्रोऽन्धयुधिष्ठिरः । तस्य प्रभ्रंशितो भृत्यैरन्याभिजनसम्भवः ।
भूपः प्रतापादित्योऽभूज्जलौकोऽपि तदात्मजः । तुञ्जीनोऽन्यसुतस्तज्जो विजयोऽन्यकुलोद्भवः ।
जयेन्द्रस्तत्सुतोऽपुत्रः सचिवः सन्धिमानभूत् । युधिष्ठिरस्य पौत्रेण भूपादित्यात्मजन्मना । १५२०
श्रीमेघवाहनेनाथ गोनर्देऽभ्युदितं कुले । ततः प्रवरसेनोऽभूद्भूपः काश्मीरमण्डले ।
तत्सूनुश्च हिरण्योऽभूत् पालयन् क्षितिमण्डलं । मातृगुप्तोऽभवद्दत्तराज्यस्तेन शकारिणा ।
ततः प्रवरसेनोऽन्यस्तोरमाणात्मजः क्षितिं । लेभे हिरण्यभ्रातृव्यस्तस्य पुत्रो युधिष्ठिरः ।
ततो नरेन्द्रादित्यश्च रणादित्यश्च भूपतिः । क्रमादभूतां तत्पुत्रौ विक्रमादित्यभूपतिः ।
बालादित्यश्चोदभवद्विक्रमादित्यनन्दनः । बालादित्यस्य जामाता ततो दुर्लभवर्द्धनः । १५२५
सूनुर्दुर्लभकस्तस्य चन्द्रापीडोऽभवत्ततः । तारापीडोऽनुजन्मास्य मुक्तापीडोऽस्य चानुजः ।
भूपावास्तां कुवलयापीडो वैमातुरोऽस्य च । वज्रादित्यः सुतो राज्ञो मुक्तापीडस्य तत्सुतौ ।
पृथिव्यापीडसङ्ग्रामापीडावास्तां महीभुजौ । जयापीडोऽस्य मन्त्री च जज्जः पुत्रावपि क्रमात् ।
ललितापीडसङ्ग्रामापीडौ ज्येष्ठात्मजस्ततः । श्रीचिप्पटजयापीडः कल्यपाल्युद्भवोऽभवत् ।
अभिचारेण तं हत्वा साम्मत्यादितरेतरं । उत्पलाद्यैरसम्प्राप्तराज्यैस्तन्मातुलैः कृतः । १५३०
भ्रातुः पुत्रोऽजितापीडो जयापीडस्य तत्पदे । अनङ्गापीडनामा च सङ्ग्रामापीडजस्ततः ।
तमुत्पाट्योत्पलापीडोऽस्याजितापीडनन्दनः । अवन्तिवर्मा शूरेण तन्निरास्याथ मन्त्रिणा ।
नप्तोत्पलस्य विदधे साम्राज्ये सुखवर्मजः । शूरः शङ्करवर्मा स गोपालस्तस्य चात्मजः ।
रथ्यागृहीतः प्राभूच्च तद्भ्राता सङ्कटाभिधः । सुगन्धाख्या तयोर्माता तां विनाश्याथ भूभुजं ।
शूरवर्मप्रणप्तारं पङ्गुं तन्त्रिपदातयः । चक्रुर्निर्जितवर्माणं ततः पार्थस्ततः क्रमात् । १५३५
चक्रवर्मा शूरवर्मा चेति निर्जितवर्मजः । चक्रवर्मण्यतीतेऽथ पापी पार्थात्मजः क्रमात् ।
उन्मत्तावन्तिवर्मासीत्तत्पुत्रे शूरवर्म्मणि । राज्याद्भ्रष्टे द्विजैर्युक्ते राज्ये मन्त्री यशस्करः ।

प्रपितृव्यात्मजस्तस्य वण्टस्तनयोऽनु तं। राज्ये वक्राङ्घ्रिसङ्ग्रामस्तस्यौ निष्पाद्य तं ततः।
अमात्यः पर्व्वगुप्ताख्यो राज्यं द्रोहेण लब्धवान्। क्षेमगुप्तः सुतोऽस्यासीदभिमन्यौ तदात्मजे।
याते माता पाल्यमाने नन्दगुप्ते च तत्सुते। ततस्त्रिभुवने भीमगुप्ते च क्रूरचेष्टया। १५४०
पौत्रे तथैव निहिते स्वयं दिद्दाख्यया कृते। राज्ये सङ्ग्रामदेवोऽपि भ्रातृव्योऽन्ते नृपः कृतः।
हरिराजानन्तदेवावास्तां तस्यात्मजौ ततः। कलशोऽनन्ततनयः क्रमाद्भूपौ तदात्मजौ।
उभावुत्कर्षहर्षाख्यावपि निष्पाद्य भूपतिं। हर्षदेवं तमुद्दामविक्रमोऽन्यवंशजः।
भ्रातुः पुत्रस्य दिद्दाया जस्सराजस्य नप्तृतः। मल्लाभिधानादुद्भूतो भूपतामुच्चलोऽभजत्।
द्रोहेण तं हतवतां भृत्यानामग्रतस्ततः। शङ्खराजान्यनामाभूद्रड्डाख्यः क्षणिको नृपः। १५४५
गर्गेण निहते तस्मिन् सल्हाद्वैमातुरोऽप्यभूत्। तस्योच्चलमहीभर्त्तुर्भ्राता निर्व्वध्य तं बली।
सुस्सलाख्योऽग्रहीद्राज्यं मासिकच्चलसोदरः। विरक्तैः पातिते तस्मिन् राज्याद्भृत्यैर्नृपः कृतः।
षण्मासान्हर्षभूभर्त्तृनप्ता भिक्षाचराभिधः। पुनर्निर्व्वास्य तं प्राप्तराज्ये सुस्सलभूभृति।
क्रमाल्लवन्यैर्विश्वस्तैर्द्राज्योद्वर्जिते हते। लवन्याग्निखिलांस्तांश्च हत्वा भिक्षाचरं नृपं।
सुतः सुस्सलभूभर्त्तुः सम्प्रत्यप्रतिमक्षमः। नन्दयन्मेदिनीमास्ते जयसिंहो महीपतिः। १५५०

गोदावरी सरिदिवोत्तुमुलैस्तरङ्गैर्व्यक्तैः स्फुटं सपदि सप्तभिरापतन्ती।
श्रीकान्तराजविपुलाभिजनाब्धिमध्यं विश्रान्तये विशति राजतरङ्गिणीयं।

इति श्रीमहाकविश्रीकल्हणकृतायां राजतरङ्गिण्यामष्टमस्तरङ्गः।

कृतिः श्रीमहामात्यचम्पकप्रभुसूनोर्महाकवेः कल्हणस्य।

समाप्तेयं राजतरङ्गिणी।

---

## ॥ अथ ओनराजकृता द्वितीया राजतरङ्गिणी ॥



सिद्धे यत्र सति त्रपाकुलमिव स्पर्द्धाभिलाषाद्धतेरन्तर्द्धिं वहति त्रिलोकमहितं शेषं निजार्द्धद्वयं।
स्नेहैकीभवदाशयद्वयजयाकाङ्क्षीव गाढं मिलद्देहार्द्धद्वयमस्तु तद्भगवतोः सद्भावसम्पत्तये।
दातुं भक्ताय कल्याणं गर्भे बिभ्रदिवाम्बुदं। तुन्दिभोगणराजः स विघ्नशान्तिं करोतु वः।
श्रीगोनर्दमुखैर्धर्म्मसम्मुखैराकलेः किल। कश्मीरकाश्यपी भूपैरपालि गुणशालिभिः।
तेषामभाग्यहेमन्तनिशातमसि तिष्ठति। नैव कश्चिदपश्यत्तां काव्यार्कानुदयाच्चिरं।
रसमय्या गिरा दृष्ट्वा नित्यतारुण्यमापिपत्। अथ श्रीजयसिंहान्तां तत्कीर्त्तिं कल्हणद्विजः। ५
ततोदेशादिदोषेण तदभाग्यैरथापि वा। कविवाक्सुधया कश्चिन्नाजिजीवत् परान्नृपान्।
श्रीजैनोल्लाभदेने च्छां सम्प्रत्यचनि रचति। ओनराजाभिधस्तेषामुद्यतो वृत्तवर्णने।
दर्पम्लानिभवां राजपान्थानां तापसन्ततिं। हन्तुं संरोपितः काव्यद्रुमोभाविफलोदयः।
तपस्कारसं चिन्ना विनयामृतशीतलैः। सज्जनैर्वर्द्धनीयोऽयमपि यत्नेन भूयसा।
मग्नान् विस्मृतिपाथोधावतीतान्नृपतीनिमान्। श्रीजैनोल्लाभदेनस्य कारुण्यादुज्जिहीर्षतः। १०
सर्व्वधर्म्माधिकारेषु नियुक्तस्य दयावतः। मुखाच्छ्रीशिर्य्यभट्टस्य प्राप्याज्ञामनवज्ञया।
राजावलिं पूरयितुं सम्प्रति प्रतिभा मम। कविनामाभिलाषेण नतु यस्मान्ममोद्यमः।
क शुण्ठीजलवन्मद्वाक् क च काव्यतरङ्गिनं। छायामात्रानुकारेण किं गडं पुण्ड्रकायते।
अन्तःशून्यां लघुम्प्रज्ञान्तुम्बीमिव वहन्नहं। पारं राजतरङ्गिण्यागन्तुं हन्तोद्यमङ्कृतः।
पृथ्वीनाथगुणाध्याने चापलं मे न दूषणं। अलङ्कारैरहङ्कारात्कुरूपापि हि वल्गति। १५
कवीनामुपयोग्या वा मद्वाक् स्वान्तरशुद्धये। गङ्गाजलं जलं तेषां यैर्न पीतं जनान्तरं।
राजोदन्तकथासूत्रपातमात्रं कृतं मया। कुर्व्वन्तु रचनामत्र चतुराः कविशिल्पिनः।
मणीनां घर्षणायैव महाशाणस्य नैपुणं। कान्तिप्रणयने तेषां मुखमारमणेस्तु तत्।
विनैव प्रार्थनां काव्यं कवेः पश्यन्ति साधवः। किमर्थितः शशी विश्वं सुधासारेण सिञ्चति।

अनुनीतोऽपि कालुष्यं खलः काव्ये न मुञ्चति। सुधाधौतोऽपि माङ्गारः शुभ्रतामेति जातु चित्। १०
पश्यन्तु मत्काव्यमिति चिरं दूरं गता कवेः। अन्तः परमुखप्रेक्षिभावदैन्यकदर्थना।
समः स्यादप्रवीणानां गीतसंस्कृतयो रसः। वानरा गुञ्जते गुञ्जाम् शीते वह्निकणभ्रमात्।
काव्यं श्रुतमपि प्रीत्यै नाबोधोपहतात्मनां। हीनदन्तबलस्येक्षुर्मुखे न्यस्तः करोति किं।
पदार्थसुन्दरे काव्ये दर्शिते निर्मलात्मनां। दुर्व्वारं गुणिरत्नानां मत्सरप्रतिबिम्बनं।
लक्ष्मणा दूषयन्निन्दुं बुधं मत्सरयक्ष्मणा। विधाता वाच्यतामेति परोद्रेकासहाग्रणीः। १५
मद्वाक्कल्हणकाव्यान्तः प्रवेशादेतु चर्व्वणं। मङ्गलाम्बु सरित्तोये पतितम्पीयते न किं।
जगदानन्दनो देवद्विजातिकृतवन्दनः। क्षितिसंक्रन्दनः श्रीमानासीत्सुस्सलनन्दनः।
गजराजैकवाहत्वप्रसिद्धिमपि बिभ्रति। जयसिंहाभिधाने श्रीश्चित्रं यस्मिन् सदावसत्।
वाग्देव्या लालिते मात्रा श्रियो भोक्तरि भूपतौ। तयोः श्वश्रूस्नुषात्वेन नैवादर्शि विरोधिता।
त्रिगर्त्ताधिपतेर्वंश्यं मल्लं जातु सुशर्म्मणः। वैरिनिर्व्वासितं प्राप्तं हस्तिकामं नृपोऽग्रहीत्। २०
सर्व्वे चौषधयस्तृणानि मणयो ग्रावाण एवाखिलैर्मन्यन्ते गुणिनो दिगन्तरगतास्तावज्जनाः प्राकृताः।
यावन्नैव नयन्ति कर्म्मभिरभिध्येयप्रकर्षप्रथैश्चित्रप्रायदशैश्च निर्म्मलमतिस्फारं जनं रञ्जनं।
वसुधावासवे याते जेतुं यवनमेदिनीं। सैन्यस्य वल्लभो मल्लः शौर्य्योद्रेकादथाभवत्।
हतशेषं तुरुष्कोशसैन्यं तुलयितुं निशि। शिविरं मल्लचन्द्रोऽगाद्रिपूणां साहसार्जितः।
यत्र न प्राविशद्वायुर्भीत्येव सुभटैर्वृतं। ध्रुवं मन्त्रौषधिबलात् प्रविश्याथ बलान्तरे।
सुप्तद्रोहासहो भीतेरनिघ्नन् यवनेश्वरं। उपानहौ स्वनामाङ्के निनायास्य शिरस्तटं। २५
उपानहौ परिज्ञाय गृहीत्वा चाय सोऽप्यरिः। भूपतेः शिविरं यातः श्रियं कीर्त्तिमिवाददत्।
द्वे मूर्त्ती तपनानलावथ तथा शम्भोः शशाङ्काम्भसी नेता हन्त मिथो गतानुगतिको लोकस्तुलां तां दधौ।
सूर्य्याचन्द्रमसोर्यथा स्वमुपलैः कान्तैर्विशेषं परं तेषां तत्प्रतियोग्यसम्भविगुणैर्लब्धा जनोरोचकौ।
त्रिंशेऽब्दे फाल्गुणे कृष्णद्वादश्यां भूमिवल्लभः। स्वसौभाग्येन दिव्यस्त्रीदृशमप्रीणयत्तरां।
अथाभ्यषेचि तत्पुत्रो जडैः स परमाणुकः। अणीयः पत्रविस्फारैः कुन्दो माघदिनैरिव।
अवधूय प्रजात्राणमवधीर्य्य च दिग्जयं। कर्त्तुम्प्रारभताखिन्नं राजा कोशस्य सञ्चयं। ३०
दातुं भोक्तुमनीशस्य श्रोत्रियस्येव सम्पदं। प्रयागजनकौ धूर्त्तौ राज्ञो मुमुषतुः श्रियं।
तौ हि स्वभृत्यैर्निःसत्यौ कारितैराचमाकृतिं। तमत्रासयतां रात्रौ रात्रौ चित्रेण कर्म्मणा।
मिथ्यात्मलीनतां तस्य नाटयन्तौ कुमन्त्रिणौ। रक्षास्थानिति तौ वित्तं त्याजयामासतुर्नृपं।
स्थाने भिषायकस्यैतावाश्रित्य स्वानुजीविनं। तृणच्छन्नं महारत्नैस्तैश्चैत्यं पूजयतः स्म तौ।
स पुनः कृतसङ्केतः पश्यत्स्वथ जनेष्वहो। राज्ञः कृत्वाशिषं रात्रौ सालङ्कारो ययौ वनं। ३५
भिषायको बलिं यत्ते गृहीत्वा व्यधिताशिषः। निर्व्विघ्नं भावि तद्राज्यमिति तौ भूपमूचतुः
एवं कदीश्वरस्यास्य बालस्येव विभीषिकाः। सन्दर्श्य कोशं निःशेषं लुण्ठयाञ्चक्रतुर्विटौ।

राजा सार्द्धां सप्ताब्दांस्तु क्ष्मां भुक्त्वा दिवसान्दश । चत्वारिंशाब्दमाघस्य सिताष्टम्यां लयं ययौ ।
वन्तिदेवाभिधस्तस्य चत्वारिंशेऽथ वत्सरे । भाद्रशुक्लदशम्यां स तस्य पुत्रोऽप्यपश्यत ।
वोप्यदेवाभिधः पौरैर्योग्यलाभान्नृपः कृतः । प्रापितो चामरश्रितः पूजामिव भिषायकः । ५०
दृष्ट्वा स्थूलशिलापृष्ठेऽमूढः सोऽथ स्वमन्त्रिणः । आदिशत् स्तन्यपानेन वर्द्धन्तामितरा इति ।
श्रुत्वा तत्स्थाममाहात्म्यं वालिशैर्मन्त्रिभिः सह । आगात् सुरेश्वरीक्षेत्रं नौपथेन स जातुचित् ।
अप्सु स्वप्रतिबिम्बेऽस्य कुर्वतो मुखवैकृतं । रुषा चपेटां ददतोऽन्यपतन्मणिमुद्रिका ।
राज्ञः क्व मणिमुद्रेति पृच्छतः सोऽभ्यधादिति । पतिता सा जले रेखां तत्राभिज्ञानमाचरं ।
एवं निदर्शनीभूय मूर्खाणां नाम राजतां । नवाब्दांश्चतुरो मासान् सार्द्धे द्वे च दिने व्यधात् । ५५
तस्यानुजोऽथ भूभारमनिच्छन्नपि जस्सकः । स्वहट्टिकामैरत्यज्ञो लवन्यैरभ्यषिच्यत ।
बध्यन्ते न शुकाद्वा वादितवचःसंवादिनो वायसा भूमिः शर्करिलाश्मैरेव भजते नो घर्षणक्षोदनं ।
अश्मा सैन्धववन्न जातु गमितो निष्पिष्य चूर्णीकृतिं केषाञ्चिद्गुणवद्गुणाय महते दोषोऽपि सम्पद्यते ।
सोदरौ चुवभीमाख्यौ द्विजौ तस्य महीभुजः । धूर्त्तत्वेन प्रियां राज्ञामचिरादुदलङ्घतां ।
समर्थावतिसामर्थ्यात् स कथं नो सहिष्यते । भूपं सत्रापि सामर्षं मान्यं वव्रतुरित्यमू ।
स्वयं यश्च न संभेजे तयोरेको नृपश्रियं । तत्रन्योन्यस्मिन्कृताहेतुर्नत्वनौचित्यशङ्किता । ६०
यान्त्यङ्कमङ्कमनवङ्गशमङ्कयन्ति रागं प्रदर्श्य हृदि कम्पमुदस्ययन्ति ।
व्यापादयन्ति विषवेदनया विशेषाद्विश्वास्य दुष्टपिटिका युवतिश्च हा धिक् ।
वार्द्धकक्षीणशक्तिर्वा द्विरक्ता स्वबधूरपि । हत्वा चुवं विषेणाशु भीमं भोगमकारयत् ।
सा देवरस्य सङ्गेन श्वित्रसञ्चित्रिता सती । दानेन माधवादीनां स्वपापं पर्य्यणीनमत् ।
सोऽष्टादशाब्दान् क्ष्मां भुक्त्वा सचयोदशवासरान् । युगागाङ्काब्दमाघाश्व्यदशम्यां प्रलयं ययौ ।
ततः श्रीजगदेवस्तत्तनयो विनयोर्ज्जितः । ततान जनताहर्षं मधुमासइवाधिकं । ६५
परस्परविरुद्धानां भृत्यानां तुल्यवृत्तिता । तत्राभूदुत्पलाज्ञानामिव सन्ध्याक्षणागमे ।
उज्जहार महीनाथः पृथुविज्ञानकौशलः । भूतले दुर्व्यवस्थानं शल्यं शल्यहरो यथा ।
मनःशल्यायमानः स निःसामान्यगुणो नृपः । कुचक्रिकावलाद्दैशान्मन्त्रिभिर्भिरवास्यत ।
निग्रहानुग्रहाधायिमन्त्रभ्रंशे गुणराजलं । स प्रापत्स्वचिरं मित्रं कपोन्द्रमिव राघवः ।
उदयप्राप्तिलोभेन सूरद्विजपती समं । अगातामथ कश्मीरदेशन्तौ विस्मयावहौ । ७०
चिरं भुक्तां श्रियं त्यक्तुमनीशास्समरोश्वराः । तन्मन्त्रौजो ऽहृतायान्तः प्रापुः शलभतां दिवः ।
जित्वा क्ष्मां बुभुजे भूपश्चचामरहासिनीं । लक्ष्मीमराजलक्ष्मा तु श्रीगुणाकरराजलः ।
राजा रज्जुपुरेऽराजद्राजतच्छत्रधारिणं । हर्षेश्वरस्य प्रासादं निर्ममे निर्ममेहितः ।
वातश्याद्वारपतितां पद्मनाभवता ततः । दुरात्मनावधि च्छत्रविषदानेन भूपतिः ।
रचित्वा चितिमब्दान् स सप्त हत्तूंश्चतुर्दश । नन्दाष्टाङ्काब्दचैत्रान्यचतुर्दश्यां लयं ययौ । ७५

तत्पुत्रो राजदेवोऽथ काष्ठवाटं भयाद्गतः । आनिन्ये वामपार्श्वैर्दारैरस्य विरोधिभिः ।
तं सल्हणाख्यदुर्गान्तःप्रविष्टं दुष्टचेष्टितः । अवेष्टयद्दलैः पद्मो मण्डलैरिव पन्नगं ।
उपायनीकृतापूर्व्वपादुकालोककौतुकात् । प्रमत्तं कोऽपि चाण्डालो दारेशमवधीद्रणे ।
अभिषिक्तस्ततो भट्टैः सभेरीशङ्खनिःस्वनं । प्रणतानन्तसामन्तः सेवकानन्वजिग्रहत् ।
असामान्यो लवन्येन्द्रान् स वासन्यकुटुम्बिनान् । निन्ये चोणोपरिष्टढो रूढभारोढिमादिशन् । ८०
मल्लेश्वलाख्यचन्द्रस्य बलिनो लहरेशितुः । हरतः श्रीनगर्य्यर्द्धं स्वाम्यं न प्राभवत्तु सः ।
पुण्यं राशीभवन्मूर्त्तमिवाथ स्वाभिधाङ्कितं । बलाख्यचन्द्रः सान्द्रौजा नगरान्तर्मठं व्यधात् ।
कोऽयं खशो मृदु कश्चिदस्माभिरभिषिच्यते । अमन्त्रयन्निदं भट्टा राज्ञावगणितास्चिरात् ।
न भट्टोऽहं न भट्टोऽहं न भट्टोऽहमिदं वचः । अश्रूयतापि भट्टेभ्यो निर्दिष्टे भट्टलुण्ठने ।
तदैव विमलाचार्य्यः शाके खेषुनवाङ्किते । षडद्रिमन्दमासस्य मलभ्रममवारयत् । ८५
निर्म्ममे निर्म्ममो राजपुरीं राजोलकं तथा । राजदेवः स राजेन्द्रराजन्यार्जितमङ्गलः ।
अहानि सप्तविंशानि चत्वारिंशांश्च वत्सरान् । मासत्रयीञ्च राजा स क्ष्मां रक्षित्वा क्षयं ययौ ।
सङ्ग्रामदेवस्तत्पुत्रो गोत्रास्वत्रामतां भजन् । आसमासत्रयद्राजसिंहः शान्तवदन्तिनां ।
विश्वासात् सूर्य्यमनुजं चक्रे प्रतिनिधिं स्वयं । कुचक्रिकः स भोगेभ्यो लुभ्यन् द्रोहमचिन्तयत् ।
कृतद्रोहो महीभर्त्ता भीतः स लहरेशितुः । चन्द्रस्य मण्डलं सूर्य्यः प्राविशदुदये क्षया । ९०
दारुणेऽरुणकाले स सूर्य्यं चन्द्रान्वितं तदा । स्वर्भानुरिव भूभानुश्चित्रं समममीमिलत् ।
शमालाधिपतिस्तुङ्गः सूर्य्यं पार्श्वं नयन्नदात् । कृतयात्रेण राज्ञाऽथ नीचभावमनीयत ।
मार्गैर्निरिन्दुरविभिश्चौरवद्रजनौ भ्रमन् । विटत्यक्तस्ततः सूर्य्यो बद्धा राज्ञा व्यपाद्यत ।
स्वलक्ष्मीं रक्षितुं साक्षात्तस्मिन्वात्तक्षणे प्रभौ । अकारयन्नदिभयं स्तेनाः कल्हणनन्दनाः ।
गोत्रजेषु बलिष्ठेषु नष्टाशः सोऽथ भूपतिः । शिष्टमिष्टश्च शरणमगाद्राजपुरीपतिं । ९५
तस्मिन् दण्डधरे दूरं याते डामरफेरवः । अन्नाण्यपि विशामाशुर्निःशेषं रक्तपायिनः ।
राज्ञा सुमनसा त्यक्तं द्विजैश्च स्पर्शदूषितं । भोज्यं डामरडोम्बानां तद्राज्यान्नमभूच्चिरं ।
स्वमण्डले विशीर्णेऽथ परमण्डलमाविशन् । न कैरनुमतो राजा प्रत्यासन्ननवोदयः ।
प्रत्यक्तो राजपुर्य्याः स रिपून् समरे जयन् । शाल्लाण्यात्काल्हणीन् रक्षन् राज्यं पुण्यश्च लब्धवान् ।
एकविंशतिशालं स श्रीविशालं विशाम्पतिः । गोद्विजानां निवासाय चकार विजयेश्वरे । १००
काल्हणप्रणिधीनां स द्विषां लुण्ठनकाङ्क्षिणां । चौराणामिव दीपोऽभूद्दूषणीयो महीपतिः ।
शाखाक्रान्तदिगन्तः स सद्गुणैर्दुरायशैः । कलिकल्पद्रुमो राजा विच्छिन्नः कल्हणात्मजैः ।
नायकीकृत्य तं भूपं कविः पण्डितयःशकः । श्लोकहाररलतां विद्वत्कण्ठभूषात्वमानयत् ।
षोडशाब्दान्दशाहानि स भुक्त्वा क्ष्मां व्यपद्यत । जगद्रुद्रेऽथ पञ्चम्यां भाद्रेऽष्टाविंशवत्सरे ।
राजदेवोऽथ तत्पुत्रोहत्वा स्वपितृघातकान् । पृथ्वीराजे प्रजाभारं सर्व्वमेव समार्पिपत् । १०५

सेदर्य्यादक्षिणे पारे सरसे स महीपतिः। स्वनामाङ्कं व्यधात् कोट्टं यशोराशिमिवापरं।
प्रमादाद्भङ्गमानीतः श्मशानविजयोद्यमे। तेनोत्पलपुरे विष्णोः प्रासादो नूतनीकृतः।
पुष्पं चन्दनवृक्षस्य फलं चम्पकभूरुहः। अपत्यं तस्य राज्ञस्तु हन्त नाकारि वेधसा।
भिषायकपुरस्थस्य कस्यचिद्ब्राह्मणस्य सः। पुत्रं लक्ष्मणनामानं पुत्रीयामास भूपतिः।
अकृत्रिमपितापुत्रप्रीतिं प्रीतिः पयोयषी। वस्त्वेवोचितमालेख्यं तयोरतुलयत्तरां। ११०
श्रीसमुद्राभिधा देवी विमुद्रितसमुद्रजा। वितस्तायां स्वनामाङ्कं नगरान्तर्मठं व्यधात्।
त्रयोदशदिनं मासं वत्सरांश्चैकविंशतिं। क्ष्मां भुक्त्वैकोनपञ्चाशे वर्षे स द्यामगात् स्वयं।
कथञ्चिल्लक्ष्मदेवोऽथ पाल्यमानाङ्गविक्लवः। नानाकण्टकिनीं वल्लीमिव क्षोणीं बभार सः।
चन्द्रीकृतोऽपि नामुष्मत्त्वधर्म्मं द्विजभूपतिः। न माणिक्यश्रियं धत्ते रञ्जितोऽश्मापि जातुचित्।
वितस्तायास्तटे श्वश्रूमठोपान्ते मठं नवं। निष्पङ्का निजनामाङ्कं महिला महिषी व्यधात्। ११५
कज्जलेन तुरुष्केण बहिरेत्याथ मण्डले। मलिनेन प्रजादृष्टिस्तत्पाद्यास्रवता हता।
त्रयोदशाब्दान् मासांस्त्रीन् द्वादशाहश्च भूपतिः। भुक्त्वा द्वाषष्टवर्षेऽथ पौषान्ते स व्यपद्यत।
कज्जलोपद्रवात्तस्माल्लेदरीमाचनायकः। सिंहदेवोऽथ संग्रामचन्द्रेणाबोधि भूपतिः।
नगरान्तर्म्मठं कृत्वा लहरेन्द्रे मृते सति। सिंहदेवोनृसिंहोऽथ क्ष्मां ररक्ष क्षयाकुलां।
सिंहदेवान्नृसिंहस्य सिंहेन गुरुणान्वितः। प्रतिष्ठां सिंहलग्नेऽथ ध्यानोद्धारेऽकरोत् कृती। १२०
कर्त्ता कार्य्यस्य लग्नस्य गुरुः सिंहस्य कोविदः। पतितेयं भवे तस्य मते सिंहपरम्परा।
स मिष्कलत्रविक्रीतचौरेण विजयेश्वरं। एकाहएव स्नपयन् व्रतशुद्धिं ययौ नृपः।
राज्ञा श्रीशङ्करस्वामी गुरुसंन्यासपदेऽकृत। योऽष्टादशमठैश्चार्घ्यदक्षिणाभिरपूज्यत।
परलोकजयोपायं वाग्देवीप्रार्थितं नृपः। आत्मोपदेशमिमं श्लोकं शश्वत्पाठ्यं सदापठत्।
पावकनिर्म्मलदृष्टिं विबुधगणैरर्च्यमानपादमहं। शशिशकलादृत्युतं गौरीशं शङ्करं वन्दे। १२५
दुहितुर्दुश्चरित्रेण योऽभद्दण्डः पितुः पतन्। दृष्टागत्यार्थितो राजा नर्त्तक्या तं न्यवारयत्।
स दुर्जनपरिष्वङ्गादास्तिकप्रश्नयोज्झितः। धात्रीपुत्रं स्मरादर्शं स्वात्मानं प्रत्यविन्दयत्।
दर्याख्यो भगिनीस्वामी कामसहायपदंस्थितः। तं विरक्तप्रजं मुक्तविनयं छद्मनावधीत्।
चतुर्दशाब्दान् षण्मासांस्त्र्यहन्यूनान् महीपतिः। भुक्त्वा शुचौ दिवमगात् स वर्षे सप्तसप्तते।
तज्ज्ञाता सूहदेवोऽथ कामसहायपदंस्थितः। जडोऽपि सकलामेव कश्मीरक्ष्मां वशे व्यधात्। १३०
दिगन्तरादुपागत्य बहवो वृत्तिलिप्सया। समाश्रयन् महीपालं पुष्पद्रुममिवालयः।
पार्थोऽन्यइव पार्थोऽभूत् पञ्चगह्वरसीमनि। योगभरपुरं चक्रे तत्पुत्रोऽवभुवाहनः।
तद्वंश्यः कुरुशाहोऽभूद्यदाहृदयपर्व्वते। व्याकिरच्छद्मना भेजे यशः शुभ्रत्विषं निशा।
काश्मीरः पर्व्वतस्तत्र राजा श्रेयो हरांशजः। इत्येतत्प्रत्ययायैव यत्राभाच्चक्षुषां त्रयं।
काश्मीरेषु हि साम्राज्यं कुरुशाहस्य सन्ततिः। चन्द्रदेवमुखीमुख्याः ख्यातकान्तिः [illegible] १३५

तादृशोऽजनिष्टास्माद्यस्य चापलताश्रिता । मुहुर्मुहुरहो मौर्वी अत्यन्तमगमत्तरां ।
शहमेरः स्वशौर्य्याग्नी सोभानुस्ततोऽजनि । यस्य वैरिवधूवाष्पैः प्रतापाग्निरदीप्यत ।
वने विहरतस्तस्य शस्मीरस्य कदाचन । मृगया प्रथमं दृष्टिं पश्चान्निद्रा व्यलोभयत् ।
राज्यमासन्नतिर्भावि कश्मीरेषु तवेति सः । स्वप्ने वाक्सुधया तत्र महादेव्याभ्यषिच्यत ।
पञ्चाग्न्यर्कमिते शाके नवाष्टाङ्कितवत्सरे । ततः सपरिवारः स कश्मीरानविशच्छनैः । १४०
सकुटुम्बं तमायान्तं वृत्तिदानेन भूपतिः । अनुजग्राह सोत्कर्षं चूतद्रुमदवालिनं ।
डलचाख्यः कर्म्मसेनचक्रवर्त्तिचमूपतिः । कश्मीरान् स तदैवागान् सिंहो मृगगुहामिव ।
षष्टिग्रामसहस्रेषु स्वाम्यं दातुमिवाच सः । तावत्सङ्ख्यसहस्राणि स्वसैन्ये सादिनोऽग्रहत् ।
डलचं धनप्रयोगेण निविवर्त्तयिषुर्नृपः । सर्व्वेषामेव वर्णानां दुर्व्वर्णं दण्डमचिरत् ।
प्राणाकृत्या प्रभोः कोपे तत्प्रतिग्रहसाहसः । प्रायस्था ब्राह्मणाः प्रायश्चित्तीयाश्चकुरक्रमं । १४५
तदैव कालमान्याख्यैर्भाद्वैर्घट्टितवैरिभिः । सबन्धुगोत्रजो व्यासादकृतन्यो न्यहन्यत ।
मान्योऽसामान्यधीः कालमान्यवंशदवानलः । अवाशिष्यत तत्पुत्रो दैवादेकः स रिञ्चणः ।
व्यालटक्कमुखैर्भ्रन्वस्तत्रसंयोजितैरथ । बद्धा संहतिकन्थां स तान् जडान् जेतुमिष्टवान् ।
निषाद्यमानकोशं मां भृत्यं वे वृणुतेति सः । तान् प्रत्यश्रावयद्दूतमुखेन स्वाततायिनः ।
नृसिंहः स नदीतीरे सिकतास्थगितायुधः । तान् प्रत्यैक्षत रक्तस्य ननु कोशस्य पीतये । १५०
व्यालाद्यैरागतास्तत्र कालमान्या निरायुधाः । सिकतान्तर्निविष्टश्च परस्त्रैस्तृणीकृताः ।
प्रत्ताग्र वैरिरक्तेन पितृद्रोहरजोमलं । शेषानेकारिभीभ्योऽगात् कश्मीरान् बन्धुभिः सह ।
पूर्णस्य रामचन्द्रस्य दुहितान्ये धरार्य्यमा । कोटाभिधे रिञ्चणाश्चारुहृदयं सोऽथ सोढवान् ।
हेतिभिस्तापयत्याशा डलचे कृष्णवर्त्मनि । काश्मीरिकैर्जनैः सर्वैः शलभत्वमलभ्यत ।
हृद्दयोर्डल्चरिञ्चाभ्यां प्राच्युदीच्योर्विकृन्तनः । वसतेः पश्चिमामाशां प्राग्यमाशामथागमत् । १५५
अधोऽडलचाम्बुपूराद्गौरी रिञ्चनमारुतात् । छायायुषां फलाढ्यानां पुन्नागानामभूत्तदा ।
पविग्रावमिव स्थानच्युतं विलोलसत्त्रया । बलश्रीरिञ्चनो लोकं काश्मीरिकमपाहरत् ।
धनाम्बु प्राप्य भोट्टेभ्यः काश्मीरजनविक्रयात् । गर्ज्जन्नाशाः प्यधात्सर्वास्तदा रिञ्चनवारिदः ।
नाशिनाशेषदेवोऽथ स्फीतशीतभयाकुलः । डलचः कश्मीरतस्तारबलमार्गेण निर्ययौ ।
जनाः काश्मीरिकादुर्गविलेभ्यो मूषिका इव । डलचेऽतीगते वन्दीकृतशेषा विनिर्ययुः । १६०
नालक्ष पितरं पुत्रः पिता तञ्च न कश्चन । भ्रातृंश्च भ्रातरो डल्चरागसोपप्लवात्यये ।
मितलोकाखिलचेत्रा निर्भोज्या दर्भनिर्भरा । सर्गारम्भ इव प्रायस्तदा काश्मीरभूरभूत् ।
समर्थाख्यपदीत डल्चो रिञ्चनः प्राभवत् पुनः । विश्वमन्धयति ध्वान्ते सुखभाजोऽभिसारिकाः ।
डल्चराजविनिर्मुक्तं राजानं तुङ्गिमस्पृशा । अहरन्नस्य पट्टेण रिञ्चनास्ताचलस्ततः ।
दृष्ट्वा गगणगिर्य्यग्रे भास्वन्तं रिञ्चनं स्थितं । सममज्जन न कैरात्रः प्रत्यासन्नोऽस्तसंस्तवः । १६५

रिञ्चनश्चैनराजस्य जिहीर्षोर्नगरीमिमां । कुलचन्द्रो रामचन्द्रो विघ्नं चक्रे पदे पदे ।
भौट्टांल्लहरकोट्टान्तःपट्टविक्रयकौतुकात् । प्रत्यहं वञ्चनोद्योगी रिञ्चनोऽथ न्यवेशयत् ।
तथैव लहरस्थान्तर्भुट्टलोके प्रवेशिने । अपिबद्रामचन्द्रासृङ्मधु शस्त्राणि रिञ्चनः ।
रामचन्द्रकुलोद्यानकल्पवल्लीं स रिञ्चनः । वक्षःस्थले महाबाहुः कोटादेवीमरोपयत् ।
श्रीरिञ्चनभयाद्राजा नगरं त्यक्तवांस्ततः । विप्रशापाग्निदग्धानां कुतः स्यादुदयाङ्कुरः । १७०
प्रमण्डलगुहां राजजम्बुभिर्नीतोऽविशत्ततः । पापस्य तादृशो मृत्युः सम्मुखस्य रणे कथं ।
वैरिधाराधरस्थितं रणे राजाभ्यवर्षणैः । द्रुतद्रुतानां द्विजातीनां चक्रे नैवेद्यसञ्चयं ।
पञ्चाहोनांश्चतुर्मासान् वर्षाण्येकोनविंशतिं । स राजराजघोरत्वाव्याजात् क्षोणीमभक्षयत् ।
श्रीरिञ्चनसुरत्राणो भुजवातायने महीं । व्यश्रमयत् श्रान्तां दौस्थ्यात् दुःस्थितिविप्लवैः ।
पूर्वदृष्टमिवाशेषं तिमिरापगमे पुमान् । कश्मीरमण्डलः पूर्वराजसौख्यं तदैक्षत । १७५
दीपैरिव प्रतिस्थानं चैत्रैरन्यैः स्थिरं स्थितं । प्रकम्पन्त प्रभा तस्य ते राज्ञो बलवायुना ।
मन्त्रमुद्रा कृते भेदे बाणस्येव प्रवेशिनि । अभूत्तन्न्यकन्यावासितं विश्वयता तदा ।
वने कण्टकिनीवाङ्गनङ्गा व्याकुलोऽभवत् । तथैव क्षोणिपचौरदेशे समचरन्नृपः ।
तस्य दाक्षिण्यदक्षस्य प्रजानां हितहेतुना । पुत्रे मन्त्रिणि मित्रे वा दुष्टे नासीत् क्षमा ।
छेदं यच्छन्नतुच्छानां वैरिणामुच्चलत्क्रियां । आक्रोदनमगच्छत्स उच्छ्रयाली करादिव । १८०
टुक्कभ्राता तिलकिनाम मार्गे सन्तापखेदितः । गोपाख्याः कुर्वन्ती ग्रामे क्षीरं निष्पीतवान् हठात् ।
राज्ञा विज्ञापिते नाथ सद्यो गोपालयोषिता । अनुयुक्तस्तिमिर्भीत्या व्यधात् सर्वस्य निह्नवं ।
असत्ये भाविता गोपी यदा धैर्यान्न सास्खलत् । पाटयन्निर्मलेनैव स सत्यैक्यो व्यदारयत् ।
तस्य पानाशयाद्दीर्णाद्विर्यान्त्या क्षीरधारया । राज्ञः कीर्तिर्मुखश्रीश्च गोप्या प्रपत्रसन्नतां ।
वनवाले निवसतोरश्ववातां कयोश्चन । अश्वे किशोरकौ तुल्यौ कस्मिन्नपि वनान्तरे । १८५
सिंहसंत्रायितापत्या तयोरन्यतमा वने । अश्वमातृस्थानात्सत्यादपुपुत्रो यिषत् परं ।
मदीयोऽयं मदीयोऽयमित्यसञ्जातनिश्चयौ । वडवाधिपती क्षोभाद्राजान्तिकमगच्छतां ।
स विवादं तयोः श्रुत्वा स्वान्तिके क्षीयमानुषैः । वडवे च किशोरश्च राजाभ्यानाय्यत ततः ।
तस्मिन् किशोरके बाल्याद्दूरं धावति लीलया । माता धात्री च नितरामन्विष्यापाय्यदेवशत् ।
सभ्येष्वनलमूकेषु वादिनोः क्षोभसक्तयोः । अश्वे नावानयन्मध्येवितस्तं सकिशोरके । १९०
बालाश्वं पातितं नद्यां नावो राज्ञा महाधिया । हठादन्वपतन्माता परा परमैक्षत ।
सन्दिग्धव्यवहाराणामेवं निश्चयकर्त्तरि । तस्मिन् राज्ञि जनोऽमंस्त कृतं युगमिवागतं ।
श्रीदेवस्वामिनं शैवीं दीक्षां याचन्नराधिपः । नाभ्यगाहि स भौट्टत्वात्तत्पात्रत्वशङ्कया ।
अनुजस्तनुजो बन्धुर्मन्त्री सहचरः सखा । व्यालराजो नृपस्याभूत्सर्वेषामतनिष्ठया ।
अहो व्यालः कृतं राज्ञा न स व्यालकृतं पुनः । मनो हि कार्यिकं हन्ति तत्कृतं न वपुः पुनः । १९५

कलानिधौ रसमये व्याले भूलोकभास्वतः। मूर्च्छिता रुचिरच्छेत्तोदच्छेदं जगतां तमः।
श्रीमानुद्यानदेवोऽथ रत्नप्रहरणोद्यतः। समादिशत टुक्कादीन् गान्धारक्षोभयादिति।
जीवतामेव गन्तव्यं जामे तन्नगरान्तरं। यत्सेव्यते विशेषज्ञः स्वामी संमानलिप्सया।
भुङ्क्ते व्यालः श्रियं प्राणपणैर्युष्माभिरर्जितां। करौ साधयतो यत्नाद्रसना भोगभागिनी।
ईश्वरो भूतिलिप्साङ्गोव्यालं हठाच्चिकीर्षति। अनास्थां तु सुवर्णेषु युष्मासु विदधाति सः। २००
चीरमाचैकपायित्वं निमित्तीकृत्य भूपतिः। युष्मच्छौर्याभिशङ्कित्वात्तिमिं तिमिर्मिवावधीत्।
एवं सन्देशनिर्भिन्नाः टुक्काद्याः शृङ्खलच्छिताः। विश्रम्भे कदाचित्ते प्रजह्रुरथ भूभुजं।
तत्खड्गधारासम्पातैर्व्यालसेवा च्छद्मनरात्। सम्पद्यतापमन्युदग्राजामूर्च्छां तु केवलं।
तेऽथ लब्धजयंमन्यास्तद्धापीठमन्ययुः। नगरान्तर्व्ययूराज्यग्रहणार्थमहङ्कृताः।
क्षणं मृतइव स्थित्वा भूयो घातभयान्नृपः। दूरं गतान् रिपून् दृष्ट्वा राज्ये राजोदतिष्ठत। २०५
आरुरुक्षन् राजधानीं ते यावत्तावन्नराधिपं। अपेतमूर्च्छमायान्तमद्राक्षुः क्षुद्रबुद्धयः।
त्वया किं न त्वया किं न हतो राजेत्यनीतयः। परस्परविवादान्ते तत्कालं चुक्षुभुर्जडाः।
सान्योन्यमन्यवोऽन्योन्यलोठमाद्राजसद्मनः। कर्त्तव्यं मरणं राज्ञा व्यधुः स्वस्य स्वयं जडाः।
शेषान् राजाथ दुःशीलान् शूलारोपेण केवलं। उच्चैस्तामनयन्मानी सर्व्वथाधोगतिं पुनः।
सगर्भावैरिकोट्टस्त्रीरोषवान् स व्यदीदरत्। अश्विभिर्भूपतिर्गर्भशालिर्मीनैःखैरिव। २१०
तद्द्रोहरोषजा पीडा राज्ञस्तत्कुलमारणात्। चित्ते शान्तिमगात् खड्गघातोत्था न तु मूर्द्धनि।
दुःस्वप्नमिव तद्दृष्ट्वा तुक्कादिर्चरितं क्षणात्। प्रबुद्धेव पुनः प्रापदभयेन सुखं मही।
चन्द्राहमध्यगे राजा शहमेरे प्रसन्नधीः। सकोटामातृकं हृष्टो स्वपुत्रं हैदरं ददौ।
वर्द्धितः कोटया देव्या प्रावृषेव महीरुहः। सच्छायत्वं स्फुरत्पत्रः शहमेरो न्यषेवत।
परिखाच्छलतोऽकीर्त्या स्वपराजयजातया। परितोवलितं राजा स्वनामाङ्कं पुरं व्यधात्। २१५
पौषदुर्दिनमार्त्तण्डसन्निभो धरणीपतिः। मासांश्च कतिचिद्भूयः प्रकाशमकरोद्भुवः।
हेमन्ते शैत्यपारुष्यदोषेण धरणीपतेः। महत्कोपेन नैविड्यं शिरःपीडाग्रहोत्तरां।
सदानेकान्तमाङ्गानां पीडाहरगुणश्रियः। भूपतेरुत्तमाङ्गस्य पीडा कष्टमवर्द्धत।
एकादश्यां ततः पौषे नवनन्दाङ्कवत्सरे। निरस्ता मृत्युवैद्येन भूपतेर्मृत्युवेदना।
एकादशदिनैरूनौ मासौ त्रीन् वत्सरानपि। क्ष्मां संरक्ष्य स स्वर्गं ययौ रिञ्चनभूपतिः। २२०
पुत्रं हैदरनामानं वाल्यादनभिषिक्तवान्। अतथाविधशक्तित्वाद्राज्यं स्वेनाप्यसंवहन्।
लवन्यैः कुलनाथत्वाद्रिञ्चने प्रतिघादपि। अव्याहतप्रवेशाशो मतिमान् शहमेरकः।
समं श्रीकोटया देव्या मूर्त्तयेव जयश्रिया। तदोदयनदेवस्तं कश्मीरक्ष्मामलम्भयत्।
राज्यलक्ष्मीमहादोला गुणबद्धा गरीयसी। रिञ्चनोच्चैःपदं गत्वा राजाधःपदमाश्रयत्।
राजा शश्मीरपुत्रौ तौ ज्यंशरालिशेरौ तदा। क्रमराज्यादिदेशानां स्वाम्यदानादरञ्जयत्। २२५

धीरिवासीत्तदा कोटा देवी सर्व्वाधिकारिणी। राजा देहद्वयात्यर्थं तदादिष्टं समाचरत्।
तेजसापिहितान्यासन् यानि रिञ्चनभास्वतः। लवन्यज्योतिषां राजप्रदोषेऽभूत्तदोदयः।
यस्याक्रम्यत सौम्यस्य रोहिण्या कोटया गृहं। विषयाक्रमणं तस्य लवन्यैः किमु शोच्यते।
लवन्यदेशचण्डालगृहस्पर्शविवर्जकः। स श्रीचिपदवानैषीत् कालं स्नानतपोजपैः।
आस्तिकत्वं कियत्तस्य वर्ण्यते वर्णधारिणः। क्रिमिमर्दभयाद्दष्टां योऽवधाद्राजिनो गले। २२०
तावद्दृविणतामेव कोशालङ्करणं दधत्। कण्ठभूषां समौलिं स चक्रिणेऽदित काञ्चनीं।
अत्र मुग्धपुरस्वामिदत्तानीकिन्यहङ्कृतः। कश्मीरानचलोऽविशद्बलात् उत्पदृवापरः।
स्वपचैराश्चिपत्याशावलेनाक्रम्य मेदिनीं। नाचले गोत्रभित्त्वं स कर्त्तुमैष्ट महोद्धता।
प्राप्ते भीमानकं तस्मिन् ससैन्ये दैन्यमाश्रितः। भौट्टदेशमगात्तूर्णमुर्व्वीपरिवृढो भयात्।
निवर्त्तय चमूमन्यां किं मिथ्यादेशपीडया। अराजकास्त्वया पाल्याः कश्मीराः कुलमाययत्। २२५
इति श्रीकोटयामात्यैः प्रेरितैर्लेखधारिभिः। आमारसैन्यमचलः प्रत्यमुञ्चद्विमोहितः।
प्रतिमुक्तनिजासारः सारहीनोऽचलः स तैः। मार्गात्सवच्छलात् कञ्चित् कालं मार्गे विलम्बितः।
तावच्छ्रीकोटया देव्या तदा पालयितुं प्रजाः। भौट्टः खे रिञ्चनो नाम राजभावे न्ययुज्यत।
प्रमीतभर्तृकोत्पन्नस्तापत्येव सा तदा। अदूयत निजैः सर्व्वैश्चिरस्याचलशेमुषी।
तुषारलिङ्गपूजाभिः कृतार्थीकृत्य वासरान्। भौट्टदेशान्निजं देशमगच्छद्दीतभीर्नृपः। २३०
उदयाद्रिभुवा पूर्णः शशीवाथ स कोटया। खे रिञ्चनतमोनाशी शिरसाधारि सादरं।
यं कोट्टादूतजट्टाख्यं मित्त्रणाख्यस्य मन्त्रिणः। वर्द्धनायात्मजं राजा स तं भृत्युमिवादित।
शहमेरः स वीरोऽथ परिपालितरैञ्चनिः। अपत्युयः समाभर्त्तुः पुत्रप्रेमभराद्भृत्।
देव्यास्तु समदृष्टित्वात्पुत्त्रयोरुभयोरपि। राज्ञो देव्योऽपि शहमेरो नाभयेन स पस्पृशे।
अचलोपप्लवातङ्के भयालोकैः समाश्रितः। शहमेरस्य स राजार्थं न तृणायाप्यजीगणत्। २३५
शहमेरो हैदरशेनं दर्शयित्वा मुहुर्मुहुः। अभाययत्तरां राजपक्षिणं तं दिवानिशं।
रचंस्तटस्थानुद्वेगरहितो जलवर्ज्जितः। अलेश्वराम्बुपूरः स प्रजाश्चिरमतारयत्।
शिरःशाटकहिंदाख्यौ समभ्युदयितामुभौ। चन्द्रार्काविव तस्याशां शूरौ पौत्त्रौ गुणोच्छ्रितौ।
दारैश्वर्य्यात् स्फुरद्दर्पो राजाशालवणोद्यतः। शहमेरः स विपद्दारमभङ्क्तूपतिसेविनां।
सोऽलेश्वरसुतां दत्त्वा लुस्तस्य तदधीशितुः। श्रीशङ्करपुरं जित्वा राज्ञः शङ्कामवर्द्धयत्। २४०
बशतैलाकशूरोऽस्य भाक्तिलैश्वर्य्यभाजनं। व्यंसरस्य सुतां हस्ते कृत्य कृत्यविदोऽभवत्।
बङ्करूपजयी लक्ष्मीनिधिरच्युततापदं। शमालां स नृसिंहोऽथ दैत्यश्रियमिवाददीत्।
मकरालयगाम्भीर्य्यः करालम्बो जयश्रियः। कराले स करालौजाः करमालम्बयन्नगात्।
असिस्मरन् स्मेरयशाद्दशमानमितस्ततः। राज्ञः कल्पदेवस्य विजयेशपुरं ततः।
स्थित्यै प्रकल्प्य चक्रस्य स्वस्य चक्रधरापदं। शहमेरोऽचलकार्य्योपि जनस्य समदर्शयत्। २४५

कम्पनेश्वरलक्ष्म्यस्य लक्ष्मीसर्व्वस्वतां दधत् । चिरं स सम्भवान् शुद्धं सुदामानमिव यवनः ।
नरेन्द्ररङ्गशैलूषं कोटराजमचापयीत् । शह्मेरस्तनयास्ताभ्यामपत्यभ्यामनकेन सः ।
सान्नः केचित्परे भेदाद्दानादन्ये परे भयात् । अन्यतामनयन् धन्या अवन्यारूढ्य शासनं ।
अवन्यलोकस्तत्पुत्रीमालाद्दव बभार ताः । नानानाङ्गमनौचीरविद्याः प्राणहरोः पुनः ।
राजवीजिविधियत्वाभ्यस्यावि(?)क्रमतश्च नः । कः शह्मेरस्वरैर्नाभृतवन्यचिरदेः सौ । २६०
शहमेराग्नुपूरेण कामलोलातथान्विता । आक्रान्तः परितो राजा स्पृष्टाग्निश्च द्रुमोपमः ।
परमात्राधिपत्योत्थलक्ष्मयेव महीपतेः । जीवितं दूरमगमत्कुठेन यथया समं ।
शिवरात्रिचयोदश्यां वर्षे राजा चतुर्द्दशे । समावान् स समामौऽभीच्छह्मेरस्पर्शदूषितां ।
अथ शह्मेरभीत्या श्रीकोटा चत्वार्य्यहानि सा । गूढेङ्गितान्यवहृतिं भूपालप्रमयादिकं ।
शह्मेरो मत्सुतदारा सायाभ्यं स्वीकरोतु मा । इति ज्यायांसमुत्सृज्य बाललाल परं सुतं । २६५
पुत्रस्नेहेन हट्टुत्वदोषेण च विमोहिता । अवहट्टमनिच्छन्ती श्रीकोटा महिषी ततः ।
स्त्रीभावाद्दन्युभावाच्च लवन्यैरुपहृंहिता । असान्त्वयत् स्वयं भूमिं विधवां स्वां सखीमिव ।
पूर्व्वापकारस्मरणाच्छहमेराद्ययोऽखिलाः । तां प्राणमन्नमात्याः स्वां चान्द्रीमिव नवां कलां ।
शमयन्त्या रजः सर्व्वं तापापहलिहस्थया । तया निदाघदग्धेव लताः सम्वर्द्धिताः प्रजाः ।
शह्मेरात् स्वोदयभ्रंशशङ्किनी भट्टभिक्षणं । तदुद्रेकविनाशार्थं मानं देवी निनाय सा । २७०
दुस्तरेषु महाभीतिजलपूरेषु सा ततः । तत्प्रज्ञानावमारुह्य कार्य्यपारं परं ययौ ।
अन्तः सेहे न शह्मेरस्तद्वृत्तं भिक्षणोदयं । मानवन्तः सहन्ते हि च्छायासाम्यं कथञ्चन ।
वर्त्तते धूमतापादि लक्षणं जातवेदसः । धीमतोऽस्य न किञ्चित्तु रोषलिङ्गमलक्ष्यत ।
छलाभिनीतरोगेण शहमेरेण धीमता । प्रत्यासन्नविनाशस्मात्मनः समकथ्यत ।
तस्याथ प्रत्यवेक्षार्थं सवतारादिभिः सह । व्यसर्जि कोटया देव्या स श्रीमान् भट्टभिक्षणः । २७५
खेदः कुपितपित्तस्य स्थितो नोर्वेति वादिभिः । सम्प्रवेशाय्यविध्यन्त द्वाःस्थैस्तदनुयायिनः ।
तौ भिक्षणावतारौ द्वौ तत्समीपमविक्षतां । शङ्कयादिव तत्प्राणरक्षिणौ देवता ननु ।
अनुयुक्तामयोदन्तः स कालेन तयोर्निजैः । गाढं न्यखानयच्छस्त्रीराधीन् स्वकोदखानयत् ।
शिराभिः शोणितं वाम्यं दृशार्द्रैः खड्गैरस्तन् । तौ डावमुचतां सद्यस्तद्रूपं स च चेतसा ।
तदेव व्रणदीपाङ्कपूर्णपात्राङ्कितच्छिरः । रोजमेशोचितं स्नानं स तयोः शोणितैर्व्यधात् । २८०
भवम्नन्दनसंरक्षापरावेतावुभावपि । तयोरन्यतमं द्वारीकृत्यान्यसहरदिधिः ।
प्रमीतद्विजशोकोत्थतापशान्त्यै जनः परं । परप्राणान् रोपशस्त्रः प्रदीपं जुहुयादिति ।
शह्मेरं रोद्धुकामान्तां समर्थामपि दुर्धियः । कोटादेवीममात्याः स्वालेख्यबुद्धिं न्यवारयन् ।
केदारमिव कुल्या सा पानीयेन महर्द्धिना । लोकमाप्याययामास साक्षाज्ज्योत्स्नेव चन्द्रिका ।
आज्ञाव्यतिक्रमाज्जातु कम्पनाधिपतिं प्रति । युयुत्सुरकरोद्यात्रामभिषाजयभिप्रभा । २८५

मङ्कटात् कम्पनेशस्तां कुलायादिव पक्षिणीं । जीवग्राहं गृहीत्वाथ कारापञ्जरमानयत् ।
मन्त्री कुमारभट्टाख्यस्तस्याः सचिवपुङ्गवः । तन्मोक्षसिद्धयेऽकार्षीत्तदामात्यैश्छलात् कलिं ।
राज्याः पुंस्त्वमात्रेण भिन्नमाकारसन्निभं । कमण्डलुकरं कञ्चित्सोऽधाद्विद्यार्थिनं शिशुं ।
गत्वा स कम्पनाधीशं धीप्रशंसाविमण्डितः । सौष्ठवौदार्य्यसम्पत्तिशालिनीं वाचमभ्यधात् ।
स्वशिरोमलिनीकृत्य जीवतां योषिदाज्ञया । पुरुषत्वं त्वया स्वामिन् कृतार्थीक्रियतेऽद्य नः । १९०
गत्वा त्वदाज्ञया कारान्तस्यास्तर्जनसान्त्वनैः । धनञ्जयस्त्वदीयोऽयं स्वामिमात्कर्तुमिच्छति ।
स्त्रीत्वादशक्ता दातुं सा ममैवोद्धनं यतः । व्यसृजत् कम्पनेशस्तां कारामेवं विमोहितः ।
कारायानिर्गमिष्यन्तीं देवीं कोटामिवेक्षितुं । तत्कालमेव सन्ध्यागाज्जगद्रञ्जनकोविदा ।
सन्ध्यावन्दनयोग्याम्बुवाहिना वटुना सह । असौ कारामविक्षत्त राज्यास्त्र निरगुः शुचः ।
राज्ञीवेशभृतं तत्र स्थापयित्वा वटुं स तं । तद्वेशधारिणीं कोटामन्वाधाय विनिर्ययौ । १९५
रक्षितारोऽपि नाजानंस्तद्यावत्तावदेव सा । कम्पनाधिपतिं चक्रे स्वचक्रेभशकृत्करिं ।
सा ब्राह्मणकुमारेण मोचिता भट्टभिक्षणात् । एकदन्तहतारिः किं नान्येनेभमुखाद्भवेत् ।
तयानपोदितोऽप्यौज्झि शङ्करो नैव शङ्कया । कृतवैराः समर्थेन प्राज्ञा नैव सुदामते ।
न प्रासीदन्न चाकुप्यत्तस्मिन् सा बलशालिनि । घृणा प्रमादसहिता विनाशप्रथमाङ्कुरः ।
जयापीडपुरं याम्यां तस्यां कार्य्यानुरोधतः । शहमेरोबली जातु नगरं स्वीचकार सः । २००
तस्मिंस्तवन्यलोकेन गृहीताञ्जे बलीयसि । राज्ञी समहृणोत्कोट्टद्वारं जहजयाज्ञया ।
निरुद्धं बलिना कोटगुहाभ्रे मतिशालिना । नृसिंहेनाभजत् कोटा शृगालीव मुहुर्भयं ।
सिंहासने मया साकं श्रिया साकं समारोह । क्षमया सह चित्ते मे राज्ञी निविशतां स्वयं ।
तामेवमादिशन् देशसुग्धां संमोह्य यत्नतः । हस्ते चकार कोट्टश्रीं कोटादेवीञ्च बुद्धिमान् ।
एकस्मिन् शयने रात्रिमतिवाह्य तया समं । स प्रातरुत्थितां जातु तोत्सर्णैर्देवीमरोधयत् । २०५
वर्षे पञ्चदशे शुक्लदशम्यां नभसस्ततः । तारेव नभसो राज्याद्राज्ञी भ्रंशमलब्ध सा ।
तत्पुत्त्रावपि तौ द्वौ स करणीयविचक्षणः । बबन्ध बन्धुसम्बन्धिकम्पट्टचोभटाग्रणीः ।
स्वं रूपं चिदचिद्भिरेभिरभितो व्यञ्जन् स्वयं निर्म्मितैर्यस्यास्मोत्नति देशकालकलनाकक्षोज्झितं तन्महः ।
आत्मा वास्तु शिवोऽस्तु वास्त्वथ हरिः सोऽप्यात्मभूरस्तु वा बुद्धो वास्तु जिनोऽस्तु वा भगवते तस्मै नमः कर्मणे ।
श्रियं लवन्यलोकेषु कीर्त्तिं दिक्षु महीं भुजे लक्ष्मीं वक्षसि कोटाञ्च कारायां स ततो व्यधात् ।
नीत्वावस्थान्तरं दौस्थ्यशमात्कश्मीरमण्डलं । श्रीशमदेन दत्याख्यामन्यां स्वस्य व्यधान्नृपः । २१०
महाबले भुजे तस्य काष्ठाद्दीपनशालिनः । मौर्व्वीकिणः प्रतापाग्नेर्धूमायन्तु सन्ततं ।
प्राहरन्मन्त्रिणां राजा संशयं ननु तस्य ते । भिनत्त्यन्यान् मणीन् वज्रं नान्यरत्नानि तं पुनः ।
स राजा राजतो राजस्थानीयान् काष्ठवाटगान् । भयात्ततोऽपि विद्राव्य श्लाघनीययशा बभौ ।
चिरं धुरं परिन्यस्य पुत्त्रयोः स्वादनूनयोः । नयोच्छ्रितयशा राज्यं सुखं भुङ्क्ते स्म भूपतिः ।

स पञ्च वासरान् भुक्त्वा चौनव्वाम्मेदिनीपतिः । अष्टादशेऽब्दे राकायामाषाढ्यां स व्यपद्यत । २१६
अथ प्रथमसामन्तैः सम्मताज्ञः स जंसरः । सतीसरश्चितेरत्रामत्रामश्रीरटङ्कयत् ।
राज्यतोरणस्तम्भाहस्तमाभ्यां धरणीपतेः । अनुजीबलबुद्धिभ्यामगमच्छङ्कनीयतां ।
नैव दानं न चादानं निग्रहं नाप्यनुग्रहं । विहारं न नचाहारं राज्ञो न्यूनं स हि व्यधात् ।
प्राग्वद्दिव्यासमम्पत्तिमकुर्व्वति महीभुजि । युवराजो मनाक् चक्रे निकटस्थैर्व्विरक्तधीः ।
तद्दैमनस्यवृत्तान्तश्रवणाच्छिद्रलाभतः । युवराजं ततो राजस्थानीयाः प्राहुरञ्जसा । २२०
आगते विग्रहे व्यक्तिं राजस्थानीयसंश्रयात् । सोऽगादवन्तिनगरं तन्मूलस्थानमुद्धतः ।
अथोत्पलपुरं राजा भटैः सह रणोद्भटैः । अग्निश्रियदिदं भ्रातुर्व्वाचि कञ्च विसृष्टवान् ।
दुर्ज्जनप्रेरणात्त्वञ्चेन्मत्स्नेहं नाभ्यजीगणः । लोकापवादस्मरतः कथं कम्पो न जायते ।
अन्योन्यपालनायाज्ञा राज्ञस्त्रिदिवगामिनः । पालनीयामनुध्याय प्रत्यानय दयां मयि ।
इति सन्दिश्य दूतञ्च व्यसृजत् स नरेश्वरः । कम्पनाधिपतिं हन्तुं व्यसृजच्च निजात्मजं । २२५
मृगयां युवराजोऽगादिति दूतं निरोधयन् । भ्रातृपुत्त्रं निहन्तुञ्च श्रुतद्रोहोऽगमच्च सः ।
दूतः किमिति नायातः कालो हि सुचिरं गतः । इति चिन्ताकुलोऽलक्ष्मभट्टो राजान्तिकं ययौ ।
ऊचे च जाने स द्रोहं लक्षयित्वा तवानुजः । त्वत्पुत्त्रमारणायागाद्यद्दूतस्य चिरागमः ।
स्नाति भुङ्क्ते स्वपत्येव युवराजइति च्छलात् । त्वद्युगनिषेधाय नूनं रुद्धो वचोहरः ।
तदवन्तिपुरं तस्मिन् श्रीदेवसरसङ्गते । संग्रामिःस्वामिकं हन्माजयोऽस्माकं ततोभुवः । २३०
अथावन्तिपुरं गत्वा सत्त्वातिशयशालिना । राज्ञा रुद्धं तथाकारि तद्भटैरुद्भटैः समं ।
अलेश्वराय भृत्यानां बधं नूनं निवेदितुं । वितस्ता शवरुद्धौघा प्रतीपमगमद्यथा ।
भ्रातृपुत्त्रं पराभूय तावदलेश्वरे द्रुतं । व्यावृत्त्य रणखेदान्तः प्रपलायत जंसरः ।
अनयोर्नैव कर्त्तव्यः कलिर्म्मामदयोरिति । राज्ञा समं विदाञ्चक्रे धीमानलेश्वरस्ततः ।
प्रतिमुच्य निजान् योधानवन्तिपुरमुत्सृजन् । अथ चोरोपयेनामात्त्यैर्गोऽगमद्दीचिकां । २३५
नगरी रचितान्यस्य सय्यराजे स्वमर्म्मणि । क्रमराज्यं त्रिराजच्छ्रीजंसरस्यागमत्तदा ।
दानमानौ प्रतिश्रुत्य सय्यराजं विभिन्दता । युवराजेन नगरी स्वीकृता मन्त्रयुक्तिभिः ।
नाम राजतया दुःखं भुक्त्वा कश्मीरमण्डले । मासद्वयोनौ द्वौ वर्षाववसानमगान्नृपः ।
जामनलावदेनोऽथ तं कालं कलहाच्चमं । दारैश्वर्य्यं ददौ भ्रातुः मद्योविघ्ननिवृत्तये ।
सलिलोत्तरणोपायमेतुं सुय्यपुरे व्यधात् । विपत्सन्तरणोपायं न पुनर्जंसरोऽस्मरत् । २४०
पथिकानां निवासाय तेन पर्व्वतसीमनि । कक्ष्याविभागसहितः स्वनाम्ना रचितः सरः ।
एवं विभ्रमनीतिभ्यां देशं शोधयतो निजं । श्रीशिवस्वामिको राज्ञा दारैश्वर्य्यमवाप्तवान् ।
राजपुत्त्रः स वाक्पुष्टाटवीं लीलारसादटन् । योगिनीचक्रमद्राक्षीत् कदाचिद्गिरिगह्वरे ।
उदयश्रीस्तथा चन्द्रडामरस्यास्य वल्लभौ । अपश्यतां न किं तेषां महतामनुयानतः ।

अचलत्ताडनादण्डघण्टानाद्मण्डटांकृतं । मनांसि न पुनस्तेषां वीराणां साहसस्पृशां । २४५

सान्तर्धासिषुरेवैताः प्रष्टुं द्रष्टुञ्च काङ्क्षिताः । इति तेऽस्मादवारोहन् प्रवीरा नतु तद्भयात् ।

शनैः शनैस्ततो यान्तो सौमपूर्व्वं महाशयाः । योगिनीनिकटं प्रापुर्व्विकटप्रकटौजसः ।

योगिनीनायको दूरात् परिज्ञाय नृपात्मजं । साशिषं शीधुचषकं प्राहिणोत्स्मन्वितं ततः ।

चन्द्रस्तदमृतं तृप्तिभाजा राज्ञावशेषितं । उदयश्रीमुखापेक्षो न सम्पृतिमशेषयत् ।

भवितव्यबलादश्वपालं सपदि विस्मरन् । उदयश्रीरशेषन्तत्पीत्वा तृप्तिं परामगात् । २५०

आश्चर्य्यतृप्तनेत्रेषु तेषु तृप्तेषु योगिनी । निमित्तज्ञावदद्राजपुत्रं बद्धाञ्जलिं ततः ।

अखण्डं भावि ते राज्यं चन्द्रस्त्वद्विभवांशभाक् । आजीवमुदयश्रीश्च मण्डितोऽखण्डया श्रिया ।

अश्वपालस्त्वसावस्मदनुग्रहविवर्ज्जितः । अचिरेणैव कालेन नूनं प्राणैर्व्वियुज्यते ।

भविष्यत् सूचयित्वैवं योगिनीभिः समन्विता । सान्तर्दधे पुरः प्राणाः पश्चात्तुरगपालिनः ।

अविचारतमोमग्नान् जन्तूनुद्धर्तुमीश्वराः । सम्भवन्ति प्रजापुण्यैः प्रकाशोत्कर्षहेतवः । २५५

श्वशुराद्भर्त्तृभागं यदवीरा पुंश्चली बधूः । हरन्त्यासीत् स तं राजा दुराचारं न्यवारयत् ।

जयापीडपुरे कृत्वा राजधानीं महामतिः । श्रीरिञ्चनपुरे चक्रे बौद्धा बुद्धगिराभिधं ।

एकोनविंशे वर्षेऽथ दुष्कृतोद्भवमद्भुतं । दुर्भिक्षं क्षोभयामास लोकं शोकाकुलं महत् ।

मासानष्टौ द्वादशाब्दांस्त्रयोदश दिनानि च । क्ष्मां भुक्त्वा त्रिंशवर्षेऽथ चैत्रे राजा व्यपद्यत ।

मन्दराजकथाख्यानाज्जडिमा वाचि संस्तुतः । तीक्ष्णप्रतापशाहावदीनाख्यानाद्विनश्यत । २६०

राज्ञि शाहावदीनेऽथ स्मरणं क्षितिरत्यजत् । ललितादित्यसम्पत्तिविपत्तिसुखदुःखयोः ।

श्रीशाकं दोरिवान्यर्त्तून् राज्ञोऽतीत्य वसुन्धरी । ध्रुवमापज्जयापीडमेतं स तु स किल्बिषी ।

पूर्व्वे परे च भूपाला नायकेनेव भूषिताः । क्ष्मानायकेन तेनाथामुक्तागुणलसच्छ्रिया ।

तदीयो जयलक्ष्मीभिः प्रविष्टाभिः पदे पदे । स प्रतापानलोऽतृप्यत् सरिद्भिरिव सागरः ।

जयं विना गणयतः क्षणमात्रं वृथा गतं । बुद्धस्य तरुणीत्राभूद्यात्रा तस्यातिवल्लभा । २६५

न मृगाक्षी न वा शीधुपानलीला न चन्द्रिका । यात्रैव केवलं तस्य भूमिभर्त्तुर्मनोऽहरत् ।

न तापो न हिमन्तस्य न सन्ध्या न निशा तथा । न क्षुन्न वा पिपासा च राज्ञो यात्रामविघ्नयत् ।

स सरिद्दुस्तरतरा दुरारोहो न पर्व्वतः । दुर्लङ्घ्यो न महत्वाभूद्यात्रायां मानिनः प्रभोः ।

अजितां पूर्व्वभूपालैः पारसीककुलाकुलां । उत्तराशां विजेतुं स प्रस्थानं प्रथमं व्यधात् ।

उद्गतां विजयी कामो मधुशीधुबधूरिव । चन्द्रलोलकपूरान् स सहायत्वेऽवृणोत्प्रभुः । २७०

सैन्यचेतांसि सत्त्वेन तमसा स्वविरोधिनः । अपूरयत् स रजसा दिगन्तानुद्धतान्तकः ।

प्रविष्टं तस्य गोविन्दखानपालनशालिनि । उदभाण्डपुरे पूर्व्वं वाणैस्तदनु सैनिकैः ।

शैलशृङ्गं नृपानीके प्राप्ते तस्य विरोधिभिः । भयातुरैरवारोहः शृङ्गान्तुङ्गाद्व्यधीयत ।

सदृशं प्राभृतं दातुमसमर्थोऽस्य सिन्धुपः । उपधीकृतवान् कन्यारत्नमादाय भूपतेः ।

राज्ञस्तु गौरवं वाहो गान्धाराणां भुवोढया। चिचन्तु लाघवं तेषां भये भारानुषङ्गतः। १७५
भङ्गस्तुङ्गस्य प्रटङ्गस्य खड्गानां नैव भूभुजा। शिङ्गामामपि देशेऽस्मिन्विहितः शौर्य्यशालिना।
आकर्ण्य राजसिंहस्य सिंहनादमयीं चमूं। मदन्तत्याज चस्खाल विभाय गजिनी पुरी।
शश्वियचञ्चियैरष्टनगरेऽरोदि शाम्यतोः। तरुणाग्निप्रतापाग्न्योर्धूमेनेव भयातुरैः।
यशसा सह सम्पत्तिं तस्मिन्लुण्ठयति प्रभौ। प्रापत्पुरुषवीराख्यदेशाख्या रूढिशब्दतां।
दत्तवाष्पनिवापाम्भोनगरायहरस्त्रियः। जीवतः स्वस्य पत्युश्च पिण्डास्तेननिभाहृदः। १८०
अश्वपालेषु गच्छत्सु घोषधातुनटच्छलात्। उदकपतितिरस्कारप्रशस्तिं स व्यधात् प्रभुः।
ततो व्यावृत्त्य गच्छन्स दक्षिणाशां स्ववाजिनां। मार्गखेदोचितं तापं शतद्रूवारिणाहनत्।
ढिल्लीमुल्लुण्ठ्य तत्कालमुदकपतिमुपागतं। मार्गरोधेन नृपतिर्नितान्तमुदवेजयत्।
तुरङ्गवस्त्रदानेन स ताम् सामान्यभूपतिः। स्वदेशं प्राहिणोत्कीर्त्तिराशीन्मूर्त्तान्वहन्निव।
सुशर्म्मपुरराजेन तस्मात् स्वाशर्म्मशङ्किना। दुर्गाहङ्कारमुत्सृज्य देव्येव शरणीकृता। १८५
स्वयं नत्वा महत्त्वत्या भोट्टानामस्य भूपतेः। अर्व्वतां पर्व्वतारोहदोहदो विनिवारितः।
दुस्तरत्वात्तटस्थस्य देवताभिस्तनूकृतः। सिन्ध्वोघो नृपतेरेवं पूर्व्वेभ्यः श्रुतमद्भुतं।
एवं नित्यजयोद्योगात् स्वदेशः परदेशवत्। परदेशस्तु तस्यासीत् स्वदेशइव भूपतेः।
प्रतापेनेति सम्पाद्य दिङ्मुखे तिलकश्रियं। व्यधात् प्रविश्य कश्मीरान् स पौरानयनोत्सवं।
तस्य वर्णयतां शौर्य्यं प्रसङ्गादतिमानुषं। अस्माकं चाटुकारित्वं शङ्क्यते भाविभिर्जनैः। १९०
यात्रायातः कदाचित् स दूरदेशे महीपतिः। अपरःसदृशीं काञ्चिच्छ्रुतवान् हरिणेक्षणां।
निजानुगान् वञ्चयित्वा राजा युक्त्या कयाचन। अथैकाकी स तं देशमविशद्भोगलालसः।
नर्म्मणा मोहयित्वा तां द्वितीयइव मन्मथः। मनोरथानसिञ्चत स तदोष्ठामृतपाननः।
अपश्यन्तस्तमाशङ्क्य हतं केनापि वैरिणा। अथ कोपभ्रमावेशमुद्भटास्तद्भटाययुः।
अन्विष्यद्भिस्तदश्वेन निबद्धेनाङ्गणाद्बहिः। समभाव्यत तैराज्ञो वैरिभिर्निर्जयः कृतः। १९५
शौर्य्यस्वाम्यनुगाभ्यान्तु विधातुं युद्धमुद्भटैः। तद्भटैः सदनं रुद्धमबद्धकवचान्तरैः।
अत्रसङ्क्षिप्त तत्सिंहनादपूर्णास्ततः पुरा। चित्तैः प्रीत्या मुखैर्भीत्या नीत्या मूर्द्धभिरानतं।
एवं स स्वजयस्तम्भयूपान् गुणमुखान् बहून्। हतवैरिपशूंश्चक्रे सुप्रतापामलार्चिषः।
स्वदेशे मन्त्रिणस्तस्य कोटभट्टोदयश्रियोः। समरेषु भरस्वासीच्चन्द्रडामरलौलयोः।
देवशर्म्मान्वयोदन्वच्चन्द्रोराज्ञार्पितं मुक्तः। वैरागादिभवं त्यक्त्वा कोटशर्म्मा वनं ययौ। ४००
तस्य दर्शयितुं राज्ञः स्वबलाधिकतां ध्रुवं। कदाचित्तत्प्रजा दैवो व्यापद्गाढमपीडयत्।
पुरीकैरविणीस्तरः शूरः पादपविद्विषां। षट्त्रिंशेऽब्दे जलापूरः क्रूरोव्यप्लवत प्रजाः।
नगरक्षुण्णनादस्तु मुञ्चन्तोनिर्झरच्छलात्। तस्योद्वीपस्य महतः पर्व्वतास्तटतामगुः।
न स वृक्षो न सा सीमा न स सेतुर्न तद्गृहं। तटस्थमपि यन्नैव जलपूरो व्यनाशयत्।

नाद्रिदुर्गाण्यपश्यत्स जातुचिद्वैरिभीतितः । अम्बुपूरभयात्तेषु राजा समचरत्तरां । ४०५
पीते तत्तेजसेवाम्बुपूरे शान्ते मितैर्दिनैः । भूयस्तद्दिक्शताश्लङ्गी सोऽधिकीर्षङ्गिरौ पुरीं ।
नाम्ना लक्ष्म्या महिष्या च प्रसिद्धां नगरीं व्यधात् । खेदार्थ्यानुगुणं राजा निर्म्माणमविलोकयन् ।
शारिकां शैलराजस्य मूले पुण्यजनाश्रितां । यामद्राक्षीत्तरां लोकः सुमेरोरलकामिव ।
वितस्तासिन्धुसम्भेदे स्वनाम्ना स पुरीं व्यधात् । प्रतिविम्बच्छलात्तोये चपया स्विन्नमज्जति ।
सौधाम्रेधमयीं राशीभूतां कीर्त्तिमिवाचलां । अलोलश्रीः पुरीं लोलडामरः स्वाभिधां व्यधात् । ४१०
आजन्मलोकता मत्त्वः स्वरमाम्नाय वर्द्धिता । निहन्ति च्छायया तस्याश्चुमणिस्पर्शजं सुखं ।
या लक्ष्म्या भागिनेयीत्वाद्वालापालि निजान्तिके । लासाख्या सा समाक्रामन्नृपतेश्चित्तदर्पणे ।
यस्यानुरोधतन्तुस्तं चिरं लक्ष्म्या निबद्धवान् । स छिन्नो रागवेगेन लासासौन्दर्य्यजन्मना ।
बलिजिन्मूर्त्तिना तेन वसन्त्या वक्षसि श्रिया । प्रतिवेश्मस्मृता भीता लासा सौभाग्यभागिनी ।
च्छाया तद्रचितादद्यापि दिवसश्रोभागमातन्वतः सूर्य्यात्सम्मुखतां जहाति वहति श्रेयाद्दरीं कालतां ।
स्त्रीणामस्ति चतुर्गुणा मतिरिति स्थानेन हन्त श्रुतिर्यद्वा दुर्व्विधिपद्धमाकलयितुं शक्तो न कश्चिद्ध्रुवं । ४१५
प्राक्तनस्यावताराख्या भक्तस्यापि सुता सती । लक्ष्मीर्लासानुरक्तेऽधाद्य रोषं महीपतौ ।
रोषात्सिन्धुपतेर्देशमन्वभिलाङ्गनां नृपः । प्रत्यानयत्स पोद्रेकान्न पुनः स्नेहगौरवात् ।
अपनीय तापखेदं मरुकरिणी पद्मिनीतोयैः । तत्पश्यैवलाम्भोनिर्माथे कर्म्मठीभवति ।
लक्ष्म्या मातृस्वसुः सर्व्वमातृकृत्यकृतोऽभवत् । राजप्रियाथ राकेव लासा पक्षक्षयोद्यता ।

सत्कर्म्मपाकसमयेऽस्य न चेद्दिकाश्रशोभां न किं परिहरेत् कुमुदाकरस्य ।
विश्वप्रबोधहरणप्रवणक्षणेन कुत्सो निशा च सहसैव निशाकरेण । ४२०

चिन्तासूचकनिश्वासज्वालोष्ठाभं कदाचन । अशोचद्भागिनी वेति लासाख्या भोगिनी नृपं ।
न चेद्दिकाश्रयेच्छास्वान् पद्मिनीं स्वरुचा स्फुटं । तस्याश्छेदाय शैवालवल्ल्यादिव यतेत कः ।
पतन्तीं प्रेमभारार्द्रां मयि दृष्टिं तवासहा । मां निहन्तुमुपायेन कुरुते महिषी तव ।
अभिचारे दुराचारमुपचारप्रियङ्करं । सा चाराची मयि द्वेषादुद्यश्रियमैरयत् ।
देव द्वेषपरे तस्मिन्नभिचारविनिर्म्मितः । असम्भाव्येति तां राजा प्रत्युवाच विचक्षणः । ४२५
निर्व्बन्धेनापजल्पन्तीं तदेव वचनं ततः । तां प्रत्याययितुं देवीमुद्यश्रियमब्रवीत् ।
व्ययित्वातिशयेनाहो कोशो रिक्तत्वमागतः । प्रार्थयन्ते जना राज्ञः सर्व्वं कल्पतरुमिव ।
द्रविणोत्पत्तये तस्मादुपायः प्रतिभात्ययं । प्रतिमा श्रीजयेश्वर्य्यायास्ति रीतिमयी पृथुः ।
तां खण्डयित्वा निर्हितैष्टङ्कैर्म्मन्नामचिह्नितैः । व्ययनिर्व्वहणं कीर्त्तिस्थिरत्वञ्चोपजायते ।
साध्वेतत् किन्तु तन्मूर्त्तिर्लब्धो किं प्रभविष्यति । दृढदुङ्क्लेन मुद्रास्तु चुद्रस्तं सचिवोऽभ्यधात् । ४३०
भङ्गोपकरणं सज्जीकृत्यान्येद्युरुपागतं । राज्ञीं प्रत्यक्ष्य भूपालो रहोमन्त्रिणमब्रवीत् ।
याः पूर्व्वैर्निरमीयन्त यशःसुकृतलब्धये । अङ्गीकर्त्तासि ता देवप्रतिमा भङ्क्तुमञ्जसा ।

अमरप्रतिमा विधाय केचित्परिपूज्याथ परे प्रशस्तिमापाः।
परिपाल्य यथोचितं तथान्ये विदलय्याहमहो महद्दुरन्तं।

निर्म्माणाज्जलधेः क्वतेश्च सरितां कौमारशोकावधि प्रख्यातः सगरोभगीरथनृपोगङ्गावताराच्च सः।
दुष्मन्तः स च विश्वविश्वविजयाज्जिष्णोर्भयान्यावहन् रामोहन्त दशाननेन विहितात्सीतापहारात्पुनः।
राजा शाहावदीनाख्यः सुरमूर्त्तीरलोठयत्। सा दुर्व्वार्त्ता यमत्युग्रासकम्पङ्गाविना जनान्। ४३५
उदयश्रीर्नतशिरा राज्ञीत्युक्तवति स्वयं। महीरन्ध्रमिवैच्छिष्ट द्रागधोगतिवाञ्छया।
भास्करोद्युपरीरम्भरसासादितकौतुकः। स्वपुत्तशनिमुख्यानां ग्रहाणां हानिमिच्छति।
रागी तद्दोषवादिन्या तथा देव्या प्रबोधितः। व्यवासयत् स्वदेशात् स राजपुत्रान् परानिव।
कार्य्येष्वतिमनुष्येषु साहायकविधायिभिः। योगिनीपुरनाथस्य तैर्व्यक्तो विक्रमः कृतः।
औदार्य्याद्दत्तवृत्तीन् स हिन्दुकानेव बोधितः। म्लेच्छान् शेकन्धरमुखान् राजद्रोहकृतोऽवधीत्। ४४०
पिशुनैर्जनिताशङ्कः शूरोमदनलाविकः। राजा विश्वस्तोऽपि समयास्य निवारितः।
राजा जातत्वरां यात्रां व्यसनेनाभ्यषेणयत्। नौसेतुकौतुकं सिन्धोः परिखायादवाहरत्।
शूरः खन्नमगर्य्यां स पर्य्यटन् मृगयारसात्। सिंहमभ्यद्रवद्राजा सिंहसंहतसाहसः।
गच्छंश्छिद्राधिकं राजा वाजिना वेगराजिना। अन्वगादतिभक्तेन मदनेनैव केवलं।
एकाकिनं चिरं बद्धयुद्धमुद्धतकेशरः। तमधःकृतवान् राजसिंहं सिंहोऽतिसाहसं। ४४५
उत्प्लुत्य वाजिनस्तूर्णं शूरोमदनलाविकः। निपातितनृपं सिंहं कृपाण्या सहसावधीत्।
प्राणरक्षोपकारेण प्रसन्नः पिशुनाञ्जनात्। युक्त्या मारणमेतस्य शङ्कमानो नरेश्वरः।
स वित्तारुच्छलाद्दत्त्वा द्रविणं करुणामयः। मदनं व्यसृजत् ढिल्लीपतेर्निकटमञ्जसा।
उत्पन्नचम्पकं दीप्त्या कुर्व्वतीं व्योम जातुचित्। स्वप्ने शकरस्वहाख्योदृष्टवान् काञ्चनीं पुरीं।
वेश्म वेश्म विशंस्तत्र शून्यं पश्यन्नयं ततः। राजधान्यां स्त्रियं काञ्चिदपश्यत्कान्तिदन्तुरां। ४५०
अपृच्छच्च त्वमेकैव हन्तेयति महापुरे। व्योम्नीव शशिलेखा किं चिरं तिष्ठसि निर्भया।
कस्येयं नगरी कस्माच्छून्या सर्व्वत्र वर्त्तते। अत्रेदं पतितं कस्य वर्त्तते च कलेवरं।
सा तं जगाद गन्धर्व्वराजस्यासौ महापुरी। सुन्दरी पतिहीनेव विधुहीनेव शर्व्वरी।
स सामात्यैः समं सर्व्वैः पातुं कश्मीरमेदिनीं। चतीर्णः परिस्थाप्य निजमत्र कलेवरं।
शाहावदीनइति यः प्रथितोऽस्ति जगत्त्रये। तत्कलेवररक्षार्थमत्र तिष्ठामि केवला। ४५५
स च निष्पादिताशेषकार्य्यो मासत्रयान्तरे। स्वामिमां नगरीमेव ध्रुवं रचितुमेष्यति।
प्रबुद्धोऽर्थ्याधिकाश्चर्य्यशोकचिन्तारसान्तरे। मज्जन्नरण्यद्राक्षे स्वप्नवृत्तिमखण्डितां।
असत्ये किं भयं स्वप्ने सत्ये त्वैश्वर्य्यमेव मे। इत्यन्तर्व्विमृषन् राजा न तथा पस्पृशे शुचा।
मदन्तिकमुपागम्यमिति भूमिपतिस्ततः। दूरस्थितानां पुत्त्राणां स योत्लेखान्विसृष्टवान्।
ततोमुमूर्षुर्भूपालो हिन्दुकानां निजे पदे। अप्राप्ततनयो धीमानभ्यषिञ्चत् स्वयं ततः। ४६०

ज्येष्ठशुक्लचतुर्दश्यां तानाङ्केऽब्दे महीपतिः। आलिङ्ग्य नाकवनितास्तनौन्नत्यमपीफलत्।
कुम्भदीननरेन्द्रोऽथ मौलावाश्चां महीभुजां। चित्ते सुखं मुखे हर्षं स्तुतिं वाचि न्यधात्ततः।
नातितीव्रो न वा मन्दः सर्व्वस्यैव महीपतिः। चित्तमादित लोकस्य वैषुवीभानुमानिव।
लोहरप्रत्यवेक्षार्थं यान्न्यधात् पूर्व्वभूपतिः। लोहराधिपतेर्भीत्या ते पलाय्य गतास्ततः।
शाम्यन्त्योषधयः सर्व्वाः शशिन्यस्तं गते सति। दृष्टो हि सूर्य्यकान्तानां रवौ याति द्युतिक्षयः। ८६५
लोहरं प्रतिसन्धातुं कुम्भदीनमहीपतिः। शौर्य्यशालिनमादिक्षत्पुरोडामरलोलकं।
प्रवेष्टयन्ततो गत्वा लोहराद्रिं स सर्व्वतः। प्राणा हि स्वामिभक्तानां तृणायन्ते महात्मनां।
असामर्थ्यान्निजं दुर्गं दुर्गेन्द्रोऽर्पयितुं ततः। ब्राह्मणान् व्यसृजद्दूतान् डामराधिपतिं प्रति।
द्विजलिङ्गान् स तान् मत्वा चारकृष्टमुपागतान्। न्यघ्नीद्विग्रहाद्भयात् द्विजानव्यग्रमानसः।
द्विजदैवतमप्येतं श्रुत्वा तदपकारिणं। लोहरेन्द्रो न कोटायां जीवाशाश्च विसृष्टवान्। ८७०
पश्यन्लोमरणं स्वस्य युद्धे वाथ पलायने। क्षत्रियाणां निजं धर्म्ममग्रहीत्सुततो रणं।
शरासारशिलावर्षैर्द्दर्शान्दुर्घनादिव। लोहराद्रेरवारोहन्नारोहंस्तु यशांसि ते।
विप्रकीर्णः स पाषाणैर्लडामरनायकः। अन्तर्हितः समं कीर्त्या भाति को नाम लङ्घति।
शस्त्रकीर्णशिलाराशिच्छन्नोडामरलोलकः। यवनप्रेतसंस्कारान्न विपद्यप्यहीयत।
शाहावदीनभूपालो निर्व्वास्यापि सुतान्निजान्। आकारयत् स्वयं लेखैर्निजवर्णपरिष्कृतैः। ८७५
गुणैश्च वयसा तेषां ज्येष्ठामाहिन्द्रमण्डलं। हस्सनो राजपुत्त्रः स प्राप तावदनन्तरं।
स नेत्रशुक्तिमुक्ताभिर्मुक्ताभिर्बाष्पवीचिभिः। श्रुत्वा तत्र पितुर्मृत्युं निवापाञ्जलिमार्प्पयत्।
व्यावृत्य गमनेच्छावाः स्वेच्छाश्रयमसुं ततः। न्यवारयत् पितृव्यस्य लेखः कश्मीरभूपतेः।
शक्रादिसौख्यलोभेन भृत्यानस्मानुपेक्ष्य सः। समस्कुरुत शाहावदीनभूमिपतिर्द्दिवं।
स्वःस्त्रीभोगरसेनैव गमनाय त्वरावतः। तस्यास्माभिर्भवत्कार्य्यमशेषं निरपद्यत। ८८०
स्मारचाललक्ष्मणामाज्ञा विचक्षणशिरोमणेः। तन्मन्त्रमास्थितां मौलिमूले मालां विदध्मह।
प्रवासागमनाभ्यां त्वं स्वपितुः पालिताज्ञया। श्रीरामद्व भूलोकं यशोभिः स्वमपूपुरः।
भूतो भावी च सम्मानो यद्यपि स्वगुणैस्तव। यौवराज्यग्रहाह्वारं लघूकुर्य्यास्तथापि मे।
स्वधैर्य्यं सभ्यसंयोगो नानाबन्धुसमागमः। तव रक्षाधिकारस्थ दौर्मनस्यं विलुम्पते।
यशसैव प्रमीतानां परदेशनिवासिनां। महतां नहि जातः स्याद्विभवेन सुखोद्गमः। ८८५
स्वरूपप्रतिबिम्बेन भवता स्वर्गवासिनः। तदुत्कण्ठाभरोऽस्माकं दर्शनेन निवार्य्यतां।
पुनः शाहावदीनस्य सोऽयमित्यन्यमण्डले। अङ्गुलीमुखनिर्द्देशः प्राकृतस्येव मास्तु ते।
राज्ञां मदनुकम्प्यानां मुख्यप्रेष्ठो भवन् भवान्। कश्मीरैश्वर्य्यमतुलं मानैषीरल्पकं स्वयं।
विभज्य भवति क्षोणीभारं मेरुगिराविव। सुखं सम्पत्तिमतुलामनन्तद्युतिराश्रयां।
येन मानेन मामन्वग्रहीत् स वसुधाधिपः। त्वं सम्प्रत्यस्य तेनैव मयि पालयति प्रजाः। ८९०

उदयश्रीमुखामात्यमतानुष्ठानशालिनीं । स्वप्रार्थनानिषेधेन लक्ष्मीमेव वृथा क्षपाः ।
अजानन् लोककर्णत्वं राजेन्द्रकरिणामथ । पश्चात्तं लेखवाची स काश्मीराणामगाहत ।
पर्ज्जन्यैः सम्मुखायातैर्झांकाररवधारिभिः । न्यवार्य्यतेव कश्मीरप्रवेशाद्राजनन्दनः ।
स विशन्नथ कश्मीरसरणीमुदजिज्वलत् । असमीमसयद्राशः श्रुतिन्तु खलचोदना ।

मत्ताः समुद्रमिव केचिदुदेतुकामा वातालताग्निमिव केचन दर्पवत्या ।
दुर्म्मन्त्रिणो भुवनकाननचक्रवालव्याप्तानानरपतिं प्रविलोलयन्ति । ४९५

अथ प्रविष्टे कश्मीरान् हस्सने राजनन्दने । कुम्भदीनमहीपालः पिशुनैरित्यकथ्यत ।
सर्व्वासामेव वृद्धीनामुपरीश्वरबुद्धयः । तथापि सचिवेभ्योऽस्यो हिताहितविनिर्णयः ।
पुरन्दरादिलोकेशतेजोंऽशांशयशालिनां । स्वतंत्र्येभ्यो महेन्द्राणामन्तरायो विलोक्यते ।
स्पर्द्धनाशितया स्याताद्भाद्रद्रूपाहिजिह्मगात् । कृष्णसर्पादिवाश्लिष्टात्कष्टं दूरे न कस्यचित् ।
विभवैस्तर्प्यमाणोऽयं न च क्षीभविता तव । स्नेहेन सिच्यमानोऽग्निः शीतलत्वं किमृच्छति । ५००
न चिन्त्यं स्वयमेकाकी राज्ञो मे किं करिष्यति । हरेः पुरः सयूथोऽपि कतमो वारणेश्वरः ।
मद्बुद्ध्या विक्रमस्तस्य हन्यतामिति नोज्झितं । बुद्धिमानुदयश्रीस्तं स्वामिभक्त्या हि रचति ।
आद्ये दर्पोदयः पश्चे दोषोद्रेकः परे यतः । नानुयायी न चोत्सृज्यस्तत् राजेन्द्र हस्सनः ।
नैवेवंप्रायताहृत्तिं तेजस्वी स चर्मिष्यते । यस्मिन्दहति नाम्भोधिं स च शेवाडवस्य कः ।
अतस्तस्य निरोधेन निर्वृतिस्वसुखाः प्रजाः । कुण्ठयन्तुतरां पूर्व्वभूपालोत्कण्ठितां चिरं । ५०५
प्रविष्टैरिति दुर्व्वाप्यार्निगताद्भिरिव ह्रदः । वैरस्यमभरद्राजा खलवाक्यैः स हस्सने ।
पश्यन् प्रद्युम्नानुभवंस्तस्याप्युत्सेकविक्रियां । भ्रातुः पुत्त्र इति स्नेहाच्च तं राजा न्यरोधयत् ।
उदयश्रीरथालक्ष्य विरक्तं हस्सने नृपं । लोलडामरभार्य्यां तद्भार्चीं समदिशत्ततः ।
स्वामिरागमिवारूढो नाकं डामरलोलकः । अहारयस्यशो न स्वं कुस्वामिमुखवीक्षणैः ।
अस्माद्दुर्म्मन्त्रिराज्ञो विभवाशास्तु दूरतः । वर्द्धितस्य त्वया प्राणसंशयो हस्सनस्य तु । ५१०
तस्मात्त्वया निजार्थामा रचणार्थं महीपतिः । प्रार्थनीयो यथाभ्येति लघु हानेव लुब्धधीः ।
तत्रागतं महीपालं हनिष्यामो वयं बलात् । बध्नीमो वा ततो राजपुत्त्रोऽहद्धिमुपैष्यति ।
अथ दैवाद्गते तस्मिन् मन्त्रे भेदं महीपतेः । उदयश्रीस्ततो भीतः पलाययत हस्सनं ।
आत्मनो अतबन्धे वा चोदयन्नपरान् जनान् । रथेन्द्र इव लोकेऽस्मिन् श्लाघनीयत्वमश्नुते ।
कर्म्मण्यतीक्ष्णतीक्ष्णेऽपि तथा लचितमुद्यतं । चमाशीलः चमापालो नातक्ष्णोदुदयश्रियं । ५१५
गुणैः संहृत्य रन्ध्राणि प्रार्थितो शोलयन् बहिः । विसवत्कालमनयत्पङ्कवत्सु जलेषु च ।
तावद्वसति यस्तोये दूरात् स्रष्टा हिमांशुना । किंस्विनैव तदाश्लिष्टशशिग्रावा स्ववेदिति ।
उदयश्रीर्गन्तुकामो राजपुत्त्रान्तिकं ततः । उदयश्रीः सुतद्रोही राज्ञा कारां निवेशितः ।
परीचितुमिवायुक्तैर्गुरोस्तस्य च शेमुषीं । सुरैरिवार्थितो राजा क्रोधाद्व्यापादयत् स तं ।

मथ्नन् पद्मं गजो भञ्जन् मरुच्चन्दनपादपं । निघ्नन् पुरुषरत्नञ्च राजा निन्द्यो जगत्त्रये । ५२०
वचः पुरुषपुष्पाणां भुवनोद्यानवर्त्तिनां । सौरभातिशयं सार्द्धं विचिनोति मनोहरं ।
विनष्टहस्तपादोऽन्धो यथातिचकिताशयः । उदयश्रीवधे राजपुत्रोऽभूद्दुर्मनास्तथा ।
प्रसादप्रीणितः प्रायः खशराजैर्दुरात्मभिः । राजपुत्रोऽहस्सुनः स हन्तुं प्रत्यर्थितः प्रभोः ।
उत्पिञ्जे गलिते शत्रुवर्गेऽप्याशाच्युते सति । मतिः सतेजालोकानामालोकश्रियमाययौ ।
वितस्तायां स्वनामाङ्का पुरी तेनाथ निर्म्मिता । उच्छ्रितैः कनकच्छत्रैर्यामुल्लसति या श्रिया । ५२५
प्रत्यब्दं जनमालक्ष्य दुर्भिक्षक्षयितायुषं । मासि भाद्रपदेऽकार्षीत् स सत्रं भूरिदक्षिणं ।
साधुसूक्तिसुधास्नानात्कर्णाभ्यर्णतले कवेः । भृशं धवलिमापेदे शार्ङ्गके चास्य भूपतेः ।
भूषणं निजवंशस्य पूषणं धरणेरसौ । शत्रुश्रीदूषणं पुत्ररत्नं न च स लब्धवान् ।
योगिनो ब्रह्मनाथस्य कश्मीरादागतस्य सः । प्रसादेन महीपालः सन्ततिं प्राप्तवांश्चिरात् ।
अन्वयाभरणं देवी पितुरानन्दपारणं । तमोहरणमर्य्यंशंकरणं सुषुवे सुतं । ५३०
शृङ्गारमङ्गलावासमवलोक्य वपुः शिशोः । शृङ्गार इति नामास्य व्यधाद्भूलोकवासवः ।
हर्षादादिशति स्नापे बन्धमुक्तं तदुत्सवे । अभ्भावि तदा चित्रं बन्धो नो सेतुभिः परं ।
अथ द्वितीयपुत्रं सा देवी हैबतसंज्ञितं । असूत कान्तिसन्तानतर्ज्जमानसुधाकरं ।
चन्द्रस्येव कलङ्कोऽभूदयं दोषामहीभुजः । कुलागतां महीं यस्य सवासव्यामपाहरत् ।
भाद्रे कृष्णद्वितीयायां पञ्चषष्टे स वत्सरे । अस्तं जगाम राजेन्द्रः कुत्बदीनमहीपतिः । ५३५
राज्ञी शोकातुरा राजपुत्रौ बालाविति प्रजाः । अभूवंश्चकिताः सर्व्वा विनाथवद्यथाधिकं ।
देव्या वाष्पजले शोकवर्षजाते पृथौ सति । परस्परममात्यानां मात्स्ये न्यायेऽभवद्रुचिः ।
अलं शोकनिवेशेन धैर्य्यमत्रोचितं यतः । रुध्यते मलिनात्मानः श्यामसूरामराजकां ।
इति प्रबोध्य सुभटां देवीमुद्दकसाहकौ । ज्येष्ठं शेकन्दरं पुत्रं महाराज्येऽभ्यषिञ्चतां ।
राज्ञीमतेनोद्दकोऽथ साहपुत्रं महम्मदं । स्वजामातरमप्येष सजानिमदहच्छलात् । ५४०
लुब्धानन्ति तिमिर्मत्स्यान् स्वकुलजानन्धानजानन् वधं स्वामन्यामपि मक्षिका वत मधुपाशाद्वविश्यद्वधा ।
लक्ष्मीलोभभरेण मोहितधियः कल्पानलस्योत्थितिं जानन्तोऽतिजडा न किं कुचरितं कुर्व्वन्ति हा हन्त हा ।
शोभाभाया महादेव्याः श्याम्या लक्ष्मीरभूत्तरां । तां हेमलिङ्गैर्यां पुण्यलिङ्गैर्य्या स्वैरमण्डयत् ।
एतद्वन्धुघ्नमेषोऽपि मां हनिष्यति निश्चितं । इत्युद्दकोराजपुत्रं विषेणाथ व्यपादयत् ।
निजयैव कृपाण्याहं स्वं छिन्द्यां कण्ठमेतया । यद्यहं त्वां निरुन्ध्यामा हन्यां वेत्यथ संविदा ।
विश्वास्य साहकं वीरमुद्दकोऽथ व्यपादयत् । आसन्नविनिपातानां द्रोहादृता हि दुर्धियां । ५४५
यथा भ्रातुस्तथा स्वस्य वधं शङ्कावशान्नृपः । शैढीभूतस्तनोर्हर्द्धिं स्वं पदं किञ्चिदानयत् ।
भौट्टान् जित्वा गतो दृप्तोऽसहमानोऽन्यवैभवं । श्रीशोभाभ्रातरं खुज्झ्याराजमुद्दोऽवधीत्ततः ।
आदिशन् सेवकं स्वं स दारोत्पिञ्जानि मत्सकं । राज्ञ्योऽपि प्रणयं त्यक्त्वा हौलरामगमन्मदात् ।

तच्छ्रुत्वा लद्दराजाद्या भूपतेरनुयायिनः। योद्धुं बद्धोद्यमाः पद्मपुरधन्वनि धन्वनः।
प्रत्यासन्नविनाशानां प्रायो मतिमतामपि। पिशाचादिभ्रमो नूनं स्वच्छायास्वपि जायते। ५५०
उद्दसैन्यैर्यतो योद्धुं बद्धोद्यममुपागतैः। पारेवितस्तं महिषीष्वश्वभ्रान्त्या पलाय्यत।
आवितस्तापुरं रात्रौ तमनुद्रुत्य भूपतिः। व्यवर्त्ततात्र तं बद्धा नगरोत्पिञ्जशङ्कया।
तं बध्यमपि कारायां कारुण्यात्तु नृपोऽक्षिपत्। उद्दकस्तु स विश्वस्तद्रोहपापमलीमसः।
शङ्कमानो बधं भूपात् करुणाकोमलादपि। निजयैव कृपाण्याथ स्वगलच्छेदमाचरत्।
पक्षिराजइव व्यालान् शृगालानिव केशरी। पालान् धरणिपालः स कालान्तिकमथानयत्। ५५५
राज्यं शौर्य्यं वपुस्तेजो निर्नियन्त्रणता तथा। तदा तथाभवद्राज्ञः पश्चाग्नितपसः फलं।
हन्त राज्ञां ततं दर्पतिमिरं खण्डयन्नृपः। याचामस्तुत्यचित्रं गोत्रभिद्गृहं ततः।
विश्वं रञ्जयता तस्य प्रतापेन प्रथीयसा। राजस्त्रीमुखलक्ष्मीः पाण्डिमानमवापिता।
तदेव दीनाभरणामपालकतया युतां। म्लेच्छराजो व्यधात् डिल्लीं विधवामिव लुण्ठयन्।
ततः प्रत्याव्रजन् म्लेच्छराजः कश्मीरभूपतेः। शङ्कमानो गजेन्द्रौ द्वावुपायनमचीकरत्। ५६०
हस्तिद्वयगलद्दानराजिव्याजात् स्वयं व्यधात्। देशसीमाविभागं स कश्मीराधिपतेः किल।
हस्तिद्वये समारूढे हिमाद्रिशिखरश्रियि। विन्ध्यदृष्टिभ्रमाद्विन्ध्यनियन्ता कोपमागमत्।
नागौ कोपमगातान्तौ वितस्तातरणक्षणे। प्रतिबिम्बं निजं दृष्ट्वा प्रतिहस्तिभ्रमं गतौ।
राजस्त्रीस्तनसौन्दर्य्यचौर्य्यकारिकटोत्कटौ। तौ गजौ भूमिपालेन वारीकारां प्रवेशितौ।
वदान्येन नरेन्द्रेण सुवर्णपरिपूरिताः। नैवार्थिनः परं देशोनिजोऽपि प्रत्यधीयत। ५६५
यथाकामार्पणप्रीतया चकस्तुतिलज्जया। विनमन् संकुचन् हस्तस्तस्य दानक्षणेऽभवत्।
दानं वर्णयितुं तस्य शक्यते नैव केनचित्। पाणिरूपमधः पद्मं यत्रोपरि जलं सदा।
सदा दानाम्बुसेकाद्यत्र प्रारोहद्यवः करे। खड्गस्तद्विमर्दानां मन्ये तत्र निमित्ततां।
प्रजापापविपाकेन ततोयवनदर्शने। बालस्येव हृदि क्षोणिपतेर्श्चिरवर्द्धत।
अनेके यवनादानप्रसिद्धस्तमथाश्रयन्। विहायापरभूपालान् पुष्पाणीवालयो द्विपं। ५७०
दोतेन्दुरिव छत्राणां तेषां बालोऽपि विद्यया। यवनानामभूज्ज्येष्ठामेरदेशं महम्मदः।
अनमकृत्यवच्छिचां शिष्यवच्चित्यमग्रहीत्। दासवच्च पुरो नीत्वा राजा तत्र न्यविशत।
मरुद्भिरिव वृक्षाणां शालीनां शलभैरिव। कश्मीरदेशाचाराणां ध्वंसोऽथ यवनैः कृतः।
स्वामिनोदानमानाभ्यां वेश्या गुणवृत्तया। कश्मीरानविशन् म्लेच्छाः सुक्षेत्रं शलभाइव
उदभाण्डपुराधीशं हंसो जातु जयन्नृपः। श्रीमेरान्सत्सुतां प्राप मूर्त्तामिव जयश्रियं। ५७५
अवातरच्छाहिकुले नूनं सा कापि देवता। योजयिष्यति तत्पुत्त्रः कश्मीरान् म्लेच्छनाशितान्।
श्रीजैनोल्लाभदीनाख्यो मूर्त्तोधर्मः कलावपि। राजापि योगिराजोऽयं राजचूडामणेः प्रियः।
केनापि रससिद्धेन दत्तस्तोकरसो नृपं। रससिद्धिं वदन्मूर्त्तमहादेवाभिधोऽभ्यधात्।

सदा राज्ञि महीभागेद्दहनादनुरोधवान्। सदास्मेरन्महादेवरूपेण द्रविणं बहु।
रससिद्धिप्रसादोऽथ महादेवस्य हीनतां। अगमत्तु कश्मीरनिवासविषये मनाक्। ५८०
रससिद्धिभ्रमार्थं स कृत्वा दृग्मन्त्रमौषधैः। हेमेव मूषिकामध्ये चिरमासीत् किरन् किल।
प्रज्ञानज्ञापितो राज्ञा तच्छद्म स्वयमेकदा। अकीर्त्तिश्रवणाद्भीतो महादेवोऽजहादसून्।
लद्दराजोऽगदङ्कारशङ्करो भट्टसूहकः। मन्त्रिणस्तान्तरङ्गाश्च सर्व्वदैवाभवन् प्रभोः।
सेरखानः शाहिखानखानो मह्मदइत्यपि। यैः सङ्गाः अभ्यभूषन्त गङ्गाघैर्व्विष्टपादिव।
प्रत्यक्षादिव धर्म्मार्थकामाः काममनोरमाः। मेरदेव्यास्त्रयः पुत्राराज्यास्तस्यादपत्यत। ५८५
छत्रिमल्लान्विरस्तासां शोभादेव्यात्मजन्मनां। पुत्रं पितृजनामानं स निरासत् पुरान्नृपः।
अलकासदृशीं राजा मानसप्रतिविम्बितां। पुरीं पुण्यजनाकीर्णां प्रद्युम्नाद्रितटे व्यधात्।
अयत्नप्राप्तवित्तानां यवनानां महीपतेः। वराटके च कोटौ च दृष्टिरासीत्समा तदा।
कश्मीरमण्डले म्लेच्छदुराचारेऽतिदूषिते। महिमा ब्राह्मणैर्मन्त्रैर्देवैश्च स्वः समुज्झितः।
प्रभावतेजो यैर्देवैः सततं प्रकटीकृतं। खद्योतैरिव तैरेव देशदोषाद्विनिह्नुतं। ५९०
प्रत्याहृते तमस्तेजोविशेषे त्रिदशैरभूत्। प्रतिमानां शिलाभावो मन्त्राणां वर्णमात्रता।
पुण्यक्षयेण कर्तॄणां कलिदोषेण चोज्झिताः। गीर्व्वाणैः प्रतिमाः सर्व्वा निर्म्मोका भुजगैरिव।
रक्ते रागं शुचौ शौक्ल्यं मलिने मलिनां स्थितिं। संक्रान्ते सति गाहन्ते स्फटिकानीव भूभुजः।
स्वयं ब्राह्मक्रियाद्वेषी म्लेच्छैश्च प्रतिबोधितः। सूहभट्टः प्रभुं जातु देवभङ्गार्थमैरयत्।
विहाय राजकार्य्याणि प्रजाभाग्यविपर्य्ययात्। देवानां प्रतिमाभङ्गे राजारज्यदहर्निशं। ५९५
पापिनां पापमूलाऽभूद्भूमृतामनयद्रुमः। हर्षदेवतुरुष्कोऽभूद्यस्य प्रागङ्कुरायितः।
पत्रायितोलवन्यानामुत्पिञ्जो दारुणोऽभवत्। उलचोम्लेच्छराजोऽभूद्यस्य पुष्पायितः सदा।
देवानां मूर्त्तिभङ्गेच्छा यस्यासीत्तस्य भूभुजः। म्लेच्छप्रेरणया नित्यं विस्रब्धः स फलायितः।
मार्त्तण्डविषयेशानचक्रभृत्त्रिपुरेश्वराः। भग्ना येनास्य कोविशः शेषभङ्गेन कथ्यते।
सुरेश्वरीवराहादिप्रतिमाभङ्गकर्म्मणि। अकम्पत भियेवोर्व्वी नास्य सर्व्वङ्कषा तु धीः। ६००
न पुरं पत्तनं नापि न ग्रामो न च तद्वनं। यत्र सूहतुरुष्केण सुरागारमशेष्यत।
कथाशेषीकृते सर्व्वगीर्व्वाणप्रतिमागणे। व्याधिमुक्तइवानन्दं सूहभट्टोऽभजत्ततः।
अपथ्याशीव बालः स सामन्तर्महितस्ततः। जनानां जातिविध्वंसे सूहभट्टः कृतोद्यमः।
जातिध्वंसे मरिष्यामो द्विजेष्विति वदत्स्वथ। जातिरक्षानिमित्तं स तान्दुर्द्दण्डमजिग्रहत्।
प्रसादप्राप्तिलोभेन भूपतेरुपजीविषु। ब्राह्मणत्वाधिकां जातिं त्यजत्स्वप्यविलम्बितं। ६०५
श्रीसिंहभट्टकस्यूटौ वणिजौ श्लाघ्यतां गतौ। श्रीनिर्म्मलाचार्य्यवर्य्यस्त्रिजगत्श्लाघ्यताकृतः।
त्यक्त्वा जातिग्रहं यत्तावन्यदर्शनसेविनौ। शुष्कं तुरुष्कदण्डञ्च विन्यवारयतां यतः।
निर्म्मलाचार्य्यवर्य्यः स सर्व्वस्वं तृणवत् क्षणात्। त्यजन् राजप्रसादेन न जातिं स्वामदूषयत्।

स्वामी भृत्यापराधेन दण्डनीयइति स्थितेः । सूहभट्टापराधेन कालोभूपेऽकरोत् क्रुधं ।
ज्यायांसमभिषिच्याथ पुत्रं शेकन्धरोनृपः । नन्दाष्टाब्दे ततोज्येष्ठकृष्णाष्टम्यां व्यपद्यत । ११०
आलिशाहः स वसुधासुधांशुर्जगतस्तमः । प्रदोषारम्भमच्छैत्सीत् भास्वतोऽस्ते पितुस्ततः ।
अदर्पकचितं बालं प्रौढा लक्ष्मीर्भुजङ्गमुक्तः । कुलजा लिङ्गदत्तैस्तं राजानं नतिसाञ्जिभिः ।
पूर्व्वोर्व्वरेशवद्बालमपि तं भूभुजोऽनमन् । अच्छिद्रष्टोऽहि दामापि क्रमितुं न प्रगल्भते ।
निजबुद्धिबलाद्दैवहितत्वेनोपसंहितात् । सूहभट्टेन मुख्यत्वं सचिवानामवाप्यत ।
विश्वासन्यस्तशस्त्रं स लद्दमार्गपतिं बलात् । बद्धवान् सह तत्पुत्रैर्व्वर्जयित्वा महम्मदं । ११५
महम्मदो मार्गपतेर्ब्बन्धं श्रुत्वैव शौर्य्यवान् । भाङ्गिलाचलमार्गेण मार्गाभिज्ञः पलायितः ।
निरुध्यमानं निःशङ्कमगदङ्कारशङ्करं । अप्रयुक्तातितीक्ष्णापि शस्त्रिधीस्स्व्यडम्बयत् ।
अपश्यद्दर्पतः कश्चित् सिंहो विशतु वागुरां । पिबन्तु तद्विशेत्पादं दूरदृश्यापि यः खगः ।
एकाहेनैव तच्छ्रुत्वा मल्लदः प्राप्तिचिन्तया । कन्ययेव दरिद्रः स नक्तंदिवमदूयत ।
दुद्दण्डदेशे गोविन्दनाम्नोमित्रस्य वेश्मनि । विश्वस्तः प्राविशत्तावद्विश्रमार्थं महम्मदः । १२०
वह्नेर्धूमविवर्द्धितः शमयति ज्वालाभरं वारिदोत्तुच्छोदभवो वनानि नयति चिप्रं कृशानुः क्षयं ।
दाहं जन्मभुवोद्विशेद्विषतरुर्व्वैरस्य दोषावहं द्रुह्यन्त्यत्युपकारिणोऽपि नितरां लोभाभिभूताजनाः ।
प्राप्ते महम्मदे मार्गपतौ विश्वासतो गृहान् । स गोविन्दस्वशस्थित्ते क्षणमेवमचिन्तयत् ।
मन्त्रिणा सूहभट्टेन राज्योपद्रवरक्षिणा । द्वैराज्यकारी दुर्ब्बुद्धिरित्यवारि महम्मदः ।
राज्यद्रोहाद्यतः पापी निःसामर्थ्योभयादयं । मम देशं प्रविष्टोऽद्य रक्षणीयो न युज्यते । १२५
तावच्छ्रीसूहभट्टेन विसृष्टाः श्रेष्ठबुद्धयः । अन्वेषका गृहं प्राप्ता गोविन्दस्य खशेशितुः ।
मैत्रीमुल्लङ्घ्य निर्व्यूढामाश्रितस्य च रक्षणं । महम्मदं निजं मित्रमर्पयामास दुर्म्मतिः ।
सुप्तं हरिमिव व्याधो यदा बद्धाक्षिपत् खशः । पञ्चवक्त्रं तदा तेऽथ कश्मीरानानयद्द्रुतं ।

मन्त्रार्दितस्य फणिनः प्लवगास्थपेटैर्व्योधाःघटाविघटनान्निरसोर्द्दरेखे ।

बद्धस्य कातरतया बलिनोऽवमानैर्न्निन्दाविना किमिव नाम परं लभन्ते ।

मान्यं कृतावमानन्तं शङ्कमानः पलायनं । बद्धरूपे महादुर्गे सूहकारमवीविशत् ।
विद्युद्द्योतभरैर्न्निशि प्रवसतः पान्थाञ्जवो वारिदः पञ्चास्योव नवाभिनो मृगगणान् व्याहृत्य विप्रेषितैः ।
गत्या वक्रगतेर्द्दिनेशतनयोराशीनजादीन्विधिर्भद्राभासविलोकनैर्द्दुरितिनो जिम्भास्य पर्य्यस्यति । १३०
शाहनाश्रयासतोदास्या मुखेन प्रतिबोधितः । मल्लदो निजधाचेयैर्ब्बन्धस्थानादकृष्यत ।
स हि खेदाकुलः स्नानं करोमीति स्वरक्षकान् । भ्रामयित्वा प्रविश्याथ स्नानकोष्ठं ततोऽचलत् ।
धात्रेयैर्व्विहितं सन्धिभेदस्थानमुपेत्य सः । हंसः कोष्ठान्तरमिव निःसृतोऽथ महम्मदः ।
रोषादिव श्रुतिं हन्तुं निष्पतन्निर्झराम्भसां । भङ्गोरिव ततोदुर्गाद्दराइजन्यामकम्पितः ।
असकृद्वसमं रोद्धुं पाषाणारचितेन च । निर्झरास्तु तदङ्घ्रिस्थनिगडध्वनिडम्बरं । १३५

धात्रेयामह्लादस्याथ भङ्क्त्वा लोहनिगडान् दृढान्। सूहभट्टममन्यन्त भग्नं साकं स्वबन्धुभिः।
महम्मदवदेवास्मिन् शङ्कमानः पलायनं। हट्टं निपीतकोशोऽपि मार्गे समबधीत् द्विजः।
हते मार्गपतौ हट्टे सूहभट्टेन दुर्धिया। अमन्दनिन्दमक्रन्दन् पितरीवाखिलाजनाः।
दृष्टैः संलक्षयन्नाशा विशेषं निशि निश्चय। पक्षीव नीडभ्रष्टः स सूहालोकभयाद्ययात्।
अहस्तस्य विहस्तस्य रात्रिरासीन्निशादिनं। विपर्य्येति ध्रुवं सर्व्वं विधौ विधुरतां गते। ५४०
कारानावं समुल्लङ्घ्य चलितं तं स्मरन्मुहुः। महम्मदस्तिमिं सूहधीवरः शुचमासदत्।
मन्त्रिणा सूहभट्टेन पालितैर्लालितैर्जनैः। ख्यातोदर्शनमात्रेण स्वथ्यातः श्रीशिकन्धरः।
श्रीशिकन्धरशाहिर्ध्यं शोभादेव्याः स्वमात्मजं। उत्पिच्छानामभावार्थं स्वदेशान्निरवासयत्।
उदीचीपतिना राजपुत्त्रत्वादभिनन्दितं। काश्मीरानाययौ जेतुं तमादायाथ मह्लदः।
तुरुष्ककटकैः सार्द्धं श्रुत्वा पित्त्रजमागतं। व्यसृजत्तन्निरोधाय सूहः श्रीलद्दगौरकौ। ५४५
मन्त्रैः श्रीलद्दराजस्य विक्रमैर्गौरकस्य च। सा तुरुष्कचमूः शान्ता व्याधिर्दानजपैरिव।
वीतभीतिस्ततो मन्त्री कम्पनाधिपतिं व्यधात्। लद्दराजं गौरभट्टं क्रमराज्येश्वरं च सः।
सन्ध्याक्षणदृवोदग्रे सूहे रञ्जितभूभृति। नाभूतामुदितौ राजयुवराजौ रवीन्दुवत्।
श्येनो हन्ति पतत्त्रिणो मृगपतिर्निष्पातयिष्णुर्मृगान्निश्चन्ते मणयोऽपि वज्रमणिना खाता खनित्रैर्मही।
पुष्पाणीव च भास्वता ग्रहगणाः सूर्य्येण निर्धूनिताः प्रायेणात्र विलोक्यते परिभवत्रासः सजातीयतः।
द्विजातिपीडने तेन प्रेरितोऽपि मुहुर्मुहुः। श्रीशिकन्धरभूपालः करुणाकोमलाशयः। ५५०
यवनाब्धिमहावेलां यामकार्षीत् कथञ्चन। उल्लङ्घिता द्विजातीनां तेन दण्डस्थितिस्ततः।
दर्शनान्तरविद्वेषी प्रदोषस्तमसां निधिः। यागयात्रादि नागानां दुर्वृत्तः स न्यवारयत्।
शङ्कमानः कृतातङ्कसङ्कोचानां द्विजन्मनां। विदेशगमनाज्ञानिरुच्चामच्चाममस्सरः।
मोचाचरं विना मार्गो दातव्यो नैव कस्यचित्। इत्यादिशद्दशेयाम् स मार्गरक्षाभिकारिणः।
ततोमीनानिव व्याधा दत्तबन्धे सरिज्जले। द्विजातीनतिदुर्जातो देशेऽस्मिन्न्यगृहीत्तरां। ५५५
तद्भयानलसन्तापं पापस्य बहवो द्विजाः। अग्निज्वालाप्रवेशेन सहसैव न्यवारयन्।
केचिद्विषेण पाशेन परे तोयेन चापरे। भृगुणा वह्निना चान्ये विप्रा भीत्या विपेदिरे।
राजद्रोहिमहस्तेण रचितुं राजवल्लभः। नेत्वकमशकन्विप्रमेतस्मिन् द्वेषदूषिते।
दुर्व्वहत्वेन निन्दस्य राज्यभारादहं खलः। अश्लाघत द्विजाक्रन्दश्रवणानन्दलाभतः।
गृहाकूम्येव विप्राणां पङ्क्तिर्म्रात्यभिमानिनी। रुद्धद्वारास्ततोदेशादपमार्गैरपासरत। ५६०
त्यक्तापि पितरं पुत्रस्तं पिता चागमद्द्विजः। सूहान्तके कृताचेये विदेशं परलोकवत्।
ध्माक्षचाचाममशनं व्यामोहोविदनामयः। जीवन्नरकता तेषां विदेशोऽगाद्द्विजन्मनां।
धाटीफणीन्द्रभीतीव्रतापस्वल्पाशनातुरैः। मार्गेऽनेकैर्द्विजैर्मृत्युलाभात्सुखमलभ्यत।
क्व च स्नानं क्व च ध्यानं तपः क्व च जपः क्व च। भिक्षार्थमटतां ग्रामान्नगात् कालोद्विजन्मनां।

द्विजानामुपकारोऽभूदपकारसुखादृशा। यत्तस्मिन्वासिताः सर्व्वे पापं तीर्थेष्वनाशयन्। १६५
विदेशमगताः शुष्यत्कलत्रत्राणचिन्तया। म्लेच्छवेशा द्विजाः केचित् कश्मीरेष्वेव चाभ्रमन्।
विच्छेत्तुमिच्छता विद्यां तेनापहृतवृत्तिभिः। लङ्घितं प्रतिवेश्मार्थं पिण्डोलोभाद्द्विजैः श्ववत्।
तुरुष्कदर्शने भक्त्या न तु द्वेषेण स द्विजान्। व्यप्लावयदतस्तस्मिन् हन्या न प्रजगल्भिरे।
इत्याख्याश्च सर्वेषां स तस्य परिहारदः। द्वेषद्योतनशक्तानां कार्य्याणामेव दर्शनात्।
रत्नाकरं यमाश्रित्य शाल्मणा जगतीभृतः। पत्तरत्नां व्यधुः सोऽभूत्सुहभट्टोऽस्य वल्लभः। १७०
मलानोद्दीननामानं यवनानां परं गुरुं। वैदग्ध्याच्छद्ममानः स द्रोहीति तमबन्धयत्।
यतः प्रभृति स प्रापद्राज्यमच्छत्रचामरं। ततः प्रभृति रोगार्त्तिरिव दर्शनदूषणा।
स्वप्नेऽपि नात्यजत सुहभट्टं घट्टितवैरिणं। भोगः सदासना चातिशुद्धानां तपसां फलं।
तस्यैव फलपूर्णानामृतूनामिव मन्त्रिणां। मानस्य हानिसम्पत्ती भास्वतोऽधीनतां गते।
एकस्मिन् शाहिखाने स दृष्ट्वा मन्त्रपराक्रमौ। अत्यन्तचिन्ताचकितो निद्रां नापत् कदाचन। १७५
पश्यन्नेवाविलं सुहसर्पं सविषया दृशा। शाहिखानप्रदीपोऽभूत्तमः संहर्त्तुमक्षमः।
द्विजातिपीडया शास्त्रनिन्दया द्रोहचिन्तया। चिकित्सया च तस्याब्दैर्यातन्त्रिचतुरैस्तथा।
प्रजापुण्योदयेनेव प्रेरितो दुष्कृतोत्थितः। क्षयामयोदश्चिकित्स्यो द्विजराजमशोषयत्।
असमालोक्यैवेन्दोरुदयमगमिष्यद्यदि समं समन्तान्नादित्योपलदहनराशिव्यतिकरः।
किमद्रक्ष्यन्नायन्तदुदयवशस्राविवुहिनद्युतिग्रावाम्भोभिः कृतधरणितापोपशमनैः।
वर्षांस्त्रिचतुरानन्यान् जीवेच्चेत्स न किं ततः। शाहिखानोदये पश्येदिहैव स्वांहसां फलं। १८०
जीवत्येव ततः सुहभट्टे भीत्या पलायितं। विश्राम्य लड्डराजन्द्राक् हंसगौरौ बबन्धतुः।
श्रीधेनौ रागिणौ तौ द्वौ मदोदग्रौ वृषाविव। अन्योन्यशृङ्गभङ्गार्थं प्रावर्त्तेते द्विजे मृते।
कारायां मोचिते लड्डराजे हंसेन संयति। प्राणांस्त्यक्त्वा गौरभट्टः सुरस्त्रीणां मुदं व्यधात्।
त्यक्त्वा गत्यन्तराभावात् करिकर्णविलोलतां। पुंस्यन्येव पतिंवृद्धो भेजे हंसस्तदा श्रिया।
बालोऽपि शाहिखानोऽस्य नोत्सेकं सोढवान् पुनः। शशीव तिमिरस्फारं नहि तेजोवयोऽनुगं। १८५
ठक्कुरैः सह संमन्त्र्य युवराजोऽथ मन्त्रवित्। लड्डराजं विनिघ्नन्तं हंसभट्टं रणेऽवधीत्।
शाहिखानं प्रजारागो निम्नं पयद्रवागमत्। असमन्द्चूतसम्पत्तौ कुन्दं निन्दति षट्पदः।
युवराजं जयोदयं परिरब्धुं समुत्सुका। राज्यश्रीः समयालाभाच्चिन्ताकुलमवर्त्तत।
स्नेहादिदग्धभावाच्च प्रजारागभरादपि। अधिकारभरं राजा युवराजे समार्पिपत्।
मेरकसारसंज्ञस्य तुरुष्कस्याथ दुर्मतेः। द्विपस्येव मदान्धस्य द्विष्टोऽभूत्तद्गुणाङ्कुशः। १९०
सुचिरं मलिनैराज्ञो मानसं वारिदैरिव। पैशुन्यवर्षिभिर्नेतुं मालिन्यं न स्म शक्यते।
भक्तो दक्षोऽनुजे स्निग्धोभूत्सदाश्रितवत्सलः। अतिप्रेरणया तेषां राज्ञोऽप्युद्विग्नतामगात्।
युवराजं सेवकांश्च रक्षितुं स्वान् महीपतिः। तीर्थानुसरणाकाङ्क्षी त्वमित्येवमभाषत।

अनर्थितर्पणं वित्तं चित्तमध्यानतर्पणं। अतीर्थस्पर्णं देहं पर्य्यन्ते शोच्यतां व्रजेत्।
दिग्गजेष्विव युष्मासु भूभारं न्यस्तवानहं। पुरुषोत्तमसेवार्थे यते शेष इवापरः। ६९५
साहिखानार्णवः प्रेममन्दरान्दोलितस्ततः। वाणीं सुधाकरकलामीश्वराय नतामदात्।
अस्तु सन्देहसन्दोहाद्दूरे तीर्थकदर्थना। द्वारं यशःसुकृतयोः प्रजापालनमस्तु वः।
चिरस्य पालितां पित्र्यां हित्वा निःशरणां महीं। नैर्घृण्येनैव सुरस्त्वमशक्तैवाक्षमे ऽखिलैः।
देवस्य यदि तीर्थार्थमुत्कण्ठा वर्त्ततेतरां। आराधकानामस्माकं किमन्यत्कार्य्यमुच्यतां।
व्यक्तमित्युक्तवत्येव युवराजे नरेश्वरः। ईषत्स्मितरुचा चारु पुनर्व्वाचमवोचत। ७००
प्रजानुपालनात्पुण्यं केवलात् कियदर्ज्यते। रसायनानामग्य्रं यदनेकरसचर्व्वणं।
देहात् पृथक् निवसतामङ्गजस्येव ते तव। दृष्ट्वा पराक्रमं शङ्का मदशक्तौ कथं भवेत्।
एतावदपि वाक्यं मे यदि नैवानुतिष्ठसि। त्वयि सङ्कल्पिताः शेषास्तदाशाः सन्तु दूरतः।
निर्व्वन्धेनेति जल्पन्स तीर्थार्थं धरणीपतिः। युवराजं हठाद्राज्यभारमग्राहयच्चिरात्।
श्रीजैनोल्लाहभदीनाख्यः सुरत्राणोऽभवद्भवान्। चिरं राज्यं क्रियादेवं राजास्याशिषमभ्यधात्। ७०५
तीर्थदर्शनलोभेन स्वदेशान्निरगान्नृपः। न पुनर्युवराजस्य चित्तात्प्रेमार्गलाञ्चितात्।
कोषसाराणि रत्नानि वाजिरत्नानि चार्पयन्। भ्रातरं वसतीर्द्दिवाः सोऽन्वगात् प्रेमगौरवात्।
मार्गे क्लेशं प्रयत्नेन सिद्धिं तीर्थफलाल्पतां। उक्त्वा मार्गे खत्ना राज्ञस्तीर्थश्रद्धामखण्डयन्।
स्वजामातुस्तिरस्कारं मन्यमानेन मानिना। मद्रेन्द्रेणाथ भूपालो द्वारात्तीर्थान्निवर्त्तितः।
प्राप्तायां शरदि श्रेष्ठदशायामिव भूपतिं। मद्रराजस्तमादाय कश्मीरान् प्रत्यगात्ततः। ७१०
भ्रातुरागमनातुष्ट्या मद्राभारयहाद्रुषा। नवराजः प्रमादे च कालुष्ये च निमग्नवान्।
क्षुद्रेष्वथ समुद्रेषु युवराजो महामतिः। भ्रातुः स्नेहाद्रुषं त्यक्त्वा राज्यत्यागं स्वयं व्यधात्।
तस्यस्तं दिवसावसानसमये सूर्य्यस्य तेजो निजं प्रत्यूषे प्रतिपादयन्नतिशयश्लाघ्यस्वतेजाभवन्।
वह्निर्यज्वकुलैस्ततोऽपि दिवसे श्रद्धानुबन्धाकुलैस्तेजोवृद्धिमुषा नवेन हविषा यज्ञेषु सन्तर्प्यते।
ठक्कुरैरन्वितो राजा पवनः कुसुमैरिव। कश्मीरेभ्यो गतः सर्व्वदेशाधीशैर्नतस्ततः।
सुखं तावदगाहिष्ट वीतनक्रां नदीमिव। ठक्कुरैरुज्झिता मद्रचमूः कश्मीरमेदिनीं। ७१५
अथ विस्तीर्णमाक्रान्तमालिशाहेन भूभुजा। पित्र्यं सिंहासनं तेन नतु सज्जनमानसं।
उद्यच्छेत कथं जडद्युतिरहो दूरोल्लसल्लाञ्छनो गच्छेद्दीप्तकरोन चेदिनकरो लोकान्तरं स्वेच्छया।
वीरेणात्यवहेलया विरचितोऽपचो जडः कातरः सम्भाव्य स्वपराक्रमेण विजयं विश्वं तृणं मन्यते।
शाखाभङ्गेन सच्छायमुद्यानं श्वगा इव। मण्डलं क्षोभयामासुस्तुरुष्काराजसेवकाः।
कातरान्नाम भूपालादनिष्पन्ननिमन्त्रणः। यवनोमेरकंसारो व्यधान्मण्डलविप्लवं।
अकार्षीन्मलिनो भङ्गः संकुचन्तीरिवाब्जिनीः। पौरनारीरनार्य्यः स हारसम्भोगदूषिताः। ७२०
महाकरैर्मर्दनान्वैः पङ्कसङ्कुलतां भयात्। अक्षोभि मण्डलं स्वच्छैः सैरोमहगजैरिव।

मन्त्रिमन्त्रैरवार्य्याणां दिवसेऽप्यनिवर्त्तिनां। रक्षसामिव कश्मीरास्तदा हस्तवशङ्गताः।
अराजकं वरं राज्यं न स्वामी तादृशः पुनः। अभूषणो वरं कर्णो न पुनर्लोहकुण्डलं।
सप्त तुङ्गं वरोवाजी स्वच्छं वासो मणिर्महान्। खोहतं यवनैस्तत्तद्यच्छोभावहं प्रभोः।
अकार्षीत् पञ्चषान् मासान् राज्यं स जडनायकः। प्रजापापविपाकेन न पुनः स्वेन कर्म्मणा। ७०५
मालिन्यं सुमनः प्रथाः प्रथयते दैन्यं निधत्ते द्रुमः सूर्य्यालोकतिरस्कृतं च कुरुते संहारमाशानयन्।
उत्थितः कमुपद्रवं न तरसा कुर्व्वीत धूमोद्गमोनोद्योतिततरां शिखी यदि महाज्वालाकलापाकुलः।
श्रीशिकन्धरदत्तस्य राज्यस्य क्षणमात्मनः। निवारयितुकामेन स्वलक्ष्मीफलकाङ्क्षिणा।
महेन्द्रद्वेषपूर्णेन खुःखुरस्वामिना ततः। नवराजोऽर्थितो दूतैर्निजदेशागमं प्रति।
नक्रो न चेज्जलनिधेर्बहिरभ्युपेयात् काकस्य जेन्न वरपादपमुन्नतं चेत्।
आखुर्न चेद्गहनगर्त्तगुहाविमुञ्चेत् हन्तव्यतां कथमवाप्नुयुरेव तत्ते।
आश्रयो युवराजस्य मद्द्विषो दीयतेऽमुना। जसरथं प्रति भूपालः क्रोधादित्यभ्यषेणयत्। ७१०
म्लेच्छच्छादितमाहात्म्यैरुद्विग्नैः सचिवैर्निजैः। अनिषिद्धोऽयममतिर्दूतैस्समयवेतनैः।
युक्तोपोद्दलितश्रद्धस्तथा दैराज्यजीविभिः। नवराजोदयं लेखमुखेन प्रापयिष्णुभिः।
प्रसादलोभात्पवनैरतिमात्रकृतस्तुतिः। नवराजजयोद्रेकश्रवणभ्रष्टसाहसैः।
स्वसैन्यैर्दैन्यचक्रिनैर्निन्द्यमानोऽधमो नृपः। मल्लेकं जसरथं जेतुं प्रस्थानमकरोत्ततः।
अभ्यमित्रीणतां तस्य कश्मीरेन्द्रस्य गच्छतः। आसीन्मित्रस्य सांमुख्यं न मित्राणां महीभुजां। ७१५
यत्र यत्रागमत् म्लेच्छकटकः स मदोत्कटः। तत्र तत्र रजोव्याजात्तमोमूर्त्तमदृश्यत।
पालनीयेषु देशेषु राजपुर्य्यादिषूद्धताः। परदेशेष्विवाकार्षीत् स लुण्ठनपराभवं।
प्राप्तेऽथ मद्गरव्यालनामस्थानं महीपतौ। सन्देशमित्यमन्दौजाः प्राहिणोन्मद्रभूपतिः।
पत्तिलोकः ससम्पत्तिर्वाजिनोवेगराजिनः। भटारणोद्भटाः सन्ति कटके तव यद्यपि।
तथापि स्खलबन्धेषु प्रसिद्धेषु महीतले। यूयं खुःखुरयुद्धेषु नैव नाम प्रगल्भथ। ७२०
वयमेव तु जानीमः खुःखुराणां रणस्थलं। अहिरेव भुजङ्गस्य पदं जानाति नेतरः।
अतोयावदयं प्राप्तास्त्वेत्रा विधिसिद्धये। भर्त्राङ्गस्तावदत्रैव स्थातव्यं पर्व्वतोपरि।
मद्रेशस्य स सन्देशोमन्देर्यवनपुङ्गवैः। स्वयशोलक्ष्यं ज्ञातो मदसंमूढदृष्टिभिः।
राज्ञि मूढेऽवरूढेऽथ मानादिव महीधरात्। ध्वजैर्व्वायुचलैर्यातं खुःखुरेशबलाद्भिया।
धावदश्वखुरोद्दान्तनीयसि महीतले। दर्पभीरसमभेदे मज्जति स्म फणीश्वरः। ७२५
अश्वचुम्बोऽसमंधिके भूतले मिश्रशाश्विते। वीराः प्राणान् प्रतापाग्नौ तत्राजुहुवुराहवे।
आलिशाहस्ततोराजा सिन्धौ प्रवहणं यथा। अभाग्यदुर्म्मरुद्वेगादभज्यत रणार्णवे।
विश्वान्धङ्करणान्धकारनिकरग्रस्तस्य सूर्य्योदयं हेमन्ते हिममारुतैर्हतधृतेः पुष्पाकराभ्यागमं।
दुष्टस्मापतितर्जितस्य जगतो निर्दोषलोभ प्रभुं लोकेशोजनयन्व्यमकि नितरां कारुण्यमत्युज्ज्वलं।

श्रीजैनोल्लाभदीनोऽथ कश्मीरानपकल्मषः । अनुकूलोविधातेव प्राविशद्विजयोर्जितः । ७४०
मतां स्तुत्या दिशां भेर्य्या मुखानि ध्वनयन्नयं । पौराणां प्राक् मनः पश्चाद्राजधानीं नृपोऽविशत् ।
धौनैर्मल्यं जनस्याहो जातं राज्ञोऽभिषेकतः । प्रतापोवैरिणां शान्तस्तोषंन्छ चाणि विभ्रति ।
तन्नीतिः पूर्व्वराजेषु कुण्ठोत्कण्ठाः प्रजाव्यधात् । गुणातिशयिनी या च शर्करेक्षुरसेष्विव ।
पूर्व्वराजव्यवस्थाः स विनष्टानवयन्नभूत् । शिशिरोपहता वल्लीर्वसन्त इव भूपतिः ।
परस्पराधिकं शत्रून् जयन्निर्द्वर्ज्जयानपि । शस्त्रैर्मन्त्राजितास्तस्य मन्त्रैः शस्त्राणि च प्रभोः । ७४५
कान्त्याङ्गं वदनं वाचा श्रियोरः क्षमया मनः । श्रितं पश्यन्त्यगाद्दूरं कीर्त्तिरीर्ष्यावशादिव ।
राज्ञः कलिदशामध्ये धर्म्यां साम्राज्यपद्धतिः । अन्तर्दशेव शुशुभे शुभा कृतयुगस्य सा ।
भोगे सखा नये मन्त्री विवेका शास्त्रनिर्णये । श्रीमहम्मदखानोऽभूत् कश्मीरेन्द्रस्य सोदरः ।
किमन्यद्राज्यमेवासीत् कथयामरवर्ज्जितं । श्रीमहम्मदखानस्य कश्मीरेन्द्रप्रभावतः ।
वसन्त इव कामस्य भूपतेरभवत् सदा । खुःखुराधिपतिस्तस्य भृत्येष्वभ्यधिकप्रियः । ७५०
दुर्व्यवस्थां निवार्य्याहं देशेऽस्मिन् स्वेच्छनाशिते । इति राज्यपरिप्राप्तिफलं यावदचिन्तयत् ।
तावद्द्रोहोचितं कर्म्म द्रोग्धारो राजवल्लभैः । अपृष्ट्वैव महीपालं नीता वीतभयैः स्फुटं ।
यशो दिशि श्रियं साधौ सुखं लोकेषु रोपयन् । व्यधात् प्रक्रमभङ्गं तं यस्कचूनुदमूलयत् ।
एकान्ता तिग्मता भानोर्यदिमा शशिनः पुनः । सद्योजेतुनिवापुष्यत् तत्संसर्गमयीं श्रियं ।
असङ्ख्यानत्र सङ्क्षिप्ते तद्गुणान् वर्णयामि किं । शृगालानां गुहामध्ये कथं हस्तिपतिर्वसेत् । ७५५
तस्मात्कलेन्द्रवच्चित्रे मुकुरे सूर्य्यविम्बवत् । न्यस्यामि तद्गुणाख्यानमत्र चित्रे त्रिलोकवत् ।
शीतोष्णयोरिवोष्णादौ विषुवेऽहर्निशोरिव । तस्य मानोऽभवत्तुल्यः स्वे परे वापि दर्शने ।
राजा वणिगिवात्यर्थं तुलायाः पुण्ययोरिव । साम्यभङ्गं दर्शनयोर्मात्रमिष्ट कथञ्चन ।
शान्ते सिद्धाश्रमे सिंहैर्मृगा इव न पीडिताः । तुरुष्कैः पुष्कलभयैर्ब्राह्मणाः पूर्व्वमत्त्तदा ।
दोषाकरेण सुहृदा येषां सङ्कोचिता स्थितिः । व्यकाशयन्ततो भास्वान् गुणिनस्तान्महीपतिः । ७६०
रन्ध्रैरधोगतिं प्राप्ता कुल्येवोद्धृत्य भूभरा । विद्या प्रवाहिता तेन गुणिना गुणरागिणा ।
दोषच्छेदकरोराजा क्रमाद्भिषगिवामलं । कश्मीरेषु सदाचारमपोपद्युपक्रमैः ।
अहङ्कारागदङ्कारो राजा प्रकृतिहृद्धये । दर्शनानां सधातूनामिवोल्वणमशीशमत् ।
कलधर्म्मेण बलिना मात्स्यन्यायप्रवर्त्तिनं । अष्टलोके सतेजोंशधारणस्यास्य लक्षणं ।
स सुहृभङ्गसंस्पर्शदुष्टायाः शुद्धये भुवः । प्रतापाग्निं भुवं दीप्तमहाकाशमजिज्वलत् । ७६५
राज्ञः संचिन्वतामन्त्रप्रपंच पञ्चधा स्थितिं । जिगीषयेव तस्यारिवर्गः पञ्चत्वमाश्रयत् ।
अनित्यवाशात्रिदेवैषिनर्कोयस्तुतिसंस्तवः । नित्यान्तःस्थारिसंहर्त्तुस्तस्य प्रत्युत गर्हणा ।
शक्तोऽपि काश्यपीशक्रः शत्रूनेवाभ्यषेणयत् । व्योम्नि याशां करोत्यर्कः सतारे ननु सोडुपे ।
नाजिगीषत् स तेजस्वी शत्रून् विभवतृष्णया । हरिर्मांसादिलोभेन हिनस्ति न हि हस्तिनः ।

शैलेषु तद्विषोभानुप्रतापाधिदवाग्निभिः। प्रार्थयन्तोऽचितुं पश्च तपस्यभुवमाश्रयन् । ८८०
प्रावर्त्तिष्ट महीष्टोऽपि नोत्पथेन स जातुचित् । राकेन्दुर्न निशारम्भं विना जातूदेति यत् ।
गर्व्व प्रवृद्धावास्तव्या होना नैव पथं गमन् । इति नीतिविदा राज्ञा तेभ्यो बलिरगृह्यत ।
वैरिकीर्त्तिकुहोतु स्वं विक्रमस्य नियोगतः । वनाग्निसदृशे राज्ञः प्रतापे यदि तत्क्रिया ।
ढिल्लीशपीडितं जातु जसरथं शरणागतं । द्रोणीगुहासु सोऽरक्षत् तमोऽद्रिरिव भास्करात् ।
तस्मिन् शासितरि क्षोणीं विनेतरि दुरात्मनां । जयापीडपुरस्थस्य भूमिदेवस्य कस्यचित् । ८८५
अश्वग्रामाभिलाषाद्वा विधातुर्वा नियोगतः । तदा चित्ताप्यगाद्धेनुर्मूर्त्तेवाशा सुधाभुजां ।
गतामडवराज्यं स तीर्थस्नानाय जातुचित् । स्वां परिज्ञातसङ्केतां गां परिज्ञातवान् द्विजः ।
सनिश्चयो गृहं यान्तीं धावन्तमनुगम्य गां । विवादमकरोद्देशस्वामिना सह तत्र सः ।
तौ लोभविस्मयप्रस्तावशात्कलहावुभौ । महीपालसभास्थाने विवादं कर्त्तुमुद्यतौ ।
तयोरशक्तयोर्हेतुमुपपत्तिं परस्परं । शृङ्गाटानि परीक्षार्थं गोरपि व्यकिरन्नृपः । ८९०
सा बाल्ये ग्रसनाभ्यासाच्छ्रीशमाशाय सस्पृहा । गौरभुङ्क्त फलानीव सतु तत्सन्ततिश्चिरं ।
सभायां राजनैपुण्यं स्तुवत्यङ्गतनिश्चयात् । दण्डोवाजिग्रहदण्डं भाण्डं राज्ञा द्विजन्मना ।
तस्य दाक्षिण्यदक्षस्य प्रजानां हितहेतुना । पुत्रे मन्त्रिणि मित्रे वा दुष्टे नास्यत क्षमा ।
अपराधं विना जायां चौरो निघ्नन् प्रियोऽपि सन् । मेरुश्रायोऽपि यवनो वधं भूपेन लम्भितः ।
अनुपद्ये निकारं स क्षिपन् क्षितिपुरन्दरः । अकरोदादरं नित्यं योगिनां वयसोऽमिनां । ८९५
पराक्रमस्य नीतिश्च तस्य तेषाञ्च भूभुजां । करुणा च विवेकश्च यस्मिन् राजनि राजति ।
कामोवियोगिवर्गस्य करोत्यपचितिं सदा । निर्व्विकारः स्मरो योगिवर्गस्यापचितिं व्यधात् ।
सौम्या भीमगुणा यस्मिन्नवसन्नवसङ्गमं । क्वान्यत्र सागराद्दृष्टा विषामृतजलानलाः ।
चिरं स्थैर्यैरुपाप्तो यैः प्रत्यर्थिभ्यां धनग्रहः । तेन धर्म्मप्रवृत्तेन सद्वृत्तेन निवारितः ।
केनापि हेतुना पूर्व्वं लोलराजद्विजन्मना । भूप्रस्थदशकात्प्रस्थो विक्रीतो लेख्यपूर्व्वकं । ९००
बालानां नोनराजादिपुत्राणां तमुदीर्य्य सः । विक्रयाब्दे ब्रह्मभूयं लोलराजोऽगमत्ततः ।
नोनराजाद्यसामर्थ्यात् प्रस्थपादैरभुज्यत । अविक्रीतमपि प्रस्थनवकं वणिग्भिस्ततः ।
एवं कृते दशप्रस्थी भोगे तैर्बलिभिश्चिरं । नयभङ्गाय कपटं कृतं विक्रयपत्रके ।
विक्रीतं प्रस्थदशकमिति वर्णानलेखयन् । तेऽस्मिन् राज्ञि विचारज्ञे नोनराजस्य नन्दनः ।
बलाद्धृतां भुवं राजसभायामहमाक्षिपं । प्रत्यर्थिभिरथानीतं दृष्ट्वा राजाज्ञया नृपः ।
युक्तिज्ञः सलिलस्यान्तर्वाचयित्वाक्षिपत्ततः । ९०५
नष्टेषु नववर्णेषु पुराणेषु स्थिरेष्वथ । भूप्रस्थमेकं विक्रीतमिति सभ्यानवाचयत् ।
राजाकीर्त्तिमहं भूमिं कूटकृद्भ्यमहृतं । प्रजाः सुखं खलाभीतिं प्राप्नुवन्तः समन्ततः ।
इन्दोराहुभयं कदापि कुरुते कालाकलाः पूरयन् सिन्धुन् सम्प्रति नुन्नतडित्क्षिपतनक्राभतरोर्म्मीरिदः ।

मेधाः सत्पुरुषस्य सर्व्वजगतामाह्लादनायोद्यमं कुर्व्वन्नामयदर्शनेन कुरुते भीतिप्रकर्षं क्षणं ।
अवाधिष्टतरां कष्टो विषस्फोटः कदाचन । प्रकोष्ठं भूमिपालस्य प्रजानां हृदयञ्च सः ।
माघमासीव पुष्पाणां म्लेच्छप्रालेयबाधया । न लाभोऽविषवैद्यानां देशेऽस्मिन्नभवत्तदा । ८१०
यज्वा गारुडशास्त्रज्ञः शिवभट्टो नृपानुगैः । अयाच्यत द्विरासीऽथ कृपाऽध्वन्यैर्मरालिव ।
चिकित्सायां विदग्धः स म्लेच्छभीत्या व्यलम्बत । स्फुलिङ्गदग्धः पुरुषः स्पृशत्यपि मणिं चिरात् ।
स्वयं दत्ताभयो राज्ञा प्राप्तस्तमुदमूलयत् । शिवभट्टो विषस्फोटं करीव विषपादपं ।
तस्य कीर्त्तिः सुखं राज्ञः प्रजानां हर्षसन्ततिः । प्रारोहंस्त्रीणि विस्फोटे तस्मिन्नेकस्मिन् विपाटिते ।
तुष्टेन भूभुजा दत्तां यथेष्टमपि सम्पदं । नैच्छिष्ट शिवभट्टः स यत्नात्मेव वराङ्गना । ८१५
.......... जयदण्डं निवार्य्य सः । द्विजानां जातिरक्षार्थं रैत्यमायमकल्पयत् ।
स्थापितोद्यामसोमायां यामेभ्यः प्रापितोधनं । चरणेऽरण्यनाथस्य पान्थस्तेन महीभुजा ।
हाथाः श्मशानदेवीनां सूहभट्टं प्रतीव तं । प्रतिस्थानं विमानानि प्रेतानामच्युतस्तदा ।
म्लेच्छोपद्रुतां चोणीमक्षोणकरुणो नृपः । उदहार्षीत् क्रमादेवं दानवैरिव केशवः ।
उच्छृङ्खलान् स नयन् भङ्गं निखानापूरयन्नृपः । स्वकीर्त्तिवीजवापार्थमनुद्दातां महीं व्यधात् । ८२०
भूपतेः परदारेषु निष्कर्त्तिकमयं व्रतं । अभज्यत परं तस्य परस्त्रीपरिरक्षणे ।
सम्यग्दर्शदलेनाथ सर्व्वेशेन महीभुजा । सौगतस्तिलकाचार्य्यो महत्तमपदे कृतः ।
स शिवभट्टस्तिलकः सर्सिंहगणनापतिः । सोपानान्यभवत्तस्य पदारोहे द्विजन्मनां ।
मेदिन्याखण्डलस्यासीत् पिकस्येव रसश्रिया । अखण्डं रसपाण्डित्यं ब्रह्मकुण्डलसेवया ।
कर्पूरभट्टोऽथ श्रीमान् प्राणिरक्षो महीभुजः । गुणिनां शरणं चक्रे स्वगुणैः सुरभिं सभां । ८२५
पूर्व्वाब्दग्रहसञ्चारादुत्तराब्दग्रहस्थितिं । रूप्यभट्टो विदन्नासीद्दिनेव गणितश्रमं ।
श्रीरामानन्दपादानां वाण्यव्याख्या क्षणं क्षणं । श्री ·· तेदारदाचोर्णी ·· ······ ।
गान्धारसिन्धुमद्राद्रिभूभुजस्तस्य भूभुजः । ····················· ।
युद्धे जितं ततो मक्कं खुःखुरेन्द्रेण भूपतिः । मालदेवं मद्रराजमाज्ञया निरमोचयत् ।
राजा राजपुरीराजा ············ । क्षणाद्भङ्गमात्रेण रणस्तम्भमलोठयत् । ८३०
उदभाण्डपुराधीशं सिन्धुराजोपहृतं हतं । सकन्दुकमिवोत्थाप्य मुहुर्मुहुरपातयत् ।
भोट्टभूमौ महीन्द्रेण गोग्यदेशे कदाचन । बाणागारस्तराजेन गुणैर्लोकाश्च रञ्जिताः ।
सम्मिश्रितेऽथ यादेशे क्रूरादेशो महीपतिः । सुवर्णबुद्धप्रतिमां यवनेभ्योऽरक्ष सः ।
कथाक ·· क्षयंस्तस्य निकषोभोहतेजसः । अप्रकाशा प्रतापोऽथ स लूतनगरीं व्यधात् ।
केवलं हृदयं शून्यं भोट्टानां नाभवत्तदा । भूमिपालभयावेशात् कोषोऽपि चिरसञ्चितः । ८३५
प्रकृतीनां ददद्राजा शेषोपायोऽयथोचितं । प्रत्यवेक्षामकार्षीत्स शालीनामिव कर्षकः ।
नासहिष्टेव तत्तापं तुला शार्ङ्गपिनाकयोः । दूरकार्य्यार्थसाधिन्या धनुष्मत्ताभुवा पुनः ।

अस्तं यस्तमसां कुलानि बलतो नेतुं सदा वाञ्छति क्षीणं तं वसुनाभिपूर्य्य शशिनं सम्वर्द्धयत्यञ्जसा ।
काश्यप्यामवकाशमात्रघटनां शाखामुखैरुद्धतो हृष्टादृष्टिभरैश्च योऽस्य कनमो भानोस्तुलामर्हति ।
लद्दराजसुतं राजा नोऽसतं यमवर्द्धयत् । अस्ततद्द्रविणं तं स द्रोहीति निरवासयत् ।
मक्कदेशागतो जातु पुस्तकाडम्बरं वहन् । सदोलनामा यवनो राजेन्द्रं तमुपागमत् । ८४
गुणान् विकत्थमानं तं गुणिरागी नरेश्वरः । उपागच्छ................ ।
स तस्य पटहस्येव राजापश्यत् क्रमादसौ । अन्तःसारविहीनत्वं परीक्षायां विचक्षणः ।
म्लेच्छमस्करिणि क्षोणिप्राणेशो निर्गुणेऽपि सः । प्रेमाणं नामुचत् पुत्रे पितेव करुणार्णवः ।
प्रदोषस्येव तमसां दुर्जनस्येव विद्युतां । दोषाणां बहुता तस्य प्रजाः समुदवेजयत् ।
तस्मिन्नवसरे कश्चित् योगिराजो जितेन्द्रियः । न्यविक्षतोन्नते स्तम्भे योगाभ्यासस्य सिद्धये । ८८.
स्तम्भोपरि नवाहानि निराहारमपश्यतः । तस्याश्चैव महिषी राज्ञः पुत्रमजीजनत् ।
तपस्यतस्तथा तस्य तत्र तन्नवमं दिनं । राज्ञस्तु नवमं पुत्रजन्मकालमहोत्सवः ।
अत्यर्थदर्शनद्वेषान्मदिरामदमोहितः । स म्लेच्छसहितो योगिराजं तमवधीच्छरैः ।
सन्तप्तैर्म्मलिनैः स्थूलैर्जनानां तद्विलोकनात् । भूतले पतितं वाष्पैरपवादैश्च राजनि ।
पृथ्वीनाथोऽथ तच्छ्रुत्वा शुद्धार्थमिव मग्नवान् । भीष्टोऽशोककुशास्वर्य्यकृच्चविन्तार्णवेषु सः । ८५०
प्रथमोद्भूतपुत्त्रेऽपि तस्मिन्नह्नि महीभुजा । नास्नायि नाभ्यवाहारि व्यवाहारि न नाकथि ।
अन्येद्युर्भूपतिः पृष्टस्तत्शास्त्रगुरुकोविदः । हन्तुर्दण्डं वधं शृण्वन् करुणायन्त्रितोऽभवत् ।
प्रतीपं खरमारोप्य प्रतिहट्टं परिभ्रमम् । नरमूत्राभिषिक्तस्य कूर्च्चस्य परिकीर्त्तनं ।
छीवनं सर्व्वलोकानां प्रेतान्त्रैर्बाहुबन्धनं । जीवन्मरणमादिष्टदण्डं तस्य क्षमायतेः ।
राजनि स्नानिहीनानि दिक्सौगन्ध्यवहानि च । अपतन्नाकपुष्पाणि पौरशीर्षेषु नानि च ।
मद्रराजदुहितोः स चतुरस्तनयान् नृपः । यथा दशरथो राजा जनकान्तानजीजनत् । ८५५
ज्यायानादामखानः स हैज्याखानस्तथा परः । खानोजस्तुरयखानो बहेरामस्य संज्ञितः ।
क्षीरार्णवस्य मथनात् परतः सुधादिरत्नानि तान्यनुपभोगनिरर्थकानि ।
योनीतवान् सफलतां किल पाचदामात् सुल्यः स मन्दरगिरिर्गिरिराजवेगं ।
नदीरवटपातेन नद्यास्त्वाम्बुविनाफलाः । संयोगात् सफलीकृत्य यशश्चित्रमजीजनत् ।
राज्ञा त्पलपुरश्रेणी कुल्यां प्रापय्य वप्रिणीं । तयोर्निरर्थकत्वेन दूषणा विनिवारिता ।
मन्दशैलसरी कुल्यामवतार्य्य महीपतिः । असारयच्चक्रधरं सागरान्तर्निवासिनं । ८६०
करालस्थः सतां विभ्रदकरालं सितं यशः । कुल्ययाकारयन्देशं करालाख्यं स्तुतेः पदं ।
सायहारा द्विजा यत्र सायहाराश्च योषितः । साथ जैनपुरी राज्ञा कराले निरमीयत ।
अवन्तिपुरभूमौ च कान्तोदन्तेन भूभुजा । कुल्यावतारिता तुल्या शालिसम्पत्तिशालिनी ।
गिरिमार्गेण गङ्गायामानसं प्रापिते जले । किं पूतं मानसेनेदममुना किमु मानसं ।

सायाह्वारा द्विजायस्य सायाह्वाराख्ययोषितः। सायजैनपुरीराज्ञ करालेनिरमीयत। ७६५
अवन्तिपुरभूमौ च कान्तो दन्तेनभूभुजा। कुल्यावतारिता तुल्याशालिसम्पत्तिशालिनी।
गिरिमार्गेण सगङ्गायामानसं प्रापितेजले। किमुतं मानसे नेदममुना किमुमानसं।
व्यडम्बयत् स्वमूर्त्तिर्यां मानसप्रतिविम्बितां। विधाय तत्तटे तेन नगरी सफलायिता।
श्रीमान् सुय्यपुरात् पारेवितस्तां धरणेर्नृपः। संयोज्यं प्रसरत्तापव्यापदं स न्यशारयत्।
आप्रद्युम्नगिरिप्रान्तादमरेशपुरावधि। मठाग्रहारसङ्घाढ्यां स जैननगरीं व्यधात्। ७७०
स्वर्गं जेतुमिवोदस्तादुन्नतैरस्रवेश्मभिः। सङ्गान्ता जैनगङ्गायां फणिलोकस्य यागमत्।
जैनगङ्गां रणस्वामिप्रसादं प्रापितां कृती। व्यस्मारत् स्मरयंश्च हरिपादकुतूहलं।
पारेसुय्यपुरं स्वानगिरिसंज्ञां पुरीं व्यधात्। कैलासाचलतुल्येव प्रासादैरभिभूषिता।
सिद्धक्षेत्रे सुरेश्वर्यां प्रसिद्धाविलसद्यशाः। राजधानीं निषिद्धारिर्व्यधात् सिद्धिपुरीमसौ।
प्रासादशिखरे राजा मार्त्तण्डामरनाथयोः। राजधान्यौ व्यधात् सौधधौतदूरनभस्तले। ७७५
सुभिक्षं सुय्यराजेन पूर्व्वमङ्करितं किल। ततः सप्तत्यतीतेषु बहुष्वपि च राजसु।
प्रजानामल्पपुण्यत्वान्नावर्द्धत मनागपि। तपोबलात् पल्लवितं पुष्पितं फलितं तथा।
श्रीजैनोल्लाभदीनेन युगपत्तद्व्यधीयत। तपसामतिगूढत्वात् किमिव ज्ञापकं परं।
पूर्व्वपुण्यक्षये राज्यात् पतन्त्यन्ये महीक्षितः। तस्य जन्मान्तरे राज्यप्राप्त्यै राज्यमभूत्प्रभोः।
स महीमातृकाः कृत्वा धरणीर्देवमातृकाः। अग्रहारानजुल्लापो द्विजेभ्योऽयददात् सदा। ७८०
सराहेखनगरविजयेशानकादिषु। सत्रदानेन स चासमपि गोत्रभिदो व्यधात्।
भूमिविक्रयभूर्जादिकृतचिह्नं महीभुजा। निष्क्रवप्रागभावाय धर्म्माधिकरणं कृतं।
योजयापीडदेवेन प्राप्तोनागप्रसादतः। स दण्डमिव तस्यादात् ताम्रं ताम्रकरोगिरिः।
मणीन् खनिभ्यस्तालभ्यांस्तद्राज्ये भूरजीजनत्। ये जैनमणयः ख्याताः पद्मरागमदच्छिदः।
सरितां सैकते नीतसिकताभ्रमदं तदा। काञ्चनं काञ्चनच्छायां विभ्रलोकैरचीयत। ७८५
सरित्सुवर्णात् षष्ठांशो याज्ञो भाविभिरीश्वरैः। तामपट्टेऽलिखस्थाप्यावाप्यमेवं नरेश्वरः।
नगराधिकृतः काचडामरे दुस्तरे पथि। कोशमात्रं व्यधात् सेतुं नगरान्तः शिलामयं।
नात्मैव सेतुदानेन तेन पङ्कात् समुद्धृतः। सकलोऽपि जनो मध्येनगरं पुण्यशालिना।
त्रिषये विषये चक्रे शिवभट्टा मठान् पृथून्। अन्येऽपि सचिवा राज्ञो धर्म्मशालावलव्यधुः।

पद्माकरस्य मथनाय गजाधिराजावभ्युद्यतौ सततमेव तदङ्गुदृष्टौ।

तावत्कराकरि रसादिह घातिमत्तौ कृत्वा क्षणादगमतां क्षयमेव नाशं। ७९

सपोधमूरो धार्तयौ भूपतेरेकगोत्रजौ। दौ रत्नाम्भेविणावाक्षामन्योन्यविभवासहौ।
राज्ञा तौ वारितक्रोधौ खेददाक्षिण्यशालिनौ। कृत्वान्यतरमुत्पिच्छपक्षाववतां चिरं।
कदाचिद्भूपतेरग्रे पृष्टः शूरेण वाक्शरैः। ऋषोदठक्कुरः सत्त्वधन्यायं समकालयत्।

न्यस्तशस्त्रः स रजनौ गच्छन्नितपरिच्छदः । रन्ध्रं लब्ध्वाथ शूरेण मसोदः ठक्कुरो हतः ।
विग्रहादिट्ठक्कुरस्तस्य भ्रातृभिः स्थातपौरुषैः । हन्तुमभ्यर्थितः शूरो भूपतेः प्रेमशालिनः । ८९५
शूरे सानुचरे विग्रठक्कुरेण हते सति । प्रसादमगमत् कीर्त्तिठक्कुराणाञ्च धीस्तदा ।
तथा स योगिनां मानमभूद्भूलोकवासवः । तेषामग्रे यथामद्रराजाद्यैर्लेखितं भवत् ।
सह योगिनां भोगं यागं तेभ्योऽप्यहो नृपः । कुण्डलं हेमपात्राणि दुकूलमपि दत्तवान् ।
छित्वा पर्व्वतपक्षतीरपि नवाः फेणेन श्लाघ्यधिं कृत्वा यश्शतं त्रिलोकविजयी कीर्त्त्या न तृप्तिं गतः ।
इन्द्रः पीतसितासितारुणहरिद्वर्णैं विधत्ते नमुज्योतिर्धूमसमीरनीरघटनामाचेऽप्यसारे घने ।
भूतानां भाविनां वापि यदशक्यं महीभुजां । तदिष्टसाहसी राजा कीर्त्तये कर्त्तुमिष्टवान् । ९००
कर्त्तव्यं साहसं यद्यदुचितं यदयं नृपः । कालस्यानवधित्वाच्च विपुलत्वेन च क्षितेः ।
तत्तत्सम्भाव्य साध्यं स भाविभिर्म्महिनीश्वरैः । दूरादश्विरिवाध्यानो रत्नेष्वधिकदीप्तिषु ।
साहसेष्वेकमादातुमपि प्राप न निश्चयं । उपचारैर्दरिद्राणां यंभोदारमानसः ।
न तोषितः श्रुतैराख्यामतीतानाञ्च साहसे । अगम्येष्वपि भूपालः शैलेषु च सरःसु च ।
शब्देष्वर्थेष्विव कविस्ततः सञ्चरन्नृपः । वणिजामिव वाक्यानि व्यवहारसमुत्सुकः । ९०५
राजा नीलपुराणादीन् पण्डितेभ्यस्ततोऽशृणोत् । क्षितान्तराणि संत्यज्य साहसैकसमुत्सुकः ।
कदाचिद्धरणीपालश्चिरमेवमचिन्तयत् । देहस्येव त्रिलोकस्य मुखवत् क्षितिमण्डलं ।
प्रधानं तत्र कश्मीरमण्डलं नयनं यथा । शैलराजशिखाः पक्ष्मतुल्या यत्र वहन्ति ताः ।
तारामण्डलवत्तत्र महापद्मसरोवरः । महापद्मास्पदं त········मण्डलसोदरं ।
तदापूर्य्य कथञ्चिच्चेत्कि··· ·······क्रमात् । निर्म्माणं शक्यते कर्त्तुं तदा राज्य······। ९१०
अगाधसलिलच्छन्नक्रोशाष्टाविंशतिप्रमः··· - । सरोराजः स हि महानाश्रयो महतामपि ।
··सवि स्रष्टुं तत्रोपायं सरोवरे । नावास्थ गतवान् मध्यं योगीवात्मानमात्मना ।
सदैवोद्धूतकल्लोलमहापद्मसरो महत् । नागाहन्त नृपाः पूर्व्वे तरणीभङ्गशङ्किनः ।
तपःप्रभावाद्धैर्य्याद्वा कार्य्यगौरवतोऽपि वा । स्खलवत् सलिले तत्र स राजाम्बरसुखं ।

यश्चेतसा चिरतरं परिचिन्त्यमानं चिन्तामणिः किल ददाति तदेव नान्यत् ।
चित्तस्य चापि यदगोचरतामुपैति तत्तु प्रयच्छतितरां वत बुद्धिरत्नं । ९१५

तस्य हि क्षितिपालस्य निराकम्पमतेः सतः । सरसः स्थलतां कर्त्तुमुपायः प्रत्यभादयं ।
शिलापूर्णप्रवहणैरपर्य्युपरिपातितैः । शैलशृङ्गैरिवाम्भोधिमेतदापूरयाम्यहं ।
कृताभिर्लोहनङ्गाभिः पट्टीभिर्देवदारुणः । न छिद्यन्ते न भिद्यन्ते शिलाप्रवहणादिभिः ।
ततः प्रत्यागतो राजा द्रष्टुं नानाद्भुतकौतुकः । अभ्यगात् शरणं तत्र ते चैनं नृपमभ्ययुः ।
द्वारिकेव प्रभा तस्य पुरी सन्निमतो किल । सुदर्शनेन चक्रेण मनुजानां समाश्रिता । ९२०
नगर्य्या देवता तस्य महापद्मः ······।· मिवैतां शतुर्व्वर्णान् पुत्रवत्पर्य्यपालयत् ।

कलिकालबलात्तत्र दुराचारनिषेविणः । ·· जनास्तद्देशसंस्थाः प्रापुर्वृद्धिं दिनादिनं ।
अथ कर्म्मानुसारेण विपर्य्यासानुबन्धतः । क्रोधं नागपतिर्यातो दूषणादिव सज्जनः ।
अनुज्झितनिजाचारं कुम्भकारं स कञ्चन । स्वप्ने वदन् दुराचारान् पौरान् सम्व्यथितानयं ।
नागः प्रजादुराचारप्रजा प्रजयतीति तं । प्रातर्व्वदन्तमश्रसन् पौराः पशुमिवाखिलाः । ८२५
फणाग्रैतोयसंदारिधाराशस्त्रभयङ्करः । नागराजोऽथ नगरीं वैरीवावेष्टयत्ततः ।
मन्त्रान् पिठत्सु वप्रेषु नागेषु प्रणमत्स्वथ । हरत्स्वपि च बालेषु नास्थाभूत्सवह्वरः ।
भयाद्बालेषु पुत्रेषु कण्ठलग्नेषु योषितः । बाष्पमुक्ताफलैश्चक्रुः पूजां फणिपतेरिव ।
पादादङ्कं ततः कण्ठं ततः स्कन्धं ततः शिरः । प्राणाइव सुताजम्मुर्मातॄणां भयविह्वलाः ।
सर्व्वाण्यङ्गानि नारीणां शृङ्गारीवानुरागवान् । कम्पमानानि लोलः स जलपूरः समस्पृशत् । ८३०
ह्रस्वं दीर्घञ्च सूक्ष्मञ्च स्थूलञ्चाणु महत्तथा । अन्धकारइवाच्छाद्य जलपूरो व्यजृम्भत ।
अगाधे सलिले तस्मिन् खलस्वर्णाभसङ्गतः । फणिराजः स्थितिं चक्रे विपिने सत्त्ववान् यथा ।
कालियः स हि नागेन्द्रः पदाक्रान्तो मुरद्विषा । शिरस्सूत्पन्नपादत्वान्महापद्माभिधां गतः ।
नष्टान्योजयितुं भूयः कश्मीरानिच्छतोहरेः । अवतारस्त्वमेतत्ते विष्यत्येव चिकीर्षितं ।
राजा श्रुत्वेति स स्वप्ने क्षणमेवमचिन्तयत् । एवंविधानि कार्य्याणि सिध्येयुः कथमन्यथा । ८३५
प्रजाचारविपर्य्यासात् नाचमिष्ट पुरं फणी । ना शिष्टं सहतेऽल्पोऽपि तादृशस्तु महान् कथं ।
नागराजोचितस्थानसगोचमहमत्र तु । स्थलम ······शोरत्नघटिकारम्य भारभे ।
उल्लोलसरसोमध्ये वर्त्तमाने महास्थले । पवित्रे विजने यात्र सिद्धिं यास्यन्ति साधकाः ।
चिन्तयित्वेति भूपालःशिलासवपौर्द्दृढैः । उल्लोलसरसो मध्यमप्यगाधमपूरयत् ।
सरःम··सुतस्तस्य स्वभ्रीभूतेऽथ भूपतिः । मध्यदेशे महाराज····न लङ्कां विनिर्ममे । ८४०
अन्ते तस्यैव सरसो राजेन्द्रप्रसादतः । जयापीडमहीपालः स्थलभावमदापयत् ।
हेमन्ते विषशृङ्गाटकवुकोद्धरणादिना । श्रीजयापीडकोटस्य श्रायतेऽगाधवर्त्तिता ।
उल्लोलस्यान्तभागेषु सुय्यकुण्डलकादयः । दृश्यन्ते बहवो ग्रामा विशालसदनाङ्किताः ।
गिरयोऽपि निमज्जन्ति यत्र तत्र तु स व्यधात् । जैन··· कां महाटङ्कां तं निधायाधिकारिणं ।
रूप्यभाण्डा ··शिन्दकोशतान्युज्ञसन्मतिं । राजधानीमहाद्वारयोधमा····योजयत् पुनः । ८४५
हिमाचलशिखादर्पच्छेदप्रासादमेदुरां । क्रमराज्ये बहुरङ्गाख्यः सुरत्राणपुरं व्यधात् ।
जैनकोट्टं घट्टितारिरट्टशालि समन्ततः । तत्तत्पट्टपताकाक्तकान्तं राजा विनिर्ममे ।
जीर्णोद्धारेषु सर्व्वेषु निर्माणेषु नवेषु च । आशारामोऽभवत् दैवज्ञरूप्यभाण्डपतेश्च धीः ।
महापद्मसरस्तीरे जैनोपपदशालिनः । पुरमण्डयिकाद्योषांस्तथा श्रीजैनकुण्डलं ।
स जैनपत्तनञ्चापि विदधे धरणीपतिः । भूपतेः कोमलकरा मनोज्ञाचरणाश्रिताः । ८५०

अभिराममहो इन्ताकरुणावल्लभाभवत् । अनिघ्नन् करुणानिघ्नो नरेन्द्रोऽनन्तकुञ्जरान् ।
सन्ध्यर्द्धिगर्डगौढं मृत्कराम्भारयन् यदा ।
निर्द्दिशन् यशसा शुभ्रा दिशोनृपनिरादिशत् । अवधं सगमत्स्यानामनेकेषु सरःसु सः ।
अथ जातु हृतां चौरैर्गां परिज्ञाय कश्चन । क्रन्दन्तं भूमिपः पृच्छंश्चौरांश्चाप्यटौकयत् ।
वयोलक्षणसम्वादं विना गोर्भुग्नशृङ्गतां । सभाक्षोभेण हेतुं स सत्यवाक् ब्राह्मणोऽब्रवीत् । ९८०
तिलकादिव देवाख्याः सहजाभुग्नशृङ्गता । राज्ञा पृष्टे वदन्त्येवं चौरे मूका सभाभवत् ।
परीक्षार्थं तिमिस्वेदे राज्ञा गोशृङ्गयोः कृते । कुटिलत्वं व्यपैति स्म प्राक् चौरस्याथ शृङ्गयोः ।
एवं बुद्धिप्रकर्षेण व्यवहारविमर्षतः । अमात्यपर्षदो हर्षविस्तोत्कर्षमजीजनत् ।
प्राड्विवाकः क्षमाबुद्धियुक्तदण्डलरक्षकः । राज्ञोवहत्प्रजाभारं गणनापतिगौरकः ।
येर्द्दत्तमुपकारित्वादुत्कोचद्रविणं स्वयं । कालान्तरे कृतघ्नेषु तेष्वेवास्थानमण्डपे । ९८५
प्रकाशयत्सुतं भारं कुपितेन महीभुजा । मन्त्यानमशानाशाकस्तेभ्यस्तत्प्रतिदापितः ।
आदौ पादतले तिष्ठन् करालम्बोकृतस्ततः । अथ चतुर्थतां गच्छन्नुत्तमाङ्गोर्द्धवर्त्तितां ।
श्रीतोदर्य्यावस्थानोऽथ कृतघ्नेनेश्वरेण सः । कलानिधिर्हिमरुचिः कौमुदे हि ततोवहन् ।
दिनपतिर्न रसातलगं तमः शमयितुं यतते यदवेक्ष्य सः ।
अतिलघुद्युतिकालघनाहतेर्हरति तत् प्रतिविम्बमहोजगत् ।
राजा भूभारखिन्नोऽपि खड्गधाराध्वगोऽपि सन् । स्वदर्न्तं विभवं यस्य दृष्ट्वा विश्राममाप्तवान् । ९००
अस्तं मद्युदस्थानः स कलानिधिरथागमत् । अत्यन्तरमणीयानां सुचिरस्थायिता कुतः ।
प्रत्यच्दं प्रतिहार्य्याधैर्य्याव्यधात् प्रीतिमर्थिनां । सत्यव्रतोदिवमगात् महिमश्रीः स ठक्कुरः ।
तद्दोषजेभ्यः स किलागूढं तस्य वधं व्यधात् । योदूत्यच्छलतोराज्ञा स्वदेशान्निरवास्यत ।
राज्ञः चैन्यवधूत्स्कादिस्थानेऽसौ भिधे पुरे । प्रत्यागतः सतीर्थाध्वखिन्नो विन्नो दिवं ययौ ।
राज्ञोधर्म्माधिकारेषु प्रत्यवेक्षापरः सदा । महाश्रीशिवभट्टोऽपि तस्मिन् काले दिवं ययौ । ९०५
गतेष्वप्येषु धर्म्मोऽस्य राज्ञो नैवाल्पतां गतः । क्ष्मां दधानस्य शेषस्य दिग्गजाहि परिच्छदः ।
एकाकएव दीनारकोटिरेका महीभुजा । बालेभ्यएव दत्तासीत् जय्यभट्टमुखेन यत् ।
अद्भुतानां पदार्थानां तद्राज्ये संग्रहोऽभवत् । नारायणावतारोयज्जायते कथमन्यथा ।
येषां हिमांशुपीयूषप्रवाहा नित्यभिषवः । इत्यवस्तेन मार्त्तण्डदेशभूमिषु रोपिताः ।
त्यजता योगमाहात्म्यादल्पोपस्थितविक्रियां । श्रीजैनोल्लाभदीनेन विबुधत्वं प्रकाशितं । ९८०
तदीयसत्यसम्पत्तेरुपमावकरीं व्यधात् । · · ज · · इत्यदस्य चिन्तुं भारोसगामिनीं ।

इति श्रीजोनराजकृतौ द्वितीया राजतरङ्गिणी सम्पूर्णा ॥

---

## ॥ अथ श्रीवरपण्डितकृता तृतीया जैनराजतरङ्गिणी ॥

### प्रथम तरङ्गः ।



शिवायास्तु नमस्तस्मै सत्त्रैलोक्यमहीभुजे । अशेषक्लेशनिर्मुक्तनित्यैश्वर्य्यदशाजुषे ।
प्रेम्णार्द्धं वपुषो विलोक्य मिलितं देव्या समं स्वामिनो मौलौ यस्य निशापतिर्गगनसुतावेणीनिशाशिश्रितः ।
आस्ते स्वाम्यनुवर्त्तनार्थमिव तत्कृत्वा वपुः खण्डितं देयाद्द्वयभावनां स भगवान् देवोऽर्द्धनारीश्वरः ।
वन्द्यास्ते राजकवयः पदन्यासमनोहराः । ख्याता ये सरसैः शब्दैः क्षीरनीरविवेकिनः ।
अनित्यतान्धकारेऽस्मिन् स्वामिशून्ये महीतले । काव्यदीपं विना कः स्याद्भूतवस्तुप्रकाशकः ।
येषां करोमि वपुरस्थिरमत्र राज्ञां तेषामयं जगति कीर्त्तिमयं शरीरं ।
आकल्पवर्त्ति कुरुते किमितीव रोषाद्धाताहरद्ध्रुवमतः कविजोनराजं । ५
श्रीजोनराजविबुधः कुर्व्वन् राजतरङ्गिणीं । शायकाग्निमिते वर्षे शिवसायुज्यमासदत् ।
शिष्योऽस्य जोनराजस्य सोऽहं श्रीवरपण्डितः । राजावलीग्रन्थशेषापूरणं कर्त्तुमुद्यतः ।
क्व काव्यं सद्गुरोस्तस्य क्व च मन्दमतेर्मम । वर्णमात्रेण मत्कोलं घनसारायते कथं ।
राजवृत्तानुरोधेन न काव्यगुणवाञ्छया । सन्तः शृण्वन्तु सद्दोषाः स्वधिया योजयन्तु च ।
अथवा नृपवृत्तान्तस्मृतिहेतुरयं श्रमः । क्रियते ललितं काव्यं कुर्व्वन्त्वन्येऽपि पण्डिताः । १०
तत्तद्गुणगणादानात् स्वसम्पत्तिसमर्पणात् । पुत्त्रवद्वर्द्धितो राज्ञा ग्रामहेमाद्यनुग्रहैः ।
अतो वाञ्छन्नमेयस्य तत्प्रसादस्य निष्कृतिं । सोऽहं ब्रवीमि तद्वृत्तं तद्गुणाकृष्टमानसः ।
एकया तद्गुणाख्यानं जिह्वया वर्ण्यते कियत् । रोमवत् कोटिशश्चेत् स्युस्तास्तदा मद्गिरः क्षमाः ।
सत्यं नृपाम्बरेऽमुष्मिन्विपुले विमलाशये । गुणतारापरिच्छेदे न शक्ता भारती मम ।
तथापि सकलं चित्रपटान्ते त्रिजगत् यथा । श्रीजैनोल्लाभदीनस्य न्यस्यामि गुणवर्णनं । १५
केनापि हेतुना तेन प्रोक्तं सद्गुरुणा न यत् । तत्क्षेपवर्त्तिनीं वाणीं करिष्यामि यथामति ।
सात्मजस्य नृपस्यास्य प्राप्यते राज्यवर्णनात् । प्रतिष्ठादानसन्मानविधानगुणनिष्कृतिः ।
स्वदृग्दृष्टस्मृतानेकविपद्विभवसंसृतेः । सृते कस्य न वैराग्यं नाम जैनतरङ्गिणी ।

श्रीजैनोल्लाभदीनः स हत्वा शत्रून्दिगन्तरे। आगत्य पैतृके देशे राज्यं राम इवासदत्।
हतावशिष्टां कोषेभ्यः स्वप्रबन्धोपयोगिनीं। नानापदार्थसामग्रीं राजा कविरिवाचिनोत्। २०
तद्राज्यमालिशाहस्य राज्यकालादनन्तरं। अप्राथि कैर्न ग्रीष्मान्ते मरौ श्रीखण्डलेपनं।
धर्म्मराजोपमात्तस्मात्तास्ता नरकयातनाः। अपराधानुसारेण याताः केचिद्विषोऽभजन्।
योद्रव्यगुणसत्कर्म्मसमवायविशेषभृत्। असामान्योऽप्यधाच्चित्रं नानार्थपरिपूर्णतां।
नेत्रोज्ज्वले लसद्भ्रूम्यैशब्दाढ्ये कमलार्च्चिते। यस्य श्रीरवसन्नित्यं वदने सदनेऽपि च।
बङ्गालमालवाभेरीगौडकर्णाटदेशगा। यत्कीर्तीरागमालेव बभूवामृतवर्षिणी। २५
भास्वान् राजा सदाचारो बुधः सुधिषणो महान्। अधादिश्वग्रहाख्यातिमासन्नस्य ग्रहोचितां।
यं सम्प्राप्य गुणाः सर्व्वेऽप्यलभन्नधिकां श्रियं। रात्रौ कुमुदवृन्दानि चिन्तामणिमिवोडुपं।
षड्दर्शनक्रिया यस्य वृत्तं समन्वरञ्जयन्। सुमनोरञ्जिताह्लादा ऋतवो नन्दनं यथा।
त्रिवर्गं प्रोज्ज्वलं दृष्ट्वा यस्मिंस्तद्रसिका इव। अवसन्नक्रयस्तिस्रः सममेकमता इव।
भूपेऽर्थैः पूरयत्यर्थिसार्थं पार्थोपमेऽन्वहं। आक्रान्नार्थमिवैतस्य यशः सर्व्वदिशोऽगमत्। ३०
शिल्पिनो विश्वकर्म्माणं गोरचं योगिनां गणाः। अवतीर्णं रसज्ञा यं नागार्जुनमिवाविदन्।
तस्याग्रे योग्यतादर्शि यैः शिल्पकविकौशलात्। तथा प्रसादमकरोत्तत्पुरास्ते यथाभवन्।
काव्यशास्त्रश्रुतैर्गीतनृत्यतन्त्रीचमत्कृतैः। आजीवमनयत् कालं कार्य्यानुद्विग्नमानसः।
न्याय्यं कुर्व्वन्ति शास्त्रज्ञाः कार्य्यभारं सुधीरतः। तेभ्यः चिन्ता च स्वे धर्म्मे तिष्ठतेत्येवमभ्यधात्।
अवार्य्यवेगैः सततमाशुगैर्य्यस्य ताडिताः। आमन्वनद्दिगन्तेषु मशका इव शत्रवः। ३५
तस्य स्वपरवृत्तान्तं नित्यमन्विष्य तच्चरैः। केवलं स्वप्नवृत्तान्तो बभूवाविदितो विशाम्।
गृहं गृहस्थवृत्तस्य ध्यायतो नीतिशालिनः। अन्यायान्नाशकद्दत्तुं काकिनीमपि कश्चन।
आदिश्य हर्म्यैर्व्वासव्याजक्रूपचादीन् स तस्करान्। मृत्कर्म्माकारयदङ्कपादायःशृङ्खलान्बलात्।
न कः प्रवर्त्तते चौर्य्ये नीचो वृत्तिकदर्थितः। इति कारुणिको राजा तेभ्यो वृत्तिमकल्पयत्।
चक्रादीन् क्रमराज्यस्थान् दुष्टान् ज्ञात्वा स तद्ध्रुवं। हृत्वा मडवराज्यान्तर्दत्तवृत्तीन् न्यवेशयत्। ४०
तस्करोपद्रवे राज्ञा नीत्यैव शमिते सुखं। गृहेष्विवाटवीष्वन्तः पथिकाः शेरते स्म हि।
सत्त्वाप्रकृतिमध्यस्थोऽनित्यसर्व्वाङ्गवर्द्धनः। स्वतन्त्रवृत्तिर्भूपालोऽरेमे नानापुरेषु सः।
मन्देहानहितान्निवार्य्य च भजन् पूर्व्वाचलाग्रोदयं यो नित्यं कमलाकरेषु रसिको बिभ्रत् प्रतापोच्चयं।
सङ्कोचं कुमुदाशयेषु रचयन् पद्माकरोत्पूजितः शस्यः कस्य न दत्तलोकमहिमा भास्वान् यशस्वी विभुः।
धात्रेयाष्टक्कुरराज्ञो विभवश्रीमदोद्धताः। विस्फूर्त्तिहारिणोऽस्यासन् गजा इव निरङ्कुशाः।
श्रीमेरठक्कुरो ज्येष्ठः प्राड्विवेकपदोज्ज्वलः। तेषां मसुलवृद्धोऽपि बभौ ग्रन्थगुणोज्ज्वलः। ४५
कष्टेन काष्ठवाटं स प्राशोवटपथान्ततः। हिमान्यन्तरदग्धाङ्घ्रिर्हिमान्यन्तरमासदत्।
स्थित्वा माणिक्यदेवाग्रे समुद्रस्यान्तरे चिरात्। चिकदेशं ततः प्राप किञ्चित्प्राप्तपरिच्छदः।

तद्देशकालविषमावस्थाशतहतोऽपि सन्। स तत्र प्रेष्यवत् सैदपादशौचं समाप्तदत् ।
उद्गन्धतामथोत्पन्नस्फोटवैकृतशान्तये । वैद्यैर्व्वरत्वाबद्धैकपादोऽभूज्जीवितावधि ।
तत्रोपायान् बहून् कुर्व्वन् स्वदेशविभवाप्तये। यथाकथञ्चित्तत्रस्थः पञ्चाशः सोऽत्यगात्समाः। ५०

अतःपरं किञ्चिद्भूम्यचरितं कालवशाच्छ्रुतं ।

स सिन्धुहिन्दुवाडादिदेशान् जित्वा वहिः स्थितान्। प्रतस्थे भुट्टदेशं स जेतुं सकटको नृपः ।
वनमध्ये प्रविश्यैव नरकं कालपञ्जरं । भित्तिस्थदीपमात्रे ते पश्यन्ति स्म सकौतुकं ।
तपस्तप्त्वा चिरं प्राप्य योगसिद्धिमसौ नृपः । फणीव कञ्चुकं पूर्व्वगुहायामत्यजत्तनुं।
इत्याकर्ण्य निनोऽन्ये वा ये बुद्धा सत्वमूर्च्छितं। तेषां प्रामाण्यमकरोत्स राजा च सविस्मयं ।
ध्रुवं महानुभावत्वं विना व्यवहितं नृपः। जानीयात्कथमित्याह विद्वज्जनउदारधीः । इत्युपोद्घातः । ५५

अथ राज्यवर्णनं ।

ज्येष्ठमादमखानञ्च हाज्यखानञ्च मध्यमं। वहामखानमनुजं पार्थिवोऽजीजनत्सुतान्।
ज्येष्ठा लावण्यसौभाग्यसुभगैः प्राकृतैर्गुणैः । जनकं रञ्जयामास चन्द्रमाइव वारिधिं।
प्रत्यहं हाज्यखानः स कर्पूरइव सौरभैः । वाललीलायितैस्तैस्तैः स्वमुदात्तमजिज्ञपत् ।
तौ सुतौ सम्मतौ पित्रोरचणायार्पिपन्नृपः । स्वधात्रेयतया स्वस्योदयोष्ठक्कुरपत्तयोः ।
स्वपचस्थापनादत्ताः परपचेष्टखण्डनाः । तार्किकाइव तेऽन्योन्यं धात्रेयाष्ठक्कुराबभुः । ६०
सौदर्य्यस्नेहवृक्षस्य मूलच्छेदनकारिणः । तेऽन्योन्यगोत्रजद्वेषात्तयोरासन् समत्सराः ।
राजपुत्रास्त्रयस्तस्य गुणातिशयसुन्दराः। तत्कृतान्योन्यवैरेण समं वृद्धिं समाययुः ।
देहसमादिशोऽयं तस्यात्मसमोमहीपालः। तस्मिन् ससुखे सुखितो दुःखिनि तस्मिन् सदुःखोऽसौ ।
अन्योन्यं सरूपोराजपुत्रयोर्भिन्निदुर्णयात् । अभूज्ज्येष्ठकनिष्ठत्व प्रक्रियारहितं तयोः ।
श्रुत्वाथ पुत्रयोर्व्वैरमन्योन्यं जातु भूपतिः । आह स्मादमखानं स विदेशगमनत्वरां । ६५
युक्तमुक्तं न रक्षामि कुपुत्र यदि सद्वचः। मानप्राणधनध्वंसी प्रत्यूहस्तेऽन्यथाब्रवीत् ।
श्रुत्वेति पितृसन्देशं स भृत्यानब्रवीद्दरं । तत्पर्णोत्समथायामः सुखं तत्रैव नः सदा ।
अथोचुस्ते तव भ्राता दाता जातोऽत्युदारधीः। स्वलक्ष्मीं भृत्यसात्कर्त्तुं स चमो न भवान् कचित् ।
वरं मरणमेवास्तु तदर्थं नोऽद्य सेवया । विक्रमादिगुणैर्हीनं स त्वामेवं भजामहे।
अग्रजानुजयोराजपुत्रयोः सुखदुःखयोः । विपर्य्ययं व्यधाद्वेधाः प्रमातेव विभागिनोः । ७०
अथाशङ्क्य नृपः पापं तद्वधात्कतिचिद्दिनैः । वहिर्निष्काशयामास भट्टमार्गेण तं सुतं ।
वज्रवाणप्रकारांश्च शिल्पिनः समदर्शयन् । यभ्योऽश्रावि ध्वनिर्धीरलोकहृत्कम्पकारकः।
तद्यन्त्रभाण्डभेदांश्च तत्तज्ज्ञातुमथाप्नवान् । आनीतवान्नरपतिः संहतान् शिल्पिनिर्म्मितान्।
प्रशास्तिः क्रियतां यन्त्रभाण्डेष्विति नृपाज्ञया । मयैव रचितास्श्लोकान् प्रसङ्गात्कथयाम्यहं।
यदनुग्रहेण राज्ञा समयो लीलाविलाससमयः । समयश्च यन्त्रतन्त्रैः स्थिराम्प्रतिष्ठां क्रियात्ससमयः । ७५

रसवसुशिखिचन्द्राङ्के शाके नाकेशविश्रुतो राजा। श्रीजैनोल्लाभदीनः कश्मीरान् पालयन् विजयी।
वर्षे शशिवेदाङ्के निर्म्मितवान् यन्त्रभाण्डमिदं। तदिति मौसुलभाषाख्यातं लोके च तत्काण्डमिति।
दुर्गेषु दुर्गतिपरं कृतस्फोटकरं तुरङ्गदस्तदरं। दूरोन्मुक्ताश्मशरं कटकबलान्यदुष्टचरं।
सारं सुरीतिबद्धं घनघोषं शिल्पिकल्पितमहार्घम्। नवमिव नगरं नृपतेः कस्य स्याद्यन्त्रभाण्डमिदं।
धातुविभक्तिस्काराल्पदप्रवृत्त्या प्रयोजिते शब्दे। अर्थोपलब्धिहेतोर्भवत्विदं वृद्धिगुणयुक्ता। ८०
इति पद्याङ्किता यन्त्रभाण्डाली व्यरुचत्तदा। यद्घोषध्वनिसंङ्के मेघगर्ज्जिततर्ज्जनं।
कालेनादमखानेऽथ भुट्टाञ्जित्वा समागते। हाज्यखानोऽकरोत् यात्रां लोहराद्रौ नृपाज्ञया।
कथं हि छुरिकायुग्ममेककम्बुनि स्थाप्यते। इति ज्ञात्वा सुतौ राज्ञा कारितौ निर्गमागमं।
जनकस्यान्तिके स्नानपानलीलोत्सवादिकं। आदमखानः सत्राणो विदधेऽनुदिनं ततः।

दृष्ट्वा सतीसरसि येन सुखस्थितिः सा भीतः स यद्यपि गतो घनकालदोषात्।

यावन्न नाशमुपयाति किरातघातैस्तावत् कथं तदवमुञ्चति राजहंसः। ८५

अथाष्टाविंशवर्षेऽपि रात्रजलवलादिभिः। हतोरितोऽकरोत् खानः कश्मीरागमनस्पृहां।
स्वामिंस्तदग्रजीयास्ते कश्मीरसुखभागिनः। क्लिश्यामः परदेशेऽत्र वयमेव गृहोज्झिताः।
राजानकप्रतीहारमार्गेशकुलजादयः। अस्मत्प्रतीक्षिणः सर्व्वे तत्र वीरा बलोद्धताः।
यद्यप्यवचनग्राही भूभुजो निस्थितो भवान्। तावत्तैव स किं क्रुद्धो हन्त्यस्मान् करुणापरः।
युद्धायादमखानस्य निर्यातः स्वबलान्वितः। त्वत्तः स नश्यति क्षिप्रं श्येनाग्राद्दिव पोतकः। ९०
अमी राजपुरीयाद्याः सर्व्वेऽस्मच्छुभकाङ्क्षिणः। तत्तेनैवाधुना यामोन किं सिद्ध्यति साहसात्।
मृतेऽरिगप्रतीहारे वीराः के सन्ति तत्पुरे। इति त्वत्पैतृकपदं हर्त्तुं गन्तुं तवोचितं।
शिष्यास्तेऽमी वयं भृत्यावीरास्तत्पैतृकैः सह। योत्स्यामः कीदृशं शौर्य्यमेकदा द्रष्टुमर्हसि।
तथेत्युक्त्वाथ खानेन पृष्टो तन्मन्त्रिणो मतं। सफिर्य्यडामरस्ताजलन्दोशस्तेत्यत्रोचतां।
देव त्वत्सेवकाः सर्व्वे स्वगृहोत्कण्ठिताशयाः। देशकालावनालोच्य कथयन्त्यसुखप्रदं। ९५
कथमभ्यन्तरं यामः सति राज्ञि बलोर्ज्जिते। प्रदीप्तं व्योम्नि मार्त्तण्डं कुण्डेन पिदधाति कः।
यावज्जीवति भूपालस्तावत् कोवाधितुं क्षमः। मनोऽनुवर्त्तनं कर्त्तुं तद्युक्तं तव साम्प्रतं।
प्रसन्ने जनकेऽस्माकं भवेयुः का न सम्पदः। ईश्वरे च गुरौ भक्तिर्जायते पुण्यकर्म्मणां।
अस्य कोपेन यत्साध्यं परानुग्रहतोऽनु तत्। दुर्द्दिने या रवेर्दीप्तिः प्रदीपाज्ज्वलतो न सा।
खलोक्तिश्वासमालिन्यं सततं नयसेविनः। हृदयादर्शवैषद्यात्संसक्तं नास्य दृश्यते। १००
निर्व्वाणगोष्ठीनिष्ठस्य तदच्छास्त्रविवेकिनः। कृपास्नेहस्य नो किञ्चित् कृत्यमस्त्यसुखप्रदं।
तद्दुग्धपित्तपक्षेऽपि स्वामिभक्तिं न सोऽत्यजत्। तेनैवान्तक्षणः श्लाघ्यस्तस्याभूत् जैनभूपवत्।
सौहार्दमार्दवोपेता योग्या कार्य्यविचक्षणा। जाने तेनैव पुण्येन सन्ततिस्तस्य राजते।
स पिता त्वं सुतस्तस्य वयं सर्व्वे स्वसेवकाः। गत्वा चेत् कुर्म्महे युद्धं जयोऽस्माकं भवेत् कथं।

हताश्चेत् केऽपि तद्भृत्या बहुभृत्यस्य का क्षतिः। एकपत्रक्षये किं स्यात् गरुडस्य गवान्यता। १०५
न शिवाशकुनाः सन्ति देशाः पर्व्वतदुर्गमाः। तत्रापि जनकस्तेऽस्माकं कालोविग्रहस्य नः।
भजत्वभ्यन्तरं राजा वयं वाह्यं भजामहे। तत्प्रमादादिहैवास्तां राज्यं छत्रं विना न किं।
ते चेद्युद्धार्थमेष्यन्ति न जेष्यन्त्यस्मदन्तिकात्। वयञ्चेदन्तरं यामो न जेष्यामः कदाचन।
इति दर्पात् स श्रुत्वापि खानः शूरपुराध्वना। अगाद्राजपुरीं त्यक्त्वा कश्मीरान् पिशुनेरितः।
अस्मिन्नवसरे श्रुत्वा स्वपुत्रं सहसागतं। गृहीत्वा स्वबलं तूर्णं नगरान्निरगान्नृपः। ११०
गच्छन् सकटको राजा मरणे कृतनिश्चयः। सदुःखो निश्वसन् श्लोकमिममेकमपाठयत्।
राज्येऽपि हि महत्कष्टं सन्धिविग्रहचिन्तया। पुत्रादपि भयं यत्र तत्र सौख्यस्य का कथा।
अधर्म्मशङ्का दूरेऽस्तु युद्धे जनकपीडया। वैधेयातिविधेयेन येन खेदोऽपि विस्मृत.।
त्वयि कुर्व्वति साम्राज्यं यः खेदाय समागतः। स यातु सबलः शीघ्रं त्वदीर्य्याग्निपतङ्गतां।
त्वमेवाकण्टकं राज्यं कृत्वा धर्म्मक्रिया भजन्। वैरिणो विमुखा यान्तु रणे लब्धपराभवाः। ११५
ग्रामेष्वित्यधिकास्तास्ताः शृण्वञ्जनपदाशिषः। प्रापत् सकटको राजा स सुप्रग्रामनामिधं।
अथ पर्णशिलास्थाने पितापुत्रबलद्वये। सन्नद्धे नृपतिर्दूतं विप्रमेकं व्यसर्ज्जयत्।
स गत्वा नृपमन्देशमब्रवीदिति निर्भयः। किं वक्षीति क्षणं क्रुद्धैस्तत्त्वज्ञैः परिवेष्टितः।
राजपुत्र महावाहो दाक्षिण्यामृतसागर। शृणु पित्रा समादिष्टं यत्तत् सर्व्वं ब्रवीमि ते।
फलं संसारवृक्षस्य लाभोऽमुत्र परत्र च। पित्रोर्नेत्रोत्सवो नित्यं पुत्रः केनाम निन्द्यते। १२०
सर्व्वैः सञ्चिनुते सर्व्वं पुत्रार्थं प्रयतो यतः। वार्द्धके वचनग्राही भवेत् पितृसुखप्रदः।
इत्थं लोकद्वयं स्थित्या त्वयि जाते सुते मम। दूरे सर्व्वसुखाशास्तु चिन्ता प्रत्युत वर्द्धिता।
त्वत्कृतोद्वर्ज्जनाश्वासोनिःश्वासोयद्दवास्म्यहं। मलिनीकुरुते शुद्धं मद्राज्यं मुकुरोपमं
जीवनाशोद्यता ये मे त्वमन्युक्तृङ्खलाः खशाः। सुचिरं नैव तिष्ठन्ति सरसस्मारसा इव।
मदादेशं विना देशं किमर्थं स्वपमागतः। केन राज्यं बलात् प्राप्तं निजभाग्योदयं विना। १२५
वाह्यदेशावनिः सर्व्वा भुज्यते तृप्यसे न किं। येन मण्डलमात्रं मेऽवशिष्टं हर्त्तुमागतः।
तन्निवर्त्तस्व मा पुत्र पापबुद्धिं वृथा कृथा। बलद्वयबधात् पापं तवैतत् परिणेष्यति।
इत्युक्तिः पैतृकी प्रोक्ता किन्तु सत्यमहं ब्रुवे। नश्यन्ति भूपाः शैथिल्यात् त्वद्भटाश्चटका इव।
इति हृद्यावरामुक्तिं श्रुत्वा विप्रस्य ते भटाः। छित्वा कर्णौ व्यधुरक्ता दायादेषु विशेषकान्।
तं दृष्ट्वा हाज्यखानोऽथ सत्रपः पितुरागमत्। अभिमन्युप्रतीहारमुख्यानाख्यदिदं वचः। १३०
वरं पादप्रणामार्थं पितुर्य्यास्यम्यतोबलात्। भूपस्तुष्टोऽथ रुष्टो वा यत् करोतु करोतु तत्।
सर्व्वथा तातपादा मे सेव्या रक्षेत् स नो ध्रुवं। तस्मात् कुरुत युद्धेऽस्मिन् संरम्भं चेन्मतं मम।
किन्तु स्वप्नेऽपि भूपाय नानिष्टं चिन्तयाम्यहं। योमे देवाधिकः पूज्योलोकद्वयसुखप्रदः।
अयं जोऽग्रे समायाति रणायायाति नो नृपः। इत्युक्तं तेन संप्राप्तो नाहं पितृवधोद्यतः।

श्रुत्वेति मन्त्रिणस्तावत्त्रिपथ्यादयस्ततः। तत्पुरक्षालबल्लाया निष्ठुरं तेऽब्रुवन्निति। १३५
यदोक्तं समयेऽनायं याम इत्यवधीरितं। आरब्धस्यान्तगमनं तद्युक्तमधुना तव।
यूयं चेत् जातसौहार्दा मार्दवानन्दितापराः। वयमेव हताः कष्टं क्लिष्टास्त्वत्सेवनाशया।
भवेत् सन्तप्तयोः सन्धिर्नित्यं तैलकटाहयोः। तदन्तः पूरणी क्षिप्ता सैव दन्दह्यते क्षणात्।
भवान् स्वामी वयं दासाः पौरुषं पश्य साम्प्रतं। जयश्चेत्तव राज्याप्तिर्नष्टो याहि यथागतं।
यावत् युद्धं करिष्यामस्तावदेव विलम्ब्यतां। हतेष्वस्मासु कर्त्तव्यं यत्पुनस्तत् समाचर। १४०
अस्मदुक्तं न गृह्णासि यदि त्वं पितृवञ्चितः। त्वय्येवानुचितं कृत्वा पुनर्यामो दिगन्तरं।
इति निर्भत्सनावाक्यजातभीतिर्नृपात्मजः। ततश्चिन्तार्णवे मग्नो युद्धश्रद्धामगाहत।
अत्रान्तरे द्विजं तादृगवस्थं वीक्ष्य भूपतिः। मुरारातिरिव क्रुद्धो युद्धसन्नद्धतां दधे।
शुक्रयोगजनामर्षपरीक्षणविचक्षणः। स्वपक्षरक्षणं क्ष्मापः पृष्ठीकृतरविर्व्यधात्।
राज्ञः पृष्ठगतः सूर्य्यः खड्गान्तःप्रतिबिम्बितः। जयस्ते भवितेत्येव वक्तुं व्योम्नोऽवतीर्णवान्। १४५
कियन्तोऽमी इति यावत् सोऽचिन्तयत्तावदग्रतः। अर्कदीप्तिज्वलच्छस्त्रद्युतिद्योतितभूतलं।
निर्यत्सन्नाहिभोद्योगपतद्भटतुरङ्गमं। गणशोगणशोऽधावत् तत्सैन्यं समवैक्षत।
कोऽन्यो वीरो हाज्यखानाद्योऽरामा वायजेन वा। गृहीतसर्व्वसैन्येन धैर्य्यात् कष्टमशक्यत।
तत्र मल्लशिलारङ्गसङ्गतास्तद्भटा भटाः। वङ्गदङ्गविहङ्गानां नाट्यभङ्गिमदर्शयन्।
ववर्ष शरधाराभिः स भूपकटकाम्बुदः। स्फुरच्छस्त्रतडिज्ज्योतिस्तूर्य्यगम्भीरगर्ज्जितः। १५०
अन्योन्यमिलिताः कांस्यघनवत्कठिनाघनाः। अन्योन्याघातसहना नदन्तः संहता बभुः।
भटा नयन्ति मां युद्धे मां मा ताडयत द्रुतं। इतीव तारं दध्वान स्वामस्यानकदुन्दुभिः।
पूर्व्वं मया प्रतीहारमुख्या गुरुलघूर्ज्जिताः। रणे फलतया दृष्टा रवर्ष्टेत्तैर्घना इव।
ततो भूपबलात् क्रुद्धौ धांत्रयौ भूपतेर्हितौ। ठक्कुरौ निरगातान्तौ वीरौ हस्सनहोस्सनौ।
सुवर्णसोहमयाद्या राजपुत्त्रा रणाध्वरे। शस्त्रज्वालावलीलीढे जुहुवुः श्रीफलं वपुः। १५५
ते वीरभ्रमरास्तत्र रणोद्याने तदाभ्रमन्। स्वामिमाधवसान्निध्याद्यशःकुसुमलम्पटाः।
ते वीरमस्तकच्छिन्ना रणभूभाजने स्फुटं। क्षुत्तप्तस्य कृतान्तस्य कवला इव रेजिरे।
रणतूर्य्यस्वनैस्तैस्तैर्जनकोलाहलैस्तथा। वीराणां सिंहनादैश्च शब्दाद्वैतमजायत।

तच्छुद्धये क्षणमिवेक्ष्य नृपप्रसादं प्राप्ते क्षणे जहति ये निजजीविताशां।
तत्तद्दिहस्तपरिरक्षणधर्म्मलब्धा धन्यास्त एव कतिचिन्नृपसेवकेभ्यः।

राजापादागतास्तीक्ष्णाः शरास्तत्पक्षपातिनः। स्वयं पाहीति भीत्येव स्खलन्तः समचोदयन्। १६०
ध्वजपलाशला राजसुतस्यापि तु वायुना। सकम्पा रणभीत्येव पश्चाद्भागमशिश्रयन्।
शस्त्रकृत्तस्फुरद्वीरशिरःकमलनिर्भरा। जीवनाशा चलत्पत्रा नलिनी रणभूरभूत्।
शौर्य्यमत्यद्भुतं दृष्ट्वा सूनोस्तत्कटकस्य च। पुनर्जातमिवात्मानं रणोत्तीर्णं नृपोऽविदत्।

कृत्वा सर्व्वदिनं युद्धं बलाद्भृत्यैर्निवारितः । हाज्यखानः सविस्त्राणः समरात् स न्यवर्त्तत ।
भग्नं निजानुजं दृष्ट्वा पश्चात्तस्मो विविग्नधीः । अग्रजोऽयावधीत्सग्रान् सग्रांस्तासार्णवे भटान् । ९५
किमुच्यते नृशंसत्वं येन शूरपुरान्तरे । अन्यथा त्वागतोमोहान्निहतः पथिकव्रजः ।
यस्यां मन्दप्रभो भास्वान् गणैः सर्व्वैर्व्विलोकितः । दक्षिणस्यादिशस्तस्याः प्रवासी स नृपोऽभवत् ।
दुर्य्योधनार्पितरमा गुरुशल्यविष्टा भीष्मप्रिया परहतिं प्रति दत्तकर्णैः ।
ये धर्मजातिविमनस्कतया कृपेच्छास्ते कौरवाइव रणे न जयं लभन्ते ।
अन्येद्युर्हतशिष्टांस्तान् भृत्यानानीय पूर्व्ववत् । हाज्यखानः सानुतापश्चिरदेशे स्थितिं व्यधात् ।
खिन्नानाश्वासयन् कांश्चित् सच्छिन्नान् प्रतिपालयन् । अर्च्चयन् सुधया क्षीणान्सगाये सोऽनयन्निशां । १००
मा वाधिष्ट सुतं कश्चित् मत्परो वातिविह्वलः । इति कारुणिको राजा न्यवर्त्तत रणात् द्रुतं ।
आसिध्ये सुखितः सुतार्पितभरोवृद्धेति दत्तानिजा राष्ट्रेशावरसेवकाः सतुरगाः सम्बर्द्धिता ये मया ।
तेऽमी राज्यजिहीर्षवः सुतरता युद्धाय सम्यागता धिङ्मां येन नयोज्झितेन घृणयानर्थः स्वयं स्वीकृतः ।
इत्यादि विमृषन् राजा स्वपुरं दुःखितोऽगमत् । विरोधादायिनो निन्दन् सेवकान् विधिकर्म्मणा ।
सङ्ग्रामसृतवीरेन्द्रच्छिन्नमस्तकपङ्क्तिभिः । आनीय राजा नगरे सुखागारमकारयत् ।
इत्थं सेवकपैशुन्यात् पितापुत्त्रविरोधतः । समरे तत्र तद्वर्षे वीरलोकक्षयोऽभवत् । १०५
राज्यस्थितिप्रविकसन्नलिनीहिमौघोलोकक्षयोचितमहाभयधूमकेतुः ।
विप्रप्रसक्तकवलघनिशान्धकारः शापः सुखस्य नृपतेः स्वजनैर्व्विरोधः ।
श्रीमानसिंहनृपते तव नामवर्णाः पञ्चेषुपञ्चविशिखन्ति नितम्बिनीषु ।
प्राणन्ति बन्धुषु विरोधिषु पाण्डवन्ति देवद्रुमन्ति कविपण्डितमण्डलेषु ।
इति पण्डितश्रीवररचितजैनराजतरङ्गिण्यां सम्भ्रिनायुद्धवर्णनं नाम प्रथमः सर्गः ॥
भूभृतोनिर्गता प्रेमसरित् प्रोत्तानुजस्थलात् । प्रत्यावृत्ता कियत् कालं शुद्धायजमशिश्रियत् ।
यत्स्नेहभागी सुदशाभिरामोभाति प्रदीपः समुपास्य पात्रं । आशाप्रकाशैकनिधिस्तदाराद्सन्निधानेन विरोचनस्य ।
इदावादमखानाय सायकः स चिरेस्तदा । प्रसेयान् क्रमराज्यस्याननुजोयाच्चिरागतः । ११०
जगृहे स च वित्तौघं गृहग्रामादिदैवतं । हाज्यै हैधरखानीयं पानीयमिव वाडवः ।
ततः प्रभृति ज्येष्ठस्य कश्मीरान्तर्नृपाग्रगः । यौवराज्ये सुखं तद्भुजे पञ्चशः समाः ।
येषां सुखं वितनुते विधिरत्नवृष्ट्या दुर्भिक्षदुःखमपि सन्तनुते स तेषां ।
वृष्ट्या विवर्द्धयति यानि तृणानि सेधस्तान्येव शोषयति भावि तुषारभारात् ।
सर्व्वशस्यसमृद्धेऽस्मिन् देशे षट्त्रिंशवत्सरे । अकस्मादभवच्चैत्रे गगणात् पांशुवर्षणं ।
बभूव वर्षः षट्त्रिंशः सर्व्ववृष्णिकुलक्षयात् । भयकृत् सर्व्वजन्तूनां भारतादिति विश्रुतं । ११५
अभवन् पत्रपुष्पौघधूलिधूसरताननाः । भाविदुर्भिक्षरौद्रार्त्तजनचिन्तावशादिव ।
भविता वत्सरेऽमुष्मिन् दुर्भिक्षं पांशुवर्षणात् । इत्याख्यन्नुत्तरं पृष्टा भूभुजा दैववित्तमाः ।

षट्त्रिंशे वत्सरेऽतीते दुर्भिक्षातिप्रदोऽभवत् । एषमस्मादृशः प्राप्तो भीतिरित्युदभूद्धृदि ।
पपात मार्गशीर्षेऽथ मास्युपद्रवदर्शनं । देशेऽत्र विलसच्छालिमालि प्रालेयवर्षणं ।
दुर्भिक्षदुस्थितं लोकं कथं पश्यामि साम्प्रतं । इतीव भूरभूच्छन्नमुखी हिमसितांशुके । १९०
छादिताः शालयः पक्का हिमैर्जनमनोहराः । खलमूर्खसभामध्ये पण्डिताः सगुणा इव ।
क्षुद्व्यावेगाद्बुभुक्षार्त्ताः क्षपिताक्षः क्षणे क्षणे । आशु दुर्भिक्षयक्षोऽत्र व्यधात् प्रक्षीणलक्षणं ।
प्रविश्य रात्रौ गेहान्तः क्षुद्बक्ष्योऽत्रापीडितः । हिरण्यादि धनं त्यक्त्वा भाण्डेभ्योऽन्नमपाहरत् ।
सर्व्वस्मिन् दिवसे रात्रावपि भिक्षुपरम्पराः । शराइवाविशन् देहे गेहे धान्यवहे तदा ।
धान्यवदृष्टसन्दिष्टकष्टकम्बुकदम्बकाः । नीरसापूपभोगेनाप्यरक्षन् केऽपि जीवितं । १९५
पालीपालीवताशक्तकष्टकटङ्कितभाजनः । चिराच्चिरास्वादरतः कोऽपि कोऽपि हतोऽभवत् ।
क्षीणा ग्रामेषु वास्तव्याः केचिदन्नाप्तताप्तये । शाकमूलफलाहारा व्रतनिष्ठा इवाभवन् ।
चिराजाङ्कान्तरे क्षिप्त्वा शाकं किमपि तण्डुलं । पक्त्वाऽन्ये केऽपि तद्भोगादकुर्व्वन् प्राणधारणं ।
सर्पिर्लवणतैलानां तण्डुलेन महार्घता । कृता नीचेन साधूनामिव सर्व्वोपयोगिनां ।
बहुधान्यकथानिष्ठो योऽभूत्पूर्व्वं पुरान्तरे । बहुधान्यकथानिष्ठस्तत्कालं स व्यलोक्यत । २००
बन्धुजीवस्तदाकन्दो बन्धुजीवइवाभवत् । मन्दान् मन्दारयामास क्षुधान्धान् योऽन्धसा विना ।
धान्यखारः कृतः पूर्व्वं दीनाराणां शतत्रयं । दुर्भिक्षे न तदा सार्द्धसहस्रेणापि नापि सः ।
किमन्यत्कुत्रचिद्राष्ट्रे धात्रा निष्किञ्चभोजनः । अभरन्माण्डकुण्डस्य काञ्चिकेनापि वञ्चितः ।
यत्पूर्व्वमकरोद्दीनां रसवद्ब्रीहिशालिषु । मन्ये तेनैव शापेन भयमापत्प्रजेदृशं ।
करुणाकुलितो राजा स्वधान्यैः पुष्यत् प्रजाः । पोषयामास मासेषु केषुचिद्यावदाकुलाः । २०५
तावदस्यैव माहात्म्यात् शस्यसम्पद्व्यजृम्भत । सत्यव्रतानां भूपानां क्वावकाशश्चिरं शुचां ।
मन्येऽथ वारिधिर्भूपकारुण्यप्रयनेच्छया । दौर्भिक्षदौस्थ्याद्धि लोकं सशोकमकरोत्तदा ।
पार्थिवोपप्लवे चौरा अन्धकारेऽभिसारिकाः । दुर्भिक्षे चैव तुष्यन्ति धान्यविक्रयिणो जनाः ।
अतः क्षुधामहार्घाये पदार्थां धान्यविक्रयात् । गृहीतास्तेऽन्यदा पूर्व्वमूल्येन प्रापयन्नृपः ।
दुर्भिक्षभक्षिताचोटलोकदक्षः क्षितीश्वरः । धिया सरलवृत्तेभ्यस्तैलाकर्षणमादिशत् । २१०
तस्मिन्सम्वत्सरे राज्ञा कारुण्याद्भूर्गगामिनो । उत्तमर्णाधमर्णानां व्यवस्था विनिवारिता ।
चतुःषष्टिकलाः शिल्पं विद्या सौभाग्यमेव च । दुर्भिक्षोपप्लवे सर्व्वं तदाभून्निष्प्रयोजनं ।
पदवाक्यतर्कनवकाव्यकथाबहुगीतवाद्यमनृत्यकलाः । सुरतप्रपञ्चचतुरा वनिताः क्षुधितस्य नैव रचयन्ति सुखं ।
इति जैनतरङ्गिण्यां पण्डितश्रीवरविरचितायां षड्विंशवर्षे दुर्भिक्षवर्णनं नाम द्वितीयः सर्गः ॥

तुष्टः प्रसादमतुलं कुरुते क्षणाद्यः क्रुद्धः प्रजासु कुरुते भयमप्रतर्क्यं ।
उन्मत्तपार्थिवपतेरिव हन्त धातोर्लीलास्वतन्त्रचरितं भुवि बुध्यते कैः ।

षड्विंशवर्षदुर्भिक्षदुःखविस्मरणं जनः । न यावदकरोत्तावदष्टात्रिंशेऽपि वत्सरे । २१५

वृष्ट्या सह रजोवर्षमपतद्गगनाङ्गणे । उपादीयत शाल्युत्थभाविदुर्भिक्षसूचकं ।
अथाचिरेण गर्जन्तो धृतचापाघनाघनाः । जनानुद्वेजयामासुः शरासारैरिवारयः ।
वृष्ट्युपद्रवसन्नद्धा ह्लर्द्धिहरणाकुलाः । उत्थिता बुद्बुदव्याजाद्दुष्टा नागफणा इव ।
उत्पन्नध्वंसिनीभावान् करिष्याम्यहमञ्जसा । इति ज्ञापयितुं मेघो बुद्बुदानसृजद्ध्रुवं ।
हृताः सर्व्वत्र पत्रान्तःपतद्दृष्टिस्खलच्छलात् । अश्रुबिन्दूनिवामुञ्चन् रुदन्तो जनचिन्तया । २००
वितस्तालेदरीसिन्धुचित्रिकाद्यास्तदापगाः । अन्योन्यस्पर्द्धयेवोया ग्रामांस्तीरेष्वमज्जयन् ।
सविभ्रमाधृतावर्त्ता वाहिन्युत्थास्तहेषिताः । जवादधावन्नुत्तुङ्गास्तत्तरङ्गतुरङ्गमाः ।
अत्युच्चापातकम्पीयोऽत्नतिदस्य निरङ्कुशं । आसीदपथगं सत्यं तदा जलविजृम्भितं ।
मृदो जलस्य तत्कालेऽद्रिवृक्षविटपालिषु । केनोपदिष्टं तत्काले मूलोत्पाटनपाटवं ।
अथायपशुगोप्राणिगृहधान्यादिहारकः । भयदोऽभूज्जलापूरः स म्लेच्छोऽपि सन्निभः । २०५
तदा मडवराज्यस्था विशोका शोकदा नदी । सर्द्धचणेच्छयेवान्तर्व्विवेश विजयेश्वरं ।
स्नानात्पापहरी पूर्व्वप्रवाहोपगता नदी । इतीव तज्जले तूर्णं ममज्जुर्गृहपङ्क्तयः ।
पुराणेषु प्रसिद्धा या विशोका शोकनाशिनी । तदाभूद्विपरीतार्था प्रजाभाग्यविपर्य्ययात् ।
येभ्यः प्रतिष्ठा प्राप्ता तान् दुःस्थान् द्रष्टुमसाम्प्रतं । इतीव तोये तत्कालं ममज्जुर्नगरे गृहाः ।
शिलादारुमयी मग्नस्तम्भीभूतचतुर्गृहा । चतुष्पादिव धर्म्मीया लोकोत्तरणकृद्बभौ । २१०
दारदाग्रामपङ्क्तयश्च दर्शनाय विशाम्पतेः । याचागतस्य लोकस्य सेतुबन्ध इवाभवत् ।
वितस्तायां कृता जैनकर्दलिः सगृहोज्ज्वला । जलावेशास्तटोन्मग्ना भग्नाद्य नगरान्तरे ।
पादद्वयावशेषापि स्थापितार्थं भविष्यतां । पादद्वयं पूरयितुं समस्येव महोभुजां ॥ चतुर्भिः कुलकं ॥
क्रमराज्ये तदा कुर्व्वन् कल्लोलैराकुलं जनं । महामप्यमरोविमादगाद्दुर्गपुरान्तरं ।
अन्यः सरोवरः कोऽपि पद्मनागसरोन्तिकं । प्रीत्या किमागतो दूराद्यं दृष्ट्वा विशशङ्किरे । २१५
स्वयमुत्पाटयत्यस्मान् उच्चवत् सहसागतः । इतीव तत्र वेश्मानि चिक्षिपुः स्वस्थलान्तरे ।
दूरे समुद्रां सङ्गन्ता कोऽयं हि समुपागतः । इत्थं वितस्ता तत्रैव प्रतीपमगमत्तदा ।
सीमोज्झिता चलन्मार्गा पङ्कातङ्ककलङ्किता । स्थितिः कलियुगस्येव भूरभूज्जलपूरिता ।
तस्मिन्नवसरे धारासारं वर्षति वासवे । नौकामारुह्य भूपालो निरगाज्जनचिन्तया ।
पश्यन् जलान्तरे मग्नां कृषिं कृशतरः शुचा । जनकारुण्यपुण्यात्मा विचचार पतिः स्वचं । २२०
दृष्टानि यानि घोषेषु गहनत्वान्न जातुचित् । स्थानानि तानि भूपालो नौकाकटेऽव्यलोकयत् ।
प्रतापशिखिनेवाथ शोषितोऽगाच्छितैर्दिनैः । शान्तिं क्रूरोजलापूरस्य विसारे समागतः ।
अथाचिरेण तद्वर्षे दानोत्कर्षादिव प्रभोः । हर्षमभ्यभवन् सर्व्वे पक्षया शालिसम्पदा ।
प्रजाचन्द्रकलावृद्धौ कश्मीरेन्द्रपयोनिधिः । तूर्णं पूर्णात्मतां प्राप दयापीयूषभूषणः ।

आत्मेव कश्चित् सुकृती विनीतः प्रजा प्रियाश्च प्रकृतिर्यथैव ।
तस्याश्च यद्वत् सुखिता यदासौ तद्दीयदुःखेन च दुःखयुक्ता । २४५

वितस्तोत्तरतटे भूपस्तदुपद्रववर्जितः । पुरं चिकीर्षुर्बभ्राम जयापीडपुरान्तिके ।
अकरोत्तिलकं भूमेरलकादर्पहृत्पुरं । स जैनतिलकं नाम नदीतीरोन्नतस्थले ।
राज्ञोऽदिदृक्षयेवात्र राजधानीत्वविच्छलात् । सौधभित्तिगता नूनं चन्द्रिकास्ते सुधासिते ।
मूलोत्पाटे दृष्टश्शोऽरिभिर्मेरुर्न विवर्द्धितः । इतीव खिन्नः कैलासः सौधव्याजादिवागतः ।
सुधासितगृहा यत्र सत्रागारवसुन्धरं । जयापीडपुरं जीर्णं हसन्तीव हविच्छलात् । २५०
तद्द्वारोन्मुकस्यास्य राज्ञः प्रत्यक्षतां गतं । मयासुरपुरं किम्वा यद्दृष्ट्वेत्यवदन् बुधाः ।
यद्वारि कान्तं सङ्क्रान्तं परितः सरित्तटात् । द्वारिकां हसतीवास्य द्वारिकान्या सुधासितं ।
तत्र राजपुरीयाय जयसिंहाय भूपतिः । प्रददौ राज्यतिलकं निजजन्मदिनोत्सवे ।
तत्रोपविष्टः सन्तुष्टः सेवयास्य महीपतिः । भट्टतन्त्राधिकारञ्च प्रददौ ब्राह्मणप्रियः ।
काश्मीरकाख्यदेशीयसर्व्वगीताङ्कितात्मने । तस्मिन् सम्वत्सरे राज्ञा चक्रे कनकवर्षणं । २५५
तत्रोपकण्ठे भूपालः कृत्ये कण्ठीरवद्विषः । हेलालनाम्नो दासस्य हेलालपुरकं व्यधात् ।
शैलपीठं विधायोच्चैर्जयापीडपुरान्तरे । सरस्तीर्थे मनोहारिराजवासं स्वकं व्यधात् ।
उद्दीपप्रभृतिं जीर्णं निर्लुण्ठोपवरोवरं । महाप्रश्नोनृपस्यास्कं तद्द्राजगृहाबलिं ।
नागयात्रादिने यत्र प्रत्यब्दं दिनपञ्चकं । गणचक्रोत्सवे राजा योगिनोभोगिनोव्यधात् ।
यत्र कादम्बरीक्षीरव्यञ्जनादिप्रपूरितः । कृत्वा पुष्करिणीस्तुर्व्वान् स यथेच्छमभोजयत् । २६०
यत्र योगिसहस्रात्यष्टकुम्भादासककृतः । आनेमानसनागोऽपि न्यमीलन्निजचक्षुषी ।
न तदन्नं न तन्मांसं न तद्भक्ष्यं न तत्फलं । न ते भोगा न ये राज्ञा भोजिता भोजनक्षणे ।
योगिनां त्रिविधाशेषं मद्यमन्ततयोदितं । अवस्थितृ नृपो भक्त्या यदसङ्ख्यं जनैरपि ।
महार्घ्यपरिधानोपहासमानादिलाञ्छनैः । तेषामधिपतिं यत्र मेरं स्वसदृशं व्यधात् ।
सत्कन्या किन्नरामुद्राद्यष्टाधैर्द्वादशीदिने । भारिकान् योगिनः कृत्वा प्रत्यमुच्यत्ततो बहिः । २६५
वितस्ताजन्मपूजार्थं त्रयोदश्यां ततो नृपः । दीपमालादिदृक्षुः स नौकारूढोऽभ्यगात् पुरं ।
सुभाषितानि संशृण्वन् सङ्गीतानि जलान्तरे । समारोहावरोहाभ्यां सपौराश्रियमग्रहीत् ।
पूजार्थं प्रस्फुरत्पौरदत्तदीपबलिच्छलात् । वितस्तान्तरमायाता तीर्थकोटिरिवाद्युतत् ।
पारावारतटप्रत्तादीपमालास्तदा दधुः । अर्च्चनाप्तसुरोन्मुक्तसुवर्णकुसुमश्रियं ।
वितस्तावलिपूजाप्तनागरीमुखनिर्जितः । लज्जया कम्पितेन्दुस्त्रेवान्तः प्रतिमाच्छलात् । २७०
गर्व्वखर्व्वीकृतारातिः सुपर्णइव लीलया । सर्व्वां रात्रिं स गान्धर्व्वचर्व्वणैरनयत् सुखं ।
वन्द्योऽसौ गुणिबान्धवो दिनपतिर्यस्योदयानुग्रहाद्दृष्टा कुत्र न सर्व्वदर्शनसुखात् सत्पक्षपंक्तिस्थितिः ।
निन्द्यौ तस्य सुतौ पितुर्व्विमुखौ लोकव्यथोत्पादकौ यौ कालोऽयमिति प्रयाममगतौ क्रूरग्रहौ निश्चितौ ।

अथान्तरेऽनुजद्वेषवशात् कलुषिताशयः। आदाममुष्मानोनि:शेषं देशमाक्रामयद्धठात्।
यथाश्मवातिकठिनस्तन्मतन्त्रितयन्त्रिणः। दुर्गन्धिणोऽभजन्नापि तस्मिन् सोऽपि स्वतन्त्रतां।
स्फीते भीतेन कामोक्ति शक्ति न रमिकोऽभवत्। केवलं मृगयाव्यसनचमत्कारं समभ्यधात्। १७५
सरसामन्तरेऽरण्ये यत्र कुत्रापि तिष्ठतः। मृगयारसिकस्यास्य रात्रिं दिनमिवाभवत्।
किमुच्यतेऽन्यनीचत्वं यत्कृत्यैर्व्यवहारिवत्। स्वेनवंशतपसौभाग्यविक्रयोऽनगरे कृतः।
अथैकदा विभज्यास्मै यौवराज्यमदोद्धतः। क्रमराज्यं नवत्याज्यं यथा प्राज्यपरिच्छदः।
यत्र यत्रोपविष्टः स पापनिष्ठोऽप्यतिष्ठवत्। अभवन् पीडिताग्रामीणाक्रन्दमुखरा दिशः।
प्रसादमतुलोदयप्रतिग्रहहृतां क्षितिं। उपप्लवहवात्युग्रः सञ्चचार पदे पदे। १८०
कंचिद्भीत्या कंचिद्भीत्या कंचिन्नीत्या विलोभयन्। लोभयन्नोबलात्कारात् केषामहरद्धनं।
स प्राकृतइव व्याजमैत्रीं कुर्व्वन् गृहागतः। लोभादन्यांश्च कन्यास्तासामन्याभिस्तैरवञ्चयत्।
नीताचारकृताद्युक्ता सभयास्ताडयन् स्त्रियः। तद्भयाद्दण्डयन्तस्य ग्रामीणान् सेवकव्रजः।
तत्तद्दिनिग्रहस्थानसावधानमतिस्तदा। स तार्किकइवात्युग्रोराज्ञिवैर्दुर्जयोऽभवत्।
जायास्नुषादुहित्राद्या भव्या येऽभवन् गृहे। बलात्प्रविश्य सम्भुक्ता निर्लज्जैस्तस्य सेवकैः। १८५
समाण्डमत्स्यं कुण्डैस्ते पीत्वा गृहान्तरे मधु। भाण्डाइव मदोन्मत्ताः स्वावैर्भाण्डमवादयन्।
तण्डुलाश्च कुसूलेभ्यः शालाभ्यः पीनवत्कराः। वीटिकाभ्यः स्वयं मद्यं भुक्तं तैर्व्यवहारिभिः।
सैव कामोचितो तस्य कियतो वर्ण्यते मया। येऽस्यमूर्द्धनि वास्तव्यान् घृताभ्यङ्गमकारयन्।
हसन्तीरिव ज्वालाभिस्तैलपूर्णा वर्त्तिकाः। तान् कारयित्वा ये दीपाञ्शिरःस्वज्वालयन्हठात्।
इत्यादि कुत्सिताचारं भारान्तइव भूपतिः। विज्ञप्योदेजिनोलोकैर्निर्गन्तुं नाशकद्गृहात्। १९०
पीडां मा कुरुतेत्यादि राजदूते ब्रुवत्यसौ। अवोचन्निति तद्भृत्या राजा कन्दत्तु पीडितः।
वैरं यो गुरुभिः करोति सततं पुण्यात्ययं दुर्व्वशांल्लोभात् सञ्चयमातनोत्यनुदिनं तद्दानभोगोज्झितः।
दीनान् ग्राम्यजनांश्च पीडयति योनिर्हेतुमत्याश्रयंस्तस्यासन्नविनाशिनः स्वविभवस्यापाय आपाय वा
कुर्व्वन् स्वसैन्यसामग्रीं कुद्देनपुरे स्थितः। एकदा जैननगरे भूपालं सबलोऽभ्यगात्।
तद्दिने शङ्कितस्तस्मात् पूर्णकर्णादुरक्षिभिः। स्वसैन्यसङ्ग्रहं राजा राजधान्यां गतोऽकरोत्।
क्षितस्तान्तर्व्वसद्द्वारशैलपूर्णचतुर्गृहं। नरदायामपंक्तस्य दशकं नगरान्तरे। १९५
सेतुबन्धं व्यधाच्चैनकदलाख्यमयं नृपः। स्वकृतं तं तदाज्ञासीत् स्वविघ्नमिव भीतिदं।
नगरोपप्लवाशङ्की सन्नस्यायत्तमास्थितः। पुनर्निष्कालयामास तं सुतं मन्त्रयुक्तिभिः।
सन्तापप्रदमुन्नरायणमिहालोक्यापि रम्यं गुणैर्य्याबाञ्छत्यथ दक्षिणायणमसुं ज्ञात्वा हिमार्तिप्रदं।
लोकानामसुखक्षयार्थमुभयोराद्यं पुनर्योभजत्यर्थैव परोपकारनिरतः सूर्य्याय तस्मै नमः।
क्रमराज्यान्तरं प्राप्ते तस्मिन् द्वैराज्यशङ्कितः। स्वाचरैर्दाक्ष्यसारं स प्राहैषीत्पथमित्यदः।
पुष्प मेऽवसरोद्भूतत्वादृक् प्रांशुदुरक्षरः। अत्र मत्काव्यसन्देहे गतिर्नान्या मया विना। २००

## ॥ श्रीवरपण्डितकृता ॥

युक्तं शयितस्य तवासनं । आसीनस्य समुत्थानमुत्थितस्य च धावनं ।
ध्ययं मेोक्ते त्यक्तापि श्रुतयन्त्रणां । यद्यागच्छसि तत्तूर्णं पूर्णं प्राप्स्यसि वाञ्छितं ।
अभितूर्णं न चेत् प्राप्तो मयि जीवति विह्वले । गते मयि मदभ्यर्णं पुनरागमनेन किं ।
तावत् खय्यपुरं प्राप्तः सोऽभूत्तीर्णो नृपात्मजः । राजानीकैः समं युद्धमुद्धतं सबलोव्यधात् ।
अथोदनिष्ठन्तुमुलस्तत्कालं सैन्ययोर्द्वयोः । उभद्धखानसम्बद्धयुद्धेच्छणसुदुस्सहः । १ ५
अष्टाविंशाब्दवदस्मिन् पञ्चत्रिंशेऽपि वत्सरे । वैरं नीत्वा पितापुत्त्रौ पिशुनैः कारितोबधः ।
तत्रत्यादरदावाग्नेः परितः सरितोजले । ममज्जुस्तद्भयाद्येन शवपूर्णमभूत्सरः ।
हत्वा मृत्युरिवात्युग्रां तद्दिने नृशतत्रयीं । नौसेतुबन्धमुच्छिद्य नदीपारं समासदत् ।
धिक् यः पैतृके देशे रक्षणीयेऽपि निष्कृपः । परदेशजयं त्यक्त्वा तादृग्विग्रहं समाचरत् ।
पापास्ते शिखजादाद्या गृहीत्वाभयवेतनं । भूपमुद्वेजयामासुः फलं यैरनुभूयते । ११०
उच्चः सत्पनदोयथायमहमप्येतादृगेतावता स्पर्द्धां यावदियेष हन्त जनकेनैकेन मन्दः सुतः ।
भास्वानभ्युदितः स तावदतुलः सर्व्वप्रकाशोद्यतोयन्माहात्म्यवशेन वक्रगतयोध्वस्ताभवन्ति स्वयं ।
तद्देशकष्टदैर्दुष्टैः प्रजानां नाशहेतुना । आदमखानोविचारोणेत्युग्रा भागैश्च तत्यजे ।
इत्यातङ्कादिभिर्दुःखैर्व्वरं देशोऽत्र जीव्यते । सर्व्वनाशकरो मास्तु भूभर्त्तुर्व्वक्रपत्यता ।
मा चेत्तेषां स्वभेदामा भूयाद्वैरात् परस्परं । मा जायेताथ वा दुष्टः सुतः कस्यापि दुःखदः ।
प्रजान्तकारिणौ क्रूरौ राजपुत्त्रावुभावपि । सूर्य्यस्येव महीभर्त्तुः पङ्गुकालाविवोदितौ । ११५
अपकर्त्तृष्वपि प्रशान्दयमानः परानपि । क्षमी दाता गुणग्राही स्वामीदृग्लभ्यते कथं ।
व्यथितोयत्सुतैर्दुष्टैः सोऽस्मद्भाग्यविपर्य्ययः । शृण्वन् स रुदिताक्रन्दमिति पौरगिरः पथि ।
पादाद्व्यथार्त्तोऽपि नगराच्चिरगान्नृपः ।
पुत्त्रोत्पत्तिमवेक्ष्य तुष्यति नृपोवोढा धुरः स्यादिति स्नेहात् सम्पदमस्य यच्छति निजामुल्लङ्घ्य नीतिक्रमं ।
ज्ञात्वा तं बलवन्तमात्मसदृशं तादृग्भियाशङ्कते येनासन्नसुखो न जातु लभते निद्रां सचिन्ताज्वरः ।
बद्धा मल्लिकजस्रथेन स यदा राजालिशाहिर्हतोभ्रातृद्वेषवशाद्बभूव कदनं काश्मीरिकाणां महत् ।
तद्वज्जैनमहीभुजोऽस्य तनयद्वेषात् किमालोक्यते तन्माभूद्वङ्कसन्ततिर्नृपगृहे देशे त्रिनाशप्रदा ।
इति मार्गे कथाः शृण्वन् ग्राम्याणां जैनभूपतिः । वधात् कुतनयं निन्दन् प्राप खय्यपुरान्तरं । १२०
तीरद्वये वितस्तायाः पितापुत्त्रबलद्वयं । न्यवीविशत् समासन्नं परस्परजयोद्यतं ।
अत्रान्तरे हाज्यखानः पर्णोत्सन्तूर्णमागतः । सुपर्णइव सद्वर्णदशाभ्यर्णं समासदत् ।
श्रुत्वा वराहमूलान्ते पुत्त्रं प्राप्तं बलान्वितं । अग्रे वह्रामखानस्तं सत्कर्त्तुं व्यसृजन्नृपः ।
कालापेक्षी हाज्यखान. प्रणम्यास्थित कृतादरः । प्रीतिनिष्ठं कनिष्ठं तं भ्रातरं स्वं समानयत् ।
अन्येद्युर्मानितं दृष्ट्वा जनकेन निजानुजं । आदमखानो विचारणस्तत्रस्तोऽगाद्दिगन्तरं । १२५
शाहिभङ्गपथा सिन्धुं समुत्तीर्य्य बलान्वितः । प्राप सिन्धुपतेर्देशं तथा कष्टपरिच्छदः ।

इत्थं चित्रिश्रमे वर्षे ज्येष्ठं निष्काश्य युक्तितः। हाज्यखानान्वितस्तुष्टो नगरं प्राप भूपतिः।
शिशिरसमये योऽभूत्क्लिष्टश्चिरं धुतपत्त्रतिर्धरणिकुहरेष्वन्तः कालं निनाय शुचाकुलः।
कुसुमसमये प्राप्योद्यानं विकाशिलतोज्ज्वलं किसलयरतः सोऽयं भृङ्गः सुखं रमते पुनः।
अस्मिन्नवसरे तुष्टाद्धाज्यखानो धृतं चिरात्। यौवराज्यपदं प्रापज्जनकाज्जनकोपमात्। १२०
पितुः प्रेमर्माणं प्राप्य स्वच्छं भक्तिपरायणः। हृदयान्नात्यजज्जातु श्रीमाञ्छार्ङ्गीव कौस्तुभं।
विनयक्षिप्तदेवाग्रजानुसङ्कुचिताकृतिः। हकार इव मद्वर्णस्तस्य सर्व्वावधिर्ब्बभौ।
न तत्तीर्थं न सा यात्रा न सा लीला न चोत्सवः। तदाभून्नैव यत्रागाद्धाज्यखानान्वितो नृपः।
यो नित्यं परितो वृतो गणशतैरत्यर्थभक्त्युज्ज्वलैः पुत्त्राभ्यां सहितो ऽतिस्त्रिजगतां नामाविनाशाश्मजन्।
कालो गच्छति यस्य लास्यललितं गीतञ्च यच्छृण्वतः शस्यः कस्य न तन्नमस्यविभवः कैलासवासोभवः।
इति जैनराजतरङ्गिण्यां आदमखाननिर्व्वासनं हाज्यखानसंयोगवर्णनं नाम तृतीयः सर्गः॥

अत्रान्तरे मदनबन्धुरयादसन्तः शृङ्गारसारकुमुदाकररोहिणीशः।
मानान्धकारविनिवारणभानुमूर्त्तिः स्फूर्जल्लतानिललसानवयौवनश्रीः। १२५

ततश्चैत्रोत्सवे राजा पुष्पलीलाचिकीर्षया। ययौ मडवराज्योर्व्वीं नौकारूढः सुतान्वितः।
तरण्डामण्डली राज्ञो वितस्तान्तरगा बभौ। शक्रस्येव विमानाली छायापटविभूषिता।
स्वकीयराजवासस्थो राजा वन्तिपुराद्गतः। विजयेशादिदेशेषु नाट्यं द्रष्टुमुपाविशत्।
हर्षांशभूभुजं जेतुं यत्र राजसभानिभात्। भवासक्तो ऽभवत् कृत्वा बहुधा स्वं मनोभवः।
सालङ्कारप्रबन्धज्ञाः सिद्धान्तश्रुतविश्रुताः। यत्रान्तःकरणोद्युक्ता दृष्टा रागायना अपि। १३०
नानाग्रामगतास्थाहस्वररागमनोहराः। यत्र गीतारसस्फीता बभुर्युवतयोऽपि च।
कलाकलापवेत्तासोन्मानमानसमीश्यमन्त्। रङ्गरङ्गद्रुचिर्लोकोविद्याविद्यातसंशयः।
प्रतितालैकतालादिबद्धतालविभूषितं। तत्र तारा च साराचसंस्थानं विदधुर्नटाः।
उत्सवानामकामास्त्वं गायनी नयनोत्सवा। लास्यताण्डवनृत्यज्ञा न केषां रञ्जिकाभवत्।
भावानेकोनपञ्चाशत्सङ्ख्यांस्तानांश्च तावतः। दर्शयन्त्यो बभुः पात्र्यस्ता मूर्त्ता इव मूर्च्छनाः। १३५
यासां नृत्ये च गीते च लब्धोमेऽभ्यधिकं सुखं। इति वादोऽभवच्छ्रोत्रनेत्रयोः प्रेक्षणक्षणे।
पाचीगानपिकध्वाने रङ्गोद्याने तदाद्भुतम्। दीपचम्पकमालास्तामधुपैः परितो वृताः।
रात्रौ राज्ञि क्षणात्तुष्टे नृत्यप्रेक्षागतैः सुरैः। दीपमालाच्छलान्मुक्ता नूनं हेमाम्बुजस्रजः।
जलान्तर्व्विम्बिता कापि दीपाली नागलोकतः। वरुणेन नृपप्रीत्या दापितेवाद्भुतस्तदा।
ता दीपिता दीपमाला द्विधा रङ्गे चकाशिरे। दिदृक्षागतनागानां फणामणिगणा इव। १४०
किं राज्यालोकभावात्तटभुवि मिलिताः पूर्व्वभूपालजीवाः किं व्योमस्तारका वा श्रमधर्मविमुखः सेवनायावतीर्णः।
किम्वा सिद्धाः सुरेन्द्रानिजरुचिरुचिराः प्रेक्षणायोपविष्टाः किम्वैता दीपमाला इति जनमनसामास दूरादितर्कः।
साक्षादेव पुरन्दरः कविबुधाविद्याधराः सेवका अन्ते देवसभासदः सवपुषः सिद्धा अमी योगिनः।

एता अप्सरसोरसोर्जितगुणागन्धर्व्वकामाङ्गनारङ्गोऽयन्त्रिदिवस्थलीति जगदुः सर्व्वे जनाः प्रेक्षकाः ।
अङ्गारचारचूर्णादिगन्धकौषधयुक्तिभिः । रागैः शिल्पिकृता लीला क्रीडालोकमरञ्जयन् ।
तथा ह्यौषधसम्पूर्णाज्ज्वालाद्रक्तकणाघनाः । निर्यत्कुसुमसम्पूर्णस्वर्णवल्लीभ्रमं व्यधुः ।
सर्पाकारानलज्वाला निर्गता सलिलान्तरात् । चक्रे प्रेक्षकलोकानां त्रासाश्चर्य्यभयोदयं । १५५
नालकादुत्थिता व्योम्नि ज्वाला गोलकपङ्क्तयः । राजद्राजमरीचिच्छा जीवशुक्रोपमां व्यधुः ।
रज्जुबद्धागमद्दूरं ज्वलन्त्यौषधनालिका । आहृतये तथा नीतास्तावृश्योबहवोगताः ।
गतागतानि कुर्व्वन्त्योदीप्ताउल्काइवोल्बणाः । प्रेक्षकाणां प्रिया दृष्टीरहरन्नद्भुतावहाः ।
अत्र पात्रीकरस्थापि ज्वलन्त्यौषधनालिका । द्युलोकोन्मुक्तसद्वर्णस्वर्णपुष्पश्रियं व्यधात् ।
वह्निक्रीडनलीलाया युक्तिज्ञेन महीभुजा । शिक्षयित्वा इभभाख्यं तास्ताः सर्व्वाः प्रदर्शिताः । १६०
क्षारस्तदुपयोग्योऽत्र दुर्लभो योऽभवत्पुरा । तद्युक्तिशिक्षया राज्ञा स्वदेशे सुलभः कृतः ।
प्रश्नोत्तरमयी स्वोक्तिरिभेभं प्रति या कृता । पारसीभाषया काव्यं दृष्ट्वाद्य कुरुते न कः ।
ते शिल्पामतिकल्पितास्तु च सदा सङ्गीतवाद्योरसः सालङ्कारविचारचारुधिषणा काव्ये च तत्कौशलं ।
सच्छास्त्रश्रवणादरः स च नवप्रोत्पादनायोद्यमः श्रीमज्जैनमहीपतेर्व्वुधमतेस्तस्येव कस्याधुना ।
खुज्याब्दोस्वादराख्यस्य शिष्यः सर्व्वगुणाम्बुधेः । भूभुजश्चित्तमनयद्रागतालादिभिर्मुदं ।
खुरासानागतोमल्लाजादकास्थोमहीपतेः । वादनात्कूर्म्मवीणायाः प्रापातुलमनुग्रहं । १६५
मल्लाज्यमालनामापि म्लेच्छवाग्गेयकारकः । नारदोवासवस्येव राज्ञोऽभूदतिरञ्जकः ।
तुम्बवीणाधरः सोऽहं सर्व्वगीतविशारदः । उदद्धम्सवगीताङ्ककौशलं समदर्शयं ।
अन्येऽपि जाफराणाद्या मया सह नृपाग्रगाः । तौरुष्कान्दुष्करान्रागानगायन्वीणया समं ।
गीतं द्वादशरागाङ्कं गायतां नः सभान्तरे । प्रीत्यैवैकर्य्यमिवापन्नास्तन्त्रीकण्ठोत्थिताः स्वराः ।
देशसंस्कृतकाव्यज्ञो राज्ञोनिकटवास्यभूत् । पण्डितोनोत्यसोमाख्योदेशजैनचरित्रकृत् । १७०
देशभाषाकविर्योधभट्टः [illegible] नाटकं । चक्रे जैनप्रकाशाख्यं राजवृत्तान्तदर्पणं ।
भट्टावतारः शाहनामदेशग्रन्थाब्धिपारगः । व्यधाज्जैनविलासाख्यं राजोक्तिप्रतिरूपकं ।
वीणातुम्बीरवावाद्याः सर्व्वास्तुष्टेन भूभुजा । सुवर्णरौप्यरत्नौघैर्घटितास्ताश्चकाशिरे ।
तदाचिकाङ्गिकाहार्य्यसात्त्विकाभिनयोज्ज्वलं । नाट्यं दृष्ट्वा जनः सर्व्वश्चतुर्मुखमशंसत ।
इत्थं त्रिवर्गविद्राजा त्रिजगत्ख्यातपौरुषः । त्रिधाभक्तिविधैर्नृत्यैरनयत् त्रिदशोपमः । १७५
स्फुरद्विचकिलोल्लासहासं स भवनाम्बरं । आसदत्तारकापूर्णं पूर्णचन्द्र इवाम्बरं ।
ततोविमलकुण्डान्ते पानक्रीडां महीपतिः । कर्त्तुं प्रचक्रमे तत्र पुत्रमित्रविभूषितः ।
पिष्टप्रेमामृतोत्सिक्तोहाज्यखानोऽथ भक्तिमान् । वसन्तवर्णनोन्मिश्रां चाटूक्तिमवदद्विभोः ।

सङ्गीतनादनिपुणात्कलकण्ठभृङ्गात्तत्वानिलं प्रतिलास्यविधानदक्षम् ।
गीतप्रियं नरपते किमु सेवितुं त्वां प्राप्तोवसन्तऋतुचारणचक्रवर्त्ती ।

मेघाडम्बरमम्बरं यदि तदा निर्नष्टशोभावयं नित्यं तीक्ष्णकरेण तेन दिवसे तत्राप्यहो बाधिताः ।
स्वामी नः शशभृत्प्रयोदयहतोद्दुःखादितीवागता उद्याने नरदेवसेवनपराः पुष्पच्छलात्तारकाः । १८०
पङ्कातङ्ककलङ्किता जलमया ये भोगिदेहार्त्तिदास्तद्देशे विलसन्तु पापविषयाः सन्मार्गविभ्राशताः ।
ये याताः स्वयमेव देव विलयं श्रीमत्प्रतापोदयादस्मिन् हर्षमये वसन्तसमये प्रालेयपूरा यथा ।
श्रुत्वेति भूपतिर्हृष्टो राज्यस्थानाय सत्वरं । सौवर्णकर्त्तरीबन्धमप्रमेयं समार्पिपत् ।
यैर्यैः सेवा कृता तस्य शास्त्रादेशे विशार्थ्यं तान् । पुत्रस्नेहेन भूपालो योषराज्ञाधिपान् व्यधात् ।
प्रेष्याद्याक्षेपसिक्त्वा घमग्रांस्तान् सेवकव्रजान् । प्रसादपट्टपोतेन समुत्तीर्णान् व्यधान्नृपः ।
विदग्धीताङ्गिम्ह्त्येभ्यस्तस्मिन्नवसरे नृपः । सुतापाप्त्यानन्दबाष्पाम्भोव्यधात् कनकवर्षणं । १८५
दत्तमार्गोपचाराथा राज्ञिया दर्शनागताः । प्राप्तपट्टपरोधानमानतुष्टा न केऽभवन् ।
तान्विलोक्य भवनोपवनादीन् पुष्पपूरपरिपूरितलोकः । स्वं स्तुवन्मुडवराज्यनिवासान् प्राप जैननृपतिर्नगरं स्वं ।
इति जैनराजतरङ्गिण्यां पुष्पलीलावर्णनं नाम चतुर्थः सर्गः ॥

अत्रान्तरे सुतप्राप्त्या निःशल्यः सुकृतोद्यतः । कुल्यानवनवाः कर्षन् प्रतिष्ठारसिकोऽभवत् ।
कविः श्रीजोनराजोऽयं स्वसन्दर्भान्तरेऽब्रवीत् । ग्रन्थविस्तारभीत्या तद्दर्पणं न मया कृतं ।
एकैवास्त्यमरावती ननु पुरी साक्षात्तनिर्माणका तत्राप्यत्र सदा विमानवसतिर्देवादिषु श्रूयते ।
सोऽभूद्भूमिपुरन्दरः पुरशतं कुर्व्वन्नवं सर्व्वतोयत्रैते निवसन्ति मानमहितास्ते भूमिदेवादयः । १९०
श्रीजैननगरे पञ्चदशेऽब्दे या कृता पुरा । राजधानी नवात्युच्चा विद्धा देवगृहोपरि ।
तस्याः समीपे नृपतिश्चत्वारिंशेऽथ वत्सरे । इष्टिकादारुसम्बद्धं राजवासं नवं व्यधात् ।
यत्पृष्ठे स्वर्णकलशोभाति भातिमनोहरः । हेमपद्मद्वयोन्मुक्तः शक्रेण श्रुतकीर्त्तिना ।
यद्द्वारागारनियुक्तेभ्यस्तत्तत्कर्म समादिशन् । आजीवं सोऽवसद्राजा राजधान्युज्झितस्थितिः ।
यत्र वापीगता हंसा गीतभ्रंशा स्वनच्छलात् । कुर्व्वन्तीव समीपस्था गायद्गीताङ्गसंस्कृतेः । १९५
यत्र खर्व्वीकृताराति: सुपर्व्वाधिपतिर्यथा । सर्व्वाहः सुखगन्धर्व्वचर्व्वणैरनयत सुखं ।
यदन्तरे सुविस्तीर्णः सर्व्वदर्शनमण्डपः । काचभित्तिमयोभाति व्यग्रसिंहासनोज्ज्वलः ।
यद्गर्भाद्युपसन्दर्भनिर्भरान्नृपभर्त्सनात् । वातोऽपि सफलोयातः प्रातर्घ्राणसुखप्रदः ॥ कुलकं ॥
कदाचित्तावरं दुर्गं यात्रा द्रष्टुं गतो नृपः । राजवासं नवं कृत्वा जीर्णोद्धारमकारयत् ।
समुद्रकोटादारभ्य यावच्छ्रीद्वारकावधि । तत्तद्भवनवावासवासवालयसुन्दरान् । २००
जैननामाङ्कितान् ग्रामानकरोन्नगभूषितान् । उपतीरं महापद्मश्रीमत्पत्तनभूषितान् ।
तद्ब्रह्मसत्त्वहस्तानामर्थिनां त्रिपुरेश्वरे । उदरं मेदुरं चान्तराजा लम्बोदरः कथं ।
अकसत्रे क्षितीशानैर्व्वराहक्षेत्रभूमिषु । अस्य मर्त्यशिराः शेषश्चिरमिन्द्रोऽपि चाभवत् ।
मत्स्येभ्यो नित्यहस्तेभ्यः सूत्राणामभयं ददौ । मत्स्यानामन्नसत्रेण वितस्तासिन्धुसङ्गमे ।
अर्थिनामतिहस्तानां श्रीमङ्करपुरे नृपः । अपेत्य विदधे च्छायां न फलानि महीरुहां । २०५

अश्रमाया व्यधादत्र सर्वे व्यञ्जनसौरभैः । कथं न कुङ्कुमस्याभूत् गन्धभेदकदर्थनः ।
अच्छिन्नेनान्नसत्रेण विशेषस्मरवासिना । उदरे मेदुरे सिद्धप्रणामो यत्नतोविभोः ।
अन्नसत्रमविच्छिन्नं कृत्वा शूरपुराध्वना । शुल्कस्थाने व्यधाद्राजा भारिकानामभिसारिकान् ।
गुणी मूर्खोनिराचारः साचारोयवनोद्विजः । नापोषि यस्तदन्नेन कश्मीरेषु स नाभवत् ।
प्रभुश्रीपतिधात्वजह्नुमुनिभिः पूर्व्वं रवेरन्वये जातेनापि कृतः श्रमस्त्रिपथगा गङ्गैव जाता नदी ।
तेषां स्वार्थमभूद्दसोनरपतिः सोऽयं परार्थे पुनर्देशेऽस्मिन् स्वधिया नदीर्नवनवा नाना पथः कृष्टवान् । ४१०
नवीनोदारकेदारभूम्युत्पन्नप्रतिस्थलं । कूटाधान्यफलैः पुष्टाद्दृष्टाः पर्व्वतसन्निभाः ।
धान्यकूटच्छलान्नूनं साभूल्लक्ष्म्याः कुचस्थली । प्राप्तोपाया प्रजा यस्मात्तुष्टिमापद्दिने दिने ।
दुर्लभोपद्रवानिष्टा यत्र यत्राभवत् क्षितिः । समुद्यदिव यस्याम्बा तत्र तत्राकरोन्नृपः ।
न तत्स्थलं न कान्तारो न स देशो न साटवी । यत्र नानीय कुल्याः स्वाः स्वनामाङ्काः पुरीर्व्यधात् ।
न सा नदी न तत् क्षेत्रं न स ग्रामो न सा पुरी । न तत्स्थानं न यद्राज्ञा जैननामाङ्कितं कृतं । ४१५
यत्र यत्राभवन्निम्नाः प्रदेशास्तत्र कुल्यया । व्यधाद्राजा सरः पक्षिविषट्टङ्काटभूषितं ।
धन्योवारिधरोधरोपकरणोद्युक्तः सदा जीवनैर्यः सिन्धोः सलिलं निरर्थकतया निन्ये निकृष्टान्वहं ।
कान्तारेष्वफलेषु केषु रुचिरं मुञ्चन्त्यभीष्टं यतस्तत्सेकोदितसर्व्वशस्यविभवो लोकः सुखी जायते ।
लोके उलरहित ख्यातं यदगाधं सरोवरं । तस्य प्रतिष्ठाप्रस्तावाद्वर्णनं क्रियते मनाक् ।
आराजधान्या यद्दीर्घं सुरेश्वर्य्याः सरोवरं । नौकारूढोऽचरन्नित्यं व्योम्नीवेन्दुः सुनिर्म्मले ।
अरित्रपत्रा यत्रान्तः सोड्डीनाः पटसुन्दराः । पोतादवारुहन् पोताराजः शाकुनिकान्विताः । ४२०
तिलप्रस्थागता यत्र तटिनी त्रिपुरेश्वरात् । सङ्गच्छते सटाङ्कां यत्सङ्गाद्द्रष्टुमिवोत्सुका ।
श्रीपर्व्वतोऽपि षट्कोशस्तीर्थस्नानफलेप्सया । स्वपङ्क्तिच्छलाद्यत्र मज्जतीव दिवानिशं ।
शैवलन्ति द्रुमा यत्र कमठन्ति च पर्व्वताः । पुर्य्यश्च नागलोकन्ति जलान्तर्य्यत्र बिम्बिताः ।
यत्स्थलन्तृणभृङ्गालिकुलानि सरसीरुहां । तत्सौगन्ध्यमिवाघ्रातुमानतानीक्षते जनः ।
यत्सन्ध्यायुगलोन्मेषास्तोदयद्वयसम्भ्रमात् । जाने याति रविः कुर्व्वन् प्रत्यब्दमयनद्वयं । ४२५
यत्र तीरे सुरेश्वर्य्याः क्षेत्रं भुक्तिविमुक्तिदं । वाराणस्यधिकं भाति तीर्थराजिविराजितं ।
विहारैरग्रहारैश्च मठैः सुकृतकर्मठैः । आश्रमैरश्रमैराजवासैः स्वर्गोपमां व्यधात् ।
दीर्घैश्चतुष्किकाहस्तैर्नृत्यन्त इव सूनृताः । दृश्यन्ते ये जनैर्दूराद्धेमच्छत्रवरोदराः ॥ मध्ययुगलं ॥
येषां सिद्धपुरीनाम प्रसिद्धं नृपतेर्गृहं । स्वर्सिद्धो कुरुते सिद्धविमानावलिविभ्रमं ।
जीर्णादेवालया यत्र राजधान्यन्तरीकृताः । भूत्योन्नत्या निजस्थित्या सत्यार्था भूभुजा कृता । ४३०
यत्र सर्व्वतृणच्छेदनिर्भेदोत्पन्नभूस्थली । सस्यारिष्वुर्व्वरा राज्ञां सफला विहिता धिया ।
एकत्र देशे यत्रान्तःसत्रं श्रीजैनवाटिका । योगिनां पात्रपूजार्थं कृतं भोगाकृतस्थं ।
मध्यपुष्करिणीमध्यधंक्रान्तस्वादलिप्सया । यत्रैति द्विजराजोऽपि योगिचक्रान्तरे ध्रुवं ।

भूपतिर्भोजयन् योगिसहस्रं मौलदीक्षणं । निष्कम्पमकरोन्नित्यं किं तपसा किं समाधिना ।
आहारमनुतोषोद्यत्कीर्त्या रसवती श्रिया । देव्याथ क्रियते यत्र सर्व्वा रसवती प्रजा । ४३५
पक्कान्नराशयोऽदभ्रायत्राभ्रमुभ्रमप्रदाः । विभ्रत्यभ्रभ्रमच्छुभ्रशरदभ्रशिखोपमां ।
यत्राधर्म्ममृगं हन्तुं मृगमार्द्दमिषाद्ध्रुवं । सम्मिलत्सारसारावं श्रूयते मृगयारवः ।
सामोदकामनिर्मुक्तमोदका यत्र योगिनः । समधर्म्मोदकाजग्धेजाता राज्ञः प्रमोदकाः ।
योगिस्फुरत्कारक्लिष्टदधिदिग्धासनच्छलात् । योगाच्छशिकलासारावास्तत्र वान्ता इवाद्भुतम् ॥ कुलकं ॥
मारी नाम नदी तस्माद्वितस्तान्तरमागता । केवलं याभवत्पौरस्नानपानप्रयोजना । ४४०
हस्तिकर्णाभिधे क्षेत्रे युक्त्या राज्ञा प्रवेशिता । सिन्धुसङ्गमपर्य्यन्तं निर्म्मिता शालिनालिनी ।
मृतानां देहदाहेन स्वर्गदो नगरान्तरे । स मारीसङ्गमः ख्यातो जातः सङ्गादितस्तया ।
यन्त्रैत्रपालाः कालेन किङ्कराः पञ्चवारिकाः । पौरेभ्यः शवदाहात्यमगृह्णन् शुल्कमन्वहं ।
मत्पितृप्रमेयो राजा विज्ञप्तः स यथैकदा । दण्डयित्वा किरातांस्ताञ्छवशुल्कं न्यवारयत् ।
ततः प्रभृति तत्स्थाने विमाना नगरान्तरे । दह्यन्ते दर्शनद्वेषिम्लेच्छानां हृदयैः समं । ४४५
निरर्गला वयं जाता इतीव शिविकारकैः । छत्रहस्तैः प्रनृत्यन्तो दृश्यन्ते वाद्यनिस्वनैः ।
दिगन्तरीयया रीत्या यत्र राज्ञाप्यवारिताः । प्रियानुगमनं नार्य्यश्चितामारुह्य कुर्व्वते ।
अर्थिसङ्घोपकारार्थं पौराणां सुकृती नृपः । विहारं बहुविस्तारं तत्सङ्गमतटे व्यधात् ।
स च हाव्ये विहारस्य पारावारे पुरद्वये । मृदश्रेणिमणिव्रातनायकश्रियमापतुः ।
अन्याः प्रतिष्ठास्तत्कालं राज्ञा स्वस्वेन कारिताः ।
श्रीहर्षोनृपतिर्ब्बभूव कविताराज्ये तदा येऽभवन् सर्व्वे ते कवयः किमन्यदपि ते सूदाः स्त्रियोभारिकाः ।
सन्त्यद्यापि कृतानि तैः प्रतिगृहं पद्यानि विद्यानिधौ राजा चेद्गुणवान् गुणेषु रसिकोलोकोभवेत्तादृशः । ४५०
कृत्वशाला विशालास्ता धर्म्मार्थं गुणशालिना । कृता याभ्यः श्रुतः शब्दस्तर्कव्याकरणोद्भवः ।
आचार्य्यपुस्तकावाससहायान्नसमृद्धिभिः । पाठयन् सर्व्वविद्यानां वर्द्धयामास मण्डलं ।
न विद्यासुखयोः सन्धिस्तेजस्तिमिरयोरिव । इति व्यर्थं वचश्चक्रे मुनीनामभयप्रदः ।
सौराज्यसुस्थिते देशे विद्याभ्यासपरायणे । अकार्षीत् सर्व्वदारोग्यं नृपतेः स्वस्य चान्वहं ।
राज्योत्पत्त्या नृपस्तादृगुत्कृष्टोऽभून्न प्रतिष्ठया । यथा पण्डितसामग्र्या यामग्र्यामविदद्गुणैः । ४५५
येषां स्वप्नेऽपि पाण्डित्यं नाभूच्चातुचिदन्वये । तेऽपि भूपप्रसादेन जाताः पाण्डित्यमण्डिताः ।
वर्द्धिता जीवनोपायैर्द्देवेन फलदाः सदा । याताः सहस्रशाखत्वं विद्याः कल्पलता इव ।
न सा विद्या न तच्छिल्पं न तत्काव्यं न सा कला । श्रीजैनभूपते राज्ये नाभूद्या प्रथिता भुवि ।
विदुषां मान्यतां दृष्ट्वा भूपतेर्गुणिवान्धवात् । काङ्क्षन्ति स्मापि सामन्ताः पाण्डित्यं नित्यमादरात् ।

निदाघकाले विषमः प्रतापोद्वेद्धुरिर्थ्यां तृणगुल्मपूगान् ।
वन्द्यो न केषां घनकालरक्तो यो जीवनेस्तान्विततान् करोति । ४६०

शेकन्धरधरानाथो यवनैः प्रेरितः पुरा । पुस्तकान् सकलान् सर्व्वांस्तृणान्यग्निरिवादहत् ।
तस्मिन् काले बुधाः सर्व्वे मौसुलोपद्रवाज्जवात् । गृहीत्वा पुस्तकान् सर्व्वान् ययुर्दूरं दिगन्तरं ।
किमन्यद्विजवंशेषु सर्व्वे ग्रन्था मनोरमाः । कथावशेषतां याताः पद्मानीव हिमागमे ।
सुमनोवल्लभेनाथ राज्ञा भूषयता क्षितिं । नवीकृताः पुनः सर्व्वे मधुनेव मधुव्रताः ।
पुराणतर्कमीमांसाः पुस्तकानपरानपि । दूरादानाय्य वित्तेन विद्वद्भ्यः प्रत्यपादयत् । ३६५
मोक्षोपाय इति ख्यातं वाशिष्ठं ब्रह्मदर्शनं । सम्मुखाद्भट्टणो राजा श्रीमद्वाल्मीकिभाषितं ।
श्रुत्वा शान्तरसोपेतां व्याख्यां स्वप्नेऽपि नो नृपः । अस्मार्षीदभिकाः कान्ताहावभावक्रिया इव ।
यो यद्भाषाप्रवीणोऽस्ति स तद्भाषोपदेशभाक् । लोकेन हि जना नानाभाषालिपिविदोऽखिलाः ।
इति संस्कृतदेशादिपारसीवाग्विशारदैः । भाषात्रिपर्य्यशास्त्रत्तच्छास्त्रं सर्व्वमचीकरत् ।
धातुवादरसग्रन्थकल्पशास्त्रोदितान् गुणान् । यवना अपि जानन्ति स्वभाषान्तरवाचनात् । ३७०
दशावतारपृथ्वीशग्रन्थराजतरङ्गिणीः । संस्कृताः पारसीवाचा वाचनार्हास्सकारयत् ।
बोक्षेटहत्कथासारं हाटकेश्वरसंहिताः । पुराणादि च तद्युक्त्या वाच्यते निजभाषया ।
कश्चित्कृत्वा शुश्रविरचितं चिरं धर्म्मशास्त्रं पवित्रं धत्ते चित्ते पट इव सितो रञ्जनं तत्क्रियां च ।
आकर्ण्यान्ये प्रतिदिनममुं पद्मिनीपत्रतुल्याः कुल्याधारा अपि धृतगुणा गृह्णते तन्न किञ्चित् ।
नीलनागगिरेर्य्यात्रामाकर्ण्यादिपुराणतः । तीर्थयात्रोत्सुकं राज्ञः कदाचिदभवन्मनः ।
एकोनचत्वारिंशेऽब्दे पितृपक्षानुवासरे । यात्रादिदृक्षया भूपो जगाम विजयेश्वरं । ३७५
नानावर्णांशुकच्छन्नैः प्रेक्षकैः परिपूरितं । पुष्पाकीर्णमिवोद्यानमद्राक्षीद्रङ्गमण्डलं ।
यत्र वान्द्रपालाद्या राजानो वीक्ष्य सद्दलाः । तद्वर्षे दर्शनायाता हर्षमन्वभवन्निति ।
गगनं तारकापूर्णं दीपाढ्यं रङ्गमण्डपं । यत्रान्योन्यं तुलां चक्रे रात्रौ कविबुधार्चितं ।
अमावस्यादिने प्राप्तैर्नानानागरिकामुखैः । शुशुभे शुभदं यत्र शतचन्द्रं भुवस्तलं ।
दीपवृक्षो नवाङ्गोऽपि यत्र रङ्गान्तरे स्फुरन् । दधे तारकमध्यस्थसत्कृत्तिकर्क्षचयोपमां । ३८०
विजयेशाद्यात्राय भूपः पुत्रद्वयान्वितः । पद्मामुखान्तरद्वारं प्रपेदे वासरैस्त्रिभिः ।
दृष्ट्वा क्रमसरो विष्णुपादमुद्राङ्कितं प्रभुः । पादप्रणामजानन्दमविन्दद्भक्तिसुन्दरः ।
ब्रह्माच्युतशगिरयः पतत्तोयरवच्छलात् । अकुर्व्वन् कुशलप्रश्नं हरांशजमहीभुजे ।
कस्तूरीकुसुमश्यामोद्दामहागारावनिं गिरेः । दृष्ट्वा तुष्टो नृपश्रेष्ठो योगीवेष्टां हरेस्तनुं ।
अथ नौकां समारुह्य धीवरैः पञ्चषैर्वृतां । धृत्वा मां सिंहभट्टञ्च चचार सरसोऽन्तरे । ३८५
गीतगोविन्दगीतानि मत्तः श्रुतवतः प्रभोः । गोविन्दभक्तिधंसिको रसः कोऽप्युदभूत्तदा ।
कुञ्जप्रतिश्रुतामञ्जुर्गीतनादस्तदावयोः । अनुगीत इवाश्लेषैः किन्नरै राजगौरवात् ।
क्षणं सरोऽन्तश्चरतो हिमवृष्टिनिभादिभोः । भक्तिप्रीतैरिवोन्मुक्तं देवैः कुसुमवर्षणं ।
दृष्ट्वा सरोऽन्तरे श्वेताहिमान्योभ्रमणाकुलाः । तीर्थयात्रागतैलासदृक्षभक्त्तिभ्रमं व्यधुः ।

सत्यं विष्णववतारस्य येन भक्त्या प्रदक्षिणं । चोन्मारानकरोन्नूनं ज्ञातुं स्वक्रमविक्रमं । ४९०
योऽभूदागमसिद्धार्थो नौबन्धनगिरिस्सदा । प्रत्यक्षतः कृतो राज्ञा बद्धा नौकां यदागतः ।
सुकुमारसरोयावत् सुकुमारः स्मरन् पथि । सुकुमारोऽम्बुपानेन सुखं दुःखमिवाचरत् ।
पश्यन् स्थानाभिधाः पुण्याः स्पृशंस्तीर्थजलं शुभं । पिबन् सतुहिनं तोयं पश्यन्ननतश्रियं ।
जिघ्रन्नोषधिपुष्पाणि पञ्चेन्द्रियसुखप्रदां । तीर्थयात्रां विधायेत्थं नगरं प्राप भूपतिः ।
इति जैनराजतरङ्गिण्यां क्रमसरोयात्रावर्णनं नाम पञ्चमः सर्गः ॥

ततः क्रमसरस्तुल्यं राजा पद्मपुरान्तरे । तत्कौतुकापनोदाय चक्रे जैनसरो नवं । ४९५
फुल्लत्कुङ्कुमपुष्पौघश्यामीभूतस्थलच्छलात् । शरदीवागता प्रीत्या यमुना यत्सरोवरं ।
कुलोद्धरणनागाख्यमण्डिते यत्तटे नवं । राजद्राजगृहं राजा राजराजोपमो व्यधात् ।

उच्चैःपदस्थममलं रुचिरञ्जिताशं सम्पूर्णमण्डलमखण्डकलाकलापं ।

राजानमीशमवलोक्य हृतोपतापं काङ्क्षन्ति के न नितरामपि दूरसंस्थाः ।

दिगन्तरीया भूपालाः श्रुत्वैतद्गुणगौरवं । नानोपायनवर्षौघैर्ववर्षुर्नितरामसुं ।
वेगेन जितवायुं स्वं ताजिकाख्यं तुरङ्गमं । उपदां व्यसृजत् सख्यादस्मै पञ्चनदप्रभुः । ५००
किन्नरोऽश्वमुखः ख्यातः कण्ठान्नृत्यं न वेत्त्यसौ । इतीव नाट्यं योऽदर्शयदग्रे कृतोऽकरोत्पथि ।
प्रवालहस्तः सद्रश्मिः सुखलीनः सुलक्षणः । यथासावश्वमित्यन्तु नासहिष्टास्य ताडनं ।
पादैश्चतुर्भिः शुद्धो योऽसुखनश्येन चावहत् । कल्याणपञ्चकख्यातिं कल्याणाभरणोज्ज्वलः ।
माण्डव्यगोत्रभूमीशः खलश्योयो महीपतिः । श्रुतुचन्दरन्दामनामवल्लेऽपाहितैः ।
इतोऽस्मै नृपो भव्यं काव्यं कृत्वा स्वभाषया । प्राहिणोद्द्व्यसंयुक्तं सव्यसाच्यपजोपमः । ५०५
सोऽप्यनर्घैः पदार्थैश्च तथा तुष्टो महीपतेः । सालङ्कारैर्यथा भूपकाव्यस्यातिमनोहरैः ।
वस्त्रं नारीकुञ्जराख्यं कुम्भराजो विसर्ज्जयन् । अहरद्धृदि तच्चेष्टनारीकुञ्जरकौतुकं ।
राजा तुगरसेनाख्यो गोपालपुरवल्लभः । गीततालकलावाद्यनाट्यनृत्तलक्षितं ।
सङ्गीतचूडामण्याख्यं श्रीसङ्गीतशिरोमणिं । राज्ञे गीतविनोदार्थं गीतग्रन्थं व्यसर्ज्जयत् ॥ युग्मं ॥
तस्मिन् राज्ञि दिवं याते कीर्त्तिसिन्धो महीपतिः । तत्पुत्रः पितृवत्प्रीतिमरक्षत् प्रहितोपदः । ५१०
मण्डलीकाधिपो राजा स्वराष्ट्रनगराधिपः । प्राहिणोन्नृपतेः प्रीत्या ललामकमनोयकं ।
चित्रवर्णाः समस्तपत्रलक्ष्यशोभान् महीपतेः । पक्षिणो मृदुकुन्दाख्यान् प्राहिणोदक्षिसुन्दरान् ।
जिघांसया चरन् सोऽपि भूपतेः प्राकृतैर्गुणैः । बद्धो हिंस्रोऽपि शिक्षितो वकोरकोपमः ।
कश्चित्क्षीराजहंसस्य राजहंसयुगं ददौ । अन्ये हंसा यदुत्पन्ना राजहंसमरञ्जयन् ।
सरस्वन्तर्भ्रमन्तस्ते निर्दाराः पंक्तिपावनाः । तरङ्गतरलोत्फुल्लश्वेतोत्पलतुलां दधुः । ५१५
खुरासानमहीपस्य यस्यैवाज्ञा शयप्रभोः । मूर्ध्ना मन्दारमालेव ध्रियते दिगधीश्वरैः ।
शस्त्रायुधोर्ज्जितकराः किङ्कराः सुभयङ्कराः । यमस्य चार्पितकरा व्यचरन्धरणीतले ।

उत्तराशाधिपोमेर्जाभिधेद: स महीभुजे । उष्ट्राश्ववेसरीयुक्तं व्यसृजत्स्रोपधिश्वरं ।
कतेहसोहसम्लातख्यातवस्त्राद्युपायनै: । महम्मदसुरत्राणोगूर्जरीशोऽप्यतूतुषत् ।
गिलानमेसमक्कादिदेशाधीशा हितेच्छया । दुर्लभोपायनैस्तैस्तैर्न के भूपमरञ्जयन् । ५२०
अनल्पा: शिल्पिन: कल्पद्रुचकल्पसमं न के । भङ्गादवाययुर्दूराच्छिल्पकल्पितकल्पना: ।
काश्मीरिका अथाभ्यस्य तुरीवेमादिचातुरीं । कौशेयकं वयन्त्यद्य बज्जमूल्यं मनोहरं ।
और्णास्रोहादयोवस्त्रविशेषादूरदेशजा: । काश्मीरिकास्तु भान्त्यद्य समर्थास्ते नृपोचिता: ।
विचित्र वयनोत्पन्ननानाचित्रलताकृती: । दृष्ट्वा चित्रकरा येषु जाताश्चित्रार्पिताइव ।
अनन्ततन्तुसन्तानवर्णविच्छित्तिसुन्दर: । बभौ कौशेयकख्यातो देशोवेशस्य भूपते: । ५२५
नानावर्णविशेषचित्रकटकालङ्कारसारोचितोविद्यामानवराजितोऽतिसुखद: कौशेयताख्यातिमान् ।
शोभान्वित्यमहोज्ज्वलोऽतुलगुण: सत्तन्त्वसम्पत्तिमद्राज्ञा तेन विशेषितोनिजधिया वेशोऽपि देशोऽपि वा ।
इति जैनराजतरङ्गिण्यां चित्रोपचयशिल्पवर्णनं नाम षष्ठ: सर्ग: ॥

दाता भवेत् क्षितिपतिर्यदि सादरोऽयं लोकोऽपि दर्शयति तत्स्वकलाकलापं ।
वर्षासु वर्षति घनो यदि चातकोऽपि नृत्यन्मुदा भवति तज्जनरञ्जनाय ।

अथोत्तरपथाद्दानख्यातकीर्त्तेर्महीभुज: । रज्जुभ्रमणशिल्पज्ञ: कोऽप्यगाद्यवनोऽन्तिकं ।
विंशप्रस्थाभिधे स्थाने कदाचिद्यवनोत्सवे । तं द्रष्टुमगमद्राजा परिवारविभूषित: ।
धनुर्दण्डशतायामान्तरस्थान्दीर्घरज्जुभि: । उच्चान् स्तम्भानबध्नात्स स्वशिल्पप्रथनोद्यत: । ५३०
अभवन् कलुषास्ते ये नागा रज्जुपुरादिषु । भाविस्तम्भकभूपालदेहानिष्टेक्षणादिव ।
अथो भूभागलग्नैकरज्जुमार्गेण निर्भय: । आरोहमकरोत्तत्र पतन्नीव नभोन्तरे ।
निपातास्खलितां तत्र लोकचित्तानुरञ्जिकां । कवितामिव शिल्पज्ञाश्चित्रां पदगतिं व्यधात् ।
अनीचवर्त्तिनस्तस्य यहस्येव फलप्रदा । सुरस्त्रिराशिगम्यालं बभूवाश्चर्यवर्णना ।

कृत्वा सुखं सुरुचिरं सुचिरं विधाता दु:खं पुनर्जनपदे जनयत्यसह्यं ।
वर्षं प्रदर्श्य जलद: कृषिकर्षहेतुं नेतुं फलं वितनुते करकाविकारं । ५३५

सौराज्यसुखिते देशे नरेशे निरुपद्रवे । अकस्माद्दु:सहान् जातानुत्पातान् ददृशुर्जना: ।
उत्पातङ्कागमे सेतुर्हेतु: सर्व्वजनक्षये । अथोत्तरदिशा रात्रै धूमकेतुरदृश्यत ।
दीर्घपुच्छोच्छलत्कान्तिस्केतुकपटाद्ध्रुवं । कालेन द्रुघणं क्षिप्तं चयायेव महीक्षितां ।
मासद्वयं स्फुरन्नाभोत् स व्योम्नि विमले सदा । सदये हृदये राज्ञश्चिन्तोघोऽनिष्टशङ्कया ।
अदृश्यन्त सदा श्वानो विक्रोशन्त: पुरान्तरे । शुचेव रुदिताक्रन्दा भाविविघ्नेक्षणादिव । ५४०
एकपक्षेऽभवच्चन्द्रसूर्य्यग्रहणसंस्थिति: । एकपक्षमिवादातुं राज्यं राजविपर्य्ययात् ।
सूर्य्यसङ्क्रान्तय: क्रूरदिनेष्वासांस्तदा विशां । भाविक्रूरकलोत्पादसादचिन्तनभीतिदा: ।
मन्त्रिमाता वयं यास्यथ्यं किमिति दु:खिता । राजधान्यहदच्छन्तत्त्वोलूकध्वनिच्छलात् ।

दृष्टोऽम्बरे द्वितीयस्यां सुधांशुस्तत्र तैर्जनैः । उत्पातदत्र भूपेशमन्यं सूचयितुं विशां ।
अत्रान्तरे महाघोरममानुष्टितकृतं भयं । उदभूदन्यदेशेषु दुर्भिक्षोपद्रवावहं । ४४५
भिक्षुकानन्यदेशीयान् प्रेतरूपानिवागतान् । दृष्ट्वा पृच्छन्नृपस्तेः च वार्त्तां तस्यामुवन्निति ।
राजन् देशेष्वनेकेषु वृष्ट्यभावात्समन्ततः । सर्व्वान्तकृत् कालइव दुष्कालः समुपस्थितः ।
दुर्भिक्षेण प्रभवतां मणीनां सा महार्घता । नीता नीचेन साधूनामिव सर्व्वोपयोगिनां ।
भुञ्जते श्वादयोऽन्योन्यं पिशितं क्षुदुपद्रुताः । तत्तच्छून्यगृहान्तःस्थनिःशेषितसत्रप्रजाः ।
स्पृष्टोच्छिष्टतया दृष्टप्रायश्चित्तादिनिष्ठिताः । क्षुधा द्विजवरादेवप्रयाताः सर्व्वभक्ष्यतां । ४५०
क्वापि विप्रस्त्रियस्तत्तदभक्ष्याश्नीक्षणक्षमाः । पक्वान्नं सविषं भुक्त्वा स्वमन्यांश्च व्यसून् व्यधुः ।
अदृष्ट्या वसतिं त्यक्त्वा गते क्वापि मृते जने । शून्याः केन पुरग्रामा दृष्टा राजन् पदे पदे ।
प्रीतिं स्नेहञ्च दाक्षिण्यं पत्न्यां पुत्रे पितर्य्यपि । कुक्षिम्भरिः क्षुदुत्तप्तो विस्मरत्यवनौ जनः ।
खुरासानावनीशक्रं त्रिकान्त्या शत्रुभूमिगं । अन्नाभावाद्बलाम् भिन्नमभिषेणेन निर्गतं ।
मेर्जाभीषिदनामानं सुरत्राणं रणान्तरात् । इराकभूपतिर्बद्धावधीत् कोटिबलान्वितं ॥ युग्मं ॥ ४५५
तस्य दुर्य्योधनस्येव बद्धस्य हरणक्षणे । अभूत्संख्यान्तरेऽसङ्ख्यतुरुष्कनृपतिक्षयः ।
देशेषूद्भूतदुष्कालबलाबलविपर्य्ययात् । अन्योन्यनृपयुद्धेन विप्लवेदेव पदे पदे ।
सुखप्रदं भवद्देशं श्रुत्वास्मादिसमृद्धिभिः । आगतांस्तत्समापाल रक्षास्मान्भिक्षतान् क्षुधा ।
श्रुत्वेति वार्त्तामार्त्तास्तां जामस्मित्र निजां प्रजां । द्रव्यकोटिं ददौ राजा तदर्थं करुणाकुलः ।
अत्रान्तरे स्वयं सिद्धकृतं स्वय्यपुरं महत् । समस्तं वह्निना दग्धं शून्यारण्यमिवाभवत् । ४६०
क्रमराज्यस्फुरत्प्राज्यराज्यतन्त्रक्रियाङ्कितं । भूर्जभाण्डादि तत्रस्थं समस्तं भस्मसादभूत् ।
प्राच्या जैनगिरिश्चैत्रे सप्तमांशोऽत्र भाविभिः । इति ताम्रमये पट्टे कल्पं यस्यां व्यधान्नृपः ।

श्रीमाञ्जैनोल्लाभदीनोययाचे सर्व्वान् भूपान् भाविनो जैनगिर्य्यां ।

कृष्टोत्पाद्य स्वैर्धनैर्भूर्म्मयात्र तस्या याच्यः सप्तमांशो भवद्भिः ।

जलावतरणं कृत्वा गिरीनुल्लङ्घ्य मण्डनः । पुण्यकेतुरयं सेतुर्व्वर्द्धनीयः शुभेच्छया ।
इत्थं ताम्रमये पट्टे श्रीबकाशीर्षनिर्म्मिता । प्रशस्तिरासीत्तां राजधानीवक्षोऽरच च । ४६५
प्रदीप्तः सुकृतोत्कर्षद्वेष्यैव महीपतेः । अग्रहद्राजधानीं तां मध्यस्थामपि पावकः ।
श्रुत्वा दग्धं पुरं राजा शुचा दग्धो विदग्धधीः । अचीकरन्नवं तूर्णं चारु दारुमयैर्गृहैः ।
राजा वराहमूलीयां राजधानीं पुरा कृतां । आनीय विदधे तत्र राजवासं नवं महत् ।
तत्रायकृत्पागारं सेतुमन्तोम्भितं नवं । क्रमराज्यश्रियो हारं सारं स्वय्यपुरं व्यधात् ।
सेतुमन्तोम्भिते तत्र गृहश्रेणिमणिव्रजे । राजधानी स्फुरच्छवा धत्ते मध्यमणिश्रियं । ४७०

मानुष्यकं नववसन्तमिवाप्य सद्यं लोकालताइव लसन्ति नवे वनेऽस्मिन् ।

तद्वान्ध्ववार्त्तचिकरादिव पुष्पपूगाः स्थित्वा दिनानि कतिचिच्चतुरं प्रयान्ति ।

विहङ्गेष्विव आतपत्रपूगः पुरुषेषु प्रभवेत्कुटुम्बवर्गः।
सुखगत्युचितोऽपि तत्प्रतिष्ठो न चिरन्तिष्ठति कायकष्टदायी।

अत्रान्तरे दिवं याता सावोधाखातोनाभिधा। श्रीमत्सेदाम्बयोदम्बचन्द्रिका नृपतिप्रिया।
यत्संयोगसुखं प्राप्य सोऽभ्यासीत्सफलस्पृहः। तद्वियोगाद्विदग्धाङ्गः सर्व्वं शून्यमिवाविदत्।
व्यस्ताराजेन्दुमा सिन्धुदेशे योगुणसुन्दरः। सुरत्राणेन सुरत्राणपदे प्राणाधिकप्रियः। ५७५
श्रीक्यामदेनं सिन्धीशं भागिनेयं सुतोपमं। एव्वराहिमनाम्ना तं हतं युद्धेऽशृणोन्नृपः।
परमाश्वासनोपायः सुखे दुःखे च योऽभवत्। तदा तन्मरणं राजा भुजच्छेदमिवाविदत्।
इर्य्यावखानादिम्हतौ याभून्मन्त्रिसभा नवा। लोलामित्रैः समं सर्व्वा सा ययौ स्मरणीयतां।
समन्मदो विभुप्राप्तकार्य्योत्पादितसौहृदः। तत्कालं प्रमयं यातोदाता मेरखुशाह्वदः।
दुर्व्वार्त्तामश्वहं शृण्वन्नाप्तानां जानविंशां प्रजां। स्वसुतान्योन्यवैरेण विन्नातस्तान्नृपोऽभवत्। ५८०
अतीतान् बान्धवान् भृत्यान् सखीन् प्राणसमान् स्मरन्। स्वात्मानमविदद्राजा यूथभ्रष्टमिव द्विपं।
अत्रान्तरे राजसूनोर्हाज्यखानस्य रङ्गगं। अस्वास्थ्यमुदभून्नित्यं मद्यपानातिसेवनात्।
शौर्य्यौदार्य्यनिधेः सूनोरतिप्रियतया तया। राज्यश्रीरप्यगता राजहृदुद्याने फलाचिता।
तदाभून्नीरसप्राया तदस्वास्थ्यदवाग्निना। सभानीयान्तिकं दृष्ट्वा सविकारं भृशं कृशं।
स्नेहादित्यब्रवीद्राजा पुत्त्रं मन्त्रिसभान्तरे। अहो पुत्त्रफलं लब्धं दोषासक्तेन पानजं। ५८५
येनेदृशी दशा प्राप्ता चन्द्रेणेव क्षयावहा। स्वार्थापेक्षी हितः कोऽपि भृत्यस्ते नास्ति रक्षकः।
पानव्यसनसंसक्तं यस्त्वामुपदिशत्यलं। कियन्तोऽद्यतना भोगाश्चमत्कारकरास्तव।
किमेकेन भवान् ग्रस्तो विषयेण पतङ्गवत्। अस्मिञ्जन्मनि सामग्री येयं प्राप्तान्यदुर्लभा।
प्राप्ता नैवेदृशी भूयाद्यदि दुर्व्यसनी भवान्। किं चिरन्तनवृत्तान्तैर्वृष्ण्यादीनां समीरितैः।
मद्येनातनु भूपाला दृष्टनष्टा विचार्य्यतां। तथाहि सबलारातिगणतूलसमीरणः। ५९०
मल्लिकजसथा योऽभून्मद्राज्याग्निनिधानभूः। तेनापि दृष्टं दुष्टं प्राक् सोऽत्याचीत्तत्सुतस्त्वकः।
तस्य पुत्त्रोऽभवच्छाहिमसोदः प्रमये पितुः। सर्व्वं हारितवान् क्षीवः कुर्व्वन्नर्म्म तु चेष्टितं।
सप्त प्रकृतिधात्वाढ्यं तन्मल्लिकपुरं महत्। कुपुत्त्र व्यसनाघातं देहवत् स्मरणीयतां।
मद्यं यशोहितं वर्णं विभर्त्ति चषकान्तरे। जाने पापप्रवृत्तानां हृद्रक्तमिव जायते।
न मद्येनामुना तुल्यः प्रचुरस्ति हि देहिनां। सेवितोऽहितकृच्चर्मेश्यं हन्यति सेवितं। ५९५
मैरेयमदमत्ता यां कुर्व्वन्त्यनुचितां क्रियां। उन्मत्तोऽपि न तां कुर्य्याद्यत्स तस्मात्पलायते।
मद्यरूपेण वेतालः प्रविश्य हृदयं क्षणात्। न केषां हरते प्राणान् सहासहृदितक्रियं।
विषेण वामुना पुत्त्र पीतेनापीदृशी दशा। पाहि स्वं त्यज सावद्यं मद्यमद्यप्रभृत्यतः।
न चेत्त्यजसि मूढस्त्वं व्यसनार्पितमानसः। अचिराद्धिनो लक्ष्म्या प्रक्षीणायुर्भविष्यसि।
श्रुत्वेति राजपुत्त्रस्तु स्वपितुः सम्मतागिरः। त्वदाज्ञां न विना मद्यं पिवामीत्युत्तरं व्यधात्। ६००
दीप्त्युज्झितं क्षीणदशं मन्दसस्नेहभाजनं। सुतं दीपमिवैक्ष्याभूद्भूपो मोहतमोहतः।

उपदेशगिरः प्रियाः श्रुतौ गतभाग्येषु भवन्ति जन्तुषु। विपदभ्युदये पुनः स्मृता न मयाश्रावि किमित्यहन्मुदाः।
अथ खावसथं गत्वा सोऽपिवद्यन्त्रितोऽपि सन्। विषवद्धसनान्धानामुपदेशो निरर्थकः।
तावता स्नेहमाशङ्क्य राजपुत्त्रेति मन्त्रिणः। आदमखानमानिन्युर्गूढलेखैर्दिगन्तरात्।
अनुज्ञागमनत्रासाद्यथा यातोऽग्रजः पुरा। तथाग्रजागमत्रासादनुजो याति देशतः। १०५
एतत्कलहनिश्छिन्नः प्राग्वत्स्यां निजमण्डले। इति बुद्ध्वा प्रवेशोऽस्य कृतोपेक्षो नृपोऽभवत्।
हाज्यखानात्मजः श्रुत्वा तं पितृव्यं समागतं। युयुत्सुः प्राप पर्णोत्समभ्यक्त्वा राजपुरीं ततः।
आर्द्रोढकोटमाश्रित्य भ्रातृपुत्त्रपितृव्ययोः। कश्मीरागमनद्वेषादभवद्युद्धमद्भुतं।
दृष्टं हसनखानस्य चमित्वं बलशालिनः। विना पैतामहीमाशां नागाद्देशोत्सुकोऽपि सन्।
अग्रजेऽभ्यन्तरं प्राप्ते द्वारस्थे लज्जिते पितुः। हाज्यखानोऽनुजयुतो युक्त्या साम प्रयुक्तवान्। ११०
दिव्यं मौसुलदेवेन ते कृत्वापि परस्परं। नात्यजन् हृदयाद्वैरं कार्ष्ण्यमौर्णादिवांशुकाः।
अहो गुहायामेकस्यां प्राप्ता सिंहचतुष्टयी। एतदन्योन्यवैरोत्थानाशोऽयं समुपस्थितः।
राज्ञोदेशस्य खानानां परिवारस्य मण्डले। सर्व्वांस्तान् मिलितान्दृष्ट्वा प्रोवाच सकलो जनः॥ युग्मं॥
अत्रान्तरे द्वयोर्द्दिष्टं कनिष्ठं श्रेष्ठमात्मजं। विचार्य्यानीय बहामखानं सविजनेऽब्रवीत्।
बहाम ज्येष्ठभ्रातायं द्विष्टो दुश्चेष्टितैः कृतः। स्मृतपूर्व्वापकारोऽयं हितो जातु न ते भवेत्। ११५
अन्यं यं सेवसे भक्त्या दुराशायस्समानसः। स कथं स्वं सुतं त्यक्त्वा कार्य्ये त्वां समपेक्षते।
तस्मात्त्वं पैशुनाचारं मा कृथा भाविदुःखदं। मदेकशरणो भूत्वा कालं नय ततोऽचिरात्।
प्राप्स्यन्ति सम्पदः सर्व्वा न्यायमार्गस्थितस्य ते। अन्यथा तैलतप्तायःकटाहकरणोनिभः।
तद्वैरानलमध्यस्थो मुग्धदग्धो भविष्यसि। श्रुत्वेति स पितुर्वाक्यं मुग्धधीरब्रवीदिदं।
देव मे पितृवत्स्नेहं हाज्यखानः करोत्यलं। सेव्यः स एव मे भाति न त्यजे नैव जातुचित्। १२०
रक्षिष्यति स मां काले कोऽन्योऽस्मादधुना बली। श्रुत्वेति भूपः प्रोवाच क्रुद्धस्तं कृतनिश्चयं।
हा धिक्त्वां मां परित्यज्य पितान्योऽङ्गीकृतस्त्वया। दृष्टिर्या विहिता मूढ प्रोज्झ्य च वचनं मम।
तस्यानाशोऽचिरेणैव भविष्यति न संशयः। इत्युक्त्वा प्रतिमुच्यामुं स्वान्तरेवमचिन्तयत्।
अहो प्रदीप्तान्मत्तोऽमी जाता विसदृशाः सुताः। यथोऽमी दहनागारादिव हा भस्ममुष्टयः।
अयोग्या दीप्तिरहितो काष्ठाः कष्टावनिष्ठिताः। कदाचिद्विजने राजा सुतानिष्टाविशङ्कितः। १२५
अधुना करणीयं किं मयेति व्यक्तमब्रवीत्। तत्समक्षं बुधा येऽपि तत्प्रसङ्गादभाषिरे।
राजसुत्सायते देशोराज्यलुब्धैः सुतैस्तव। एकस्यैव निजं राज्यं किं नार्पयसि योहितः।
व्याकुलत्वं विशां येन तव न स्याच्च भूपते। तथापि माणिक्यदेवः श्रुत्वामुं प्रबलं श्रिया।
वैरी स्यादेन देशस्य सर्व्वनाशोऽचिराद्भवेत्। इति श्रुत्वाब्रवीत् पुत्त्रस्वभावेक्षणदक्षधीः।
ज्येष्ठः श्रेष्ठोऽस्ति किन्त्वस्य कार्पण्यं येन सेवकाः। न सन्ति तादृशा येषां राज्यं दार्ढ्यमवाप्नुयात्। १३०
मध्यमोऽतीव दातास्य प्रयुक्ताचलसन्निभं। युक्तं चेत् स्याद्ध्ययाच्यास्य कर्षमाचोऽवशिष्यते।

कनिष्ठादुष्टधीः पापनिष्ठोऽस्मादचिरात् सभा । नष्टा स्यात्तत्सुतं श्रेष्ठं जाने कमपि नोचितं ।
मया तावत् स्वयं राज्यं कस्मा अपि न दीयते । गते मयि बलं यस्य स प्राप्नोत्विति मे मतं ।
बहवो न मरिष्यन्ति यदि तन्मम कोऽगुणान् । गणिष्यति यतः स्थित्या द्वयोर्भेदोऽपि लभ्यते ॥ कुलकं ॥

ध्वान्तं पतेद्यदि न दिक्षु जनस्य दृष्टिर्नश्येन्न चेद्यदि मुषन्ति न तस्कराद्याः ।
सङ्कोचमेति गुणवान् यदि नाम नाशो जानाति यो दिनमणिं परलोकयातं । ६३५

स्ववीर्येणार्ज्जितं राज्यं योजितं स्वधिया मया । कुपुत्त्रैर्नाशितं सर्व्वं परस्परविरोधिभिः ।
सप्ताङ्गन्यातुसम्बद्धं राज्यं देहमिवोर्ज्जितं । दोषैरिवैनैः पुत्त्रैर्मे त्रिभिस्संदूषितं नु यत् ।
तत्स्वास्थ्यमासादयितुं शक्ताः पथ्यचिकित्सया । सन्मन्त्रिणोऽगदङ्कारा न सन्त्ययतने क्षणे ।
भुक्ता भोगाश्चिरं शास्त्रगीतकाव्यविनोदनैः । वयः सफलतां नीतं कार्य्यं किमपि नास्ति मे ।
देशस्य यावदुत्पत्तिर्नवा तत्त्रिगुणा मया । सम्पादिता प्रजास्नेहात्कुल्याकर्षणयुक्तिभिः । ६४०
सर्व्वदर्शनरक्षायै पात्राण्यालोच्य सर्व्वतः । प्रतिपद्य शुभे काले भूर्नवा धर्म्मसात्कृता ।
सच्छिद्रमधुना राज्यं वदने रदनोपमं । तुदति प्रत्यहं तस्मात्तत्त्यागेन सुखं मम ।
चौराणामिव दीपोऽहं येषामचिरगतोऽभ्यहं । अचिरात् सगुणस्थित्या ते स्युरनुशयार्द्दिताः ।
श्राम्यन्ति न चिरं तेऽपि मद्विष्टा ये सुतादयः । सकलाः प्रलयं यान्ति भुक्ता धान्यफलं न किं ।
युष्मा निर्म्याणमेवास्य जीवस्येच्छामि साम्प्रतं । येन सर्व्वे भविष्यन्ति पुत्त्राः पूर्णमनोरथाः । ६४५
श्रुत्वेत्युक्तिं सदुःखस्य नृपतेस्ते ऽब्रुवन्पुनः । देवेदं चेन्मतं तत्किं कोषोऽयं रक्ष्यते महान् ।
परलोकस्य पाथेयं कुरु जीवन्नमुं व्ययं । तदाकर्ण्याब्रवीद्राजा युक्तमुक्तमिदं वचः ।
किन्तु शृण्वन्तु मे हेतुं यत्कोषोऽयं धृतोऽम्भतः । मयि प्रमीते मद्राज्यं मत्पुत्त्रः कोऽपि चेल्लभेत् ।
मत्सञ्चयेन तृप्तः स प्रजायाः स्वं वर्जयिष्यति । पुत्त्राधिका प्रजेयं मे रक्षणीया विभाति या ।
तस्याः पीडां भविष्यन्तीं हरिष्ये सञ्चयादतः ।
पूर्णो विलासान् कुरुते प्रजेशो रिक्तः प्रजापीडनमातनोति । तृप्तो मृगेन्द्रो रमते गुहान्तं भुङ्क्ते क्षुधार्त्तो वनजन्तुवर्गं । ६५०
मत्सञ्चयोपकारेण भाविभिः पीडनोज्झितैः । आयतिज्ञं वदद्भिर्मा करिष्यन्ते न गर्हणाः ।
पूर्णाद्राजगृहादन्ये पूर्णाः स्युरुपकारकाः । नयन्त्यम्भो न चेत्तोयं भूमौ वर्षन्ति किं घनाः ।

इयं या सामग्री भवति नृपतेः सर्व्वहृच्चिरा धनेनैकेनैव प्रभवति चिरं सा प्रभवता ।
फलं पत्रं पुष्पं समदयति यद्वद्विटपिनो धरण्यन्तर्भूतो जनयति तदेको रसगुणः ।

स दीर्घदर्शिनो वाक्यं श्रुत्वेति पृथिवीपतेः । आश्चर्यचर्य्यकर्त्तारस्तदग्रे ते निरुत्तराः ।
राजवेश्मनि पयोनिधौ च या वाहिनीभृति पदार्थपूर्णता । जीवनाप्तजनयाचकार्थिना सैव तस्य सुषमा समाहिता । ६५५
यद्यदुक्तं नरेन्द्रेण स्मृत्वा तत्तत्फलेक्षणात् । न कः प्रशंसति प्राकार्न्तदीयां दीर्घदर्शितां ।
सचिवाः सेवकाः पुत्त्रमित्त्रसम्बन्धिबान्धवाः । दुःखापनोदं कर्त्तारो. केऽपि नासन्महीभुजे ।
राजा गर्भगृहान्तस्थः शृण्वन् पुत्त्रस्थितिं मिथः । कृतकप्रेमवैराढ्यां न बहिर्निरयाद्भिया ।

संसारदुःखशान्त्यर्थं मन्त्रोव्याख्यानवेदिनः । अष्टणोद्गुणराजं स श्रीमोक्षोपायसंहितां ।
स्वकण्ठस्वरभङ्गाद्यमुद्वृत्तपरिवर्त्तनैः । व्याख्यामकरवं येन निःशोकोऽभूत्क्षणं नृपः । १६०
भ्रमस्य जाग्रतस्तस्य जातस्याकाशवर्णवत् । अपुनःस्मरणं साधोर्मन्ये विस्मरणं वरं ।
दीर्घस्वप्नोपमं विद्धि दीर्घं वा प्रियदर्शनं । दीर्घं वापि मनोराज्यं संसारं रघुनन्दन ।
यदि जन्म जरा मरणं न भवेद्यदि वेष्टवियोगभयं न भवेत् ।
यदि सर्व्वमनित्यमिदं न भवेदिह जन्मनि कस्य रतिर्न भवेत् ।
यतोयतो निवर्त्तेत ततस्ततो विमुच्यते । निवर्त्तनाद्धि सर्व्वतो न वेत्ति सुखमण्वपि ।
सद्व्याख्याश्रवणाभ्यस्तान् स्वावस्थासूचकान्वहन् । इत्यादिकान् स्वयं श्लोकानपठत्स महीपतिः । १६५
मोक्षोपाये श्रुते मत्तस्तत्तत्पद्यार्थभावनात् । अथैकदाग्रतोद्राजा विबुधानन्तिकस्थितान् ।
किमर्थं स्वसुतस्नेहं करोम्येकोऽन ते स्थितः । इत्येव वक्ति मे नूनं कर्णोपान्तागतो जनः ।
अस्थिदन्तादिभिर्भुक्ता मांसं मांसेन भुज्यते । रक्तवीजमये भोगे भ्रमोऽयं न व्यपैति मे ।
अहो मयि मृदौ सर्व्वसुखदे च्छिद्रकारिणः । नाशायासो सुताजातारात्कृते क्रिमयो यया ।
येस्मि स्वर्वयोनीतं तेऽवशिष्टा न केचन । आजीवनं चलत्येषा तद्वियोगविषव्यथा । १७०
देहोटजमिदं जीर्णं केशतृणगणावृतं । सच्छिद्रं रोचते नाद्य दुर्दिने मन्मनोमुनेः ।
भुजगैरिव दष्टानि राज्याङ्गानि सुतैर्मम । तत्त्यागोपायमेवैकोऽयुक्तोऽस्मि नान्यथा सुखं ।
इत्यादि चिन्तयन्राजा पारसीभाषया व्यधात् । काव्यं शीकायताख्यं स सर्व्वगर्हार्थचर्च्चितं ।
राज्ञोधात्रेयपुत्राद्याः प्रसैयैरपि सत्कृताः । भूपपक्षं परित्यज्य हाज्यखानमुपागमन् ।
किमन्यद्बालकर्मवाक्षि ये दृष्टा नृपसन्निधौ । अवलत्यन्त निशि स्वैरं ते खानाये गतत्रपाः । १७५
ताटस्थ्येन स्थिते राज्ञि तद्भृत्यानां परस्परं । तत्तदाक्षेपतो देशे कोऽप्यजृम्भत विप्लवः ।
भविष्यन्निव साम्राज्यस्यार्द्धभागी न कस्तदा । तत्पुत्रेषु सु रक्तोऽभवत्तु राज्ञि सुखस्थिते ।
इत्थं स्वभृत्यसञ्चारदुराचारविचारणात् । परिवारान्निजान् सर्व्वान्निर्व्विण्णोऽभवन्महीपतिः ।
अद्य ये स्वान्तिके दृष्टाः प्रातः खानान्तिके श्रुताः । दार्ढ्यं कुत्रापि नो प्रापुः सारसा इव सेवकाः ।
छद्रदो वर्ण्यते यस्मै तादृगाश्वासभाजनं । तत्कालं सेवको भक्तो दृष्टः कोऽपि न भूभुजा । १८०
यच्चोक्तं यच्च नो दृष्टं यच्छ्रुतं वा कदाचन । निर्यन्त्रणो जनः प्रोचे प्रत्यहं राजमन्दिरे ।
स्वभ्रातृकलहकायस्तत्तत्पैशुन्यकर्म्मणा । बहामखानोऽनर्थानां कर्णो मूलमिवाभवत् ।
स्निग्धोऽयमित्यवगते यदि काष्ठखण्डे दण्डे प्रदीपपदवीपरिदीपिताग्रे ।
किं स ज्वलन्नपि करोति चिरं प्रकाशं दोषं न कं वितनुते निजकज्जलौघैः ।
प्राप्तस्त्राणाय राज्ञोऽसावित्याशा यन्निवेशिता । अभूदादमखानः स विनाशोऽप्यात्मरक्षणे ।
भ्राता सम जिघांसुं मां बहामो देशनिष्ठुरः । अहमेकोऽबलस्तन्मे गतिः कान्या त्वया विना । १८५
नास्त्यस्मान्मे स्वजीवाशा तत्स्वात्मा रक्ष्यतां विभो । त्वयि जीवति राज्यस्थे भयं मम न विद्यते ।

कुर्व्वन्त्यन्ये तदास्कन्दमन्योन्यरणोद्यताः । इत्यादि वार्त्तां शृण्वंश्च बभूव भयविह्वलः ।
इत्यमादमखानेन कदाचित् ज्ञापितो नृपः । जगे तं नास्ति मे लोभो राज्ये वा निजजीविते ।
गच्छ कापुरुषाव त्वं विप्रार्थं किमिहागतः । इत्थं निर्भर्त्सितः पित्रा कुत्सदीनपुरीं गतः ।
अनुजास्कन्दभीतोऽभूत् स्वरक्षणकृतक्षणः ।
लुब्धेऽमुष्मिन् भवति हि सुखं सर्व्वदैवेति बुद्धा यः संहर्त्तुं रिपुकृतभियोरक्षणोद्योऽवभाति ।
तत्तन्नस्थायदि भवति स स्वात्मरक्षाक्षमःक्षोभाख्यवाबाद्दिव तुरगतः प्रत्युतोपद्रवः स्यात् । ६९०
पित्रास्मदर्थमानीतोज्येष्ठोद्दिष्टो भयाय नौ । इति क्रुद्धौ सुतौ श्रुत्वा चकितः स नृपोऽभवत् ।
राजा च राजपुत्रश्च तदमात्यपुरोगमाः । अन्योन्याशङ्किताः सर्व्वे न निद्रामुपलेभिरे ।
भोगोपचारं सन्त्यज्य तत्कालन्तेषु सेवकः । यस्मिञ्छोपकारेणारञ्जयन् स्वामिनोनिजान् ।
कर्त्तव्यमादिग्रत्किञ्चित् यत् स स्वत्यान् क्षणान्तरे । अवोचत्कृतकर्त्तव्यान् किमुक्तं न स्मराम्यहं ।
स्वहस्ताक्षरसम्पन्नां त्यक्त्वा रीतिं पुरातनीं । ज्ञात्वा प्रकृतिवैगुण्यशङ्के तत्र स मन्त्रिमात् । ६९५
घेरस्मत्सदनोत्क्षिप्तः सोऽयं वैरानलः खलैः । तच्छमाय कृतोपेक्षा तैस्तैरुभयवर्तिभिः ।
मदङ्कितास्ते नश्यन्तु मन्त्रिणस्तनयाश्च मे । ये मत्प्राणेन तुष्यन्ति राज्यलुब्धा जिघांसवः ।
इत्युद्विग्नोमहीपाल उपशमपरायणः । प्रासदुःखोऽग्रपत् सर्व्वं यास्यति स्वतिग्रवतां ।
स्वामी विरक्तस्तत्पुत्रा मिथोवैरपरायणाः । किमु जीवविधेयं नः कष्टमापतितं महत् ।
इत्थं पौरजनः सर्व्वस्तुक्षोभातितरां तदा । यवनव्रतमाधाप्तौ त्यक्तमांसाशनोनृपः । ७००
सन्दध्यौ च कुपुत्रोऽयं यैरानीतोदिगन्तरात् । तैः स्वात्मरक्षिभिस्सर्व्वै राज्यं मे वत नाशितं ।
एकतः सबलौ पुत्रौ नगरे मिलितौ मिथः । एकतः पुत्ररक्षाकौ तन्निष्ठामन्त्रिणः शठाः ।
पुत्रायुद्धं करिष्यन्ति कष्टमापतितं महत् । किन्तु हृये पुरी सेयं पाल्या कुलवधूरिव ।
मयि जीवति नश्येचेत्किं कार्य्यं जीवितेन मे । भक्ताः शक्ता गताःभृत्याः किं पृच्छामि करोमि किं ।
इत्यादि चिन्तासन्तापजाताधिव्याधिबाधितः । किमुकराज्यनिर्व्वन्धः सनिस्पन्द इवाभवत् । ७०५
सबालवृद्धं नगरं क्षुभ्यत्तत्कुवार्त्तया । सोऽभूदर्थिमिताङ्कतं समाश्वापयितुं क्षमः ।
भोक्तव्यं यन्मया भुक्तं किं भोक्ष्येऽद्य मय द्रुतं । आनीतभोज्यमन्येद्युः श्रिवभट्टं क्रुधाब्रवीत् ।
अतिचिन्ताकुलोराजा छायायामप्यविश्वसन् । दुधुवन् सचिवान् श्रुत्वा अद्यैव न स्वजीवितं ।
गतसंविदिव स्थित्वा दिनानि कतिचिच्छितैः । स पृष्टोऽप्युत्तरं राजा न कस्मा अप्युदैरयत् ।
पृष्टः प्रकृतिभिः कार्य्यं सम्भाव्यामर्थकं वचः । द्वजार्त्तइव शय्यायां स सुस्वापैकदालयः । ७१०
नाविदंस्तद्रुजोहेतुं लक्षणं वा चिकित्सकाः । आने वार्ष्यां प्रचं हर्त्तुं बभूवानशनव्रती ।
अत्युन्नतान् सुफलदान्विततोच्चशाखान् स्यातान् द्विजप्रियतया शुभमार्गसंस्थान् ।
धाता निपातयति सर्व्वजनोपयोग्यान् पृथ्वीधरांस्तरुवरानिव दुष्टवातः ।
अत्रान्तरे त्रयः पुत्रा दोषाइव महोल्बणाः । धातुवद्दूषयामासुर्देशे प्रकृतिसप्तकं ।

मूकप्रायं नृपं तादृगवस्थं द्रष्टुमन्वहं । समङ्गास्तमुपाजग्मू राजपुत्रा भटोत्तमाः ।
गजांस्तुरङ्गांस्तत्पुत्रभीत्यै तादृग्दशनृपं । द्वाराग्रे स्थापयामासुः सर्व्वदर्शनदित्सया । ७१५
स्वस्तिवादध्वनिं श्रुत्वा सवाह्याभ्यन्तरा जनाः । द्वितीयेन्दुमिवाद्राक्षुः सानन्दा दर्शनागताः ।
श्रुत्वा बहामखानोऽथ चकितोऽन्तिकमागतः । गत्वरं लक्षणैर्ज्ञात्वा दूरं भ्रातेऽब्रवीद्हिति ।
जीवत्यस्मत्पिता नैव मिथ्यैवोत्थाप्यते विटैः ।। द्वाराग्रात्पतितो भूमौ मूकप्रायो विचेतनः ।
तदुत्तिष्ठ वयं यामः सवन्नाहानृपाङ्गनं । हरामस्तत्तुरङ्गादि बद्धा दुष्टांश्च मन्त्रिणः ।
नौसेतुबन्धं छेत्स्यामस्तेन नश्यति तेऽग्रजः । श्रुत्वेति सोऽभ्यधाज्जैनं वक्तुं युक्तं समागतः । ७२०
स्वप्नेऽप्यनिष्टं यस्याहं नेच्छामि स्वामिनः पितुः । तच्छुत्वैकां निशां यावत्तदग्रे सोऽगमत्क्रुधा ।
तावन्मुमूर्षुं तं श्रुत्वा पितृराज्यजिहीर्षया । आदमखानः श्रीजैननगरं सबलोऽभ्यगात् ।
भटसन्नाहसामग्रीं प्रापय्य पथि गोपिता । अवसत्तन्निशामेकां राजधान्यन्तरालये ।
तावद्धस्सनकाद्येशः स्वार्थाश्रीमोहयन् परान् । गृहीतदिव्यः श्रीहाज्यखानपक्षं समाश्रयन् ।
अथ निष्कासितोऽन्येद्युः सचिवैः सबलोऽग्रजः । कुतुबदीनपुरीं गत्वा धिया भाग्यश्रियोज्झितः । ७२५

ज्येष्ठोऽप्यभूत्कुशलधीरपि भृत्ययुक्तः शूरोऽप्यनल्पसदृशोद्यमधैर्य्ययुक्तः ।
प्राप्ते क्षणे किमपि साधु न कर्म्म कुर्य्यात् पुण्यैर्विना न हि भवन्ति समीहितार्थाः ।

स चेत्तस्मिन्निशि हत्वैकमहरिष्यत्तुरङ्गमान् । अभिलप्य वरं राज्यं बुद्धिः कर्म्मानुसारिणी ।
अत्रान्तरे हाज्यखानः कोषेशानुजचोदितः । राजधान्यङ्गणं गत्वा तुरङ्गाद्यहरत्पितुः ।
यदाज्ञया विनिर्धार्य्या ये ऽभवन् सुतसेवकाः । विविशुस्ते ससन्नाहाः समदाः कालपर्य्ययात् ।
अभिमन्युप्रतीहारमुखानिन्द्यं यदब्रुवन् । तदुत्पिष्टं तत्कालमन्तैरचिरेणानुभूयते । ७३०
तद्दिने हाज्यखानः स सबलोवहिरास्थितः । नायकञ्जनकं द्रष्टुं सोत्कोऽपि द्रोहशङ्कया ।
तदाकर्णनाद्भीतो निराशः सपरिच्छदः । आदमखानो विनाशो विपुलाटाध्वना ययौ ।
स तारबलमार्गेण गच्छन्निजजनावृतः । अन्वागतानुजभ्रातृवीरलोकवधं व्यधात् ।
अभिमन्युप्रतीहारमुख्याः शौर्य्यममानुषं । दृष्ट्वैवादमखानस्य साम्यर्थाभिधमूचिरे ।
यावान् स्वय्यपुरे तेन कृतोलोकवधः क्रुधा । तावानेव कृतस्तत्र सङ्कटो गिरिगह्वरे । ७३५
तावद्धस्सनखानोऽपि राजपुत्रोगुणोज्ज्वलः । तूर्णं पर्णोत्समुल्लङ्घ्य कश्मीरान्तरमाययौ ।

ग्रीष्मोष्मशोषिततनुश्चिरसञ्चिरं यच्छायोज्झितोमतकः पथिकैर्निरस्तः ।
वर्षाभिषेकमहिमा जनतापशान्त्यै सेव्यः स एव बत पुण्यविचित्रशोभः ।

सद्भ्रैवावयवमध्ये या द्वयोस्तटयोरिव । एकपार्श्वगता सर्व्वा तदाभूद्राज्यनिम्नगा ।
इत्थं भ्रातृद्वयस्थित्या विजयावजयक्रमः । अन्यथा कल्पितः सर्व्वैरन्यथाभूद्विधेर्व्वशात् ।
पुत्रः स्यान्न करोति शोचति पिता जातेति हर्षाकुलस्तद्वृद्धौ यततेऽन्वहं विधिवशैश्चिन्तास्तदोयावहन् ।
दृष्ट्वाविघ्नमिव स्वकं स्वजनकं जानाति लोभान्वितस्तद्दित्तास्थिधिया मरिष्यति कदेत्यन्तः सदा चिन्तयन् । ७४०

अस्मिन्नवसरे राजा कियद्भिः सेवकैर्वृतः । श्रुतमश्रुतवत्कर्त्तुं स निश्चिन्त इवाभवत् ।
दर्शिताश्वास्थ्यवाग्व्यस्त्यक्तपेयाद्युपक्रमः । नृपेन्द्रो विरुचिः क्षीणकालचन्द्र इवाभवत् ।
प्रजाभाग्यविपर्यासात् सर्व्वायामाय विच्छविः । कल्पान्तरचिकित्सोऽस्तं गन्तुं प्रावर्त्ततातुरः ।
कम्पितोष्ठपुटश्रान्तमन्त्रपाठः कवेर्दिने । द्वादश्यां ज्यैष्ठमासस्य मध्याह्ने जीवितं जहौ ।
प्राणप्रयाणसमये नृपतिः स मयेक्षितः । सर्व्वाङ्गनिर्यत्सौभाग्यभागसाहृतमुखच्छविः । ७४५
जाने तद्वदनं लक्ष्मीसदनं खेदसन्ततिः । निर्यत्सौभाग्यतरङ्गिण्याः प्रवाह इव दिद्युते ।
तज्जीवरत्नहरणाज्जातभीतिरिव ध्रुवं । प्राणवायुर्हरन्नायुः क्षणं तूर्णगतिं व्यधात् ।
प्राणान्ते विगलत्सूर्य्यसोमनेत्रजलच्छलात् । निरगान्नरदेवस्य प्रजास्नेहरसो ध्रुवं ।
द्वापञ्चाशतमब्दान् स राज्यं कृत्वा सुखप्रदं । षट्चत्वारिंशवर्षेऽगाद्दिवं श्रीजैनभूपतिः ।
कर्णीरथश्वप्रोच्छत्रचामरकेतनवात् । भुवीव पतितौ नूनं सूर्य्याचन्द्रमसौ दिवः । ७५०
तत्कालं मन्त्रिणोऽमात्यादासाजनपदाश्च ये । रुदितास्तुस्तुतिव्याजान्निरापाञ्जलिमर्चिरन् ।
राज्यं षष्ठवते वर्षे ज्यैष्ठे मास्यग्रहीन्नृपः । उत्तरायणकालान्तस्तेनैवान्तरमासदत् ।
अतीतगणितैकोनसप्तत्यब्दायुषं नृपं । वदनावगतप्रोद्यत्तृष्णाकूर्चकचच्छटं ।
शवीभूतं शिवीभूतं शिविकायां शवाजिरं । रुदन्तोमन्त्रिणो निन्युश्छत्रचामरराजितं ।
यत्र सुप्ता इवैकत्र भान्ति पूर्व्वे महीभुजः । भर्तृप्रेम्णा धरण्येव निहिता हृदयान्तरे । ७५५
रुदत्पौरजनप्रोद्यत्तारोरोदननिःस्वनैः । बभूवुस्तत्क्षणेवारं साक्रन्दमुखरा दिशः ।
क्व प्रयासि प्रजास्त्यक्त्वा हा देव नरजीवित । इत्यस्मादपरः शब्दो नाश्रावि नगरान्तरे ।
तत्तदाक्रन्दितैः शश्वत्कर्णसञ्जातसंस्तवाः । शून्येऽप्यट्टणलोकानामाक्रन्दितमथामकृत् ।
कर्णीरथादथोत्क्षिप्य पितुः पार्श्वे नरेश्वरं । कृत्वा पटैकसंवीतं भूगर्भाभ्यन्तरे न्यधुः ।
नेत्रनालस्रवद्बाष्पधाराः स्वाचारकारणात् । मुखावलोकनं कृत्वा सर्व्वे मृन्मुष्टिकाजहुः । ७६०
भूपतिर्भविता नान्यस्त्वत्समो भूरियं गता । इतीव भावनां चक्रुर्मृन्मुष्टिग्रहणच्छलात् ।
जित्वारीन् प्रबलान् रणे चितिमिमां हृत्वा धनैः सर्व्वतो दत्वा कोषमशेषदेशविदिताः कृत्वा पुरीः स्वाभिधाः ।
सप्ताङ्गोर्ज्जितभङ्गिसङ्गिसुभगं कृत्वापि राज्यं चिरं हित्वा सर्व्वमहो पटैकरचनामन्ते लभन्ते नृपाः ।
स वैरराज्यदावाग्निसन्तप्त इव शीतलं । तद्भूशान्तरमासाद्य सुखनिद्रामिवाभजत् ।
सुखं निद्रावृतस्येव दृष्ट्वा सौभाग्यसुन्दरं । हाज्यखानोऽकरोत्पित्रे मस्तके स्वतरात्रिकां ।
अपराद्धं मया तात बहुशः पापबुद्धिना । मन्ये तेनैव रुष्टस्त्वमसहायो गतो दिवं । ७६५
शोकान्धरनृपोधन्योयस्त्वां पश्यति नाकगः । धिङ्मां योवञ्चितो राजन्दर्शनामृतवर्षणैः ।
विहृतं क्वापि नो तात मां विना सोत्सवक्षणे । वदाद्य कथमेकाकी भजसे स्वर्गसम्पदः ।
यस्त्वं कोमलशय्यासु नागामिद्रां गणावृतः । स कथं भूगणस्यान्तस्तिष्ठस्येकः समर्कके ।
प्रतिमुच्य भवन्तं मे प्राप्तस्य स्वगृहं न कः । अपपन्नास्तु मे लापो भूयो वाभिति कोपितः ।

श्रोत्रियं कारितोऽस्माभिः कुपुत्रैः सततं भवान्। अद्यैवावसरं प्राप्य दीर्घनिद्रां करोषि किं। ५७०
ज्वलिताभूत्तनुर्नित्यं सततोदितया यया। साद्य किं चलिता राजंश्चिन्ता ते मानसान्तरं।
चित्रे वाप्यथ सङ्कल्पे पश्यामि वदनाम्बुजं। शृणोमि ताः कथाः कुत्र तात ते बहुपातकी।
राज्यं विपद्दिनं रात्रिः स्मशानं पितृकाननं। जीवनं मरणं नाथ त्वां विना मम साम्प्रतं।
कुपितोवा प्रसन्नोवा कुतोऽप्यागत्य तात मे। दर्शनं देहि नो सोढुं क्षमोविरहवैशसं।
विहाय क नु मां तात गतः पादैकसेवकं। द्युतिं न लभते पद्माकोरकोभास्करं विना। ५७५
किं रुष्टोऽसि महीपते त्वमधुना दासोऽस्मि सेवापरो मानं मा भज देहि वाक्यमधुनाप्येकं ममात्यादरात्।
नो जीवामि विना त्वयेति विलपन् कुर्व्वन् भुजाराविकां साक्रन्दं रुदितं चकार सुचिरं दृष्ट्वा मुखं भूपतेः॥
इति प्रलापमुखरं हाज्यखानं शुचार्द्दितं। राजधानीं ततोनिन्युर्दिनान्ते मन्त्रिणो बलात्।
पितुर्लोकान्तरस्थस्य प्रीत्यर्थं तत्क्षणं सुतः। सालेरग्राममात्मीयं न्यधात्तत्र सवाश्रिरे।
ग्रीष्मपानीयदानेन तृप्त्यर्थं तत्प्रदायिनां। बहूनां प्रददौ चाग्रीमहार्घ्या धर्म्मसात्कृतां।
राज्ञानेन विना शून्यं नास्मिन् स्थामीचितुं क्षमः। इतीव दुःखात्तत्कालं खमस्तो रविरक्षिपत्। ५८०
सन्ध्याभ्रशाटीमुत्सृज्य रोदनार्थमिवेशितुः। शुचेव विस्तृतं चक्रे तमःकचचयं क्षितिः।
आशाप्रकाशकैर्व्वन्द्यदर्शने गुणिबान्धवे। परलोकं गते तस्मिन् मण्डले प्रोदभूत्तमः।
तद्दिने रन्धनाभावाद्गृहधूमविवर्ज्जिता। शोकमूका निरुच्छ्वासा निर्ज्जीवेवाभवत्पुरी।
शवागारोपरि शिलां स्फाटिकीं रचनोज्ज्वलां। दीर्घां सर्व्वाङ्गनां राज्ञोमूर्त्तिं परिणतामिव।
घनोत्कण्ठदिदृक्षाप्ररूढशोकाश्रुबिन्दुभिः। यत्र मुक्ताफलैः पूजा लसतीवोपरि प्रभोः। ५८५
पौराः शुक्लदिने भान्ति यत्रान्तःप्रतिबिम्बिताः। राज्ञेव निकटं नीताः कुतूहलतयात्मनः।
कवाटविकटं वक्षोमुखं पूर्णेन्दुसुन्दरं। शुकवद्दीर्घनासाग्रं नेत्रे कमलकोमले।
भ्रूलेखे लोमशे भालं प्रभालम्बितलक्षणं। सा बुद्धिस्ते गुणास्तस्य राज्यकार्य्यावधानताः।
स्मारं स्मारं जनः सर्व्वोराज्ञः पुरइव स्थितः। पर्य्यन्तनीरसासारं संसारं निन्दते न कः।
ज्योत्स्नापूर्णसुधाकरस्य कुसुमोत्कर्षोवसन्तस्य यत् सौभाग्यं शरदि प्रसन्नगगनसेनार्य्या नवं यौवनं।
राज्ये चैव विवेकिनोनरपतेर्यत्सर्व्वसौख्यप्रदं धाता तत्कुरुते स्थिरं यदि जने स्वर्गार्जने न स्पृहा। ५९०
बाल्ये पित्रा वियोगोवरधर्षिवभियोभ्रातृभृत्यैर्व्विरोधः प्राप्ते राज्ये प्रवासोवहिरथ समरोऽप्ययजेनातिकष्टः।
धात्रेयेभ्योऽथ चिन्ता तदनु निजकृतैर्यावदायुश्च वाधा संसारे सर्व्वदासुस्थितिकति भविनां नित्यदुःखां स्थितिं धिक्।
नूनं जातकयोगेन पुत्रेभ्योदुःखमन्वभूत्। अभूदस्य सुतस्थाने भीमोयत्पापवीक्षितः।
पण्डिताः कवयस्तस्य बालाला येऽभवन्पुरा। तएव तं विना दृष्टाः पौषे मूकाः पिका इव।
याभूत्सरस्वती नेत्रनिभाविकसिता सदा। यन्त्या संकुचिता साभूद्दुग्धपुस्तकसन्ततिः।
तर्कव्याकरणादीनां शास्त्राणां ये श्रमं व्यधुः। ते राजरञ्जनायात्र देशभाषाश्रमं व्यधुः। ५९५
राज्ञा ये बहु मानिता स्टरश्रुतश्रीभर्पण्डिताः पण्डिताः शास्त्राभ्यासमहर्निशं प्रविदधुर्न्यायार्जनाशुत्सुकाः।

पृष्टाः किं पठतेति ते प्रतिजगुः श्रीजैनभूपे गते कुत्र व्याकरणं क्व तर्ककलहः कुत्रापि काव्यश्रमः ।
योऽभूत् सर्व्वकलानिधिः शुभविधिर्दाताभिगम्यो गुणी काव्यज्ञो बहुभाषया गुणिरतः कारुण्यपुण्याकुलः ।
सोऽयं हन्त समीच्यतेऽवनितले धिक् पापिनोऽस्मान्छठान् ये जीवन्ति शुचा न यान्ति विपिनं संसारदुःखाजिताः ।
हारेणेव विनाङ्गनाकुचतटी शास्त्रेण हीनेव धीः सूर्य्येणेव विना प्रफुल्लनलिनी तारुण्यहीना तनुः ।
चन्द्रेणेव विना यथैव रजनी पत्या विना भामिनी येनैकेन विना नृपेण न बभौ कश्मीरराज्यस्थितिः ।
श्रीमत्तर्कादिविद्याभ्यसनरसलसद्गर्व्वसर्व्वप्रवीणप्रेक्षावद्दानमानार्पितविविधनयश्रीभूषिताशेषदेहः ।
श्रीजैनोल्लाभदेनो नरपतितिलकः सर्व्वशास्त्रप्रवीणः कश्मीरान् योजयित्वा दिवमपि स गतो योजनायेव नष्टां ।
इत्यादि सन्नते सन्तोवदन्तोऽत्यन्तचिन्तया । नितान्ततान्तहृदयाविश्रान्तिं नाभजन्त ते ।　　८८

हृष्टारभ्यचिरमुपवने वंशवाटोजनैर्य्यानानावर्णैर्नवहरणगणैर्भूषितोभूरिपत्रः ।
तत्रान्योन्यस्खलजनहननात्ताद्गभ्युत्थितोऽग्निर्य्येनैकान्ताद्पवनगतं सर्व्वमेव प्रनष्टं ।
या कारकसभा भव्याऽभवच्छ्रीजैनभूपतेः । वर्षेणैकेन तच्छापात्सर्व्वा स्वप्नोपमाभवत् ।
दृष्टे राज्यमहाम्भोधौ भूपप्रमथवायुना । तत्तत्सेवकरत्नौघः प्रतेको योऽवशिष्यते ।
प्रभवत उत यावत्तत्प्रभुः सौख्यदाता विदधति खलु तावत्सेवकास्तस्य मानं ।
इह वसति वसन्तो यावदेव स्वनन्तो मधुकरपिकभेकास्तावदेवाद्रियन्ते ।
केचिदप्यवशिष्टा ये सेवकास्तस्य भूपतेः । तेऽप्यनन्तरविशानात्तृणतुल्योपमां गताः ।　　८९
इति पण्डितश्रीवरविरचितायां जैनराजतरङ्गिण्यां जैनशाहिवर्णनं नाम प्रथमस्तरङ्गः ।

---

## ॥ अथ श्रीवरपण्डितकृता तृतीया जैनराजतरङ्गिणी ॥

### द्वितीयस्तरङ्गः ॥

वन्दे विघ्नमयं देवं सर्व्ववाङ्मयनायकं । यदङ्गवर्णनस्तुत्या तत्पूजाफलभाङ्न कः।

पादोदर्शित एष यच्छति पदं यत्रैव न व्यक्तया तत्रैवेच्छति नाम वामचरणः सञ्चारसंस्कारतः।

इत्थं मण्डनमण्डितं समपदं चारी नरान्नर्त्ति यः सन्ध्यायां स सदा ददातु सुखितां देवोऽर्द्धनारीश्वरः।

अथ हैदरशाहाख्यां ख्यापयन्मुद्रिकार्पणैः। हाज्यखानोऽग्रहीद्राज्यं स ज्येष्ठप्रतिपद्दिने।

अश्वार्थीदक्षिणानन्दी तत्तत्कुशलसूचकः। बभावर्थिजनानन्दो स राज्यग्रहणोत्सवः।

शुद्धांशुककृतै राजवल्लभैः सुखशालिभिः। बभौ श्रीकन्धरपुरी पूर्णा द्यौरिव तारकैः। ५

राजधान्यङ्गने हैमं सिंहासनमधिश्रयत्। अतितीक्ष्णनवो राजा मेरोस्तटमिवांशुमान्।

बभतुर्भूपतेरग्रे स्थितौ तस्यानुजात्मजौ। इन्दोः पुरस्तादुद्यन्ताविव शुक्रबृहस्पती।

राज्ञोऽश्मककोषस्तद्राज्यतिलकं ददौ। सौवर्णपुष्पपूजाढ्यं यदृच्छाविहितव्ययः।

स हाज्यहैदरनृपाख्यकालोर्जितप्रभः। धाराधर इव धरां दधार धरणीधरः।

सोऽनुजं स्वसमं भूमिनायकः सुचितेरसान्। बह्रामखानं नागामदेशं तं स्वामिनं व्यधात्। १०

चिराभिजसुतप्राप्त्या यौवराज्यसुखादपि। पितृशोकहतोऽप्यन्तर्विश्रान्तिमभजन्नृपः।

तस्मादिहितमेवास्तु देशाधीशत्वराजिताः। प्रसादमतुलं प्रापुरावल्लवकादयः।

अन्येऽप्युच्चावचान् यामान् सेवकान्नवभूपतेः। पूर्व्वसेवानुसारेण प्रसादं प्रतिपेदिरे।

राजा राजपुरीसिन्धुपत्यादीन्दर्शनागतान्। प्रत्यमुञ्चदलङ्कृत्य पार्थिवोचितया श्रिया।

सौवर्णकर्त्तरीबन्धसुन्दरान्नृपमन्दिरे। ननन्दुर्मन्त्रिसामन्तसेनापतिपुरोगमाः। १५

पितृशोकार्पितानर्घपट्टांशुकविभूषणाः। त्रिचेलसेवकास्तस्य तदन्तिकगताः सदा।

आसीद्राजा च सततं प्रकामन्दोषनिष्क्रियः । स्वपक्षपालने सक्तः सन्ध्याक्षणइवोडुपः ।
पक्षपातोक्षणापत्यप्रतिपालनतत्परः । लोभक्रोधविरक्तात्मा मोहान्धक्षपणक्षमः ।
सैदनासिरपुत्रोऽयः स मेर्जाहस्सनाभिधः । अहो तत्पितृवत् पूज्यो बहुरूपादिराज्यभाक् ।
उत्सवादिसदाचारसत्कारेषु सभान्तरे । तएव प्रथमं मान्यास्तद्राज्ये सर्व्वदाभवन् । २०
एतान् पक्षाश्रयान्मद्बन्धव्यं बलवानिति । मेर्जाहस्सनपुत्र्याः स पाणिं पुत्रमजिग्रहत् ।
ज्ञात्वा ज्यंसरमार्गेशात्मज्यहाज्जिरमार्गेपे । वाज्जिलं प्रददौ राजा तद्गुणाकृष्टमानसः ।
चक्रे कृतापकाराणामप्यनुग्रहमेव सः । प्रणम्य सिंहः पूर्व्वं हि हन्ति दन्तिगणान्ततः ।
गूढभावो महीपालस्तत्तच्चेष्टाचरैर्व्विदन् । तदा हस्सनकोषेशं सम्मान्याधिकृतं व्यधात् ।
प्रतापतापितारातिस्कन्धकोपो महीपतिः । भस्मान्तरगतोवह्निरिवासीत्परस्त्युदः । २५
कांश्चित्सन्नभयान् कांश्चित्सन्धाय प्रतिपालयन् । कांश्चिदुन्मीलयन्नीत्या नानावृत्तिरभून्नृपः ।
प्रसादकृत्सु भृत्यानामभूद्विश्ववणोपमः । मनागप्यपराधेन बभूवान्तः कसन्निभः ।
पयःपिष्टकतामात्यफिर्य्युडामरकादयः । विचार्य्यासहनं कोपं बभूवुर्द्दैतयक्षणाः ।
चौराजाराश्च रिपवोभृत्यादुर्णयकारिणः । अक्षोत्र जम्बुकासेहसद्राज्ये भयविह्वलाः ।
श्रीजैननृपतौ शान्ते मूर्द्धगूढबिलोपमे । अत्राधन्त पुनर्लोकं व्यालादूव नियोगिनः ।

विघ्नडुपचोरचिरं जितासः कलाकलापोविबुधोपजीव्यः । ३०
पूर्णेन्दुनामेन समोऽस्ति कोऽन्यः कलङ्क एकोयदि नास्ति दोषः ।

श्रुत्वासहदूषणाः सोऽयं सर्व्वान् हन्तीति कद्धिया । अकं परप्रवेशार्थं मिथस्तद्दूषका व्यधुः ।
कुकृत्यप्रेरकः पापश्चान्यायोत्कोचहारकः । प्रियोऽभवद्दिवाकीर्त्ती राज्ञोरिक्केनराभिधः ।
कामीव व्यसनं नित्यमुपालब्धोऽपि भूभुजा । यं त्यक्तुं नाशकद्राजा संस्तवाद्धृदयङ्गमं ।
सञ्चितार्थः प्रजाचासैर्मुद्रादानादिकर्म्मभिः । आसीत् स्वकार्य्यकुशलः ख्यातोधूर्त्तः स नापितः । ३५
हृद्धं चित्तेन काठिन्यं माधुर्य्यं जिह्वया धृतं । शठस्य यस्य सततं लोकोद्वेजनकारकं ।
येनाधिकाराद्द्विष्टोऽस्मिन् प्रजाः कुकर्म्मभिः कृताः । दुःखिता रक्षिताः पूर्व्वं पुत्रवच्छ्रीमहीभुजा ।
मेरभोखारनामापि बुद्धिमान् प्रथितो भुवि । नितरामपकोपाग्नेराज्ञः साचिव्यमादधे ।
वात्सल्यादिह्रितोराज्ञा मनुष्यागणनार्पितः । समस्तकार्य्यस्थानेभ्योभुङ्क्ते राजोपजीविकां ।

योवर्षणैकनिरतः शिखिहर्षहेतुः सन्दर्शितातुलफलः कृतकर्षणेषु ।
जातोऽपि यः प्रतिदिनं हृतसर्व्वतापः सोऽयं घनस्तुदति दुःसहवज्रपातैः । ४०

दुर्मन्त्रिप्रेरितोराजा व्यधान्मदविचेतनः । प्रजाभाग्यविपर्य्यासादिवेकविगुणाः क्रियाः ।
शेकल्धरपुरीपार्श्वसन्निर्माणचिकीर्षया । अम्तोपवने प्रांशुतरुच्छेदनमादिशत् ।
छिन्नांस्तान् पुष्पितान् वृक्षान् समीक्ष्यैतत्समुत्थिताः । तच्छ्रुत्वैव व्यधुस्तत्र रोलम्बारोदनध्वनिं ।
तन्निर्म्माणग्रहोऽन्येषां न केषां प्रत्यभाद्धृदि । अपि दिनपतेर्दीप्रप्रकाशनरसोपमः ।

तद्भ्रमः क्षीव एवैष करोतीति विनिश्चितं। स्वाहितापि क्रिया हेतोः पूर्णितं तं नृपं व्यधात्। ४५
सङ्गनामथ लोकानां नापितोऽवयवच्छिदां। भूपालादाप्तनिर्देशः क्षीवतोऽपि तथाकरोत्।
नापितो निर्घृणः पापी क्रोधी क्रकचपाटितान्। पेटकांष्टङ्कुरादींश्च कारयामास भूपतेः।
चलितानग्रजभ्रातुः स्वावनायान्तिकं पथि। दृष्ट्वा शूलेऽधिरोप्यान्याम्पश्चषानप्यघातयत्।
जीवन्तागणरात्रन्ते स्वकुटुम्बोक्तवेदनाः। पौरैः सास्रुजनैर्दृष्टाः शूलपृष्ठे पुरान्तरे।
वैदूर्य्यभिषजं ज्ञात्वा दूषकं परपक्षगे। अमुष्टदन्धमात्क्षत्तभुजनासौष्ठपल्लवं। ५०
तथैव नोनदेवादीन् शिखजादादिसंगुरान्। पश्चषानकरोत् कृत्तजिह्वानासिकहस्तकान्।
विरुद्धावयवच्छेदशूलारोपणकर्म्मणा। स पूर्णनापितः पापी बभूव नरशानिकः।
आचार्य्यपुत्त्रोजय्याख्यस्तथा भीमाभिधो द्विजः। छिन्नाङ्गौ स्वं यथाशक्तौ वितस्तायां ममौऽज्झतां।
मध्यलीलाव्यसनतस्तद्राज्ये वाद्यदेशवत्। आसीन्मार्द्दीकवद्धीडोदेशेऽत्र प्रचुरा सुरा।
तन्मध्यरसिके राज्ञि मर्व्वभोगपराङ्मुखे। खण्डादीक्षुविकारास्ते सुलभाश्च गुडोऽभवत्। ५५
स्वुज्याब्दोल्कादिर्यस्यान्तेवासी गीतगुणाम्बुधेः। मल्लाडोदकनामासीत्तन्त्रीवाद्यगुरुर्नृपे।
कूर्म्मवीणादिवाद्यानां प्राप्यासङ्गीतकौशलं। आजीवं क्षणमप्यासीन्न तन्त्रीवादनं विना।
तन्त्रीवादविशेषज्ञो राजा व्यञ्जनधातुभिः। स्वयं वादननिष्णातो वैणिकानप्यशिक्षयत्।
रवाववाद्यरवैर्व्वल्लोलाद्यैश्च गायनैः। राज्ञः प्रसादात् किं नाप्तं तत्तत्कनकवर्षिणः।

शीघ्रचालयस्थैः सुरतालयस्थैर्भूतैरिवान्तश्छलनप्रवीणैः।

वशीकृतोऽयः पिशुनैर्नरेशो विभेति तस्मान्ननु को नु मर्त्यः। ६०

रहः स्थितं नृपं जातु पिशुनः पूर्णनापितः। अपृच्छत्प्रेरितोऽमात्यैश्चिकीर्षां पूर्व्वमन्त्रिषु।
भवत्पक्षविनाशार्थैः कृतस्वत्पितृमन्त्रिभिः। प्राप्तराज्येन भवता तएव प्रबलीकृताः।
अमी हस्तनकोषेशमुख्यास्त्वदनुजादृताः। सोऽपि धूर्त्ताधिया तत्तद्वशीकारसमुद्यतः।
असमर्थशरीरस्त्वं भ्रातर्यर्पितभरस्तदा। तत्ते सपुत्त्रभृत्यस्य न नाशोभविता चिरात्।
श्रुत्वेत्यवोचन्नृपतिः सत्यं मदनुजाप्रियः। किन्तु ब्रवीमि येनायं रक्ष्यते कुटिलाशयः। ६५
उग्रामदनुजस्तीक्ष्णामत्पदाक्रान्तिसद्यतः। अनेन कष्टुमिच्छामि कण्टकेनेव कण्टकं।
कार्य्यापेक्षावशादेतं रक्षामि न तु गौरवात्। श्रुत्वेति द्विवाक्सदतोव्यधाज्ज्ञातचिकीर्षितान्।
अत्रान्तरेऽग्रजो राज्ञामद्रदेशाद्दलान्वितः। भ्रातृराज्यजिहीर्षार्थे पर्णोत्सं प्राप दर्पितः।
तच्छ्रुत्वा नृपतिः क्रुद्धस्तान् समानीय पेटकान्। अवोचत् किं नु कर्त्तव्यं ते तमित्युपुरुत्तरं।
तटिकासेतुबन्धन्तच्छेत्तुं यामोऽस्य तिष्ठतः। अन्यथा दुःसहः प्राप्तस्तदाज्ञा दीयतां विभो। ७०
श्रुत्वेति कातरं वाक्यं तेषां दुर्लक्ष्यचेष्टितः। तत्पक्षपातिनो ज्ञात्वा तथेति प्रत्यपद्यत।
प्रतिमुच्य नृपस्तान् स रात्रावित्यब्रवीन्निजान्। आनीय फिर्य्यडारादीन्मन्त्रिणः कार्य्यनिष्ठुरान्।
इयं हस्तनकोषेशचक्रिका यत्समागतः। एतद्वधेन नष्टः स्यादन्यथाभ्यन्तरं विशेत्।

तत्प्रातरेते वक्तव्या युष्माभीर्येति तान्नृपः। छन्नकोपः सेवकान् स्वानकरोत्कृतसंविदः।
राज्ञा प्रातः समाहूय विसृष्टानुचरा गृहात्। सर्वे हस्सनकोषेश मुख्यास्तूर्णं समाययुः। ७५
कम्पते तुरगश्चलो ज्ञातदृष्ट इवाचलः। ताडनैर्वञ्चशः साश्वः प्राप कष्टामृपाङ्गनं।
महाद्वारास्तरणस्थांस्तान् राजकर्त्तव्यताकुलान्। कोषेशहस्सनमेरकाकादीन् पञ्चषाञ्नृपः
भृत्यैर्जैसरमेराद्यैराज्ञप्तैर्मण्डपान्तरे। छलादिष्वाऽमुत्पाद्य राजधान्यन्तरेऽवधीत्।
किं द्रोहइति यावत्स कोषेशोऽभ्युत्थितोऽब्रवीत्। द्रुघणैकप्रहारेण तावत्प्राणैर्व्ययुज्यत। ८०
शस्त्राघातैर्मुमूर्षुः सन्नुत्थितो मेरकाककः। राज्ञएवाशिषः कुर्व्वन् पुनः परशुना हतः।
लिखकश्चाद्भेराख्यः स विद्याव्यसनी गुणी। हतो जनमनःकान्तो ययौ कस्य न शोच्यतां।
जीवतां मनसा चैश्यं तेषां नित्यमभूद्यथा। शस्त्रकृत्ततनूत्यक्तशोणितैक्यमभूत्तथा।
वर्णकम्बलपृष्ठस्थाजीवन्तस्ते यथाभवन्। निद्राणाइव ते तत्र मृताअपि तथोच्चिताः।
क्षणमात्रात्तथा शस्त्रैर्मरणं राजवेश्मनि। अनन्यसुलभं तत्र तेषां श्लाघार्हतामगात्।
न वित्तं न च दारास्ते न भृत्या न शवाजिरं। तेषां तथा प्रमीतानां यथावन्नोपकारिता। ८५
निजपरिभवभीत्या बान्धवाश्चापि दूरं त्यजति च निजपत्नी का कथा सेवकानां।
प्रतिदिनमृणहेतोस्ताडनं बन्धनं वा भवति हि यमभङ्गाद्राजभङ्गोऽतिकष्टः।
स्फुलिङ्गालिङ्गनात् क्रुद्धकृष्णसर्पोपसर्पणात्। मकराकरपाताच्च कष्टं नृपतिसेवनं।
प्रद्युम्नगिरिपादान्ते चण्डालैर्निश्चयनाथवत्। इष्टिकाभिस्ततो नीत्वा भूगर्त्तेषु निवेशिता।

कुर्व्वन्ति मौसुलजनाः स्वशवाजिरार्थं यत्नं सदैव बहुकालमपु दत्तचित्ताः।

नो चिन्तयन्ति परमेश्वरमन्तरेण जानाति को मम कदा मरणं कथं स्यात्।

यः स्वायुषोऽवधि भवेति सदेहनिष्ठां यस्यान्तको भवति मित्रतयातिवश्यः।

युज्येत तं प्रति शवाजिरकर्म कर्त्तुं म्लेच्छेषु दुर्व्यसनमात्रमिदं मतं मे। ९०

ते वैश्रवणभट्टाद्याः कृत्वापि स्वशवाजिरं। अन्ते यत्र मृता याने भुवि तत्रैव शायिताः।
एक एको भुवोहस्तशतमात्राहृतो रतः। पराप्रवेशदोयत्नात्प्राकृतोलज्जते न किं।
श्रुतं यच्छास्त्रतः स्वर्गस्त्रिलास्वेच्छवभूतले। स्याप्यन्ते तत्सुखं तस्मिन् परलोकगते भवेत्।
अहो लोभस्य माहात्म्यं जीवद्भ्यन्मृता अपि। शवाजिरपदेशेन कुर्व्वन्त्यावरणं भुवः।
महान्तो हन्त कुर्व्वन्तः कृतयत्नाः शवाजिरं। तन्निर्म्माणेन जीवन्ति कियन्तोऽपि बुभुक्षिताः। ९५
व चोऽन्यदर्शनाचारोहस्तमात्रे भुवस्तले। दग्धा यत्कोटिशोनित्यं शावकाशं तथैव तत्।
इत्याद्यनुचिता निन्दा प्रस्तावाद्विहिताच यत्। क्षन्तव्या नोऽसुनैर्धर्म्मात् कवितावोनिरर्गलाः।

ये राजवैभवमदात्र निपीड्य लोकं कुर्व्वन्ति सञ्चयमतो न च दानभोगौ।

अत्युत्कटाघभरतत्फलनुब्धदुःखास्ते श्रीवरवर्णनिभाद्वितरन्ति राज्ञः।

द्रव्यं दण्डात्तु रज्ञाद्वि तेषां तद्राजसादगात्। तत्कुटुम्बैर्मिराक्षमैर्मासाधिका वराटिका।

कोषेशसञ्चितं स्वर्णपूर्णं रूपकभाजनं। दृष्ट्वा धिक्कृत्य कृपणं थुत्कारं नृपतिर्व्यधात्। १००
तत्पश्चात्संहारागादीन् हृतसर्व्वस्वसञ्चयान्। कारायामक्षिपद्राजा मुक्तिकं सैदहोसनं।
अन्ये पितृपराधेन तस्मान्मृगसुतोपमात्। वर्षियादव ते सर्व्वे नाशं प्रापुः पुरातनाः।
यासीत् पितुः सभायोग्या तत्तत्कार्य्यविशारदा। स्मृतपूर्व्वापकारेण तेन सर्व्वावसादिता।
अन्तरङ्गान् हभेभादीन् पश्चात्तानधिकादरैः। अरक्षत् प्राक्तनं स्मृत्वा प्रेम सेवासु पैतृकीं।
आदमखानः पर्णोत्से श्रुत्वा कोषेशनाशनं। स्वनामान्वर्थतां विभ्रद्यो भीतो ययागतं। १०५
बह्रामखानो विभ्राणस्तद्वाच्छङ्कितोभयं। स्वमेत्य नृपेणाश्वासितः कार्य्यावलोकिना।
अस्मिन्नवसरे मद्रमण्डले सुभटव्रजः। अभून्माणिक्यदेवस्य तुरुष्कैः सह संयुगे।
मातुलेन समं यातो योद्धुं तत्रैव सङ्गरे। आदमखानः स प्रापच्छरभिन्नमुखः क्षयं।
केऽप्यूचुः स निजैरेव हतस्तत्र भयान्वितैः। केऽपि व्रणशलाकायाः कष्टमर्म्मविदारणात्।
श्रुततन्मरणो राजा दूतैरत्यन्तदुःखितः। तद्देहाच्छवमानीय जननीसन्निधौ न्यधात्। ११०

ज्येष्ठोऽपि शौर्य्यनिलयोऽपि बलान्वितोऽपि प्राप्तोऽपि जन्मभुवमात्तधनप्रपञ्चः।
नैवाप राज्यमुचितं स कृतप्रयत्नो भाग्यैर्विना नहि भवन्ति समीहितार्थाः।

अथवा पितृशापस्य तस्यापि फलितोऽभवत्। यदाप्तोऽपि निजं देशं परदेशे क्षयं गतः।
अत्रान्तरे महोत्पातादिव्यभौमान्तरीक्षगाः। अन्तःपूर्व्विकयेवापुर्नृपतेर्जनकम्पदाः।
तथा हि प्रथमं रात्रि पुष्पलीलाचिकीर्षया। गते मडवराज्योर्व्वीं भूमिकम्पोऽभवन्महान्।
अस्मात्कष्टजनः कोऽपि सुखी नैवाधुना स्थितः। इतीव देशे तत्कालं चकम्पुर्जनवङ्गृहाः। ११५
उदभूत् पूर्व्वदिक्पुच्छः केतुर्नभसि विस्तृतः। पूर्व्वं बह्रामखानेन दृष्टोऽरिष्टस्य सूचकः।
स दूरविस्तृतः पुच्छः कालकुन्तोपमोदिने। स्फुरन् प्रतीचीं प्रत्याशान्तश्चैव ददृशे जनैः।
युग्मसर्व्वस्त्रवाराजमन्दुरान्तर्गताभवत्। देशात् कष्टं ददौ राजा यां भिया यवनव्रजे।
धिंहादयोर्दिने चैत्र्यन्याः श्रीनगरान्तरे। विडालपोतं सुषुवे शुनी च प्रसवक्षणे।
निष्फलोऽयः सदानन्दो तरुः स सफलोऽभवत्। उपराजगृहं मूलाद्दाडिमीकुसुमोद्गमः। १२०
सुमनोवाटवाटान्तर्भवं शोणितवर्षणं। इति दृष्ट्वा जनः सर्व्वः चरते चारमिवाप्यभूत्।
अत्रान्तरे वरुत्सैदखानागाराहदिपीडनं। हिन्दुकाः विदधुः पूर्णनापितोदलितक्रुधा।
तच्छ्रुत्वा यवनाः सर्व्वे गत्वा क्रुद्धा नृपान्तिकं। चुक्रुशुस्तेन राजापि द्विजपीडनमादिशत्।
अजरामरवुद्धादीन् ब्राह्मणांश्चैवकानपि। तत्कोपेनाकरोद्राजा निकृत्तभुजनासिकान्।
त्यक्तस्वजातिवेशास्तद्दिनेषु ब्राह्मणादयः। न भट्टोऽहं न भट्टोऽहमित्यूचुर्भटलुण्ठने। १२५
बहुखादकमुख्या ये पुरे सन्तोष्टदेवताः। तन्मूर्त्तिलोठनं राजा म्लेच्छप्रेरणयादिशत्।
दत्ता भूर्जैनभूपेन येषां गुणपरीक्षया। तेभ्यस्तां निर्निमित्तेनाप्यहरत्सोऽधिकारिणः।
समाधिसफरोमासः प्रविष्टोऽम्लेच्छदर्शने। सर्व्वदर्शनविज्ञाय न केषां भयकार्य्यभूत्।

भूपं नित्यमदोन्मत्तं सतन्त्रं मन्त्रिमण्डलं। चर्म्मोपहारिणः सर्व्वानन्तरङ्गांस्तरङ्गिणान्।
दर्शितावलपीडार्त्तिपण्डितानवलोक्य च। स्तनश्रीजैनभूपालगुणमालस्तदा जनः। १३०
देशे सरुदिताक्रन्दं शुशोचात्यन्तदुःखितः। सर्व्वहृद्गुस्थिराकृष्टोग्रस्तोदिष्टपराभवः।
सर्व्वकार्य्यान्तरशोऽयं चयं याति कदा नृपः। इति येऽप्यवदन् दुष्टास्तत्सुताविभवार्थिनः।
पारसीभाषया काव्ये यदूचे दूषणा विशां। स शापः फलितो देशे श्रीमज्जैनमहीपतेः।
सेवकाः कितवप्राया भुक्तप्रेष्या नियोगिनः। तच्छापादिव कालेन प्राप्तात्यन्तनिपीडनाः।
किमस्मद्रक्षकोदैवहतोहट्टोमहीपतिः। इत्यादि सास्रसाक्रन्दाः शुशुचुस्तेऽपि पार्थिवं। १३५
स्वल्पोऽपि राज्यकालोऽभूत्तद्वायामैः सुदुःसहः। निदाघरात्रिसन्दृष्टदीर्घदुःस्वप्नसन्निभः।
लोत्तराशिरटहद्रव्यहरणैः परपीडनैः। तुतुषु स्तस्य भृत्यौघाः कौशिकास्तिमिरैरिव।
शय्यारूढोमधुक्षीवः प्रजाकार्य्यपराङ्मुखः। सर्व्वं दिनं निनायान्तः स्वपार्श्वपरिवर्त्तनैः।
कुलालगायनोद्गीतं गीतं शृण्वन्दिवानिशं। गुणिभ्यो राजयोग्येभ्यो नादाद्दर्शनमात्रकं।
श्राहाभदेनराज्ये या सम्पन्नातिमनोहरा। लक्ष्मीपुरे राजधानी तां पुप्लोषोदितः शिखी। १४०
या बलाख्यमठस्थाने वेश्मालो विपुलाभवत्। सापि दग्धा समं तत्र तत्तत्पौरजनश्रिया।
इत्याद्युपद्रवान्देशे दृष्ट्वा वास्तव्यनाशकान्। एतन्नाशाद्भवेदिष्टशान्तिरित्यवदज्जनः।
राजा पश्चाद्गृहावासं स्वं ज्वलन्तं समीक्ष्य च। हर्म्यमारुह्य सन्तुष्टः पानलीलां व्यगाहत।
अस्मिन्नवसरे नेयधिषणः पिशुनेरितः। यात्रार्थं सबलं पुत्रं वहिर्देशे व्यसर्जयत्।
यत्सैन्यं वीक्ष्य दैन्यन्ते ययुर्वासमहीभुजः। प्रदीप्तं रविरश्म्योघं दिवसे तारका इव। १४५
पूर्व्वं राजपुरीराजोजयसिंहान्नृपात्मजं। स्वमारश्च स्वसारश्च दत्वा तोषयति स्म तं।
कालीधारामसिलतामिव वीक्ष्य तदाश्रितां। कम्पं के नात्र वैशस्थाः प्राप्तास्तद्भयतो जनाः।
सेनादीनारकोटीयाः शिश्रियुस्तां भयच्छिदः। बलिभिर्मङ्गला देवीमिवोन्नतभुवि स्थितां।
मद्रगकस्वरचित्तेशा राजहंसास्तमाययुः। सरोवरमिव प्रोद्यच्छुक्लपक्षाविनिर्म्मलं।
राजहृत्तान्तरोधेन स्वपदार्थोपपादकैः। मातुलैरपि तस्याग्रे सुहृज्जैः कङ्कणायितं। १५०
कौमारोड्डसिकं वीक्ष्य कटकालङ्कृता अपि। अभूवन्धैर्य्यरहिता माहिला महिला इव।
बद्धपङ्क्तिस्तरन्ती सा ज्यलमेस्तन्नदीतटात्। तत्सेना रामबद्धाब्धिसेतुकौतुकमातनोत्।
कुटीपाटीश्वरीप्राप्तं तत्सैन्यं दैन्यवर्जितं। नारायणोदरोद्गच्छद्विश्वलोकभ्रमं व्यधात्।
संस्पृष्टे भोगपालानां पुरे मद्राचितान्यपि। सुचिरं धूमितान्यासन् गृहाणि हृदयाणि च।
उन्मादहृदसंसज्जतन्तुरङ्गतरङ्गिता। बाल्येश्वरगिरेः पादमूलं प्रापास्य वाहिनी। १५५
तदीयकटकोद्दीपस्तत्तुरङ्गतरङ्गितः। तं तमेव नतं चक्रे येन येन पथावहत्।
निस्तृणं भूतलं तत्तु निष्पानीयाजलाशयाः। निरिन्धनान्यरण्यानि तत्सैन्ये चलितेऽभवन्।
सोऽहं सम्मान्य राज्ञास्मै दत्तस्तत्समयेऽन्वहं। कुर्व्वन् हृद्यत्कथाख्यानमभुवं छत्रपुस्तकः।

कन्दर्हाशनभूपालः स षण्मासकृतस्थितिः। अभवद्दैवमायान्ते कश्मीरागमनोत्सुकः।
तावद्भ्राम बहामखानो दामनिरर्गलः। आक्रान्तमन्त्रिसामन्तोऽज्ञात्वा व्यसनिनं नृपं। ९०
अथ सन्ततपानेन क्षीणदेहबलच्छविः। स वातशोणितव्याधिबाधितोऽभून्महीपतिः।
प्राप्तोऽहस्सनखानस्य पूर्णचन्द्र इवोदितः। तान्दुष्टमन्त्रिणः पद्मानिव संकुचितान् व्यधात्।
किं नैतेन समानीतो बहापि हजगरक्षराः। इति रोषं सुते राजा पिशुनप्रेरितोऽग्रहीत्।
पश्चिमाशागतं श्रुत्वा तमपूर्वाद्रिसन्निभं। बहामखानोऽसन्देहो मन्देह इव सोऽभवत्।
प्राप्ते सुतेऽधिकं सोऽभून्न तदत्यधिकादरः। मत्वा सन्नविनाशानां धीर्भीत्येव पलायते। ९५
अन्याभ्यर्थनया मन्त्रिशानन्तवां महीपतिः। यात्रागताय पुत्राय ददौ दर्शनमात्रकं।
नूनं स्वानुजभीतोऽभूत्तत्कालं सोऽन्यथा कथं। परिधानादिसत्कारं सूनमेवाकरोत्सुते।
बहामोऽबाधितो नूनं मत्पुत्रमिति शङ्कितः। स तस्मिन्कन्दकोपाग्निः समीतहरिवाभवत्।
पानार्थं राजधान्यग्र तस्मिन्नवसरे नृपः। आहरोह समं भृत्यैर्मृत्युनेव प्रचोदितः।
तत्र पुष्करणीधान्तर्लीलया काचमण्डपे। धावन् पपात नासाग्रसत्त्वदसृग्विसंस्थुलः। १००
कथाचित्तमभुजैर्भृत्यैर्नीतः शयनमण्डपं। अस्तच्छायदवादर्शः संमूर्च्छन् शयनेऽपतत्।
भिषजोऽस्यावमन्यामात्न् कोऽपि योगी चिकित्सतः। विषोत्कटौषधस्तस्य पतने स्म हतव्यथः।
तस्यौषधप्रयोगेन प्राप्तदाहो दिवानिशं। काङ्क्षति स्म स्वमरणं क्षणमात्रं न जीवनं।
राजधान्यन्तरे राजसूनुः स्वजनकान्तिके। आयुकाख्यदंशयुक्तस्त्वह्निष्वपि स्थितिं व्यधात्।
मुमूर्षौ पितरि ज्ञात्वा महतो दर्शनागतान्। तन्निर्गमनिरोधाय द्वारधान्यां भटान् व्यधात्। १०५
स्वालयस्थोऽनुजो राज्याभयदर्पसम्भ्रमः। करानिव रविस्तीक्ष्णांस्तारान् सञ्चारयन्नभूत्।
तत्कालं राज्यलक्ष्मीः सा पितृव्यभ्रातृपुत्रयोः। द्वयोरासीत् समाकृष्टा चित्ते संशयधीरिव।
अत्रान्तरे त्वदापुत्रकस्य मनसा सचिवैः सह। बहामखानमागत्य युक्तमित्यब्रवीद्वचः।
स्वामिन्धैर्याद्दिनास्य हमर्त्यं स्वत्वयस्यपि। सुम्बदीनाभिधो भ्राता प्रयातः कीर्तिशेषतां।
ज्येष्ठोऽधुनावशिष्टस्त्वं भज नृपासनं। स्वयं हस्सनखानाय यौवराज्यं प्रदीयतां। ११०
त्वत्पित्रा महतोद्यमाद्रक्षिता रक्षिता सती। सेयं त्वयाद्य नगरी पाल्या कुलवधूरिव।
किमन्यत् पुरतुष्टाकाः काकाइव बलिप्रियाः। यथायतं प्रयान्त्येते कुमन्त्रा मलिनाशयाः।
श्रुत्वेति भाषितं तस्य कोपकम्पाधरोऽब्रवीत्। सुखियोजनकस्यकस्तादृक्कल्पद्रुनोपमः।
सदैवादमखानस्य बाधितस्य दुराधिभिः। परलोकमनालोक्य स्वार्थे सक्तस्य दूरतः।
अत्रस्यस्य यथा भ्राता सेवितस्सततं मया। जानात्येवं न को राज्यं यथा तस्य मयार्जितं। ११५
कोऽयं मद्भ्रातृपुत्रोऽद्य वद कैवास्य योग्यता। अस्मिन् मत्प्रिहके राज्ये योग्यो मदपरस्तु कः।
स कनीयानहं ज्येष्ठो वयसा च गुणेन च। पृथिव्यां वीरभोग्यायां सामः कोऽवसरोऽधुना।

इत्याद्यनुचितं यत्तेनोक्तं तं प्रत्यमोचयत्। यैः संप्रार्थितकन्योऽभूद्राज्यार्थं कृतभावनैः।
अप्रार्थितांस्तदा मत्वा निराशस्तमपश्यत।
प्रत्याहते नाम्भे हृदजलौघस्य बद्धमूलस्य। कुपथात्प्रसरत्यादौ धृतिरिव सेतौ मतिर्जन्तोः। १९०
युक्तमुक्तवाञ्चेद्राज्ययोग्यतयान्वितः। तुरगाद्यर्जितं सर्वमदास्यत्सन् स्वयं गतः।
अथवाप्तं तमेकश्चेद्दृष्टमिष्यद्वलोन्नतः। कोषं सर्वमुपयास्यैत् स्थितं पितृपुरान्तरे।
अथवा बाह्यदेशश्चेदगमिष्यत्तदध्वना। मिष्टत्तक्रमराज्ये चेदाक्रमिष्यच्छनैर्महीं।
क्रमाप्तफलस्यास्य विमनश्चेद्विलम्बतः। बालवालिशमध्योक्तायुक्तार्थाविनिश्चयात्।
अप्रभिन्नतया तेन बत किं किं न हारितं। नास्मात्कोऽपि चिरं भोक्ष्यतीति तृणया श्रिया। १९५
वरमद्य सुते राज्ञा राज्यं दत्त्वास्ति नः सुखं। इत्येकमेव सम्बोध्य बलिनं नृपवल्लभं।
आयुक्ताह्लादमल्लेकस्तंनव्य सचिवैः सह। चक्रे सम्भावनां राज्यनिर्णये राजसूनवे।
गत्वा स्कन्दं प्रदास्यामि बह्रामसमिति दर्पतः। अभिमन्युप्रतीहारो निःस्विकायामिवेषणं।
अथ स्वच्छन्दवार्त्तां स श्रुत्वा तूर्णं सुतान्वितः। बह्रामखानो त्रिचाणे निरगान्नगरान्तरात्।

दृष्ट्वा महार्घमणिमौक्तिकविद्रुमौघान्नाकरं श्रयति लुब्धमतिस्स एकः। २००
तत्तन्नक्राभयकराम्बुकरांस्तदीयान् वीर्येण यः शमयितुं गतभीस्समर्थः।

श्रुत्वा स्वभ्रातृपुत्रस्य चरितं चित्रमत्र सः। त्रिचाःस्थितबलः पुत्रयुगोध्वागाध्वनाचलत्।
यथैवादमखानस्य निष्कासनमर्थं व्यधात्। तथैवास्याभवद्राज्ञो न चिरेण फलत्यघः।
राज्यस्य दशमासाब्दे कृत्वा मासि च माधवे। वर्षेऽष्टचत्वारिंशेऽगाद्दिवं श्रीपञ्चमीदिने।
वेतालोऽत्रमदुद्दण्डस्तम्भमण्डितमण्डपे। तेनैनोचण्डकोपेन खण्डितोऽक्रियया नृपः। २०५
इत्यूचुः केऽपि केऽप्यूचुर्योगिनोऽस्तहस्ततः। न्यस्तात्कटौषधेर्ज्वलरुविरस्तमगान्नृपः।
केचिद्गात्रैव दृष्टेन कैवल्यात् सुतवर्जिते। भूपतेर्दुश्चिकित्सार्थे कारिताभिषजस्त्वरां।
दिव्यं मौसुलवैदेन कृत्वा श्वस्ततया तया। वहिः सोटालदेशादौ हत्वा द्रोहेण पार्थिवान्।
येभ्यस्य राज्यतिलकं सिंहासनगतोऽग्रहीत्। पित्र्यांस्तान् सचिवान्दृत्वा प्रमीत इति केचन।
नूनं स पितृशापेन तत्तत्पापेन दूषितः। हिमौघदव तापेन बिलयं प्रापदञ्जसा। २१०
निष्कण्टकं पुरं ज्ञात्वा निःशङ्को नृपनन्दनः। जनकं शिविकारूढं स निनाय शवाजिरं।
मञ्जूषिकान्तरान्नीत्वा तं पटीकावृतं शवं। पितुः पादतले तत्र भूगर्भाभ्यन्तरेऽक्षिपत्।
सर्व्वे मृन्मुष्टिकामात्रमेतदेवेति शंसिनः। मुखावलोकनं कृत्वा तस्मिन्मृन्मुष्टिकां जहुः।
गर्त्तं तत्र समापूर्य शिलां मध्योन्नतां न्यधुः। कठिनोऽयमभूद्युद्धे जनानित्येव सूचितं।
अरुदन् सेवकास्तस्य हृतवज्रोवदारणाः। स्मृत्वा स्वामिप्रसादानां मुखरीकृतदिङ्मुखाः। २१५
तद्राज्यं स्वल्पकालीनं प्रसादसुभगोर्जितं। अविन्दन् सेवकास्तस्य स्वप्नस्वर्गाप्तिसंनिभं।
पारसीभाषया हिन्दुस्थानवाचा च भूपतिः। काव्यं गीतं व्यधाद्येन प्रशंसन्ति न के जनाः।

पुराणधर्म्मशास्त्राणि मोक्षोपायादिसंहिताः । शृण्वतो भूपतेरासीद्यामिनीषु प्रजागरः ।

दोषाकुलाः परस्पृहाशुभपाकदा ये घूकादयो दिनपतेरुदयं द्विषन्ति ।

तस्मिन् समुद्यति महारुचिरप्रकाशे निष्ठाभ्रमन्ति विपिनेषु गुहासु दुःखाः ।

दुष्टान् [illegible] प्रकारादीन् ज्ञात्वा निष्ठाम्विशिष्टधीः । खानोऽन्येद्युः सद्वृत्तोऽपि कारागारान्तरे न्यधात् । ११०

निर्वत्यान्त्यक्रियां सर्व्वां स पितुर्व्ययशालिनीं । राज्याभिषेकसम्भारं चक्रे षोडशभिर्दिनैः ।

घूकादयो नभसि सन्ति परास्तशस्तास्तावत्प्रदोषसमयाप्तसुखप्रचाराः ।

आशाप्रकाशविशदो विलसत्प्रकाशोभास्वान् यावदुदयं कुरुते सुचण्डः ।

इति जैनराजतरङ्गिण्यां पण्डितश्रीवरविरचितायां हाज्यहैदरशाहराज्यवृत्तान्तवर्णनंनाम द्वितीयस्तरङ्गः ॥



## ॥ अथ श्रीवरपण्डितकृता तृतीया जैनराजतरङ्गिणी ॥

### ॥ तृतीयस्तरङ्गः ॥

शिवायास्तु नमस्तस्मै त्रैलोक्यैकमहीभुजे । अशेषक्लेशनिर्मुक्तनित्यैश्वर्यद्भाजुषे ।
भूतं यद्राज्यवृत्तान्तं वर्त्तमानं करोत्ययं । स्वतोयोग्यप्रकारेण वन्द्यो योगीश्वरः कविः ।
प्रतिग्रहानुग्रहाशा भुक्ता यन्नृपजीविका । तद्वृत्तं स्वयं निष्कृत्यै वक्ष्ये श्रीवरपण्डितः ।
स्वदृग्दृष्टस्वतन्त्राभ्युदिपदिभववैकृतैः । धेयं कस्य न वैराग्यं सूते राजतरङ्गिणी ।
राज्यवृत्तानुरोधेन न काव्यगुणचर्चया । सन्तः शृण्वन्तु मद्वाचः स्वधिया योजयन्त्वपि । ५
काव्यश्लोकितदेवेयं कृता सत्यै भविष्यतां । दृष्टेदं ललितं काव्यं कुर्वन्तु येऽत्र पण्डिताः ।
ततः श्रीहस्सनोराजा व्यसनोज्झितवासनः । श्रेकन्धरपुरीं त्यक्त्वा पित्र्यां प्राप्तश्च सुन्दरं ।
आगमज्जैननगरं पितामहविनिर्मितं ।
सिंहासनोपविष्टस्य निर्मलाम्बरभूषणः । बभौ कुवलयानन्दी शशीवोदयपर्व्वणि ।
सेवकोऽथाह्मदायुक्तो विधाय तिलकं स्वयं । सौवर्णकुसुमैः पूजामकरोन्नवभूपतेः ।
रौप्यासनसमुद्भ्रान्तः कृत्वा छत्रपिधानकं । एकमेवतयेत्र श्रीररचद्दंशभूषणं । १०
चित्रं नवनृपस्यास्य मुखचन्द्रावलोकनात् । नगराननपद्मानां विकाशः समपद्यत ।
अभिषेकक्रियारब्धहोमधूममिषाद्ध्रुवः । हर्षेणैवोद्गतो राज्ञामुखोच्छास इवाबभौ ।
वाद्यमानोद्यतातोद्यतोद्यप्रतिरवच्छलात् । सुप्रसन्नाश्वदेवास्य प्रोचुः पूर्णाशिषो दिशः ।
ध्वजमालाबभुर्दीर्घस्फुरद्रक्तपटाञ्चलाः । ज्वाला इव प्रतापाग्नेर्निर्गता नवभूपतेः ।
छायाकुसुमकार्य्यास्ता बभुः श्वेताः प्रविस्तृताः । चिरात्तदण राज्याप्त्या हर्षहासा इव श्रियः । १५
कौशेयकाञ्चनालास्सर्व्वे सेवका नवभूपतेः । स्फुरद्भाग्यतरङ्गस्य तरङ्गा इव तेऽरचन् ।
कार्पासकपरीधानं यत्र यत्राभवत् पुरा । तत्र तत्रास्त तद्राज्ये कौशेयकव्ययो महान् ।
राज्यलाभे वसन्ताभे सर्व्वस्यैव महीपतेः । प्रत्यापहारकास्सर्व्वे दुष्टसेवालयं ययुः ।

रविः प्रदीप्तः कुरुते प्रकाशं विभाति चास्मिन् सति सूर्य्यकान्तः ।
तस्मात् समुत्थस्य च पावकोऽन्यस्तमोपहः किं न करोति कार्य्यं ।

आसन् पितृपितृव्याद्या यत्कृते विफलश्रमाः । पौत्रेण हेलया प्राप्तं तद्राज्यं गतकण्टकं । १०
पितुः पितामहस्यापि पितृव्यस्य च सम्पदः । भाग्यभाजं नृपं प्रापुस्सर्व्वाः सिन्धुमिवापगाः ।
षड्दर्शनपरिचयं सोऽग्रहीत् मत्सरोज्झितः । षड्दर्शनक्रिया यस्मिन्नैकमत्यमिवाययुः ।
भूपतेरह्मदायुक्तो नियुक्तस्सर्व्वकर्म्मसु । साचिव्यं पुत्रसंयुक्तः पुण्योद्युक्तस्तदाकरोत् ।
अथ प्रथममेवाह्मदायुक्तं मल्लिकं नृपः । सग्राममग्राममनायाममप्रमेयस्वामिनं व्यधात् ।
पुत्रोऽस्य नौरुजा युक्तो द्वारपालादिकार्य्यभाक् । इचिकामभजद्राष्ट्रं सग्रामविमतोर्ज्जितः । १५
पानलीलान्तरे तत्र प्रसादामृतवर्षिणा । येन दारिद्र्यदावाग्निः केषां न क्षपितः क्षणात् ।
बहिर्देशस्थिते राज्ञि बान्धे यस्सेवकोऽभवत् । स ताजिभट्टोमल्लेकमतः प्रापान्तरङ्गतां ।
निग्रहानुग्रहव्यग्र. समये राज्यविग्रहे । दत्तदूत्याधिकारेण राज्ञोजिह्वेव सोऽभवत् ।
अधिकारनदी पूर्व्वं स्फुरन्ती शतधाभवत् । तदा द्वितीयया वृत्त्या तस्मिन् कृतपदा बभौ ।
अन्येऽप्युच्चावचान् ग्रामान् जोनराजानकादयः । पूर्व्वसेवानुसारेण प्रसादं प्रापुरक्षमाः । २०
श्रीमल्लेकाह्मदस्सर्व्वकार्य्ये यां स्थितिमब्रवीत् । तां नादलङ्घयद्राजा वेलां सिन्धुरिवाल्वणः ।
पित्र्याः पैतामहावापि विरुद्धा बन्धनेऽवसन् । भुद्देशं धिया तस्य तेषां निष्कासनं व्यधात् ।
सर्व्वदर्शनसंयुक्तान्नृपो मन्त्रिविधेयधीः । पितामहसमाचारं प्रावर्त्तयत मण्डले ।
स्वामी क्षमी कृतज्ञश्च मन्त्री भक्तः स्मयोज्झितः । संयोगोऽयं प्रजापुण्यैः सुचिरेण निरीक्षितः ।
उच्चासनेषु मार्गेशठक्कुरादीन्निवेशयन् । तद्वृत्तदत्त राजाग्रे स निषण्णोऽभवत्तदा । २५
हितं प्राणपणेनापि प्रभोस्सम्पादयन्नयं । सेहश्रवदेर्तास्मन्नाभवद्भक्तिखण्डितः ।
मठाग्रहारसदननिर्म्माणातिथिपूजनैः । नृपोपचारैस्साफल्यमनैषीत् सर्व्वसम्पदः ।

कमलममलं दृष्ट्वा श्रीमत्स्वकोषविभूषितं मथयितुमथ प्राप्तोयावन्मदान्धदवारणः ।
प्रकृतिमलिनस्तावन्मग्नस्स पङ्कसरोवरे श्रवणचपलाबद्धो याति क्षयं मधुपस्सह ।

अत्रान्तरे स बहामखानः पिशुनमोहितः । देशान्तरोद्यमं त्यक्त्वा युद्धायागान्मदोद्धतः ।
तद्वलान्तरमेष्यामोवयन्तश्च रणक्षणे । इति लेखैर्धृताश्वन्तमकुर्व्वन्राजपूरुषाः । ३०
कर्णाभ्यन्तरतः शैलानुल्लङ्घ्य कटकोत्कटः । क्रमराज्यपुरं प्राप्तः क्रमराज्यजिहीर्षया ।
तावन्मन्त्रियुतो राजा स्थितोऽवन्तिपुरान्तरे । तत्प्रत्यावृत्तिवार्त्तां तां श्रुत्वा तूर्णं न्यवर्त्तत ।
राजा स्वय्यपुरं प्राप्तः पितृव्यागमविक्लवः । आनीय सचिवान् सर्व्वान् सभान्तरिदमब्रवीत् ।
पितुः क्रमागतं राज्यं पुत्रस्येत्युचितं मम । कोऽयं पितृव्योज्येष्ठोऽपि कनिष्ठोनिर्म्मितोद्यमः ।
अथवा वीरभोग्यायां भुवि कोऽयं नयोद्यमः । युद्धेन विजयी य. स्याद्राज्यभाक् सोऽस्तु मण्डले । ३५
श्रुत्वेति नृपतेर्व्वाक्यं प्रत्यूचुर्मन्त्रिनायकाः । ये तेऽप्यादमखानाद्यास्त्वदर्थं विधिना हताः ।

कोऽयमल्पबलस्तेस्योद्याद्वा स्थानपरिच्युतः। किन्त्वन्नावनरेनास्ति समित्युभयचेतनाः।
अमुमेव मिलन्त्येते यदि किं क्रियते पुनः। तच्छ्रुत्वा कोशसामग्रोमितो गत्वा बहिस्तनः।
देशमाक्रम्य नः कार्य्यं सिध्यत्येवाचिरादिभो। श्रुत्वेति मल्लिकः प्राह भूपं तत्र सभान्तरे।
तिष्ठत्वत्र भवांस्तावन्मौनं मन्त्रिसभान्वितः। स्वकीयादमखानीयां जेतुं तं विशामहे। ५०
ते चेज्जिता वयं यामः पुनस्सर्व्वबलान्विताः। कोऽयं तत्सम्भ्रमः कस्य सहायः किं करोत्यसौ।
श्रुत्वेत्यादि मतं तेषां विविधं निश्चयोज्झितं। मल्लिकाह्मदमन्त्रेण कर्त्तव्ये प्रत्यपद्यत।
पितुः पितामहस्याथ सैन्यं कृत्वा निजान्तिके। पैतृव्यान् सेवकान् स्वांश्च दत्वा तत्तद्दलान्वितान्।
सफिर्यडामरांस्ताजिभट्टादीन् व्यसृजन्नृपः। योद्धुं बह्रामखानाय मावरीदेशवासिने।
अथ स्वल्पबलानेतान् जेष्यामीति त्वराकुलः। तावद्बह्रामखानस्तु प्राप दुलपुरान्तरं। ५५
अनागतैः कृताश्वासैरपि राजमहत्तमैः। स्वात्मानं वञ्चितं मेने तन्निराशो नृपात्मजः।
तद्दिने राज्यलक्ष्मीस्सा पितृव्यभ्रातृपुत्रयोः। द्वयोरासीत् समारूढा कोट्यास्सन्देहधोरिव।
घोरादवान्धकारौघे दैराज्योपप्लवप्रियाः। तुतुषुस्तकभावाद्यास्तं श्रुत्वा क्रमराज्यजाः।
अथ जैनगिरिं यावदाययौ तद्रणाकुलः। दूतस्तावत्समागत्य भूपतेरिदमब्रवीत्।
देव बह्रामखानस्य तनयोनयविच्युतः। युयुत्सुस्समरे बद्धः करीव मदनिर्भरः। ६०
पतिते तद्रणोद्याने त्वद्बलोद्धूतमारुते। तत्यजेऽनुचरैः खानः पौषे पर्णैरिव द्रुमः।
ततस्सञ्चरमेराद्यागर्ज्जन्तस्सैन्यनायकाः। दृष्टमेघादिवायाताश्शकुन्ताश्चरजर्षणं।
धन्यास्ते श्लाघ्यमरणास्सुरणाः स्वामिनः पुरः। स्मृत्वामितप्रसादानां जीवं यन्तृणवज्जहुः।
तच्छुद्धये क्षणमवेत्त्य मितप्रसादं प्राप्ते रणे जहति ये निजजीवरत्नं।
शस्त्राणि पुष्पनिकरानिव संविदन्तोधन्यास्तएव कतिचित् प्रभुसेवकेभ्यः।
अथो देवस्य माहात्म्यं यत्तस्यैव रणे भटाः। शिरालमार्गपाद्या ये तद्भृत्याः प्रलयं ययुः। ६५
इदं चित्रतरं यस्मः कटके कोऽपि नो मृतः। किन्त्वस्मद्भटनिर्मुक्तशरायफलसन्धिजात्।
निष्कष्टुं नाशकल्कोष्टात् खड्गं खानो रणोद्यतः। तेनाफलायुधः खानोदीनस्त्वद्भटवेष्टितः।
चितानलदवासारैर्मिथोश्मा समपद्यत। यावत्समेत्य हन्तुं तं प्रारभन् कृपया द्रुतं।
तं फिर्य्यडामरस्तावदरक्षदाङ्गपञ्जरे। भूः पङ्किलातिष्टष्टिश्च दिजोऽग्रे निस्सहायता।
मृत्युभीतिरिति प्राभूत् किं किन्तस्य न दुःखदं। शीतवातभयोद्विग्ना मग्नाः केदारकर्दमे। ७०
त्यक्त्वा तं तद्भटा नग्ना गर्त्तोटादिव तेऽस्खलन्। अर्जिता सर्व्वसामग्रीं पामरैः परिलुण्ठिता।
साक्रन्दश्च सुतं पश्यन्नश्यद्धैर्य्यस्स विव्यथे। दृष्यौ च क्व च मे भ्राता क्व भृत्याः क्व गृहादिकं।
ससुतः शत्रुभिर्बद्धः कं पृच्छामि करोमि किं। वरं मरणमेवास्तु मा मास्तु मम जीवनं।
फलितं वचनं मेऽद्य यदुक्तं जनकेन तत्। धिङ्मांश्चिन्तामणिं त्यक्त्वा येन काचमणिः श्रितः।
इत्यादि निन्दन् स्वात्मानं पश्चात्तापहताशयः। जीवन्मरणसम्पन्नः खानस्सम्प्रति वर्त्तते। ७५
पौषे तरुरिवोन्मग्न. फलपत्रविवर्जितः ॥ कुलकं ॥

राज्यं तव क्रमायातं दत्तं देवेन भुज्यतां । फलितो धर्मविजयः सोऽयं भाग्यैर्महीपते ।
किमन्यत्तस्य कर्त्तव्यं यत्तु तूर्णं समादिश । श्रुत्वेति नृपतिस्तुष्टो दत्वास्मै पारितोषिकं ।
जयवाद्यनिनादौघैस्तत्सर्वं बलमतोषयत् । अन्येद्युस्तद्भटाजैननगर्य्यां कटकवेष्टितं ।
बहामखानमानिन्युस्तत्सुतं भूपतेः पुरः । संग्रामविजयोत्थिकं सत्कर्त्तुं स्वभटव्रजं ।
सहर्षो राजधानीं तामारुरोह नरेश्वरः । उच्चावचोक्तिमुखरपौरान्तरगतं गतं ।
भूमेरभ्रमिवेत्तन्तं लज्जया च भयेन च । रणक्षणभटन्यस्तहस्तध्वस्तविभूषणं ।
दयालुनीचदत्तात्मजीर्णवस्त्रावगुण्ठितं । मुखलग्नेषु भेदोपद्रुकाकष्टतवेष्टनं ।
अलक्ष्मीवीचितं दूरात् पित्रव्यं क्षणमैक्षत । भाग्यार्जितस्य भूभर्त्तुरग्रे बद्धस्तमात्मजः ।
दीनात्मा ददृशे पौरैः स्थिराः कस्य विभूतयः ।
लोभाक्रान्तधियो विवेकमुचितं मुञ्चन्ति यन्मोहिताभुक्ता या मनसापि दर्पकलिताल्लभ्यं न शक्याः स्वयं ।
सन्तापाय भवन्ति सन्ततमलं नीताः परैस्तैर्द्दत्तास्मा मा सन्तु भवेऽत्र हन्त चपला वेश्यादृवेताः श्रियः ।
उपेक्षितः पिता तादृगस्वास्थ्ये स्वार्थलिप्सया । ज्येष्ठोऽप्यादमखानस्तु बाधितोपाययुक्तिभिः । ८५
दुराशयापरोभ्राता श्रियोऽसाध्यामपेक्षणात् । राज्यलोभात्त्वत्सुते तास्ताद्रोहधियः कृताः ।
अद्यैतेन फलं प्राप्तं तदधर्मविनिश्चयात् । दृष्ट्वा बद्धं तमानीतं खानमित्यवदज्जनः ।
केऽप्यूचुस्तं पितुः शापाद्धिमूढस्तमपद्यत । तथाहि तं पिता जातु पितृदैवे रहोऽब्रवीत् ।
राज्यं त्वदग्रजाभ्यां मे नाशितं वैरतो मिथः । तत्राप्यनिष्टौ द्वावेव मम चिन्ताज्वरप्रदौ ।
तदेतौ विनिवार्य्याहं युक्त्या देशसुखाशया । त्वामेव वर्द्धयिष्यामि त्वं मदेकाश्रयो भव । ९०
श्रुत्वेति प्राह तं नाहं जातु चेद्भ्रातरं त्यजे । यतो ज्येष्ठोऽस्ति मे त्विष्टा द्वयोः किं स करिष्यति ।
श्रुत्वेत्याहाग्रजं हन्तुं त्वयेच्छसि त्वां स रक्ष्यति । प्राप्तप्राघुणहस्तेन भुजङ्गमिव वेश्मगं ।
सिद्धकार्य्यस्तपुत्रस्तु बाधते यदि का गतिः । तच्छ्रुत्वा संस्कृतग्रस्तु श्लोकेनेत्युत्तरं ददौ ।
विद्यातीर्थे श्रुतपरिचिताश्माधवस्तत्यतीर्थे गङ्गातीर्थे सकलमुनयो योगिनोऽध्यात्मतीर्थे ।
लज्जातीर्थे कुलयुवतयो दानतीर्थे वदान्या धारातीर्थे धरणिपतयः किल्बिषं क्षालयन्ति ।
तदाकर्ण्याब्रवीद्राजा सक्रोधं तं दुराशयं । बहुधा युद्धदृष्टोऽसि नाहं यत्रास्मि तत्त्वमः । ९५
वराकः खड्गधारार्थी तत्र त्वमपि दर्पितः । किं वक्ष्युत्पाटने योग्ये नेत्रे पश्यामि दुर्धियः ।
तदेकएव नष्टस्त्वं भवेत्स्मानुशयोऽचिरात् । इत्युक्तमस्मिन् पित्रा यत्तदद्य फलितं वचः ।
तमीक्षेति कथा लोकः सशोकोऽप्यकरोन्मिथः । इति बहामखानपराजयः ॥
यथोचितैर्दानमानैस्तोषयित्वा निजं बलं । तस्मिन्नेव दिने राजा तुष्टो नगरमाययौ ।
बद्धं रिपुं समादाय नौकारूढं सुतान्वितं । श्रीजैननगरे राजवासे स्वे बन्धने व्यधात् । १००
जननी नृपतेः प्रीता दर्शनामृतवर्षणा । अमन्यत रणोत्तीर्णं पुनर्जातमिवात्मजं ।
शङ्कितो यौनसम्बन्धाद्भूपतिः कतिचिद्दिनैः । हषावतारसीहादीन् कारागारान्तरे व्यधात् ।

पापोमल्लिकटाजस्य पद्मगङ्करदेशजः । पुनश्चाटुकतन्त्रेण तत्तदायासकार्य्यभूत् ।
उत्कोचमुद्रादानादिप्रपञ्चाञ्चितवञ्चनः । सुमञ्चयक्तता येन देशोऽशेषो विलुण्ठितः ।
अभिमन्युप्रतीहारः स्वतन्त्रोमन्त्रिमण्डले । स देवसरसि स्वाम्यमभजद्दलदर्पितः । १०५
लोत्रप्रतिग्रहच्छेत्रदत्तरुद्धिः पदे पदे । लुब्धस्य निजमात्मानममनाशीर्भाजनं व्यधात् ।
शङ्कोराजगृहासन्नः पितृव्योबन्धनस्थितः । त्वय्यप्यत्र स्थिते कोऽपि नीत्वा द्वैराज्यमाचरेत् ।
इत्यादि प्रेरितोऽनेन नेयबुद्धिर्नरेश्वरः । क्रुद्धोबद्धामस्थानाय नेत्रोत्पाटनमादिशत् ।
तस्य तूलाचिते नेत्रद्वये तप्तां शलाकिकां । जैनराजानकोलोर्ही कृष्णाशार्थमदापयत् ।
नैर्गुण्यादचिहन्तुर्य्यत्कष्टाचस्य च या व्यथा । इयं न शक्यते वक्तुं यथार्थं मादृशां गिरा । ११०
दुर्णीतिमवदन् केचित् केचिदीश्वरजृम्भितं । प्राक्कर्म्मपाकमपरे मीचसङ्गमथापरे ।
केचिद्विभववैशस्यं कातरत्वमथापरे । तदन्धकरणं श्रुत्वा कोऽप्यवाच्यगिरोऽब्रवीत् ।
मानुष्यं मास्तु तच्चेत्यादरं प्राकृतवेश्मनि । राजगेहेऽस्तु मा जन्म कस्यापीति न कोऽवदत् ।
स्फूर्जद्भाग्यसमुद्भवन्नवनवप्रोल्लासपसम्पत्सुखः प्रायोवेत्ति विभुर्व्विनोदकलया कालं विशालं क्षणं ।
दौर्भाग्यादितदुर्गतः स्मृतिनिजप्राच्यप्रकर्षोन्नतेस्तस्य प्राप्तमहाभयस्य स भवेत् स्वप्नोऽपि कल्पोपमः ।
अयःशृङ्खलबद्धाङ्घ्रिर्योऽन्धस्तत्रैव बन्धनैः । स्मरन्विभवसामग्रीमनयच्छेषमायुषः । ११५
नायं गीतैर्विना जातु वर्त्तते स्म गृहान्तरे । इत्यैव तस्य साराशास्त्रिशोजागरणं व्यधुः ।
योऽभूच्छय्यागृहे नित्यं सर्व्वाङ्गे सेवकैर्वृतः । अभूवन् केवलं तस्य भृत्यास्खटकमत्कुणाः ।
वितानावलयोयस्य बभूवुर्दुर्लभाः सुरैः । दृष्टास्तएव तद्गेहे लूतातन्तुविनिर्म्मिताः ।
यद्वपुः कोमलं पट्टतूलशय्यामभूषयत् । तदा तत्तस्य भूपृष्ठेऽशयिष्ठादृष्टविष्टरं ।
दीयतां दीयतां तस्य वाणी या त्यागिनः श्रुता । विपत्त्वणेन सैवाभूत्तत्तद्वस्तुपयाचने । १२०
गतं स्वाम्यं हता भृत्याः प्राप्तः परिभवो नवः । बन्धनं शृङ्खलाबन्धैर्नेत्रोत्पाटनतो व्यथा ।
इत्येवैकः स्मरन् दुःखं सोऽन्धोराजसुतश्चिरं । नाश्वासीत् स्वात्मनस्तुल्यमपरं प्राकयास्वपि ।

कोषोज्ज्वलं कमलमेत्य नवं समन्तादस्मिन् रमेऽहमिति तुष्यति चञ्चरीकः ।
दोषानुषङ्गमधिगम्य निबद्धमूर्त्तिस्तत्रैव नाशमुपयाति विधौ विरुद्धे ।

राजवासःस्वलीलार्थं निर्मितस्तेन यः स्वयं । सएव बन्धनायाभूत् को वेत्ति भवितव्यतां ।
इत्यं वर्षत्रयं तावदनुभूतमहाव्यथः । अस्थिशेषतनुक्लेशात्तस्मिन्नेव क्षयं ययौ । १२५
देशकालमनालोच्य वैरं यः कुरुतेऽरिभिः । स नश्यत्यचिरेणैव शौर्य्यश्रीमण्डितोऽपि सन् ।
अभिमन्युप्रतीहारस्तत्तच्चौर्य्यमहोद्धतः । अयुक्तपचं प्रबलं नासहिष्ट स निष्ठुरः ।
स्वातन्त्र्येण स्फुरत्प्राग्वत् स्फुरद्वाक्करताडनं । दर्पादायुक्तपचस्य सूचीवाचिगतोऽभवत् ।
उपायान् कुर्व्वतस्तांस्तांश्छन्नकोपेन मन्त्रिणा । बन्धुं तं मल्लिकेनात्र नावाप्यवसरः क्वचित् ।
एकदा तद्गृहं गत्वा स्वस्तं श्रीत्रिजयेश्वरे । तद्भिया नृपतीराज्यधान्यन्तस्तमबन्धयत् । १३०

अभिमन्युः स्वयं ख्यातः पाण्डवाद्यास्य तत्सुताः। शृगालवत्तदाभूवन्विनिगिरन्त्या विविधा विधेः।

यस्याहवे मुखमवेक्ष्य महागजेन्द्रा दूरं प्रयान्ति बलिनस्तनिलीमुखाद्याः।

दर्पोद्विरेद्यदि न निर्म्मितकूटयन्त्रं कस्तं निरोद्धुमलमुत्सहते मृगेन्द्रं।

सपुत्त्रं हृतसर्व्वस्वं बद्धा नौकान्तरे ततः। ताजिभट्टः समानीय कारागारान्तरेऽक्षिपत्।
यादृग्बहामखानाय कारयन्नृपतेरसौ। वर्षैकेन तादृक्षं नेत्रोत्पाटनमन्वभूत्।
यादृग्बहामखानस्य व्यथाभूदतिदुस्सहा। अविन्दत्तादृशीं सोऽपि वक्तुं नान्येन शक्यते। १३५
यस्मिन्नेव दिने यस्मिन्मासे विप्रियमातनोत्। तस्मिन्नेव दिने तस्मिन्मासे सोऽपि समासदत्।
सोऽपि वर्षद्वयं भुक्त्वा सपुत्त्रो नरकव्यथां। बहामखानवद्बद्धोव्यसनान्तव्यपद्यत।
अद्यैव महृषौ धन्ये याभ्यां मत्कुलवैरिणः। सर्व्वस्वहरणं दृष्टं मरणं जैनभूपतेः।
इत्यूचे निष्ठुरं यस्य दुष्टात्मा हतलुण्ठनः। तद्दुष्कृतसमापाको तयोर्नाशोऽभवत् फलं।
चिन्तितं जैनभूपेन सम्पन्नं नैव यत्पुरा। हेलयास्याद्य पौत्त्रेण कृतमित्यब्रवज्जनः। १४०

यत्कर्त्तुमिच्छति परापचयं मनुष्यस्तेनैव तस्य नियमेन भवेद्विनाशः।

शृङ्गं बिभर्त्ति हरिणः पररन्ध्रबुद्ध्या शार्ङ्गीकृतं तदिषुर्निहरते तमेव।

हृष्टोरम्यश्चिरमुपवने वंशवाटी जनैर्या नानावर्णैस्तृणगणगुणैर्भूषिता भूरिपत्रः।

तत्रान्योन्याहननजननात्तादृगभ्युत्थितोऽग्निर्व्वैकान्तादुपवनगतं सर्व्वमेव प्रनष्टं।

या कारकसभा रम्याभवन्नालमहीभुजां। अचिरेणैव कालेन सर्व्वा स्वप्नोपमाभवत्।
कष्टं मल्लिकजादोऽयमन्यजं स्वामिमिच्छति। राज्यार्थमिति केनापि राज्ञोऽग्रे पैशुने कृते।
सर्व्वस्वहरणं कृत्वा कारायां बन्धुमादिशत्। श्रुतेन तेन यद्विष्टोन कः सौख्यं समासदत्। १४५
आक्षेपैरर्जिता यद्वत्तेन श्रीन्यायवर्जिता। तद्दराक्षेपतस्तस्माश्चीता राजाधिकारिभिः।
उत्कोचमुद्रादानाद्धितन्तदायासकारणात्। स विपत्पतितो नाभूत् कस्यापि करुणावहः।
कदर्य्यहस्तेक्षणसौख्यनिष्ठं विश्वस्यमुद्धं प्रसभं धनं यत्। कष्टेन निर्याति तदेव कष्टं शुनीभगं लिङ्गमिव प्रविष्टं।
एकैकं सञ्चितं वस्तु कष्टं कष्टेन तत्करात्। नियुक्तैः पीडनं कृत्वा विलान्तर्गतसर्पवत्।
पूर्णनापितमल्लिकजाद्याद्या हृतसम्पदः। बन्धनस्थाश्चिरं भूत्वा ते सर्व्वे प्रमयं ययुः। १५०
तन्नद्राज्यहिताकाङ्क्षिकुले तस्य क्षयावधिः। शापः श्रीजैनभूपस्य प्रसारितभुजोऽभवत्।
सन्त्वराज्यविवर्द्धनं कुरुत भोस्तत्यं ब्रुवे मन्त्रिणो नाशं स्वामिनि कुर्व्वतां नहि सुखं स्यादः परत्रेह च।
येर्यैर्जैनमहीपतावपकृतं पुत्त्रैर्न भृत्यैर्न वा तैर्लब्धं फलमीदृशं तदहिता मात्सर्य्यधीस्त्यज्यतां।
अन्येऽप्युद्धावचास्तस्य सेवका ये तदाभवन्। तदनिष्टकरास्सर्व्वे तद्वत्तेऽपि प्रमिम्यिरे।
यावद्वसति वसन्तस्तावद्विलसन्ति सन्ततं भृङ्गाः। तस्मिन्निष्टे नष्टे भ्रष्टच्छाया नु चेष्टन्ते।
पूर्व्वं जैननृपस्सैद्दनासीरादीन्समागतान्। पैगम्बरान्वये जातान् पूज्यान्मत्वा महागुणान्। १५५
प्रोत्थानकरस्पर्शद्मितातुलसत्कृतीन्। स्वसुतादानमानेन यांस्तान् राज्ञाधिपान् व्यधात्।

तेभ्यश्चोद्ज्यमालादीन् राजा ज्ञात्वा तरङ्गितान्। प्रत्यमुञ्चत्तदा देशात्तत्सुसमवञ्चयत्।
स सैदनासिरो धन्यो गण्यो युधि मनीषिणां। योविचार्य्यायतिं राज्ञि सति देशान्तरं ययौ।
सुतोपनयनाद्राज्ञस्तुचिरं यैर्नृपायितं। वज्रकूपाधिराज्याधिपत्यनित्यसुखोज्ज्वलैः।
इतस्ततोभ्रमन्तस्ते केचिद्दिल्लीपुरं ययुः। केचिद्विभवलोभेन पुनर्निष्काशिता अपि। १६०
सारमन्त बहिर्देशे माघे मधुकरा इव।
प्राप्ता ये परदेशजाः कणभुजा देशेऽत्र सम्पद्युता गर्भात्यादिव विस्मृतात्मचरिताः कुर्य्युः प्रजापीडनं।
ते तत्पापभरेण नष्टविभवा निष्काशिताः स्वामिना गच्छन्ति द्रुदहृष्टमत्स्यतुलनां तज्जीवनाशाकुलाः।
राजानकैष्ठक्कुरैस्ते तन्मार्गपतिभिस्सह। निबद्धयौनसम्बन्धकृतैक्यामल्लिकोऽभवत्।
सर्व्वतन्त्राधिकारेण राजतन्त्रमखण्डितं। ताजिभट्टाय मल्लेको मुष्टिबन्धमिवाकरोत्।
पुत्त्रीकृतोऽयं मद्वंश्यः सदाकस्मात् स्फुरत्यतं। इति तस्याश्चमिष्टादौ मल्लेकः स्फूर्जितं न कं।
स्वसारं वोचते स्वल्पं मार्गेशोऽपि ज्यहंगिरः। स्वसारं सैदनिर्मुक्तिदत्तपत्राङ्कितां व्यधात्। १६५
तन्मार्गेशाग्रजं राजा नमते न प्रसन्नधीः। अभ्यर्थ्य ताजिभट्टाय मल्लेकस्तामदापयत्।
ज्यहङ्गिरोऽपि मार्गेशः क्षितिपालानुरोधतः। स्वाग्रजार्पणमेतस्मै चक्रमे नयदक्षधीः।
चञ्चरीका इवोद्यानं कुल्या इव महोदधिं। भाग्यभाजं समायान्ति कलत्राणि च सम्पदः।
तां मार्गेशकुलोद्यानकल्पवल्लीं फलप्रदां। तैस्सम्पूर्णगुणैः पूर्णां भट्टोलक्ष्मीमिवासदत्।
सैदनिष्काशनं नैव सम्पन्नं जैनभूपतेः। हेलयैवास्य पौत्त्रेण कृतमित्यवदज्जनः। १७०
कृते निष्कण्टके देशे मल्लिकाह्लादसम्मतः। प्रतिष्ठापिकोराजा तत्सभा च तदाभवत्।
विवाहोत्सवसन्देशमत्याद्यादिमङ्गलान्। नापरामग्रहीच्चिन्तां सौराज्यसुखितोजनः।
पश्चाशदत्सरे राजा निर्म्ममे निर्म्मलेक्षितः। दिद्दामठे नदीप्रान्ते राजधानीं मनोहरां।
धन्याहमन्या किं शून्याइत्येवाम्बुनि विम्बिता। स्फुरच्चतुष्किका हर्षान्नृत्यतीव दिवानिशं।
मदंशेन कृता केनापीदृशीति दिदृक्षया। स्वर्णच्छत्रच्छलाद्यस्याः प्राप्तोव्योम्नो दिवाकरः। १७५
यत्काष्ठक्लिप्तकोणस्थदारुगारुडमूर्त्तिभिः। त्रस्तास्त्वरन्तोनायान्ति पक्षिणस्तन्नभोध्वना।
गोल्खातोनाभिधा राज्ञी माता दिद्देव देवता। विशालां धर्मशालां सात्यकरोन्मद्रसाख्यया।
यत्प्रवेशे नृपस्तुष्टो मातामहसमागतः। पञ्चमेकं व्यधाद्भूरिव्ययशालिमहोत्सवं।
प्रतिष्ठामर्द्धनिष्पन्नां निर्लोक्यानुचितां नृपः। नगरे पितृपुण्यार्थं स्नानगारं निर्म्ममे।
कुलोद्धरणनागस्य तटभूमौ महीपतिः। वह्निदग्धं नवं चक्रे राजवासं मनोरमं। १८०
विजयेशनदीप्रान्ते राजवेश्म नवीकृतं। भाति भातिशयान्मध्यरत्नं हारावलेरिव।
छत्त्रं यत्र स्फुरत्पात्र वितस्ताम्बुनि विम्बितं। प्रेक्ष्य तुष्टैस्सुरैर्मुक्तमिव सौवर्णपङ्कजं।
भाति श्रीप्यपुरे राजधानी राजविनिर्म्मिता। पुरातनीं पराकीर्णां हसतीव सुधासिता।
राज्ञा कृतैरल्पकाचे सोद्याने राजवेश्मभिः। यद्दर्शनादनेकाचोऽनूनं स्वमभिनिन्दति।

प्रतिष्ठा विहिता राज्ञा नवा या निजमण्डले । अन्यास्ता वर्णिता नात्र ग्रन्थगौरवतो मया । १८५
दिद्दामठेऽद्यदायुक्तः कृतातुलगृहावलिः । मसीदाहजिरोदारशिलाभित्तिविराजितं ।
खानगाहेति विख्यातं धर्म्मवासं विनिर्म्ममे । येन नानादिगायातनत्तत्पथिकशालिना ।
दिद्दामठपुरं सर्व्वं ययौ नेत्राभिरामतां । प्रवेशे नृपमानीय षट्लक्षकृतव्ययं ।
दत्त्वा सतिपुरग्रामं सत्रं यत्रावतारितं । शाहाभिधास्य भार्य्यापि मठं सुकृतकर्म्मठं ।
खेरीविषयमार्गान्तर्न्निर्म्ममे सप्रतिग्रहं । तत्पुत्रो बोधजायुक्तः कृत्वा धर्म्ममठं नवं । १९०
नगरात् चिम्रिकां यावच्छैलसेतुं नवं व्यधात् । तद्वीपे सति यो हन्ति सर्व्वेषां पुरवासिनां ।
स्तम्भनिर्म्मितदीर्घाश्मसेतुबन्धकुतूहलं । भ्रातरावपि तौ धन्यावन्यौ रिचकनूथकौ ।
व्यधातां क्रमराज्यान्तर्मठौ सौधमनोहरौ । ताजिभट्टोऽपि भूपालवाल्लभ्यविभवोर्ज्जितः ।
करालविषये जैनपुरीमध्ये मठं व्यधात् । कुतुदीनपुरीमध्ये चक्रेऽध्वरचना नवा ।
इन्द्रोऽपीच्छेत तल्लोऽपि भवेत् कर्म्मकुतूहली । एदराजानकोराजत्रस्तशोभाधिकारभाक् । १९५
खानगाहं स निर्व्वर्त्त्य बलाढ्यमठकान्तरे । नवः पितृविहारान्ते निजजन्मभुवोऽन्तरे ।
येन लोकार्त्तिहृच्चक्रे विहारः स्वगृहोज्ज्वलः । मठाग्रहारमस्जेदाविहारगृहपंक्तिभिः ।
त्रिंशद्विशाप्रतिष्ठातामण्डले येन कारिताः । सर्व्वदर्शनसम्पन्नप्रतिपादितदक्षिणे ।
प्रतिहार्य्यक्षणे येन कोटिरेका व्ययीकृता । स फिर्य्यडामरो जैननगरे मन्मसुन्दरं ।
मसीदाहजिरोदारं खानगाहं विनिर्म्ममे । हयातखातोना राजवल्लभा विभवोज्ज्वला । २००
मृगवाटाभिधे स्थाने मठं दग्धं नवं व्यधात् । सोमारखातोना राजमहिषी स्वधनैर्न्नवं ।
राजधान्यन्तिके जैननगरे स्वमठं व्यधात् । जयरालाभिधा राजपुत्री राजान्वयोदिता ।
शकन्धरपुरप्रान्ते खानगाहं नवं व्यधात् । श्रीजैननगरीयस्य मसीदाहजिरादयः ।
भान्ति प्रतिष्ठा यन्नैताः पुण्यकीर्त्तिमनोहराः । कर्म्मसत्यधिकारस्थो नापितः फेरठक्कुरः ।
विजयेशनदीपारे मठं चारुतरं व्यधात् । मत्स्यभाण्डपतिश्चक्रे विहारो विजयेश्वरे । २०५
योधर्म्मसङ्गाद्युपकृद्योधमार्गदवावभौ । प्रासादं लक्ष्मेराख्या भ्रातरोऽस्य वणिग्वराः ।
भीमस्वामिगणेशस्य व्यधुः शैलमयं नवं । तद्गणेशालयं दृष्ट्वैवाम्रतं सुधया सितं ।
देषात् म्लेच्छमुखं चित्रं भवत्येवासितं नतं । अन्येऽप्युच्चावचा वेश्मप्रतिष्ठा विविधा व्यधुः
याभिः स्वर्गोपमं भाति मण्डलं वेश्ममण्डितं ।
देशेऽस्मिन्विभवोऽभवन् कति न ते यैः सद्व्ययार्थं वयस्त्वंनीतो न ततोम्मुतेरुपकृताप्येकाकिनी काकिनी ।
सोऽहं लब्धपदः करोमि यदि नो धर्म्मं प्रतिष्ठादिभीरित्का यस्य मुतोऽधवरादिति मतिः पुण्यात्मनो जायते ।
कंपोद्दीपे नरेन्द्रस्य वेगादपि समुत्थिते । दिवामधोगतिर्जाता ननु तद्वेश्मनां क्वचित् । २१०
योऽभूद्राजविरुद्धानां दण्डस्तद्गृहलोठनं । तद्राज्ये प्रभविष्णूनां तद्विकल्पागलद्गुदः ।
किमन्यद्वेश्मनिर्माणव्यसने शास्त्युपद्रवात् । जाता वनभुवः शून्या द्विषां वसतयो यथा ।

श्रीतोरमाणदीनाराभिप्रचारानवेत्य च। ह्रितीश्वारीनागमथो न वा तेन प्रवर्त्तिता।
पञ्चविंशतिकोयोऽभूत्पुराणस्तावनिर्म्मितः। किञ्चिदूनीकृतस्याभूद्व्याप्रावुरलक्षणात्।
मुक्तामणिं नृपतिमौलिषु योग्यमूर्त्तिं या वर्द्धयत्युपनतेन पयोधरेण।
सा पावनी शुचिरुचिर्जननी सुमुख्या सङ्गच्छते न चिरकालमनेन साकमिति पाठः।
सा शुक्तिकास्य जननी जननीतचित्ता साध्वीव तिष्ठति चिरं वरभुक्तिकामा। २११
शैशवे स्ववयोदत्त्वा राजा सम्वर्द्धितो यया। गोलखातोनास्य जननी साकस्मात्त्रिदिवं गता।
का पौर्व्वविकृतेराशस्तरङ्गतरलात्मनः। सततं प्रतिबन्धाय सिन्धोर्श्वैलेव याभवत्।
तां हिन्दुकसमाचारशतपत्ररविप्रभां। स्मृत्वा सरुदिताक्रन्दं शुशोच सकलो जनः।
तया वियुक्तस्तत्कालं राजा कृष्णाम्बराम्बरः। दिनश्रियेव पद्मोऽभूद्दुःखसङ्कुचिताननः।
ग्राहयित्वाशुकं शुद्धं व्यतीते दिनसप्तके। सत्यं मन्त्रिको राज्ञोव्यधाद्दुःखनिवारणं। २२०
शाहाभदीनपर्य्यन्तैर्नैशेतुं विपुलं नवं। तद्धनेनादिशत्कर्त्तुं तत्पुण्यैर्मं महीपतिः।
अभूत्तेदाम्बये जाता वल्लभा या महीपतेः। हयातखातोमा राज्ञी प्रेमास्वादविलासभूः।
पदाधान् घोषभूषादिपरिवारसमन्विताम्। अनन्यरसिकोराजा तस्यै सर्व्वं समापयत्।
तयैकयैव राजेन्दुः स सुन्दरगुणश्रिया। अविन्दत् परमानन्दं मालत्येव मधुव्रतः।
विभवे सति भवति भवे कस्यचिद्दैवेप्सितोलाभः। वर्षति मेघे कृषिव्रत्कोऽपि मणिं मौक्तिकं लभते। २२५
महाराज्ञ्यां महीभर्त्तुरस्यां राजसुतोऽजनि। यस्य मल्लदखानाख्यामकरोन्मौसुलोचितां।
ततः पूर्व्वाधिकप्रीते ताजिभट्टे स भूपतिः। स्वसुतं रक्षणायादात् सिन्धुरिन्दुमिवेश्वरे।
चतुःपञ्चाशवर्षेऽथ वैशाखे नरनायकः। पुत्रजन्मोत्सवानन्दमभजद्धायसुन्दरं।
विदग्धचर्चरीपालनर्त्तकीनटगायनान्। उद्दिश्य त्यागरसिकेन कैर्व्वैश्रवणायितं।
पञ्चकोशेयवस्त्रासीराज्ये श्रीजैनभूपतेः। सामन्तसचिवादीनामासीत् सत्कारसिद्धये। २३०
तद्राज्ये विभवोदारव्यये सा प्राकृतालयात्। उत्सवे चर्चरीपालनटाद्यैः प्रापि तैरपि।
स्फीतराजश्रिया प्रीतो नृपतिर्नवयौवनः। आनीतगीतविन्दर्थः सङ्गीतरसिकोऽभवत्।
सङ्गीतशब्दसङ्गरमार्गेशाद्याः सुखोषिताः। तारकाइव चन्द्राग्रे व्यरुचन्त सभासदः।
कृष्टचन्द्रावलीराजनृपाभिनयनैपुणात्। राज्ञि वरनटा माव्याप्तद्दर्शनकुतूहलं।
प्रलम्बकृतकाश्मश्रुदन्तभ्रूविक्रियाशतैः। तारानुसारितद्भावनाव्यहास्यकथाक्रमैः। २३५
अनीकमुख्यवाद्यैश्च प्राणिभाषानुकारकैः। भण्डिमापण्डिताभण्डामूर्त्तोहास्यरसोऽभवत्।
मल्लाहसनननामापि पितुरभ्यधिकोगुणी। प्रथमं दृष्टतन्त्रोकोमोद्वीणामकारयत्।
भाषाभिगीतसामर्थ्यो पारसीगीतकोशलं। तुम्बवीणाधरः सोऽहं नृपाशुष्णोऽप्यदर्शयं।
गाथागीतप्रियो राजा स्वयं संस्कृतपद्यवित्। नादशंसामयं श्लोकं रागालप्येदमब्रवीत्।
शुष्का येन समुल्लसन्ति तरवो वश्याभवेयुर्म्मृगाः पद्ये चावतरन्ति दैवतगणा जल्पन्त्यदृष्टाश्चपि। २४०

यो दुःखे च सुखे च मूर्खविदुषोर्नालस्य हृद्धस्य। वा प्रायः प्रीतिकरो ममास्तु सततं श्रीनादनामा रसः।
अथ कण्ठे नृपो गीत्वा रागैकालस्रितीवक्रन्। रागान् स सोऽथगीतांश्च साश्चर्य्यानसदाकरोत्।
अथ गायनवृन्दं स प्रवेश्य समागतः। गीताङ्गाधिपतेराज्ञामदाप्से नृपनायकः।
आनीय स्थापिताः सर्व्वे नामधाहं निवेद्य च। ते ते वहावदेनाद्याः सर्व्वाद्या वृन्दनायकाः।
निर्दोषकण्ठसञ्जातमञ्जुलध्वनिरञ्जकाः। अधीतगीतसङ्घातुमातुङ्गव्यकमद्दकाः। २४५
शिवाकारादयः पञ्च स्वरपञ्चातिचञ्चलाः। अमुञ्चल्पञ्चमव्याजात्पञ्चेषुरससञ्चयं।
सङ्गीतज्ञं नृपश्चान्ते श्रुत्वैव तत्समुत्सुकाः। गीते शब्दगुणाः पञ्चदशसंख्यास्थितिं व्यधुः।
केदारगौडगान्धारदेशभङ्गालमालवाः। कर्णाटगायना राज्ञा रागाश्चाप्यस्फुरन् पुरः।
मदनोद्दीपिताराचौ नव्यभाव्यदशोज्ज्वलाः। अशोभन्तानुगाराज्ञा लासिका दीपिकाप्यपि।
रत्नमाला दीपमाला नृपमालाङ्किताभिधाः। अकुर्व्वन् लासिकालास्यं हावभावमनोहरं। २५०
झम्पाकम्पाकुलाग्रप्रसरसरसताधारसर्व्वाङ्गहारप्रारब्धाश्चास्थलीस्थान्तरतरलसद्भावभावानुभावा।
उत्कण्ठाकारिकण्ठोद्गतसततततस्फीतगीतप्रपञ्चा पात्रीयं रम्यगात्री लसति सतिलका कीदृशी रत्नमाला।

गुणिमदहरणधात्री प्रेक्षकानन्दधात्री नवकरणविधात्री रूपलावण्यधात्री।
कलितललितगात्री शुद्धसङ्गीतगात्री गुणगणमणिपात्री रूपमालेव पात्री।
यस्या मुखं हिमरुचिं सृजता विधात्रा सम्पूर्णसर्व्वमवशेषतयाथ मुक्तः।
आश्यानतामुपगतोऽस्य स्रुचायमास्ते नासाग्रमौक्तिकमिषादमृतस्य विन्दुः।

आसां कर्णालिकप्रोतलम्बिमुक्ताफलच्छलात्। मुखेन्दोर्निर्गतानूनं लावण्यामृतविन्दवः।
इत्यादिशंसां कुर्व्वाणो नृपतिर्नवयौवनः। लीलामित्रैः समं ताभ्यो सद्यपात्रमगाहत। २५५

तत्तत्कलापरिचये कविवाक्प्रपञ्चे पञ्चेषुसञ्चयनिभासु वराङ्गनासु।
सङ्गीतचर्व्वणविधौ वसुधानुभोगे धन्या नृपाः प्रतिदिनं व्यसनं भजन्ते।

श्रुत्वा दिगन्तरात्कीर्त्तिं राज्ञः कर्णामृतप्रदां। गीतकाव्यकलाख्यातः पवारकदनोऽभ्यगात्।
गायतः सोऽनुगीतानि स्वकृतानि सभान्तरे। तुष्टो महीपतिस्तस्मै व्यधात् कनकवर्षणं।
प्रबन्धगीतचतुरः कदाचित्स नृपाग्रगः। अगायत्स च लीलाख्यं प्रबन्धं देशभाषया।
अनभिज्ञतया राज्ञः पृष्टोऽस्यास्य लक्षणं। ठक्को भरतशास्त्रादेस्तोदाहरणमब्रवं। २६०
पदपाठस्वरैस्तैस्तु तालरागैर्मनोहरं। श्रुत्वा षडङ्गं तं मन्त्रोराजाभूदुदिताशयः।
उद्गीतस्याण्डवैक्लव्यं ज्ञात्वा मामब्रवीदिदं। गीतदर्पभृता वादं कुर्व्वनेन सभान्तरे।
तथेत्युक्ते महाराजो द्वयोर्वादमकारयत्। सभायां विहिते वादे गीतग्रन्थावलोकनात्।
श्रुत्वा प्रबन्धानस्मत्तः साश्चर्य्योगदनोऽभवत्। अहो काश्मीरिकोऽपीदृक् चतुरः सर्व्वशास्त्रवित्।
इत्युक्त्वालिङ्ग्य मां मे त्वं गुरुरित्यब्रवीत् स्फुटं। कौशेयकपरीधानप्रसादानन्दिताशयं।
अकरोन्मां नृपस्तूर्णं तदादजयरञ्जितः। २६५

घोषास्तोत्पन्तितोषागतिगुणचतुराः पीवराङ्गास्तुरङ्गाः स्फीतं यज्ञोपवीतं कनकमणिचितं द्रव्यमन्यच्च भव्यं।
वस्त्राद्योतास्त्र पाता निजवपुषि धृतावस्त्रयोगाः सभागाराश्च श्रीहस्सनेन प्रसभमिह मयि श्रोत्रे किं न दत्त ।
नयज्ञः श्रीसदेनोऽभून्मन्त्रीवालाभदेनकः । वीरः शाहाभदेनः स कुदादेनो विवेचकः ।
श्रीशेकन्धरशाहोऽपि यवनेन्द्रमतिप्रियः । आलिशाहोऽभवद्भ्राता श्रीमाञ्जैनमहीपतिः ।
सर्व्वशास्त्रप्रियः सर्व्वभाषाकाव्यविचक्षणः । राजा हैधरशाहस्तु तन्त्रीवाद्यविशारदः ।
सङ्गीतनिपुणः सोऽयं हस्सनेन्द्रो नरेश्वरः । एकैकगुणबाहुल्यात्प्रसिद्धा नृपमण्डली ।
मण्डलेऽस्मिञ्जैनदृष्टेत्यग्रोचनृपतेः सदा । श्रुत्वा राज्ञोमहागीतं रागालप्तिमनोहरं ।
श्रीज्यहाङ्गिरमार्गेशमुख्याः पादौ ववन्दिरे । १७०
देशेऽस्मिन् परवञ्चनात् प्रकुरुते लोको यदा सञ्चयं तत्तद्धर्म्मविपर्य्ययेण च भजन् स्वाचारनिःसारतां ।
उत्पातैर्विविधैस्तदा समुदिताः स्वम्पीडयन्ति प्रजा दुर्व्वात्यानलदाहदुर्हिममहाशैत्यस्वभेदामयाः ।
कदाचित्पौरवणिजो गोवधं नगरान्तरे । आजन्महिंदुकाचारायकुर्म्मोसुलवल्लभाः ।
यत्र गावो हता भुङ्क्ते तन्मांसैस्तैर्दुराशयैः । सविहारः सनगरः प्लुष्टेवाशौ स्वमक्षिपत् ।
अथ मेर्च्छतदिम्बातोजातोत्पातशताचितः । अकस्मादुदभूद्देशे प्रत्यूहापातदुःसहः ।
आरभ्यैव कोऽप्येतं श्लोकं सूनुर्व्विपश्चितः । गणराजं समालोच्य दुर्वातन्तं महाद्भुतं । १७५
स्वर्णवर्णेन मेघेन चन्द्रवर्णेन भानुना । मेर्च्छेनातिवातेन हा प्रजे क गमिष्यसि ।
वत्सरे पञ्चपञ्चाशे प्रवरेशपुरान्तरे । गोसैनिकापणोपान्तादकस्मादुदभूच्छिखी ।
मारी तथैकपार्श्वस्था गुलिकावाटिकावधि । क्षणान्नगरभूर्दाहाद्दग्धारण्यमिवाभवत् ।
भूर्जत्वग्वायुनोद्धूता ज्वलन्ती स्वजवागता । वृहन्मसजेदाच्छवान्तः पपातोत्पातदूतिका ।
प्रसारिता चतुर्दिक्षु यत्र नित्यसुधाञ्चिता । श्रीसेकन्धरभूभर्त्तुर्मूर्त्ता कीर्त्तिरिवाभवत् । १८०
व्यधाद्यदन्तर्जनताप्रणीता पुनरुत्थिता । लसद्गुरीवरीतुङ्गतरङ्गावलिभङ्गितां ।
मन्त्रपाठोद्यतं यत्र यवनानां कदम्बकं । गुञ्जन्मधुपगर्भाब्जसहस्रमिव राजते ।
चतुर्दिग्द्वारनिर्गच्छचुकवारागता जनाः । कुर्व्वन्ति भूगतस्वैक्षतदहर्निर्गमभ्रमं ।
यन्मध्योच्चचतुस्तम्भदम्भाद्विधिर्दिदृक्षया । चतुष्पादिव तद्धर्म्मः प्राप्तोभात्युज्झितस्थितिः ।
स्वर्णच्छत्रच्छलाद्यत्र मायाकर्णनकौतुकात् । कर्णं दातुमिवाभ्यर्णे भजन् भाति दिवाकरः । १८५
तन्महासदनं व्याप्तगगनं रचनाद्भुतं । म्लेच्छदर्शनराजार्थारचाद्दुर्गग्रन्थिं ददत् ।
कुर्व्वन् कल्पाग्निनिर्दग्धविश्वज्वालावलिभ्रमं । क्षणमात्रात्तदायत्तं भित्तिमात्रावशेषतां ।
निमित्तजाविधा यस्यां म्लेच्छाः कुर्व्वन्ति भक्तितः । एधामहोत्सवाद्येषु गणशोमिलितास्तदा ।
अभूद्धामखानीयपञ्चावासादिभिर्युद्देः । सताण्डवचटत्कारं तैः खाण्डववनायितं ।
ज्वलद्भूर्जत्वचोयातवितस्तावलिलान्तरं । दग्धा जलगता नावः शेकुः शमयितुं न याः । १९०
सुरपत्तनघोषेषु तदुपप्लववायुना । सहस्रसङ्ख्यावेश्मावाशस्तद्दिने जज्वलुर्न के ।

उत्पातवातजातोर्म्मिमहापद्मसरोन्तरे। अनसङ्ख्या दिने तस्मिन् किराताः प्रलयं ययुः।
वर्णाचारविपर्यासस्तमासः कुजवत्सरः। पुरश्रीर्विहितोद्दामं निवासक्षयकार्य्यभूत्।
अथवा पूर्व्वकर्तॄणां जाते पुण्यक्षये सति। नवीनकर्तृनिर्म्माणकौत्त्यर्थं कुरुते विधिः।
निर्म्मिता तादृशी राज्ञा सा महासदनस्थितिः। पुण्यश्रीरिव या स्फीता विभाति नगरान्तरे। १९५
अचिरात् सा पुरी दग्धा नवीकृतगृहा बभौ। भूपं तरुणमेवेच्छ्य विहिता तरुणी प्रिया।
भूपालदुर्व्यसनजाः प्रभवन्ति दोषा नाशाय यद्यपि हिमाध्वनि मण्डलेऽस्मिन्।
अन्योन्यमन्त्रिवरवैरसमुत्थदोषो राज्यं समस्तमपि नाशयति क्षणेन।
शक्तिस्फीतं समुदयलसत्सप्रधानाङ्गभङ्गं दत्ते नित्यं यदपि सुभगं सर्व्वकार्य्यक्षमत्वं।
दोषावातादयइव महामन्त्रिणोऽन्योन्यदुष्टा यद्येते स्युर्गलति नचिराद्दृढवत्तत्र राज्यं।
अन्तस्थैः सर्व्वदा रक्ष्यः स्वभेदः प्रभविष्णुभिः। चार्व्वाकाणामिवैषां हि भयं न परलोकतः।
ललितादित्यदेवोक्तामिति नीतिं विलङ्घ्य ये। मिथोवैरं प्रकुर्व्वन्ति ते नश्यन्तीह मन्त्रिणः। २००
मलाएसाकदर्य्यावखामादीनां विरोधतः। स्वभेदजर्जरं राज्यं दृष्टं श्रीजैनभूपतेः।
तदा प्रभृति तेनैव दृष्टे नाशोऽत्र मण्डले। मन्त्रिणामैव कस्यापि मत्सरोविरमत्ययं।
अहो दोषपिशाचोऽयं हठोराजसभाश्रये। केनापि मन्त्रिणा नैव जीयते सर्व्वनाशकः।
रोगाहतप्रयोगोव्यालोवा धृतमहाविषज्वालः। नाशिस्तादृग्भयकृत् प्रकृतिविरोधोयथा देशे।
अत्रान्तरेऽस्मदायुक्तायुक्तोऽपि नयसम्पदा। अधीरइव नाशाय नेयबुद्धिममग्रहीत्। २०५
एकदा पितरं पुत्त्रा विजने नौरुजादयः। इत्यूचुर्दूषणां ताजिभट्टीयां विभवासहाः।
निग्रहानुग्रहैकाशाः समये मन्त्रिमण्डले। ताजोभट्टः प्रजायासैर्द्धनाशाय वर्द्धितः।
तत्रापि दग्धपिहिता राजसूनुर्न्नृपास्पदे। अये यथो समाश्रयः सोऽयं दाहाय दुःसहः।
राज्ञी राजावदग्धाश्च सेनानीरयमेव हि। प्रबलं बाधते चस्मान् यदि नाथं प्रणाश्यते।
इत्याकर्ण्य सुतैरुक्तं वैगुण्यादवलोक्य च। पुत्त्रोक्तोऽपि मलेकस्ताजिभट्टे व्यरज्यत। २१०
राज्याङ्गानि समस्तानि योऽरक्षत् समया दृशा। प्राक्पुण्यसङ्क्षयात् सोऽपि शनैरासीत् स्खलन्मतिः।

स्वार्थं परित्यज्य विभोर्हितं ये कुर्व्वन्ति तत्कार्य्यकृतावधानाः।
विनाशकाले समुपस्थिते ते भवन्त्यकस्माद्विपरीतचेष्टाः।

इति चिन्ताकुलस्तांस्तानुपायान् मलिकोऽकरोत्। अथैकदाब्रवीद्राज्ञः सभायां मलिकः क्रुधा।
राज्येनानेन किं राजन्नाक्रान्ता वाग्भुवः परैः। चिन्ता कस्यापि नैवास्ति यावत् सर्व्वं प्रणश्यति।
वैरं खेरमहं यामि तदाज्ञा दीयतां विभो। इति श्रुत्वाब्रवीत्ताजिभट्टस्तं साहसोत्सुकः। २१५
यात्रायै दीयतां राज्ञा सेनानीर्मत्परोऽधिकः। तच्छ्रुत्वा सर्व्वसामग्रीं दत्वा मलिकचोदितः।
राजा तं कटकोपेतं वाद्यदेशं व्यसर्जयत्। भीत्या प्रीत्या च नीत्या च जग्मुस्तमनुसेवकाः।

मधुपाइव गर्जन्तोयातुं मधुकरेश्वरं। राजप्रक्रियया रम्यं दृष्ट्वा तं व्यवशालिनं।
नृपा राजपुरे याद्या बभूवुर्व्विस्मिताशयाः। अन्येऽप्यत्याभरेवाद्याः समस्ता मद्रमण्डले।
तत्तारखानमुत्सृज्य तुष्टास्तमुपतस्थिरे। तद्दर्पोद्दलिता मद्राः क्षुद्राविद्राविताश्रयाः। १२०
देशे तत्तारखानीयं सोपद्रवमथाकरत्। दहन् भ्रृङ्गालकोटादौ मस्जेदां खाननिर्म्मितां।
सामान्यकुलजोऽप्येष निःसारोऽनुमितोजनैः। अचिन्त्यकृतकार्य्यासीत् स्वामिस्नेह प्रभावतः।
पुरपत्तनघोषादीननयत् स्मृतिशेषतां। प्रतापस्तस्य तत्काले तीव्रांशोरिव दुःसहः।
तत्तद्दिल्यादिदेशस्थराजालोकभयं व्यधात्। करदीकृत्य सामन्तांस्तत्तत्साहसनिष्ठुरः।
स्वदेशं प्रत्यगात्पूर्णं पूर्णस्तुरगसम्पदा। स्वामिकार्य्यत्रयान्मन्त्री पुत्रं पश्यति शत्रुवत्। १२५
शत्रुमप्यति वैराहं पुत्रवत् परिरक्षति। इत्यादि नीतिमुल्लङ्घ्य मल्लिकादेवमोहितः।
तदुत्कर्षासहस्तस्य दर्पनाशोद्यतोऽभवत्। सबलो बाधते सर्व्वान् बालभ्यादिति शङ्कितः।
मल्लिकस्तं प्रति क्रुद्धो भूपं द्वेषमजिग्रहत्। अत्रान्तरे सुतोराज्ञः कनीयान् होस्सनाभिधः।
पयोदानाय मल्लिकनैरुजाय समर्पितः। तेन श्रुतेन तद्रूपविधेयत्वविसूचितः।
आगच्छन् कटके भट्टो ययौ मन्दप्रतापतां। तस्य सेनागतस्याथ नैयबुद्धिर्नृपेश्वरः। १३०
सत्कारश्चोदितं तस्मै नाकरोद्विरसीकृतः। अथ तस्यापकारार्थं मल्लिकः स्वयमचमः।
इभे गतानां सैदानां पुनरागमने मतिं। यदीयास्तनयाराजंस्तत्र पुत्रवतीं प्रियां।
रक्ष्यः श्वशुरपक्षः स कथं नानीयते त्वया। इत्यादिप्रेरणाद्राज्ञोराजाराधनतत्परः।
सोपधीन् व्यसृजल्लेखान् सैदाधिष्ठितोग्रमण्डले।

तस्यैवेति प्रभवति जनोदुर्ण्णयैर्दूषणाद्यैरेतद्बुद्ध्वा नयति न वयः स्वं कथं गाढमूढः।
सर्व्वां पृथ्वीं जयति न कथं तन्त्रमन्त्रोर्जितोऽसावित्याशङ्क्यो भवति पुरुषोभाग्यभाग्यावदास्ते।

अपकृत्य पुनः सैदान् यदानयति मल्लिकः। तेन स्यात् सर्व्वनाशोऽस्येत्यवदन्नील्लणधोर्जनः। १३५
सैदानयनवृत्तान्तं बुद्ध्वा श्रीफिर्जडामरः। ग्टहं गत्वाशुरायुक्तं युक्तमित्यब्रवीदचः।
नाजिभद्दाविधेयोऽयं भृत्यवद्वर्त्तते त्वयि। तदेतं रक्ष युक्त्यास्य विधाय मद्यातनं।
मा प्रवेशय सैदांस्त्वं दुर्धरान्देशकण्टकान्। तुरुष्कपुष्करास्यासान् यत्नान्निष्काशितानपि।
एकनाशार्थमिच्छा चेत् सर्व्वनाशस्तदागते। पोतैकच्छेतोसैत्यस्य ज्वलनं किं समर्थ्यते।
नूनं सपुत्रस्त्वत्यस्य नाशो न भविता चिरात्। यत्सैदानयने बुद्धिर्ज्जाता भाग्यविपर्य्ययात्। १४०
कृतापकारान् सैदांस्तानानिनीषुर्भवान् यदि। विषमुष्टिं क्षिप स्वास्ये साक्षायां तत्समत्यये।
मद्वेचाग्टह्यते सत्यं शंमन्येन त्वया न तत्। विपत्तौ स्मरणीयं स्यान्मयि लोकान्तरं गते।
श्रुत्वेति मल्लिकः प्राह किं कुर्व्वन्ति मयि स्थिते। एकदाज्ञातसामर्थ्याचाटुकारा भवन्ति नः।
तथेत्युक्त्वा गते तस्मिन् शंमन्यत्वादृणादृते। सैदानयनसङ्कल्पान्न मनाग्विरराम सः।

ज्ञात्वा यतित्वादुपदिष्टमिष्टं श्रृणोति वाक्यं न हि नष्टचेष्टः।
कण्ठे निविष्टः सहि वक्ति शोकाङ्खिन्नामतिष्ठं न हितोपदेशे। १८०

ततो लेखान् समालोच्य तस्योत्कण्ठितमानसाः। हंसादूताययुः सैदाः कृतपक्षपरिग्रहाः।
अथ प्रथममेवेह स मेयाहस्सनोऽग्रणीः। अध्यासनोदुजायुक्तयुक्तोभूपायमाययौ।
विहितान्योन्यकं शंसन् मल्लिकोऽस्मै प्रसन्नधीः। स्वीयाश्रमं प्रवेशन्तन् स्वकीयं स समर्पितं।
यत्सैदहस्सनेनापि सिन्धुदेशाधिकारिता। तस्य तेनैव नाम्नार्थं सिन्धुदेशाधिकारिता।
क्रमात् समागतैः सैदैराक्रान्ते मण्डले बलैः। आभ्यन्तराश्च वाह्याश्च काश्मीराश्चत्रसुर्जनाः। १८५
सैदास्तरङ्गितान् दृष्ट्वा तुरङ्गाङ्गूपतेर्मतात्। नृपोजायाविधेयत्वात्तद्विधेयक्रमागतः।
सपुत्त्रः सोऽस्मदायुक्तो बभूवानुशयाकुलः।

पश्चादन्वेष्या मनुजेषु बुद्धिः कार्य्ये कृते सा प्रथमं यदि स्यात्।
मित्रार्पितश्रीः परिभूतशत्रुर्न कोभवेत् सन्ततसौख्यभागी।

अथ सैदाः स्वतन्त्रास्ते कलत्रहरणेच्छया। बन्धनं ताजिभट्टाय कर्त्तुमैच्छंश्छलैषिणः।
एकदानिष्टमाकर्ण्य स्वात्मनः सैदचिन्तितं। मल्लिकसदनं प्रायात्ताजिभट्टोभयाकुलः।
सैदविस्फूर्जितं दृष्ट्वा साशङ्कः सोऽभवद्यदा। स फिर्ध्यडामरोद्दण्डस्तत्कालं प्रमयं ययौ। १९०
प्रातिहिर्यादिसुकृतैरिह वा परदुर्लभं। य एकः सकलः श्लाघ्यामनन्यान्यक्षणे क्रियां।
तच्छ्रुत्वा नृपतिस्तूर्णं क्रुद्धः सैदप्रतारितः। रोद्धुं मल्लिकजङ्गेनराजानकमुखान् भटान्।
स्वगृहे स्थाप्यतां बद्धो हतस्तोदस्तरचकः। इत्युक्तोमल्लिकस्ताजिभट्टं तेभ्यः समर्पितं।
तथैव स्थापितो बद्धः पुण्यशेषतयात्मनः। कालं कृत्याकृताप्यायः सकुटुम्बोऽत्यवाहयत्।
भूर्य्यर्थव्ययपुण्यः स बद्धोऽपि स्वगृहान्तरे। सकुटुम्बः सुखं तस्थौ मरालइव मानसे। १९५
विभवे दानभोगं यः करोति सुकृतेच्छया। एतद्भ्रष्टः समाप्नोति भूयस्ताजिभट्टवत्।
एवं मल्लिकाह्लादेन परोद्रेकासहिष्णुना। ध्वस्तप्राया व्यधीयन्त सर्व्वे ते प्रभविष्णवः।
कृतापकारिसैदेभ्योभागिनेयप्रणाशनात्। ज्यहाङ्गिरोऽपि मार्गेशो मल्लिके शङ्कितोऽभवत्।
सर्व्वाधिकारसामग्री स्वपक्षस्य समर्पिता। प्रतीहारादिवीरेन्द्राः स्वार्थबुद्ध्या विनाशिताः।
इत्यादिदूषणे राजा मल्लिके विरसोऽभवत्। एवत्युक्त्वा स्वमात्मनं कदाचित्कृतदर्शनः। २००
नैकत्रावस्थितिस्तिष्ठन् स्वराष्ट्रान्तःस्थितिं व्यधात्। अथागात् कुसुमक्रीडां कर्त्तुं सैदसमन्वितः।
भवनोपवनं राजा शक्रश्चैत्ररथं यथा। विधाय लीलां पुष्पाणां नौकायातो महोपतिः।
मार्गेशनोदुजायुक्तः पानलीलां व्यगाहत।
सर्व्वे परस्परक्षीवास्तत्सदावानुबन्धिनः। ते कृष्णायइवान्योन्यं चक्रुर्वाक्करताडनं।
क्षोभे प्रवृद्धे क्रुद्धोऽथ त्यक्तमस्तकवेष्टनः। अगात्कर्त्तुमुपालम्भं नृपोमल्लिकमन्दिरं।
प्रसादितोऽपि स प्राप राजधानीं क्रुधान्वितः। पुत्त्रदुर्णयजः शोकोमल्लिकस्य च मानसं। २०५

अन्येद्युरहितांस्तस्य राजा विरलमानसः। रक्षणोनायुक्तपक्षोमे युक्तमित्यब्रवीद्रहः।
अवश्यमेव छिद्रं तं समासाद्य विरोधिनः। अपकाराय सन्नद्धा देशे दोषादवाभवन्।
राज्ये येषामभक्षानस्येत कुर्युः किं क्रियते त्वया। एभ्यानीत्वा तदन्यस्मै देशमं रक्षणाय भोः।
तथेत्युक्त्वा नृपोऽन्येद्युर्जोनराजानके द्रुतं। विन्यस्य रक्षणे युक्त्या मल्लिकात् खानमग्रहीत्।
पुत्रं विन्यस्य भूपाये तद्दिने खगटस्थितः। अपकर्त्तास्मि शत्रूणां प्रातरित्यब्रवीत् प्रियां। ३८०
अत्रान्तरे मार्ग्गपतिर्नृपाज्ञतो बलान्वितः। खराद्रात् माद्रमोयुक्तो नगरे तूर्णमाययौ।
प्रातः श्रुत्वाथ मेलकः सबलोऽगान्नृपान्तिकं। रुषा निहन्तारुद्धोऽपि चिन्तया दक्षिणस्थया।
पादाभ्यां ताडयन् वक्षोगच्छतोऽस्य तुरङ्गमः। भविष्यत्स्वामिविरहाच्छुचेवाश्रुमुखोऽभवत्।
तत्कालोदितसूर्य्यार्चिःसंक्रान्तिज्वलितायुधः। नृपाज्ञयोऽपि मार्ग्गेशः ससैन्योऽविशदङ्गनं।
अन्योन्यस्पर्द्धया तत्र द्वयोः प्रविशतोस्तदा। सन्नद्धयोराजधानी ययौ सम्भ्रमलोलतां। ३८५
सशस्त्रोऽयं प्रविष्टः किमित्यायुक्तः स भाज्ञिलं। अदापयत् ज्यंसराय मार्ग्गेशाय नृपः क्रुधा।
तावन्निर्गत्य भीतेन राज्ञा स प्रेरितस्ततः। पुरान्तर्यन्त्रणां हत्वा ससैदः पुनराययौ।
निर्मुच्य बन्धनात्ताजिभट्टं राजानकान्वितः। राजधान्यङ्गनास्कन्दं ददौ जिष्णुर्जहाङ्गिरः।
प्रेरितास्ताजिभट्टेन तद्भटास्तमरोधयताः। पश्चिमद्वारधानीं तां राजधान्यामदाहयन्।
सोऽग्निर्हंसनराजानकावासान्तं क्षणान्तरात्। सौधागारां गृहश्रेणीं दग्धारण्यमिवाकरोत्। ३९०
इन्द्रवासोपमा वेश्मरचना ज्वलिता श्रुता। दूरस्थितानामप्यन्तस्सन्तोषमुदपादयत्।
उद्भ्रमन्तोमसद्द्व्ज्वालाजालगतोश्मणा। सर्व्वेऽन्तस्थाः कटाहान्तर्गोज्मत्स्योपमां दधुः।
अङ्गनेऽग्निं समालोक्य ज्वलन्तं राजसद्मनि। सभीतिर्नृपतिर्भीतिविक्लवः समपद्यत।
उष्णायमानमार्ग्गेषु स्फुरन्तोऽपि युयुत्सवः। न केऽपि शेकुस्तान् योद्धुं तद्भाग्यैर्यन्त्रितादृत्र।
स्वमत्यांश्चलितान्दृष्ट्वा पुत्रोत्सेवावशेषितः। बभूव मल्लिकस्तत्र किंकर्त्तव्यतयाकुलः। ३९५
पुत्राः कुर्व्वन्तु मा युद्धं राज्यं नश्यति भूपतेः। अयं राजास्य देशस्तु रक्षितोदशवत्सरान्।
तत्कथं नाश्यते युद्धादस्मिन् विषमविग्रहे। तत्रापि ज्येष्ठः पुत्रो मे तटस्थोऽरिष्टमध्यगः।
अनिष्टं नोदजाशामि लभन्तेऽस्माद्रणक्षणे। वरं ममैव नाशोऽस्तु नाकीर्त्तिं वार्द्धके सहे।
इति ध्यात्वाब्रवीत्पुत्रांश्च योद्धव्यमिहासत। इत्युक्त्वा गलितोत्साहो नृपं शरणमाययौ।
मण्डपे राजधान्यां स राजा विन्यस्त रक्षिणः। सेवादरवदायुक्तान् पूर्व्ववेषामनुस्मरन्। ४००
आयुक्तमर्थकाद्यास्ते ज्ञात्वा भूपं तदाश्रितं। युद्धाशक्ताश्च निर्गत्य भट्टदेशान्तरं ययुः।
अथोत्तरदिशा द्वारधान्या मान्या जयोद्यताः। ज्यहाङ्गिराद्या गर्जन्तः प्राविशन्त नृपाङ्गनं।
रणदुन्दुभिनिःस्वानप्रतिश्रुत्यारवच्छलात्। अहसद्राजधानीव तुष्टा तत्पादसक्रमात्।
राजदर्शनतुष्टानामुत्कृष्टानां जयार्जनात्। प्रापुः प्रसादं तत्कालं मनांसि च वपूंषि च।
प्रातः सपुत्रं मेलकं तत्तत्सेवकसंयुतं। क्रुद्धैस्तैश्चोदितो राजा कारागारान्तरेऽक्षिपत्। ४०५

आयाता युक्तसदनाद्गीतैवातिव्ययादिभिः । अकरोद्राजलक्ष्मीः सा स्वगृहे सुखसुप्तिकौ ।
तेषां राजविरुद्धानां दासकायस्थपीडनात् । सञ्चितं रौप्यकुप्यादि सर्वं तद्राजसादगात् ।
यस्मात् सभयात् सर्जननृपतिः श्रीराज्यराशोऽभवद्यत्नोत्या दशवत्सरी गतभयः पुत्रोऽस्य राज्यं व्यधात् ।
यातास्ते स्मृतिशेषतां यदमता वङ्गामखानादयः सोऽपि व्याकुलतामगाद्रिपुभये धिक्सेभवं स्वामिनां ।

आतङ्कपङ्ककलुषाः प्रभवन्ति येऽर्थाः सन्मार्गविघ्नकरणाहृतजाड्यदोषाः ।
तत्तद्दरिद्रजनपीडनहेतुभूतास्तिष्ठन्ति ते न सुचिरं हिमपूरतुल्याः ।

तत्कृत्यैः फेरवट्टाद्यैरित्यादिजनपीडया । यदानीय धनं दत्तं तत्सर्वं राजसादगात् । ४१०
वहिर्देशात्समानीतांस्तुरङ्गांस्तान्मनोहरान् । स्वांशुकानपि तांस्तापि निक्षेपमिव दत्तवान् ।
भूपालवल्लभे रक्तत्वात्स जन्मदिवसादिषु । यद्दत्तं यच्च भुक्तं स्वं तदेवास्याभवद्धनं ।

हे मर्त्या नृपविभवाप्तभूरिवित्तास्चित्तार्त्ता कुरुत यथार्थदानभोगौ ।
संसारे जलधितरङ्गभङ्गुरेऽस्मिन् सामग्री न पुनरियं सदैव लभ्या ।
राज्ञः प्रियोऽस्मि विभवप्रथितप्रभावो हे सेवकास्त्यजत मानमिदं स्वनिष्ठं ।
गन्धर्वनिर्मितपुरे च कुसुम्भरागे वेश्यारसे नरपतौ च कुतः स्थिराशा ।
प्राप्ता पूर्णा सपदि पदवी शत्रुवर्गोऽजितो यः कोशोऽशेषो मम सदनगो भृत्यवर्गः ससर्गः ।
इत्थं यावत् कलयति नरो वैभवोत्सिक्तचित्तस्तावत् सर्वं क्षपयति विधिः स्वप्नवत्तद्दरिद्रः । ४१५

एकदा जगभद्दस्तं बन्धने प्रष्टुमभ्यगात् । अन्यत् किमस्ति ते स्वर्णं तूर्णं राज्ञे समर्प्यतां ।
वृद्धस्तमब्रवीद्द्रव्यकोटिसंख्यं हृतं मम । एतावतापि नो तृप्तिः प्रभोर्लुब्धस्य विद्यते ।
किं ब्रूमो राज्यरक्षार्थं स्वपचोनाशितोऽखिलः । सर्जनेनापि न युद्धाय सोढं तत्सुमुखेऽन्तरे ।
कान्दिशीकाः समानीय सैदाः सम्वर्द्धिता मया । ब्रोग्धारस्तेऽपि मे जाताः कृतघ्नेऽस्मिन् महीपतौ ।
सर्वं मयार्जितं राज्यं सन्धिस्तावत् करोत्वसौ । पुनस्तेनोज्झितं राज्यं सन्नाशान्मुदितस्तु सः । ४२०
दशवत्सरपर्यन्ते राज्यतन्त्रनियन्त्रणा । मदीयाशोकवह्निर्दग्धे यदीदृश्यपि तद्विभुः ।
तुष्यत्वस्मत्प्रणाशेन मयि लोकान्तरं गते । इत्याद्युक्त्वा नृपाये स स्वविश्रान्तिं व्यसर्जयत् ।
धिङ्मां येन गृहीतं न वचनं दीर्घदर्शिनः । श्रीफिरोजामरेशस्य निनिन्दात्मानमन्वहं ।
यद्यहं सुविशुद्धोऽस्मि तन्मद्द्रोहकराश्रमी । मार्गेशताजिभट्टस्य लभन्त्वल्पदिनैः फलं ।
इत्यादिदुःखदग्धः स बन्धनस्थो यदब्रवीत् । अचिरात्तत्फलं दृष्ट्वा साश्चर्योऽभविता जनः । ४२५
इत्थं निर्मोहवृत्तेऽस्मिन् सपुत्रे मल्लिकाह्वदे । नाशितेऽन्ये व्यजृम्भन्त खलप्राया नृपास्पदे ।
ताजिभट्टादयोलुब्धास्सैदानामधिकारिणः । प्रमेयान् पीडयामासुर्दुष्टादेशमिवामयाः ।
आनन्दपुष्पदीनारखण्डप्राप्त्यादि नामभिः । सैदाधिकारिणश्चक्रुः प्रजायासैर्धनार्जनं ।
ओज्यदाङ्गिरमार्गेशनोसराजानकादयः । मधाविव द्रुमास्चिचपत्रास्ते शिश्रियुः श्रियः ।
मल्लिकपदवीं सन्नां श्रीसैयदहसनोऽभजत् । नायामयामराज्ञादि तदीयं तद्वदग्रहीत् । ४३०

सभृत्यपुत्रवर्गेभ्यः प्रमेयान्विभजन्नवान्। स सैयामह्मदायाद्धंधनराशिं समार्पयत्।
स्वायत्तीकृतभूपास्ते सैदा जयविशृङ्खलाः। दूतान्विसृज्य चतुरमार्गिन्युः सैदनासिरं।
प्राप्ते पाञ्चालदेवाख्ये तस्मिन्सूरपुराध्वना। ज्वरसङ्कटं पूर्व्वं पश्चाच्च पुरमाविशत्।
पौत्रीजामातृसम्बन्धिबान्धवाः सर्व्वमन्त्रिणः। अपुनःसङ्गमाएव सर्व्वेषां दर्शनं ददौ।
तदर्थमिव संप्राप्तोऽन्तकल्पो दिनद्वयं। अतिवाह्य ज्वराक्रान्तः स्वगृहे पञ्चतां ययौ। ४३५
मल्लिकोबन्धमस्दस्तान् चसः पुत्रप्रवासनात्। तच्छोकामयग्रस्तोऽप्यस्वस्थो व्यपद्यत।
बहुस्याऽपि मृतिं तस्य श्रुत्वा मन्त्रिशिरोमणेः। देशे सरुदिताक्रन्दं शुशोच सकलोजनः।

सत्कार्य्यभाजां महतां वियोगाद्भवन्ति नीचाः पदवीषु योग्याः।
प्रकाशकेऽस्मिन् द्युमणौ प्रयाते भवन्ति दीपाः शरणं प्रजानां।

दुह्रिचभाग्यसौभाग्यसंप्राप्तविभवोर्ज्जिताः। सैदाः काश्मीरिकान् सर्व्वान् न तृणायाप्यजीगणन्।
याभूत् सैदमुखादाशा निर्यान्ती स्वार्थलिप्सया। राज्ञस्तदर्थनिष्ठस्य प्रतिश्रुतीव साभवत्। ४४०
सैदेषु दैर्घनिष्ठेषु क्षान्तिशीले महीपतौ। प्रबलासु च नारीषु कोऽप्यजृम्भत विप्लवः।
उत्कोचग्रहणं धर्म्मः प्रजापीडा च कौशलं। स्त्रीषु च व्यसनं सौख्यममन्यन्ताधिकारिणः।
प्रातिबन्धिकनिर्वृत्त्या स्वाच्छन्द्यप्राप्तिदर्पितः। स सैयाहसनः सर्व्वतन्त्रेभ्यो यन्त्रणां व्यधात्।
प्रवर्द्धमानो राज्ञस्स शनैराक्रान्तमण्डलः। महाधिपत्यं सर्व्वेषां राहुश्छायामिवाकरोत्।
अथ सुम्मटहहुट्ट देशान् सैदा जिगीषया। श्रीज्यहाङ्गिरनासैरौ यात्रायै द्वौ व्यसर्ज्जयन्। ४४५
उभावेकत्र गच्छावोयद्यावां कर्म्म सेत्स्यति। इति मार्गपतेर्वाक्यं सैदौ नैवान्वतिष्ठतां।
तयोर्देशं विजित्यैकः सयशाः प्राविशत् पुरं। अन्योविशङ्कितोबद्धो युक्त्यात्मानमरक्षत।
निपत्य पश्चाद्भट्टैर्यत् सेनायाः कदनं कृतं। कालापेक्षानुरोधेन न मनाग्वर्णितं कृतं।
बन्धागारादयस्तस्य सेवका वृद्धभूभुजः। केचित्तश्यानभुट्टाजिवक्त्रौ शलभतां गताः।
पूर्व्वापकारस्मरणात्सैदास्ते रन्ध्रलम्भिताः। मौसुराजानकं हृद्धदर्शनं तं न्यवारयन्। ४५०
तेभ्यः स्वानिष्टमाशङ्क्य निजरक्षणदक्षधीः। युक्त्या तद्देशमोराज्ञोराष्ट्रं मार्गपतिर्ययौ।
ततः सैदेषु नष्टेषु प्रजानाशनकारिषु। आशङ्क्यानिष्टमात्मीयं युक्त्या राजाशमाययौ।
एकदा रहसि ज्ञापमब्रवीत् स ज्यहाङ्गिरः। राजन् सैदा यदानीता अमी निष्काशिता अपि।
सोऽयं निष्कण्टके देशे रुधानर्थः स्वयं कृतः। यथैव राज्ययोग्यस्त्वं पौत्रः श्रीजैनभूपतेः।
दौहित्रोऽपि तथैवास्य प्राप्तासैयामहम्मदः। सैदास्ते सर्व्वदाशङ्क्यास्तत्पक्षाश्च समानसाः। ४५५
मृष्टाद्र्वामिषे राज्ये ये लुब्धाः सन्ति सन्ततं। न युक्तैकप्रियासक्तिर्बहुभावस्य ते विभो।
एकवल्लीरतोभृङ्गः सततं केन शस्यते। यदि जायाविधेयत्वं न स्यात्तव महीपते।
सर्व्वं सिध्यति कार्य्यं तत् स्त्रीजितो मा भव प्रभो। मया त्वद्राज्यरक्षार्थं स्वरक्षार्थञ्च गम्यते।
बहिर्द्देशोद्गतः स्वात्मा रक्षणीयो यथा तथा। इति श्रुत्वा तथेत्युक्त्वा राजा रात्रौ प्रियान्तिके।

तदुक्तमब्रवीत् सर्व्वं स्नेहमोहवशीकृतः। तेन मार्गपतेः क्रुद्धा भोगिनीव भयावहा।
अनिष्टं चिन्तयन्त्यासीत् पितृपक्षमताहृता। ४६०

पुरुषानवधीर्य्य यत्र नारी प्रभवत्येव जितप्रिया स्वतन्त्रा।
कुपितेव तदीक्षणाद्विसृष्टा न चिरन्तिष्ठति तत्र राज्यलक्ष्मीः।

अमुष्यदक्षभापार्श्वं तत्पक्षानुग्रहग्रहः। मल्लेकाश्वादवद्राज्यं तदायत्तं ततोऽकरोत्।
सैदेभ्योऽनिष्टमाशङ्क्य त्रस्तो राज्ञा विरक्तया। कार्कोटद्रङ्गमार्गेण मार्गेशः सबलो ययौ।
सर्व्वां कुटुम्बसामग्रीं भाङ्गिलान्तरतो नयन्। गच्छन् दुर्गममार्गेण न स धैर्य्याद्व्ययुज्यत।

तद्राज्यसिन्धुर्विपुलः समृद्धा व्यलङ्घि यश्चाम्भृतवाहिनीकः।
परस्परामात्यविरोधवात्याविक्षोभितोऽभूत् स विकीर्णरत्नः। ४६५

साम्ना दैन्यमुदारदानविधिना वित्तप्रकर्षक्रियाभेदात्पैशुनकर्म्म सर्व्वदलनं युद्धेन नाशो विशां।
इत्यालोच्य विरोधिषु प्रतिदिनं वर्द्धत्स्वशक्ते प्रभौ देशत्यागमुपायमेकमुचितं कोऽप्युक्तमागाहते।
अयुक्तपक्षनाशेन पश्चात्तापाहतो नृपः। मार्गपत्यादिनाशेन क्षते क्षारमिवाप्नभूत्।
मार्गेशाद्यैर्विना राजा सर्व्वसैदान्वितोऽपि सन्। स्वात्मानं गणयामास यूथभ्रष्टमिव द्विपं।
मार्गपत्यन्वये जाताः प्रतीहारान्वये च ये। ठक्कुरान्वयजाः कोशाध्यक्षजा अपरे च ये।
स्वस्वपक्षार्जिताः पूर्व्वं येऽभवन् विजयोर्जिताः। नष्टमन्त्रविरोधेन शनैकीयोऽरशिष्यते। ४७०
तस्मिन् याते वहिर्वर्षतुषारं प्रसभं नभः। भाग्याधिकोऽयं सर्व्वेभ्यो विशां चिच्छेद संशयं।
हिमानीपातभारेण येऽवसन्नत्र मण्डले। ययुर्निम्नायतां वृक्षा भग्नशाखाजनादिव।
प्राक्चेत्पतेद्धिमं तावद्भ्रियेरन् ब्रुडिताः क्षणात्। पिष्टराभ्यन्तगर्त्ताढ्याः प्रविष्टादिव तद्घटाः।
तेनैकेन विना सर्व्वहृदयाह्लाददायिना। नाशोभवत् सभा राज्ञश्चन्द्रेणेव कुमुद्वती।
तटस्थोभृत्यकार्य्येषु सैदभार्य्याविधेयधीः। विसृष्टव्यवहारत्वं निश्चलत्वागमन्नृपः। ४७५
स्वराज्यरक्षणाचारलक्षणाक्षमशासनः। निन्दन्दाद्यं सदैवासीत् प्रियेक्षणकृतक्षणः।
निग्रहानुग्रहव्यग्राः सोत्कोचग्रहतत्पराः। अन्तरङ्गास्त्रियोऽभूवन्न मन्त्री न च सेवकः।
भोगलोभोज्झितौचित्या अमी विन्दन्ति साम्प्रतं। तुरुष्कपुष्कलाश्वासाः स्वार्थमर्थं न च प्रभोः।
अनायका विनश्यन्ति नश्यन्ति शिशुनायकाः। स्त्रीनायका विनश्यन्ति नश्यन्ति बहुनायकाः।
स्त्रीविधेयं समालोच्य राज्यं तस्य महीपतेः। इति श्लोकं पठंल्लोकः सशोकः समदृश्यत। ४८०
ध्यायतो मार्गपत्यादींस्तत्प्रत्यानयनक्षमः। शयनीयविमुक्ताङ्गस्तप्यते स्म दिवानिशं।
तत्रान्तरे स मार्गेशो लोहरान्तरसंश्रयः। स्वामिचिन्ताकुलो लेखशिक्षामित्यं व्यसर्जयत्।
राजन् पुंरत्न कोशस्ते योऽभूत् सर्व्वार्थसाधकः। उत्पाद्योत्सारितः सैदैर्यद्दारिद्र्यं सुदुःसहं।
निसर्गगुरवो मान्यपक्षमिच्छन्ति चञ्चलाः। अमी परस्पराभिन्नाः पारदस्य कणा इव।
हरिचन्दनवद्राजन् सर्व्वसौख्यप्रदो भवान्। किन्तु फोत्कारकारिण्या भोगिन्या वेष्टितोऽसि। ४८५

यस्मिन् स्फूर्जद्विषज्वाला व्यालाः सन्ति परासहाः। निधानमिव तद्राज्यं त्याज्यं कस्य न सम्मतेः।
प्रदीप्तापि न या स्पृश्या दृश्यापि भयकारिणी। श्मशानाग्निशिखेवासौ लक्ष्मीः सा केन सेव्यते।
स सेयाहस्सनस्तत्तद्दुर्व्यसनव्यसनवासनः। आसैदकोऽपि सन्मार्गे न तिष्ठतीव रावणः।
मेराख्या ताडकेवात्र सोत्कोचामिषभक्षिणी। पौलस्त्यस्येव ते सर्व्वनाशार्थं निकटे स्थिता।
तिष्ठन्त्वभ्यन्तरे सैदा यदीष्टा भवदन्तिके। तुरुष्ककरवीन्द्रेशमिहस्थः साधयाम्यहं। ४९०
राजद्रोही न कोऽप्यस्मत्कुलेऽभूद्भक्तिवर्जितः। त्वदेकशरणः सोऽहं स्वामस्योद्दास्यवद्दशे।
वयमेव सदाचारा विचारविशरारवः। उन्मार्गे यदि गच्छामः कोऽप्यस्मासु न विश्वसेत्।
कल्पान्तमपि जीवित्वा हत्वापि धनसञ्चयं। हत्वाप्यरीन् कोऽप्यत्र भवे भवति सुस्थिरः।
नष्टेऽन्यस्मिन् भवांस्त्राता त्वयि नष्टे परोऽस्ति कः। इति लेखं नृपस्याग्रे बुद्ध्वा मार्गपतेर्द्रुतं।
स सेयाहस्सनः क्रोधाच्छ्वसन्नहिरिवाब्रवीत्। सोऽयं स्थानच्युतस्तत्र स्वजीवनविवर्जितः। ४९५
नूनमस्मत्प्रतापेन शुष्यतीवाब्जषण्डवत्। ग्रीष्मोष्मणा विशुष्कस्य पङ्कमात्रावशेषिणः।
भृत्यास्तस्य न तिष्ठन्ति तडागस्येव पक्षिणः। किं करोतु स्थितस्तत्र तत्रत्यैर्विहितादरः।
मदीयदासमात्रोऽपि तं जेतुं क्षमते युधि। अथवाहं स्वयं यामि तं निष्काशयितुं ततः।
स तुरुष्कैः समं तत्र ग्रथनं कुरुते ऽन्यथा। अथोचे सैदहसनः पूर्व्वमैत्रीमनुस्मरन्।
किं नस्तेन हृतं राष्ट्रं दीयतामानयाम्यहं। अथुकोपप्लवे पूर्व्वं कृतदिव्याः परस्परं। ५००
अनिष्टं चिन्तयामश्चेत्तत् कथं सहते विधिः। तच्छ्रुत्वा नृपतेरग्रे तद्वैरैकाग्रमानसः।
तूर्णं डोलतयानं स्वं नौशहाराधिपं व्यधात्। वाक्यस्थः साधयत्येष कार्य्यं सत्कृतकायणीः।
द्रव्यकोटिं ददामोऽस्मै सैन्यसङ्ग्रहसिद्धये। इत्युक्त्वा प्रतिमुकन्तमेधराजानकम्पथः।
द्रुतं निवर्त्तयामास दत्तद्रव्यमपि स्वयं। श्रुत्वा परशुरामाद्या मद्राः कश्मीरदेशतः।
स्वामिष्टशङ्कया गन्तुं साशं तेभ्यो यथोचिरे। ऊचुस्तान् प्रति मुञ्चामो युष्मान् पाथेयसंयुताः। ५०५
कियद्दिनानि तिष्ठध्वं तद्यूयं दत्तवेतनाः। तेषु स्ववसतिं यातु सैदास्तेऽन्योन्यमब्रुवन्।
निष्काश्याः सर्व्वथैतेन तुरुष्कैकविरोधिनः। अत्रान्तरे नरेन्द्रस्य तत्तत्कृत्यादिचिन्तनात्।
जाताधिवाधितं वक्षः पौषे पद्ममिवाभवत्। मृगयारसिकाः सैदा नियुक्तं तादृशं नृपं।
माघे विषयराष्ट्रादिगतान् हन्तुं मृगव्रजान्। यत्र यत्रावसद्रात्रौ ससैदकटकोत्कटः।
पीड्यमानजनाक्रन्दमुखरास्तद्दिशोऽभवन्।

पङ्क्तीः प्रसार्य्य परितोऽद्रिषु तद्विभागं यत्रोपवेशमकरोत्कटकोनृपस्य।

तत्रोदतिष्ठदतिनिष्ठुरवाग्जनानां द्राग्जालताच्छिदि शुचा रुदितस्वनौघः। ५१०

गिरयोऽत्युन्नतास्तत्र सुखदाः सान्द्रनिर्भराः। आक्रान्ताः कटकैर्हिंस्रैर्दुर्जनैरिव साधवः।
प्रालेयपूरमग्नाङ्गाः कुरङ्गा गिरिशृङ्गतः। श्रुत्वा कोलाहलं त्रस्ताः सकुटुम्बाः समाययुः।
हृष्टजिह्वान् स्फुरद्रक्तसिक्ताखांश्च गणान्हतान्। तांस्तत्रायागतान्दृष्ट्वा सैदास्ते तुतुषुर्भृशं।

हरास्मान् पीवरानेतान् पोताम्मा हर दुर्ब्बलान्। इतीव वक्तुं भूपाये प्रापुस्ते सार्भकामृगाः।
सिद्धाध्युषितशृङ्गस्थवनस्तैणवधदर्शनात्। क्रुद्धाः स्युर्देवताराजम्मा कृथा मृगयामिमां। ५१५
इत्याद्युक्तोऽपि वक्तृभिस्तत्रत्यैस्ताकलेर्जनैः। शृङ्गारीवाङ्गनासङ्गान्न व्यरंसीन्मृगयाग्रहात्।
आस्थानमृगगेयेयं मान्यथा क्रियते त्वया। मुनिर्वैश्रवणोऽद्रिस्थोनृपमेत्याब्रवीदिति।
साक्रन्दमाहता हत्वा मृगीस्ता रुधिरोक्षिताः। तद्गर्भनिर्भरां भूमिं सेदास्रकर्दमोज्झिताः।
भ्रमन्सस्तदधात् कृत्वा निर्मृगांस्ताम् गिरीश्वरान्। सायं श्रान्तः सघोषोघान्वसतोरादिशन्नृपः।
भव्या स्नुषास्य तनया तरुणी च जाया कादम्बरं प्रसरके पथवस्य मीनाः।
तिष्ठाम्यमुष्य सदनेऽहमिहैव रात्रौ ध्यात्वेति कोऽपि न्यविशद्यमकिङ्कराभः। ५२०
धानुष्कपुष्कलबलावलिनस्तुरुष्काः षट्कर्मधर्मनिरताग्र्यगृहोपविष्टाः।
तद्भाण्डपक्वहतकुक्कुटमांसभक्षा यद्वादवात्र विदधुर्म्मधुपानलीलां।
पशुतण्डुलमद्यादि हृत्वा वास्तव्यलोकतः। लुब्धास्तत्सेवकाः केऽपि स्वगृहे भरणं व्यधुः।
मान्यदागमनं भूयाद्युष्माकं जनपीडया। इत्यादि चोभिषः शृण्वन्नशक्तो विव्यथे नृपः।
मृगयाव्यसनं राज्ञो धिक् फलं भुज्यते न यैः। मृगापदेशाल्लोकानामेव सा क्रियते स्फुटं।
पशुवच्छतशो बद्धा मृगौघा यत्र सार्य्यते। मृगया सा विनोदाय यदि शौनिककर्म किं। ५२५
श्रमस्त्वयं चले लक्ष्ये स्पृहणीयोऽस्ति सादिना। कोऽयं बद्धे मृगे श्लाघ्यः शराभ्यासो धनुष्मतां।
क्षत्रियैर्मृगया कार्य्या निरवद्यतृणाशनात्। नैकान्तव्यसनं युक्तं ध्वनि सर्व्वत्र गर्हितं।
महापद्मसरस्तीरगिरिगांश्च मृगव्रजान्। आगतो नृपतिस्तद्भक्तिःशेषानकरोदधात्।
इत्याद्यनुचितं किञ्चिन्मृगयादूषणं कृतं। विलोक्य यद्भवेद्भीतिर्भाविनां मृगयायुषां।
आखेटिकां नृपः कृत्वा राजधानीं समागतः। अस्वास्थ्यमवहद्दैवे ग्रहणीगदसम्भवं। ५३०
केऽप्यूचुर्मृगयादोषात्कुपितादेवतास्ततः। अतीसारगदारम्भास्तत्रैवास्य विलोकिताः।
केऽपि प्रच्छन्नराज्येच्छाः सैदाः स्वातन्त्र्यकाङ्क्षिणः। व्यधुः किमपि भूपाले तुरुष्कादृतमानसाः।
केऽपि मन्त्रिवियोगात्थचिन्तासन्तापितात्मजं। रुजमाहुर्न तद्व्याधेर्निश्चयः कस्य चिदभूत्।
भूपस्तादृगवस्थः स नववर्षादिवासरे। ययौ सर्जप्रदेशन्तद्व्याधेया शकुनीच्छया।
तद्दिने गच्छतस्तस्य राज्ञो नौकान्तरस्थितेः। जैनवाटविहारायात् सर्पस्तु नाट पद्धतिं। ५३५
तद्दुर्निमित्तभीशान्त्यै हत्वा तं शायकैर्नृपः। अहरङ्कदयाशङ्कां न शरीराद्रुजं पुनः।
किमर्थं निर्गतोवासि चिरं त्वं सुकृतं कुरु। इतीवाग्रागतोवायुस्तत्रैगन्तं न्यरुध्यत।
अस्मिन् गते प्रजापीडा भविष्यत्यत्र मण्डले। अकम्पत शुचेवोद्यत्तरङ्गतरलं सरः।
तत्र सर्व्वोत्सवे भुक्त्वा सैदमन्त्रिसभाहृतः। अपुनर्दर्शनायेव सर्व्वेषां दर्शनं ददौ।
नौकारूढस्ततस्तूर्णं सम्भृत्यः सदिनावधि। उत्काढाखण्डमायेव श्येनैः पक्षिवधं व्यधात्। ५४०
अद्येत्थं विनोदं नः करोति न पुनः प्रभुः। इत्येव श्येनाः पक्षालीं स्पृहीत्वोपायनं व्यधुः।

प्रत्यावृत्तस्ततो राजा सैदांस्तान् प्रतिमुच्य च। नाहं स्वस्थोऽस्मि तल्पस्थो देवीं श्रातरुजं व्यधात्।
तत्पथ्यपरिचारिण्या स्वयं देव्या हृतो नृपः। दिवसेन्दुरिव क्षीणरुचिं विच्छायतामगात्।
कवाटविकटं वक्षः श्यामगौरं तदाननं। कम्बूरुजानुपादाश्च पीनाः पद्मदलोपमाः।
सुन्दरं नयनद्वन्द्वं ललाटं भ्रूमनोहरं। तद्रुजा नृपतेः सर्व्वं विवर्णं समपद्यत। ५४५
एकदा सोऽवदद्राजा तं मेयाहसनं रहः। नाहं जीवामि राज्यार्हान् सुताः शिशवो मम।
बद्धो वहामखानीयेन पाति मम बालकान्। वरमादमखानीयं युत्स्यानीयाभिषिच्यतां।
अथवेयं भवत्कन्या यदृच्छति करोतु तत्। श्रुत्वेति भव धीरस्ते स्वास्थ्यं स्यादिति सोऽब्रवीत्।
केवलं सैदहसनोरुरोध भृशदुःखितः। ॥ कुलकं ॥
अथ राज्यवदत्पित्रे रहोमेरमुखादिदं। सन्देहितास्त्रराजायं राज्ये किं क्रियतेऽधुना।
वरं वहामखानीयोयुवायमभिषिच्यतां। यौवराज्ये च ज्येष्ठोऽयं दौहित्रः स्थाप्यतामिति। ५५०
द्विजादिष्टाश्च बध्यन्तां सर्व्वे स्युरविनश्वराः। श्रुत्वेति मेयाहसनः सक्रोधस्तामभर्त्सयत्।
तच्छ्रेयः प्राप्तिसंकल्पकल्पितद्रव्यसञ्चयान्। भीसुलेभ्योऽददुः सैदा द्विजभक्तिविवर्जिताः।
प्रभुं द्रष्टुं न यच्छन्ति गच्छन्त्यभ्यन्तरं स्त्रियः। मन्त्रपाठं निषेधन्ति तन्त्रगारुडिकोचितं।
चिकित्सां वैद्यकोक्तान्तामन्यथा रचयन्ति च। तत्रापि गुलिकां भोक्तुं रचयन्ति स्वसाधितां।
किमप्यनिष्टं कर्म्मेति हतमित्यादिवादिनः। वर्चोविरुधं पश्यन्तोऽप्यन्तरज्ञा महीपतेः। ५५५
वैद्योगारुडिकश्चाहं दृष्टकर्म्मेति कत्थयन्। तथाभूद्व्यभट्टः स स्त्रीवैद्यकहतार्थनः।
मुमूर्षुः सेवकैः पृष्टः कारुः किञ्चित्तवे विभो। मण्डो निवार्य्यतामद्यादित्यूचे तान्महीपतिः।
हतान्तमहिषोद्दृष्टो दिव्यमद्यैव यात्ययं। इत्युक्त्वा मुमुचुः सर्व्वे साक्रन्दं साश्रुलोचनाः।
संरुद्धवसनः साश्रु घूर्णयन् दृष्टिमण्डले। तस्यामेव रजन्यां स मुमूर्षुरभवन्नृपः।
वर्षे षष्टितमे कृष्णनवम्यां मासि माधवे। पञ्चाहं द्वादशाब्दांश्च राज्यं कृत्वा दिवं ययौ। ५६०
आक्रन्दमुखरा रात्रिः सर्व्वा सा जनताप्यभूत्। प्रातर्यानं समारोप्य च्छत्रचामरसंयुतं।
सैदाः ससेवकाः सर्व्वे निन्युः पितृश्ववाजिरं। श्रीजैनभूपप्रमये दुःखिता नाभवत् प्रजा।
तादृशी यादृशी तस्य मरणे शरणोज्झिता। तद्दुशाश्मनि बद्धाद्यं तस्य मस्तकवेष्टनं।
तदन्धरचनं टुप्पिकोज्ज्वलं मन्त्रिणोऽव्यधुः। तदालोक्य जनः सर्व्वादर्शनोत्कण्ठिताशयः।
स्मारं स्मारं नृपं मेने निवसन्तमिव मध्यगं। प्रातः प्रातः समागत्य सैदाः सप्तदिनावधि।
स्ववेदाध्ययनं चक्रुर्मिश्रितं रुदितैः स्वनैः। ५६५

विहितरतयो दृष्टा येऽन्यैर्महाविभवोज्ज्वलास्तरुणवयसो बालालीलाविलासमदालसाः।
कतिपयदिनैस्तेऽमी रिक्ता व्रजन्ति शुचान्विताविरसमनसो रज्यद्वेश्यागृहादिव कामुकाः।
देशो मेऽयं रचितरचना राजधानी ममेयं कोशो मेऽयं युवतिरपि मे मे सुता मे च भृत्याः।
इत्येवान्तः कलयति नृपो यावदेत्यान्तकस्तां त्यक्त्वा सर्व्वं व्रजति सुधिरः पुण्यपापैकभागी।

मग्नाङ्गसुभगं राज्यं ममेदमिति योऽब्रवीत्। तदीयो नाभवत्तस्य स्वदेहान्ते पृथक्स्थितेः।
इत्थं प्रवाजिरे लोकः शुश्रोच नृपसंहतिं। अश्मीकरचनामात्रावशिष्टां तत्र संस्थितां।
राज्यदानाय राज्ञो सा म्लेच्छसम्पर्ककर्कशं। वल्लामखानजं पुत्रं दुःखोदर्कमतर्कयत्। १००
इति श्रीजैनराजतरङ्गिण्यां पण्डितश्रीवरविरचितायां हस्सनशाहिराज्यवृत्तान्तवर्णनं नाम तृतीयतरङ्गः।
इति हस्सनशाहिवर्णनं ॥



## ॥ श्रीवरपण्डितकृता तृतीया जैनराजतरङ्गिणी ॥

### ॥ चतुर्थस्तरङ्गः ॥

तृतीयेऽहनि सैदास्ते मिथः संमन्त्र्य सत्वरः। व्यधुर्म्मल्लदखानाय राज्यदानाय निश्चयं।
प्रतीचाक्रममालोक्य कालं सैदास्त्वराकुलाः। राज्याभिषेकदानेच्छामकुर्व्वन्नृपसूनवे।
अथ राज्ये व्यधीयन्त तत्सुतं सप्तवार्षिकं। कृत्वा मल्लदशाहाख्यं गोनर्दमिव सुन्दरं।
तस्य सिंहासनस्यान्ते स्थापिता वस्तुसन्ततिः। त्यक्ता भोजनशामग्र्यं पूर्व्वं शार्ङ्गेऽपतत्करः।
एतद्राज्ये सदा युद्धं भविता मण्डलान्तरे। दृष्ट्वा शकुनविज्ञाः केऽप्यूचुस्तत्रान्तिकस्थिताः। ५
शौर्य्यसिंहासने कृत्वो विबभौ वालभूपतिः। दत्तानन्दः पयःपूर्व्वैर्बालेन्दुरिव सुन्दरः।
सैदाः शुभ्रांशुकन्यस्तकुङ्कुमालोहितत्विषः। भाविद्रोहरजोव्याप्तरक्तकमिका इवावभुः।
भ्राता हासनखानोऽस्य कनीयान् रुचिराकृतिः। बभौ वालनृपस्याग्रे शुक्रस्येव बृहस्पतिः।
शोकहर्षान्वितो लोकस्तद्दिने पितृपुत्रयोः। दधौ तमःप्रकाशाढ्यां लोकालोकाचलश्रियं।
दौहित्राभ्युदये सैदास्तिहरानन्दतुन्दराः। सुगन्धिमकरन्दाढ्ये मधौ मधुकरा इव। १०
वाद्यमानोत्सवातोद्यप्रोद्यत्प्रतिरवच्छलात्। अकुर्व्वन्निव वृद्ध्यर्थं राज्ञस्तस्याशिषो दिशः।
राजधान्यङ्गने सैदाः परिधानप्रसाधनैः। अतोषयन्नुत्सवान्तः सर्व्वं नृपपरिच्छदं।
एकस्मिन् कीर्त्तिशेषेऽन्या दिग्दयाहुसानदयो। तादृशे दृशे पौरैः स्फूर्ज्जत्सादिशतावृता।
राज्यसम्पत्समप्राप्ता तद्गृहे समलक्ष्यत। तत्कन्योद्देजितेवाशा वक्तुं रिपुपराभवं।
राज्ञः सेवकसामन्ताः प्राप्नुवन्तस्तदन्तिकं। प्रवेशं लेभिरे नान्तर्लुठन्तः कुक्कुरा इव। १५
देशसंस्कृतशास्त्रज्ञविदत्कृतविडम्बनाः। गृहे स्त्रीषु वहिः श्येनलीलासु व्यसनं दधुः।
विरुणव्यवहारेषु क्रूराचारेषु दर्पिषु। दुःसहान्तकदूतेन लोभेन चोभितेषु च।
दौःशील्यानभिगम्येषु प्रसरन्मत्सरेषु च। विरागतेषु सैदेषु सप्रजाः सेवकाययुः।
हितानामपि सैदानां केचिद्भूपालसेवकाः। नाभ्यनन्दन्परिचयं काकानामिव कोकिलाः।
द्विजस्थितिः सुखं यासीत् सतीसरसि निश्चला। तेषां श्येनैश्च भृत्यैश्च भ्रामिता चपलाशया। २०

स्फीतगीतालसम्वादा येऽभवन् वृन्दगायनाः । शोकमूका इवाभ्यर्णे साधं सङ्गादवाभवन् ।
अथ प्रथममेवैते गृहीत्वा नवभूपतिं । शकुनापेक्षिणो नावा वितस्तातटमभ्यगुः ।
स्वपक्षावर्जकास्तत्र पृष्टनौज्यासम्पदः । स्वातन्त्र्यप्राप्तिदर्पान्धाः काश्मीरा नादरं व्यधुः ।
अपुनर्गमनायेव विधाय शकुनिश्चयं । एकदा स्वीयसंयुक्ता व्यधुः किमपि मन्त्रणं ।
तेषां तत्केवलतया श्रुत्वा षाड्गुण्यमन्त्रणं । काश्मीरिकाश्च मद्राश्च शङ्किता नगरेऽभवन् । २५
ततः परशुरामाद्यैस्तद्दिष्टैः सह तद्दिने । मिलिता पञ्चशस्तीव्राः सैदा द्रोहमचिन्तयन् ।
जिघांसतामथैतेषां वैजन्यावसरेक्षिणां । न भेदमगमन्मन्त्रो गुप्तस्तद्दुष्कृतैरिव ।
एकदा तत्सुताभीष्टा मेराख्या मेरहस्सनं । मूर्त्तेव दुर्दशा गेहमागत्यान्यब्रवीदिदं ।
राज्ञः कापि क्रिया साध्या तूर्णमागम्यतां प्रभो । इत्युक्त्वानिष्टमप्येनं सा निनाय गृहान्तरात् ।
द्रोहस्ते सूर्यवारे स्यान्न गन्तव्यो नृपालयः । पित्रेत्युक्तोऽपि स स्वप्ने ययौ दैवविमोहितः । ३०
तावत्स सैदहस्सनोऽप्यायया स्वगृहाद्द्रुतं । पादोच्छेदोऽस्ति ते द्रोहात्सा पलायनमारुह ।
इत्येव पादकटकच्छिन्नोऽश्वादपतद्भुवि । प्रतोल्यां सैदसायश्वखुरोत्कीर्णरजोमिषात् ।
नैते पुनर्व्विशन्तीति शुचेवोच्छ्वासमक्षिपन् । तत्तारखाननेखेन त्वदनर्थादिहेतवे ।
प्राप्ते नाद्य मिथोमन्त्रं विधाय कृतनिश्चयाः । आक्रान्तमण्डलाः सैदा युग्मच्छेषविशङ्किताः ।
प्रातर्व्यध्वान्ति वस्तस्मादुपायः कोऽपि चिन्त्यतां । मिथ्येति बोधिता मद्रा जोनराजानकादिभिः । ३५
हन्मस्त न्वयमद्यादौ सम्मन्त्र्येति समाययुः । सर्व्वामन्त्रितवाक्यन्तः समेतामत्रगम्य तान् ।
अन्तः परशुरामाद्या विविशुः शस्त्रधारिणः । रक्ष्योद्वारस्त्वया तैरित्युक्तो द्वारेशताजकः ।
मन्त्रे प्रवृत्तिरित्युक्त्वा सैदमृत्यून्न्यवारयत् । कुर्व्वन्ति भोजने तुष्टिं त्वद्भृत्यादृति तद्गिरा ।
सैदाः सशस्त्रान् स्वान्भृत्यान् स्वसमीपाद्व्यसारयन् । जोनराजानकस्तावत्पथान्येनागमद्द्रुतं ।
गृहीत्वा राजभृत्यौघं सिंधसुभटिकान्तरात् । ताजद्दौवारिकोऽप्यश्वमारुह्याभ्यां नृपाग्रगं ।
वभ्रामाभ्यन्तरेऽन्यच्च तन्मतेन जिघांसया । ४०
वाटिकान्तश्चतुष्खण्डमण्डपोपरि संस्थिताः । सैदा मद्रान्समालोक्य साशङ्का इव तस्थिरे ।
किं न गच्छत देशं स्वं प्रतिमुक्ताः किमागताः । इत्यागतांस्तान् दृष्ट्वैव सैदं सिंहद्विजोऽभ्यधात् ।
मार्गमुक्तावनाप्तस्त्वत्तो यामः कथं वयं । अद्य वः प्रतिभोक्ष्यामस्तत्यार्थमिति तेऽभ्यधुः ।
वैजन्यमेत्य पथ्ययाज्ञादस्मादुपाजतः । परशुसिंहभट्टं तं न्यवधीत्प्रथमं रुषा ।
चतुष्खण्डपिकाप्रान्ते प्रचरन्नतजोचितः । सिंहोऽपि विनटम्हालः शृगालवदसोऽपतत् । ४५
किं द्रोहो द्रोह इत्युक्त्वा यावद्भीताः समुत्थिताः । तावत् खड्गप्रहारैस्तांश्छस्त्रभृतः समन्त्यते ।
निर्यातः प्रस्फुरन्सैदा द्वाराग्रे सैदहस्सनः । हतो मुख्यायुधस्तत्र प्रहारशतनिष्कलः ।
तं दृष्ट्वा मेयसमनं सभयं विद्रुतं द्रुतं । प्राकारारूढमवधीत् कोऽपि छिन्नपदद्वयं ।
गदयामीनयासीमसल्लाद्यास्तदन्तिके । त्रिंशन्मात्रा हतास्तत्र पुत्रमित्रसमन्विताः ।

वदन्तो हा ल्हालेति रक्तसिक्ताक्तपाणयः । चेद्दस्ते तदधोमुक्ताः हतान्तस्येव किङ्कराः । ५०
गृहेषु गोवधास्तेषां पापभीर्नाभवद्यथा । तथा तत्र हतां सैदान्मद्राणां नाभवद्दृणा ।
मृगयान्ते कुरङ्गादींश्छिन्नाङ्गान् व्यदधुर्यथा । तथा सैदाः हता मद्रैः चुद्रैस्तदाटिकान्तरे ।
द्विषद्धृतांशुका नग्ना महार्हशयनोचिताः । अनाथाइव लोकस्य ययुः प्रेक्षणीयतां ।
केचिद्विभतखानाद्या निष्कृष्टच्छुरिकास्ततः । तूर्णं प्राकारमुल्लङ्घ्य गृहीलाश्वान् पलायिताः ।
तद्दृष्ट्वा तुमुले जाते वहिस्तदनुजीविनां । कस्यापि निश्चयो नाभूदन्तरे के हतादिति । ५५
भयत्यक्ताभिमानेषु विद्रुतेष्वनुजीविषु । चकर्ष शस्त्रं तन्मध्यात् कोऽपि नैवाङ्गनान्तरे ।
मल्लजादात्मजाञ्जातास्तावन्मेयामहम्मदः । गृहादेत्य द्रुतं प्रादादास्कन्दं राजमन्दिरे ।
प्रतोलीपालकः सोऽयं द्रोहीत्यप्यागतं द्रुतं । राजमार्गान्तरे क्रुद्धो नोरोशाहमघातयत् ।
बह्वारिपुटां दृष्ट्वा राजधानीं नवीकृतां । ज्ञात्वान्तस्थान् रिपून् प्राम्वत् चोभेनाग्निमदापयत् ।
न शक्तोपद्रवं द्रष्टुं स्वर्गं मद्रचक्रो गतः । शुचेवेति द्वारधान्या जुहुवे ज्वलने वपुः । ६०
सौधप्राप्तलसद्धूमस्तोमव्याजान्नृपश्रियः । क्व मां खला नयन्तीति निःश्वासौघाइवास्फुरन् ।
अत्रान्तरेऽग्निमालोक्य द्रोहधारी धारितायुधाः । राजधान्यङ्गनं प्रापुर्निर्गता वाटिकान्तरात् ।
जोनराजानकोऽगच्छत् क्रुद्धः केनापि पत्तिना । वीरः खड्गप्रहारेण द्विचांस्तत्राङ्गनेऽवधीत् ।
समारुह्याथ राजाश्वान् सर्व्वे मद्रसमन्विताः । मुक्तामूलकनागान्ते प्राप्ताः प्रोचुः चणं मिथः ।
वरमत्रैव तिष्ठामः सैदैर्युद्धं विदध्महे । स्वल्पावशिष्टैः शत्रूणां न शेषः परिरक्ष्यते । ६५
ज्यलालठक्कुरः श्रुत्वा तानूचे नयकोविदः । न युद्धसमयोऽस्तीह गत्वानेन पथा द्रुतं ।
वितस्तापारमासाद्य तिष्ठामः सपरिच्छदाः । तत्रोपायान्विधास्यामो येन नश्यन्त्यमी स्वयं ।
अभिनन्द्येति तद्वाक्यं सर्व्वसाहसशालिनः । जुहिलामठमार्गेण वितस्तापारमासदन् ।
अत्रान्तरेऽन्तरं प्राप्तः क्रुद्धो मेयामहम्मदः । अवधीद्भ्रातरौ ताजपाजकौ द्वारपालकौ ।
राजधान्यङ्गनात्कृष्टौ श्वपचैर्गुल्फदामभिः । अमेध्यमध्यमग्नाङ्गौ ययतुस्तौ स्वभोज्यतां । ७०
आजन्मकृपणग्राम्यपीडोत्कोचार्जितश्रियौ । प्राणदानक्षणे तस्मिन् गतौ सर्व्वस्वदाहतां
सञ्चितं ग्राम्यपीडाभिर्लुब्धैर्यत्परवञ्चनैः । तेषां सद्रूप्यकुप्यादि सर्व्वं तद्राजसादगात ।

कृपणस्य गृहं विशन्ति येऽर्था न वहिः कष्टमतो जनाः चमन्ते ।
विलमध्यगताइव डिजिह्वा यदि निर्यान्त्यसुभिः सहैव सर्व्वे ।

भिक्षोः प्रसृतिमात्रं येन दत्तं तद्गृहान्तरात् । शतं तण्डुलखारीणामिक्ष्वाद्यैरेव तद्धृतं ।
गोधूमपिष्टं पूपैकपर्य्याप्तं नाप्तमर्थिभिः । यत्सक्तुपिष्टपतच्चूर्णैर्हिमपातायितं पथि । ७५
अत्रान्तरे गृहाद्दाशोऽप्यालिखानो भटोत्कटः । प्राम्वालिकाप्रतोलीन्तामदहत्तस्त्विहौषधा ।
एदराजानकाद्याश्च तावद्ग्रामस्थानजं । उन्मुच्य बन्धनात्तूर्णमपमार्गेण निर्ययुः ।
अग्रे दृष्टारिसैन्यश्च पश्चादपि कृताशनं । चमोयातुं न च स्थातुं मृगश्चावइवाभवत् ।

हृष्टोऽनिष्टाय सोऽयं नोविरुद्धैरिति तं विदन् । आलिखानः समास्थाय सिंहोमृगमिवावधीत् ।
महाराज्ञैव हृष्टोऽयं पाजभट्टमतस्थया । राज्यार्थमिति सैदास्तं चुक्रुशुः केचनावदन् । ८०
उपायो बन्धनात् कर्तुं चिन्तितस्तस्य योऽपरैः । अपायः प्रत्युतास्याभूद्दैवं केन विलङ्घ्यते ।
तस्य मीरादयो भृत्याः पापास्तेन प्रचोदिताः । प्रहारविवशं चक्रुः शशकं शवरा इव ।
राजपुत्रवधोत्पातविवशं पृष्ठपातिनं । अवधीत्पाजभट्टं तं श्वपचमिव राक्षसः ।
भुक्तं किमपि नो राज्यान्निर्हेतु किमयं हतः । शुचेवारोदि तद्दृष्ट्वा वृक्षैः पिकरवच्छलात् ।
मा मा वधीरिमं बालं सुधिराद्बन्धनोद्धृतं । इत्युच्चैरिवेत्थं मरुता कम्पिता लताः । ८५
केऽमी तुरुष्का दुष्कार्यकराः पुष्कलपातकाः । इत्येव तरवः कम्पमापुर्व्वायुविघट्टिताः ।
चतुर्व्विंशतिवर्षीयन्मात्रा प्राप्तस्थिराच्छवः । अयं हद्धान्तिके सहात् कृतोऽन्यक्रियया ततः ।
यवान्नभक्षिणी तस्य जननी विधवा सती । सोवाणदेवी साजीवमवसत्तच्छवाजिरे ।
राजसैदद्विजामेतान् हतान्वीक्ष्यामहं कथं । इतीव तत्क्रुधा रक्तः सूर्य्योलोकान्तरं ययौ ।
परितो राजधान्यास्तान् दृष्ट्वा नग्नान्महत्तरान् । न शेकुः केऽपि वस्त्रैकखण्डं दातुं त्रपाहते । ९०
सरस्तीरगता भेका अर्विच्छिन्नरवच्छलात् । साक्रन्दाः सर्व्वरात्रन्ते तच्छुचेवाभवंस्तदा ।

ये राजवेश्म विविशुः सुभगाः सुवेशास्तत्तत्तुरङ्गखुरधूलिकृतान्धकाराः ।
ते द्वित्रिवोढशिविकाधृतजीर्णवस्त्रा निष्काशिता नृपगृहात् स्रुतरक्तधाराः ।

इत्थं षष्टितमे वर्षे भाव्युपद्रवकारणं । वैशाखस्य चतुर्द्दश्यां सैदानां विप्लवोऽभवत् ।
नूनं हसननाम्ना स भृत्यानां तत्र वत्सरे । अन्तकः सन्निविष्टोऽभूद्येनैते प्रलयं गताः ।

सामान्यवेश्मनि वरं जनिरस्तु पुंसां मा मास्तु राजनिलये बहुदुःखकर्त्री ।
ते शेरतेऽत्युरुचिरेऽल्पपटैकमध्ये नोमाति राजयुगलं विपुले स्वदेशे । ९५

अथालिखानमेयाद्याः क्रुद्धाः पश्चादवाल्गन् । नदीपारगतान् श्रुत्वा द्रोहिणस्तान्विरोधिनः ।
नौसेतुबन्धानुच्छिद्य मार्गैः काश्मीरिकैः समं । ज्यष्टालठक्कुराद्यास्ते मतं चक्रुर्जिगीषया ।
विंशप्रस्थान्तरे सैदाः प्राप्तसन्नाहवाहनाः । तत्तत्पटकुटीषण्डमण्डिताः शिविरं व्यधुः ।
पुरमाचावशिष्टास्ते सैदा द्वैधान्निवर्त्तिनः । वाजिवर्म्मासिभूयिष्ठां राज्यलक्ष्मीं विभेजिरे ।
येषां वराटिकैकापि नाभूत् करगता क्वचित् । स्वर्णरूपकहस्ताङ्कास्त्विरुक्ते वेशभूषिताः । १००
तेऽप्युत्तुङ्गतरङ्गेषु सर्व्वतोवसुवर्षिषु । अकारि शस्त्रग्रहणं शिल्पिशाकटिकैरपि ।
मन्दुरासुन्दरा येऽश्वा राज्ञोऽभूवन्महागुणाः । तानारुह्याधमास्तैरुन्मत्तत्या नित्यदुर्लभान् ।
ततो हसनराजानकाद्यैरन्यैश्च संयुताः । षाड्गुण्यं विदधुः सैदाः काश्मीरिकजिगीषवः ।
ते मेयामत्तनागचमुख्यानां यन्त्रणोज्झिताः । स्वमेवकानां विदधुरधिकारसमर्पणं ।
अत्रान्तरे पारगताष्ठक्कुराद्या महाधियः । सैन्यानां सङ्ग्रहं चक्रुस्ते जालन्द्रगरान्तरे । १०५
श्रुत्वेति साहसोदात्तं नगरे मद्रनिर्म्मितं । आययुः सर्व्वराष्ट्रेभ्यो लोकास्ते शस्त्रधारिणः ।

प्रवृत्ते च पुरक्षोभे पुरे ग्रामे च पत्तने। अत्युल्बणजनः सर्व्वो धावति स्म धृतायुधः।
समालावांगिलीयाद्याः क्रमराज्यगताश्च ये। स्वामार्थं क्षिप्रिकातीरे शिविरं समकल्पयन्।
दरद्भिसक्कशाकाद्यैर्दरद्भिः सुभटैः समं। वैदूर्य्यभट्टः स्वामस्थो युद्धसन्नद्धतां दधौ।
नीलाश्वलोकं सङ्गृह्य पद्मराजानकादयः। दुग्धाश्रमान्तिके सिन्धोः पारं स्वामार्थमासदन्। ११०
सर्व्वतोधान्यसम्भारानानीयानीय नाविकैः। प्रवासवेतनं कोशाभावात् काश्मीरिका व्यधुः।
कचिल्लुण्ठिं कचिद्दाहं परदेशद्दवाच ते। पारावारगताश्चक्रुर्नद्यौ तीर्त्वा पुरद्वये।
धनुर्यन्त्रशरैर्मुक्तैः प्रतितीरं पुरद्वये। पद्मसमन्ता युद्धे प्रत्यहं कटकद्वये।
स्वग्रासोपान्तसामन्ता- क्षीणद्वेष्या ग्टहोज्झिताः। मामावशेषाः स्वानाश्च शूरादारिद्र्यपीडिताः।
चौराः कृतप्रमोषाश्च चिरबन्धनयन्त्रिताः। तत्तद्राजविरुद्धाश्च पिशुनाश्च स्ववृत्तयः। ११५
हृताधिकारास्तत्कार्य्यन्यायप्रत्यायनक्षमाः। एते चान्ये च तुतुषुर्देशेऽस्मिंस्तदुपद्रवे।
नौसेतुबन्धानावञ्च सर्व्वामडवराज्यतः। आनीय वामतीरस्था विदधुः स्वोपयोगिनीः।
देवाभिधः शाकुनिको नाविकाधिपतां भजन्। प्रतीर्य्य नौकायुद्धेन विदधे सुभटक्षयं।
सैदा दुग्धसरस्तीरस्थितान् शाकुनिकान्नवान्। सपोतान् व्यसृजन् योद्धुं तत्तन्नन्दपुरस्थितान्।
सैयावद्याकनामापि पुररक्षाधिकारभाक्। विचार्य्य चौरांस्तत्काले दिवाम् शूले न्यरोपयत्। १२०
आसमुद्रमठाज्जैननगरान्तं सडिण्डिमं। तस्मिन् स्फुरति पौराणां न भीश्चौरकृताभवत्।
छिन्नेषु सेतुबन्धेषु तत्तन्नौपुरकादिषु। पूर्दुर्गरचनेवाभूद्दुर्गमा तद्विरोधिनां।
आस्कन्दं स्कन्दभवनादाशङ्कोपग्टहाङ्गनं। पञ्चहस्तमितां सैदाः परिखां समकल्पयन्।
द्वारधानीसमीपेऽपि रुद्रराजानकान्तिके। तादृशीं परिखामन्यां चक्रुर्वैरिभयच्छिदे।
विरुद्धवेश्मलुठनं कुर्व्वन्तोऽहतनद्धनाः। सैदभृत्या भयं चक्रुः प्रजानां गोवधादिना। १२५
विरुद्धमुक्तलुठितगृहदारुसमाश्रितः। दिद्दामठो रुद्रवनवासेन्धनकृतोऽभवत्।
अनभिज्ञतयाल्पानां तद्विरुद्धग्टहश्रियः। व्ययीचक्रुर्यथा सैदागावोहत्वा शूनामिव।
निःकृष्टशस्त्राः सन्नाहममुञ्चन्तो दिने दिने। राजधान्यङ्गने साश्वास्तद्भृत्याः प्रातिशन्मदात्।
मल्लामीनग्रहांश्चुन्दकायस्थसदनानि च। राजानको हस्सनस्तु ददाह स्वगृहं क्रुधा।
काकतालीयकन्यायः सैदकाश्मीरसैन्ययोः। परस्परभयभ्रश्यद्धैर्य्ययोरभवत्तदा। १३०
पारावारगता वीरास्तीर्त्वा साहसिनो द्रुतं। हत्वा तांस्तांश्छिरश्छित्वा तीरे दण्डे न्यरोपयन्।
लोलाश्वा रोहिणि हते तीर्त्वा सैदभटद्वये। लुण्ठिं पिर्वजखानाद्याश्चक्रुः पद्मपुरान्तरे।
जोनराजानकाद्यास्तच्छ्रुत्वा तीर्णा भटोद्भटाः। जवाणादिषु तद्ग्रामादुत्पिञ्जं चक्रुरञ्जसा।
तेन सैदा अपि ग्रामे जन्मभूमौ गृहावलेः। जोनराजानकस्यैव क्रोधादग्निमदापयन्।
तच्छ्रुत्वा स तदीयस्य वडवो विषयान्तरे। ताजिभट्टस्य सदने तदद्दग्निमदापयत्। १३५
गृहान् पदातिमात्रः स दग्ध्वा लहरमध्यगः। दुग्धाश्रमादिस्थामस्थान् पलायनपरान् व्यधात्।

अथ लोहरकोटस्थं श्रीमार्गेशश्चहंगिरं । व्यलाललठकुरायास्ते लेखमित्थं व्यसर्जयन्।
यत्प्रमादभिया देशात् सकुटुम्बोगतो भवान्। स मद्रैर्निहितोऽस्माभिर्युक्त्या तद्वधसाहसः।
मेयामहम्मदाद्यैस्तत्पुत्त्रैरस्मज्जिगीषुभिः। वैतलो दक्षिणो वामो भागोऽस्माभिः समाश्रितः।
जिगीषवोवयं सर्व्वे क्रान्तकश्मीरमण्डलाः। पुरमाशावशिष्टास्ते सैदास्तिष्ठन्ति वेष्टिताः। १४०
तद्विलम्बधियं त्यक्त्वा तूर्णमागम्यतां यतः। प्राप्ते त्वयि जयोऽस्माकं तत्र स्यु. कीर्त्तिसम्पदः।
राजभक्तास्त्व शक्तास्त्व यूयमेवात्र मण्डले। तदनागमनात् कीर्त्तिं मा कार्षीः स्वां कलङ्किता।
बद्धे रणादालिशाहे पूर्व्वं मल्लिकजः स्वयात्। राज्यरक्षां व्यधादत्र यथा मार्गेशमज्ञदः।
तद्वत्प्राणं त्वया रक्ष्यं तूर्णमागत्य साम्प्रतं। अन्यथास्य शिशोराज्ये स्थापयन्ति न सैदजाः।
इति लेखं विचार्य्याशु स्वदेशोत्कण्ठताश्रय.। तूर्णं पर्णोत्समार्गेण स मार्गपतिराययौ। १४५
प्राप्ते तस्मिन् दिनैर्द्विचैः कुम्रदीनपुरान्तरं। चकम्पुः शिशिरे सैदाः प्रदीपाइव वायुना।
अथ सम्मन्त्र्य सैदास्ते भयात् सन्धानुसिच्छवः। इत्थं शिवसहवादीं लेखहस्तान् व्यसर्जयन्।
प्रधानपुरुषास्तन्तः कृतसैदवधाः कथं। भवन्त एव कुर्वन्ति कार्य्यं लोकविगर्हितं।
दैवाद्यदि मृतोभूपस्तत्सुनस्तत्पदे कृतः। कस्य किं वो धनं येन सर्व्वे क्रूरार्थमुद्यताः।
न सर्व्वे द्रोहिणः सन्ति यूयं काश्मीरिका जनाः। पदे शकेहतायैते द्विषोस्तास्त्रः प्रयच्छत। १५०
अथवा परदेशात्तान्निष्काश्य सपरिच्छदान्। यूयमेवात्र देशस्य मुख्या मन्त्रिषु पूर्व्ववत्।
या यस्य पदवी पूर्व्वमासीत् सा तस्य तिष्ठतु। संभूय सर्व्वे भुञ्जामो नास्माकं विग्रहे ग्रहः।
मरणं नियतं जन्तोर्यथैव विधिकल्पितं। तथैवावश्यभावीति के निवर्त्तयितुं क्षमाः।
इति लेखार्थमालोच्य मार्गेशाद्या महत्तमाः। यवनाच्चरसंबद्धमिति लेखं व्यसर्जयन्।
रक्षारक्षं नृपस्तादृग्यच्चितो न दुराशया। किमर्थं स हतो राजपुत्त्रो बहामखानजः। १५५
नोरोलोहादिसधनः कस्याग्रोसा भवत्विह। तत्राप्यस्य शिशोराज्ञः सर्व्वः कोशोविलुण्ठितः।
लौहीसा घटिकैवैका द्वारि तिष्ठति भूपतेः। सैदैः शिष्टाहनेनेति श्रुतन्नोत्र ध्वनिच्छलात्।
गच्छन्त्वनिष्टा मद्रास्ते वहिर्युक्त्या निवारिताः। सन्तोषवृत्त्या तिष्ठन्तो यूयं पैतामहे पदे।
इत्यादि श्रुत्वा सैदस्य समाक्रतोऽप्यनागतः। तदग्रे व्यसृजहूतं स च प्राप्तोऽब्रवीदिदं।
स्थापयन्तु धनं कोशे यद्धृतं बालभूपतेः। शस्त्रं त्यजन्तु मन्त्रादौ तिष्ठन्तु भयवर्जिताः। १६०
अनत्या एव कुर्व्वन्तु राज्यकार्य्याणि पूर्व्ववत्। किञ्चिन्नश्यति नोदेशे दोषाः शाम्यन्ति सजन्ति च।
यद्गतं गतमेवात्र मृता जीवन्ति नो पुनः। अन्योन्यशुद्धिर्वैरस्य जातान्योन्यकृतादधात्।
इत्यादि युक्तमुक्तं तद्वाक्यं श्रुत्वा मदोद्धताः। सैदास्तदुक्तिजनितक्रोधदग्धाइवाभवन्।
नृपः कोशश्च शस्त्रञ्च युद्धदक्षास्तथा भटाः। सर्व्वमित्यस्मदायत्तं किं कुर्व्वन्ति विरोधिनः।
इति हैभतखानोक्ता युद्धसन्नद्धबुद्धयः। अभूवंस्ते कृतोद्योगाः कौरवाः पाण्डवेष्विव। १६५
अथैकदा सेफडारओनराजानकादयः। पुरे नोधेतुमुत्तीर्य्य सैदयुद्धार्थमाययुः।

उपायैः सर्व्वदा जेयास्तमयो न रणस्य वः। इति मार्गपतेर्वाक्यं नागृह्णंस्ते रणोद्यताः।
दावोदनामा मार्गेशपुत्त्रो धामाकरोद्द्रुतं। प्रतीहारादिभिर्युक्तो नगरान्तरमासदत्।
समुद्रमठमार्गेण प्रविष्टा पृतनाथ सा। प्रापल्लोष्टविहारान्तं कर्त्तुं सैदभटक्षयं।
रणं सन्त्यज्य डोम्बाद्या येऽन्ये लुब्धा महाभटाः। सर्व्वस्वहरणव्यग्रा बभूवुर्नगरान्तरे। १७०
डोम्बाद्याः सुभटाश्चान्ये घ्नन्तोऽन्योन्यमुदायुधाः। प्रविश्य पौरवेश्मभ्यो भाण्डागाराद्यलुण्ठयन्।
भूमौ निखन्य यन्न्यस्तं पौरैर्गुप्तं गृहे धनं। चिप्त्वा प्रतिपदं शङ्कुर्नीतं तत्तैरिवार्पितं।
मद्राहते भटे दृष्ट्वा सैदा दिक्पतितं शिरः। नाद्यास्माकं जयोऽस्तीति तूर्णं जग्मुर्यथागतं।
अथ सैदचमूः श्रुत्वा तान्प्रविष्टान्पुरान्तरे। अग्रे जगाम युद्धाय सायकायुधवर्षिणी।
अग्रागतं पद्मभटं हत्वा स्वर्गविरान्तरे। तद्रक्ततिलकं चक्रुः सैदाः स्वायुधसिद्धये। १७५
आलिखानः स तत्रस्थस्त्रस्तः श्रुत्वागतां चमूं। लब्धभद्वविहारेऽग्निं मार्गरोधार्थमार्पयत्।
ज्वालाजटाकुले मार्गे प्राप्तो दावोदमार्गपः। सहोमनप्रतीहारः स वीरो रणमग्रहीत्।
सेतुसङ्कटमार्गेण पतितः परिखान्तरं। स मार्गपतिदावोदो युध्यन् प्राणैर्व्ययुज्यत।
तत्राह्लादप्रतीहारमुख्या वीरा रणाङ्गने। ययुः शौर्य्यं दर्शयन्तो दिव्यस्त्रीसुखभागितां।
रूपं तस्य मृतस्यापि स्मृत्वा पौराङ्गनाः पुरे। वदन्ति नैव पश्यामस्तादृशं सुभगं क्वचित्। १८०
सुरूपो मानुषो योग्यो नायं तन्नीयते दिवं। इतीव देवताभिः किं मृतं तत्र न्यधीयत।
तावद्विभतखानाद्यैः पश्चादन्यपथागतैः। विदधे खानगाहाग्रे तत्र सुभटसंचयः।
भूताविष्टैरिव प्राप्तविजयैरुद्धृतायुधैः। रणप्रेक्षागताः पौरास्तद्दिने कोपितैर्हताः।
किमन्यत्परदेशीया दूता विप्रगृहे स्थिताः। एते मरा इति प्रोक्ता लोभाद्विप्रा निपातिताः।
विमुच्य बन्धनस्थान् स्वान् युध्यन्सैदभटैः सह। स सैफडामरः पौरान् सैदांश्चोत्फालकान् व्यधात्। १८५
अक्षदैगिहितः सोऽयमिति सैदभटा रुषा। जन्नुर्गृहस्थितं वैद्यपण्डितं यवनेश्वरं।
अत्यन्तानुचितं सैदाश्चक्रुर्यत्तस्य मस्तकं। छित्वा चन्दनलिप्ताङ्गं न्यधू राजपथान्तरे।
प्रविष्टा राजसाः केऽपि तद्दिने ते पुरान्तरे। अविचार्य्य चयं चक्रुः सर्व्वेषां यत्कृपोज्झिताः।
तस्य चन्दनलिप्ताङ्गं मस्तकं वीक्ष्य नागराः। न के निन्दां व्यधुः सैददुष्कर्माधर्म्मनिश्चयात्।
आमल्लेकपुराल्लोष्टविहारान्तं पुरान्तरे। शवा इन्धनगण्डाल्य इवासन्निहिताः पथि। १९०
आसन् येषु वपूंषि तूलशयनन्यस्तोपधानोद्धृतस्पर्शोत्कर्षसुखावमर्शविलसच्छृङ्गारसाराण्यलं।
नग्नास्ते भुवि काककुक्कुरवृकैः सम्भक्षिता लक्षिता मेदोमांसवसावमत्क्रिमिलसन्निष्पन्ददुर्गन्धिनः।
जयेन तावन्मात्रेण तुष्टाः सैदाः परस्परं। विश्रमस्थान्तरे चक्रुर्व्यवस्थैते विजयोत्सवं।
हतावशिष्टान्नष्टांस्तांस्तद्दिने चलितान् बहून्। पश्चाच्चेदलगिष्यन्त सर्व्वसंहरणं भवेत्।
किन्तु प्राक् लुठिता देवा ज्वलिताः केऽपि देशगाः। तां बुद्धिं विजयार्थेषामदास्यन् कुपिताः कथं।
अहंपूर्व्विकया याततरङ्कटभरासहः। नौसेतुबन्धस्तुत्रोट तात्रच्छीनगरान्तरे। १९५

सव्याहभारमग्नाङ्गाः सेतुभङ्गात्परिच्युताः । शतसङ्ख्या दिने तस्मिन् वितस्तायां विपेदिरे ।
नूनं सा शारदा देवी वितस्तारूपधारिणी । तद्धर्म्मक्रुधा यामं विदधे कटकद्वये ।
प्रेक्षागताहताः पौरा इति निन्दानिवृत्तये । तत्क्षणोत्कृत्तशिरसां सैदेराशिः कृतोऽपतत् ।
तत्तत्कोट्यर्पितमुखैस्तैर्व्वितस्तातटान्तरात् । काष्ठमेकं न्यधुः सैदा भीत्यै दीपधरोपमं ।
वितस्तायां शवाः केचित् सलिलोच्छूनविग्रहाः । विसस्रुर्व्विस्रगन्धाढ्या महापद्मसरोऽन्तरे । २००
अत्रान्तरे समानीयावशिष्टान्परितो भटान् । काश्मीरिकाः पुनश्चक्रुः पूर्व्ववत् सैन्यसंग्रहं ।
श्रीव्यवाङ्गिरज्यमालसैफडामरकादयः । मुख्यान् सैदान् पुनर्ज्जेतुं रणोपायं व्यचिन्तयन् ।
ससैफडामरः प्राप्तसिद्धादेशपदस्ततः । उषावषेषु व्यभजद्विषयान् सप्तविंशतिं ।
काष्ठागता न सत्पचास्तीक्ष्णाश्च सफलीकृताः । यत्नेषवश्च योधाश्च घटंस्तेषु दिने दिने ।
लुभ्यद्वैतस्ततो गद्दयजयघटनारम्भयत्नेषु युध्यत्क्रुध्यद्वीरेक्षणात्तप्रचुरपुरजनस्वान्तसंक्रान्तशौर्य्यैः ।
धावत्सव्याहिताश्वोत्कटसुभटघटाघातजाताग्निवर्षं चक्रुः क्रोधात् पुनस्ते प्रवरपुरवरे युद्धमत्युद्धतं तत् । २०५
यामदुन्दुभिवाद्यानां ध्वनिः सर्व्वैस्तदा श्रुतः । पूर्व्वं राजगृहे पश्चात् सैदकाश्मीरसैन्ययोः ।
अवतीर्णा जलार्थं याः पारावारपुराङ्गनाः । यन्त्रेषुभिर्व्विदीर्णाङ्गाश्चक्रयस्तत्र विपेदिरे ।
स नाभोद्दिवसो यत्र द्वित्रा वीराः पतत्त्रिभिः । भिन्ना मुमुर्षवस्तीरान्न नीताः स्वगृहान्प्रति ।
वङ्क्रिदानस्फुरद्योधसंहारार्थैरुपद्रवैः । एकमेकं दिनं तत्रानेहस्ताभूद्यथावहं ।
अश्लीलालापिनोऽन्योन्यं रन्ध्रस्योद्घाटनोद्यताः । तटद्वये भटाः क्रूरा अवाच्यमपि तेऽब्रुवन् । २१०
राजसैदद्विजद्रोहरोहत्पापादिवादिनः । मिथोगालीं वदन्तस्ते किं नावाच्यं बभाषिरे ।
प्राप्ता दौलतमीराद्याः कष्टवाटादिदेशतः । शिष्टाः मल्हणहंसाद्याः शाहिभङ्गनृपात्मजाः ।
पञ्चगह्वरजाः केचित् सिन्ध्वपत्यन्वयोदिताः । स्वग्रामेच्छास्तथान्येऽपि रुरुधुः सर्व्वतो दिशः ।
काश्मीरिकाः स्वभेदेन बलप्राप्त्या तथापरे । ययुस्त्रासत्रिसञ्चलमज्ञातान्योन्यनिश्चयाः ।
अत्रान्तरे नभस्युल्का सायं दीप्तोदभूत् स्फुटं । उदीच्या दक्षिणां याता प्रज्वलद्दृक्मस्तका । २१५
दृष्ट्वा तामद्भुतां सर्व्वे सैन्ययोरुभयोरपि । सङ्ग्रामाशङ्किताभिष्टावभूवुर्भयविह्वलाः ।
अत्रान्तरे सैदसैन्यैः प्रेरितो देशलिप्सया । तत्तारखानोऽप्यरजत्तो हब्बं पुष्कलं बलं ।
प्राप्ताः शस्त्रगलस्थानं तुरुष्कास्तु सुदुष्कराः । हभाभोडनराजाद्यैः शालयैः शलभा इव ।
कालीधारापदेशेन काली भगवती क्रुधा । व्यधात्तद्भक्षणं नूनं सतीदेशहितेच्छया ।
आदामखानजस्तस्मै विरुज्य इति चोदितः । निवर्त्य तं तुरुष्कः स स्वान्तिके समरक्षत । २२०
तदीयाश्वपदार्थौघप्राप्त्या तद्देशवासिभिः । अनन्यसुलभां प्राप्य श्रियं वैश्रवणायितं ।
अथ काश्मीरिकाः श्रुत्वा तद्वधं वाद्यवादनं । चक्रुर्य्येनाभवन् सैदा विच्छायवदनाः श्रुतेः ।
गतावशिष्टा दुर्न्निष्टदुष्टतत्कटकान्तरात् । सद्यद्दितथी तत्र शवानां निहिताभवत् ।
विशुद्धपार्ष्णिरन्ध्रकभयाः प्राप्तबलोद्धताः । काश्मीरिका मतश्चक्रूरणार्थं यत्नमानसाः ।

मध्ये ससैन्यास्तिष्ठन्तु मार्गमाद्याः पुरान्तरे । राजानकाद्या मद्राश्च स्वामस्था यान्तु दिग्द्वयं । ५२५
एकतस्संमिलिताः सर्व्वे नश्यन्त्वल्पबलाः पुनः । इत्येवमतनिष्ठास्ते सम्भूय कृतनिश्चयाः ।
स्वामार्थमादिशंल्लोकं स्वप्रदेशादुपर्य्यधः । नावा सिन्धुं प्रतीर्य्याथ जोनराजानकोद्भुते ।
स्वामस्थान् पञ्चषान् हत्वा पलायनपरान् व्यधात् । वल्लवाजितनुत्रादि हृत्वा सैदबलान्तरात् ।
काश्मीरिकाव्यभाव्यन्त प्रयाताः प्रतिवासरं । किमन्यत् स्फुटमेवाक्षि येऽवसन् सैदसन्निधौ ।
निर्लज्जास्ते व्यलप्स्यन्त काश्मीरिकबलान्तरे । दृतोयाति ततश्चेति लोकोऽविगतयन्त्रणः । ५३०
वाले राजनि मन्त्राज्ञे कोऽप्यजृम्भत विप्लवः । स्फेटेषु लुण्ठ्यमानेषु विटैर्व्विहितपेटकैः ।
निरुद्धमार्गसञ्चारो देशोऽभूद्भयविह्वलः । मासद्वये व्यतीतेऽपि पारावाररणार्थिनः ।
जिगीषां नात्यजंस्तत्र सैदाः काश्मीरिका अपि । पूर्व्वमङ्कुरितः सैदवधे पल्लवितः क्रमात् ।
परस्परं वैरतरुस्तदागाच्छतशाखतां । दक्षिणे राजकोशादि वामे सेनाद्यवेत्य च ।
बलद्वयेऽपि विजयः सन्दिग्धः प्रत्यभाद्विशां । पुंसां निरुद्धे सञ्चारे नावा नद्यास्तटद्वये । ५३५
स्त्रियएव तदाकुर्व्वन् पारावारगतागतं । पारानेत्य विटैर्लुब्धैर्मुषिते पथिकव्रजे ।
अधिष्ठानादिदेशेषु मार्गः प्रचलितोऽभवत् । पारावारगतान् कांश्चिदन्योन्यच्छलनोद्यतान् ।
निरुद्धः प्रत्यहं द्विषाः क्रोधाच्छूलेऽध्यरोपयन् । अवोचन्नेकदा सैदा भटाः काश्मीरमन्त्रिणः ।
आयान्तु यदि शक्तिर्व्वा युध्यन्तु पुनरप्यलं । सीमा वा दीयतां तावत् प्रतीचाभो रणं प्रति ।
नित्यं जनवधे लोका उद्विग्नाः शरवर्षणैः । भजतां विभवं सोऽत्र जिघिर्य्यस्मै प्रयच्छति । ५४०
निश्चस्येति पुरप्रान्ते सीमार्थं वामपार्श्वगैः । चिच्छिदुः सन्धिता रज्जुं तूर्णं सैदभटास्तटात् ।
तितीर्षुर्वैरिणो ज्ञात्वा सैदाः काष्ठीलतस्ततः । न्यधुर्हसनराजानकदीन् स्वामार्थमाकुलाः ।
छिन्नेषु सेतुबन्धेषु सैदैर्नौपुरकादिषु । नगरीं दुर्गमां दुर्गतुल्यां चक्रुर्द्विषद्भयात् ।
अथ काश्मीरिकाः प्रोचुः सैदांस्तीरान्तिकस्थितान् । नौसेतुबन्धरज्जुर्य्यद्वत्तच्छिन्नोभयेन नः ।
पुरमाचावधिष्ठत्वादुत्तिष्ठध्वं कियच्चिरं । पर्य्याप्तं भुज्यते धान्यं किं कुरुध्वं पुनः पुरे । ५४५
श्रुत्वेति सैदास्तांस्तारमूचुरित्थं स्वसेवकैः । अन्नाभावाद्भुभुक्षार्त्ता न चलामो भयादितः ।
का जुगुप्सा तुरुष्केषु सर्व्वमांसभुजो वयं । यावत् पुंपशुगोमांसपर्य्याप्तिस्तावदास्यते ।
पुनश्च क्रम्यतेऽस्मान् कः शक्तोरोद्धुं त्वदन्तरात् । श्रुत्वेत्युत्पलकास्तीरे ज्यालमल्लिकादयः ।
एकत्रमिलिताः सर्व्वे चक्रुः सम्भूय निश्चयं । सैन्यं स्वामविभागेन विभज्य पथिभिस्त्रिभिः ।
उत्तीर्य्य यामः शीर्य्यन्ति सैदाः कटकभेदतः । अन्यथैकत्र सम्बद्धा दुर्ज्जयाः सैदपन्नगाः । ५५०
एकतस्संमिलिताः सर्व्वान् जेष्यामोऽल्पबलानमून् । अस्माकं प्रबलं सर्व्वं न विलम्बोऽधुनोचितः ।
श्रुत्वेति मद्रसेयुक्ता जोनराजानकादयः । मृत्युर्व्वा नोजयो वेति युद्धसन्नद्धतां दधुः ।
अथैकं मतमाश्रित्य स्वामस्थाः सैन्यनायकाः । पुराणतक्षकस्नानात्तीर्त्वा पर्व्वतमासदन् ।
श्रीलभट्टादयो हस्तवालिकाख्यप्रदेशतः । नौभिस्तीर्णाष्टतोत्साहाः सोत्थेकान् स्वभटान् व्यधुः ।

दृष्ट्वा धैर्य्यं द्विजस्यापि रणाग्रेसरतः चणात्। गङ्गादयोभटाः सर्व्वे बभ्रुर्वीरमानिनः। २५५
अन्योन्यप्रहतिर्माभूदिति काश्मीरिकाभटाः। पञ्चशाखान्यधुर्मूर्ध्नि हन्तुं निजपरभ्रमं।
सैफडारादिवीरेषु प्रकयः कारगा बभुः। निर्गतास्तान् रिपून् हन्तुं मूर्त्तिमत्यद्दशान्तरात्।
तानुत्तीर्णान्समाकर्ण्य सैदाश्शङ्कितमानसाः। हासिमं व्यसृजंस्तूर्णं प्रागजयोद्धतमानसं।
सम्प्राप्तोऽभिरनायुर्यमठम्लीराध्वना व्रजन्। गिरिघट्टाग्रगतैर्दृष्टस्तैः शिलाभिरवार्य्यत।
तच्छिलावर्षणचलस्तुरङ्गात्पतितः चितौ। पदातिः स चलन् हन्त्राभिस्तीर्णैरगणसङ्कटात्। २६०
तदीयं तुरगं बद्धखड्गं मन्नाहभूषितं। काश्मीरिकाः करगतं मूर्त्तं जयमिवाग्रदन्।
तं पराभूतमालोक्य तद्युद्धार्थं भटान्वितान्। सैदाः पिहजखानादीन् रात्रावेव व्यसर्जयन्।
दुग्धाश्रमागतामेयाभाकिराद्यास्च तत्क्षणात्। वर्षाघाद्दत्र गर्ज्जन्तः प्रापुः पूपामठान्तिकं।
तावन्मद्रप्रतीहारडामराद्यामहाभटाः। सन्नद्धाः सुमनोवाटप्रदेशान्तं समाययन्।
सैदखानादयः सैदहोसनादिसमन्विताः। सैदानां सुभठास्चान्ये प्रापुस्तत्रैव ते प्रगे। २६५
करवालाः स्फुरज्ज्वाला बभुः श्यामलकान्तयः। भूपीडनादिव व्यालाः पातालविवरोद्गताः।
अथोदतिष्ठत्तुमुलः समरः सैन्ययोर्द्वयोः। सखड्गफलकचुद्रमद्रव्यूहसुदुस्सहः।
भोभोरास्त्रनयेऽत्र युध्यत मुदा मा यात पश्चादमी जेतारो यदि तद्भवन्ति सकलं सैदाः क्रुधा निर्घृणाः।
प्राप्तश्चेद्विजयः सुखं स्वविभवान् स्वर्गेऽपि तच्चेन्मृता युद्धादाविति मद्रपः सपरशुः काश्मीरिकानब्रवीत्।
पूर्व्वं पिहजखानोऽग्रे निर्ययौ रणगर्व्वितः। तं पिहजप्रतीहारो रामोराममिवाभ्यगात्।
अनभिज्ञतया युद्धे स्फुरन्तं वीक्ष्य तं द्रुतं। स्वभटान् प्रेरयन्मद्रास्तत्तुरङ्गखुरच्छिदे। २७०
खड्गछत्तखुगश्चोद्यत्प्लुतिनष्टरणक्रियं। गङ्गाद्याः प्राहरन्सर्व्वे शस्त्रा शक्तिसमन्वितं।
तद्भृत्याः शाहिभङ्गीया भ्रमरा इव सारवाः। ददंशुः कटकं क्रुद्धाः स्फुरन्तः शस्त्रकण्टकैः।
पतितं सम्मुखं दृष्ट्वा तं काश्मीरारणाङ्गने। जयोऽद्य वर्त्ततेऽस्माकमित्युक्तोत्साहमादधुः।
व्याहन्यमानाः काश्मीरैः भटैर्मद्रसमन्वितैः। भृत्यास्ते शाहिभङ्गीयाः छत्यै सलोचितं दधुः।
एहि तिष्ठात्र युध्यस्व क गच्छस्यधुना मम। इत्यन्योन्यं भटास्तत्रातर्जयन् रणगर्व्विताः। २७५
काश्मीरपृष्ठगः सूर्य्यः खड्गान्तप्रतिविम्बितः। जयोऽद्य युष्मास्वित्येव वक्तुं व्योम्नोऽवतीर्णवान्।
अहम्पूर्व्विकया सर्व्वे ते वीरभ्रभरास्तदा। रणोद्याने स्फुटश्चेतर्यशःकुसुमलम्पटाः।
तद्रणाङ्गनरङ्गान्तःसङ्गतास्ते भटानटाः। खड्गदण्डविभङ्गाढ्या नाट्यभङ्गिमदर्शयन्।
ज्यहाङ्गिराद्यास्तद्भृत्याः प्रविष्टाः सम्मुखे रणे। विधाय युद्धं सच्छूरावीरवृन्दा विचकिरे।
ववर्ष शरधाराभिः ससैन्यकटकाम्बुदः। स्फुरत्खड्गलतडिज्ज्योतिर्युक्तोगभ्मीरगर्ज्जितः। २८०
सैदेषु भाकरस्तत्र सम्मुखस्थविभाकरः। शौर्य्यशोभाकरः प्रापदये भाःकरवालभृत्।
खड्गन्तुङ्गतुरङ्गस्थोरणरङ्गान्तरे स्फुरन्। सोऽङ्गहारसमासङ्गोनाट्यभङ्गिमदर्शयत्।
प्रहारविच्छतं सर्व्वे मिलित्वापि रणान्तरे। शकुसन्नाहितास्वस्थं चिरात् पातयितुं चितौ।

द्विषान् हत्वा भटान्वीरो वीक्षितः श्लाघ्यविक्रमः । अभजद्वीरशय्यां स रक्तस्पन्दोत्तरच्छदां ।
येषां प्राणपरित्यागे निश्चयं बध्नतामपि । रणयोग्येक्षणोपेक्षा नास्ति किन्तैः पशूपमैः । २८५
सैद्धोषनमुख्यास्ते काश्मीरास्तैरुपप्लगाः । भाकरादीन् हतान् दृष्ट्वा रणं त्यक्त्वा पलायिताः ।
ततः काश्मीरसेनान्या वात्ययेव तटद्रुमाः । भग्नास्तत्पीडनिःसृता भृत्याः ग्रावाद्रवाहताः ।
न खड्गी न हयारोहो न चापी न च शक्तिमान् । व्यावृत्य प्रेक्षितुं कश्चिच्छायकद्विद्रुतान् बलात् ।
हठलुण्ठितविध्वस्तास्तमसास्ते विरोधिनः । दृष्ट्वारूढानपि भ्रान्ताः प्रापुस्ते नगरान्तरं ।
आसमुद्रमठात्पूर्वाधिष्ठानान्तं निरम्बराः । मार्गेष्वभ्रमगण्डोषाद्रवासन्निहिताः शवाः । २९०
केचित् कुल्यान्तरे मग्ना भग्नाः केऽपि रणान्तरे । केचित् प्रमुषितानग्नाभयोद्विग्नाद्दिशोऽचलन् ।
तद्वीरावयवैः कृत्तैः पूरिता विपुलैर्मही । तद्भागार्थं प्रवृत्तस्य मृत्योरिव महानसः ।
ये सुन्दराविपुलभोगपुरन्दराभास्तेर्नरेन्द्रविभवप्रथितप्रपञ्चाः ।
नग्नान् विलोक्य भुवि तान् धृतदुष्टगन्धान् कस्यापि शाम्यति न देहभवोऽभिमानः ।
वरं मरणमेवास्तु रणे स्वर्गसुखप्रदं । न सहेऽद्यतनस्वामिदृष्टिपाताक्षाकदर्थनाः ।
इत्युक्त्वा प्रविशन् युद्धे धीराश्वस्तोऽप्यकातरः । इभेभमेरः शस्त्रेण स श्लाघ्यमरणोऽभवत् । २९५
अन्यान् प्रचलितान् दृष्ट्वापीक्षितायासवैरिणः । पलायनेच्छा नैवाभूद्युयुत्सोर्यस्य मानसे ।
छिन्नाङ्गुलिकरोऽप्यश्वमारुह्य स्वसभान्वितः । अकरोत् क्षणमात्रं यः शस्त्रप्रहरणं रणे ।
श्यामस्थितः पुरस्यान्ते स राजानकहस्सनः । हतस्तैरागभेराद्यैर्मारीकुल्यातटान्तगः ।
प्रच्छिन्नाङ्गुलिहस्तेन समस्य शिरोभटैः । नीत्वा व्यदर्शि दर्पार्थं मार्गेशादिसभान्तरे ।
क्षिमाकारनिकारेण कुर्वन्नस्यान्यपार्त्क्रियां । इत्युक्त्वास्ते स मार्गेशः शवमुक्तिमकारयत् । ३००
योऽभूच्चिरं नृपगृहेऽखिलमन्त्रिवर्यो धूर्यः पदेषु विभवोचितदानमानः ।
शोच्यां दशामितरवत् स गतः किलान्ते धिग्वासनां भविषु शाम्यति या न भोगैः ।
स चेत्प्राप्तखलीकारस्तिष्ठेत् स सद्मनि शमी । सर्वामन्त्रिगणस्तस्य भवेच्चाटुपरोन किं ।
पुनर्विभवलोभेन सैदपार्श्वं समाश्रयन् । आमात्यकम्पनेशाधिकारितां प्रार्थयन्निजां ।
अज्ञातदैवहस्तान्तोययौ लोकेषु हास्यतां । अथवा नाशकाले स्याद्बुद्धिः कुपथगामिनी ।
कुर्वन्ति ये परशरीरनिकारमाजौ दर्पान्धलोचनयुगाः स्वविचारवाह्याः । ३०५
ते प्राप्नुवन्ति वधमाशु तथा यथामी लोकावदन्ति नरकोचितएष मर्त्यः ।
धिग्धिग्घिभतखानन्तं वीरंमन्योऽपि धारणात् । निर्गत्य सभयः प्राप्तः फखुवाविषयान्तरं ।
त्यक्तोत्तुङ्गतुरङ्गः स निःशस्त्रिर्भूतकोज्झितः । तत्र प्राकृतवेषेण जुगोप स्वं भयादटन् ।
क्रुद्धैर्दोवादमार्गेशबधात् मार्गपतेर्भटैः । स चौरइव बाध्यमानोऽप्यात्तशिरोऽभवत् ।
छित्त्वात्तमाङ्गमस्याशु निर्युर्मन्युनिवृत्तये । मृतमार्गेशपुत्रस्य शवाराचिकर्ता भटाः ।
स चेत् पलायितः सैदशिविरं प्राप्नुयान्निजि । तदन्तर्ज्जीवरक्षा स्यात् सुबुद्धिः पापिनां कुतः । ३१०

तद्भृत्यैर्लुण्ठितादेशो गोवधोऽथत्पुरे कृतः। जाने भृत्यापराधेन प्राप्तास्ते तादृशीं दशां ।
दौहित्रोऽपि महीभर्त्तुर्ज्जातो वीरकुलादपि । तत्पापेनाभवत्तस्य चित्तं वीररसोज्झितं ।
विप्रा राजसुताः सैदाः काश्मीरा अपरेऽपि ये । सहस्रसङ्ख्याः समरे तद्दिने प्रलयं ययुः ।
निहतानीकसुभटसमूहान्तरलक्षितान् । भूमिदाहाय निष्कष्टुं नाभूत् कस्यापि पौरुषं ।
ये सर्व्वचन्द्राः पीनाङ्गा भोगैर्मण्डलवर्द्धिताः । याता घर्म्मात्यदुर्गन्धास्ते श्वशायसभोज्यतां । ३१५
रक्ताक्तकर्त्तरीशक्तिमुद्गरद्रुघनादिभिः । शाल्मलिद्रुमवत् पुष्पैर्बभुर्युद्धगता भटाः ।
स्मृत्वा रुद्रविहाराग्निदाहं सैदक्षतं क्रुधा । अलाभपुरदाहाय मार्गपोऽग्निमदापयत ।
ज्वालाजालकरालोऽसावग्निर्व्वैश्मास्मदारुणः । अलाभदीननगरं दग्धारण्यमिवाकरोत् ।
श्रीमत्सदहमादानखानगारोदितानलः । राजप्रजापचारोत्थतत्क्रोधाग्निरिवाद्युतत् ।
हतेषु भाकरारेषु पलाय्यान्येषु यात्स्वपि । विदधन्नगरे लुण्ठं तद्भृत्याः श्वपचादयः । ३२०
आसन् जन्मदरिद्रा ये ते महाढ्यत्वमाययुः । सदैवाढ्यादरिद्रत्वमुत्पिञ्जापसवे तदा ।
केचिच्छवान्विचिन्वन्तो यत्र कुत्रापि तिष्ठतः । प्रीतिं प्रापैस्तदीयार्थैर्ययुः कापालिका इव ।
विरुद्धमज्ञयापूर्णगृहलुण्ठविधायिनां । अभूत् परस्परं युद्धं सभांसास्थि शुनामिव ।
आदावेकेन यन्नीतं तस्मादन्येन तद्धृतं । तस्मादप्यपरेणेत्थं मात्स्यान्यायइवोत्थितः ।
द्विधा जयप्रवाहोऽयस्तदाहिन्योरभूत् पुरा । एकतार्थागमात् सोऽत्र शाख्युन्मूलनमातनोत् । ३२५
आढ्यान् द्विजवणिक्प्रायान् पौरान्नित्यसुखोर्ज्जितान् । मुष्णन्तस्तद्भटाश्चक्रुर्दरिद्रान् दुःखभागिनः ।
दारुणाश्मचयात्तत्तद्वस्तुनाशाचितान्यपि । पौराणां समदह्यन्त सदनानि मनांसि च ।
नगरान्तः कुलीनानां पुण्याः कन्याश्च योषितः । विटाः केऽप्यधमाश्चक्रुर्हठसम्भोगदूषिताः ।
व्यधायि यत्र निर्म्माणं कल्पान्तस्थिरताशया । कोटिकोटिधनं दत्वा दग्धं सद्मस्मपादगात् ।
आसदन् केऽपि केऽप्युत्सैरनदन् केऽप्यलुण्ठयन् । दस्युवोदच्चिणं पारे चौवाइव जयोद्धताः । ३३०
न शोधुचषकोऽप्यास्त येषामुत्सवतर्पणे । सहस्रसङ्ख्याः कुम्भानामम्भोवन्नगराद्धृताः ।
केचिद्बन्धुवियोगार्त्ताः केचित् सञ्चयवञ्चिताः । विरुद्धत्वकृताक्षेपाजितरुद्धभुवः परे ।
बहवो दुःखिताश्चेरुः शतेकोये ऽभवत् सुखी । तत्तद्रणविपक्षेशु यतैः प्रेतैः स्ववेश्मनि ।
उच्चावचैर्जनैः सार्द्धं सहस्रदितयी मृता ।
इत्थं षष्टितमे वर्षे श्रावणप्रतिपद्दिने । एकान्तविजयात्तेषां तत्तल्लोकक्षयोऽभवत् ।
पूर्व्वमङ्कुरितः सैदवधात् पल्लवितः क्रमात् । परस्परं वैरतरुस्तद्दिने फलितोऽभवत् । ३३५
पौराणां वीरवर्गः प्रतिदिनमहरत् सञ्चयं वञ्चयित्वा दुःस्थावस्थः समस्तः क्षयिफलक्षतिभागास्त वास्तव्यलोकः ।
उच्छेदस्याद्बवाटावनिसफलतरुच्छिन्नलनार्थं दुरन्तः सैदैधात् समुत्थः प्रवरवरपुरोपप्लवोऽभूत् समन्तात् ।
अत्रान्तरे वधं श्रुत्वा सैदाः काश्मीरिकैर्ज्जिताः । आलिखानमुखास्तस्थुर्दाससमानावशेषिणः ।
दिवान्निहत्य नगरे निवृत्तः सैदभावतः । भयान्महम्मदः प्रापत्तावत्स्वशिविरान्तरं ।

भाकरादीन् हतान् श्रुत्वा सैदाभीता अपि व्यधुः । द्विवासिहत्य नगरे पुनर्युद्धाय निश्चयं ।
पश्चात् प्रतीर्य्य मार्गेशोहन्यानसतद्रणोऽस्त्विह । इत्युक्ता ताजभट्टस्तान्निन्ये चासविसूचतां । ७४०
अस्मिन्नवसरे पारादागतो युक्तिपूर्व्वकं । सैदामादाय रावत्रः खालयन्नाभ्यसर्ज्जयत् ।
कृत्वा वालनृपे मन्त्रं सैदाभ्रपटलोज्झितं । पौरानानन्दयामास मन्त्रिणोमहतीयथा ।

दुर्य्योधनैकशरणाः कृतशल्ययोगाये धर्म्मजातिविरसाः कलिदत्तकर्णाः ।

अन्यायदृष्टिधृतराष्ट्रकृतावसादास्ते कौरवाइव रणे न जयं लभन्ते ।

राजधानीं समानीय नवां पद्मपुरान्तरात् । खानगाहं नवीचक्रुर्दग्धं श्रीनगरान्तरे ।
आभसैदस्मादामखानगाहोमदीतटे । पूर्णस्तत्पुण्यसम्भारस्तदाकारइवोत्थितः । ७४५
सर्व्वस्वमपहृत्याथ सैदास्ते सकुटुम्बकाः । मण्डलादालिखानाद्यानिरवास्यन्त मन्त्रिभिः ।
एकमत्येष्वमात्येषु काश्मीरेष्वविशङ्किताः । ययुः परशुरामाद्याः स्वदेशं प्राप्तसत्क्रियाः ।
शिशौ दत्त्वा राज्यं वयमिह भजामः सुखमिति व्यधुः स्वार्थं शिष्टागलितमतयः सैदपतयः ।
हतेष्वेवं तेषु प्रसभमभजन् मन्त्रिपदवीं परे तत्तज्जुष्टां विधिरिह वलीयान्न पुरुषः ।
सेयाहस्सनसामग्रीं नायामादिप्रमेयजां । व्यसालठक्कुरोऽगृह्णात्तत्पुत्रोलहरादिकं ।
गृहीत्वा वाङ्गिलं राष्ट्रं स्वकं मार्गेशमागतः । मसूयादिप्रमेयांस्ताभजत् श्रीमान् ज्यहाङ्गिरः । ७५०
मात्ताश्रमादिराष्ट्रेषु स्वाम्यभूत्सैफडामरः । अन्यास्च ग्रामसामग्रीं सोदरेषु यथोचितां ।
परिहासपुराधीशोजोनराजानकोऽभवत् । सैन्याधिकारनिर्द्दैन्यस्तातस्थोऽज्झितयन्त्रणः ।
एश्चाद्दिमस्य मार्गेशोद्वारपालाधिकारभाक् । चक्रे सैदादिभृत्यानां रक्षामक्षामपौरुषः ।
राज्ञोऽधिकारसामग्रीं भूमेर्द्रव्यावलीमिव । महाभूताइवामात्याः सम्भूय व्यदधुर्नवां ।
एकोमार्गपतेः पञ्चठक्कुरोडामरोऽपरः । राजानकीयोदीप्तास्ते सर्व्वग्रयइवाद्युतन् । ७५५
आत्मेव निष्क्रियः साक्षिमात्रं वालनृपेऽभवत् । सर्व्वं प्रकृतिनिष्पन्नं राज्यतन्त्रमभूत्तदा ।
विभजन्तोभुवं सर्व्वां यथेच्छं स्वेषु केवलं । अलेखयन्नृपं पत्रे साङ्कीकाराक्षरश्रयीं ।
कष्टप्रदाः प्रजानिष्ठादुष्टस्मृत्यविचेष्टिताः । यथेष्टं समचेष्टन्त स्पष्टास्तेऽरिष्टचेष्टया ।
स्वपक्षरक्षणे दक्षाः परपक्षेष्टखण्डनाः । तार्किकाइव ते तस्थुर्भिन्नवण्डावादशिक्षिताः ।
मण्डलं तापयन्ति स्म सर्व्वं तीर्णकरानके । कल्पान्तकाले भुवनं द्वादशार्काइवोदिताः । ७६०
आक्रन्दितोल्कादाहैश्च भूरिभूकम्पसम्पदा । वेपमानोजनोजज्ञे प्रत्यासन्नमुपद्रवं ।
शिशौ नृपे व्यधुः पीडां विशाश्चैतन्नियोगिनः । आमयाइव देहानां वार्द्धके शक्तिवर्ज्जिते ।

नृपतेर्यदि मत्सरात् सहाया रचयन्ति प्रबला मिथो विरोधं ।

कुपिताइव धातवः शरीरं क्षपयन्ति प्रसभं महद्धि राज्यं ।

ये सर्व्वंकषदृक्तासीक्ष्णाः परेषां छिद्रकारिणः । करभाणामिवैतेषां ते तेऽप्यासन्नतिप्रियाः ।
पैशुन्योपायनाह्नेदं नयद्भिः प्रतिवासरं । चाक्रिकैः कृतसञ्चारैर्वैरं प्रौढिमनीयत । ७६५

उक्तं यच्चैव केनापि स्वबुद्ध्या परिकल्पितं । तेषां तद्भृत्यपैशुन्यं स्वच्छं काव्यमिवाभवत् ।
इत्थं मन्त्रिपदादभ्रंशैश्चान्योन्यविस्मिताः । तद्भृत्यपैशुनाभ्यासैर्मालिन्यमभजन्त ते ।
अथ मार्गपते स्वपदवीं प्राक् क्रमागतां । नासहन्तापरे रम्यां चक्रवाका इवेन्दवीं ।
इत्थाभिर्हताः सदीयद्रोह्या विद्रुतोऽप्ययं । नृपस्यास्य सभाध्यक्षः स्थापितः कुरुते मदं ।
इत्यादि प्रार्थकस्तद्भृत्यवर्गान्मार्गपतिस्ततः । माटस्थ्यं राजकार्य्येषु विरक्तः सोऽभजद्रुषा । १७०
वद्धामस्थाननयनोत्पाटनेन निजं वपुः । विश्रामनाशिषां पात्रं जोनराजानकोऽनयत् ।
प्रस्थाधिपत्यानौचित्यनिग्रहानुग्रहक्रमैः । ग्रहाणामिव तेषां स क्रूरो राहुरिवाभवत् ।
कुन्दानकादिदेशस्थग्राम्याणामनियन्त्रणः । लोद्रभूम्यपहारेण तद्देशेशोऽपि सोऽभवत् ।
भेदद्वैधान्तरे लब्धैः सर्व्वत्र मुषितप्रजः । तत्पदार्थैर्गृहे पूर्णां कोष्ठागारावलीं व्यधात् ।
यत्कष्टेनार्जितं लोकैर्बलात्कारहृतं धृतं । स्वं ब्रह्मदेयमिति यत्परस्वं वेत्ति लुब्धधीः । १७५
समुद्र वाहिनीः सर्व्वास्तदीयाहृतजीवनैः । चौर्वाग्निरिव तृप्तोऽसौ न बभूव कदाचन ।
देशान्निरर्थकाक्षेपे ग्रामे वा नगरान्तरे । नाशकद्रक्षितुं कश्चिद्बलिना तेन पीडितं ।
यदि धर्म्मधिया कश्चित् प्रवृत्तो दीनरक्षणे । स तन्महत्तरै राजसदस्याप खलीकृतिं ।
स्वप्रमेयेषु वास्तव्यांल्लुब्धान्निरपराधिनः । अन्येऽपि पीडयामासुर्गोगादत्र नियोगिनः ।

राजा शिशुर्गतवयाश्च हवत्सहायाश्चातिमत्सरभृताश्च मिथः स्वतन्त्राः ।

राज्याङ्गभङ्गमसमं नृपतेर्दिशन्तस्तत्राचिरात् समुदयन्ति न के ह्यनर्थाः । १८०
अत्रान्तरे बाह्यदेशे याचार्थं यौ विसर्ज्जितौ । एद्राजानकहक्कुराह्वदश्चापतुः पुरं ।
तद्दर्शनापदेशेन श्रुत्वा किमपि मन्त्रिणां । नगरे नागमद्भूतैर्मार्गेशः शङ्कितो भृशं ।
ससैफडामरेणाशु गत्वा स चकितो गृहे । वैदेशिकभटाज्ञानात् साशङ्कः सोऽनयन्निशां ।
शङ्कितेषु सदनाशेषु प्रातस्तन्मतमास्थितः । अह्मदहक्कुरो जोनराजानकमथावधीत् ।
शस्त्रव्रणमुखोद्गच्छद्रक्तसंसिक्तमण्डपं । तद्गृहे तं शवं दृष्ट्वा न कोऽरोमाञ्चितोऽभवत् । १८५
दत्तकन्यमथ अन्यमवधीद्गृहमागतं । दिव्यं कृत्वापि साश्वस्तं धिग्भोगाभ्यासवासनां ।
मिथोऽसहिष्णवोभेदान् मन्त्रिणः प्रभविष्णवः । विनश्यन्त्यचिरेणैवं द्रोहिणोत्यपि केचन ।
केऽप्यूचुः स यथा सैदानवधीन्मरपैः सह । वर्षेणैकेन तत्पापात्तद्वद्यापादितोऽरिभिः ।
भृत्यावृद्ध्यैव रक्षन्ते पोषिताये सहस्रशः । नैकोऽपि तेभ्यस्तस्यान्ते प्राणत्राणक्षमोऽभवत् ।
अर्जितं यद्यथैवाशु तत्तथैव हृतं परैः । न तिष्ठन्ति चिरं गेहेष्वन्यायोपार्जिताः श्रियः । १९०
पापं पुण्यं बलं दार्ढ्यं परं स्वं दूषणं स्तुतिं । नो वेत्ति राजपुरुषः कदाचिद्विधुरे विधे ।
वैदेशिकभटैः किं नस्त्याज्या सैन्याधिकारिता । इत्युक्तोऽपि स पुत्रेण नायच्छीघ्राग्र्यवर्जितः ।
विपरीता मतिः पुत्रे विश्वासः परसेवके । जायते गतभाग्यानां विनाशे प्रत्युपस्थिते ।
वैदेशिकभटान्सोने यत्प्रजातोनिरान्वहं । अत्रत्यान् मन्त्रिणो वीरान्सेने भोक्तृन् परानिव ।

स सैफडामरोवीरवरस्तस्यौर्थ्यशङ्कितः। भीतः समार्पिपत्तस्मै वीरवृत्तेर्न निश्चयः। ३९५
ज्यश्लालठक्कुरस्तावद्राजधान्यन्तरस्थितः। बद्धोऽन्तः खेदारपानैर्गतिः क विधुरे विधौ।
भास्वानपि प्रतिदिनं मृदुतोष्णताभिरस्तां तां स्थिर्भर्त्ति गगनान्तरगोऽप्यवस्थां।
नित्याकुलस्य मनुजस्य बलप्रभावे कोनिश्चयो भवति तत्र विचित्रवृत्तौ।
मसोदडामराद्यास्ते छिन्नैनोसेतुबन्धनाः। प्राग्वत्ते जालद्रगडे विदधुः सैन्यसङ्गृहं।
शृङ्गारसोफनिकटं ययुः शूरपुराध्वना। ठक्कुरास्तालिथाद्यास्ते ऽप्यसक्ताः स्वयमागताः।
कारागारान्तरं प्रापुः कस्य स्युः सम्पदः स्थिराः।
जेराकनामा तद्भृत्यः साहसी नगरान्तरात्। ठक्कुराश्वादतुरगान् हृत्वा राजपुरीं ययौ। ४००
इत्थं तत्सैन्यबधतोजोनराजबधोऽधिकः। पाददाहादिवासश्लोगलरोगोऽप्ययावहः।
यावन्नरस्त्यजतिकार्य्यकृदेकचिन्तां चिन्तान्तरं सृजति तावदमुष्य धाता।
याते क्षयमपि शशिनः किल पूर्णिमासौ संजायते द्युतिहरोग्रहणप्रचारः।
निष्प्रतिद्वन्द्वि निश्चिन्त्यं मार्गेशोयावदाप सः। तावच्छुश्राव सम्प्राप्तं पुत्त्रमादमखानजं।
स यथाभ्यन्तरं प्राप्तोयथा राज्यं गृहीतवान्। वाल्यात्प्रभृति वृत्तान्तं तत्खानस्य ब्रवीम्यहं।
पितुः श्रीजैननृपतेः प्रमये निर्गतोवहिः। आदमखानोविनाशः प्रपेदे मद्रमण्डलं। ४०५
भावीश्वरांशतैश्वर्य्यप्राप्तिसूचकपर्व्वणि। शिवरात्र्यन्तरे तस्य तत्रस्थस्य सुतोऽजनि।
जनकेऽस्य दिवं याते तुरुष्कसमरान्तरे। मातामहगृहे चन्द्रोवद्दुग्धेऽम्बुनिधाविव।
काले तात्तारखानेन रक्षितः स गतः स्वयं। जालन्धरमहीपीठे निनाय कतिचित् समाः।
ज्यहांगिरोऽस्य मार्गेशः सैदभीत्या गतोवहिः। सोपधिं व्यसृजत्तस्य धर्त्तुं पैतामहं पदं।
तात्तारखानप्रमये ततः खानमिमं पुनः। सुतोहस्सनखानोऽस्य कश्चित्कालमपालयत्। ४१०
तुरुष्कान् वञ्चयित्वाथ विहितोत्साहसाहसः। खानोऽमितपरीवारः प्रापद्गृहगमण्डलं।
दूतः काश्मीरिकादूतामार्गेशेन विसर्जिताः। शृङ्गारसीहेनानीतस्तावद्राजपुरीम्प्रति।
ततोराजपुरीनाथोमार्गेशद्वेषनिष्ठितः। फताहखानमानिन्ये स्वान्तिकं स्वाश्रयेच्छया।
जोनराजानकबधात् कश्मीरेभ्योविनिर्गतैः। डामरैर्धराजानठक्कुरदौलतादिभिः।
तत्रस्थैः शिश्रिये खानस्तरुर्मधुकरैरिव। प्रथां निन्ये यथा पूर्व्वं वुध्येदेवात्मजोऽभवत्। ४१५
यौनसम्बन्धबद्धोऽपि मार्गरक्षाधिकारभाक्। मसोदनायकः सोऽपि ख नपक्षं समाश्रयत्।
दीनोयाम्यजनोदृष्टवक्रनायकतार्दितः। तदागमनवार्त्तां तां चते चारमित्राविदत्।
सापराधर्णिकन्यायप्रेष्यवद्दुद्रुवुर्वका:। चौराविटादवद्राश्च तुतुषुः खानवार्त्तया।
ग्रामे वा नगरे वापि त्यक्ता गृहकुटुम्बकं। बद्धाशो राजविभवे न कः प्राप तदन्तिकं।
तांस्तान् देशादिनिर्य्यातान् खानोऽग्रहीत् समृद्धिमान्। श्रीच्छलब्धप्रतिष्ठः स राज्ञः प्रत्यभियोगितां। ४२०
पौत्रश्रीजैननृपतर्य्योग्योऽयमिति सर्व्वतः। त्यक्ताम्यान् सर्व्वराष्ट्रेभ्यस्तमेवाशिश्रियज्जनः।

तद्वार्त्ताश्रवणात्तुष्टाश्चौराद्याश्छन्नमास्थिताः। तत्कालमुत्प्लवन्ति स्म मत्स्या इव तडागगाः॥
न मम महती सेनैकोऽरिर्ज्जितोऽस्त्यपरो महान् क्षितिरतिबलैरुद्धा भिन्नाः परेश्वरसेवकाः।
स वरतुरगोऽस्वस्थः कोशे न चाधिकृतो हितस्तरुमिव घुणास्तास्ताश्चिन्तास्तुदन्ति विभुं न कं।
तुष्टोऽप्यहाङ्गिरस्तावत्तत्प्राप्त्या प्रेषितोपधिः। तावत्तन्मतगं ज्ञात्वा स खिन्नः समपद्यत। ४२५
अहितोन्मूलनोद्भूतदेशैकविभवान्वितः। सुखेच्छुः प्रत्युत प्रापद्दुःखमुद्भूतविप्लवः।
प्रवर्द्धमानया नित्यं खानागमनवार्त्तया। वेपमानोऽभवच्छोकवात्ययेव वनावलिः।
चाक्रिकास्तुरगाः खानमन्त्रिणोऽथ जिगीषवः। इत्थं लेखाङ्कितं दूतं व्यसृजन् मार्गपं प्रति।
भोभो मार्गपते गर्व्वसर्व्वखर्व्वितविक्रमः। कश्मीरान्तः सुपर्व्वेव भवांश्चर्व्वितसद्यशाः।
सोऽयं खानस्त्वया नीतो लेखैस्तैरुग्रकदेशतः। उपेक्ष्यते कुलस्वामी कथं मार्गपतेऽधुना। ४३०
स्वयं कृतं कथं कार्य्यं पश्चात्तापाय जायते। शिशो राज्यं परित्याज्य भुज्यते मण्डलं परैः।
व्यवहारोचितः प्रौढः सोऽयं किं तिष्ठते वहिः। अथवा पितृभागञ्चेत् प्रयच्छस्यस्य मण्डलात्।
वहिरेवास्त्वयं राजाप्ययमस्त्वन्तरे स्थितः। अथ किं बहुनोक्तेन मान्योऽयं यदि न तेऽस्त्वयं।
रणोद्भयबलवधात्पापं ते परिणंस्यति। श्रुत्वेति लेखं मार्गेशः खानदूतोपदर्शितं।
प्रत्युत्तरमयं पत्रं तस्मै दत्वाब्रवीदिति। भोभो मण्डलगोप्तारो भोक्तारो नृपसम्पदां। ४३५
सर्व्वथा हितकर्त्तारः पुराणोक्तं विचार्य्यतां। कश्मीरा पार्व्वती तत्र राजा ज्ञेयः शिवांशजः।
नावज्ञेयः स दुष्टोऽपि विदुषा भूतिमिच्छता। देशेऽस्मिंस्तपसा राज्यं प्राप्यते न पराक्रमैः।
अन्यथादमखानाद्यैः किं नाप्तं स्वक्रमोचितं। अन्यथाप्येतन्न चिरादनौचित्यचितं फलं।
क्रमेण येनायातोऽसौ तं त्यक्त्वा तद्बलार्थिनः। सति राज्यस्य विज्ञाय प्रवेशो दीयते कथं।
न मयायं धृतो राज्ये बालोऽप्यन्याभिषेचितः। कः शक्तोऽत्यधुना हन्तुं मयि सन्निहिते स्थिते। ४४०
खानोऽयं सर्व्वथा पूज्यो यद्यस्मन्मतमिच्छति। अग्रेसरारुणः सूर्य्यः पूज्यते ह्युदयोन्मुखः।
श्रियः कृतघ्नतावाप्ता न सुखाय चिरं नृणां। भोगारोगाय देहानामपथ्याशनसम्भृतः।
किं वान्यत् सेदहस्त्योयदद्राजा विमोचितः। तदसङ्गतगः सोऽयं प्राप्यते तद्विधेर्मतं।
इति लेखं विसृज्यैत्पक्षपातात् क्रुधान्वितः। रथ्याधिकारं जग्राह मसोदस्य अहाङ्गिरः।
वहामसायकादीनां दत्वा तन्मार्गरक्षणं। शृङ्गारराजानकादीन् खानार्थं व्यसृजद्द्रुतं। ४४५
अथ खानं पुरस्कृत्य नायकोऽसुखदायकः। क्रुद्धः पथोपहरणात् प्रापच्छूरपुरान्तरं।
तद्भृत्याः खशडोम्बाद्यास्तद्दिष्टाः पदे पदे। देशं मण्डराज्यान्तश्चक्रुरुत्पिञ्जमञ्जसा।
एकतो नृपतेः सेना कष्टा खानस्य चान्यतः। दंष्ट्राद्वयीयमस्येव लक्षिता सर्व्वभक्षिका।
प्राक् सेदविप्लवात् खानविप्लवः सोऽधिकोऽभवत्। पाददाहादिवामस्त्रोगलरोगो व्यथावहः।
तस्कराक्रान्तपथिकोबलवन्निहताबलः। अराजकद्दवानीशो देशः कष्टां दशामगात्। ४५०
जग्मुर्दक्षिणपारादीन् प्रमेयांस्तद्दिगाश्रिताः। गृहीत्वा गोधनं सर्व्वं त्यक्त्वा स्वस्वसतीर्भयात्।

खेरीं चाष्टवनं राष्ट्रं भ्रष्टमश्रिश्रिखेव सा । अलापयन्महोशाख्या प्रविष्टा कटकद्वयी ।
राजसैन्यं समालोच्य प्रसुप्तं चारचक्षुषा । एकदा जेरकाद्यास्ते खास्कन्दं शिविरे ददुः ।
प्रजागरचरन्याससास्वाभ्यासविवर्ज्जिताः । सर्व्वे पशूपमास्तासादिदधुः शिविरान्तरात् ।
सेनापतेर्न्निजाः केऽपि युद्धादो भेदिताः परैः । चक्रुस्तत्कटकं त्यक्ता द्रोहं वैरिसमाश्रयात् । ४६५
राज्यं नश्यति क्षयति प्रतिदिनं वाद्याखसालोनका लोकः क्लिश्यति लुण्ठदाहकरणैश्चौरः स्वकं पश्यति ।
सेना भ्रश्यति धीरवीरसहितास्यन्विष्यति स्वं रिपुः काश्मीरप्रभविष्णुषु प्रभवति द्वेषात् स्वभेदो यदा ।
द्रोग्धंस्तानवलोक्यैव स्वसां शात्वा स्ववाहिनीं । सेनानीश्शकितः सैन्यात्पलायनपरोऽभवत् ।
हतेऽथ विद्रुते तस्मिन् पश्चादेत्य महाभटैः । सर्व्वस्वाप्या जहषाथ खानस्तत्प्रथमं जयात् ।
तुरुष्कदेशाद्युद्धा खानः प्राप्तोनिरर्गलः । सुभागसोहस्तत्पचात् केनापि प्रचलन् हतः ।
अथ मसशिलास्थाने तुष्टः खानो जयोन्मदः । स्वसैन्यसंग्रहं कुर्व्वन् जिगीषुः शिविरं व्यधात् । ४७०
विकरालान् भटान् चित्वा करालविषयावनौ । मुमुपुर्निष्करालस्थान् वास्तव्यांस्तस्य शस्त्रिणः ।
अत्रान्तरे मार्गपतिर्गृहीत्वा बालभूपतिं । तज्जयाय बलोद्युक्तो निर्य्ययौ नगरान्तरात् ।
प्राक् सैदकदनाभ्यस्तन्यस्तवस्तुविलुण्ठमाः । पुराद्दूरसमं भीताः पौरा ग्रामेषु न्यपर्चिपन् ।
निष्कृष्टवस्तुभावा सा मुषितेव वराङ्गना । अभवद्राजरहिता नगरी न गरीयसी ।
वैदेशिकटकाटोपकोपोत्कररटङ्कटः । गुषिकोङ्कारभूवाटे पाटवाच्छिविरं व्यधात् । ४७५
संस्थाप्य तत्र भूपालं त्रिधा कृत्वा स्ववाहिनीं । कल्याणपुरगं श्रुत्वा खानं योद्धुं विनिर्ययौ ।
द्राभग्रामान्तसीमान्ते ससामन्तोऽधिकारसधीः । तस्थौ खानान्तिकं प्राप्य सखानमरुगान्तरे ।
क्रमराज्यस्फुरत्प्राज्यचक्रवाटादिदुःसहं । वैदूर्य्यभट्टः पाश्चात्यां जयाह गिरिपद्धतीं ।
सपिर्व्वजप्रतीहाररक्कराजसुतादयः । चतुरङ्गोपमां लीलां चणं चक्रुः पुरोगताः ।
अथैकतः स्वकाश्मीरवैदेशिकबलान्विताः । ससैदनायकसुना योद्धुं व्यूहात्समाययुः । ४८०
फलकासिस्फुरत्पचा मदन्तोऽन्तिकमागताः । चेरुः पङ्क्त्या भटास्तत्र हंसा इव नभोऽन्तरे ।
यावत्प्रहर्तायोद्धुन्तांस्तावदोत्थाय समागतान् । षङ्गादठक्कुरव्यूहो निरोहः समपद्यत ।
सेलाङ्किकाभुजः केऽपि गर्जन्तो जलदा इव । स्फुरच्छस्त्रतडिज्ज्वालाः सोत्फाला निर्ययुर्म्मृधे ।
विषमा पङ्कसङ्कीर्णा जाड्यदुर्म्मार्गदूषिता । तेषामापततां साध्या वसनेव निजाजिभूः ।
वैदेशिकभटान् दृष्ट्वा नटत्खेटकपीटकान् । चटका इव जग्मुस्ते विदूरं पाटवोज्झिताः । ४८५
न संस्तम्भयितुं सेनामशकत्तां पलायिनीं । षङ्गादठक्कुरोद्दीर्णां सेतुभग्नां नदीमिव ।
अहमहमिकायातजातघातव्रणार्द्दिताः । प्राणत्यागेन ते केऽपि चक्रुश्चैतननिष्कृतिं ।
स्रवच्छोणितसिक्ताङ्गाः शालिचेत्रगताः शवाः । यागोपहारपशुतां ययुः कार्षिकभूमिषु ।
सेना खानस्य वात्येव सा नैर्ऋतदिगागता । तत्सलोकचयं चक्रे वेगभग्नभटद्रुमा ।
केऽपि काश्मीरिकास्तत्र वैदेशिकभटानले । शस्त्रज्वालावलीदीप्ते जुहुवुः श्रीफलं वपुः । ४९०

किं नामोदीरणैस्तेषां दृष्ट्वा व्यूहं समागतं । तिर्यग्भिरिव पातं स्वं भीत्या धैर्य्यैः पलायितुं ।
प्रमेयभाजोमुख्याये दृष्ट्वा राजसभान्तरे । अदृष्टपूर्व्वं संत्रासं तेऽप्यशास्त्रवदाययुः ।
वीरवृत्त्या त्यजन् प्राणान् केवलं श्लाघ्यतामगात् ।
तस्य त्रिचतुरास्त्यक्तप्राणाश्चानुचरा रणे । दिवं यियासोर्भीमार्थे बभूवुस्ते पुरःसराः ।
हतावशिष्टान् विद्राव्य ते खानस्य महाभटाः । निहत्तामार्गपत्यर्थे स्त्रीयभ्रान्त्या समाययुः ।
मसोदखानः कत्येवं वदन्तो विजयोद्यताः । वीराहस्सनमीराद्याश्चातामार्गपतेर्भटैः । ४८५
पश्चात्तस्य सम्बन्धिभृत्यास्ते नौरुजादयः । सैगारभट्टाश्चान्ये च हतामार्गपतेः पुरः ।
विमुखोऽभूत् कियत्कालं यः स साम्मुख्यमाययौ । बालभूभृत्प्रभावेण कश्मीरकटके विधिः ।
मार्गेशस्याथवा स्तुत्यं धैर्य्यं तस्यात्र संयुगे । सन्नद्धः सबलस्तस्थौ जयस्तम्भ इवाचलः ।
पैदकमात्र पश्चाच्चेद्गर्भिमत्यश्च तत्स्थलात् । काश्मीरकटकस्यास्य नावशिष्येत किञ्चन ।
भिन्नप्रकृतिसन्धानकौशलं श्रीजयहाङ्गिरे । भिषजीव तदा दृष्टं भेषज्यं सान्निपातिके । ४९०
प्रागल्भ्यमप्रतिहतं प्रतिभानमोजस्तत्तत्प्रयोगचतुरत्वमसंभ्रमश्च ।
एतानि यस्य समयेऽप्यतिसङ्कटे स्युस्तस्यैव तं प्रति समेति रणे जयश्रीः ।
खानोऽस्मत्करमाशोऽत्र मिथ्याहोद्याच संयुगे । रणात् प्रचलितान् दूरं युक्त्या सर्व्वानुपानयत् ।
मार्गेशमधुनान्निध्य तद्रणोपवनान्तरे । ते वीरभ्रमरास्तेरुः स्फुरत्पत्त्रशोद्धताः ।
अथ खानस्य शिविरं गङ्काद्याजयद्भदाः । नीतावशिष्टां सामग्रीं हत्वा भृगीमलुण्ठयन् ।
एभराहिममार्गेशः समन्दः ममरायगः । मसोदनायकमुखान् विमुखांस्तर्जनैर्व्यधात् । ४९५
अन्ये घटस्नारभीहाद्याद्दृष्ट्वा तत्सैन्यमद्भुतं । भेडावनपथात्तूर्णं विद्रुताः स्वां भुवं ययुः ।
सर्व्वं राजपुरीसैन्यं मद्रैन्यं वेष्टितं भटैः । दत्वाभयं ररक्षाजौ गङ्कोगणपतिस्तथा ।
त्यक्त्वा सन्नाहसामग्रीं केऽप्येते विद्रुताद्रुतं । मुषितः स खशैर्ग्राम्यैः पृष्ठलग्नाः प्रशान्तयः ।
वृत्तानपि वने जघ्नुरयोमु लगन्त्यमी । वैदेशिकैर्हतं यत्तद्ग्रामेषु जनपीडया ।
काश्मीरिकेभ्योमुषिता निक्षेपमिव ते दधुः ।
शीतज्वरार्दिताः केचित्केचित्क्रान्ता बुभुक्षया । वैदेशिकाश्च काश्मीराः शतसंख्याः क्षयं ययुः । ५००
संरूढं कमपि निपातयत्यकाण्डे पाताळं नयति च कञ्चन प्ररूढिं ।
सङ्कल्पाविषयविचित्रकाकतालीयाख्योघसर्गमिव पूरुषं विधाता ।
यादृक् सुवासरः खानस्तादृशस्तस्य चेष्टिताः । भवेयुः किं न जायेत किन्नु धर्मानुगो जयः ।
इत्थं फतहखानेऽस्मिन् प्राप्ते कश्मीरमण्डलं । एकषष्टितमे वर्षे पुरन्दरश्रावणान्तरे ।
कटकद्वयसंयोगे कल्याणपुरसन्निधौ । अनत्यागाच्च वाग्मानां तत्तल्लोकक्षयोऽभवत् ॥ युगलकं ॥
मैत्रचैत्रशनिसंयोगं मिलापं शनिजीवयोः । भीमाब्दे तत्क्षयं हेतुं दध्रे देवविदो विदुः । ५०५
श्रीजैननृपतेराज्ये षड्दर्शनरताः प्रजाः । दृष्टाः स्वधर्मनिरतानिरातङ्कानिरीतयः ।

तस्मिन् स्वर्गं गते राज्ञि नष्टाचारेऽत्र मण्डले। प्रजापचारालोकानां चयोऽभूदिति मे मतं।
तथाहि वणिजः केचित् स्वाचारं हिन्दुकोचितं। त्यक्त्वा पुरान्तरे चक्रुर्हत्वा गोमांसभक्षणं।
येनैव पितरो याता येन याताः पितामहाः। तद्वर्त्मनेऽत्र तत्पुत्रास्तत्पत्न्ये मौसुलप्रियाः।
प्रत्यब्दं तिथिकार्य्याणि पुराणोक्तानि कानिचित्। विस्मृतानि दुराचाराः कथं न स्युर्दुरापदः। ५१०
मण्डलेऽस्मिन् दुराचारचातुर्वर्ण्यविराजिते। प्रसङ्गपतिताचारविध्यौ(?)मा(?)हितोरितं।
राजाक्रान्तः परैर्म्मिथ्यावार्त्तयेति विसृज्जितः। मार्गेशस्ताजभट्टादीन् हत्वा स्वशिविरं ययौ।
पश्चाच्चेदलगिष्यत् स नष्टांस्तान् बलवर्जितान्। न किञ्चिद्वर्णयिष्येत खानस्य चलतः पथि।
मार्गानभिज्ञो मार्गेशः सर्व्वेऽप्युभयवेतनाः। दायाददुःस्थितिं लोके काङ्क्षन्तः स्वार्थलिप्सया।
प्रेरयंस्तद्रणाद्धन्तुं मार्गेशं चाप्यदीदरन्।
सनृपं सैन्यमुत्थाप्य ततोजिष्णुर्ज्येहाङ्गिरः। ज्यमालमहगास्थानं ययौ स विजयोर्जितः। ५१५
किमेते मिलिताः खानमिति तेन विसर्जिताः। ददाह ताजभट्टः स ग्रामान् माङ्गल्यनादगान्।
तत्तद्दग्धगृहोत्क्ष्वालधूमजालाकुलं नभः। घनकालोद्भवोद्दीप्ततडिद्भ्रोपमां दधौ।
कृतं यदा स्वदेशेषु काश्मीरैर्दिग्जयक्षणे। दाहलुण्ठनादिकं तद्दृष्टमत्रैव मण्डले।
अकिञ्चनान् जनान्स्मान् विश्वस्थे समुपागतान्। अचैर जातान् दृष्ट्वा तान् न कोऽप्याच्छादनं ददौ।
तत्रत्यास्तद्धृतं कुप्यं रूप्यं धेनूः पशूनपि। दृष्ट्वाप्त्ताशाकुलाश्रुकुराक्रन्दमुखरा दिशः। ५२०
सर्व्वस्वहरणं यद्वत् कृतमस्मास्वहेतुकं। युष्मास्वपि तथा भूयादचिरेण विरोधिभिः।
तत्पापफलमेतेषु त्रिषु तन्मरणक्षणं। फतहसाहराज्याप्तौ दृष्टं लोकैर्व्विगर्हितं।
उत्पिञ्जोत्पादनाद्देशे प्रवणमित्यादिदूषणं। प्रजापापादनन्त्विमुखोऽगेशः स न्यवर्त्तत।
सनृपो नगरं प्राप्तो विधाय विजयोत्सवं। उच्चावचान् खानपक्षगतान् सर्व्वानदण्डयत्।
एकं खानाग्रगं ज्ञात्वा श्रिष्टं तस्य कुटुम्बकं। अबाधत न को देहे दुष्टरोगद्रवोल्बणः। ५२५
कदाचित् सुप्रीतो जनयति सुखं सार्व्वजनिकं कदाचिद्रक्तोष्णः सृजति जनतामीतिचकितां।
फलक्षोभं चोभं भविषु परिवृत्त्या विदधतो ग्रहस्येवाकाशे गतिरिह विचित्रा बत विधेः।
कश्चित्कालं दरत्रस्तः खानस्त्राणविवर्जितः। ययावकिञ्चित्करतामवग्रहहतवाम्बुदः।
अत्रान्तरे स्थितः खानः सभैरवगलान्तरे। अचिन्तयत् पुनर्देशप्रवेशं नायकोर्जितः।
मासद्वयमतिक्रम्य कश्मीराभिमुखस्ततः। आययौ स पुनः खानः सचाणउङ्कटैर्भटैः। ५३०
तस्मिन् शूरपुरं प्राप्ते सनृपोऽथ ज्यहाङ्गिरः। निर्ययौ नगरात्पूर्णं सम्पूर्णः सैन्यसम्पदा।
प्राप्नवत् स गुसिकास्थाने निषण्णः शिविरान्तरात्। गङ्गराजसुतं राज्ञो सोऽप्रणोदिद्रुतं द्रुतं।
आरोहणक्षणे तस्य तुरङ्गस्तामसमग्रहीत्। क्षणं स प्रकुनभ्रोऽपि नातिष्ठन्निष्ठुरः क्रुधा।
गृहीतभूर्गिवित्तोऽपि यत्रैव द्रोहितामगात्। कोऽन्यस्तिष्ठति तत्रेति त्रस्तः प्रत्यागतोऽभवत्।
सुलभे निर्मितो भूयो मार्गेशः शिविरान्तरात्। उपायांश्चिन्तयाञ्चक्रे खानस्य बलभेदनं। ५३५

अत्रान्तरे शूरपुराज्जैरकाद्यामहाभटाः । प्रविश्य नगरं रात्रौ बन्धनस्थानमोचयन् ।
ते सर्व्वे बन्धनान्मृत्युदारादिव विनिर्गताः । सैफडामरमुख्यास्ते सम्प्रापुर्ज्जैनयेश्वरं ।
ससैफडामरः पूर्व्वं बन्धने स्वप्नमैक्षत । केनाप्येतत् पदद्वन्द्वं छिन्नं शस्त्रेण तन्निशि ।
वीरस्य बन्धनं श्वास स्फूर्जत्पक्षस्य रक्षणं । सोऽग्रणः पतितं मेने वह्नेर्भस्मावगूहनं ।
तथापि रक्षणं वह्नेरिव वस्त्रावगूहनं । जयापीडपुराद्दुर्गाद्बन्धनं नगरे कथं । ५४०
इत्यपायोऽप्युपायस्य जातो मार्गपतेर्य्यतः । एभ्यादिमः समार्गेशस्तावत्पश्चाद्विनिर्गतः ।
संघनायकमुख्यानां बहूनां कदनं व्यधात् । ठक्कुराह्लादजैराकप्रतीहाराभ्ययादयः ।
इत्थं तत्राहमं चक्रुर्लुण्ठितकोशपक्षयः ।

विपदि समनुभूय कोऽपि कष्टं भवति पदं नृपसम्पदां नितान्तं ।
कनकमनलपातघातमाप्तं शिरसि विभाति नृपस्य मौलिरूपं ।

कारापञ्जरनिर्मुक्तः पक्षीवाक्षतपक्षतिः । पुनर्जातमिवात्मानममन्यत स डामरः ।
पूर्व्वं जयपुरे दुर्गे योऽभूद्दद्भुः सहोदरः । काराप्राकारमुल्लङ्घ्य रज्ज्वैकोऽपि निर्गतः । ५४५
दद्भुः सुप्तः पुनर्ब्बद्धो नगरे बन्धनालये । निश्चिन्तितं वधस्तत्र दिष्टैर्दित्रिदिनान्तरे ।
एवं कष्टात्ततो मुक्तः प्राप्तः खानान्तिकं क्रमात् । प्रधानपुरुषाख्यातिं प्रापत्प्रकृतिमध्यगः ।
ससैफडामरस्तत्र यथामङ्गमतस्थितः ॥ कुलकं ॥
रामो रावणवञ्चितो यदि गृहान्नैवागमिष्यद्वनं सुग्रीवः स च वालिना हतपदो नैव घटिष्यद्रुषा ।
लङ्कां प्राप्य विर्णूज्ञहत्य समरे जेताभविष्यत् कथं संयोगं सुखदुःखयोः प्रतनुते धातैव भूत्यै द्वयोः ।
राज्यार्थी विच्युतो देशात् खानो वीराशिलम्पटः । डामरो मार्गपः क्रुद्धः सर्व्वनाशात् पदच्युतः ।
एवमन्योन्यसम्पर्कं नाभविष्यत् स्वयं यदि । प्रविश्य देशे राज्याप्तिः कथमस्य भविष्यति । ५५०

राजा विभाति बहुवीरसमाश्रयेण वीरा भजन्ति च तदाश्रयणेन शोभां ।
अन्योन्यसङ्गतिरभङ्गुरभङ्गिरेषां वालाङ्गनाकनकभूषणवद्दिनानि ।

तेन प्राप्तेन सा खानसभा तत्र व्यराजत । मुक्तालतेवाङ्गनाङ्के नायकेन गुरूपात्मना ।
अत्रान्तरे मार्गपतिश्चकितस्तत्समागमात् । सन्धित्सुर्मिलशाहाद्धिमुखं खानं व्यसर्जयत् ।
एधराजानकाख्यिगडामरः केशवो बुधः । राजानयेनेत्य सन्ध्यर्थं निन्ये राजपुरीपतिं ।
तावद्धृदायरावत्रमुखादाश्वास्य मार्गपः । स्पृक्कारसीहं तं भेदमनयद्भूरिवित्तार्पणैः । ५५५
नीत्वा मार्गपतेः पुत्रं सन्धित्सुः स बलद्वये । न्यवारयद्धवोऽनं यावद्राजपुरीपतिः ।
तावन्मार्गेशपुत्रस्तं गन्तुमन्यैर्व्विनिश्चितं । नामन्यत स यत्नेन सामग्र्यानर्जितोऽभवत् ।

यावत् प्रजासु सनृपासु विधिर्व्विरुद्धो दायाददुःस्थितिरुपाय... याति ।
देहे दुराधिनिहते भिषजां प्रयुक्त्या रोगाः कथं प्रविगलन्ति कृताधिकाराः ।

खानान्तरङ्गैराक्षिप्ते भिन्ने राजपुरीपतौ । अकस्मादभूत् खानः सर्व्वसैन्यभयावहः ।

गङ्गाश्टङ्गारमोहाद्यास्तस्ताराजपुरीं ययुः । खानोऽपि सबलोभीतोयथौ प्राग्वद्ययागतं । ५६०
केचिज्जेराकमेराद्याः प्रापुर्मार्गेशसन्निधौ । ज्यम्रालटक्कुरप्रेम्णा कृतमाध्यस्थ्यमन्विदः ।
एवं चोभेण सः सेना खानस्याकृतरङ्गिता । ययौ सहस्रधा दीर्णा सेतुभङ्गादिवापगा ।
अथ मार्गपतिः श्रुत्वा तद्वृत्तान्तमनुद्रुतः । युयुत्सया ससैन्यस्य प्रापच्छूरपुरान्तरं ।
अत्र दूतमुखाच्छ्रुत्वा क्रमराज्यमुपद्रवं । शाहिभङ्गबलप्राप्त्या चिन्ता दैगुण्यमादधे ।
निवृत्य स ततोराज्ञः प्राप्तः स्वय्यपुरान्तरं । बबन्ध नौहजे खानं युक्त्या यत्साधु तद्व्यधात् । ५६५
स हि तद्दिवसे प्राप्तेऽमुष्णात् श्रीनगरं विटैः । किन्तु तत्काङ्क्षितं क्रूरं न सिद्धं पौरपुण्यतः ।
सोऽपेत्त्य मार्गपं तत्र ढौकितं क्रमराज्यतः । पदार्थराशौ दत्ताग्निं तद्रुषा भस्मसाद्व्यधात् ।

अन्यायतः प्रतिदिनं समुपार्ज्य वित्तं यद्दानभोगरहितं निहितं गुहान्तः ।

तत् सम्प्रयाति कृपणेषु कृतानुतापं भूपालसादनलसाद्रिदि स्युसाच ।

ततस्तत्सहितः प्राप्तो नगरं स ज्यहाङ्गिरः । जयेन तावन्मात्रेण नगरे स व्यजृम्भत ।
सैदान्निष्कासितान् देशात् स्वपुत्त्रबधकानपि । लेखैरानाययामास सोपयोग्यतया स तान् । ५७०
तदन्तरे जन्मवाटे वसन् खानोबलोर्ज्जितः । मृगानिव हरिस्तत्र विदधे दुर्दशान् खशान् ।
सप्तविंशतिसङ्ख्यान् स काश्मीरविषयान् यथा । तावतीस्सिन्धुरीस्तत्र व्यधाद्दुस्थः पराक्रमैः ।
सार्द्धं मल्हानहंसैस्तत्कटकः सुभटोत्कटः । मद्रमण्डलमुलुण्ठ्य तुरुष्कांस्त्रकिताम् व्यधात् ।
स मद्रमण्डलं जित्वा हत्वा राजपुरीपतेः । जिष्णुश्चैत्रे पुनः प्राप तद्युतो नायकालयं ।
गृहं देवतवत् प्राप्तं खानं तमानयद्गुणैः । ससोद्नायकोऽमुष्मिन्नाभवद्भक्तिखण्डितः । ५७५

सागरस्त्यजति चेन्निजां स्थितिं पश्चिमोदयमुपैति चेद्रविः ।

चत्त्रियः शरणमागतेऽर्थिनि प्रायशस्खलति न स्वधर्मतः ।

स सैन्यसङ्ग्रहं कृत्वा कृयित्सकटकान्वितः । तस्थौ खानोगिरिश्टङ्गे वैरिभङ्गविधित्सया ।
रोगैरिव भटैर्ध्वस्तसमस्तस्त्टहवस्तुभिः । वास्तव्यानां स्थितिर्दुस्था गेहे देहे यथाभवत् ।
अथान्तरे बन्धमान्तर्गतं पृष्टकवाटिनं । भीतोव्यापादयामास जेराकं नगरेऽध्वपः ।
तच्छ्रुत्वा राजलोकस्य सर्व्वएव विरागभाक् । आश्वासघातकत्वेन दुरुक्तिमुखरोऽभवत् । ५८०
ज्यैष्ठे मासि श्रुतानिष्टो मार्गेशः कष्टनिष्ठितः । अतिष्ठत् सनृपो मल्लशिलापृष्ठेऽतिनिष्ठुरः ।
द्रङ्गमार्गनिरोधेन सर्व्वोऽप्युभयवेतनः । अनोबलद्वयं गन्तु निराशः समपद्यत ।
विंशा निर्लवणं भोज्यमश्नतामत्र मण्डले । मार्गेशव्यञ्जनं नाम श्रुतं हास्यावहं न कैः ।
सार्द्धे पले सैन्धवस्य क्रयोऽभून्नगरान्तरे । दीनारपञ्चविंशत्या दुर्गापं नगरैरपि ।
हाषष्टितमवर्षेऽपि कश्मीरागमनोत्सुकं । खानं श्रुत्वा मार्गपतिर्नीतिकौटिल्यमादधे । ५८५
दौहित्रं हाज्यखानस्य खानमेस्कन्धराभिधं । कम्पनाधिपतिं कृत्वा स्वामार्थं स व्यसर्जयत् ।
मसोद्नायकीयं च राष्ट्रं दत्वा स्वगत्तये । यशराजानकश्चापि ससैन्यं प्रत्यमुच्यत ।

सम्ं देशसुखेनाथ प्रालेये तनुतां गते। ससैन्यसहितः खानोराजपुर्य्याः समाययौ।
प्राप्तं खानं समाकर्ण्य तं भैरवगलान्तरे। मार्गं शूरपुरे रोद्धुं मार्गेशः सनृपो ययौ।
प्रवेशरोधः खानस्य तदूर्ध्वगलवर्त्तितः। राज्ञदेहे मृतस्येव देशेऽभूत्क्रमशोनितः। ५९०
पश्चुपादिष्टमार्गेण पक्षदच्छावणान्तरे। ततोऽगाद्गिरिमुल्लङ्घ्य खानः काचगलान्तरात्।
ताजभट्टादिसैन्यौघोगुसिकोद्धारभूतले। क्षुब्धं वायुरिवागत्य चक्रे खानबलार्णवं।
ध्वनिदन्दुभिनादेन तर्जयन् परितोजनान्। खानः सकटकोभीत्या नगरं व्याकुलं कृतं।
तृतीयेवागतं श्रुत्वा साश्चर्य्यो मार्गपस्ततः। ससैन्यः सनृपस्तूर्णं तद्युद्धाय समाययौ।
उद्धामरोडामरस्य शौर्य्यश्रीगरुडामरः। रणे डामरयागेऽन्तर्भभावुञ्छपसद्रवत्। ५९५
केचित् सैदभटास्तत्र युध्यन्तः सुभटैः सह। अनिवर्त्तितया याता दिव्यस्त्रीसुखभागितां।
अश्वपातरणाघातक्षतानां तत्समागमे। शवानां राशयस्तत्र पतिताः समरान्तरे।
न सैदयुद्धं नोत्थानागमप्रथमसङ्गरे। भटक्षयोऽभवद्यादृग्गुसिकोद्धारसङ्गरे।
प्रमेयभाजोऽप्यासन् ये रणे मुख्यानिजोचितं। शौर्य्यं नादर्शयन् केचित् साक्षिभूताइव स्थिताः।
पातनेनेव वृक्षस्य पक्षिशावाइव च्युताः। गताहताः क्षतास्त्रासन् यत्र तत्र शशस्त्रजाः। ६००
पूर्व्वापकारी यो यस्य ग्रामे वा नगरेऽभवत्। स तस्य बाधं कृतवान् दुर्व्वलस्य बली तदा।
मसोदनायकस्तत्र सायका युधवर्षणे। दृष्ट्वास्त्रोविजहौ प्राणान् भावि केन विलङ्घ्यते।
हत्वान्यान् युद्धगान् यत्र मार्गेशोऽगात् स्वरत्वया। श्रीसैफडामरो वीरयुतस्तत्रैव सोऽभवत्।
योगेवश्यः स चावाप्तइति तुष्टोभटाहतः। प्रथमं प्राहरत्तस्य मूर्ध्नि श्रीसैफडामरः।
अलं शिरोहैधरस्य स च क्रूराइव ग्रहाः। मुखे भुजे कपाले च प्रन्तस्ते विवशं व्यधुः। ६०५
अथ मार्गपतेः स्वर्णवर्णमङ्गलमालिकां। सचामरां डामरेशोजयश्रियमिवासदत्।
उपेक्षितं तं तत्रस्थैर्निजैरागाश्वस्तमानसं। ररक्ष केवलं प्रीतोजात्यश्वस्तमराचलन्।
विक्षितारित्रप्रसराः सचिवाः सममेकपार्श्वगताः। यत्र सुशस्त्रप्रचितामज्जति नौकेव राजश्रीः।
वैदेशिकभटैर्द्रोहे विहिते समरागमे। तावत्ते कत्यवाडाद्या निन्युः खानं यथागतं।
खानोराजभटैर्व्वद्धोरणे मिथ्येति वार्त्तया। स सैफडामरो युद्धात् स्वस्तवेश्यान्यत्र तत। ६१०
तत्तद्राश्वसामर्थ्यो रक्षन् शूरपुराध्वना। समरोद्धामरः सैफडामरः खानमासदत्।
इत्थं तृतीयवारं स प्रविष्टोमण्डलान्तरात्। बधं कृत्वा विनिर्गत्य खानः पर्णोत्समागतः।
अधर्म्मवहुलः कालः सर्व्वे द्रोहपरायणाः। राज्ञा शिशुतरस्यायं स्वतन्त्रं मन्त्रिमण्डलं।
अविधेयानिशास्वामी खानपक्षप्रतीक्षिणः। पौरानिरनुरागाश्च निष्कोषं नृपमन्दिरं।
सत्ता नाम न दृष्टस्य सर्व्वसामर्थ्यवर्जिता। इति संचिन्तयन् शस्त्राघातजातव्यथाकुलः।
मासौ द्वौ गमयामास मार्गेशोऽपि स्ववेश्मनि। ६१५

दृष्ट्वा महार्घमणिमौक्तिकविद्रुमौघान् रत्नाकरं श्रयतु सोऽपि सुलाभलोभात्।

यस्तान्महाभयकरान्मकरांस्तदीयान् वीर्येण वारयितुमुज्झितभीः समर्थः ।
अत्रान्तरे पुनः खानस्तटिकागारपर्वतात् । हतीयानैर्भटैः सार्द्धं लब्धत्राणः समाययौ ।
तस्मिन्नभ्यन्तरे प्राप्ते मुदितैरिव पर्वतैः । तदङ्गः पतितं दध्रे तुषारं सुचिताम्बरं ।
ग्रामान् प्रचलितान् दृष्ट्वा तदार्त्तो चकितस्ततः । मार्गेशोवाङ्गिलं त्यक्त्वा सबलो योद्धुमभ्यगात् ।
तावन्मितपरीवारो बहुरूपान्तराद्गतः । प्रापद्दामोदरोड्डारभूमिं डामरसंयुतः । ६१०
सनृपो मार्गपः पश्चात्तनवायुरिवोर्जितः । सैन्यं न्यवेशयत्तत्र सातदैवतसन्निधौ ।
सव्यूहो जातयुद्धेहो निशान्ते शैफडामरः । बभञ्ज मार्गपानीकं दामोदरइवोत्थितः ।
चित्रं हैदरशाहस्य यन्न सिद्धं त्रिधागमैः । अहो होनबलस्यापि सिद्धमस्य विशेषवशात् ।
किमन्यदल्पसैन्योऽपि खानः कश्मीरकुञ्जरान् । हतविद्रुतविध्वस्तयूथान् सिंहइव व्यधात् ।
प्राप्तवत्सोऽनिष्टमाशङ्क्य मार्गपः शैफडामरात् । अन्येषां वीक्ष्य ताटस्थ्यं प्रपेदे नगरान्तरं । ६१५
छिन्नेषु सेतुबन्धेषु प्राक्षैदद्वैधपत्तदा । पारावारगताः पौरा द्वैराज्याकुलतां दधुः ।
पित्र्यजप्रतिहाराद्याः प्राप्तामडवराग्रतः । नृपपक्षं परित्यज्य खानपक्षं समाश्रयन् ।
स्वभेदजर्जरं ज्ञात्वा सैन्यं द्विजाभिषोऽनयत् । सैदपत् स्कन्दभवने किंकर्त्तव्यतयाकुलः ।
एकदा सर्व्वसैन्येशं कृत्वा सेयामहम्मदः । नोसराजानकयुतो द्रोहं स्वामिनि तद्व्यधात् ।
यथा चित्तं तथा कायो यस्य स्यात्साहसक्षमः । तस्यात्मनिरपेक्षस्य कर्त्तव्यं किं न सिध्यति । ६२०
भागिनेयं नृपपदेऽप्युपेक्ष्य स्वार्थलुब्धधीः । द्रोग्धाभूयत्स तेनाभूत् सर्व्वनाशस्य कारणं ।
नष्टसैन्यः सदैन्योऽथ मार्गेशः शरणं भयात् । ज्यस्नालठक्कुरं प्रायात् खर्व्वाश्रमस्थितं हितं ।
येथैव स विरुद्धानामकरोच्छासनादिकं । तादृशीं स दशां प्रापद्धिक् चलाराजसम्पदः ।

सन्नग्रहानुगुणधारितसप्तवारवर्णांशुकोपचितवेशविशेषभूषः ।

बद्धाभ्रमद्धूपइव योऽभवदष्टभोगप्राप्तोदशामितरवत्स धिगस्तु लक्ष्मीं ।

क्व नृपः क्व मदीयन्तत् सर्व्वस्वं क्व परिच्छदः । नास्मरस्तद्दिने किञ्चित् प्राप्तो मुनिगुहान्तरं । ६२५
राजदारापहारोत्थपापभारादिवार्दितः । तज्ज्ञाता नाशकद्गन्तुं नावं स्त्रीसहितोऽविशन् ।
अन्ये सैन्याः सदैन्या गिरिबिलविगलद्दासराधूसराभास्तिष्ठन्मादिष्टरिष्टोद्गतघनविलसद्दृष्टिनिर्नष्टचित्ताः ।
दिष्टैर्दुष्टैर्गरिष्ठैः परिहृतवसनाः पृष्ठलग्नैर्निकृष्टाः कारागारान्तराले पशव इव बलात्ते निरुद्धा विरुद्धाः ।
गर्जन्तो मुमुषुः परे जनपदान् दुष्टाः खशाद्यस्तदा तद्भीत्या परिहृत्य सर्व्वमचलन्ग्रामान्तरा वाञ्छिताः ।
मार्गेष्वप्यबलाहृता बहुबलैः पूर्व्वापकारस्मृतेस्तोऽभूद्राज्यविपर्ययोऽतिभयदः कल्पान्तकालोपमः ।
सर्व्वस्वालुण्ठने तस्मिन् धनिनां दुःसहे पुरे । आसन् दरिद्रास्तत्याज्याद्यादारिद्र्यभागिनः ।

ये स्वर्द्रुमाम्रदलपुष्पफलाभिरामानध्यासतरङ्गतरवः सरवाः पिकाद्याः ।

ते शीर्णशुष्कजलमूकमुखा हिमर्त्तौ किं तत्र यद्भवति कालविपर्ययेण । ६३०

ते राजवल्लभा रम्यास्ताः स्त्रियस्ते च सेवकाः । कथावशेषतां यातास्तस्मिन्नष्टदले नृपे

इत्थं वर्षद्वयं सप्त मासान् भुक्त्वा नृपासने। नृपोऽब्दाषष्टिवर्षे स श्राश्विने भ्रंशमाप्तवान्।
राजा मल्लदग्माहस्य विभ्रमत्राणान्तरान्तः। आनीय फिर्यपालेन सत्तपके समर्पितः।
राजधान्यङ्गने राजवासे तं मनुजैः सह। विधाय तृप्तिं सम्पूर्णां रत्नचुड्डामराधिपाः।
राज्यप्राप्त्या सुखं तादृक् तस्य नासीत् सुदुःखितेः। यादृक् तज्जातलाभ्य नृपमन्त्रिप्रसादतः। ४५
सैद्दैवबधे लुण्ठिः पुरेऽभूत् त्रिगुणा ततः। खङ्गैः कृता दाहवर्ज्जं तस्मिन् राजविपर्य्यये।
प्रधानवणिजः केचित् कोटिमत्तयवर्धिताः। तृणमाचाहृतैरङ्गैस्तस्मुले रचितासवः।
दिनत्रयं ददामो वो भेषणं यदि जायते। इति वैदेशिकोत्कोचसापेक्षा मन्त्रिणोऽभवन्।
काश्मीरिकायथा लुण्ठिं वहिर्यात्रागता व्यधुः। तथा वैदेशिकास्तत्र काले किञ्चिं न दृश्यते।
प्रतिपदभ्रमणैः सपरिश्रमा मधुकरी तनुते मधुगोलकं।
निहितधूमतया विनिवार्य्यतां तमुपलभ्य परः सुखमश्नुते। ५०
कष्टैः षण्मासपर्य्यन्तं मद्भक्तिसञ्चितं गृहे। अयत्नमपरैर्भुक्तं सर्व्वं तत्स्थानसंश्रितैः।
रक्ताकतृणपूगान्तः क्षिप्तं कैरपि यत्धनं। न नीतमश्रुचिस्थानस्थतिकास्तरणभ्रमात्।
सद्युम्ननिम्नकुभ्याम्भः पक्षिपुष्करिणीकृतैः। रक्षितं कैरपि द्रव्यं नीतं ताडितदर्शनात्।
सत्यं ब्रवीमि धनिकाः शृणुतास्मदुक्तं यत्सञ्चितं वसु गृहे परवञ्चनाद्यैः।
तद्भोगदानसफलं कुरुताविलम्बं नो चेद्यथा स्मरत राज्यविपर्य्ययेऽस्मिन्।
भग्नभाण्डकरण्डालीः प्रसार्य्य पतितां गृहे। मुषिताः स्म इति व्याजात् खस्थाः कैरपि वञ्चिताः। ५५
जनान्तरसवागारान् शून्यानापूर्य्य वस्तुभिः। रत्नचुर्नागराः केऽपि शून्यीकृतगृहाधनं।
तैर्निवर्त्तितगर्त्तान्तःक्षिप्तैः पौरधनैर्घनैः। तस्मिन् काले प्रतिपदं सत्यार्थाभूद्वसुन्धरा।
मार्गरोधोद्यतैः सर्व्वैः क्षेपणीयास्त्रवर्षिभिः। राजानवाटिकीयैस्तैस्तत्कालं साहसं कृतं।
कर्णस्थाननिधानसर्पसदृशप्रोत्सारणाज्झिण्ठिसोद्दिष्टप्राक्तनसेवकाम्बुजघटाहेमन्तकालोदयः।
भूपश्यामधुगोलकस्य सरघासङ्घातधूमोद्गमः सोऽभूद्राज्यविपर्य्ययो नवसभोद्यानद्रुमाली मधुः।
किं स्वाचारविपर्य्ययात् किमु धनस्यान्यायतोपार्जनात् किं वा द्रोहितया सतां क्रिमथवा सद्दर्पसाहूर्य्यतः।
निःसामर्थ्यतया यथा शिशुविभोर्दैवेन वा मन्त्रिणां राज्ये सुस्सलभूपतेरिव बभूवायं प्रजोपद्रवः। ६०
येनादौ सैद्वैरे रणरसिकतया मोचिता बन्धनस्थाश्लिष्टादेशाधिकारो व्यधित जितरिपुः स्फूर्जितश्च प्रयातः।
प्राज्यं राज्यं व्यधाद्यः फतिहनरपतेर्मार्गयित्वारिचक्रं जीयाज्जैनामरेन्द्रो वरसचिवपतिः सैफमल्लक एकः।

इति श्रीजैनराजतरङ्गिण्यां पण्डितश्रीवरविरचितायां फतिहसाहराज्यप्राप्तिर्नाम चतुर्थस्तरङ्गः ॥

॥ समाप्तेयं श्रीवरराजतरङ्गिणी ॥

## ॥ चतुर्थी राजतरङ्गिणी ॥



नमः स्वराचराकारधारिणे चन्द्रमौलये । शिवाय स्वच्छस्वच्छन्दपरमात्मस्वरूपिणे ।

विलोक्य मिश्रं शिवयोः स्वरूपं सर्पाधिराजोऽमिलितोऽतिभक्त्या ।

गौर्य्याभुजावर्त्तनकङ्कणेन यत्रावताद्वो गिरिजाशिवाङ्गः ।

विरतं मोहान्धतमो यदनुग्रहरोचिषा शुकस्यापि । वन्दे तं गुरुतरणिं बुद्धाश्रयहृत्सरोजदीप्तिकरं ।

वन्द्यं तर्कवितर्ककौशलमतेर्वाक्यं प्रमाणान्वितं यत्कान्या नृपकीर्त्तिवस्तुरचना देदीप्यते सर्व्वतः ।

श्लोकैः सत्पदशोभनैरविरलानुप्रासयुक्तैः शुभैर्नानार्थानुगतैर्मतैः सुकविना लालित्यभावान्वितैः ।

श्रीकल्हणद्विजप्रोक्तश्रीमद्राजतरङ्गिणीं । आलोक्याद्यमिताभ्यां स्वं वपुः कर्त्तुमखण्डितं । ५

श्रीजोनराजविबुधश्रीवराभ्यां मनोरमं । कृतं द्वाषष्टिवर्षान्तं ग्रन्थं राजावलिद्वयं ।

गङ्गाभगवतीतीर्थस्थाने धन्यस्त्वभूषितः । कविः श्रीप्राज्यभट्टाख्यः समग्रगुणभूषितः ।

राजावलिपताकां स्वां राज्ये फतिहभूपतेः । एकोननवतिं यावच्छ्लोकाश्चक्रे ततःपरं ।

अथ देशादिदोषेण दुष्टलुब्धकभीतितः । नाधत्तेद्राजवृत्तान्तश्चैवासं मानसे कविः ।

तदाप्रभृति तद्वृत्तवर्णनं क्रियते मया । बुद्धाश्रयात्मजेनाद्य शुकाख्येनात्मचापलात् । १०

पूर्व्वेषां राजसम्बन्धं निशम्य पृथुसम्पदां । तद्भारश्रान्तयेवाहं न कुर्व्वे कविवाञ्छया ।

क्व पूर्व्वकविवक्तृत्वं क्वेदं मन्दधियो मम । वर्णमात्रेण रीत्यंशः स्वर्णखण्डायते कथं ।

राजोदन्तमदं सन्तः श्रुत्वा योजनपूर्व्वकं । अनुगृह्णन्तु मद्वाक्यसुधावृष्टिनिवर्हणैः ।

कश्मीरेषु महाराजजैनशाहकुलाङ्कुरः । श्रीमान् फताहभूपालः प्रशासच्चभवन्महीं ।

तस्मिन् शासति तत्क्षोणीं प्रजाः सर्व्वसुखावहाः । आसन् सुधर्म्मनिरता दयादाक्षिण्यभूषिताः । १५

स्त्रीद्यूतमद्यव्यसनेष्वसक्तः सचिवाग्रणीः । सोमराजानकस्तत्राम्बयोऽभूत्तस्य भूपतेः ।

आवरोपल्लवैरर्जितश्रियामन्वयप्रभवोऽस्य मन्त्रिराट् ।

धार्म्मिकोऽश्वपतिरेभ्रहेमकः सम्पतिः शुभरतिः परोऽभवत् ।

प्रतीहारपतिर्हाज्यमेथोऽमेयोगुणैस्तदा । तृतीयः सचिवोदैवात्कालधर्म्ममुपागतः ।

सामान्येन महीभर्त्ता पुत्त्रोमलेकज्यङ्गिरः। पैत्रिकैर्ग्रामराष्ट्राधैर्मानेनास्य नियोजितः।
ब्राह्मणाः स्वक्रियाचारहीनाश्चासंस्तदा भुवं। यदेषां सोमचन्द्रोऽभूत् क्रियालोपप्रवर्त्तकः। १०
सर्व्वविज्ञानविस्मेरश्रेष्ठदराकदेशजः। शाहकाशिमस्य कान्तोऽस्य ह्युपदेशं विना गुरुः।
सोमचन्द्रस्तदादेशाद्धृत्वा देवालयस्थितान्। भूमिं द्विजेभ्योनीत्वा तद्भृत्यांस्तृप्तान् यथाक्रमया।
सुफाख्यैर्म्लेच्छशेषस्य छिद्रादम्भनवाञ्छया। बोधखानद्रति व्याजादत्युग्रासरवोऽनुगैः।
सन्निधानं तदात्याजि दैवतैः प्रतिमासु हि। कथं विधत्ते मनुजस्तत्स्थानेषु विलुण्ठनं।
दुराचारोऽथ धाचारोभट्टोभुट्टोनटोविटः। इत्येवमासीत् तत्काले सभासाम्यं कलेर्बलात्। १५
सोमचन्द्रात्मजस्याथ दानमानौ च गौरवं। असहिष्णुभिरध्येशपुत्रैरस्थालकादिभिः।
विभेद्य होमराजानं प्रतीहारादिचक्रिणः। अवधूय स्वजनकं यौनसंबन्धयन्त्रितं।
श्रीजैनलाभदेनस्य पुण्यराशिरिवोच्छ्रितः। सञ्जितः श्रीवितस्तान्तस्थिरकालमभूत् थः।
राजानसोमचन्द्रेण प्लावितोनिर्म्मलैर्धनैः। श्रीजैनकदलः सेतुः पारावारप्रतारणे।
वस्त्राद्यमठमलेकपुरान्तरसमाश्रयैः। प्लावितोवेश्मभिः साकं राज्ञा वैरिजिगीषया ॥ कुलकं ॥ २०
दग्धारण्यनिभे जाते नगरे कदले तथा। नावशिष्टं विटैर्लुण्ठ्या स्थानवासोजनस्य च।
समं हृत्तः चीणकाले सोमचन्द्रस्तदुन्मना। स्वसैन्यसंग्रहं कृत्वा निविष्टोजालद्रगडे।
शतैकीयोवसन् कोऽपि ब्राह्मणोब्रह्मवर्च्चसा। युक्तोयेनाभवत्तस्य राजानस्यारिनिग्रहः।
प्रतापाग्नेर्नरेशस्य पुरस्य दहनार्च्चिषः। राजानसोमचन्द्रेण स्ववपुः श्रीफलायितं।
राज्ञा दत्ते वहिर्गन्तुं धर्म्मद्वारे दिनैः पथि। विप्रशापास्यस्वभानुः सोमचन्द्रमथागिलत्। २५
मलेकालादयः पुत्त्रा विद्रुताः समराद्भयात्। विधाय सोमचन्द्रस्यान्त्यक्रियां नृपशासनात्।
मार्गेशेभ्याहिमोसमन्त्री स्थान् परान् समतोषयत्।
सिद्धादेशं महातन्त्रं ज्येष्ठपुत्त्राय मार्गपः। मलेकपितृजायादाम्मलेकाब्दालकाय च।
शस्त्राधिकारं दत्वाथ विभज्यान्यप्रनेयकान्। मलेकलुहरादिभ्यः स्वात्मजेभ्योददौ महान।
होमराजानज्येङ्गरप्रतीहारौ तु चक्रिणः। वाद्यानेताम् डामरांश्च गर्ज्ञाम्विदधेऽध्वरः।
मृते प्रशान्ते सचिवे चेदरत्पिञ्जट स्ततः। कर्णगोचरदुर्देण्डशिर्गभर्टव्यदायिनः। ३०
यमेवाश्रयते रज्जुं नदीं तर्त्तुमहो नरः। छिनत्त्यकस्मात्तस्मै ने त्रिधिर्विधुरताङ्गतः।
सोमचन्द्रवधार्थेते वाद्यानीताहि डामराः। मार्गेशमास्य तैः सर्व्वैर्द्रोहोऽकारि नृपाज्ञया।
नौसेतुच्छेदं कृत्वा ते प्रतीहारादिडामराः। नाशयित्वा मार्गपतिं त्रिदेशमनयंस्ततः।
डामरजन्ममलेकदौलत्याद्यानृपास्पदं। अभजन्मन्त्रिपदवीं षट्पदा इव तेऽटवीं।
आस्थाने डामरेन्द्रेषु सम्यङ्निर्णयकारिषु। बलिनोदुर्व्वलाश्चासन्नबलाबलवत्तराः। ३५
सुवृत्तं डामरस्त्रीये शिङ्गानां प्रत्यभान्न तत्। तमिस्रासकघूकानामप्रकाशद्रवावनौ।
सपान्तरङ्गाः कारायां क्षिप्ताश्चैडामरैर्निशि। आलेमरादयोद्रोहकर्त्तारः सुभयादमी।

ज्यहाङ्गिरप्रतीहारहोस्मराजानकादयः । दुरुङ्गरवमानान्ते दिनैस्तान् डामरान् प्रति ।
आस्थानाग्नीनयोगीजस्वानमल्लिकदत्तयोः । मल्ला गदायमेराख्योजघानोगीद्वयोर्द्रुतं ।
श्रुत्वा तदुत्तममल्लिकोराजानयादगमद्वहिः । चिरं युद्धारिभीराज्ञा नीतः स्वान्तिकमादरात् । ५०
तद्वधाद्राजधान्यन्तर्हाहाकारोमहानभूत् । उद्भूतपौरलोकास्तु नृपतेश्चाथ्यसत्सदा ।
डामरोहोसमल्लिकः सूर्य्यभोगान्तरादथ । श्रुत्वा भ्रातिवधं धैर्य्यान्न चचाल महाभटः ।
प्रबुध्य वैरिभिः सोऽथ डामरस्तत्र सङ्गरे । वीरः स्वःसुन्दरीयोगं समरोङ्गामरोऽगमत् ।
शाहाभदनकुलजः खानरभाहिमस्ततः । ज्यहाङ्गिरप्रतीहारभ्रातेयः कुशलोमहान् ।
विभागीकृत्य राष्ट्राणि यथार्हं पञ्चषैर्दिनैः । प्रददौ होसराजानमुख्यानां नृपतेः पुरः । ५५
आशङ्क्य नृपतेः पार्श्वस्थं तमुत्तममल्लिकं । अकरोद्बन्धनं नीत्वा दुर्गमे तु खशालये ।
विभवं मासमात्रन्ते गन्धर्व्वनगरोपमं । विधाय देशाद्भ्रंशभीत्या चेलुरिवाधमाः ।
वृत्तान्तमुत्तममल्लिकदुग्धभ्राता विश्रुत्य तत् । गावत्यदेवकोगत्वा खशालयमवेष्टयत् ।
खशैगङ्गामठोपान्ताङ्गीतैरुत्तममल्लिके । विमुक्ते सुदभूत् कोऽपि सर्वोऽन्योन्याश्रयात्तयोः ।
अथाध्यश्रयतां तौ द्वौ नृपकल्पतरुं दृढं । विपत्तीशातपक्लिष्टौ मार्गेशागमनोत्सुकौ । ६०
एकोननवतौ शुक्लाषाढादाश्वयुजावधि । वधादिवृत्तं राजानडामराणामभूदिदं ।
शरत्काले वहिस्तीर्त्वा मार्गेशः पुनरायथौ । विभागीकृत्य कश्मीरान् सर्व्वेषां दत्तवानसौ ।
राजाधिकारान् संस्थाप्य स्वात्मजेभ्योऽभयदभीः । योगीव कतिचित् कालं स्वदेशे विगतज्वरः ।
उत्तममल्लिकराजानष्टङ्कारौ निरदाहयत् । ग्टहानब्दालमेरस्य मावतेऽब्दे जिगीषया ।
निरोधवेश्मदाहादि श्रुत्वा पुत्रस्य मार्गपः । भाङ्गिलात् चुष्यमार्गेण हिन्दुवाटं समागमत् । ६५
तस्मिन् दिगन्तरं याते मल्लिकाब्दालकोऽरिभिः । बन्धनाय निनायोपेर्दुर्गं लहृखशालयं ।
उत्तममल्लिकराजानष्टङ्कारौ नृपसंयुतौ । विभक्तुमैच्छत् कश्मीरोत्पत्तिं वाराहमूलकं ।
तत्र राजाज्ञयानीतैस्सिद्धादेशाधिकारिभिः । देशोत्पत्तिविभागज्ञैस्तज्ज्ञैर्लेखककर्मभिः ।
कायस्थैर्बुधकश्मीरसंख्येशजुगकादिभिः । भागत्रयं विधायोर्व्यां राष्ट्रदेशेषु सर्व्वतः ।
भागः फताहशाहस्य मल्लिकोत्तमस्य चापरः । तृतीयोऽपरा राजानष्टङ्कारस्येत्यलिख्यत । ७०
विभज्य भक्ता देशेऽत्र देशोत्पत्तिः पुरा त्रिभिः । हुष्कजुष्ककनिष्काख्यैस्तथैवैतैर्महात्मभिः ।
ततोनगरमाहृत्य राजराजानडामराः । नात्यजन् स्वदयादेरं गूढं सकुलपर्वत ।
मुख्यं मन्त्रिपदमुत्तममल्लिकस्य ददौ नृपः । सिद्धादेशश्च राजानष्टङ्कारस्य महत्पदं ।
आस्थानउत्तममल्लिके स्थिते निर्णयकारिणि । ष्टगालेडिकसंयोगः श्रुतोऽभूच्चित्तसदा ।
कश्मीरोणाडडिङ्गुर्यवादिनोः प्राशयोर्द्वयोः । प्रादात् स उत्तरं द्रष्टुं स्वाभिज्ञातमाहृतास्थयां । ७५
तदा स्वाहितधीः सुवेशोमन्त्रिवरः । मखादशाहिमहिनएभाहमोऽध्वेश आययौ ।
वाराहमूलं सम्प्राप्ते तत्सैन्ये राजसैनिकैः । उत्तमेल्लिकमुख्यास्ते योद्धुं स्वयपुरेऽविशन् ।

पारावारस्थितं सैन्यद्वयं वीक्ष्य नराधिपः । फतासाहोमन्त्रीशमुत्तमल्लिकमब्रवीत् ।
मन्त्रिमल्लाधिपेनेयं परिणीतेव भामिनी । अस्मान् कापुरुषान् ज्ञात्वा राज्यलक्ष्मीर्हृतामुना ।
श्रुत्वा तदुत्तमल्लिकोऽनृपमूचे महीपते । एकाकिनमबन्धुं मां दृष्ट्वा किं न करोत्ययं । ८०
कदाचिद्दृश्यते चिन्तामणिः खकुसुमादि च । राजप्रतापदग्धा हि नोत्पद्यन्ते नरर्षभाः ।
उत्तिष्ठ राजन् युध्यस्व दैवाधीना विभूतयः । श्रुत्वैवं मन्त्रिणो वाक्यं योद्धुं नृपबलं ययौ ।
अश्विने भवतुङ्गं तत्पथायाते ससैनिके । सबल उत्तमल्लिकः कोशनत्सान्यविचत ।
मध्ये भूत्वा गिरिं तत्र स्थितान् सैन्यद्वयाद्भटाः । एत्यान्योन्यं शरासारं पारावाराद्यथाक्षिपन् ।
प्रयुध्य वैरिभिस्तत्र मार्गेशात्मजशर्थकः । स्वप्राणैः पद्मनागस्य प्रादाद्बलिं महत्तरं । ८५
हते तस्मिन् रणे तत्र शिर्यमार्गपतावतः । बन्धुत्वादुत्तमल्लिकोऽजिता शिथिलतां ययौ ।
शैथिल्यमस्य दृष्ट्वा ते वीरा मार्गेशसैनिकाः । सर्वाश्रमाध्वना यातस्यानुसस्रुर्महोजसः ।
फतासाहोराजानटक्कारान्वितएव तत् । श्रुत्वा स्वव्यपुराक्लिन्दुवाटं शूरपुराद्ययौ ।
अनुयातैरथाश्वैसैनिकैरुत्तमल्लिकः । अरोधि न्योवायामान्ते केशरीव गुहामुखे ।
नवाब्दान् पालयित्वा क्ष्मां याते फतासाहभूमिपे । महम्मदशाहः सम्प्राप राज्यं मार्गेशसंश्रयः । ९०
मार्गेशप्रीत्या नृपतिर्महाम्लं स्वाततायिनं । सेहरस्कन्दरं स्वानं यौवराज्यपदेऽर्जितं ।
महामार्गपतिर्भूयो राजलक्ष्मी विराजितान् । स्वपुत्रानकरोत्काराष्टेह शत्रुनिधानतः ।
दत्तकन्योऽप्ययं जन्यद्व मां घातयेत् कथं । निश्चित्योत्तमल्लिकोऽयावदास्ते स्म बन्धने ।
मार्गेशपुत्रो बलिनं सद्वेषस्तं कुकर्म्मणा । अथ भट्टकुलवद्धाङ्गिमबधीत्पञ्चषैर्दिनैः ।
युद्धं भट्टार्जुनस्याजौ कारायाः शेषचक्रिणः । बद्धस्य तादृशोरस्य तस्याभूच्छत्तिभिः परैः । ९५

बलिना कलिराहुणा नृचन्द्रे गलिते ऽर्केऽप्युदभूदलान्धकारः ।
जनताप्यनिशं भृशं रुरोद कलयन्ती पितरीव पक्षपातं ।

विरते चोत्तमल्लिके लोके रात्रिञ्चराः खलाः । विचेरुरन्धतमसाविस्फुरद्दीर्घदृष्टयः ।
भार्य्यांशोद्विगुणाजातो ग्राम्याणां तत्र वत्सरे । विश्रमिश्रवणे मूकावधिराभन्त्रिणोऽभवन् ।
नव मासान्नवाहानि राज्यं कृत्वा महम्मदे । वर्द्धयति क्रोतसाहः शाहः फतिह आययौ ।
प्रतीहारज्यहाङ्गीरस्याददाम्मन्त्रिपदं नृपः । सिद्धादेशस्य राजानटक्कारस्य महत् पदं । १००
स्वयंभूश्चण्डचण्डांशुसहमः शौर्य्यशालिनः । काचचकस्य शस्त्राधिकारं राजा स्वयं ददौ ।
नूनं मा केशचक्रेशावतारः काचमल्लिकः । आजीवमभवद्यस्य राजश्रीललितं वपुः ।
श्रीमट्टीसनचक्रस्य क्रमराज्याजिजन्मनः । प्रोद्भूतः काश्चनावीरोर.नोदश्चरयादिव ।
प्रजापुण्योदयाद्राज्ञो धार्म्मिका धीरजायत । अथवात्यल्पकालोऽस्य राज्यस्याज्ञापि भूभुजा ।
तथापि हि प्रेष्यवद्रुद्धव्यापाराधिपतां नृपः । अकरोत्तासपट्टान्तर्गणनाविपत्रारणां । १०५
मृतहिन्दुकजन्तूनामस्थीन्यादाय भूमिपः । गङ्गां यातुं समादिचत् [illegible]द्रवशान्तये ।

शिशिराश्लीन्यत्र स्वर्णचां प्रत्यायाताजनाः पथि। अकस्मादातङ्कया तेऽयुतसङ्ख्याविपेदिरे।
चिरेण गङ्गया भुक्तान्यस्थीनीति क्षुधार्त्तया। मन्येऽस्थिप्राप्तलोकोऽपि निगीर्णो ह्यनया भुवं।
आयुःशेषं समाश्रित्य पादत्राणसमाश्रयाः। मृतास्तेषु ये प्राप्ताः केचिन्निर्यतियोगतः।
अस्मिन्नेकनवत्यब्दे शरत्काले च मार्गपः। मल्लोदशाहिसहितोवाङ्गिलात् पुनरायथौ। ११०
ससैन्योवाङ्गिले ग्रामे निविष्टोऽभून्महीभुजः। फताहशाहः प्रबले बलं युद्धाय निर्ययौ।
प्रयुध्य वैरिभिर्गाढं धार्म्मिकोऽध्वेशनायकः। गतः स्वःकामिनीयोगमात्मजोऽत्र रणाजिरे।
कलौ धर्म्मस्य पादैकोवर्त्ततेऽस्मिन् भुवस्तले। महामषोदस्तम्भैः स चतुष्पाद्येन योजितः।
नूनं कार्कोटनागेन निगीर्णोमार्गपः क्रुधा। प्रत्यब्दं तद्गिरिस्थानाद्गमागमचिकीर्षया।
अन्येऽप्यब्दालमल्लकलहराद्याश्च तत्सुताः। गतादिगन्तरं भूम्युक्ताव्यक्तमनोरथाः। ११५
वितस्तिः पूर्य्यते जीर्णवस्त्रे हस्तोविशीर्य्यते। इत्येवमादिकादोषाजायन्ते पापिनो विशां।
सम्यगन्तकमारीव व्याध्युपद्रवकारिणी। उदभूत् सर्व्वतोमारी जनताक्षयकारिणी।
मृतानां नाभवत् सङ्ख्या ग्रामेषु नगरेऽपि वा। अन्यकर्पटवासोऽपि येषामास्ते स्म दुर्लभं।
वान्धवानेव चक्रन्दुः प्रलापस्य कथैव का। प्राणरक्षापराः केचिदायुःशेषेण रक्षिताः।
जजृम्भे शमिते मारीदोषे देशेऽथ दैवतः। वार्त्ता मल्लदशाहस्य कश्मीरागमनं प्रति। १२०
गत्वा मल्लदशाहस्य नौशाहारात् सलोहरात्। एस्कन्दगाङ्गपतेः स प्राप महतीं चमूं।
प्रत्यायातोऽध्वपस्तुतैः सहितोराज्यशाङ्कया। प्राप्तोराजपुरीदेशमिति दूतान्नृपोऽशृणोत्।
तस्मादुर्व्वार्त्तयाप्यासन् पूर्व्ववैरामहीभुजः। समस्तामन्त्रिणः शाहमल्लदागमनेप्सवः।
काचचक्रेशराजानशृङ्गारौ स्वबलैर्वृतौ। गतौ प्रतीच्छितुं शूरपुरं तत्रनृपस्य तौ।
विधुरे हि विधौ भृत्यस्तालीमेरोऽस्य भूपतेः। श्रीमत्फताहशाहस्य शत्रुपक्षमथाश्रयत्। १२५
वैदेशिकोनिःशरणः शाहिभक्तीयदत्यधो। पुत्रवद्वर्द्धितोराज्ञा ग्रामहेमाद्यनुग्रहैः।
प्रतीहारज्यहाङ्गेरमन्त्रिणैकेन संश्रितः। श्रीमान् फताहशाहस्स पुराद्योद्धुं विनिर्ययौ।

कोषाणकं फतिहशाहबले निविष्टे गूढेचरैः प्रतिभटैर्विदितारिवृत्ताः।
एत्यारिमध्यमथ शूरपुराद्युयुत्सुकामाः प्रवीरशयनान्यधिजग्मुरत्र।

फताहशाहो वीक्ष्यैतद्युद्धमस्मादथापतत्। मन्त्रिभिः प्राक्तनस्नेहात्प्रभुत्वादपि रक्षितः।
एवं समासं वर्षैकं भुक्त्वा भूमिं स भूमिपः। वर्षे द्वानवते मासे इषे राज्यादथापतत्। १३०
ततः फतिहशाहः स निरस्तोवाक्ष्यमण्डलं। मन्त्रिभिस्त्वटिकाशारगिरिमुल्लङ्घ्य लोहरं।
श्रीमान् महामहोत्साहः शाहोमहम्मदः पुनः। समं गजपतेः सैन्यैः कश्मीरानविशज्जयी।
गजेशदत्तमत्तेभाव्यधुः सेनाजनस्य ते। जङ्गमाद्रिभ्रमं मार्गे काले धाराधिरोहणे।
वाजिनां हेषया हस्तिकर्णतालैश्च घुष्टतैः। पटहैर्जयशब्दोऽभूद्विगुणोनृपतेर्विशां।
बद्धा राजानशृङ्गारमब्दालं मार्गपं वहिः। कर्त्तुं मन्त्रिपदे राज्ञश्चिन्ता काप्युदभूद्धृदि। १३५

नृपादेशान्महामन्त्रिपदं चक्रेशकाञ्चनः । श्रालेमराद्यनुज्ञातोऽप्यग्रहीत् स महाबलः ।
स्वामात्यान् देशरक्षायै स्थापयित्वा गतोभुवं । विभज्याटविकं लोकं प्रतिमुक्त वर्त्मनि ।
नायामकोटं लुहराध्वेशराजानमोसकौ । प्रविष्टौ सैन्यसम्बद्धौ शत्रुकार्य्यचिकीर्षया ।
हिमार्त्तोऽराजकोदेशोऽपरिज्ञाताश्च मन्त्रिणः । देशोद्ध्वान्तयोश्चस्वकम्पेऽन्वहमित्यतः ।
चक्रेशोविक्रमस्थ्णं वीरं मल्लिकज्यङ्गिरं । साहायकार्थमानिन्ये राष्ट्रघोषैः कृतार्हणं । १४०
मासमात्रमुषित्वात्र कोटे तैर्वैरिणां क्रुधा । प्रभाते नगरं वीरायय्युर्युद्धचिकीर्षया ।
निर्याते काचचक्रेशसैन्ये रिपुबलं प्रति । परस्परमभूद्युद्धं वीराणां जालद्रगत्ते ।
युद्धा लुहरमार्गेश याते राजानमोसकः । ज्ञात्वा रणाग्रौ स्वप्राणानाशिष्वाकयाचितः ।
छित्वा तत्राङ्गुलीः काचचक्रेशस्यारयोऽथ ते । नाजोकमार्गपत्याद्याः प्रययुः समभायितौ ।
प्रवीरोदेवरावत्रस्खलितः समराङ्गनात् । हतोमारोमशोतोरे चक्रसैन्यैर्निरायुधः । १४५
तादृशात् समरान्मुक्तः काचचक्रोऽखिलैर्जनैः । देशरक्षाकरोऽसावपि राधेयार्जुनसन्निभः ।
सचिवः काञ्चनस्यकः प्रवीरः काञ्चनश्रियं । अङ्गुल्या सह सम्प्रापच्छ्रया तत्र संयुगे ।
सन्तोष्य नृपतिर्दाममानाद्यैराजमण्डलं । प्रतिमुच्यागतोऽकार्षीत् सौराज्यं राष्ट्रमण्डले ।
वर्षेण स हि मल्लिकलहभट्टादयोऽखिलाः । चक्रेशमन्त्रिणा कारागारक्षिप्तामहौजसः ।
अङ्गुलीसूत्रनिर्देशं स्थापिते भूपतौ ततः । चतुर्नवतिवर्षेऽत्र श्रावणे काचचक्रपः । १५०
मल्लिकज्यङ्गिरप्रीत्या खानमेशाहिमं व्यधात् । सिद्धादेशाधिकारेऽस्य सुजनं धीमतां वर ।
क्रियालतायामूलानि पूर्व्वं शिर्व्यद्विजन्मना । रोपितानि च कालेन सिक्तान्यमृतवारिणा ।
श्रीमन्निर्मलकण्ठेन द्विजेन्द्रेण हिमागमे ।
सोमराजानकालोद्यतर्व्वक्षोपद्रवजोमहान् । सम्यच्य कण्ठभट्टाद्यैर्दुष्कलङ्कोनिवारितः ।
प्रलोभ्य काचचक्रेशं स्वप्राणेन धनेन च । तत्कार्य्यंचरत्तचक्रेशानुमतोबौद्धचोदितः ।
खुज्जामरामुदोभट्टनिर्मन्त्राद्यानघातयत् ।
ब्राह्मं तेजः क वोविप्राः काचारोऽस्मिन्नेते युगे । इत्येव खिन्नोविचक्षांस्तम्मुखानबधोद्विजान् । १५५
श्रास्तुचितः सेदकाले सोमचन्द्रेण व्यञ्जतः । प्रफुल्लः काचचक्रेण मोसुलोपद्रवक्रमः ।
ततोऽब्दे पञ्चनवते श्रावणे वाद्यमण्डले । फताहशाहराजेन्दुरस्तं यातोनृपाधिपः ।
श्रुत्वा महम्मदशाहेन तद्दिने नाशि नाश्चपि । नाश्चायि राजराजत्वं स्मारं स्मारं दिवानिशं ।
नयशोदीर्घदर्शी च सत्यवाग्गुणिवत्सलः । सम्राजः प्रियभृत्यश्च क तादृग्लभ्यते प्रभुः ।
सम्प्राप्तं नरदेवेन जन्म वाद्येऽत्र मण्डले । प्रमयोऽस्याभवत्तत्र विधिकार्य्यं हि दुर्घटं । १६०
कर्णीरथमथारोप्य स्वभृत्यैर्नरनायकैः । सवीभूतहस्तानीतः कर्त्तुमन्त्यक्रियां द्विजैः
कश्मीरेन्द्रः समारोप्य सामात्यस्तं शवं नृपं । हृदम्भृताजिरे श्रीमज्जैनशाहादिभूभुजां ।
गोगर्भैस्स्फटिकावर्त्तभूर्त्तैः कार्थैरिवाश्रिते । राजोचितक्रियां कृत्वा भूगर्त्ताभ्यन्तरेऽक्षिपत् ।

कर्त्तुं राज्यमखण्डितं हठधियो लुण्ठुं स्वमात्यान् बृद्धान् भर्त्तुं पामरसेवकान् हि नृपतिः किं किं न कुर्य्यात्क्रमं।
हा दैवं तदपासितुं प्रयततेऽनथादिवात्याहतो मूलोत्पाटनमाप्य धिङ्नृपतरुस्तूर्णं पतेदाकुलः।
क्व सैफडामरेन्द्रादीन् हत्वा स्वमचिवान्नृपः। विपत्तौ प्रमयं प्राप हाहा कालविपर्य्ययः। १६५

॥ इति फताहशाहखर्थाणं ॥

तदेवमेत्य राजानभट्टक्वारेण महात्मना। अन्वगामि नृपेन्द्रस्य प्रेम्णेव स्वर्गवासिनः।
तस्मिन् काले बहिश्चक्रवर्त्ती गजपतिर्दिवं। एस्कन्दराख्योऽप्यगमत् सुरराजदिदृक्षया।
अभावादथ भूपस्य राजपचं विशङ्क्य तं। मलेकज्यङ्गिरामिरस्तुज्याह्लादमुखान् भुवं।
एभ्राहिखानभट्टक्वारभट्टादींश्चक्रनायकः। वैशाखेऽब्दे बलवतो नगरस्थानरोधयत्।
सिद्धादेशातिपदवीं तदीयाश्चक्रपोददौ। दैवदृष्टस्य राजानहोसनस्य महात्मनः। १७०
तद्गौरवं त्रिभिर्मासैरसहिष्णुः स चक्रिराट्। होसराजानकं कारां चिक्षामीदकुतोभयः।
मलेकचक्रसेरङ्गताजेमेरादिबान्धवान्। तोषयित्वा राष्ट्रघोषैः पूर्णकामांस्तदाकरोत्।
ज्येष्ठेऽथ सप्तनवते एब्राह्मध्वपतेः सुताः। मलेकाब्दालकाद्यास्ते सन्धाय देशवासिभिः।
फतिहशाहजं खानमादायेस्कन्दराभिधं। ससैन्यमाययुर्वाह्यात् स्वांशैश्वर्य्यकाङ्क्षिणः।
अतप्रवेशस्त्वकेशकाचकोऽतिबली ययौ। योद्धुं लोलपुराङ्गारं स्माभृत्युकोऽध्वपान् प्रति। १७५
दृष्ट्वा चक्रबलं भूरि जग्मुर्भीत्याल्पसैनिकाः। मायामकोटं राष्ट्रान्ते दुर्गमं प्राणरक्षया।
अथानुसस्रे चक्रेशसैन्येनाध्वपतीन् प्रति। कोटभूम्यन्तरे भूरि ससैन्यं स न्यवीविशत्।
चमूद्वयादिनिर्गत्य शरासारैरवाकिरन्। योधादिवस्त्र भूमिस्थ गर्जन्तः समराङ्गने।
तावत्प्रतीहारपतिर्ज्येहाङ्गिरः ससैनिकः। गदायमेरवह्रदारमेरावर्ल्लुहरेऽविशत्।
ऊर्द्ध्वाधः संहतं शत्रुसैन्यं वीक्ष्य स चक्रपः। मसोदचक्रं स्वसुतं व्यसृजल्लुहरं प्रति। १८०
ताजचक्रादिसहितो वीरो मीरमसोदकः। शाहाभेदमनगरं सम्प्रापारियुयुत्सया।
दुर्गगोचरं गते चक्रिसुते युयुधिरे भटाः। आगच्छ प्रविशेत्युच्चैर्नदन्तः समराङ्गने।
मसोदमेरसङ्ग्रामे वीरो भीरगदायकः। शरावलीं चकर्त्तास्य वैजयन्तीमिव श्रियः।
पार्थपुत्त्रोपमे तस्मिन् रणं चक्रिणि कुर्वति। अरिमध्यात् सुसन्नद्धो नासीत् कोऽपि धनुर्धरः।
मा पलायन्त समराद्वीरा वीरगुणोज्झिताः। जिताः शत्रुसमूहेन व्यूहेनागम्यतामिति। १८५
इत्युक्तेऽर्जुनराजानकेनैकेनागता भटाः। युद्धाय विविशुस्तूर्णं शलभा इव पावकं।
प्रत्यायाते ससैन्येऽथ प्रयुध्यैतैर्महारथैः। गदायमेरः स्वर्नारीप्रणयित्वमथाश्रयत्।
स्वस्नेयश्चक्रिणो दत्तनायकः पुष्पनायकः। दृष्ट्वेव नीतस्तूर्णं स स्वस्त्रीभिः समराङ्गणात्।
सेनान्यं निहतं वीक्ष्य वीरास्तदनुयायिनः। मसोदमेरं धावित्वा जघ्नास्मिन् शरेण ते।
शरनिर्भिन्ननयनोऽन्यपतन्निहतो भुवि। मसोदमेरः प्रवरो धन्विनां चक्रिणः सुतः। १९०
विशीर्णे रिपुभिश्चक्रिसुते तरलसन्निभे। अनीकिनी परं लेभे मुक्ताहारा न कुत्रचित्।

डोमराजानकोगाजमेरः प्टङ्गारभट्टकः । एते विद्रुतास्तत्राजौ बहुाः पापिजनैर्हताः ।
प्रतीहारपतेः सेना प्रनष्टा पुरमाविशत् । हिमदग्धमयोविशा सा प्रयाता यथागतं ।
तादृशे तनये वीरे निहते सङ्गरेऽरिभिः । काचचक्रस्य तद्दुःखात् कालुष्यमगमन्मनः ।
सेनान्यं दुःखितं वीक्ष्य ताजचक्रादयोनिजाः । अवोचन् समये चास्मिन् दैन्यं मा संश्रयेश्वर । १९५
निर्ययावथ चक्रेशोयोद्धुं मार्गेशसैनिकान् । पारावारस्थितान् कोऽपि पुत्रशोकादविक्लवः ।
युयुत्सौ काचचक्रेशसैन्ये रिपुबलैश्चिरं । याम्यादीनतयाभूवन् किंकर्त्तव्यतयाकुलाः ।
मार्गेशाः ख्यातवीर्य्यास्ते वैरिनिष्ठस्य चक्रिणः । पौरुषं वीक्ष्य स्थानेन युतायातादिगन्तरं ।
यथागतं गतेष्वेषु ससैन्येषु नृपान्वितः । विजयी नगरं प्राप चक्रेशः शोकविह्वलः ।
वीरं धीरं गुणज्ञं महायोधपुरःसरं । मल्लेकोदोलतं ज्ञात्वा चक्रेशोऽभूद्वियोगिनः । २००
समस्तं ग्रामराष्ट्रादि पुत्रसम्बन्धि धन्विने । ददौ दोलतचक्राय भ्रातृपुत्राय स प्रभुः ।
वर्षेऽष्टानवते राजपुत्रमाजग्मुरध्वपाः । हुसेनखानमादाय घटिकाद्वारपर्वतात् ।
तामसोमरुगास्थाने स्थापिते सैनिकेऽध्वपैः । मल्लेककाचचक्रस्य बलं सन्धपुरेऽविशन् ।
विज्ञातचक्रिवीर्य्यास्ते मार्गपाश्चल्पसैनिकाः । गिरिमार्गादवारोहन्नाधर्यामेषु केषुचित् ।
अध्वेशसैन्यात्तद्दैन्यान्निर्गत्याश्रिश्रयद्द्रुतं । धोमराजात्मजएदराजानश्चक्रिणः समं । २०५
तच्छ्रुत्वा तेऽध्वपाः प्रत्यागतास्तत्पर्वताध्वना । आज्ञापिशाचिका त्यक्ता मिचङ्गोहारानुविक्रता ।
मार्गेशवाहिनी मिचङ्गोहाख्यानशिलोच्चयात् । विशीर्णा शतधा याता समङ्गा वाद्यरत्नते ।
हुसेनखानः सोऽस्त्वत्रामार्गे पञ्चत्वमागतः । आदाय शिबिकां तूर्णमानीतोनि नपाश्वैः ।
कश्मीरानथ कृत्वास्य चान्त्यकर्म्म मृताजिरे । शयितः पितृपार्श्वेऽशोग र्त्तेऽमात्यैर्महात्मभिः ।
शस्त्रेण ये वारयितुमशक्तावैरिणोऽभवन् । नखैरपास्तभाग्यानामुदये काचचक्रिणः । २१०
प्रतीहारकुलोद्भवचन्द्रोमल्लेकज्यङ्गुरः । ज्वालाभिर्वा ज्वरदेशेऽत्र तत्काले पञ्चतां ययौ ।
आनीतास्त्वक्रिणा मार्गपाब्दालुहरादयः । यौनसम्बन्धन्यायेन कश्मीरान्विविशुस्ततः ।
तथाहि लुहराध्वेशः स्वसुतां परिणीतवान् । मल्लेककाचचक्राय शक्रायेव पुलोमजां ।
मल्लेकाब्दालकायाथ चक्रेशः स्वसुतां ददौ । परिणीतश्चिरोत्सवामिव स्रोतस्तरङ्गिणीं ।
श्रीमता ताजचक्रेण स्मरेणेव रतिर्यथा । उदाहिता मार्गपतेरब्दालस्यात्मजा तदा । २१५
ततः काचचक्रेण राष्ट्रभोगैः क्रमागतैः । महद्भिर्दानमानैश्च मार्गेशानां कृतार्थना ।
अन्वहं वर्द्धिते प्रेम्णि मार्गेशैः सह चक्रिणां । बन्धुना रिगचक्रेण दैवाद्रोहस्ततस्तु सः ।
काशोजयचेनैजन वाभारेण विपाटितः । तदेव हस्तिनापुर्य्यामेभ्राहेमोनृपेश्वरः ।
तद्द्वेषोत्थरजोध्वस्तान प्राकाशमनः कुर्वीचन् । आशागजपतेर्वीररत्नानामनुयायिनां ।
मार्गेशदीपस्त्रक्षेशस्नेहपूर्णोविकारितः । कर्णेजपाम्बुपूरेण रिगचक्रानिलैरयोः । २२०
तद्द्वेषोत्थानलज्वलन्मनसश्चक्रिणः कृताः । रिगचक्रनिरोधाय स्वजनाप्यायेन मैत्यता ।

तृतीयेऽब्देऽध्वपास्ते तु निर्व्वेहाय चक्रिणं प्रति । आलेमेरकृताश्वासाश्चिरोगुरारं न्यवीविशत् ।
विदित्वा तादृशेद्वृत्तं मन्त्रयित्वा मनीषिता । न्यविशच्चकप: सैन्ये योद्धुं स्वं जालहृगत्वे ।
अथाध्यास्यान्मदानाद्येसहृटाउद्भटारणे । न शक्तश्चक्रिपैन्यान्त: केनापि विनिवर्त्तितुं ।
शतस्थलपालशादिदेशेष्वष्वेशसैनिकैः । प्रयुध्य शतशोऽहानि निर्भयश्चक्रिपोऽभवत् । २२५
रात्रौ चक्रबलाघाते लहरे याटिकातलं । भूपाले काचचक्रेशावा स्यदेश भयाकुल: ।
विरोधमब्धातशाया आलेमेरेण धीमता । ता: पुष्पिता: पल्लविताश्चक्रेशाध्वेशभूमिषु ।
हिन्दुवाटं प्रयातेऽस्मिन्मुखे मन्त्रिणि भूमिभृत । साम्राज्यमकरोद्दैशेऽध्वेशमन्त्रिभिरावृत: ।
वहिश्चक्रेश्वरेणात्र सामन्ता: करदायिन: । श्रीजैनशाहवद्रीत्या कृता: स्वबलशालिना ।
ताजचक्रादयोवीराभ्रातरोलोहरादिषु । आहवे मुग्गुलान् हत्वा चक्रु: स्वं सफलं वय: । २३०
दुश्चेष्टिते विचिन्त्यात्र युवराजस्य चक्रप: । खानमेस्कन्दरं तं स हरोधाजगरमिव ।
तादृक् साहसिकं वीक्ष्य चक्रेशं भूमिपोऽनयत् । चतुर्थेऽब्दे शुचौ मासे काश्मीरात्स्वं दिगन्तरात् ।
पिता भ्रातायवा पुत्त्रोगाश्चा राज्यजिहीर्षया । शत्रु: कथितालोके किं करोत्यपरोरिपु: ।
इत्थं विदितभूपालचरिताश्चध्वपास्तत: । ससैन्या: प्रययुर्वाश्चदेशं कीचाश्रमाध्वना ।
शत्रुश्यनं समादाय प्राप्ते चक्रिपतौ नृप: । राज्यं निष्कण्टकं मेने परितोषमुपाययौ । २३५
खानएस्कन्दरोराजभृत्यैर्नीतान्पालयं । अपुनर्दर्शना: कुर्व्वन् श्यामामेचोत्पलैर्दिश: ।
नृपादेशादथ क्रूरानेत्रोत्पाटनमञ्जसा । श्यमादेव कुरङ्गाय व्यधूराजात्मजाय ते ।
व्यधूराजतनूजाय कुरङ्गायेव सारसा: । तत्क्षणे या व्यथा तेन प्राप्ता वक्तुं न पार्य्यते ।
तं विना हृषनिर्दैन्यांस्तान् क्रूरान् राजसेवकान् । पित्रो: शापान् फलितोधनगुल्मस्य तस्य वा ।
ज्ञात्वाकृत्या अमाशीनानध्वेशांश्चक्रिराट् तत: । गत्वा वराहमूलान्ता क्लीनगर्य्यां न्यवीविशत् । २४०
पारावारात् समागत्य तत्रान्योन्यबलद्वयं । व्यधाज्जनचयं घोरं जयाजयपरीक्षया ।
गिरीनुल्लङ्घ्य यातोऽथ चक्रिभ्राटसुतोनिशि । मल्लकदालतामार्गपशान्देशान्यवारयत् ।
असमर्थोऽध्वना यातुं मेयामेरोऽध्वपाग्रणी: । मार्गे पश्चत्वमायातास्खलिता: केऽपि सायुधा: ।
अथाध्वपेषु नष्टेषु यातेष्वेवं वहिर्भयात् । स महम्मदशाहोऽगान्नगरं चक्रिभिर्वृत: ।
धत्ते मुदं जडमति: शमितारिवक्रिस्तावद्धुरेति नितरां विषमोऽग्निरस्य ।
मत्स्यादशाहनृपति: स्वसुतादवाप साम्राज्यभङ्गमहहा घटना विधातु: । २४५
तथाहि भूभुजानेन गजाधीशनिवेशने । पुत्त्रएश्चाहिमाखानोनीविन्दत्वाभवत्पुरा ।
तुरुष्काहववातेन विधूता शतधा चमू: । याता तत्क्षीवरस्रोघयुता नौरिव सागरे ।
तदाहवबधान्मुक्ताभाविराज्यादयास्तत: । खान: स प्राप काश्मीरान् पित्रोर्हविवर्जित: ।
प्रादुर्बभूव राजानं प्रति राज्यजिहीर्षया । अस्मिन्नवसरे चक्रपतेर्दुष्टविषूचिका ।
राजान्तरङ्गांस्वेक्षादुष्टरोगान् भिषगिव । मल्लेकलहभट्टादीन् कारागारे न्यचिक्षिपत् । २५०

ताजचक्रालये बद्धस्थानैर्मेरेर्निजानुगैः। विमुच्य रक्षिणोराजौ नीत्वा क्षिप्तोऽप्रिमत्करं।
तद्वैषम्यादिवाग्दोषोपरागाद्राहुणेव कुधा। मन्त्री दशाहभानुत्वं चकाराक्रमितैर्दिनैः।
इत्थमेकादशाब्दान् स दश मासान्दिनानि च। रक्षित्वा काश्यपीं राज्ञा मन्त्री दशलितोऽभवत्।
धर्मः फलति कालेन सद्यः पाकोहि सोऽभवत्। स्वामस्थान्ध्याद्यथा याभूद्राज्यभ्रंशाकृपस्य सा।
गम्भोडाख्य स्वस्थानं प्रहितोऽथ स चक्रिणा। दत्त्वा न्यायकसय्यादीन्कूरान्रक्षिणमाश्रितान्। २१५
॥ इति महम्मदशाहराज्यभ्रंशः ॥

जगत्सृष्टिस्थितिध्वंसहेतवे वृषकेतवे। भवाब्धिसेतवे ब्रह्मविष्णुरुद्रात्मने नमः।
अथ काञ्चनचक्रेण पुत्रामहम्मदभूभुजः। एभ्राहीमशाहइत्याख्यां कृत्वा राज्येऽभ्यषिच्यत।
स्वमन्त्रिपदवीं दीप्तां चक्रे चक्रेश्वरस्ततः। स्वीकृत्य राज्यतन्त्राणि दृक्पात्रोत्तवैर्धनैः।
नायामप्रमुखैराष्ट्रैराजयोग्यैर्न्यवेशयत्। अनुगांस्ताजचक्रेशमे मामेरादिकान् स्वकान्।
वाह्ले चाब्दालमार्गेशोदिशां मुम्मुनेश्वरं। सेवां मार्गयितुं मर्जवाभारं प्रययौ तथा। ५
आकारेङ्गितवाक्चेष्टासम्पूर्णं वीक्ष्य मार्गपं। चणं तुरुष्कराजोऽभूद्विस्मयानतकन्धरः।
तुरुष्कभूपेन ततोऽवाप्य मन्त्रिवरस्य तं। सहस्रसङ्ख्या वीराणां सेनास्मै प्रतिपादिता।
इत्थं प्रवृद्धां वार्त्तां तां देशे पञ्चमहायोः। वैशाखे शुनवोसचक्रपतिर्व्विक्रमशोभितः।
स्वःक्रीडामिव कुर्व्वन्तु भूमौ चक्रिषु मार्गपाः। मल्लकाब्दाललुहरमार्गेशाद्यामहारथाः।
गिरीनुल्लङ्घ्य वाङ्गलात् कश्मीरान्विविशुर्द्रुतं। शिवालभेगमक्ष्मादशानादिमुम्मुलेष्ट्राः। १०
फताहशाहजं खानं नाजीकशायययायिनं। कृत्वा निविष्टाः सन्नद्धाः प्रतापपुरधन्विनि।
मुचैःचक्रपः सेनां नीलाश्वे स्वां न्यवीविशत्। सैन्यद्वयोद्धतावीराः स्वामिभक्तिमदर्शयन्।
विपक्षपक्षिभिश्चके श्वेतचैन्यविहायसि। विहाय सम्पदं यातुं नाशक्नुवन् पक्षिभिः।
ततस्चक्रपतिं दूतः प्राह मे गमवाचिकं। भोभोश्चक्रपते वाह्ले मामकाः करदायिनः।
हृतायेन स्ववीर्येण लचैः पञ्चभिराहृतः। चतोगजपतिः श्रीमानेभ्राहिमोबलोत्कटः।
तस्य मेरजवाभोरराजस्यानुचरा इमे। मया नीताः सहायार्थं सन्नद्धोऽस्तु भवान् रणे।
इत्युक्ते लेखहारेण चक्रेशोऽन्ववदद्दमुं। दिल्ली न देशः काश्मीराः प्रतिष्ठाना वयं न ते।
फलपाकोऽमतोदेशामुग्मुलानां महीजसां।
अथ वीरा महाजस्का महावीर्य्या धनुर्धराः। एभ्राहिमखानसेरङ्गमेरमलिकताजकाः।
तथा मार्गेशपक्षास्तु मल्लकलुहरादयः। रिगाचक्रेशमलेकोषेखशाशिशिभिगादयः।
कुरुपाण्डवसैन्यस्य युद्धं स्मर्तुमिवोद्यताः। निर्य्ययुः समरं वीराः स्वबाहुबलदर्पिताः।
रिगचक्रेशवीरेण शक्तिः क्षिप्ता च वैरिषु। प्रकृत्ताद्भुतवीरेण ताजमेरेण सत्वरं।
मेरसेरङ्गचक्रेण प्रहिता करवालिका। रिपोर्लुहरमेरस्य याता पुष्पवरोपमां।
एवं प्रवीरैरन्योन्यं प्रकीर्ये समराम्बरं। स्ववीर्य्यसमनाभ्युद्यत्तोगन्धाकुलितं कृतं।

ततः स्वसैन्यैः समाक्रान्ता राजचक्रेश्वरद्वयी । वातोद्धूतपताकाभिस्तर्जयन्निव वैरिणः ।
रणः प्रवृत्ते तत्र चक्रमार्गेशसैन्ययोः । आगच्छ जहि तिष्ठेति शब्दोऽभूद्भटसङ्कुले । २८०

समरोद्धृतमेत्य ताजचक्रमवदल्लहरमार्गपस्समेत्य ।

कुरु युद्धं किमतः परं किमन्यन्मनुजैः स्वामिदशासु साध्यते तत् ।

तन्निशम्य चिरं युद्ध्वा वीरैर्मल्लेकताजकः । शिश्रिये वीरशयनं नाकनारीविराजितं ।
कीर्त्तिशेषं गते तस्मिन् परे चक्रिसहोदराः । सैव्यामल्लेकसेरङ्गसेराद्यामुग्गुलैर्युताः ।
स्वसैन्यं निहतं दृष्ट्वा चक्रेशोऽल्पबलान्वितः । स्वशालयं ययौ भीत्या शोकेन च समाकुलः ।
अथ मार्गेश्वराजित्वा मल्लेकाब्दालकादयः । विविशुर्नगरं लोकानाश्वासन्तोभयाकुलान् । २८५
गत्वा नृपाङ्गने सर्व्वे छत्रचामरशोभितं । प्रददू राज्यतिलकमब्धिशाराजसूनवे ।
अथ नाजोकशाहेन पित्र्ये सिंहासने श्रिते । प्रहर्षाकुलिताश्चावचाः सर्व्वेऽभवंस्तदा ।
गता जमालमरुगां सनृपास्तेऽथ मन्त्रिणः । मल्लेकाब्दालकस्तेषां शालेमेरस्य चापरः ।
मार्गेशलुहरस्तेषां शोरिगचक्रस्य चापरः । जिभकाऽर्थे चतुर्भागैस्तैश्चतुर्भिरिहत्यभूः ।
स्वशालयस्थं चक्रेशं विसृष्टैर्मन्त्रिहात्मभिः । लेखहारस्तमाह स्म मार्गेशमुखवाचि [illegible] । २९०
भोभोश्चक्रपते स्वामिभक्तिज्योत्स्ना भवादृशैः । दुर्म्मन्त्रिभिरमात्यानां विमला मलिनीकृता ।
यस्य वालस्य साम्राज्ये राज्यकार्य्येषु मन्त्रिणः । यद्बुद्ध्वा[illegible]लयएवासन् स रुद्धोभवता कथं ।
रवेरावरणं मूढः कुण्डेन विदधाति कः । इत्थं दूतमुखाच्छ्रुत्वा मुमोच नृपतिं त्वसौ ।
ततोमल्लदशाहः स गत्वा लोहरमासदत् । पूर्व्वार्व्वरीशवद्रक्षाशुल्कादमपि चायहीत् ।
मीतिश्रीमन्वयित्वाथ मार्गेशैर्मुग्गुलांस्ततः । विसर्जयामास नृपः संमान्यैतान् स्वकम्पदं । २९५
उल्लङ्घ्य लोहरं प्रापुस्तुरुष्काः स्वनिवेशनं । मल्लादशाहं संलेभे शालेमेरश्चिरं प्रभुं ।
हेमन्तमतिवाह्याथ वसन्तमिव तं नृपं । कश्मीरोपवने सेरामार्गेशामुमनोनयन् ।
राज्यं कृत्वाथ वर्षैकं दशम्यां नाजिकानृपः । ज्येष्ठशुक्ले नृपात् प्राप यौवराज्यं महम्मदात् ।
षष्ठेऽब्दे मल्लदः शाहोऽभिषिक्तः सचिवैः शुचौ । राज्ये स्वशालयान्मुक्तोभूयोजातद्रवाद्भुतः ।
दिनं मेरेजवासोरः स प्रयातः स्वपुत्रयोः । दत्वा स्वविभवं कामराजहोमायथोस्तदा । ३००
सप्तमेऽब्देऽब्दपैः सार्द्धं युद्धेच्छुः काचचक्रपः । मौर्व्वारयामादगमत् ससैन्योऽथ दिगन्तरं ।
याति चक्रपतौ वीरे ततः पश्चिमदिग्भवः । रतिदेनुरुष[illegible]न्तुं मूर्ध्नि नित्यमधार्थ्यत ।
तद्वर्षे कार्त्तिके शुक्ले मल्लामाख्यश्च भूपतिः । मेरेजकामराजस्य कश्मीरान् जेतुमाययौ ।
शिखालभिगमल्लादखानादिमुग्गुलैः सह । कुर्व्वन् दश दिशः पूर्णा गर्जद्भिः प्रबलैर्बलैः ।
श्रुत्वा मल्लदशाहाद्यास्तक्रोधं शोघ्रमानयन् । साहायकार्थमब्धिशैरा[illegible]धापक्लतार्हणं । ३०५
सहस्रैरश्ववाराणां स्वेच्छानगरमाविशन् । काश्मीरिकास्तु दुर्गेषु स्वबलानि न्यवीविशुः ।
भयात् पौरजने याते गिरिगह्वरवर्त्मसु । वीरेषु सैन्यवाहुल्यात् प्रनष्टेषु च तत्र तु ।

शून्यं पुरवरं दृष्ट्वा मुग्गुलास्ते क्रुधादहन्। गृहाणि राजधानीश्च कुटदीनविलुण्ठकाः।
दुर्गेभ्यो निर्गता वीरास्तुरुष्कैरगृहवेच्छया। स्वेच्छया प्राणसर्व्वस्वं विक्रीय यत्नपादधुः।
ग्रामेषु नगरे राज्ये तुरुष्कैर्भिक्षुपैर्हृताः। महस्रसङ्ख्यलोकानां जुलुच्यवधकारिभिः। ११०
ततः काश्मीरिकैर्वीरैर्मार्गैर्भेद्यक्रिभिश्च ते। चकोर्णुभिस्तमांसीव मन्ध्यापापासिताहताः।
॥ इति तुरुष्कापद्रवः ॥
मुक्तास्ते माहमादीराः स्वगृहेषु स्थितिं व्यधुः। मार्गशामादरचस्त. कायचक्रोवस्थिर्य्येयो।
वर्षेऽष्टमे शुचौ शूरपुरात् सोऽप्यायथौ पुनः। मस्तं प्रतिहतं ज्ञात्वा वाक्यं याता यथागतं।
मार्गमासेऽत्र शरदि काश्कारीयाश्चमूचराः। मेराजहैदराद्याः श्रीषेदखानमहीभृतः।
हयारोहसहस्रैर्दादशभिः परिवारिताः। काश्मीरामाययुर्जेतुं श्येनादव विहङ्गमान्। ११५
कोटाङ्गणगिर्य्यन्तभाग चक्रन्तो नृपालयं। प्रविशन्तोभवन्तीत्थं श्रुत्वा रुन्ताविपेदिरे।
तुरुष्कोपप्लवालोकैः काश्कारोपद्रवोमहान्। पश्चाचि सूर्य्यग्रहणं चन्द्रग्रासादिशिष्यते।
चलिते सकले जीवलोके वेश्मावलिस्ततः। शरराशिरिवोच्छामशून्याभूद्भयदायिनी।
तस्यां दाहक्रियां कर्त्तुं तीव्रवह्निप्रदायकाः। सेकन्धरमहाराजधानीं रम्यामनेशयन्।
नीचावचग्रहैर्लक्ष्यसंख्यैर्दग्धैः पुरोर्व्वरा। जाता स्मशानमभूवत् सा दग्धकाष्ठभयङ्करा। १२०
राजधानीदृयं तादृक् लभ्यते कुत्र भूमिपैः। सुधादार्व्विष्टकाचित्रैः कोटिसङ्ख्या व्ययीकृता
श्रीजैननगरे दिद्दामठे चाग्निं विना कृतं। राजधानीदृयं भूभृत्सुकृतमिव तत् स्थितं।
वेतालसाधनायुक्तादृवासम् मुग्गुलाधुनं। लब्धं यत्नसन्निहितं गुप्तं पौरधनं तु यैः।
जलावरणयुक्तासु भूपभूमिषु शिश्रियुः। काश्मीरिकाश्चमूनाथाश्चाश्रयान् स्वेच्छयाहृया।
चिरोत्ङ्गाग्च्च हाज्योऽङ्कोट्टं चक्रधरं तथा। श्रुत्वाभ्यवाहयन् मासत्रयं स्वेच्छैः प्रयुध्य ते। १२५
दैन्यरूपेण खःश्रेन स्थितांश्चक्रधराश्मिके। काश्मीरिकान् प्रति कृतं युद्धं निष्फलमभ्यगात्।
सम्ध्यमप्यभवद्युद्धं कृतं काश्मीरिकान् प्रति ॥ इति वा पाठः ॥
खिलीकृतास्तुरुष्कैस्ता भुवोमत्तवराज्यगाः। हत्वा फलसमृद्धिं तां हत्वा ग्राम्यजनान् क्रुधा।
ये याता नौषु तीर्त्वा संख्याश्रमाजिभूमिषु। सवालवृद्धाः सुखिनः स्वायुःशेषेण रक्षिताः।
जलुच्योपप्लवे पूर्व्वं तथा कज्जलसङ्करे। चौभोऽभूत्तादृशो देशे कुकृत्यात् पापिनां विशां।
चक्राधारादत्य भूपेन्द्रयुक्ता भीमादेवीसन्निधौ सन्निवेशं।
चक्रुस्तीर्त्वा लेदरीवामपारं चेकग्राद्यामार्गपाश्वाहवाय। १३०
खानरस्कन्दरोमेर्जाहैदरोऽन्ये महारथाः। काश्मीरिकान् प्रति ययुः सन्नद्धास्तत्र संयुगं।
मार्त्ताण्डपादमूले तत्राहैबुर्व्वलदयात्प्राणान्। मल्लकालकहोसनमेरशिखालाः कमालमेरश्च।
काश्कारीयाः प्रवीराश्च केचिद्युद्धा दिवं ययुः। सफलं स्ववयः कृत्वा मल्लकालादिभीरणे।

रे मूढाः कुरुत सदैव देवसेवां तान् सर्व्वान् भवविभवान् विहाय लोलान्।
दृष्ट्वा तन्मरणमथालिमेरनाम्नः सङ्ग्रामे मुगुलवरैर्हि देशहेतोः।
विदुरोपमिते तस्मिन्निहते दुद्रुवुर्भटाः। काश्मीरिकाः कृताश्वासाश्चक्रेशाध्विशनायकैः। ५३५
कबन्धनर्त्तकायच्चनरा वेतालराक्षसाः। महामांसाशनव्यग्राजन्यव्याप्तादवाहवे।
रणोद्याने वीरपानमदोन्मत्तेषु तेष्वथ। हर्तशिष्टे चमूयुग्मे स्वाश्रयेषु न्यविक्षत।
अथ चक्रेशमार्गेशौ नृपादेशात् समेत्य तैः। मुग्गुलैः सह सन्धानमकार्ष्टां पौरुषोर्जितौ।
नवसङ्ख्यानि वस्त्राणि कतेफसोत्सवस्ततैः। ताभ्यां तद्भाषयादाय मुग्गुलाभूपतेः पुरा।
नृपमुद्राङ्कितं पत्रं गृहीत्वा मोसुलाचरैः। प्रत्यायाताः स्वसैन्ये तत्कुर्व्वन्तो हर्षनिर्भरं। ५४०
धाटीभिः पामरानीताः स्त्रीपुमान्पुष्पदन्तिकात्। मुक्ता हस्सनमेराद्यैरानीताः करुणापरैः।
ततोऽब्दे नवमे ज्यैष्ठे स्वदेशं मुग्गुला ययुः। बलात् पौरस्त्रियं सान्नादाय राजसुतामपि।
इत्थं हतीसरोदेशे पीडाभूत् पापिनां विशां। पूर्व्वपश्चिमतः केतोरनिशन्दिवि दर्शनात्।
॥ इति कास्कारीयोपद्रवः ॥
पञ्चशालिवरस्फातिपूर्णक्षेत्रेषु सर्व्वतः। नभसस्तारकाः पेतुर्भूयः केतुरदृश्यत।
मन्यङ्गीर्णेऽग्रगोत्र तदुपद्रवरक्षया। उदजृम्भन्महाघोरो दुर्भिक्षोऽश्वपतेरिपुः। ५४५
निविष्टे मण्डलेऽमुष्मिंस्तैर्हस्तसैनिकास्ततः। क्षुत्पिपासादयो लोकपीडकाबलवत्तराः।
सहस्रदशभिर्निष्कैर्लभ्या मूल्येन खार्य्यभूत्। धान्यस्य गतिमादात्तु कान्यस्य धनिनो विना।
भर्तृभक्तिं सुतस्नेहं शुश्रूषां पित्रोरेव च। हित्वा स्वप्राणरक्षायै चेरुः स्त्रीपुरुषाः क्षुधा।
भुक्त्वा द्वित्रिचतुर्व्वारं क्षुधार्त्तो दिवसान्तरे। अटन्तः प्रेतरूपा हि दृष्ट्वा भोजनवाञ्छया।
तत्कालेऽब्दालमल्लेकादयः पुण्यरता हि ते। प्रत्यहं तण्डुलशतैः पक्वान्नैः पुपुषुर्जनं। ५५०
ग्रामेषु नगरे राजमार्गेषु गणनास्तु न। क्षुत्पिपासाप्रमीतानां प्रेतानामिव देहिनां।
सञ्चितं रूप्यकुप्यादि विक्रीय व्यधुरात्मनः। प्राणसन्धारणं केचिच्छाकेनाघोटपिण्यकैः।
उपद्रवभयादेष दुर्भिक्षोपप्लवो महान्। गलनेत्रामयादुष्टविस्फोटोद्भूतिदुःसहः।
ज्यैष्ठान्तं दशमाब्दस्य नवमाद्वत्सरात्कृशं। घोरे दुर्भिक्षतमसि परितः क्रान्तमण्डले।
गुष्ठिवीजोद्भवस्नेहधूपैर्दीपैः प्रकाशयन्। आशा श्वनृपामात्यः सुकालो योद्धुमाययौ। ५५५
यथा गोधूमकलटा उद्ययुस्तन्भजा भुवः। कुर्व्वन्तः स्वफलैः शेषजन्तोरारात्रिकामिव।
स्वबलैर्भ्रंशमाक्रान्तमवेत्याशाधिपः स्वयं। आययौ बलिनं जेतुं दुर्भिक्षं घोरराक्षसं।
वितत्य महतीं सेनां प्रियङ्गुशालिकोद्रवैः। यन्त्राश्मभिरिवाघोटैर्जित्वा तं स न्यविक्षत।
॥ इति दुर्भिक्षोपद्रवः ॥
अश्वराजफलैः पुष्टाजन्तवोऽतिकृशास्ततः। पुनर्जातमिवात्मानममन्यन्त दिवानिशं।
तदा काञ्चनचक्रेशः स्थितिं जनपुरे व्यधात्। मन्त्रित्वमध्वपादेशाद्राज्ञोऽभ्यर्णे विभूषयन्। ५६०

अपचाकारकश्चक्रपतिर्मण्डवराज्यगः। भूमीरदण्डयन्मार्गपाणां ताटस्थ्यवीक्षणात्।
अत्रान्तरे महान्देशो दोहादृष्टैरिवामयैः। स्वस्थावाथाश्रयैरेतैः पीडया जर्जरीकृतः।
तदुत्थपापसम्पातात्तैत्रान्तेऽब्दे चयोदशे। राजा महम्मदशाहोऽभूदस्वस्थोऽनियतेर्बलात्।
कान्तं देहं रुजाक्रान्तं श्रान्तं वीक्ष्य च भूमिपः। मलेकलद्दभट्टाख्यं सखेदं प्राह मन्त्रिणं।
राजधर्म्मोद्भवैः पुण्यपापैः सम्बर्द्धितोऽपि सन्। तथापि कायः सापाय इति सर्व्वत्र निश्चयः। १६५
अस्मद्वंशे महीयांसः शंघदेनादयो नृपाः। श्रीजैनोल्लाभदेनश्चाप्येते पूर्व्वपितामहाः।
तद्वंश्योऽहं मदीयः कः कीदृशोऽमत्परो भवेत्। इति चिन्ताकुलं चेतोज्वरेणाद्यापि दह्यते।
इत्युक्त्वा विरते राज्ञि मार्गेशाब्दालकादयः। आगतास्तादृशं वीक्ष्य साश्रुनेत्रास्तमब्रुवन्।
भूपास्मदपचारेण प्रजाभाग्यैरथापि ते। कायक्लेशोऽस्ति स्वस्यैव दण्डोऽभूत्यापराधतः।
श्रुत्वाब्रवीन्नृपस्तेषां वचो मन्तनयाः सदा। भवद्भिः पालनीयाश्च वयं यामः पराध्वनि। १७०
आक्रन्दोऽभून्महाराजगृहे श्रुत्वा नृपोदितं। तदङ्गि निष्कोशयश्च राज्ञा धर्म्मे ण योजिताः।
प्राप्ते पुष्पाकरे मासे व्यथार्त्तस्यास्य भूभुजः। दातुर्जातु विपत्तिः स्यात् कृष्णपक्षे कथञ्चन।
ज्येष्ठशुक्लादिदिवसे गुरुवारे नगार्य्यमा। वर्षान् पञ्च कृतो भूयो राज्यं कृत्वास्तमाययौ।
तस्मिन् याते दिवं लोकः सशोको विललाप तं। हा कं श्रयाम भवति नाकलोकमुपस्थिते।
अस्मान् को नृपते कृच्छ्रात्त्वां विना पालयिष्यति। मृगाङ्कसुन्दराकार महासेनपराक्रम। १७५
महम्मदमहीपाल महीं हित्वा क यास्यसि। इति प्रलापमुखरे राजद्वारे स्थिता जनाः।
संस्थितस्य नृपस्यादुर्वाष्पैरिव जलाञ्जलीन्। कर्णीरथमथारोप्य शवं हृदन्यूताजिरे।
दत्तस्कन्धाः पितुः पार्श्वे गोगर्त्ते मन्त्रिणोऽक्षिपन्। केन्दुकामलशय्यासु नृपाङ्गं प्रथमं प्रभोः।
क शर्कैरिलभूम्यन्तस्तमोऽन्धे विवरस्थितिः। तदङ्गि शोकमूकस्य लोकस्योच्छ्वासनात्परं।
धूमादि रन्धनाभावान्नालक्ष्यत गृहेषु तत्।

॥ इति महम्मदशाहस्वर्याणं ॥

मार्गेशेन कृतांशः सप्रशंसोऽस्य मन्त्रिभिः। शंसशाहोऽयमित्याख्यां कृत्वा पुत्रोऽभ्यषिच्यत। १८०
नवराज्योर्ज्जितं चैतं युवानं वीक्ष्य भूमिपं। महान्तः पामराः सर्व्वे तुतुषू राजवल्लभाः।
चिरं स्वे पैतृके राज्ये स्थायादिति जनाशिषः। शृण्वन् राजगृहं प्राप शंसशाहः सहानुजः।
तस्मिन् राज्यस्थिते जैनपुरान्नगरमाययौ। काचचक्रपतीरिगचक्रास्त्रसोमहाबलः।
दृष्ट्वा वीरं नमायान्तमुत्सभद्राश्वितस्ततः। मार्गेशोऽस्मिनः प्रायात् कीचाश्रमेऽध्वपान्तिकं।
प्रविष्टो नगरं रम्यं काचचक्रः सभाजितः। नृपेण तेन सर्वहं परपक्षविमर्दनः। १८५
तथा काश्चनचक्रेशो ज्ञात्वा दूरगतान् रिपून्। सबलोगर्धमोद्वारे निविष्टोऽरिजिगीषया।
अत्यन्तिकस्थं बलिनं रिपुमाकर्ण्य मार्गपाः। चमूं निवेशयामासुस्तत्रैव जलगदान्तिके।
महात्मा रिमचक्रेशः काचचक्राध्वपक्षयोः। गत्वा प्रेरितदूतः स साम कर्त्तुमचेष्टवान्।

नगरे काचचक्रेश: क्रमराज्ये तु मार्गपा:। सन्तु सोऽहं समस्तेषामिति सन्धिं व्यधादयं।
अथ मार्गेशसैन्यस्यानानीयान्तिकमात्मन:। जैनस्चक्रेशमल्लेकदौलुतभ्रातृखानकाम्। ३९०
स्वबन्धून् काचचक्रेश आरुरोह जयी पुरं। निवासमकरोद्वीरो रिगचक्रालयेषु स:।
काचचक्रे स्थिते राज्ञोऽन्तिके निर्णयकारिणि। बलं बलवतां दृष्टं शौर्य्येण तु पृथग्जने।
आगत्य रिगचक्रेश: काचचक्रान्तिकं तदा। दिनान्युषित्वा ज्ञात्वास्य स्वल्पप्रेमागमत्पुन:।
मार्गेशनिकटं गत्वा वीचचक्रेशचेष्टितं। सम्मन्त्र्य वीरान् सर्व्वांस्तान् सङ्घट्य नृपाययगान्।
रिगचक्र: स मार्गेशं ज्ञात्वा दृष्टमिवामर्षं।

कश्मीरभूमौ प्रथिताश्रमात्याभीमार्ज्जुनद्रोणसमाररणेषु।
मल्लेकश्रीदौलुतगाजखानचक्रेशमुख्याश्च विचारदक्षा:। ३९५

सिद्धादेशात् प्रसिद्धस्य सिद्धादेशाधिकारिण:। श्रीमन्मल्लेकराजानजुज्यकस्य मुखात्तथा।
विज्ञाप्यन्तेऽत्र देशीयै: कान्दिशीकैर्बलातुरै:। सर्व्वैर्जनपदैर्दीनैर्दुरातङ्ककलङ्कितै:।
॥ तथाहि ॥ जैनशाहे दिवं याते दुर्ब्बलाबलवत्तरै:। पीडिता: कान्दिशीकाश्च जनाद्दण्डतोगता:
श्रीसैफडामरेन्द्रेण नृपामात्येन पालिता। लालिताथ प्रजा नित्यं दुर्व्यवस्थानिवारणात्।
पुण्यपापपरीपाकात्सम्भिरन्तरन्तरात्। पोषिता: शोषितालोका: सदिचारा विवेकत:। ४००
भानुरिव ततश्चक्रपतिर्मल्लेककाञ्चन:। उदेत्य मण्डलीं तां नृपादेशादभूषयत्।
विचारनिरतेऽमुष्मिन्नासीने राजमन्दिरे। बलं बलवता दृष्टं शौर्य्येण तु पृथग्जने।
वैमत्यान्महतां पापाद्दिशाश्च ततउत्थिता:। मुग्गुलान्तकदुर्भिक्षदोषास्तस्मिन् वहिर्गते।
मार्गेशाब्द्रालकानीतेभैरेजोऽगणयन्तत:। अप्राप्तानिव प्राप्त: स कश्मीरांश्चक्रिणोभयात्।
काचचक्रेशमल्लेके हिन्दुवाटे गते दिवं। काश्मीरिकाणां वाञ्छानामभूत् कलुषितं मन:। ४०५
तदाकर्ण्याथ भैरेजहैधगोऽचीकरन्महान्। कुलागतमिव स्वस्थं तदा कश्मीरमण्डलं।
चक्रेशेऽन्तर्हिते भूमौ मुग्गुलादैत्यरूपिण:। विचेरु: शारदापीठे नि:शङ्कमकुताभया:।
भैरेजमग्गुगोलस्य कश्मीरस्थस्य चान्तिकं। आययु: परदेशेभ्योमुग्गुला: सरघाइव।
बलेषु वर्द्धमानेषु तेषु यातीतवार्धिका। लोचप्रतिपदाहापान्ता भूर्हृता तैर्म्लेच्छयोगिभि:।
दिवानैर्लेखसङ्घैर्लिखिता मुसुलाचरै:। भूमि: समयराज्ञाणां हत्वाप्याय प्रजास्वपि। ४१०
इत्येव भूर्नभोमासि साध्वीवाथ व्यकम्पत। द्वाविंशेऽब्दे जनाक्षीवान् हताप्यायानवेक्ष्य सा।
प्रनष्टमुग्गुले देशे भूमीकुरखिलोजन:। काश्मीरिकाणां विजयाङ्कयोऽभूद्दर्पलिप्सया।
तुरुष्कसाहचर्य्यान्ते काश्मीरानात्यजंस्त्वयं। देशोभूमिर्भोजनस्य चिकित्सादण्डमद्भुतं।
दृष्ट्वा प्रभोऽपि लोकोऽयं नामुश्चद्दृदयाहृढां। दुर्व्वासनां महावैद्याश्चिकित्सां शास्त्रगामिव।
दुराचारादियं भूमिर्वायुकान्तेव भूरिश:। चिंशेऽब्दे चाश्वयुङ्मासे कम्पिता स्वामिनोमुक्त:। ४१५
अतन्त्राणान्महीदानामुक्ते लोचप्रतिपदे। मोचाचातिथिसत्काराद्धदोधर्मेण शाम्यति।

अदृष्टविप्रदेशेन स्वेच्छाक्रीडनकादिव । धात्रा विनिर्म्मित: स्रष्टुं जगदाराधमाभिध: ।
दृष्ट्वैनं स्त्रीयुतं चाग्रे प्रादुरासन् दशाष्ट च । सहस्राण्यालयान्यस्य विभोर्दुर्घटलीलया ।
अशकार्थदिव: सप्त भुव: षट्त्रिंशदाहृतं । जगत् स्फारमवेत्यर्षिरूपा: सृष्टा: दिगम्बरा: ।
विबुधानाश्रयी श्रीमान् रत्नेलोऽस्य दिगम्बर: । दिगम्बरेच्छया लोकस्थपालोमानवोऽजयत् । ४२०
खर्देवसृष्टिभूमध्ये हिमवान् गिरिसत्तम: । तत्रास्ति देश: काश्मीरो हारो भूमिवरस्त्रिय: ।
सतां सुकृतसंसारोऽगार: सर्व्वधनुष्मतां । नानाद्रुमलताकारो विहार: सर्व्वसम्पदां ।
मेधावी रेवतीशप्रथितभुजबल: सहृदयश्रीधरस्य भूपालेन्द्र: प्रतापोर्जितनिजयशसा भूषितोनामतो यै: ।
जीयात्तद्देशजन्मार्जितबहुवसुधामोद्धृतो भानुमूर्त्ति: काश्मीरान् यो हि नानानयतिमिरहतान् न्यायविज्ञान् व्यधत्त ।

मेरेजदेवधरमहम्मदवाक्प्रमाणाजीयाच्चिरं वसुमतीमवतीर्णएव ।
कर्त्तुं सतीसरसि नौशरवानतुल्यं पूर्व्वोर्व्वरीशचरितं चिरकालनष्टं ।
सर्व्वै: दिगम्बरवरैर्म्मिलितै: खदेवख्याताख्यतेरह पिम्बरवाटिकायां ।
एतां कुक्षत्यचरिताख्यदवाग्निदग्धां सत्कर्म्मसृष्टिनिवहै: परिपोषणाय । ४२५

श्रीमत्काञ्चनचक्रपे च विधिनाम्नर्योद्धृताख्याचरा राजि: काञ्चनदानतस्तव सदा सत्यं समीक्षामहे ।
भ्राजिष्णो करपद्मपर्णनिचयेऽभिज्ञानमेतादृशं सख्य: सोऽस्तु कर: परोपकृतयेऽजस्रं सहस्रं समा: ।
श्रीमन्नागपतीश तावकयश: शुभ्रं विलोक्यावहिश्चक्राधीशसमागतो ऋतुपतिस्त्वां सेवितुं सर्व्वत: ।
कुन्दै: कुड्मलकर्णिकारकुटजै: सम्मिलिता मञ्जरीपुष्पै: षट्पदकोकिलास्वनभरै: कुर्व्वञ्जयोद्घोषणं ।
सन्त: प्रमुदिता: केन न केन तव कर्म्मणा । वसन्तोभवतामस्तु वसन्त: शुभकृत् सदा ।
जिष्णु: सन्तापितारातिः कालखड्गधरो रणे । प्रणेता जगतां प्राण: शङ्करो विनतात्मनां ।
कलावान् राज्यराट् भास्वान् गुरुक्षाव्यश्चमङ्गल: । जीयाद्भूभूषणो नित्यं गाजशाहो महारथ: । ४३०
मुन्यग्निसङ्ख्ये वर्षे च शुचौ मासि सितेतरे । अष्टम्यां राजहोमायपुत्रस्याम्बरभूभुज: ।
मुग्गुलेशस्य सेनानीकरवाजधरान्वित: । नागोकशाह: पाषाणदेशं प्राप्तोजिगीषया ।
संमत्य गाजशाहोऽथ श्रुत्वा तद्दाश्चचेष्टितं । मल्लेकहोसचकेशं वाग्धदेशं व्यसर्जयत् ।
लोलमल्लेकचक्रेशपिञ्जदेभतखानकै: । युध्यापतिहमेरालकाद्यैर्म्मन्त्रिवरैर्युत: ।
वीरायुतै: पत्तिभिश्च नि:संख्यै: पटमण्डपै: । महात्मा होसमल्लेका निविष्ट: सुयलान्तरे । ४३५
तावन्मुग्गुलसैन्येन महता वाग्धभूर्हृता । विमला सज्जनस्येव चित्तभू: कलुषैर्म्मलै: ।
ततो राजपुरीदेशमशेषमाहृणोद्बलै: । मुग्गुलेशस्य प्राक्सेन्या: पाषाणेरकृतादरै: ।
क्रुद्ध: काश्मीरिकोराजाकर्ण्य शूरपुराद्बहि: । सबलोहिन्दुवाटं स प्रयातस्तज्जिगीषया ।
ऊर्जितां गाजशाहस्य चमूं दृष्ट्वा महीयसीं । मार्दवं चक्रुसेनागाद्धिमानीवार्करश्मिभि: ।
बलोर्जितं गाजशाहबलमाजय्मतुर्द्धृतं । कन्तेमल्लकलुन्दरमल्लेकावथ चाग्निकं । ४४०
रङ्गेषु दुर्गमार्गेषु प्रभूतं मौग्गुलं बलं । वीरै: कतिहखानाद्यैर्म्मञ्जिराकुलीकृतं ।

खुज्यहाज्यकयोशोफचकाद्यैर्मुग्गुलान्वितैः। साम राजपुरीराजा गाजशाहभयात् कृतं।
नौशहारस्थिते शाहनाजोके मुग्गुलास्तथा। ऊचुस्ते सन्धिबन्धेन कालं दुर्गादिकर्मभिः।
विसृष्टो गाजभूभर्त्ता दूतेशोमुखवाचिकं। करबाकधरादीनां प्राह गत्वा सभान्तरं।
भोभो म्लेच्छपते कस्मादकस्मात् प्रबलैर्बलैः। आयाताः केन विश्वस्ता अज्ञातनृपविक्रमाः। ४५५
अथवा प्राक्तनी शैली शाहियुद्धं नु विस्मृतं। बलद्वयवधात् पापं युष्माकं परिणंस्यति।
यदि शक्तिः किमेतैः स्याद्दुर्गसन्ध्यादिकर्मभिः। विधिर्ददाति यद्यस्य स तत्फलमवाप्नुते।
चक्रिराजानकाद्यावास्थिताश्चशहराहृतः। देशाः के मुग्गुलाः के वा खुज्यहाज्योऽभिवक्ष्यति।
इत्युक्तो लेखहारेण खुज्यहाज्योऽब्रवीदिदं। शासनमकुराख्यानं मुग्गुलेशस्य वश्यहं।
चक्रेशभूपं दातारं गुणज्ञं धन्विनां वरं। विचारे नौशरोवानं कया स्तुत्या स्तुवीमहे। ४६०
काश्मीरिकाणां देशांशान् म्लेच्छानां पारितोषिकं। दत्त्वा मुग्गुलराजस्य चेतःशुद्धिर्विधीयतां।
अथवा देशधाटीभिः किं स्यात्प्राकृतमेतया। युद्धेन वीरहानिः स्यात् ज्ञाता सर्व्वस्य भूमिपः।
दृष्टाः श्रुताः स्वतानेव गाजशाहस्य सन्निभाः। योद्धुं दिगन्तरं कोनु यातएतत्परः समः।
दूतात् प्रत्यागताच्छ्रुत्वा क्रोधविस्मयवान्नृपः। अश्वारूढोऽद्रितुङ्गाश्च समारूढोमहद्यशः।
श्रीमच्छृङ्गारमल्लेक्रमालेमल्लेकरत्यपि। खानश्चन्द्रयोशोफएभशाहादयः सुताः। ४६५
खानः स शाहिभाजोऽपि हृतस्थान्यैश्च मन्त्रिभिः। स्वस्वसैन्यसमुन्नद्धैः कश्मीरेन्द्रविभूषितः।
सहस्रैरश्ववाराणां वाजिभिर्व्विगराजिभिः। शार्ङ्गखड्गदाप्रासशक्तितोमरभूषितैः।
नागरश्रगतोफाकनामाश्मरश्रगायुधैः। पदातिलक्षैः सन्नद्धैः शत्रुसेनान्तिकेऽवसत्।
अन्तिकादन्तिकं व्यूढे निविष्टे सैन्ययोर्द्वये। पारावारगतायोधारणरङ्गमभूषयन्।
हासदुन्दुभिनादेन कर्णतालैश्च हेषकैः। गजाश्वानामस्मरञ्जगर्जनैस्तर्जयन्निव। ४७०
अथ पत्तिसहस्रेण पुरोगेन प्रभूषितः। प्रवीरो गाजशाहोऽथ समराश्रममग्रहीत्।
दृष्ट्वा वीरं तमायान्तं केचिन्मुग्गुलपुङ्गवाः। मनःशैथिल्यमादाय शनैर्युद्धाय निर्ययुः।
नृपाग्रे म्लेच्छवीराणां स्वामिभक्त्या पुरोगताः। मुण्डानि चिच्छिदुर्युद्धे शरावानिव चक्रतः।
रणे हैभतखानेन प्राणदानेन तत्क्षणं। विवाहोऽजनि स्वस्त्रीणां पञ्चबाणेन योषितां।
वीरव्रतं पुरोगाणामद्भुतस्य तपः प्रभोः। विचिन्त्य मुग्गुलास्त्विलुहंतशेषाययागतं। ४७५
स्वप्राणवेतनैर्यौद्धापरोऽस्वव्यवहारिणः। विजित्य कीर्त्युपचयं स्वर्यातस्तद्दलद्वयात्।
पत्तीनामद्भुतं वीर्यं वीक्ष्य म्लेच्छबलान्तरात्। धाव्याप्तं कृष्यकुप्यादि तद्राशानुपदीकृतं।
स्वसैन्यापचयं शत्रुसेनोपचयमेव च। विचिन्त्य मुग्गुला याता वाणिजाइव वेतने।
सह राजपुरीराजा पाषाणडाम् करदायिनः। कृत्वा प्रत्याययौ गाजशाहः स्वविक्रमोर्जितः।
नित्यजेता चिरं स्थिया राजन् साम्राज्यदीक्षितः। इत्याशिषोजनाच्छृण्वन् काश्मीरान्तर्नृपोऽविशत्। ४८०
वेदैः षट्स्वरसैः पदक्रमयुतैर्व्वेदान्तसिद्धान्तकैस्तर्कव्याकरणैः पुराणपठनैर्भव्यैः षडङ्गागमैः।

शैवैर्व्वैष्णवसौरबौद्धनिहितैश्चित्रैर्व्विहारैर्मठैर्हेमाकुसुमस्वच्छशालिनिवहैः पुष्पैः सुगन्धैरपि ।
पाराणश्रुतितर्कशास्त्रनिचयैः क्रिडाग्निहोत्राहितैर्व्विप्रैर्ध्यानतपोजपादिनिरतैः नानाश्रमाद्युत्सुकैः ।
नागैः कोटियुतैस्तथा हरिहरैर्गन्धर्व्वविद्याधरैः स्वर्गप्राप्तनखण्डशीतलजला कश्मीरभूरुत्तमा ।
चत्वारिंशदथापि पञ्च गिरिशाः षष्टिश्च चक्रायुधा ब्रह्माणस्त्रयदत्यनादिनिधनाद्वाविंशतिः शक्तयः ।
नीलादीनि शतानि सप्त फणिनां तीर्थैकमाल्लाटयोर्विख्यातास्य चतुर्दशोत्तमतराः कश्मीरभूमण्डले ।
अष्टादश चमूभर्त्ता योऽभवद्धस्तिनापुरे । वीरोयुधिष्ठिरभ्राता भ्राता धुर्य्यहरोऽर्ज्जुनः ।
स दिग्विजयरागेण भुवं जित्वाखिलामिमां । पातालमविशद्वीरस्तनखण्डनशङ्कितः । ७७५
तत्र नागपुराण्याशु जित्वानभिमुखो रणे । प्राप्य नागसुतां वीरोवर्षं तत्राभजत्सुखं ।
आगतोऽथ गते काले बहुले पुनरप्यसौ । दिग्जयाय जगामाशु स्वपुत्रेण हतोरणे ।
जीवापितस्ततस्तूर्णं परिज्ञाय स्वभार्य्यया । हृष्टश्च सुतवीर्य्येण तेनैव समुपाययौ ।
अथ कालेन नीतऽस्मिन्नर्जुने तत्सुतो भुवं । विभज्य दधतुः सर्व्वां परीक्षिद्भ्रुवाहनौ ।
आभीरदेशे निवसन् सार्द्धं शतमसौ समाः । षोडशोनं शतं यस्य सुतानां वीर्य्यशालिनां । ७८०
तेषामपि सुतास्तद्वत्तत्सुतांश्च सहस्रशः । आसंत्यज्य पुनर्योगी मातामहपुरं ययौ ।
ततस्तेऽतिबलोन्मत्ताः परस्परविरोधिनः । प्रजानां विदधुः पीडां मर्य्यादाश्च न्यवारयन ।
आज्ञातिक्रमणात् पित्रा शप्तास्ते बलदर्पिताः । स्वनाशायाखिलान् देशान् धाटीभिः समपीडयन् ।
दृष्ट्वाकाशगतः कश्चित् सिद्धस्तज्जनपीडनं । विज्ञप्तिमकरोत्तूर्णं दयावानीश्वरं प्रति ।
अथोच्चचार नभसोवागेवमशरीरिणी । हृष्टः सागरमध्येऽस्ति साक्षिरेव यमोपमः । ७८५
स ग्टहीतस्ततस्तेन रोमदेशे च वर्द्धितः । तेनासिना हयारूढः कण्टकोद्धरणं व्यधात् ।
लात्रीकस्तक्रवर्त्ती स सर्व्वभूतालिजित्वरः । म्रियमाणो न केनापि दृष्टोऽभून्मिषवर्त्तुभिः ।
ये लोकोत्तरकर्म्म कर्त्तुमतुलं दृष्टाः परं वेधसा तेषां तादृशमेव सोऽथ कृतवाञ्जन्मात्मनां तथा ।
दृष्टान्तस्तु सहस्ररश्मिरिह यस्त्रैलोक्यदीप्तिप्रदोज्ञातः केन कुतोऽभ्युदेति यदि वा कुत्रास्तमभ्येति च ।
तद्वंशजन्मा पार्थोऽभूद्दूरं गत्वा हृषा पितुः । पञ्चगङ्गरभूमध्ये योगङ्करपुरं व्यधात् ।
तद्वंश्यः कुरुशाहोऽभूद्यः सर्व्वां दिशमुत्तरां । जित्वा स पश्चिमां चक्रे धनुर्देवालयं शुभं । ७९०
ताहिरालसुतस्तस्य लोचनत्रयभूषितः । यथेच्छालाभमाहात्म्ययुक्तोलोभविवर्जितः ।
त्रिकालदर्शी चादृष्टपालितोऽतिबलान्वितः । दयालुः सततं योगी वदान्यः सर्व्वशास्त्रवित् ।
तस्य प्रभावतोराज्यं कश्मीरेषूपभुज्यते ।
कश्मीरभूमिपालानां यः स्यादशुभचिन्तकः । दिगन्तरीयभूपालस्ताहिरालो निहन्ति तं ।
काश्मीरःपार्श्वतो तत्र राजा श्रीगोहरांशजः । इत्येनत्प्रत्ययायैव यशोधीलोचनत्रयी ।
नास्य प्रभुरभूत् कश्चिन्नचासौ कस्य चिद्रिपुः । देवीमप्यापदं लोके तपसैव न्यवारयत् । ७९५
ताहिरालकुलोत्थानां नहि म्लेच्छातिथौ नृपः । सोऽवश्यं सम्पदः स्वस्यादद्वात्येव जलाञ्जलिं ।

दिल्लिराकर्णयामास गिरं स्वादुत्थितामसौ । गृहाण राज्यं कश्मीरेष्विति नैवाभ्यमन्यत ।
शाहमेरः सुतो योऽस्ति तवात्यन्तमयप्रधीः । स विधेयस्त्वया यस्मादात्मा पुत्र इति श्रुतिः ।
॥ इति ताल्हिरालवंशवर्णनं ॥
राज्यं नाजोकखानाय दत्वा दौलतचक्रकः । स्वयं न बुभुजे देशं निर्देशेन स्वशेषतः ।
कम्पिताश्च स्वलोकेन नवे तस्मिन्नराधिपे । रज्यते स्म जनो नित्यं शिशिरेण मधाविव । ५००
नाजोकशाहे तद्राज्यं गृहीते निर्भवुर्जनाः । उदयाद्रिस्थिते सूर्ये प्रातः पद्माकरा इव ।
मिलितेष्वथ सर्व्वेषु परस्परविरोधिषु । पुनर्ग्रामविभागेन शनैर्वैरमजायत ।
एदेरैणाद्यथालोका मेर्जाहैदरसेवकाः । चक्रजातिविरोधेन सदाश्रिवपुरेऽवसन् ।
वितस्तातीरमाश्रित्य समुद्रामठवासिनः । युयुधुर्हुसनाखेन चक्रदौलतकादयः ।
मासमेकं कृते युद्धे हुसनाखशरादिभिः । दौलतचक्रलोकेन विजयो विहितस्तदा । ५०५
अत्रान्तरे स हैमायः पातिशाहोऽभवद्भुवि । नमत्समस्तभूपालमौलिघृष्टपदाम्बुजः ।
तेन निर्व्वापितो राज्ञा मिथोवैरमहानलः । प्रजानां हृदयोन्माथी न दारिद्र्यदवानलः ।
अजहोमायनामासीद्वैरी तस्य महीभृतः । स देशं दुर्गमं मत्वा स्थातव्यमिति चिन्तयन् ।
किन्तु नेष्यामि कश्मीरदेशं पर्व्वतदुर्गमं । तत्र स्थितं न बाधेत मां होमायमहीपतिः ।
इत्युक्त्वा चलिते तस्मिन्नजहोमायभूपतौ । कश्मीरैः सह संग्रामो बभूव नगमस्तके । ५१०
ततः काश्मीरलोकेन पर्व्वतोपरिवासिना । अजहोमायभूपस्य निहतं सर्व्वसैनिकं ।
अयन्तु नृपतिः शश्वत्पाति कश्मीरमण्डलं । नाजोकनृपतौ शाहाहिम्दाहः सर्व्वतोऽभवत् ।
द्वितीये प्रहरे रात्रेः प्रसुप्ते सकले जने । बभूव धरणीकम्पो मथितानेकमानवः ।
भूमिरन्ध्रेषु जातेषु भूकम्पेन पदे पदे । पथि सञ्चरतां मार्गः पान्थानां त्रिस्तृतोऽभवत् ।
भूमिरन्ध्रगते गेहे रात्रौ निर्गमनोत्सुकाः । उपर्य्याच्छादनं भित्त्वा जनाः प्रातर्व्विनिर्ययुः । ५१५
वितस्तातोयपतितात् गृहात् काष्ठमयात्तदा । सप्तक्रोशेष्वतीतेषु प्रबुद्धा निर्ययुर्जनाः ।
हुसेनपुरहोसैनपुरयोर्दूरवर्त्तिनः । नदीमुखञ्च भूकम्पे व्युत्क्रमोऽद्यापि दृश्यते ।
कश्चिद्धा तातेति कश्चिदपि च हा मातरिति वा कश्चिद्धा मित्रेति कश्चिदपि च हा भ्रातरिति वा ।
तदा तत्रत्यानां करुणरुदितं दुर्व्यसनिनां निशम्याभूद्वज्रप्रतिहतमिवातीव हृदयं ।
निर्घातध्वानभीमे नभसि हतगतौ तारकाणां समूहे कल्लोलालोलतुम्बीफलवदविरतं चञ्चले भूमिखण्डे ।
पुत्रे मित्रे कलत्रे सुजनसुहृदये द्रव्यजाते जनानां भूकम्पातङ्कशङ्काप्रचलितमनसां स्नेहआसीन्न तेषां ।
विजयेश्वरमार्त्तण्डवराहक्षेत्रवासिनां । पुण्यतीर्थप्रभावेण भूकम्पाद्भाभयद्वयं । ५२०
पुनः पुनः प्रतिदिनं भूमिकम्पे प्रवर्त्तिते । उवास सकलो लोकः पटमण्डपपङ्क्तिषु ।
याते बहुविधे काले निःशङ्के सकले जने । ररक्ष सकलं देशं सम्यग्दौलतचक्रकः ।
निरुद्ध्य जलसञ्चारं वेतालाक्रान्तभूमिषु । विदधे निजमाहात्म्यं प्रसन्नेन विकोर्षया ।

एतादृशे कृते कार्ये क्रुद्धवेतालचोदिताः । गृहे दौलतचक्रस्य पतितास्य शिलानिशि ।
अदृष्टदेवताचिप्तशिलावर्षणसङ्कुलं । राजद्वारं निशीथिन्यामभवद्विस्मयावहं । ५२५
ईदृशं प्रत्यहं केन कृतं पाषाणवर्षणं । इत्थं परस्परं लोकः कथयामास विस्मितः ।
तुलमूलाभिधे ग्रामे सम्यग्ज्ञानपरायणः । अभिमन्युरिति ख्यातः साधुरासीन्महातपाः ।
एकदा तद्गृहं गत्वा साधुं दौलतचक्रकः । उवाच निर्भयं प्राज्यं कथं राज्यं भविष्यति ।
इत्युक्ते तेन सोऽवादीन्निवारय मदाज्ञया । वार्षिकं ब्राह्मणकरं तेन सिद्धिर्भविष्यति ।
इत्थं निवेदिते तेन साधुना म्लेच्छसत्तमः । उवाच वचनं सम्यक् शृणु वच्मि महामुने । ५३०
तुलमूलाभिधं ग्राममर्पयिष्यामि तेऽधुना । विप्रदण्डं कथं म्लेच्छो वारयामि त्वदाज्ञया ।
इत्थं दौलतचक्रेण वचने कथिते सति । अभिमन्युर्बभूवासौ रोषव्याकुलमानसः ।
तेनाशु ब्राह्मणकरो यदा नैव निवारितः । साधु दौलतचक्रं तं शशाप रोषसंयुतः ।
समुद्रमध्यमासाद्य चन्द्रार्कौ ते पतिष्यतः । इति शापप्रनष्टश्रीर्ययौ दौलतचक्रकः ।
मासमेकं कृते राज्ये शुभभाभिधभूभृता । जग्राह तत्पदं लोभाद्राजखानस्ततः स्वयं । ५३५
तत्प्रतापाग्निदग्धेषु सिक्ताः स्त्रीनयनाम्बुभिः । गेहेषु वैरिणां नित्यमुत्पद्यन्ते तृणाङ्कुराः ।
रुदच्छाचवनारीणामस्रुवर्षाकुलेष्वपि । ज्वलत्यपूर्वो गेहेषु यत्प्रतापदवानलः ।
अथ दिग्दाहभूकम्पान्समीक्ष्य पृथिवीभृता । पृष्टा वाक्यमिदं प्राङ्गणकागणनापराः ।
देशेऽस्मिंस्तव सम्भविष्यति महद्युद्धं समन्तं प्रभो सङ्ग्रामेष्वपि निःसरिष्यति महावेगा च रक्तापगा ।
लोकानां प्रचरिष्यति प्रतिपदं दुर्भिक्षपीडाथवा तस्मात्वाहविचारणेन धरणीं भूपाल भोः पालय ।
अथाययौ खसेनाभिर्म्लेच्छहैदरसेवकः । करभट्टारनामासौ भूयो देशजिगीषया । ५४०
निशम्यैतादृशीं वार्त्तां गाजशाहिर्विनिर्ययौ । तुरङ्गमखुरोद्धृष्टचूर्णीकृतमहीधरः ।
स समाश्रित्य भूपालो देशं राजविराभिधं । पदातिमार्गलोकानां समराय समादिशत् ।
राजविराभिधे देशे मिलिते राजकद्वये । भीतिर्बभूव लोकानां द्विराजानामशङ्किनां ।
रणे विलोक्य सर्व्वासां पत्तीनां गतिचातुरीं । बभूव वायुवत्कम्पो भीतिचञ्चलमानसः ।
करभट्टारो दृष्ट्वाथ काश्मीरशरवर्षणं । स क्रुद्धः करभट्टारः पत्तिलोकविलोकनात् । ५४५
अन्धकार इव प्रातः साचादरुणदर्शनात् । तस्मिन् पलायिते देशान्निर्ययौ सकलो जनः ।
सर्पे विनिर्गते देहात् कुटुम्बमिव तत्क्षणं । तदास्य ववृधे तेजः करैर्ज्वाल मेदिनी ।
विस्मार प्रतापस्य ग्रीष्मकाले रवेरिव । अत्रान्तरे महारोषजर्ज्जरीकृतमानसाः ।
हस्त चक्रादयो लोकास्स्कन्दुर्नगरान्तरं । सदाशिवपुरे दुर्गं कृत्वा तिष्ठन्तु वैरिषु ।
दिद्दामठान्तिके तस्थौ भूपो युद्धचिकीर्षया । युद्धेऽस्मिन् हाटके स्वामिसदाशिवपुरस्थयोः । ५५०
वितस्तासेनयोर्मध्ये वारयन्तीव सा बभौ । नदीमुल्लङ्घ्य भूपालो युद्धं कृत्वा मदन्तरं ।
सितानदीप्रवाहेषु शुभचक्रममारयत् । गते बहुविधे काले गाजीचक्रप्रचारितः ।

अथयौ मुग्गुलस्वामी श्रीकश्मीरजिगीषया । शाहअब्दोलमालीति नाम यस्याभवद्भुवि ।
स कश्मीरान्तरं प्राप बहुलोकसमन्वितः । तत्तदागमनं श्रुत्वा सैन्येन महता वृतः ।
आससाद स भूपालः परिहासपुरान्तिकं । कृते बहुविधे युद्धे सकले सैनिके हते ।
शाहअब्दोलमाली स चचाल निजवर्त्मना । ४८५
बभूवुः समरे तत्र यवनाविगतासवः । यमस्तेनेव रणोत्थव्याजेनाधिगतासवः ।
आनीतैः समरस्थानाद्भूपालोनगरान्तरे । स्तम्भमुच्छ्राययामास मृतमानवमस्तकैः ।
एकदा सप्तवर्षस्य बालस्याम्रमुष्णतः फलं । कृपां विहाय भूपालः करं चिच्छेद तत्क्षणं ।
चौरे मुष्णति कस्मिंश्चित्स्त्रीणाम् ग्रामनिवासिनां । बलाज्जहार भूपालः स्वर्णमुद्राशतद्वयं ।
मातुलं स्वं जिघांसन्तं यौवनस्थं प्रतापिनं । घातयामास भूपालः स्वसुतं हैदराभिधं । ४९०
निहते स्वसुते तेन यौवनस्थे दुरात्मना । हतः पुत्रोऽप्यनेनेति हाहाकारो महानभूत् ।
अष्टादशाभवंस्तस्य युवराजस्य मन्त्रिणः । सुतान्जघान भूपालउन्मत्तइव राक्षसः ।
एकदा कुष्ठरोगेण बहुलेन महीपतिः । बभूव विगतोच्छायो ग्रहणेनेव चन्द्रमाः ।
कण्डुः कीटहता देहे पूयशोणितनिर्गमः । नरके यानि चिह्नानि तान्यासंस्तस्य जीवतः ।
कीटोजघास मांसानि पीत्वा तत्पूयशोणिते । नरकादधिका पीडा बभूवैतस्य जीवतः । ४९५
हा तात मित्र हा पुत्र मम कष्टमुपस्थितं । इति क्रन्दितमाकर्ण्य कोनाभूद्दीनमानसः ।
इति स्पष्टमहाकुष्ठनिपीडितकलेवरः । सह संसारलोभेन प्राणांस्तत्याज भूपतिः ।
मृतस्य तस्य भूपस्य भ्राता होसैनखानकः । निखन्य भूतले सम्यक्कर्म्मेमे मृतसंस्कृतिं ।
अकस्माद्भूतलं तत्र जज्वाल नरकाग्निना । धूमेनोत्पतता कुर्व्वन्दिक्षितां जनसन्ततिं ।
निःश्वासइव कालेन पीड्यमानस्य भूभृतः । उत्तस्थौ सर्व्वतोधूमः सर्व्वलोकविलोकितः । ५००
रात्रौ तद्भूतलं गत्वा पीड्यमानस्य भूभृतः । शुश्राव सकलोलोकोयमकिङ्करताडनं ।
तेनाप्तं यादृशं वीजं तादृशं लभ्यते फलं । इत्थं परस्परं लोकोवदति स्म सविस्मयः ।
वर्षद्वयान्तरे कृत्वा राज्यं पापमलीमसं । कुष्ठरोगविशीर्णाङ्गोगाजशाहिर्ममार सः ।
हा कथं तेन भूपेन कृत्वा पापमहर्निशं । अल्पकालप्रसङ्गेन नाशिता बहुवत्सराः ।
स्वर्य्याते नृपतौ भ्राता राज्यं होसैनखानकः । अप्राहास्तं गते चन्द्रे पूर्व्वाद्रिमिव भास्करः । ५०५
राज्यमाश्रित्य भूपालोदुर्व्विचारदवानलात् । प्रजानिर्व्वापयामास पीयूषीवनतोयदः ।
सदा प्रत्यर्थिदानेन लक्ष्मीस्तेन वशीकृता । तदा प्रत्यर्थिदानेन कीर्त्तिर्दूरतरं गता ।
चिक्रीड सह कान्ताभिर्भूपः पीतनवासवः । सुखं तत्सदृशं स्वर्गे स चकार न वासवः ।
तद्गृहे गुणबद्धेव लक्ष्मीरासीदनन्यगा । तां विलोक्य तथाभूतां कीर्त्तिर्भीत्येव साचलत् ।
तदीयगृहमाश्रित्य प्राप्तसर्व्वमनोरथः । याचकोनाभवत् प्रीतोदानेन दायया चकः । ५१०
सततं यस्य पादाब्जसमस्तन्यस्तमस्तकः । अवाप परमां लक्ष्मीं लोकः शोकविवर्जितः ।

तस्मिन् रक्षति कश्मीरदेशं नित्यं विशेषतः। अभूत्पुष्पफलोत्पत्तिपरिपूर्णा वसुन्धरा।
दुर्भिक्षचौरराजन्योभये तेन निवारिते। अमंस्त स्वर्गवद्दृशं लोकः कश्मीरमण्डलं।
यदा यदा तेन कृतोऽविचारश्चासीच्च चौरस्य तदा प्रचारः।
अभूच्च दानावसरे विकारस्ततोऽभवत्तस्य यशःप्रकारः।
खानिजमाननामाभून्मन्त्री तस्य महीभृतः। स निर्गते महीपाले चस्कन्द नगरं चणात्। ५८५
[ येनापराधः कृतस्तत्प्रातिवेश्मिकान् राजा मुमोच। प्रत्युत प्रतवेशीलोकान् जघान। स्वल्पा
पराधेऽधिकं दण्डं कृतवान्। एकस्य ग्रामस्यापराधे सति बहुग्रामान्मुमोच। सुपात्रे कि
मपि न ददौ कुपात्रेषु समार्पयत्। स्वसेवकं जैतानामानमादिदेश। मत्पुत्रो हन्यतां। स
स्नेहवशाद्राजपुत्रं न जघान। ततो राजपुत्रं देलावरखानो जघान लोकास्त्वचमुः। हा पाप
राजन् परलोके का गतिस्तव भविष्यति। स्वसुतस्यापि कृपा न जाता। तस्यैवकानपराधरहिताम् किमवधीः। ]
तदीयसैन्यमागत्य नाशयामास तत्क्षणं। होसैननृपतिः प्रातरन्धकारमिवांशुमान्।
सुखं बहुविधं तेन कृतं नित्यं महीभृता। संरचता विधानेन प्रजाः सञ्जातविस्मयाः।
विरोधे कृतमुख्योनां वैरसंसक्तचेतसां। मल्लादखानकादीनां चकर्ष नयनानि सः।
निर्गतानां महीं जेतुं भूपः सम्प्राप पर्वते।
एकदा शारिकास्थाने मिलिते सकले जने। वसन्तदिवसे राजा स चकार महोत्सवं।
कुङ्कुमागुरुकर्पूरचन्दनाद्यनुलेपनैः। रराज सकलो लोको वसन्तदिवसे तदा। ५९०
विहितोन्नतदुर्लक्ष्यलक्ष्यभेदाय भूपतिः। निजसेवकलोकाय गजवाजिधनं ददौ।
भूयः श्रीपञ्चमी तत्र दिवसे पृथिवीपतिः। ददर्श मिलितं लोकं ज्येष्ठरुद्राश्रपर्वते।
कश्चित् कान्तां प्रतिकृतसर्वस्रञ्जरीं जिघ्रति स्म चौवोऽन्यस्त्रीरचितसमये व्याकुलः कश्चिदामोदम्।
पीत्वा कश्चिन्मधु समभवत् पुष्पसम्भूषिताङ्गः श्रीपञ्चम्यामिति कृतसुखो निर्वृतो सर्वलोकः।
वराङ्गनानां नवसुन्दरीणां विलोक्य साक्षाद्वनृत्यगीतं।
ददौ समासाद्य नवीननावं सुवर्णदुर्लक्ष्यवासांसि राजा।
अथापस्मारदोषोऽस्य प्रबभूव महीभृतः। कलङ्क इव चन्द्रस्य निर्मलस्य शनैःशनैः। ५९५
होसैनशाहभीतांशो यस्तेऽपस्माररात्रुणा। दुर्निवाराम्धकारेभ्योजनोभीत्याकुलोऽभवत्।
होसैनपृथिवीपालो राज्यं संस्थाप्य सोदरे। कुलवत्तादिव स्वर्गं ययौ दानसमर्जितं।
सप्तवर्षेष्वतीतेषु नित्यं सुखमयेषु सः। स्वर्गोऽयं कीदृशोऽस्तीति दर्शनार्थं ययाविव।
विमानितापि द्रविणव्ययेन सहैव याता क्षितिपस्य लक्ष्मीः।
आराधितापि प्रसभं धनेन कीर्त्तिः कथं तिष्ठति लोकमध्ये।
आलेखानाश्रिते राज्ये तुतुषुः सकलाः प्रजाः। उदयाद्रिश्रिते सूर्ये प्रातः कमलिनी यथा। ६००
कश्मीरदेशमालोक्य सम्यग्भूपालपालितं। निनिन्द सुखितो लोकः स्वर्गं दैत्येन्द्रनाशितं।

विचारे विहिते तेन दुर्जनाविलयं ययुः। उलूका इव पूर्व्वाद्रिं प्रयाते दिवसेश्वरे।
तस्मिन्नवसरे चौरा गुप्ताश्चासन् भयाकुलाः। मध्याह्नकाले सम्प्राप्ते विलमग्ना इवाखवः।
प्रत्यर्थिभ्यो ददौ दानं महासमितिसंयुतः। चकार सफलान्नित्यं मार्गणान्निर्गतान् सदा।
यत्सर्व्वेषां दयाञ्चक्रे भीतानां धरणीपतिः। अतः संह्लादयाञ्चक्रे प्रजाः सञ्जातकौतुकाः। ९०५
अकस्मादरुणीभूतं बभूवाथ दिशां मुखं। भाविदुर्भिक्षसंहाररौद्रकालानलोपमं।
उत्पातलक्षणोपेता चकम्पे च वसुन्धरा। दुर्भिक्षभारोद्वहनादसमर्थैव साभवत्।
मार्गे मार्गे तदा तस्थुरुच्छूनाः शवपङ्क्तयः। दुर्भिक्षकालमभ्यस्य यमस्य पटहा इव।
सुवर्णरजतादीनां नाभूत्तत्र प्रयोजनं। किञ्चपात्रं सुदुष्प्रापं चिन्तारत्नमिवाभवत्।
काचिच्च खिन्ना भर्त्तारं गृहिणी स्नेहवर्जिता। जघास भोजनं गूढं पुत्रे दूरे निवारिते। ९१०
बुभुक्षासहिते पुत्रे कन्ययापि कृतार्थना। चकार भोजनं नारी प्राणांस्त्यजति भर्त्तरि।
एकदा बहुभिर्लोकै राजद्वारि मृते गजे। अहंपूर्व्विकया लोभान्मांसं नीतं पृथक् पृथक्।
एकदा कन्दुकारेण हत्वा नापितबालकं। पक्त्वा भक्ष्यप्रसङ्गेन विक्रीतं मानुषामिषं।
विहाय स्वगृहं लोकाः पुत्रदारसमन्वितं। देशान्तरं तदा जग्मुः प्राणत्राणसमुत्सुकाः।
तस्मिन्नवसरे वायुर्बभूवोत्पाटितद्रुमः। कल्पान्तकालसंहारभीतलोकविचारितः। ९१५
वायुनोत्थापिते धूलिराशौ वलितभास्करे। मध्याह्नसमयः साक्षादर्द्धरात्र इवाभवत्।
वायौ चलति चाकस्मात् सदाशिववनोत्थितः। अग्निर्जज्वाल सम्मूर्च्छन्निव निर्दिधक्षया।
वितस्तातीरमुल्लङ्घ्य समुद्रामठसंयुतं। ददाह नगरं सर्व्वं वायुवेगानुगोऽनलः।
ज्वलन्ती नगरी रेजे वितस्ताजलबिम्बिता। जलान्तर्दत्तझम्पेव दाहनिर्व्वाणहेतवे।
धूमेनोत्पातिता व्योम्नि तारकापिहिता अपि। अनेकाङ्गाररूपेण बभूवुर्द्विगुणा इव। ९२०
धूमेन पिहितास्तारास्तत्र व्योमनि तावभुः। ज्वलन्तं वह्निमालोक्य भयेनेव पलायिताः।
नववर्षार्जितान् भोगान् भुक्त्वा स धरणीपतिः। दुर्भिक्षपीडाविज्ञप्तिं कर्त्तुमिव ययौ दिवं।

तस्मिन् प्रयाते त्रिदिवं नरेन्द्रे राज्यं गृहीते च तदीयपुत्रे।
अब्दालखानोऽपि चकार कोपं पितृव्य एतस्य महीभृतोऽपि।

यदापि म्रियते भ्राता भ्राता गृह्णाति तत्पदं। इत्थं कुलक्रमोऽस्माकं कथं राज्यं सदृच्छति।
इत्युक्त्वा प्रहिते दूते तेनाब्दालाभिधेन तत्। युद्धं योसोभमाहस्य सेकन्दरपुरेऽभवत्। ९२५
अब्दालखानको युद्धं कृत्वा हत्वारिसैनिकं। कुतूहलेनेव दिवं ययौ भ्रातृदिदृक्षया।
योसोभभूपतौ राज्ये गृहीते प्रददौ धनं। प्राकृताः कर्णमान्ध्याहमुखान्निस्सारयन्निव।
अथ सर्व्वमहायोगदुर्व्विवेकेन चोदितः। तस्य नोसारखानोऽगाद्दूरं युद्धचिकीर्षया।
मल्हादखाननामाभूद्योसोभभूपसेवकः। युयुधे सह तेनैष तदा दिद्दामठान्तिके।
महानीलरजोराजिमेघान्तरितमूर्च्छिताः। जगर्ज्जुर्दहनास्तत्र ज्वालाविद्युल्लता इव। ९३०

निःशोभा अभवल्लोकास्तुते मसूदखानके । अस्तं दिनकरे याते साधं पद्माकरा इव ।
चलन्तः सादिनोऽप्यासन् वितस्ताजलविम्बिताः । विशन्त इव पातालं तत्पराभवलज्जया ।
मासद्वयस्य सार्द्धस्य भोगान् भुक्त्वा स भूपतिः । जगाम खश्लोकानां मार्गं पर्वतदुर्गमं ।
राज्यं मोमारखानेन श्रिते योसोभभूपतिः । यथालोदयति प्रातः सूर्ये चन्द्र इवांशुगः ।
समस्तपृथिवीपालज्यसालदीनभूपतेः । चरणं शरणीकर्त्तुं ययौ योसोभभूपतिः । ४९५
मोमारखानलोकस्य शनैर्व्वैरमजायत । परस्परविमर्द्देन वनस्येव दवानलः ।
सपादस्यैव मासस्य सुखं कृत्वा स भूपतिः । उवास देवतागारे शत्रुलोकाभिरक्षितः ।
मोमारखानं निर्जित्य चक्रैदरकादयः । राज्ये निवेशयामासुः श्रीमल्लक्षरचक्रकं ।
तस्मिंल्लक्षरभूपाले भूमिं शासति सर्व्वतः । बभूवोपद्रवो नित्यं सिंहेभ्यो ग्रामवासिनां ।
रात्रौ घोरः प्रतिग्रामं गृहद्वारादिनिर्गतः । निहतः स स सिंहेन पिशाचेनेव भक्षता । ५००
ज्यसालदीनभूपालपाददर्शनहर्षितः । आययौ वत्सरे याते श्रीमान् योसोभभूपतिः ।
श्रीमत्खय्यपुरग्रामं वितस्ताजलदुर्गमं । शिश्रिये स महीपालउदयाद्रिमिवांशुमान् ।
तदा लक्षरभूपालो निर्ययौ नगरान्तरात् । अनेकलोकसंयुक्तः सिंहो नगगुहादिव ।
ज्ञात्वा खय्यपुरग्रामं वितस्ताजलदुर्गमं । ययौ हैदरचक्रोऽसावन्यमार्गेण सत्वरं ।
ज्ञात्वा योसोभभूपालस्तत्तद्रिपुविचेष्टितं । वितस्ताजलमुत्तीर्य युयुधे लक्षरेण स । ५०५
विधाय तुमुलं युद्धं सर्व्वप्राणिभयावहं । मन्त्री लक्षरखानस्य ममारास्त्राललेरकः ।
नष्टे लक्षरभूपाले मिलितैर्निजसैनिकैः । अवर्द्धत स भूपालो नदैरिव महार्णवः ।
लक्षरखानो योसोभखानपादमशिश्रियत् । सभ्रातरममुं सोऽपि निर्नैचमकरोत् क्षणात् ।
ज्ञात्वा हैदरचक्रोऽसौ योसोभनृपचेष्टितं । शिश्रिये आकुलं देशं पुनर्युद्धचिकीर्षया ।
युद्धं योसोभभूपालचक्रहैदरयोरभूत् । वनेषु शोणितासारदूरीकृतदवानलं । ५१०
ज्यसालदीनभूपस्य ययौ हैदरचक्रकः । सकाशं वसुभिर्हीनो भास्करस्येव चन्द्रमाः ।
प्रवास चलिते तस्मिन् देशं योसोभभूपतिः । अन्धकारे गते दूरं पद्माकरमिवोष्णगुः ।
ववर्ष वासवः सम्यग्ववौ वायुः सुखावहः । ततापं तपनः साधास्तस्मिन् रक्षति मेदिनीं ।
कीर्त्तिर्दूरीकृता तेन चचाल वसुधामिमां । यद्गेहे गुणवद्धैव लक्ष्मीरामोदनन्यगा ।

गुणेष्वनन्तेष्वपि तस्य राज्ञः स एव दोषः प्रकटस्तदाभूत् ।

यत्स्वस्थलाद्दृष्ट्वत तेन लक्ष्मीः स्थिरापि कीर्त्तिर्व्विहिता सुदूरे । ५१५

चन्द्रमागुणिवैरीति प्रसिद्धिं परमोगतः । साम्ययोगः कथं तस्य नृपेण गुणिबन्धुना ।

हुसैनखानप्रमुखेषु तेषु रुद्रेषु योसोभमहीधरेण ।

निष्कृष्य चक्षूंषि विशेषरोषात् कश्मीरदेशे विहितो विचारः ।

ज्यसालदीनभूपालसेवनार्थं कृतोद्यमः । याकोभराजपुत्रोऽपि प्रहितस्तेन भूभृता ।

उपायनेषु दृष्टेषु याकोभनिहितेष्वपि । कश्मीरविजयोत्कण्ठा सम्बभूव महीभृतः ।
ज्यल्लालदीनभूपेन कश्मीरविजयार्थिना । कृताज्ञा भगवद्दासप्रमुखानां महीभृतां ।  २०
तद्विज्ञाय स याकोभस्त्यक्त्वा भूपालसेवनं । प्रत्याययौ स्वकश्मीरदेशं मार्गादलक्षितः ।
पितरं स्वं समागत्य याकोभोऽवदद्व्यथः । भगवन् भगवद्दासः प्रहितस्तेन भूभृता ।
महतोऽप्यसमर्थस्य महत्त्वं याति निष्फलं । पर्व्वतसदृशाकारं कुञ्जरं हन्ति केशरी ।
इति निश्चित्य सर्व्वे ते निर्गमाय जयार्थिनः । आज्ञां विदधिरे सर्व्वपर्व्वतीयदरार्पणात् ।
विनिर्गते महीपाले सज्जीभूतेऽथ सैनिके । वैजयन्त्यस्तदा रेजुर्व्योमनीकृतभूरुहा. ।  २५
वराहतीर्थमाश्रित्य तस्थौ योसोभभूपतिः । तदीयमन्त्रिणोऽप्यत्र ययुर्युद्धचिकीर्षया ।
उवाच सचिवान् भूपो न युद्धं कर्त्तुमर्हथ । ज्यल्लालदीनपादाब्जं सेवनायाश्रयामहे ।
कथं महत्तरं जेतुं शक्तिर्नीचस्य जायते । न समीरस्य वेगोऽस्ति पर्व्वतोन्मूलने क्षमः ।
श्रुत्वेति सचिवा. सर्व्वे तमूचुः पृथिवीपतिं । कथमेतादृशी बुद्धिर्भवतामपि जायते ।
अकृतगुरुसहायः सिद्धिं न गच्छति साधकोव्रजति न सुखं रोगी वैद्यप्रयोगवियोगितः ।
अगणितसहायन्ता दन्ती न विन्दति चातुरीं सचिववचनद्वेषी राजा न याति सुवैभवं ।  ३०
निशम्येति स भूपालः सचिवांस्तानवोचत । दृष्टं सैन्यं न युष्माभिर्ज्यल्लालदीनभूपतेः ।
प्राचीमेव शचीपतिः स भजते श्रीदक्षिणाशां यमः पानीयाधिपतिश्च पश्चिमदिशं वित्तेशएवोत्तरां ।
एते केवलदिक्पतित्वविभवस्पर्द्धां कथं कुर्व्वते जीयात् सर्व्वदिगीश्वरो नरपतिर्ज्यल्लालदीनाभिधः ।
नाकवरसमः कश्चिद्दातामून्न भविष्यति । दानं समर्पितं येन पण्डितेष्वपि वैरिषु ।
कर्णः सुवर्णदानेन भूमिदानेन वा बलि. । समस्तवस्तुदानेन यशः प्राप्नोति भूपतिः ।
वित्ती चेन्नरवाहनोभवति तत्कार्पण्यमुच्चावचं चन्द्रश्चेत् खलु निर्म्मलः प्रतिदिनं दोषः कलङ्काभिधः ।
तेजस्वी यदि वह्निरुद्धततमोधूमः सदा दूषकोराज्ञा दानयशःप्रतापनिकरैरेतेऽमुनाधः कृताः ।
इत्थं ज्यल्लालदीनस्य सेवाहेवाकतत्परे । योसोभनृपतौ सम्यक् सचिवाइदमब्रुवन् ।  ३५
शत्रुपादस्पृहा यस्य जीवितं तस्य निष्फलं । सएव पुरुषोधन्योयोद्वेष्टि रिपुणा सह ।
भवन्तः सन्तु दूरस्थाः कुर्म्मस्तत्कार्य्यनिर्णयं । आकूलं देशमाश्रित्य योत्स्यामः प्रत्यहं वयं ।
सहस्रकिरणोरविर्जगति सत्प्रतापोज्ज्वलोगुहान्तरगतं तमोहरति नो यथा जातुचित् ।
तथा नरपतिः क्षमोभवति चक्रवर्त्ती कथं विनाशयितुमुद्यतोविहितजाङ्गलासादनं ।
इत्थं निशम्य भूपालः सचिवोदीरितं वचः । निर्व्वापयन्निवोवाच वचनामृतशीकरैः ।
भयं त्यजत मद्वाक्यमनुपालयताधुना । अहं ज्यल्लालदीनस्य ग्रहीष्यामि पदाम्बुजं ।  ४०

अलङ्कारभूतोऽसि योभूपतीनामलङ्कामदेवेन रूपे यदीये ।
अहं कामतस्तामि जल्लालदीनमहङ्कारएषोऽस्ति चित्ते मदीये ।

करिष्यामः कथं वैरं श्रीचक्रवर्त्तिना समं । सयैव सेवा कर्त्तव्या सुखं देशे भविष्यति ।

न भूतो न भावी न वा वर्त्तमानः कदाचिच्च कश्चिन्महीभृत्समानः ।
इति प्रायशोऽनित्यशोवर्त्तमानः सदा जल्पतोवर्त्तते मेऽभिमानः ।
पातिशाहिगुणान् श्रोतुं कर्णोऽयञ्च पलायते । एतद्दारिद्र्यमाकर्ण्य कर्णोऽयञ्च पलायते ।
विधात्रा लिखितां भाले लिपिं दारिद्र्यदूषितां । पतन्ति चरणे तस्य जनाः कर्त्तुमिवान्यथा ।
मस्तके भूषणं राज्ञां लक्ष्मीप्राप्तिमहौषधं । अस्ति पादरजस्तस्य दुर्लभं महतामपि ।
प्रत्यक्षदेवमादित्यं ध्यायतश्चक्रवर्त्तिनः । साक्षाद्भक्तिप्रभावेण दूरं यान्ति विपत्तयः ।
वेदान्निर्णीतभेदानसुरवरकराक्रान्तदेशान् सुरेशान् गन्धर्वान् मन्ददर्पान् प्रतिदिवसभयव्याकुलांल्लोकपालान् ।
वेधोगोविन्दशर्वांस्तदभिमुखकृतप्राञ्जलींश्चापि मत्वा सूर्यं प्रत्यक्षदेवं प्रणमति मतिमान् शाहिजल्लालदीनः ।
अकबरनृपतेर्यदैति सैन्यं कथमिव शक्यमनेन मर्द्दनेन ।
प्रसरति जलधेर्यदा तरङ्गो भवति हि शूर्पनिवारणं निरर्थं ।
प्रत्यक्षदेवमादित्यमुलूको यदि निन्दति । का हानिस्तस्य देवस्य जगतामुपकारिणः । ६०
इति निश्चित्य भूपालो ज्यल्लालदीनभूपतेः । चरणं शरणीकर्त्तुं भगवद्दासमाश्रयत ।
अष्टवर्षाश्रितान् भोगान् भुक्त्वा योसेभभूपतिः । ज्यल्लालदीनभूपालसेवनार्थमथागमत् ।
गते तस्मिन् महीपाले भगवद्दाससैनिकं । याकोभोनाम तत्पुत्रः प्राज्यं राज्यमथाग्रहीत् ।
संग्रामे पितृसर्वस्वमर्जितं कोशसञ्चितं । दत्वा याकोभभूपालः सर्वांल्लोकानरञ्जयत् ।
चलिते भगवद्दासे योसेभनृपसंयुते । बभौ याकोभभूपालो मेघमुक्त इवांशुमान् । ६५
म्लेच्छशास्त्रविनिर्दिष्टमास्ते मतचतुष्टयं । अन्योन्यमतवैरेण बभूव कलहागमः ।
शंग्रचक्रादयस्तस्य नृपस्य हतमत्सराः । सदाशिवपुरे दुर्गं चक्रुर्युद्धचिकीर्षया ।
अथ याकोभभूपस्य दिद्दामठसमीपतः । बभूव तुमुलं युद्धं शंग्रचक्रेन तेन तत् ।
अलंमाशिरमल्लिकश्यालकादिपुरस्कृतः । युयोध शंग्रचक्रोऽसौ याकोभप्रभुणा सह ।
शंग्रचक्रस्ततो गत्वा मल्लिकश्यालचोदितः । जग्राह जलमध्यस्थं ग्रामं खय्यपुराभिधं । ७०
उद्यन् यथा दिनकरः किरणोत्करेण रात्र्यन्धकारनिकरं हरति क्षणेन ।
सैन्यं तथैव यमसादकरोत् करेण याकोभ एव कृतसंयकमोक्षणेन ।
अलंमाशिरखानोऽसौ युद्धं कृत्वा पलायितः । नगरात्शंग्रचक्रन्तं स रुरोध महीपतिः ।
विजये विहिते तेन याकोभेन तदन्तरे । मध्यदेशमहीपालाद्भयं नित्यमजायत ।
मध्यदेशमहीपालज्यल्लालदीनभूपतेः । कश्मीरविजयोत्कण्ठा भूयः समजायत ।
कासेमखाननामानं चक्रे हेदरसेवितं । प्रेरयामास भूपालः कश्मीरविजयेच्छया । ७५
द्वाविंशानां तदा सेनापतीनां निर्गमाय सः । चकाराज्ञां महीपालः कश्मीरविजयोत्सुकः ।
ते सेनापतयस्तस्य भूपतेराज्ञया क्षणात् । लाहोरनगरात्तस्मान्निर्जग्मुरूर्जितश्रियः ।
कूपानिरुदका आसन् पङ्कशेषास्तदा ह्रदाः । मरुश्च समतां यातस्तदा सेनाप्रचारतः ।

तत्र रेजुः पताकाभिः पटमण्डपपङ्क्तयः । कश्मीरपर्व्वतालोकसमुत्क्षिप्तभुजा इव ।

उच्चयौ स रजोराशिस्तथा सेनाप्रचारतः । येन नभसि सूर्य्यस्य राहुभीतिर्यथाभवत् । ५१०

मार्गस्थानां हि धूलीनां यथा सङ्ख्या न विद्यते । तथा सङ्ख्या न सेनायाः पदातिगजवाजिनां ।

दिनैः कतिपयैः सेना दूराध्वमलिनीकृता । चन्द्रभागानदीं प्राप चकोरीन्दुकलामिव ।

वस्त्र ध्वनैर्निजुस्तत्र पपुस्तोयञ्च निर्म्मलं । तडागदूषितालोकाः सुखं चक्रुर्यथेप्सितं ।

स्नानत्रस्तचलद्वाजिभीतिचञ्चलमानवे । चन्द्रभागातटे दूरादुपहासः कृतोऽभवत् ।

स्नानमुक्ताद्गजाद्यश्चाप्ययं दन्तकरेणुकात् । अन्यदन्तिकृतत्रासान्मनोभीत्याकुलोऽभवत् । ५१५

चन्द्रभागां समुत्तङ्घ्य दिनैः स्वल्पतरैरपि । पर्व्वतस्यान्तिकं प्राप सेना काश्मीरदेशगा ।

पर्व्वतेषु पदातीनामारोहणावरोहणैः । आगुगुल्फपदातीनामवसादो महानभूत् ।

क्वचित्तोये धारा क्वचिदपि जलं दुर्लभतरं कटित्पङ्के खानिः क्वचिदपि शिलाताडनभयं ।

क्वचिच्छीतं नित्यं क्वचिदपि सदोष्णांशुपतनं नगस्थाने पन्था भवति यममार्गोऽपर इव ।

सुदृष्टिकोमलीभूतं तासु पर्व्वतभूमिषु । नवघासाङ्कुरं जघ्नुर्हृष्टवारणवाजिनः ।

मध्यदेशीयलोकानां पश्यतां पर्व्वतस्थितिं । पृच्छतां ग्रामवृत्ताणां चमत्कारो महानभूत् । ५२०

तास्ताः सङ्कटभूमयः सुगमतां नीताः शिलापङ्क्तैस्ते ते कुञ्जरकुञ्जराः किल भटैर्भीतिं तदा प्रापिताः

लोकः कुञ्जमतिप्रकाशमकरोत् सानुं सतोयोद्गमं सेना पर्व्वतमस्तके समभवत् कल्पान्तकालोपमा ।

चक्रवर्त्तिप्रभावेण तत्सेनादर्शनेन च । पर्व्वतीयजना आसन् भयाश्वकितमानसाः ।

छागानुपायनीकृत्य मातुलङ्गफलानि च । पर्व्वतीयजनास्तत्र कासेमखानमाययुः ।

यद्ग्रामचरोऽपि मांसशकलैः संरुध्यते मानवैर्यद्वत्तोयतलस्थितोऽपि बडिशैर्मत्स्योऽपि चाबध्यते ।

यद्वच्छस्यसमर्पणेन कृतिभिर्दूरात्पशुर्नीयते तद्वत्तेन वशीकृता जनपदाः कासेमनाम्ना धनैः ।

हैदरचक्कनामाभूद्याकोभे वैरतत्परः । मार्गसन्दर्शनार्थी तत्खानकासेमसैनिके । ५२५

अत्रान्तरे स काश्मीरमार्गरक्षणतत्परः । वहाममनायकोऽप्यासीद्याकोभभयविह्वलः ।

बहामनायकोलोकं स्थापयित्वा बहिः स्वयं । जगाम केवलतया खानकासेमसैनिकं ।

तस्य कासेमखानोऽपि सर्व्वकार्य्यविचक्षणः । चकार बहुसंमानं वस्त्रैराभरणैर्धनैः ।

अथान्यैरपि याकोभमवगण्य समर्पितं । राज्यं होसेनखानस्य पश्चानिलगिरिस्थितैः ।

कासेनखानमायान्तं देशान्तरव्यवस्थितं । मध्ये होसेनखानस्य राज्यं श्रुत्वा चुकोप सः । ५३०

अथ याकोभभूपालः प्रस्थानं कृतवान् क्षणात् । होसेनखानं निर्भर्त्स्य पश्चानिलगिरिं प्रति ।

याकोभप्रहितं सैन्यं प्रभुसेवापराङ्मुखं । साकं होसेनखानेन सन्धिं चक्रे यदृच्छया ।

श्रुत्वा याकोभभूपालो मिलितं निजसैनिकं । निन्दां चपलचित्तानां सेवकानाञ्चकार सः ।

हरन्ति सम्पत्तौ वित्तं विपत्तौ विद्विषन्ति च । सेवकाः सन्ति दुर्गाद्यास्तस्मानतु तस्कराः ।

शंशचक्काभिधं वन्धाम्भेरमल्लदसंयुतं । मोचयित्वा स याकोभः काष्ठवाटान्तरं ययौ । ५३५

याकोभभूपमधिकृत्य निरस्तवीर्य्यं ते सेवका न विदधुर्बहुमानसेवां।
चिन्तामणिं लुठितहस्ततलाभिघातैः खेलन्ति वानरगणा गुलिकाक्रमेण।
याकोभे चलिते सैन्यं विससार पृथक् पृथक्। हारसूत्रक्षये छिन्ने मौक्तिकं विद्रुतं यथा।
काष्ठवाटान्तरे केचित्केचिन्नगरवासिनः। आसन् केचिद्विदेशस्थाः केचिन्मुग्गुलमन्दिरे।
होसैनखानादाहृत्य राज्यं पर्व्वतमस्तके। अग्रहे शंशचक्रेन कासेमाभिधशङ्कया।
कासेमखानमायान्तं निशम्य कृतनिश्चयः। जगाम शंशचक्रोऽसौ पर्व्वतं जनदुर्गमं। ७४०
स्वल्पलोकसमायुक्तः शंशचक्रोऽभवत्तदा। कासेमखानकोऽप्यासीद्बहुलोकसमन्वितः।
पुरस्कृत्य स कासेमखानो हैदरचक्रकं। चकार तुमुलं युद्धं सुग्रीवमिव राघवः।
काश्मीरसैनिके सर्व्वे चक्रहैदरदर्शनात्। चचाल रात्रितामिस्रं प्रातरिवारुणोदयात्।
यथा महान् रजोराशिर्व्वायुमात्रेण नश्यति। तथा मुग्गुलसैन्येन नष्टं काश्मीरसैनिकं।
काश्मीरसैनिके नष्टे मुग्गुलैर्व्विजयः कृतः। इति श्रुत्वा पुरस्त्रीणां हाहाकारो महानभूत्। ७४५
भयधूतकराम्भोजाविलोलनयनोत्पलाः। कुन्तलालियुतास्तस्थुः पद्मिन्य इव योषितः।
शोकान्धकारे सम्प्राप्ते रराज नयनोत्पलं। स्त्रीणां किन्तु मुखाम्भोजं सङ्कोचमगमत्तदा।
रुदन्तीनां कुचे स्त्रीणां निपेतुर्व्वाष्पविन्दवः। ज्वलन्तं हृदि शोकाग्निं दूरीकर्त्तुमिवोद्यताः।
द्राक्षाखोटफलव्याप्तं पुष्पकुङ्कुमशोभितं। प्रविश्य नगरं मेने स्वर्गवद्यवनो भृशं।
शाके प्रयातेऽष्टखपञ्चचन्द्रसङ्ख्ये द्वितीयादिषु कार्त्तिकस्य।
शुक्लेऽथ पक्षे रविवासरे च सैन्यप्रवेशो नगरे बभूव। ७५०
द्राक्षाफलमथास्वाद्य कार्षिकोपायनीकृतं। निनिन्दुर्मुग्गुलाः सर्व्वे निजकान्ताधरामृतं।
कुङ्कुमपुष्पमालाभिर्भूषिताशेषमस्तकः। मुग्गुलो मद्यपानेषु निजं वीर्य्यं व्यकत्थत।
कासेमखाननेतारं दृष्ट्वा हैदरचक्रकं। अथ काश्मीरलोकोऽपि तमेवनमशिश्रियत्।
अनेकलोकसंयुक्तं दृष्ट्वा हैदरचक्रकं। भीत्या कासेमखानोऽपि कारागृहे न्यवेशयत्।
अथ कासेमखानेन रुद्धे हैदरचक्रके। काश्मीरलोकाः सर्व्वे ते दूरं जग्मुर्व्वनान्तरं। ७५५
एकत्र मिलिताः सर्व्वे ते निन्दां चक्रुरात्मनः। परस्परञ्च संमन्त्र्य मतिं युद्धाय चक्रिरे।
योषित्पत्या विहीनेव चन्द्रहीनेव शर्व्वरी। लोकपूर्णा तथा सेना राजहीना न शोभते।
इति निश्चित्य सर्व्वे ते लोकाः यवनभर्त्सिताः। क्षणादानाययामासुर्याकोभं कृतनिश्चयाः।
याकोभमागतं श्रुत्वा साक्षात् कासेमखानकः। मोमारखाननामानं प्राहिणोत्तज्जिगीषया।
मोमारखानमायान्तं श्रुत्वा याकोभभूपतिः। बभूव बद्धसन्नाहः सम्यग्युद्धचिकीर्षया। ७६०
कोऽयं मोमारखानाख्योऽयुगत्सेवकसेवकः। एतेन सह योद्धव्यमित्यूचुस्तस्य मन्त्रिणः।
त्यक्त्वा मोमारखानन्तं विजयेश्वरसंस्थितं। प्रस्थानमन्यमार्गेण चकार नगरं प्रति।
तस्मिन्नवसरे सूर्य्यः साक्षाद्देदचयोमयः। भाविषड्ग्रामसंहारघृणयेवास्तमाययौ।

शनैः शनैर्दिने याते केवलत्वभियेव सा । तत्सङ्गमार्थिनी सन्ध्या ययौ स्थित्वा क्षणान्तरं ।

याकोभमायान्तमवेक्ष्य चन्द्रोहस्तस्थखङ्गदयदुर्निरीक्ष्यं ।

राजेति नाम द्वयमाकलय्य भीत्येव यातोऽस्तनगप्रदेशं । ७६५

अत्रान्तरे स याकोभोदूराध्वखिन्नसैनिकः । सदाशिवपुरस्थाने चस्कन्द नगरं क्षणात् ।

कृतवति सति कान्ते चुम्बनालिङ्गनानि क्षिपति च निशि वाणान्निर्दयं कामदेवे ।

सुरतनिरतनारीसङ्गमे सन्निकृष्टे समरभुवि नराणां सिंहनादोबभूव ।

मार्गे गृहान्तरे वापि हत्वा यवनसैनिकं । सैन्येन महता युक्तोराजद्वारं ददाह सः ।

अलिः सूर्य्योदयार्थीव रात्रिबद्धोऽम्बुजान्तरे । कासेमखानकोऽप्यासीद्रुद्धोनिजगृहान्तरे ।

फतिहखाननामासौ मुग्गुलोधृतसैनिकः । समुद्धततनुत्राणः सेकन्धरपुरेऽभवत् । ७७०

जज्वाल नगरं सर्व्वं यवनत्रासकारकं । अपि ज्वालाप्रकाशेन काश्मीरैर्युयुधे रणे ।

ततः कासेमखानेन दृष्ट्वा काश्मीरसैनिकं । कारागृहस्थितोरोषाद्धुतो हैदरचक्रकः ।

लोठं कृत्वा गते सैन्ये वाजिवारणवाससां । प्रभाते स च याकोभोरात्रियुद्धान्न्यवर्त्तत ।

रात्रौ दुर्जनचक्रताडनमलं राज्ञि स्वयं कुर्व्वति ताराखसमूहमम्बरवणिग्व्यस्तारयत् सर्व्वतः ।

प्रातश्चण्डकरे प्रभौ कमलकोशोत्पाटनं तन्वति प्रालेयश्रमवारिणाकुलतरस्तोऽगोपयत्तं क्षणात् ।

जाते प्रभातसमये शशिनि प्रयाते चास्तं क्षणाद्दिनकरेण तमोनिरस्तं ।

याकोभभूपतिरतीव बभूव भीतः सोऽभूच्च मुग्गुलजनः सकलः समेतः । ७७५

प्रातश्चलति याकोभे यवनानगरान्तरं । मुमूर्षुरात्रियुद्धेन रोषसन्तप्तमानसाः ।

याकोभं चलितं ज्ञात्वा दृष्ट्वा भग्नं स्वसैनिकं । स्वयं कासेमखानोऽपि निर्जगाम जयोत्सुकः ।

येन येन स याकोभोमार्गेण चलितोऽभवत् । तेन तेन हि कासेमखानकोनिर्ययौ स्वयं ।

तस्य कासेमखानस्य बहुलोकसमावृतः । अलेमाशिरखानाख्योबभूव चरणानतः ।

अलेमाशिरखानस्य तैलग्रामनिवासिनः । मित्रेण शंशचक्रेन युद्धमासीत् परस्परं । ७८०

फतेहखाननामाभून्मुग्गुलोबहुसैनिकः । नगरान्तररक्षार्थं सेकन्धरपुरस्थितः ।

युद्धं याकोभभूपालखानकासेमयोरभूत् । काश्मीरक्षिप्तपाषाणशरतोमरदारुणं ।

अथ काश्मीरलोकानां विरोधउदभूत् पुनः । राजाहमेव राजाहमिति कोलाहलान्वितः ।

विरोधमुत्थितं ज्ञात्वा सहायभ्रातृचोदितः । ययौ याकोभभूपालः काष्ठवाटान्तरं पुनः ।

ततोयोसोभखानेन सेरमस्तादकेन च । सन्धिः कासेमखानस्य विहिता शरणार्थिनः । ७८५

तेन कासेमखानेन ज्यल्लालदीनभूभृतः । योसोभखानप्रमुखाः प्रहिताश्शरणान्तिकं ।

ज्यल्लालदीनभूपेन समस्ताश्शरणागताः । संमानिताः सदा वित्तैः खानयोसोभकादयः ।

कश्मीरेषु महाशीतव्यथितानेकमानवः । आययावथ हेमन्तोद्वितीयइव मुग्गुलः ।

ततोयवनगेहेषु पपात हिमसन्ततिः । विजये विहिते यद्वत् पुष्पवृष्टिरिवाम्बरात् ।

याकोभभूपस्य कृतश्रमस्य रणाय कुर्व्वाणइवोपदेशं।
पुष्पोत्करैः संस्कृतसर्व्वमार्गो वसन्तकालः प्रकटीबभूव। ७९०
अथ याकोभभूपालः काष्ठवाटप्रदेशतः। आययौ मुग्गुलाञ्जेतुं बहुलोकसमावृतः।
तत्र कासिमखानोऽपि वार्त्तां श्रुत्वा जिगीषया। निर्य्ययावथ हस्त्यश्वव्याकुलीकृतभूतलः।
तयोर्य्याकोभभूपालखानकासिमयोरभूत्। चेत्रदेशे महायुद्धं शरपाषाणदुर्द्दिनं।
अथ याकोभभूपालः प्रस्थानं नगरं प्रति। चकारालक्षितोभूत्वा मुग्गुलैरनुयायिभिः।
धान्यराशिसमीपस्थं नगमाश्रित्य दुर्गमं। याकोभभूपः सहसा युयुधे सह मुग्गुलैः। ७९५
निर्म्मलासितनुत्राणविम्बितार्कमरीचिभिः। प्रकाशमन्धकारेऽपि बभूव वनगह्वरं।
अनेकविगलल्लोकशोणितासवपूरिताः। बभुस्तत्र शिरस्त्राणा यमस्य चषका इव।
अनेकक्षिप्तपाषाणचूर्णीकृतमहीरुहाः। पर्व्वतस्यापि काश्मीराउन्नतत्वं न सेहिरे।
मृतशोणितसंलिप्तनिर्झराम्बुच्छलेन किं। अभवद्यमराजस्य क्रीडत. कुङ्कुमद्रवः।
इत्थं याकोभभूपालखानकासिमयोरभूत्। युद्धं सन्नाससमात्रेण न जयोन पराजयः। ८००
आदूलखाननामापि खानकासिमनोदितः। जगाम सबलोयोद्धुं काश्मीरान् पर्व्वतस्थितान्।
युद्धे सन्निहिते तेषां मेघैराच्छादितागिरिः। क्लेशानामिव कुर्व्वद्भिः कालरात्रिं समावृता।
रराज ध्वनिते मेघे विद्युन्मालातिचञ्चला। जिह्वेव यमराजस्य स्वादचर्व्वणताडिता।
धारासारजले मेघे चलिते निजसैनिके। आदूलखाननामायं स्वर्गमार्गमयासहत्।
श्रीरङ्गोनामराजाभूत् ज्यलालदीनसेवकः। सोऽपि तत्समरं प्राप्य स्वर्गमार्गमशिश्रियत्। ८०५
सदाशिवपुरे दुर्गं कृत्वा तिष्ठति मुग्गुले। ज्येष्ठरुद्रसमीपस्थः काश्मीरैराश्रितोगिरिः।
तत्र सन्निहिते युद्धे निर्ययुः शोणितापगाः। बभूव सङ्गमोयासां सह नद्या वितस्तया।
[ मेर्जाआदूलनामा पातिशाहिसेवकोयुद्धार्थं जगाम। तस्मिन्नवसरे काश्मीरालंशिरखानकलोके याकोभलोकस्य युद्धं बभूव। तयोर्युद्धे सन्निकृष्टे आदूलखानोऽपि जगाम। आदूलखानमायातं दृष्ट्वा याकोभलोको वदति स्म। इह मुग्गुला आगताः ते चालंशिरखानसैनिकं त्यक्त्वा आदूलखानं जग्मुः। तेन सह युद्धमभूत्। अलंशिरखानलोकोऽपि आदूलखानसहायतां चकार। याकोभेन सह युद्धं चकार। आदूलखानोऽप्यलंशिरखानस्य सन्तुष्टो बभूव। पातिशाहिकार्य्यं त्वया कृतमिति वचनमुवाच। श्रीरङ्गोऽपि रायसिंहबद्धसम्बन्धो बभूव तस्य निकटे चत्वारिंशद्राजपुत्रा आसन् वर्षे पतिते। श्रीरङ्गोराजपुत्रानवदत्। भो राजपुत्रा यूयं चलत। अहं पङ्गुरस्मि चलितुं समर्थोनास्मि। ते चावदन् नैवं राजपुत्रजातौ चलनं न वर्त्तते पातिशाहो राजपुत्रेषु सम्मानं करोति। अतएव अस्माभिर्लङ्का रक्षणीयेति। ते राजपुत्रा न चेलुः। ]
इत्थं विधाय समरं निहते चलोके कासिमखानयनस्य बभूव भीतिः।
भग्नानवेत्य यवनान् परिभूयमानाः काश्मीरलोकनिकराः सहसा ववल्गुः।

वार्त्तामेतादृशीं श्रुत्वा ज्यसालदीनभूपतिः। सैदयोसोभखानस्य चकाराशां जिगीषया।
वार्त्तां योसोभखानस्य श्रुत्वा याकोभभूपतिः। चचाल गर्जितं श्रुत्वा मृगेशस्येव जम्बुकः। ८१०
श्रीकश्मीरसरोजमध्यनिरतं लोभाशया सङ्गतं याकोभाभिधराचिबद्धवपुषं नोचदहिर्निर्गमं।
कामेखानकषट्पदं भययुतं कुर्व्वन् क्षणान्निर्भयं सूर्य्योऽयं जयति प्रकाशसहितो योसोभखानाभिधः।
शंशचक्रादयो लोका मेर्जायोसोभवार्त्तया। चेलुरुड्डयनत्रस्ताः श्येनस्येव कपोतकाः।
योसोभखानआयाते भयात् कासेमखानकः। निर्ययावुदिते सूर्य्ये चक्राङ्कोविरहादिव।
मेर्जायोसोभखानस्य काश्मीरजनसंयुतः। मल्लादमेरनामाभूत् सदा सेवनतत्परः।
मेर्जायोसोभखानेन ज्यसालदीनभूपतेः। काश्मीरा बहवो लोकाः प्रहिताश्चरणान्तिकं। ८१५
अथ याकोभभूपालश्चाययौ काष्ठवाटतः। तथैव मुग्गुलान् जेतुं पतङ्गोऽग्निं यथा मदात्।
मेर्जायोसोभखानेन मल्लादाभिधसंयुतः। हाज्येमेरकनामापि प्रहितस्तज्जिगीषया।
तस्याचलाभवत् सेना मुग्गुलानाञ्च भूतले। ते उभे तुलया धृत्वा विधिर्बलमिवेचत।
यवनैर्मेर्षिते भूमौ काश्मीरैश्च नगोपरि। अन्योन्यसन्निकर्षन्तु गन्तुं शक्ता न तेऽभवन्।
सिंहनादोऽभवन्मध्ये सेनयोरुभयोस्तयोः। लोकजिघत्सया शब्दोयमदंष्ट्राङ्कुवोयथा। ८२०
ततोऽभूत्तुमुलं युद्धं देवदानवभीषणं। महायोधगुणग्रामनिकषोपलसन्निभं।
काश्मीरक्षिप्तपाषाणकम्पितानन्तपल्लवाः। आसन् युद्धं द्रुमादृष्ट्वा भयाद्धूतकरादिव।
महायोधकृतानन्तसिंहनादापदेशतः। क्रन्दन्निवाभवत्तत्र पर्व्वतोऽपि भयाकुलः।
योधक्षिप्तशरव्रातच्छन्नस्कन्धामहाद्रुमाः। तद्दृष्ट्वा तुमुलं युद्धमासन् रोमाञ्चितादिव।
युद्धं बहुविधं कृत्वा तुष्टं मुग्गुलसैनिकं। स्वबलं भग्नमालोक्य याकोभोऽभूद्भयाकुलः। ८२५
महाधचन्द्रमामन्ये ग्रस्तोयवनराहुणा। केवलोऽहं कथं शक्तोक्षिप्तुं सङ्ग्रामसागरे।
इत्युक्त्वा स च याकोभः केवलोऽप्यचलत्ततः। काष्ठवाटान्तरं प्राप लज्जमानोदिने दिने।
ज्यसालदीनसेवार्थं गते योसोभखानके। भ्राताभून्मेर्जबद्धुकः कश्मीरेष्वधिकारवान्।
विचारे विहिते तेन निर्व्वैरो सकलोजनः। चकोरइव शीतांशावुदयं प्रति गच्छति।
कुर्व्वन्तमेकदा हिंसां वणिजं निजवेश्मनि। कण्ठे निबद्ध्य तन्मांसं न मरं प्रत्यवेलयत्।
यः कश्चित् पुरुषोमोहात् प्राणिहिंसां करिष्यति। एतादृशं महत्कष्टमवाप्स्यति न संशयः। ८३०
एकदा यवनः कश्चिदपराधविनाकृतं। कश्चिज्जघान काश्मीरं पुरुषं मदविह्वलः।
निहतं पुरुषं सम्यगन्तर्धाय गलान्तरे। न मया निहतः कश्चिदित्यूचे स मृषा वचः।
विप्रस्तत्कुटुम्बेन तत्क्षणं मेर्जबद्धुकः। उवाच हेतुना केन काश्मीरोनिहतस्त्वया।
उवाच यवनस्तत्र नैव कश्चिन्मया हतः। यद्यथन्निहतस्तस्य कबन्धः कुत्र तिष्ठति।
इत्थं कृतप्रतिज्ञेऽस्मिन् यवने मेर्जबद्धुकः। लोकानाज्ञापयामास सरस्यन्तर्विलोक्यतां। ८३५
सरस्यालोडिते सम्यक्कबन्धे निर्गतेऽपि च। यवनस्यापराधोऽभूत् पुरुषं निघ्नतस्तदा।

अपराधिनमालोक्य यवनं मेर्जवङ्कुकः । शास्त्रोक्तेन विधानेन दण्डं तस्य समादिशत ।
ततोऽज्यसालदीनेन पृष्टोयोसोभखानकः । उवाचानन्तकाश्मीरगुणानानतमस्तकः ।

कश्मीरदेशो विहितो विधात्रा स्वर्गस्य निर्माणइव द्वितीयः ।
शेषः समर्थो रसनासहस्रद्वयेन वक्तुं न गुणान् यदीयान् ।
द्राक्षाफलानि क्षणमात्रनश्यन्मधूदपूराणि विहाय यस्मिन् ।
शृङ्गारिलोका अमृतं स्रवन्ति पिबन्ति कान्ताधरपल्लवानि । ८४०
यत्राङ्गनानां सततं मुखानि विलासलोलाक्षिपरम्पराणि ।
चकाशति क्षिप्रचलद्द्विरेफमालाश्रितानीव सरोरुहाणि ।
हाहा तुषारं व्यथयत्यजस्रमिति स्खलाङ्कलयुगं विधूय ।
यस्मिन्नभीष्टं पतिलोकमध्ये नारी विलासं प्रकटीकरोति ।

अन्येऽपि सन्ति गुणास्तस्य जगद्जगदीश्वरं । चक्रवर्त्तिन्नसङ्ख्यातागुणाः काश्मीरसम्भवाः ।
यस्मिन् भगवती सन्ध्या सन्ध्यानां त्रितये सदा । ददाति दर्शनं ग्रीष्मे सलिलागमनिर्गमैः ।
यत्रामरेश्वरः साक्षाद्धिममूर्त्तिधरो विभुः । वर्द्धते शुक्लपक्षेऽसौ कृष्णपक्षे च क्षीयते । ८४५
भगवान् स्वयमग्निः स यत्र जाज्वल्यते सदा । नेत्वसं विद्यते यस्य साक्षारोयस्य दृश्यते ।
अथ ज्यसालदीनोऽसौ श्रुत्वा काश्मीरजान् गुणान् । निर्ययौ दर्शनार्थाय लाहोरनगरान्तरात् ।
ज्यसालदीनभूपालः कश्मीरनगरान्तरं । आषाढशुक्लपञ्चम्यामाससाद ससैनिकः ।
आषाढशुक्लसप्तम्यामाशीर्वादपरायणान् । पुपोष स्वर्णदानेन भूपो ब्राह्मणबालकान् ।
ततोमार्त्तण्डमाश्रित्य गोप्रदानानि भूपतिः । मुक्तासुवर्णयुक्तानि ब्राह्मणेभ्यः समार्पयत् । ८५०
द्राक्षाक्षोटफलोत्तुङ्गदिव्यतालीवनान्वितं । कश्मीरदेशमालोक्य तुतोष धरणीपतिः ।
वितस्तातीरमाश्रित्य पश्यतोनगरस्थितिं । ज्यसालदीनभूपस्य बभूवातीव कौतुकं ।
ज्येष्ठरुद्रसमीपस्थं नानापुष्पोपशोभितं । सरस्तं पश्यतस्तस्य चमत्कारोमहानभूत् ।
ज्यसालदीनपादत्रपवित्रीकृतमस्तकः । चरणं शरणीकर्त्तुं याकोभोऽपि समाययौ ।
शरणार्थिनमायातं याकोभं शरणागतं । मानसिंहमहीपालसेवकं कृतवान्नृपः । ८५५
देशान्तरं समासाद्य चक्रवर्त्तिसमर्पितं । सुखं चकार याकोभोमानसिंहपदानतः ।
ज्यसालदीनभूपालोदृष्ट्वा कश्मीरमण्डलं । देशं योसोभखानाय दत्त्वा देशान्तरं ययौ ।
मेर्जयोसोभखानोऽसौ नृपसेवाविचक्षणः । देशं ररक्ष निःशेषमादेशेन विशेषतः ।
श्रीमज्ज्यसालदीनेन मेर्जयोसोभरोषतः । विहितः काजिश्चालाख्यः काश्मीरेष्वधिकारवान् ।
वार्षिके ढौकिते तेन मेर्जयोसोभसेवकाः । अधिकारविहीनास्ते गृहे प्राघुणिकाइव । ८६०
न दत्तं तेन कस्मैचिन्न भुक्तं स्वयमेव वा । किन्तु राशीकृतं धान्यं हृत्वा स्वर्णमिवाखुना ।
लोकायोसोभखानस्य काजिश्चालेन भर्त्सिताः । बभूवुः क्षुधया क्रान्तानिदाघेनेव चातकाः ।

धान्यं राशीकृतं दृष्ट्वा काजिशालेन वर्द्धितं। आययावथ कश्मीरलोकस्तद्धरणेच्छया ।
दुष्टेन काजिशालेन द्रविणेन व्ययीकृतं। अथ मुग्गललोकस्य विरोधोऽभूत्परस्परं।
भ्राता योसोभखानस्य मेर्जयाङ्गारकोऽकरोत्। सन्धिं काश्मीरलोकेन काजिशालजिघांसया । ७९५
विधाय विविधं युद्धं काजिशालोऽचलत्तदा। पर्व्वतारोहणादश्वे मृते स्वर्गं च सोऽगमत्।
हुसनभिगनामाभूज्ज्यल्लालदीनसेवकः। विधाय समरं सम्यग्जीवन्प्रत्याययौ च सः।
चित्तं विधाय कुटिलं यदनेन वित्तं संरचितन्तु रिपुभिः खलु भचितं तत्।
हासं कृतं कथमिति प्रकटप्रहासमस्तोकशोकगहितं वदति स्म लोकः।
येन यत्सञ्चितं वित्तं वञ्चयित्वा कृषीवलान्। तत्सर्व्वं निजलोकेभ्योमेर्जयाङ्गारकोददौ।
ज्यल्लालदीनभूपालपादसेवापराङ्मुखः। जग्राह मेर्जयाङ्गारोराज्यं कश्मीरमण्डले। ८००
तद्दृष्ट्वा भाविसङ्ग्रामभीतिचञ्चलमानसाः। ततः समस्तकाश्मीरा हाहेति जगदुर्जनाः।
इत्थं निशम्य चरितं यवनस्य तस्य ज्यल्लालदीननृपतिः सहसा जगाम।
रोषेण हद्धकटकं कटकं विसार्य्य चूर्णीचकार च स पर्व्वतदुर्गमार्गं।
ततोज्यल्लालदीनेन बहुलोकसमन्वितः। श्रीमच्छिखफरेदाख्यः प्रहितस्तज्जिगीषया।
स रुरोह ततोहस्तिगञ्जपर्व्वतमस्तकं। उदयाद्रिमिव प्रातः साचाद्भास्करसारथिः।
तस्मिन्नवसरे मेर्जयाङ्गारोनिजसेवकैः। प्राप्य शूरपुरग्रामं निहतोद्रोहकर्म्मणा। ८०५
हतं तं पतितं दृष्ट्वा जम्बूकश्वासितामिषं। स्वामिद्रोहीति चुत्कृत्य सहसा जगदुर्जनाः।
आयातएष भगवानिह चक्रवर्त्ती पूजा ह्यनेकविधिना च मया विधेया।
इत्याकलय्य स उपायनभक्तियुक्तं याङ्गारकोरचितवान्निजजोवितेन।
मेर्जयाङ्गारके तस्मिन् निहते निजसेवकैः। ततः शिखफरेदाख्यः स प्राप नगरान्तरं।
साचाच्छिखफरेदेन रचिते नगरान्तरे। चौराणां नाभवन्मार्गउलूकानामिवोषसि।
ततोज्यल्लालदीनोऽसौ द्रष्टुं काश्मीरमण्डलं। आययौ कुङ्कुमाचोटफलपुष्पोपशोभितं। ८१०
काचिद्दर्शनकाङ्क्षिणीं प्रियसखीं सन्दर्शयन्ती नृपं व्यग्राभूदपरा चमूपतिरयं दृष्टोमयेत्यब्रवीत्।
काचिद्गुरुपयोधरा समचलत् सन्तर्जयन्ती शिशुमित्थं भूपविलोकने समभवत् पौराङ्गनानां त्वरा।
ततः काश्मीरलोकेन कृते भूपतिदर्शने। सद्यः प्रतिगृहं नित्यं प्रावर्त्तत महोत्सवः।
पुरा चक्रकुलोत्पन्नैर्भूपैर्जातिविरोधतः। ब्राह्मणेभ्यस्तदा दण्डोगृहीतः किल वार्षिकः।
योररच निजां जातिं कुलशीलसमन्वितः। स ददौ वार्षिकं राज्ञे करं प्रतिगृहं द्विजः।
ब्रह्मयज्ञोपवीतस्य रक्षणाय समर्पितः। प्रत्यब्दं ब्राह्मणैराज्ञां चत्वारिंशत्पणाः कराः। ८१५
उत्तमोब्राह्मणोदेशं तत्याज म्लेच्छदूषितं। तत्याज मध्यमोलक्ष्मां जातिं तत्याज चाधमः।
म्लेच्छमेघे स्थिते तस्मिन्नन्धकारितदिङ्मुखे। विप्रादेशान्तरं जग्मुर्मरालाइव मानसं।
तादृशान् ब्राह्मणान् ज्ञात्वा ज्यल्लालदीनभूपतिः। चक्रवंशक्रमायातं विप्रदण्डं न्यवारयत्।

काश्मीरदेशे विप्राणां योयः पूजां करिष्यति। तस्मै तस्मै प्रदास्यामि तद्दत्तं पारितोषिकं।
काश्मीरदेशे विप्रेभ्योवार्षिकं योग्रहीष्यति। अचिरात्तस्य भूपालोग्टहमुत्पाटयिष्यति। ८०
इत्यादिशन्तोभूपस्य हतवार्षिकमाध्वसाः। आशीर्व्वादपरा आसन् ब्राह्मणाब्रह्मवादिनः।
साचाज्ज्यसालदीनोऽयं जीयाद्वर्षशतार्ब्बुदं। योऽस्माकं वार्षिकं दण्डं वारयामास भूपतिः।
चक्रवंशप्रभूणां हि भूपतीनां महाशया। नित्यं धेनुसहस्रस्य म्टत्युरासीदवारितः।
म्लेच्छान्धकारविध्वस्तामिचदर्शनवर्जिताः। ब्राह्मणाश्चम्पतव्यक्त रात्रौ पद्माकराइव।
देशेऽस्मिन् म्लेच्छदावाग्निशोषिताशेषवृत्तयः। नाभवन् ब्राह्मणाः सर्व्वे दग्धारण्ये म्टगाइव। ८५
कचिद्द्रासः कचित्त्रासः कचिच्चैव निभर्त्सनं। जम्बुकस्येव विप्रस्य पथि सञ्चरतोऽभवत्।
ज्यसालदीनभूपालनित्यसेवनतत्परः। बभूव रामदासाख्यो विप्राणामुपकारकः।
तादृशान् ब्राह्मणान् दृष्ट्वा रामदासोमहाशयाः। वितीर्णस्वर्णद्रव्योघो बभौ कर्णइवापरः।

यद्दर्पेणैरम्टतमेष ददाति मेघस्तद्गर्जितेन सविकथ्यत एतदेव।

दानं सदेव ददतोन बभूव तस्य श्रीरामदासनृपतेर्हृदयेऽभिमानः।

मान्धातमन्ददाता भवसि गुणगणैः कर्णं कर्णौ पिधेहि श्रोडा जीमूतवाह त्वयि भवति तथा किम्बले त्वं बलीयान्।
सत्यं वा वेद्मि नित्यं किमु तव यशसा विक्रमादित्य कृत्यं दानं सम्यग्विधानं वितरति चतुरं रामदास. सदासः।९०
[ अकबरसेवकेन रामदासेन ब्राह्मणग्टहं प्रति रजतमुद्राशतं सुवर्णमुद्रासहितं समर्पितं।
रजतमुद्रापञ्चाशत्सहस्राणि रामदासेन ब्राह्मणानां दारिद्र्यदूषितानां परिकल्पितानि। ]
यावदन्तरमदानदानयोरामदास जगतीसुरद्रुम। अन्यदीयभवदीयदानयोस्तावदन्तरमिति प्रतीयते।
निवेदयाशीर्वचस्तस्मै ब्राह्मणाब्रह्मवादिनः। ग्टहं प्रत्याययु. सर्व्वे पण्डितानिर्म्मलादयः।
अन्येद्युरपि सर्व्वे ते प्रह्लादनिर्म्मलादयः। सम्मानितानरेन्द्रेण वचसाम्टतवर्षिणा।
श्रीमान् ज्यसालदीनोऽपि रामदासनिवेदितान्। विप्रान्निर्व्वापयामास चकोरानिव चन्द्रमाः।
ग्रामेषु तेन दत्तेषु बभौ पण्डितमण्डलं। मेघे वर्षति दावाग्निसन्तप्तमिव काननं। ९५
ज्यसालदीनभूपालमहासेवाविचक्षणः। अभूद्राजानकादिभ्योभूमिदानविवेचनं।
विपक्षं गुणिनं हित्वा स्वपक्षं गुणवर्जितं। पुपोष भूमिदानेन स ज्ञातिस्नेहमोहितः।
काश्मीरेष्वथ रामदासवचनचुम्बाचमत्कारितं भूदानामृतमुत्थितं सुविमलं श्रीराजगेहाम्बुधः।
आदित्याभिधराक्षसा स विबुधान् हा वञ्चयित्वा कथं नीतं दुर्जनबन्धुदैत्यसुमहत्संघटनये तस्य हा।
साचाज्ज्यसालदीनोऽसौ करुणाम्टतसागरः। स्वर्णद्रव्यदानेन भिक्षुलोकमपूपुरत्।
[ ततः पातिशाहिः शिखाकेशं समादिशत्। भवता भाण्डागारे रौप्यमुद्रासहस्राणि ग्टहीत्वा ग्रामे
चाटव्याञ्च सर्व्वेषु स्थानेषु ब्राह्मणानां भिक्षुकाणाञ्च द्रविणं समर्पणीयमिति तेनापि तथैव कृतं।
देशं येशोभिरक्षानाय समर्थे पुनरेव सः। ज्यसालदीनभूपालोदेशान्तरमयागमत्।

देशे योसोभखानेनाश्रिते ते निर्वबुर्जनाः । उदयाद्रिङ्गते सूर्य्ये प्रातः पद्माकरा इव ।

समर्पिताः प्रतिग्रामं कार्षिकाः क्षनवार्षिकाः । धानुष्काश्च पुनर्युद्धश्रद्धया तेन वारिताः ।

प्रवर्त्तते यथा हंसः क्षीरनीरविवेचने । तथाभूत् सोऽपि धानुष्ककृषीवलविचारणे ।

ज्यसालदीनसेवार्थं गते योसोभखानके । मेर्जनस्करनामाभूत्तत्पु त्रोऽत्राधिकारवान् ।

कलङ्करहितः साक्षात्सदा सर्व्वशिरोमणिः । सुधामयवपुः सोऽयं बालचन्द्र इवाबभौ । ९१५

सेवकोयवनोलोकं वितस्तातीरमाश्रितः । उद्यतां काष्ठभारोऽयमित्यादिश्य व्यमर्दयत् ।

तादृशं यवनं दृष्ट्वा मेर्जलस्करकः स्वयं । उवाच सचिवान् शीघ्रं पश्यायं हन्ति मानवान् ।

अहो मत्सेवकालोकान् काश्मीरान् व्यथयन्ति किं । ज्यसालदीनभूपालान्न भयं वर्त्तते कथं ।

मार्गे नास्ति विलुण्ठनं न च भयं चौरान्नवा दुर्जनाद्ग्रामे वा नगरे प्रयच्छति वणिल्लोकोम शुल्कं क्वचित् ।

मेघोवर्षति मेदिनी फलयुता सद्वार्षिकाः कार्षिकादेशे रक्षति न क्षितेः क्षतिरहे ज्यसालदीनाभिधे ।

अधुना भवता शीघ्रं यवनोऽयं निरुध्यतां । इत्याज्ञप्तोनिरुद्धुन्तमधावत् सचिवः क्षणात । ९२०

चलिते यवने तस्मिन् भयात्तं सचिवोऽब्रवीत् । भगवन् यवनः सोऽयं लङ्घयन पलायितः ।

इत्युक्ते तेन भूयः स मेर्जलस्करकोऽवदत् । अधुना चलिते तस्मिन् मदुक्त वचनं कुरु ।

मध्यंवितस्तमानीय नावं काष्ठसमन्वितां । तथा दहन्तु लोकानां यथा भीतिर्भविष्यति ।

तथाविधे कृते तेन मन्त्रिणा यवनास्तदा । ज्वलन्तीं नावमालोक्य भयेनासन् मृता इव ।

यः कश्चित् यवनोमोहात् काश्मीरान् पोडयिष्यति । स निजस्यापराधस्य सत्वरं फलमाप्स्यति । ९२५

भूतलान्निर्गता रेजे कुङ्कुमाङ्कुरसन्ततिः । शरद्दिदृक्षया शेषशिरःपङ्क्तिरिवोत्थिता ।

प्रादुरासीत्ततोहित्वा निर्म्मलाङ्कुरचोलकं । शिखाकुङ्कुमपुष्पाणां लज्जयेव शनैः शनैः ।

कुङ्कुमपुष्पशोभाढ्यं द्राक्षाक्षोटसमन्वितं । दृष्ट्वा पद्मपुरग्रामं निनिन्द त्रिदिवं जनः ।

खारीके वापिते बीजे श्रावणे भुवि वार्षिकैः । अर्द्धखारीप्रमाणानि पुष्पाण्यवचितानि तैः ।

प्रातर्भवन्ति पुष्पाणि चितानि धरणीतलात् । आसञ्चितानि तावन्ति सायंमध्याह्नयोरपि । ९३०

यदाप्रभृतिनागेन तच्चकेण प्रदर्शितं । तदाप्रभृति तादृक्षं कुङ्कुमं नाभवद्भुवि ।

कश्चित्पुष्पावचयनिरतोढौकयानोऽपि कश्चित् कश्चिद्भारप्रमथितशिरानीशयानोऽपि कश्चित् ।

कश्चिन्नित्यं तुलननिरतारक्षणे कोऽपि सकस्मिन् काले बहुलघुघ्रणव्याकुलोलोकआसीत् ।

इति कुङ्कुमवर्णनं ॥

अष्टवर्षेष्वतीतेषु ज्यसालदीनभूभृता । योसोभखानादाहृत्य देशोऽन्येषु समर्पितः ।

आसाहखान आयाते मेर्जयोसोभसैनिकं । पृथक् पृथक् ययौ याते वायाविव रजोभरः ।

श्रीमज्ज्यसालदीनेन प्रहितौ निजसेवकौ । आसाद्खानसोल्तान्मसह्मदकुलखानकौ । ९३५

आसाहखानसौ ज्ञात्वा ज्यसालदीनसेवकौ । देशाधिपतितां दत्वा प्रभुपादान्तिकं ययौ ।

कश्मीरेष्वपि तौ सञ्चरद्दुर्विचारं विचेरतुः। अन्धकारं सदा पृथ्व्यां सूर्य्याचन्द्रमसाविव।

अकवरनृपतेरथाज्ञया तौ प्रवरपुरान्तिकशारिकासमीपे।

विदधतुरगमाकलय्य दुर्गं नगनगरीतिविरुद्धनामधेयं।

बहुविधतपसा विधूय देहं त्रिदिवगतिः खलु जन्मनि द्वितीये।

इह नगनगरीं विलोक्य लोकस्त्रिदिवमिदं न समीहतेऽधिगन्तुं।

तस्मिन्नवसरे गेहे रुद्धे भूपालसेनया। दुःखं बभूव लोकानां नगरान्तरवासिनां।

तादृशं दुःखमालोक्य वणिक्लोकनिवेदितं। लोकान्निवापयामास निर्देशेनेति भूपतिः।

नवीननगरीमध्ये मामकाः सन्तु सेवकाः। यः पीड़यति काश्मीरान् सोऽपराधी भविष्यति।

आदेशे विहिते तेन ज्यलालद्दीनभूभृता। अथ मुग्गुललोकोऽयं शिश्रिये नगरीं नवां।

शारिकापर्व्वते रेजे नगरी सा सुधासिता। राजधानीं समीपस्थां हसन्तीव पुरातनीं।

निर्गते यवने लोकस्तेनाथ त्रिदितोत्सवः। ज्यलालद्दीनभूपालसदाशीर्व्वाददतत्परः।

द्विसहस्रगृहोपेतमलाभदीनर्निर्मितं। अकस्मादथ मध्याह्ने जज्वाल नगरं क्षणात्।

मुग्गुलान्निर्गतान् दृष्ट्वा नवीननगरीस्थितान्। विरहादिव जज्वाल नगरी सा पुरातनी।

गृहशालादिविस्तीर्णं नानाचित्रोपशोभितं। वह्निना क्षणमात्रेण भस्मशेषमभूत्पुरं।

पुराणनगरीदाहे सा बभौ नगरी नवा। सपत्नीविरहे जाते मोदते इव वल्लभा।

इति पातिशाहिअकवरज्यलालद्दीनस्य कश्मीरप्राप्तिवर्णनं।

# राजतरङ्गिणीसंग्रहः



राजग्रन्थेषु ये भूपाः कथिताः कविभिः कलौ । कश्मीरदेशसाम्राज्यपदगाः पृथिवीभुजः ।
तेषामनुक्रमः माचान्मया हि लिख्यतेऽधुना । षट्सु वर्षशतेष्वेव त्रिपञ्चाशद्युतेषु च ।
प्रयातेष्वादिगोनर्द्दः शशास पृथिवीमिमां । कश्मीरेष्वादिगोनर्द्दः ख्यातः सर्व्वधराभुजां ।
समकालभवः पाण्डुपुत्राणां शौर्य्यशालिनां । ३५ । ६ । सुतर्द्दामोदरस्तस्य भूमिपालशिरोमणिः ।
पत्नी यशोवती तस्य राज्यभाक् तदनन्तरं । ३५ । ६ । सुतस्तस्यामहाराज्ञ्या बालगोनर्द्द इत्यथ ।
भजन् पैतामहं नाम कलिकाले ( ३० ) ऽथ भूमिपाः । आम्नायभङ्गान्निर्नष्टनामकृत्यास्ततः परं ।
पञ्चत्रिंशन्महावीरामग्ना विस्मृतिसागरे । विस्मृता राजानः ( ३५ )
[ कौरवकौन्तेयसमकालभवाद्द्वापञ्चाशतिर्नृपा गोनर्द्दाद्यारभ्य विस्मृताः । तद्राज्ये गतवर्षाणि ( १२६६ ) ]
यदुक्तं । वर्षाणां द्वादशशती षष्टिः षड्भिश्च संयुता । भूभुजां कालसङ्ख्यायां तद्द्वापञ्चाशतेर्मतेति ।
राजाऽभवल्लवोनाम कश्मीरेष्वथ तत्सुतः । ( व ३५ ) ततः कुशेशयाख्योऽभूत् ( व ३ । मा ८ ) खगेन्द्रस्तत्सुतस्ततः । ( व ६० )
अथ सार्व्वर्य्यवर्य्योऽभूत्सुरेन्द्रस्तत्सुतोनृपः । ( व ३० । मा ६ ) [ तस्मिन् निष्क्रान्ते सति । ]
अथान्यवंशजोराजा गोधरोनाम भाग्यवान् । ( व ३५ । मा ७ ) तदङ्गजः सुवर्णाख्य ( व ६० ) स्तत्सुनुर्जनकोनृपः ( व ६ )
शचीनरस्तस्य सूनु ( व ७१ ) रशोकस्तत्पितृव्यजः । ( व ६२ ) जलौकस्तत्सुतोनाम कश्मीरेषु सुखप्रदः । ( व ३० )
अथान्यवंशजः ख्यातः शापात् सर्पतनुं श्रितः । दामोदरो द्वितीयोऽसौ सत्ययुगनृपोपमः । ( व २५ )
अथाभूवन् स्वनामाङ्कपुरत्रयविधायिनः । हुष्कजुष्ककनिष्काख्या युगपद्राज्यकारकाः । ( व ६० )
तेषामनन्तरं भूभृदभिमन्युर्महायशाः । ( व ३५ ) निष्कण्टकस्ततः ख्यातः शतमन्युरिवापरः ।
ततोहिममहाव्यापत्प्राप्ते कश्मीरमण्डले । बौद्धोपद्रवसम्भूते सर्व्वप्राणिक्षयंकरे ।
[ तस्मिन्नवसरे हि सामाज्यसहितेन चन्द्रदेवब्राह्मणेन निवारितं कष्टतरं । ]
राजा तृतीयगोनर्द्दः प्रायः कश्मीरयोजकः । ( व ३५ ) पुत्रोविभीषणः श्रीमान् ख्यातस्तस्य यशस्विनः । ( व ४५ । मा ६ )

इन्द्रजिद्रावणौ तस्य पितापुत्रौ क्रमान्नृपौ। ( व ३० । मा ६ ) अन्योविभीषणस्तस्य पुत्रः ( व ३५ ) श्रीकिन्नरानिधः।
( व ३९ । मा ८ )
सिद्धोऽभूत्तत्सुतः सिद्धः पुण्यभूपाग्रणीः कलौ। ( व ६० ) तत्सुनुरुत्पलाख्योऽय पेशलाब्रतया स्मृतः। ( व ३० । मा ६ )
हिरण्याख्योमहाराजः ख्यातोऽभूत्तदनन्तरं। ( व ३७ । मा ७ ) श्रीहिरण्यकुलस्तस्य सुतोराज्यपदं श्रितः। ( व ६० )
कश्मीरकाश्यपीकान्तावसुभोऽभूत्तदङ्गजः। राजा वसुकुलः श्रीमां ( व ६० ) स्तत्सुतस्त्रींत्रकोटिहा।
श्रीमिहिरकुलः क्रूरश्चतुरर्णवजित् कलौ। ( व ७० ) श्रीमत्सतीसरोभूमिभामिनीभोगनिर्भरः।
वकाख्यस्तत्सुतोराजा ( व ३६ ) तत्सूनुः क्षितिनन्दनः। ( व ३० ) वसुनन्दाभिधस्तस्य पुत्रोराजश्रियान्वितः। ( व ५२ )
द्वितीयोनरनामाभूत् राजा कश्मीरमण्डले। ( व ६० ) अक्षस्तदङ्गजः ख्यातो ( व ६० ) गोपादित्यस्तदङ्गजः। ( व ६० )
गोकर्णस्तत्सुतः स्वामी भूमेर्भूपशिरोमणिः। ( व ५७ ) विचारचारुनीतिज्ञो नरेन्द्रादित्यइत्यथ। ( व ३६ । मा ३ )
अन्धोयुधिष्ठिरस्तस्य पुत्रोगोत्रभिदः समः। ( व ३४ ) तरङ्गे प्रथमे ख्यातभूभुजः समुदाहृताः।
चतुर्दशाधिकं वर्षसहस्रं नव वासराः। मासास्च विंशतिरस्मिन्नेकविंशतिराजसु।
राजानः ( २१ ) वर्षं ( १०१४ ) मा २० ॥ प्रथमस्तरङ्गः समाप्तः ॥
कश्मीरदेशभूराज्ञीमहाराजयशोभजन्। प्रतापादित्यइत्यासीत् राज्ञां तेषामनन्तरं। ( व ३२ ) तस्य सूनुर्जलौकोऽभूत्
चतुरर्णवपालकः।
सम्भोगं नागकन्यानामकरोद्भूरिविक्रमी। ( व ३२ ) तुञ्जीनोऽन्यसुतः श्रीमान् ( व २६ ) विजयोऽथ तदङ्गजः। ( व ८ )
जयेन्द्रस्तत्सुतोऽपुत्रः साम्राज्यस्यावसानदृक्। ( व ३७ ) तन्मन्त्री सन्धिमानार्य्यराजोऽभूद्धृतजीवितः। ( व ४७ )
योगिनीवरप्राप्ताशः श्रान्तोभीमगिरिं श्रयन्। शतद्वयी वत्सराणामष्टाभिः परिवर्ज्जिता।
अस्मिन् द्वितीये व्याख्याताः षट् प्रख्यातगुणानृपाः। राजानः ( ६ )। ( व १९२ ) । द्वितीये तु तरङ्गेऽस्मिन स्मृता
भूमिभुजः कलौ ॥ द्वितीयस्तरङ्गः समाप्तः ॥
श्रीमेघवाहनोऽमात्यैर्गन्धारदेशजः हृतः। स्वामी राज्यस्य सर्व्वत्र प्राणिहिंसावहिष्कृतः। ( व ३४ )
ततः प्रवरसेनोऽभूत् पार्थिवो दिग्जयी कलौ। ( व ३० ) तत्सूनुश्च हिरण्योऽभूत् पालयन् भूमिमण्डलं।
अपुत्रोऽगात् क्षयं सोऽथ मितपुण्यतया कलौ। ( व ३० । मा २ ) मातृगुप्तोऽभवत् ( व ४ । मा ९ ) दत्तराज्येन सत्कारिणा।
तोरमाणे सुतेऽमुष्य हिरण्यस्य च भ्रातृजे। वहिर्देशान्तरं याते द्वितीये प्रवराभिधे।
देशान् शासति कश्मीरान् मातृगुप्ते महीपतौ। आयातो देशलोभेन श्रीमान् प्रवरभूपतिः।
दिगन्तं तद्गृह्याश्रते मातृगुप्तेऽथ भूपतौ। राज्यं चकार कश्मीरमण्डले प्रवरस्ततः। ( व ६० )
यस्याद्यनगरं कान्तं योगाच्छिववभा शुभैः। सूनुस्तस्य महाराजो द्वितीयोऽथ युधिष्ठिरः ) व ३९ )।
नरेन्द्रादित्यइत्याख्यां भजमाऽऽस्य नन्दनः ( मा ८ दि १३ ) तस्यानुजो रणादित्यः कलौ वर्षशतत्रयं।
राज्यचन्द्राऽऽजतरणिः पूर्व्वपुण्यक्रमान्वितः ( ३०० ) तत्पुत्रोविक्रमादित्यः ( व ४२ ) बालादित्यस्तदङ्गजः ( व ३७ )
इत्थं राजगणे भूपास्तृतीये समुदाहृताः। वत्सराणां चिपञ्चाशदधिके शतपञ्चके।
षेकाहेऽत्र गते याताम्तृतीयेऽस्मिन् दशेश्वराः। राजानः ( १० ) वर्षं ( ५५३ ) मा ६ दि ८ ) ॥ तृतीयस्तरङ्गः समाप्तः ॥

अन्यवंशोद्भवोदेशे राजा दुर्लभवर्द्धनः । ( व ३६ ) सुयशाः पालय श्रीमान् दुर्लभकोऽस्य च ।
चन्द्रापीडाभिधस्तस्य सूनुः कृतनृपोपमः । योद्दृष्टप्रायदोषश्रो भूमिपालश्रिया मतिः ( व ८ मा ८ ) ।
तारापीडोऽभवत्तस्य सोदरोदुर्मतिस्ततः । ( व ४ दि २४ ) द्वितीयो ललितादित्यो भ्रातास्य पृथिवीपतिः ।
यस्याज्ञानां श्रतं यातं त्रिदिवं पुण्यकर्म्मभिः । ( व २६ मा ७ दि ११ ) राजा कुवलयापीडः पुत्रोऽस्य भाग्यवान् कलौ
जीवन्मुक्तिपदं यातः श्रीपर्व्वतवनादिषु । ( व १ दि १५ ) वज्रादित्यो द्वितीयोऽपि पुत्रो राज्यपदे स्थितः ।
सप्ताब्दान् वसुधां भुक्त्वा जगाम त्रिदिवं ततः । पृथिव्यापीडसंग्रामापीडाख्यौ महीभुजौ ( व ४ मा १ दि ७ ) ।
एतदनन्तरं राज्यभाजनं बलवत्तरः । जयापीडोऽथ भूपालः समुद्रव्ययपालकः ( व ३१ ) ।
कश्मीरमण्डले जज्जस्तत्श्यालो भूपतिस्त्रिषु ( व ३ ) ललितापीडसंग्रामापीडाख्यौ च पार्थिवौ ( व १२ ) ।
श्रीचिप्पटजयापीडो द्वितीयो भूमिभूषणं । आसीत् काश्मीरिको राजा कल्यपालेन्द्रोऽपि सन् ।
अभिचारेण हत्वा तान् सामात्यादितरेतरं । उत्पलादिरसंप्राप्तराज्यैस्तन्मातुलैः कृतः ।
भ्रातुः पुत्रोऽजितापीडो जयापीडसुतात्मजः ( व ३६ ) अनङ्गापीडनामाथ सङ्ग्रामापीडजस्ततः ( ३ ) ।
श्रीमदुत्पलपीडश्च राजा कश्मीरमण्डले ( व १५ ) । भूमिपालाश्चतुर्थेऽस्मिन् तरङ्गे विबुधैः स्तुताः ।
समाशतद्वये षष्टियुते मासेषु षट्सु च । निर्द्दिष्टादिषु कार्कोटवंशे सप्तदशाभवन् ।
( वर्षं २६० मास ५ दि २० ) राजानः ( १७ ) ॥ चतुर्थस्तरङ्गः समाप्तः ॥

अवन्तिवर्म्मा साम्राज्यं प्राप्य पाटितकण्टकः । ( व २७ ) कश्मीरमण्डलं रम्यं भुक्तं शङ्करवर्म्मणा ( व १८ ) ।
गोपालवर्म्मा पृथिवीं पालयन् ( व २ ) सङ्कटस्तथा । ( दिन २० ) राज्ञी सुगन्धा कश्मीरसाम्राज्यपदमाश्रिता । ( व २ )
पङ्गुर्निर्जितवर्म्माथ ( व ८ ) तत्पुत्रः पार्थएव च ( व १५ ) चक्रवर्म्मा ततो भूपः ( व १४ ) शूरवर्म्मा ततः परं ( व १ ) ।
उन्मत्तावन्तिनामाथ पार्थसूनुर्दुराशयः ( व २ ) । तरङ्गे पञ्चमे भूपाः कथिताः कविपुङ्गवैः ।
अधिकाब्दां समाशीतिं मासेषु च चतुर्ष्वगात् । कल्पपालाष्टकं रथ्या शतस्त्रीसचिवा अपि ।
( वर्ष ८३ मा ४ ) राजानः ( ११ ) ॥ पञ्चमस्तरङ्गः समाप्तः ॥

श्रीयशस्करदेवस्य राज्यमासीत् कलौ युगे ( व ९ ) वर्णटस्य ततो राज्यं स्वप्नतुल्यमभूद्युगे । ( दि ६ )
ततो वक्राङ्घ्रिसंग्रामदेवस्यासीच्छ्रियः पदं । ( मा ६ ) ततः श्रीपर्व्वगुप्तस्य ( व १ मा ४ ) क्षेमगुप्तस्य च प्रभाः । ( व ८ मा ६ ) ।
राज्ञोऽभिमन्युगुप्तस्य राज्यं शुभकरं तदा ( व १३ मा १० ) । ततः श्रीनन्दगुप्तस्य कश्मीरश्रीमतः सतः ( व १ मा १ ) ।
गुप्तत्रिभुवनाख्यस्य ( व ४ ) भीमगुप्तस्य चाथ वा ( व ५ ) । राज्यसंपच्च भाचारा दिद्दायास्तदनन्तरं ( व २३ ) ।
षष्ठे भूमिभुजः ख्यातास्तरङ्गे कविपुङ्गवैः । अथ वर्षचतुःषष्टी मासेऽप्यर्द्धे दिनेषु च ।
अष्टस्वभूवन् भूपाला दश भूभोगभागिनः । ( वर्ष ६४ दि २३ ) राजानः ( १० ) ॥ षष्ठस्तरङ्गः समाप्तः ॥

राज्ये संग्रामदेवोऽथ भ्रातृजोऽन्ते नृपः कृतः । राज्ञ्या तथा बुद्धिबलात् कश्मीरेषु कलौ युगे ( व २४ ) ।
हरिराजानन्तदेवावास्तां तस्यात्मजौ ततः । ( व ५२ ) मा ४ दि ७ ) कलशोऽनन्ततनयो देवप्रासादलेखकृत् ।
राजा भूमेः सुखानन्दकरः कलितपौरुषः । ( व ८ मा १ ) उत्कर्षहर्षनामानौ तत्सुतौ पार्थिवौ ततः । दि ( २३ ) ।

आस्तामनन्तयोर्हर्षः प्रजालुण्ठनतत्परः। तरङ्गे सप्तमे भूपाः स्मृताः कविवरैः पुरा। ( राजानः ६ ( वर्ष ८८ दि ३ )
॥ सप्तमस्तरङ्गः समाप्तः ॥

हर्षदेवात्तदुद्दामविक्रमोऽनन्यवंशजः। भ्रातुः पुत्त्रस्य दिद्दायाजस्रराजस्य नप्तृतः।
मल्लाभिधानादुद्भूतः पृथिवीमुच्चलोऽभजत्। ( व १० मा ४ दि २ ) द्रोहेण तं हतवता भृत्यानामग्रजस्ततः।
शङ्खराजान्यनामाभूत् रड्डाख्यः क्षणिको नृपः। ( मध्याह्नं तावत् )
गर्गेन निहते तस्मिन् सल्होदैमातुरोऽभवत्। ( मा १ दि २७ )तस्योच्चलमहीभर्त्तुर्भ्राता निर्बध्य तं बली।
सुस्सलाख्योऽग्रहीद्राज्यं मालिनस्सलपोदरः ( व १६ )। विरक्ते पातिते तस्मिन् राजभृत्यैस्ततः कृतः।
षण्मासान् हर्षदेवस्य नप्ता भिक्षाचराभिधः ( मा ६ )। पुनर्निर्व्वास्य तं प्राप्तराज्ये सुस्सलभूभुजि।
क्रमाल्लवन्यैर्व्विश्वस्तैर्द्दैराज्योद्वेजितैर्हते। लवन्यान्निखिलांस्तांश्च हत्वा भिक्षाचरं नृपं।
सुतः सुस्सलभूभर्त्तुः सम्प्रत्यप्रतिमक्षमः। नन्दयन्मेदिनीं सम्यक् जयसिंहो महीपतिः।
तरङ्गे ह्यष्टमे भूपाः ख्याताः कश्मीरमण्डले। मन्त्रिणा कह्लणेनोक्ताः कलौ कविवरेण च।
राजानः ५ ( वर्ष ४७ ) अष्टमस्तरङ्गः समाप्तः॥ समाप्तेयं कह्लणराजतरङ्गिणी ॥
ततः श्रीजयसिंहोऽभूद्द्वितीयं भूमिभूषणं। सुस्सलस्यात्मजः सर्व्वलोकानन्दकरः सुधीः ( व २२ )।
परमाणुः सुतस्तस्य राजा कश्मीरमण्डले ( व ९ मा ६ )। तत्पुत्त्रोऽवन्तिदेवाख्योऽभजन्नृपश्रियं ततः ( व ७ )।
वोप्यदेवाभिधो राजा मुग्धजातशिरोमणिः ( व ९ )। जस्सदेवोऽनुजस्तस्य वालिशः कथितो बुधैः ( व १८ )।
तत्पुत्त्रो जगदेवोऽथ कश्मीरान् पालयन्नृपः ( व १४ )। राजदेवोऽथ तत्पुत्त्रो मण्डलेऽस्मिन् सुखप्रदः ( व २३ )।
तद्द्वोभजोऽथ सङ्ग्रामदेवः कलियुगोद्भवः ( व १६ दि १० )। तनयोऽस्य महावीरो रामदेवो नराधिपः ( व २१ मा १ दि।
ततो लक्ष्मणदेवाख्यो ब्राह्मणोऽमुना कृतः ( व ३ मा ४ ) अपुत्त्रेण सुतः साक्षाद्दत्तराज्यश्च मण्डले।
ततोऽन्यवंशजो राजा सिंहदेवो नयोज्ज्वलः। स मुग्धाभगिनीकामो हतस्तत्पतिना च्छलात् ( व १४ मा ५ )।
तद्भ्राता सिंहदेवोऽथ मण्डलं भुक्तवान् कलौ ( १९४ )। तद्राज्ये म्लेच्छराजेन दुलचेन प्रणाशिते।
कश्मीरमण्डले याते सूहदेवे शिवालयं। भोट्टवंशोद्भवः श्रीमान् साक्षात् कल्पद्रुमोपमः।
श्रीरिञ्चनसुरत्राणः कश्मीरे तदनन्तरं ( व ३ मा २ )। पाकशासनतुल्योऽयः शशास शुद्धशासनः।
तस्मिन् राज्ञि दिवं याते तत्पत्नी राज्यसम्पदं। चखाद कोटा कश्मीरमण्डले मन्त्रिवन्दिता। ( मा ४ )
उद्यानदेवे तत्कालमायाते सैनिकैः सह। कोटया कामिते राज्यपदश्च प्रापिते कलौ।
कतिचिद्वत्सरान् भुक्त्वा तस्मिन्नपि क्षयं गते। वालत्वात्पुत्त्रयोः साथ स्थिता राज्यपदे शुभे ( मा ५ )।
मन्त्रिणा शाहमेरेण साम्राज्यान्नाशिता च सा। हत्वैतं मन्त्रिभिस्त्वन्यैः साकं विप्रैः सपुत्त्रकां।
स्वयं चकार साम्राज्यं कश्मीरेष्वतियुक्तिवित्। अभिधां स्वात्मनो पत्न्यां शंसदीनदति शुवन्।
अष्टादशमहीपालाः पञ्चगह्वरदेशजाः। अभूवन् स्वामिनः शेषे श्रीमत्कश्मीरमण्डले।
आद्य श्रीशंसदीनाख्यस्ताहराजकुलोद्भवः। भाविसाम्राज्यसंयोगादायातः पञ्चगह्वरात्।

कोटायाद्देशमासाद्यं गीतं येन बलात् पुरा। हत्वा भिच्चणभट्टांश्च बलिना बलवत्तराम्।
तत्सुतोऽथ्यमेरोनाम साम्राज्यपदभुक् ततः। आसीद्वर्षद्वयं चिंशद्दिनैकूनं धुरं वहन्। ( व १। मा ११ )
तत. कनिष्ठो भ्रातास्य द्वादशाब्दान् श्रियं वहन्। अलाभदीनो नाम्नासौ कश्मीरेषु महीपतिः। ( व १२ )
शाहाभदीनस्तत्पुत्त्रस्ततोऽभूद्दिग्जयी कलौ। अष्टादशाब्दान य: स्पर्द्धामकरोत पृथिवीभुजां। ( व १८ )
तस्यानुज: कुतुबदीनो राजा कश्मीरमण्डले। राज्यं स्वमकरोद्वर्षान् षोडशाहतकण्टकः। ( व १६ )
ततस्तस्यात्मजः प्रापद्राज्यं सेकन्धरो नृपः। यः सर्व्वान् पुस्तकान् भूपस्तृणान्यग्निरिवादहत्।
चतुर्व्विंशतिभिर्व्वर्षैः प्रयातः स यमालयं। व २४ ) आलिशाहोऽभवद्राजा तत्सुतः सप्त वत्सरान्।
मन्दकीर्त्तिर्ज्जडैर्भुक्तसम्पद्दुर्नयदूषितः। ( व ७ ) लोकपुण्योदयात्तस्य सोदरोऽभवद्भूपतिः।
स्याचन्द्रः सर्व्वभूपानां जग्राह प्रणतिं सुधीः। पञ्चाशतं वत्सराणां कृत्वा राज्यं सुखप्रदं।
जगाम त्रिदिवं दत्त्वा ककुभां निर्म्मलं यशः। ( व ५० )
अस्यां राजतरङ्गिण्यां भूपालाः कथिताः क्रमात्। जोनराजाभिधानेन जैनराज्येऽतिशोभने।
इति जोनराजनृपावलिः समाप्ता॥

श्रीमद्धैदरशाहोऽभूत् तनयोऽस्य महीपतेः। वत्सरौ द्वौ राज्यसम्पद्भुक्ता येनात्र मण्डले। ( व २ )
दाता हस्सनशाहोऽभूत्तत्सुतो भूमिभूषणं। द्वादशाब्दान्महीं भुक्त्वा योगात् सुरपुरं गतः। ( व १२ )
तत्सुतो महम्मशाहोऽभूद्राजा कश्मीरमण्डले। मन्त्रिणां दुष्टचैतन्याद्बालाचञ्चलराज्यभुक्। ( व २ )
पितृव्योऽस्य महीपालः फतिशाहः श्रियं दधौ। समकालानुसारेण कश्मीरान् पालयन् कलौ। ( ११ )
इति श्रीवरराजतरङ्गिण्यां भूपालाः समाप्ताः॥

महम्मशाहः शशासोर्व्वीं वत्सरानेकविंशतिं। ( व २१ ) दोलाचञ्चलया वृत्त्या फतिशाहो वसुन्धरां।
स वत्सरान् शुभाचारो द्वाविंशतिमपालयत्। ( व २२ ) फतिहशाहपुत्त्रस्तु नाजोकशाहस्ततोऽभवत्। ( व १ )
तनयामहम्मशाहस्य त्रयस्त्वेत पार्थिवाः। चतुर्थस्तस्य पौत्त्रोऽपि राज्यशब्दप्रपूरकः।
तत्कालमनुवारेण फतिशाहस्य चात्मजः। नाजोकशाहो राजासीत् युक्तः काम्बोजदेशजैः। ( व १२ )
इत्येतैः पञ्चभिर्भूपैर्न्नाम राज्यं स्वमण्डले। कृतं दुर्म्मन्त्रिनिर्नष्टं वत्सरान् पञ्चविंशतिं।
वर्षाणां द्वादशशती षष्टिरेकाब्दसंयुता। आसीच्छाकस्य शाहानां राज्यप्राप्तौ तु लौकिकी।
चतुर्द्दशशत्यशीत्या युक्ता द्वाभ्याञ्च सम्प्रति। स्थिता शाकस्य वर्षाणां हस्सने सति पार्थिवे।
अधिकमेकविंशत्या वत्सराणां शतद्वयं। शंसदीनादिभीराज्यं कृतं कश्मीरमण्डले।
ताश्चिराणकवंश्यानां त्यक्त्वा सिंहासनं क्षुधा। पार्थिवश्रीः प्रयाताद्य चक्काभिजनमन्दिरं।
आषाढपूर्णिमायोगे षट्त्रिंशेऽब्देऽर्कवासरे। त्यक्त्वा भूमिधुरं याते हसेशाहे दिगन्तरं।
राज्यं गोराजकं वर्षमेकमासीत् युतं दिनैः। विंशत्यामात्यनिर्नष्टं श्रीमत्कश्मीरमण्डले।
गाजेशाहो भाद्रपदे सप्तत्रिंशतिवत्सरे। पञ्चम्यामग्रहीद्राज्यं शुक्लायां शुक्रवासरे।

राज्ञि गाजवरे नष्टो देशो ग्रामस्य हेतुना । एकस्य हेतुना ग्रामं राष्ट्रं ग्रामस्य हेतुना ।
मासत्रयाधिकं वर्षद्वयं भुक्ताथ सम्पदं । अनुजस्य ददौ राज्यं हुसनस्य धनान्वितं ।
नवाग्निगणने वर्षे चतुर्थ्यां शुक्रवासरे । शुक्रे महर्षि साम्राज्यप्राप्तिर्हुसनभूभुजः ।
( सं १६ ) मुग्गुलमिर्जाहैधरेणागत्य राज्यं गृहीतं । सं २६ तावत् । ततः परं चक्काना मिर्जाहैधरराज्यं ( व ९ ) गाजी चकराज्यं ( व १ )
पुनः सम्हतः तदनु मल्लाद्जण्डुकहैधरचक्कककपालदुडनककपालजागकादीनां । ( व ६ )
हुसनशाहिराज्यं ( व ३ ) आलीशाहिराज्यं । ९ । एतत्पुत्त्रयोः योसफशाहराज्यं । ( व १ ।
तस्मिन् वर्षे स सैदमोमारखानादिभिर्निष्कासितः । मोमारखानराज्यं जातं । ( व १ )
अस्मिन् वर्षे लुहरशाहराज्यं । अस्य राज्यं ( मा २ ) एतत्पुत्त्रयाकोहशाहराज्यं ( १ )
पुनर्य्योसोभराज्यं ( व ३ ) एतत्पुत्त्रयाकोभशाहराज्यं ( व १ ) योसोभशाहसमये भगवान्दास आगतः ।
तेन स अकबरनिकटं नीतः पुनः अकबरप्रेषितः कासीमखान आगत्य काश्मीरान् जितवान् ।
ततः च्यगतानां राज्यं ( ६ ) आदौ कश्मीरेषु अकबरज्यलालदीनराज्यं ( व ६२ )
तदनु ज्यहाङ्गीरराज्यं ( व ३२ ) शाहजाहानराज्यं ( ७२ )
अवरङ्गशाहराज्यं ( २२ ) शाहिआलमराज्यं ( व २६ )

समाप्तोऽयं राजतरङ्गिणीसंग्रहः ॥

श्रीमत्कोम्पानिभूपस्य प्रियःश्रीमुर्कराफकः । साहिबनामा मन्त्री यो जीयात् संवत्सरं शतं ।
श्रीमुर्कराफकोमन्त्री प्रापत्कश्मीरमण्डले । राज्ये श्रीरणजित्सिंहभूपतेः प्रियदर्शनः ।
श्रीमच्छिवकेश्वरप्रेम्णा प्राप्ता राजतरङ्गिणी । मुर्कराफकधीरेण गृहात् श्रीशिवस्वामिनः ।
श्रीमत्श्रीशिवरामस्य गृहे राजावली शुभा । कश्मीर मण्डले नित्यं वर्त्तते नान्यसद्मनि ।
श्रीमद्विबुधेन्द्रशिवोपाध्यायाय नमोनमः । येनोपाध्यायेनपञ्चसहस्त्रवर्षाणां महाप्रभावसहिता राजावली स्वगृहेपालिता प्रयत्नेन श्रीविभोर्दयया चेति भद्रं ।
वर्त्ततेच गृहे यस्य शुभा राजतरङ्गिणी । स जीवन्मुक्त एव स्यान्मृतः स्वर्गमवाप्नुयात् ।

संवत् १८८० ॥